## ॥ अथ सटीक-लिङ्गमहापुराणप्रारम्भः ॥

# भूमिका।

धन्यः खलु स महात्मा परमकारुणिकः श्रीकृष्णद्वैपायनो नाम मुनिवरः, यः किल कालविपर्ययतो विहीनबुद्धिविभवस्यानवधारितश्रुत्यर्थस्य द्विजादिवर्णत्रयस्य श्रुत्यनधिकारिणोः स्त्रीशूद्रयोश्च सदाचारदर्शनाय वेदसारगर्भाणि महापुराणोपपुराणानि प्रणीतवान्। तदन्तर्गतमिदं महापुराणेष्वेकादशमं पूर्वार्धोत्तरार्धभागद्वयोपेतमेकादशसहस्रश्लोकामितं शिवमाहात्म्यपरिपूर्णं नितरां हृदयंगमं दशविधलक्षणोपलक्षितं विशेषतः शिवभक्तिमतामत्यादरणीयं लिंगमहापुराणं समुल्लसति। अष्टादशमहापुराणोपपुराणमुद्रणोद्यतेन मया सर्वेषां पुराणामृतास्वादनाय लिंगमहापुराणमेतत्सटीकं शास्त्रिद्वारा संशोध्य सुपुष्टमसृणपत्रेषु मनोहरसीसकाक्षरैर्मुद्रयित्वा प्रकाशितम्। अत्यल्पमूल्यप्राप्यस्यास्य महापुराणस्य श्रवणपठनादिभिर्मच्छ्रमसाफल्यं विभावयन्तु सुधिय इत्यलं बहुना पल्लवितेनेति शम्।

विबुधकृपाभिलाषुकः

श्रेष्ठिश्रीकृष्णदासात्मजक्षेमराजः

"श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालयाध्यक्षो मुंबई-स्थः।

# ॥ अथ लिंगमहापुराणविषयानुक्रमणिका ॥

॥ इति श्रीलिंगपुराणपूर्वभागविषयानुक्रमणिका ॥

## ॥ अथ लिंगपुराणोत्तरभागविषयानुक्रमणिका ॥

## ॥ समाप्तेयं लिंगमहापुराणविषयानुक्रमणिका ॥



श्रीगणेशाय नमः ॥ गणनाथमहं नौमि सिद्धिबुद्धिसमन्वितम् ॥ यं नत्वा कृतकृत्याः स्युर्वाक्पतिप्रमुखा बुधाः ॥ १ ॥ श्रीमत्सांबसुतो ब्रह्मा वसिष्ठस्तस्य चात्मजः ॥ तद्गोत्रत्वात्तु लोकेस्मिन्नात्वाख्ये तु कुले शुभे ॥ २ ॥ नारायणसुतो धीमाञ्छ्रीमानतुलविक्रमः ॥ विद्वद्भिराश्रितो नित्यं वदान्यः प्रभुसंमतः ॥ ३ ॥ बल्लालनामविख्यातः शंकराराधने रतः ॥ तत्कृपावाप्तसंपूर्णपुरुषार्थचतुष्टयः ॥ ४ ॥ स्ववंशपद्मिनीं कृत्स्नां स्वोदयेनार्कवत्प्रभुः ॥ अनेकाश्रितसंघांश्च विभासयति सर्वतः ॥ ५ ॥ सौभाग्यपतिभक्त्यादिभूयिष्ठगुणयुक्तया ॥ अन्वर्थकयशोदेतिनाम्न्या पत्न्या समन्वितः ॥ ६ ॥ यः सप्तषष्टिवर्षात्प्राक् चतुर्व्यूहात्मकं शिवम् ॥ पदं प्रवेष्टुं तत्संख्यान्प्रासादाञ्छ्रीशिवास्पदान् ॥ ७ ॥ तथा श्रीविष्णुसदनं चाकरोद्भक्तिसंयुतः ॥ तथा चान्यान्यसंख्यानि धर्मकृत्यानि सर्वशः ॥ ८ ॥ कुर्वन्कीर्त्यनन्यशसा पूरयन् राजते भुवम् ॥ कन्याद्वयं च पुत्राणां त्रयमस्ति तदौरसम् ॥ ९ ॥ पुत्रेषु तस्य प्रथमो गणेशो विद्यानिधिः पंडितवर्यसेव्यात् ॥ श्रीनीलकंठाख्यगुरोः प्रसादात्सुखाप्तविद्यो निजबोधहेतुः ॥ १० ॥ बाल्याच्छिवाराधनरागयुक्तो ह्यतः शिवः कारुणिकस्तु सांबः ॥ विश्वेशरूपेण गृहाग्रवर्तिप्रासादसंस्थः सततं विभाति ॥११॥ शिवप्रेरणया नूत्नां पुमर्थानां प्रसाधिनीम् ॥ लैंगटीकां चिकीर्षुर्वै मंगलं ग्रंथयाम्यहम् ॥ १२ ॥ विश्वेश्वरं सुकरुणार्णवमिष्टदोहं विश्वोद्भवास्थितिलयाभिनिवेशहेतुम् ॥ विद्यांबिकानुविलसच्छुभपार्श्वभागं तं लिंगरूपमनिशं प्रणतोऽस्मि शंभुम् ॥ १३ ॥ श्रीशङ्करं तथा विष्णुं रविं देवं विनायकम् ॥ जगदंबां च योगेशीं कुलदेवीं नमाम्यहम् ॥ १४ ॥ श्रीशंकरतनूद्भूतां गायत्रीं वेदमातरम् ॥ सर्वप्रकाशिनीं विद्यां

## श्रीगणेशाय नमः ॥ ॐनमः शिवाय ॥ नमो रुद्राय हरये ब्रह्मणे परमात्मने ॥ प्रधानपुरुषेशाय सर्गस्थित्यंतकारिणे ॥ १ ॥

वाग्देवीं प्रणतोस्म्यहम् ॥ १५ ॥ नीलकंठगुरोर्भक्त्या मातापित्रोः पदानि च ॥ शैलादिप्रमुखाञ्छैवान् शिवभक्तान्नमाम्यहम् ॥ १६ ॥ लैंगं क्व ब्रह्मणो वेद्यं क्व चाहं मंदधीः परम् ॥ करोमि तत्कृपालेशाद्व्याख्यां हि शिवतोषिणीम् ॥ १७ ॥ निर्मलः सच्चिदानंदस्वरूपः परमः शिवः ॥ सर्वं करोति विश्वात्मा प्राणिनां हृदये स्थितः ॥ १८ ॥ सद्गणेशममायुक्तश्चिदुमापरिरंभितः ॥ आनंदरूपो विश्वेशः शिवो विजयतेतराम् ॥१९॥ लैंगे हि प्रथमाध्याये पुराणस्य समुद्भवः ॥ सूतशौनकसंवादात् कथ्यते भक्तिवर्धनः ॥२०॥

तत्रादौ श्रीवेदव्यासः स्वयं विघ्नविधुरोपि शिष्यशिक्षायै अविघ्नसमाप्तिफलकनमस्क्रियापूर्वकजगदुत्पत्तिस्थितिलयकारणत्रिमूर्तिपरप्रधानपुरुषनियामकप्रतिपाद्यपरमात्मरूपशिववस्तुनिर्देशात्मकं मंगलमाचरति—नमो रुद्रायेति । अस्य पुराणस्य शिवोत्कर्षप्रतिपादकश्रुत्युपबृंहकत्वात्तथा श्रीरुद्राध्यायस्थनाम्नामनंतपापदाहकत्वात्तथा त्रिमूर्तिष्वपि रुद्रस्य प्राधान्यात् प्रथमतः पंचाक्षरमंत्रेण प्रणमति । अत्र रुद्रादिपदानां नमोयुक्तत्वाद्वा परमात्मन इति चतुर्थ्यंतस्य विशेषणत्वाच्चतुर्थी । "रोदयत्यात्मविमुखानिति रुद्रः प्रकीर्तितः । स्मृत्या पातकसंहारी हरिरित्यभिधीयते ॥ बृंहकत्वाद्धि जगतां ब्रह्मा सूर्यः प्रकीर्तितः ॥" सूर्यस्य ब्रह्मरूपत्वे 'असावादित्यो ब्रह्म' इत्यादिश्रुतिः प्रमाणं ज्ञेयम् । एतत्त्रिमूर्तिरूपेणैव सर्गस्थित्यंतान् करोति । अत्र कृधातोस्ताच्छील्ये णिनिः । अनेन त्रिमूर्तिजनकत्वं सूचितम् । "प्रकर्षेणैव निहितं जगद्यस्मिन्ननंतकम् । प्रधानं हि शिवा देवी प्रकृतिः सा निगद्यते ॥ पूर्षु देहेषु यः शेते पुरुषः पंचविंशकः । जीवो गजाननो ज्ञेयो गणेशस्तु स्मृतो यतः॥" शिवपंचायतने चतुर्थो गणेशः पंचमी देवीत्यतः पुरु-

पश्च प्रधानं चेत्यपि द्वंद्वेऽभ्यर्हितत्वात् प्रधानस्य देवीवाचकस्य पूर्वनिपातो बोध्यः 'तयोरीशो हि जनकः परमात्मा सदाशिवः। यस्माच्छ्रेष्ठो हि नास्त्येव परमस्तु निगद्यते ॥' 'अत सातत्यगमने' तस्मान्मनिन्। देशकालाद्यनवच्छेदेन गम्यमानत्वादात्मा तस्मै नमोस्त्वित्यन्वयः। पंचायतनस्य शिवरूपत्वात्सर्वेषां प्राधान्यं श्रुतिस्मृतिपुराणेषूपपन्नम्। ननु त्रिमूर्तिषु तथा पंचायतनेषु रुद्रस्य प्राधान्ये किं प्रमाणमिति चेत्—"यो देवानां प्रथमं पुरस्ताद्विश्वाधिपो रुद्रो महर्षिः" इत्यादिश्रुतिप्रतिपादितत्वात्तथा नारायणोपनिषदि देवगायत्र्युपक्रमे रुद्रगायत्र्याः प्रथमतो द्विरुक्तत्वाद्बोद्धव्यम्। इदमेव षट्कं लैंगशास्त्रे सकलादित्वेनाभिमतम् " गणेश ईशः शुद्धा चित्तथा तत्प्रतिरूपकाः। विरिंचिरुद्रहरयः षडस्माकमनादयः ॥ " इदमेव वेदांतिनः जीव ईशो विशुद्धा चिदित्यनेन किंचिद्रूपभेदेन वर्णयंति। यद्वा रुद्रमहिमा तु समग्ररुद्राध्यायादावतीव निरूपितोतः हृदय इत्यादीन्युक्तार्थकानि विशेषणानि रुद्रस्वगम्यानि तदाराधनेन परमपदावाप्ती रुद्रगायत्र्यां निरूपिता। अत एव वेदभाष्येऽत्र षड्भिर्गायत्रीभिरात्मप्राप्तिद्वारभूता देवताविशेषाः प्रार्थ्यंत इत्युक्तम्। "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्" ॥ अस्यार्थः—तत् प्रधानं पुरुषो जीवः अनयोः समाहारः तत्पुरुषं तस्मै। यद्वा तत्पुरुषाय विश्वरूपाय तत्पुरुषसंज्ञकायेति वा विद्महे शास्त्रगुरूपदेशादिना जानीमः। महान्यो देवो रुद्रस्तस्मै धीमहि ध्यायेम। रुता शब्देन द्रावयति अज्ञानं दूरीकरोतीति रुद्रः नः अस्माकं तत् परमात्मरूपं शिववस्तु प्रचोदयात् प्रकृष्टं नाम त्वमसीति प्रेरणां कुर्यात्। ननु गुरूपदेशादिना तत्त्वमसीति ज्ञानं भविष्यतीति रुद्रप्रार्थना किमर्थमिति चेत्-अन्यगुरूपदेशात् ज्ञानेपि तादृशं फलं न भवति यथा त्रियंबकमंत्रस्य मृतसंजीवकत्वमस्मिन्नेवोक्तम्। तत्तु रुद्रस्योपदेशाच्छुक्रस्यैव सिद्धम्। अन्येषां तु तज्जपादपमृत्युपरिहारो जायते। अत एव रुद्राध्याये 'अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्' इत्युक्तम्। तथा च रुद्राराधनम्। आत्मज्ञानं मुख्यं तच्च लिंगरूपेऽतिशस्तं तदुक्तमग्रे—"मूले ब्रह्मा वसति भगवान्मध्यभागे च विष्णुः सर्वेशानः पशुपतिरजो रुद्रमूर्तिर्वरेण्यः। तस्माल्लिंगं गुरुतरतरं पूजयेत्स्थापयेद्वा यस्मात्पूज्यो गणपतिरसौ देवमुख्यैः समस्तैः ॥ गंधैः स्रग्धूपदीपैः स्नपनहुतबलिस्तोत्रमंत्रोपहारैर्नित्यं येऽभ्यर्चयंति त्रिदशवरनुतं लिंगमूर्तिं महेशम् ॥ गर्भाधानादिनाशक्षयभयरहिता देवगंधर्वमुख्यैः सिद्धैर्वंद्याश्च पूज्या गणवरनमितास्ते भवंत्यप्रमेयाः ॥" इति तत्प्रतिपादकपुराणारंभ इति पुराणकथनसंगतिः। ननु परमात्मनः शिवरूपत्वे किं मानमिति चेत् 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जंतोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥' इति श्रुतिः। अस्यार्थः भाष्यानुसारी—सच्चिदानंदैकरसः परमेश्वरः आत्मशब्देनोच्यते मायाकार्यभूते लौकिकव्यवहारे सूक्ष्मत्वेन प्रसिद्धः परमाणुस्तस्मादप्ययमात्मा अणीयान्सूक्ष्मः। परमाणूनामस्मदादिप्रत्यक्षगम्यत्वाभावेऽपि योगिजनप्रत्यक्षगम्यत्वमस्ति तदप्यात्मनो नास्तीत्यणीयस्त्वमुक्तम्। आकाशदिगादयः परिमाणाधिक्याल्लोके महच्छब्दवाच्याः ततोप्ययमात्मातिशयेनाधिकत्वान्महीयान्। अनेकब्रह्मांडाधिकरणत्वादित्यर्थः। अस्य जंतोर्गुहायां गुहाशब्देन हृत्पुंडरीकवर्तिनी बुद्धिरुच्यते। 'गुहू संवरणे' अस्मात् 'इगुपधा' इति कप्रत्ययः तस्माट्टापि कृते गुहाशब्दः सिद्धस्तस्यां निहितत्वं नाम विषयोपलभ्यत्वं न तु बुध्यावधेयत्वरूपं सर्वजगदाधारस्य तदसंभवात्। तं तथावस्थितमीशं शिवं शमादिगुणयुक्तोधिकारी पुरुषः पश्यति साक्षात्करोति स चाधिकारो धातुः परमेश्वरस्य प्रसादादनुग्रहादुपजायते। तदुक्तं पूर्वाचार्यैः "ईश्वरानुग्रहात्तेषां पुंसामद्वैतभावना ॥ महाभयकृतत्राणा द्वित्राणामेव जायते ॥" इति। ईदृशमीशमक्रतुं

संकल्परहितमत एव महिमानमतिशयेन महांतम् ईश्वरं साक्षात्कृत्य वीतशोको जन्ममरणादिशोकरहितो भवति । अस्याः श्रुतेः शिवपरत्वमीशशब्दप्रयोगाज्ज्ञेयम् । ' शंभुरीशः पशुपतिः ' इत्यमरः । एतदेवोक्तमग्रे "महतो यो महीयांश्च अणोरप्यणुरीश्वरः । गुहायां निहितश्चात्मा जंतोरस्य महेश्वरः" इति । पाद्मे " महेशः परमं ब्रह्म शांतः सूक्ष्मः परात्परः । सर्वांतरः सर्वसाक्षी चिन्मयस्तमसः परः ॥ तस्य चेच्छाभवत् पूर्वं जगत्स्थित्यंतकारिणी । वामांगादभवं तस्य सोहं विष्णुरिति स्मृतः ॥ जनयामास धातारं दक्षिणांगात्सदाशिवः ॥ मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः " इति कृष्णोक्तेः । अध्यात्मे रामगीतायाम् " बुद्धेस्त्रिधावृत्तिरपीह दृश्यते स्वप्नादिभेदेन गुणत्रयात्मनः । अन्योन्यतोस्मिन्व्यभिचारतो मृषा नित्ये परे ब्रह्मणि केवले शिवे " इति रामोक्तेः । इत्यादीन्यनेकश्रुतिस्मृतिपुराणोक्तानि प्रमाणानि सुधीभिर्द्रष्टव्यानि । अत्र ग्रंथविस्तरभयान्न लिख्यंते । अस्मिंस्तु शिव एव परमात्मेति बहुश उक्तं श्रोतॄणां स्फुटं भविष्यति । प्रमाणकथनं तु शिवतत्त्वाव्युत्पन्नानाम् । व्युत्पन्नानुभवस्तु "न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं भवसि" इति महिम्ने पुष्पदंतेनोक्त एव। ननु रुद्रस्य तमोगुणत्वात्कथं पूज्यत्वमिति चेत् केवलतमोगुणस्य सुषुप्तावज्ञानिनामपि सुखकारकत्वानुभवात्तथा कैवल्योपनिषदि "सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति " इत्युक्तत्वात्तथा " स एव बध्यते जीवः स्वप्नजाग्रदवस्थयोः । सुषुप्तौ तदभावाच्च जीवः शंकरतां गतः " इति शिवगीता-

नारदोऽभ्यर्च्य शैलेशे शंकरं संगमेश्वरे ॥ हिरण्यगर्भे स्वर्लीने ह्यविमुक्ते महालये ॥२॥ रौद्रे गोप्रक्षके चैव श्रेष्ठे पाशुपते तथा॥ विघ्नेश्वरे च केदारे तथा गोमायुकेश्वरे ॥ ३ ॥ हिरण्यगर्भे चंद्रेशे ईशान्ये च त्रिविष्टपे ॥ शुक्रेश्वरे यथान्यायं नैमिषं प्रययौ मुनिः ॥ ४ ॥ नैमिषेयास्तदा दृष्ट्वा नारदं हृष्टमानसाः॥ समभ्यर्च्यासनं तस्मै तद्योग्यं समकल्पयन् ॥५॥ सोपि हृष्टो मुनिवरैर्दत्तं भेजे तदासनम् ॥ संपूज्यमानो मुनिभिः सुखासीनो वरासने॥६॥ चक्रे कथां विचित्रार्थां लिंगमाहात्म्यमाश्रिताम्॥ एतस्मिन्नेव काले तु सूतः पौराणिकः स्वयम् ॥ ७ ॥ जगाम नैमिषं धीमान् प्रणामार्थं तपस्विनाम् ॥ तस्मै साम च पूजां च यथावच्चक्रिरे तदा ॥ ८ ॥

क्तत्वात्तस्य श्रेष्ठत्वमेव । "आदित्यवर्णं तमसस्तु पारे " इति श्रुत्या ईश्वरस्य तमःपरत्वप्रतिपादनाद्रुद्रस्य तदधीशत्वात्तन्निवृत्तौ रुद्राराधनमेव मुख्यम् । तमसोपि नियंतृत्वादति महति रुद्रे तामसत्वोक्तिस्तमोधीशत्वाल्लाक्षणिकी । यद्वा पूर्वोक्तश्रैष्ठ्यमादायेत्यलम् । अस्य पुराणस्य नित्यं लिंगसन्निधौ पठने परमफलमेकोनविंशाध्याये उक्तम् । " यस्तु लैंगं पठेन्नित्यमाख्यानं रुद्रसन्निधौ । स याति शिवतां लोके नात्र कार्या विचारणा ॥ " तथा समाप्तौ " लैंगमाद्यंतमखिलं यः पठेच्छृणुयादपि । द्विजेभ्यः श्रावयेद्वापि स याति परमां गतिम् ॥ " इत्युक्तम् । तथा मात्स्ये–" कल्पांतोलिंगमित्युक्तं पुराणं ब्रह्मणा स्वयम् । तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ॥ तिलधेनुसमायुक्तं स याति शिव सात्म्यताम् ॥ " इति फलं वक्तृश्रोतृभिरवगम्यम् ॥ १ ॥ नारमज्ञानं द्यति खंडयतीति नारदो मुनिः शैलेशादिस्थानेषु शंकरमभ्यर्च्य पूजयित्वा नैमिषं प्रययाविति तृतीयस्थेनान्वयः । अनेन ज्ञानिनामपि लिंगार्चनमावश्यकमिति सूचितम् ॥ २ ॥ ३ ॥ ४ ॥ नैमिषेया नैमिषारण्यनिवासिनः । नैमिषसंज्ञाप्रयोजनमुक्तं वाराहे–" उवाच निमिषे

णंदं निहतं दानवं बलम् । अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम् ॥ " इति ॥ ५ ॥ ६ ॥ ७ ॥ ८॥ अथ सूतदर्शनानंतरं तेषां मुनीनां शुश्रूषा श्रवणेच्छा समपद्यत प्रादुर्बभूवेत्यर्थः ॥ ९ ॥ रोमाणि हृषितानि यस्य स रोमहर्षणः । सुत्याहे भवः सूतस्तदुक्तं कौर्मे– " तस्य ते सर्वरोमाणि तपसा हृषितानि यत् । द्वैपायनस्य भगवन् ततो वै रोमहर्षणः ॥ त्वं वै स्वायम्भुवे यज्ञे सुत्याहे वितते हरिः । संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥ " इति ॥ १० ॥ द्विर्गता आपो यस्मिन् तद्वीपं तदयनं स्थानं यस्य स एव द्वैपायनः स्वार्थेऽण् कृष्णसंज्ञो मुनिर्वेदव्यासः ॥ ११॥ पुराणार्थम् उपासितः तस्माल्लब्धा इत्यनेन तव सम्यग् ज्ञानं वर्तते इति सूचितम् ॥१२॥ लिंगमाहात्म्यसंयुतां पुराणसंहितां पुण्यां पृच्छाम इत्यन्वयः ॥ तदुक्तं मात्स्ये " सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पंचलक्षणम् " ॥ १३ ॥ १४ ॥ भवभक्तो

नैमिषेयास्तु शिष्याय कृष्णद्वैपायनस्य तु ॥ अथ तेषां पुराणस्य शुश्रूषा समपद्यत ॥ ९ ॥ दृष्ट्वा तमतिविश्वस्तं विद्वांसं रोमहर्षणम् ॥ अपृच्छंश्च ततः सूतमृषिं सर्वे तपोधनाः ॥१०॥ पुराणसंहितां पुण्यां लिंगमाहात्म्यसंयुताम् ॥ नैमिषेया ऊचुः ॥ त्वयासूत महाबुद्धे कृष्णद्वैपायनो मुनिः ॥ ११ ॥ उपासितः पुराणार्थं लब्धा तस्माच्च संहिता ॥ तस्माद्भवंतं पृच्छामः सूत पौराणिकोत्तम ॥ १२ ॥ पुराणसंहितां दिव्यां लिंगमाहात्म्यसंयुताम् ॥ नारदोप्यस्य देवस्य रुद्रस्य परमात्मनः ॥ १३ ॥ क्षेत्राण्यासाद्य चाभ्यर्च्य लिंगानि मुनिपुंगवः ॥ इह सन्निहितः श्रीमान् नारदो ब्रह्मणः सुतः ॥ १४ ॥ भवभक्तो भवांश्चैव वयं वै नारदस्तथा ॥ अस्याग्रतो मुनेः पुण्यं पुराणं वक्तुमर्हसि ॥ १५ ॥ सफलं साधितं सर्वं भवता विदितं भवेत् ॥ एवमुक्तः स हृष्टात्मा सूतः पौराणिकोत्तमः ॥ १६ ॥ अभिवाद्याग्रतो धीमान्नारदं ब्रह्मणः सुतम् ॥ नैमिषेयांश्च पुण्यात्मा पुराणं व्याजहार सः ॥ १७ ॥ सूत उवाच ॥ नमस्कृत्य महादेवं ब्रह्माणं च जनार्दनम् ॥ मुनीश्वरं तथा व्यासं वक्तुं लिंगं स्मराम्यहम् ॥१८॥ शब्दब्रह्मतनुं साक्षाच्छब्दब्रह्मप्रकाशकम् ॥ वर्णावयमव्यक्तलक्षणं बहुधा स्थितम् ॥ १९ ॥

'भवान्वयं नारदश्च' इत्यनेन भक्तेनाभक्ताय न श्राव्यमिति सूचितम् । अस्य नारदस्याग्रतो वक्तुमर्हसीत्यनेन तस्य श्रेष्ठत्वं तथा महत्पुरस्कारेण प्रवचनं कार्यमिति च सूचितम् ॥ १५ ॥ १६ ॥ अग्रतो ब्रह्मणः सुतं नारदमभिवाद्येत्यनेन अनूचानपुत्रः सन् योनूचानस्तस्याग्रपूजार्हत्वं सूचितम् ॥ १७ ॥ सूतः लिंगपुराणं वक्तुं संप्रदायाविच्छेदनिर्विघ्नसमाप्तिसिद्ध्यर्थं मंगलमाचरति । अस्य पुराणस्य महादेवो देवतेति तां प्रथमतः नमस्कृत्य पुराणप्रतिपादकब्रह्मजनार्दनव्यासान् स्मरामीत्यन्वयः । अनेन प्रथमोक्तमेतन्मंगलं च वक्तृभिः प्रथमं कार्यमिति ज्ञेयम् ॥१८॥ अत्र प्रतिपाद्यं शिवरूपं वर्णयति–शब्दब्रह्मेति । शब्दरूपं ब्रह्म तनुर्यस्य तं तस्यापि स्वयमेव प्रकाशकम् "यस्य भासा

सर्वमिदं विभाति " इति श्रुतेः ॥ वर्णा अवयवा यस्य तं बहुधा अनेकरूपेण स्थितमपि अव्यक्तं अस्पष्टं लक्षणं स्वरूपं यस्य तम् । इदमेव रूपं वैयाकरणैः स्फुटति विकसति नामरूपात्मकं जगद्यस्मादसौ स्फोटः ब्रह्मरूप एक एव तस्यैवात्मनः पंचकोशकल्पनमिव वर्णपदवाक्यादिरूपत्वम् । अविद्यादशायां बोधार्थं परिकल्प्यते अत एव कैय्यटेन ब्रह्मदर्शने गोत्वादिजातेरप्यसत्त्वादनित्यत्वम् । "आत्मैवेदं सर्वम्" इति श्रुतिवचनादित्युक्तम् । इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरंजनम् " ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः । शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ॥ समारंभस्तु भावानामनादिब्रह्म शाश्वतम् ॥" तत्रात्रायं पुरुषः स्वयं ज्योतिः " तमेव भांतमनुभाति सर्वम्" इत्यादि वर्णयंति ॥ १९ ॥ अकारोकारमकाराः यस्मिंस्तदकारोकारमकारमत एव स्थूलं सूक्ष्मं परात्परमवस्थात्रयरूपमित्यर्थः । ॐकारः रूपं यस्य । यद्वा ॐकारप्रतिपाद्यं रूपं यस्य तथा ऋग्वेद एव वक्त्रं मुखं यस्य वा ऋग्वेदः मुखं यस्य । साम सामवेदः जिह्वा यस्य यद्वा जिह्वासमन्विता यस्य ॥ २० ॥ यजुर्वेदः महाग्रीवा यस्य वा ग्रीवायां यस्य अथर्ववेदः हृदयं वा हृदये यस्य प्रधानं प्रकृतिः पुरुषो जीवस्तयोरतीतं परमत एव प्रलयोत्पत्तिभ्यां वर्जितम् ॥ २१ ॥ तमसा तमोगुणेन कालरुद्र इत्याख्या संज्ञा यस्य रजोगुणेन कनकांडजं हिरण्यगर्भस्वरूपं सत्त्वगुणेन सर्वगं विष्णुं सर्वव्यापिविष्णुरूपं गुणराहित्ये सति महेश्वरं परमात्मरूपम् ॥ २२ ॥ प्रधानमव्यक्तमवयवो जीवस्तं

**अकारोकारमकारं स्थूलं सूक्ष्मं परात्परम् ॥ ओंकाररूपमृग्वक्त्रं सामजिह्वासमन्वितम् ॥ २० ॥ यजुर्वेदमहाग्रीवमथर्वहृदयं विभुम् ॥ प्रधानपुरुषातीतं प्रलयोत्पत्तिवर्जितम् ॥ २१ ॥ तमसा कालरुद्राख्यं रजसा कनकांडजम् ॥ सत्त्वेन सर्वगं विष्णुं निर्गुणत्वे महेश्वरम् ॥२२॥ प्रधानावयवं व्याप्य सप्तधाधिष्ठितं क्रमात् ॥ पुनः षोडशधा चैव षड्विंशकमजोद्भवम् ॥ २३ ॥ सर्गप्रतिष्ठासंहार लीलार्थं लिंगरूपिणम् ॥ प्रणम्य च यथान्यायं वक्ष्ये लिंगोद्भवं शुभम् ॥२४॥ इति श्रीलिंगमहापुराणे पूर्वभागे लिङ्गोद्भवप्रतिज्ञावर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥**

व्याप्य सप्तधा महत्तत्त्वाहंकारशब्दादिपंचगुणरूपसप्तप्रकारेण तथा षोडशधा दशेंद्रियभूतपंचकमनोरूपषोडशप्रकारेण स्थितमत एव षड्विंशकमित्यन्वयः । तदुक्तमष्टाविंशाध्याये "इह षड्विंशको ध्येयो ध्याता वै पंचविंशकः । चतुर्विंशकमव्यक्तं महदाद्यास्तु सप्त च ॥ महांस्तथा त्वहंकारं तन्मात्रं पंचकं पुनः । कर्मेंद्रियाणि पंचैव तथा बुद्धींद्रियाणि च ॥ मनश्च पंचभूतानि शिवः षड्विंशकस्ततः॥" इति । अजायाः मायाया यद्वा अजस्य ब्रह्मणः उद्भवः प्रादुर्भावो यस्मात्॥२३॥ सर्गप्रतिष्ठासंहाररूपा या लीला तदर्थं लिंगात्मकं रूपमस्ति यस्मिन् न कर्मधारयेति निषेधस्यानित्यत्वादत्र इनिः । यद्वा लिंगं चित्ररूपं रूपयति प्रशंसति तच्छीलः अत्र ताच्छील्ये णिनिः । एतादृशं शिवं प्रणम्य नमस्कृत्य न्यायमनतिक्रम्य शुभकारकं लिंगस्य उद्भवः प्रादुर्भावो वर्ण्यते यस्मिन्नेतादृशं पुराणं वा लिंगस्य तत्संज्ञकपुराणस्योद्भवः प्रादुर्भावस्तं वक्ष्ये इत्यन्वयः । 'लिगि चित्रीकरणे' अस्माद्धञ ॥२४॥ " शब्दब्रह्म परब्रह्म रूपे ते तु तनू मम । सुदुर्विभाव्ये भगवन् मोक्षहेतू प्रकाशय ॥ " इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां लिंगो

द्भवप्रतिज्ञावर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥ द्वितीये शौनकादिभ्यः सूतेन प्रयतात्मना । लैंगप्राप्तिक्रमः पुण्यः संक्षेपश्च निरूप्यते ॥ तत्रादौ प्राप्तिप्रकारं कथयति । ईशान कल्पे यो वृत्तांतः लिंगप्रादुर्भावादिस्तमधिकृत्य प्रस्तुतयदं पुराणं पूर्वं प्रथमतः ब्रह्मणा कल्पितमित्यन्वयः । अनेन वेदव्यासस्य प्रादुर्भावः सूचितः ॥ १ ॥ शतकोटिप्रविस्तरे तत्संख्याकपुराणसमुच्चय इत्यर्थः । लैंगं ग्रंथकोटिप्रमाणं तु प्रोक्तमिति शेषः । सर्वांतरेषु सर्वमन्वंतरेषु व्यासैः पुराणसमुच्चये चतुर्लक्षेण संक्षिप्ते सतीत्यन्वयः ॥ २ ॥ ब्रह्म ब्रह्मपुराणमादिर्यस्मिन्नसौ ब्रह्मादिस्तस्मिन् पुराणसमुच्चयेऽष्टादशधाऽष्टादशप्रकारेण द्वापारादिषु द्वापारादिकालेषु व्यस्ते भिन्ने सति लिंगं लिंगपुराणमेकादशमेकादशसंख्याकं प्रोक्तं तन्मया व्यासाच्छ्रुतमित्यन्वयः ॥ पुराणक्रम उक्त एकोनचत्वारिंशे—"ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । भविष्यन्नारदीयं च मार्कंडेयमतः परम् ॥ आग्नेयं

सूत उवाच ॥ ईशानकल्पवृत्तांतमधिकृत्य महात्मना ॥ ब्रह्मणा कल्पितं पूर्वं पुराणं लैंगमुत्तमम् ॥ १ ॥ ग्रंथकोटिप्रमाणं तु शतकोटिप्रविस्तरे ॥ चतुर्लक्षेण संक्षिप्ते व्यासैः सर्वांतरेषु वै ॥ २ ॥ व्यस्तेष्टादशधा चैव ब्रह्मादौ द्वापरादिषु ॥ लिंगमेकादशं प्रोक्तं मया व्यासाच्छ्रुतं च तत् ॥ ३ ॥ अस्यैकादशसाहस्रं ग्रंथमानमिह द्विजाः ॥ तस्मात्संक्षेपतो वक्ष्ये न श्रुतं विस्तरेण यत् ॥ ४ ॥ चतुर्लक्षेण संक्षिप्ते कृष्णद्वैपायनेन तु ॥ अत्रैकादशसाहस्रैः कथिता लिंगसंभवः ॥ ५ ॥ सर्गः प्राधानिकः पश्चात् प्राकृतो वैकृतानि च ॥ अंडस्यास्य च संभूतिरंडस्यावरणाष्टकम् ॥ ६ ॥ अंडोद्भवत्वं शर्वस्य रजोगुणसमाश्रयात् ॥ विष्णुत्वं कालरुद्रत्वं शयनं चाप्सु तस्य च ॥ ७ ॥ प्रजापतीनां सर्गश्च पृथिव्युद्धरणं तथा ॥ ब्रह्मणश्च दिवारात्रमायुषो गणनं पुनः ॥ ८ ॥ सवनं ब्रह्मणश्चैव युगकल्पश्च तस्य तु ॥ दिव्यं च मानुषं वर्षमार्षं वै ध्रौव्यमेव च ॥ ९ ॥ पित्र्यं पितॄणां संभूतिधर्मश्चाश्रमिणां तथा ॥ अवृद्धिर्जगतां भूयो देव्याः शक्त्युद्भवस्तथा ॥ १० ॥ स्त्रीपुंभावो विरिंचस्य सर्गो मिथुनसंभवः ॥ आस्याष्टकं हि रुद्रस्य कथितं रोदनांतरे ॥ ११ ॥ ब्रह्मविष्णुविवादश्च पुनर्लिंगस्य संभवः ॥ शिलादस्य तपश्चैव वृत्रारेर्दर्शनं तथा ॥ १२ ॥ प्रार्थनायोनिजस्याथ दुर्लभत्वं सुतस्य तु ॥ शिलादशक्रसंवादः पद्मयोनित्वमेव च ॥ १३ ॥ भवस्य दर्शनं चैव तिष्येष्वाचार्यशिष्ययोः ॥ व्यासावताराश्च तथा कल्पमन्वंतराणि च ॥ १४ ॥

ब्रह्मवैवर्तं लैंगं वाराहमेव च । वामनाख्यं ततः कूर्मं मात्स्यं गारुडमेव च । स्कांदं तथा च ब्रह्मांडं तेषां भेदः प्रकथ्यते ॥" इति ॥ ३ ॥ इह चतुर्लक्षसंक्षेपेऽस्य एकादशसाहस्रं ग्रंथमानं द्विजाः ऋषयः प्रोक्तमित्यन्वयः । यल्लिंगपुराणं मयेति शेषः । विस्तरेण न श्रुतं तस्मात्संक्षेपतो वक्ष्ये इत्यन्वयः ॥ ४ ॥ ननु व्यासाः बहवोऽतोऽत्र वैवस्वतमन्वंतरे केन संक्षिप्तमित्याकांक्षां नुदति—कृष्णद्वैपायनेनेति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अवृद्धिरविस्तारः देव्याः शिवायाः शक्तिरूपेणोद्भवः शिवरूपात् पृथग्भावः ॥ १० ॥ विरिंचस्य ब्रह्मणः स्त्रीपुंभावः स्वायंभुवमनुशतरूपारवरूपेणोत्पत्तिः ॥ ११ ॥ १२ ॥ पद्मयोनित्वं ब्रह्मणः पद्मोद्भवत्वम् ॥ १३ ॥ तिष्येषु कलियुगेषु आचार्यशिष्ययोर्भवस्य दर्शन

मित्यन्वयः ॥ १४ ॥ १५ ॥ लिंगोद्भवश्चित्ररूपेण प्रादुर्भावः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ संध्यांशकप्रमाणं चतुर्युगसंध्याकालमानं भवस्य संध्यावृत्तं योगानं देन नर्तनरूपमित्यर्थः । श्मशाननिलयः श्मशानवासः कालीकोपापनोदनावसरेऽवगम्यः । चंद्रस्य रेखाणां कलानामुद्भवः सूर्यकिरणप्रवेशात् प्रादुर्भावः ॥ २१ ॥ पुत्रोत्पादके गजाननोत्पत्तिः । मैथुनातिप्रसंगेन कामातिचारेण विनाशो रसोल्लासादिवृत्तिनाशः जगतां भयं चेत्यन्वयः ॥ २२ ॥ सत्या कृतः शापः आक्रोशो देहत्यागसमये बोध्यः ।

कल्पत्वं चैव कल्पानामाख्याभेदेष्वनुक्रमात् ॥ कल्पेषु कल्पे वाराहे वाराहत्वं हरेस्तथा ॥ १५ ॥ मेघवाहनकल्पस्य वृत्तांतं रुद्रगौरवम् ॥ पुनर्लिंगोद्भवश्चैव ऋषिमध्ये पिनाकिनः ॥ १६ ॥ लिंगस्याराधनं स्नानविधानं शौचलक्षणम् ॥ वाराणस्याश्च माहात्म्यं क्षेत्रमाहात्म्यवर्णनम् ॥ १७ ॥ भुवि रुद्रालयानां तु संख्या विष्णोर्गृहस्य च ॥ अंतरिक्षे तथांडेऽस्मिन् देवायतनवर्णनम् ॥ १८ ॥ दक्षस्य पतनं भूमौ पुनः स्वारोचिषेऽन्तरे ॥ दक्षशापश्च दक्षस्य शापमोक्षस्तथैव च ॥ १९ ॥ कैलासवर्णनं चैव योगः पाशुपतस्तथा ॥ चतुर्युगप्रमाणं च युगधर्मः सुविस्तरः ॥ २० ॥ संध्यांशकप्रमाणं च संध्यावृत्तं भवस्य च ॥ श्मशाननिलयश्चैव चंद्ररेखासमुद्भवः ॥ २१ ॥ उद्वाहः शंकरस्याथ पुत्रोत्पादनमेव च ॥ मैथुनातिप्रसंगेन विनाशो जगतां भयम् ॥ २२ ॥ शापः सत्या कृतो देवान्पुरा विष्णुं च पालितम् ॥ शुक्रोत्सर्गस्तु रुद्रस्य गांगेयोद्भव एव च ॥ २३ ॥ ग्रहणादिषु कालेषु स्नाप्य लिंगं फलं तथा ॥ क्षुवदधीचविवादश्च दधीचोपेंद्रयोस्तथा ॥ २४ ॥ उत्पत्तिर्नंदिनाम्ना तु देवदेवस्य शूलिनः ॥ पतिव्रतायाश्चाख्यानं पशुपाशविचारणा ॥ २५ ॥ प्रवृत्तिलक्षणं ज्ञानं निवृत्त्यधिकृता तथा ॥ वसिष्ठतनयोत्पत्तिर्वासिष्ठानां महात्मनाम् ॥ २६ ॥ मुनीनां वंशविस्तारो राज्ञां शक्तिर्विनाशनम् ॥ दौरात्म्यं कौशिकस्याथ सुरभेर्बंधनं तथा ॥ २७ ॥ सुतशोको वसिष्ठस्य अरुंधत्याः प्रलापनम् ॥ स्नुषायाः प्रपणं चैव गर्भस्थस्य वचस्तथा ॥ २८ ॥ पराशरस्यावतारो व्यासस्य च शुकस्य च ॥ विनाशो राक्षसानां च कृतो वै शक्तिसूनुना ॥ २९ ॥ देवतापरमार्थं तु विज्ञानं च प्रसादतः ॥ पुराणकरणं चैव पुलस्त्यस्याज्ञया गुरोः ॥ ३० ॥

देवान् विष्णुं च पालितं त्रिपुरवधेन रक्षितमित्यर्थः । शुक्रोत्सर्गोऽग्नौ गांगेयस्य स्कंदस्योद्भवः । इयं कथा तारकासुरपीडया शरणागतदेवेभ्यो ब्रह्मणा संक्षेपोक्तावगम्या ॥ २३ ॥ ॥ २४ ॥ पतिव्रतायाः आख्यानं माहात्म्यं त्रिपुरवधप्रकरणोक्तं ज्ञेयम् ॥ २५ ॥ निवृत्त्यधिकृता मोक्षाधिकारः ॥ २६ ॥ कौशिकस्य दौरात्म्यं वसिष्ठपुत्र

भक्षणे राक्षसप्रेरणरूपम् । सुरभिबंधनं वसुकृतं शापप्रकरणे उद्देशोक्तं बोध्यम् ॥ २७॥२८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ मधुना कैटभेन तत्संज्ञकासुराभ्यामित्यर्थः । हृतगतेर्नष्टज्ञानस्य विभोः समर्थस्य ब्रह्मण इत्यग्रिमेणान्वयः । अत्र मधुकैटभासुरकथा नास्ति तथापि रुद्राज्ञानमसुरसंपर्कजमेव ब्रह्मण इति तदाक्षिप्ता ज्ञेया ॥ ३९ ॥ परमं ज्ञानमादातुं समर्पयितुं रुद्रस्य प्रादुर्भाव इति शेषः । हरेर्विष्णोः मीनता मत्स्यरूपेण प्रादुर्भावः । सर्वावस्थासु विष्णोर्लीलयैव स्वेच्छयैव जननं संक्षेपोक्तं ज्ञेयम् ॥ ४० ॥ विष्णोः कृष्णस्य रुद्रप्रसादाज्जिष्णोः सकलजयशीलस्य मदनस्य संभवः प्रद्युम्नरूपेणोत्पत्तिः हरेः कूर्मत्वं

भुवनानां प्रमाणं च ग्रहाणां ज्योतिषां गतिः ॥ जीवच्छ्राद्धविधानं च श्राद्धार्हाः श्राद्धमेव च ॥ ३१ ॥ नांदीश्राद्धविधानं च तथाध्ययनलक्षणम् ॥ पंचयज्ञप्रभावश्च पंचयज्ञविधिस्तथा ॥ ३२ ॥ रजस्वलानां वृत्तिश्च वृत्त्या पुत्रविशिष्टता ॥ मैथुनस्य विधिश्चैव प्रतिवर्णमनुक्रमात् ॥ ३३ ॥ भोज्याभोज्यविधानं च सर्वेषामेव वर्णिनाम् ॥ प्रायश्चित्तमशेषस्य प्रत्येकं चैव विस्तरात् ॥ ३४ ॥ नरकाणां स्वरूपं च दंडः कर्मानुरूपतः ॥ स्वर्गिनारकिणां पुंसां चिह्नं जन्मांतरेषु च ॥ ३५ ॥ नानाविधानि दानानि प्रेतराजपुरं तथा ॥ कल्पं पंचाक्षरस्याथ रुद्रमाहात्म्यमेव च ॥ ३६ ॥ वृत्रेंद्रयोर्महायुद्धं विश्वरूपविमर्दनम् ॥ श्वेतस्य मृत्योः संवादः श्वेतार्थे कालनाशनम् ॥ ३७ ॥ देवदारुवने शंभोः प्रवेशः शंकरस्य तु ॥ सुदर्शनस्य चाख्यानं क्रमसंन्यासलक्षणम् ॥ ३८ ॥ श्रद्धासाध्योऽथ रुद्रस्तु कथितं ब्रह्मणा तदा ॥ मधुना कैटभेनैव पुरा हृतगतेर्विभोः ॥ ३९ ॥ ब्रह्मणः परमं ज्ञानमादातुं मीनता हरेः ॥ सर्वावस्थासु विष्णोश्च जननं लीलयैव तु ॥ ४० ॥ रुद्रप्रसादाद्विष्णोश्च जिष्णोश्चैव तु संभवः ॥ मंथानधारणार्थाय हरेः कूर्मत्वमेव च ॥ ४१ ॥ संकर्षणस्य चोत्पत्तिः कौशिक्याश्च पुनर्भवः ॥ यदूनां चैव संभूतिर्यादवत्वं हरेः स्वयम् ॥ ४२ ॥ भोजराजस्य दौरात्म्यं मातुलस्य हरेर्विभोः ॥ बालभावे हरेः क्रीडा पुत्रार्थं शंकरार्चनम् ॥ ४३ ॥ नारस्य च तथोत्पत्तिः कपाले वैष्णवाद्धरात् ॥ भूभारनिग्रहार्थं तु रुद्रस्याराधनं हरेः ॥ ४४ ॥

नृसिंहप्रकरणोक्तं ज्ञेयम् ॥ ४१ ॥ कौशिक्याश्चंडिकायाः "कौशिकी चंडिकायाम्" इति विश्वः ॥ ४२ ॥ ४३ ॥ नारस्य उदकस्य कपाले सप्तकपालपुरोडाशे निरुप्त इति शेषः । वैष्णवाद्विष्णुरूपाद्धराद्रुद्रादुत्पत्तिः प्रादुर्भावस्तदुक्तं भारतेऽनुशासनपर्वणि—"महादेवस्य रोषाच्च आपो नष्टाः पुराभवन् । ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः ॥ ततः पानीयमभवत् प्रसन्ने त्र्यंबके भुवि ॥" इति । इयं कथा "आपो नाराश्च सूनव इत्यपां नाम शुश्रुमः । आपूर्य ताभिरयनं कृतवानात्मनो यतः । अप्सु शेते यतस्तस्मात्ततो

नारायणः स्मृतः" ॥ इति मन्वानिनमाध्यायोक्तेनाक्षिमावगम्या ॥ ४४ ॥ देवासुरे युद्धे भृगुपत्न्याऽसुरत्राणे कृते विष्णुना तद्वधे कृतेऽमर्षितभृगुशापो विष्णुना प्राप्तः इयं कथा भागवतादौ विस्तृतात्र भृगुशापाक्षिमा ज्ञेया ॥ ४५ ॥ हिताय शापो दुर्वासस्याननाल्लब्धः । इयं कथा पादतले उच्छिष्टक्षिप्रालेपभावात्तस्मिन्नेव वध्यत्वरूपशापरूपा भागवते विस्तृता । अत्र दुर्वासस्य वचो रक्षन्नित्याक्षिमा ज्ञेया ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इभो गजासुरस्तत्कथा गजहंतिनाम्ना ज्ञेया । मृगो यश्च मृगः । अमरारिणामित्यत्र दीर्घाभावः छांदसः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ अस्मिन्प्राच्यमाने लिंगे तत्संज्ञकपुराणे आनुपूर्व्येण प्रायशोऽनुक्रमेण

वैन्येन पृथुना भूमेः पुरा दोहप्रवर्तनम् ॥ देवासुरे पुरा लब्धो भृगुशापश्च विष्णुना ॥ ४५ ॥ कृष्णत्वे द्वारकायां तु निलयो माधवस्य तु ॥ लब्धो हिताय शापस्तु दुर्वासस्याननाद्धरेः॥४६॥वृष्ण्यंधकविनाशाय शापः पिंडारवासिनाम् ॥ एरकस्य तथोत्पत्तिस्तोमरस्यो द्भवस्तथा ॥ ४७ ॥ एरकालाभतोऽन्योन्यं विवादे वृष्णिविग्रहः॥ लीलया चैव कृष्णेन स्वकुलस्य च संहृतिः ॥ ४८॥ एरकास्त्रबलेनैव गमनं स्वेच्छयैव तु ॥ ब्राह्मणश्चैव मोक्षस्य विज्ञानं तु सुविस्तरम् ॥४९॥ पुरांधकाग्निदक्षाणां शक्रभमृगरूपिणाम्॥ मदनस्यादिदेवस्य ब्रह्मणश्चामरारिणाम् ॥ ५०॥ हलाहलस्य दैत्यस्य कृतावज्ञा पिनाकिना ॥ जालंधरवधश्चैव सुदर्शनसमुद्भवः॥५१॥ विष्णोर्वरायुधावा- प्तिस्तथा रुद्रस्य चेष्टितम् ॥ तथान्यानि च रुद्रस्य चरितानि सहस्रशः ॥ ५२ ॥ हरेः पितामहस्याथ शक्रस्य च महात्मनः ॥ प्रभावा नुभवश्चैव शिवलोकस्य वर्णनम् ॥५३॥ भूमौ रुद्रस्य लोकं च पाताले हाटकेश्वरम् ॥ तपसां लक्षणं चैव द्विजानां वैभवं तथा॥५४॥ आधिक्यं सर्वमूर्तीनां लिंगमूर्तेर्विशेषतः ॥ लिंगेऽस्मिन्नानुपूर्व्येण विस्तरेणानुकीर्त्यते ॥ ५५ ॥ एतज्ज्ञात्वा पुराणस्य संक्षेपं कीर्तयेत्तु यः ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥५६॥ इति श्रीलिङ्गमहापुराणे पूर्वभागेऽनुक्रमणिकावर्णनं नाम द्वितीयोऽध्यायः॥२॥

सूत उवाच ॥ अलिंगो लिंगमूलं तु अव्यक्तं लिंगमुच्यते ॥ अलिंगः शिव इत्युक्तो लिंगं शैवमिति स्मृतम् ॥ १ ॥

अत्र 'ङमोह्रस्वादचि' इति ङमुट्। विस्तरेण चानुकीर्त्यते वर्ण्यत इत्यर्थः । यद्वात्रोक्तकथानामानुपूर्व्या अभावात्तथा कथानां प्रायशः संक्षेपात्नानुपूर्व्येण न विस्तरेण चेत्यन्वयो बोध्यः ॥ ५५ ॥ पुराणसंक्षेपज्ञानस्य फलं निरूपयति-एतदिति ॥ ५६ ॥ मातापितृसमायुक्तं पत्नीसूनुसुहृद्वृतम् । अनुक्रमेण मां सांब सदा त्वत्पार्श्वगं कुरु ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामनुक्रमणिकावर्णनं नाम द्वितीयोऽध्यायः॥२॥ ब्रह्मांडरूपलिंगस्य संभवस्थितिसंहतीः । संक्षेपेण शिवात्सांबात्तृनी येऽस्मिन्निगद्यते ॥ नास्ति लिंगं चिह्नं यस्य सः अलिंगः निर्गुणः अत एव श्रुतयोऽपि अरूपमगमामित्यादिनिषेधमुखेनैव परमेश्वरं प्रतिपादयंति । तदुक्तं महिम्ने-" अतीतः पंथानं

तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि" ॥इति । लिंगस्य मूलं कारणम् । अव्यक्तं प्रकृतिः। लिंगं तु उच्यत इत्यन्वयः॥१॥ अलिंगतटस्थाशिवलक्षणं निरूपयति–गंधवर्णरसैर्हीनमित्यादिना ॥ २ ॥ लिंगस्वरूपं निरूपयति–गंधवर्णरसैर्युक्तमित्यादिना ॥ ३ ॥४॥ सप्तधा चाष्टधैकादशधेत्यनेन षड्विंशतितत्त्वरूपेणेत्यर्थः ॥५॥ तेभ्यो माया विततलिंगेभ्यः शिवात्मकं शिवस्वरूपम् । दीव्यंति क्रीडंतीति देवाः । प्रधानाः मुख्याश्च ते देवाश्च प्रधानदेवाः तेषां त्रयमासीदित्यन्वयः । त्रिषु एकस्माद्विश्वमभूदित्यनेनानियमः सूचितः अतो यस्माज्जायते स ब्रह्मा येन पाल्यते स विष्णुः येन संह्रियते स रुद्रः । तथा च कार्यभेदेनैव संज्ञाभेदो न तु वास्तवः एकात्मकत्वात् । तदुक्तं हरिवंशे "यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः । एका मूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः ॥" इति ॥ ६ ॥ ७ ॥ परमेश्वरः शिवः स एवास्याग्रि

प्रधानं प्रकृतिश्चेति यदाहुर्लिंगमुत्तमम् ॥ गंधवर्णरसैर्हीनं शब्दस्पर्शादिवर्जितम् ॥ २ ॥ अगुणं ध्रुवमक्षय्यमलिंगं शिवलक्षणम् ॥ गंधवर्णरसैर्युक्तं शब्दस्पर्शादिलक्षणम्॥३॥ जगद्योनिं महाभूतं स्थूलं सूक्ष्मं द्विजोत्तमाः॥ विग्रहो जगतां लिंगमलिंगादभवत्स्वयम्॥४॥ सप्तधा चाष्टधा चैव तथैकादशधा पुनः ॥ लिंगान्यलिंगस्य तथा मायया विततानि तु ॥ ५ ॥ तेभ्यः प्रधानदेवानां त्रयमासीच्छिवात्मकम् ॥ एकस्मात्त्रिष्वभूद्विश्वमेकेन परिरक्षितम् ॥६॥ एकेनैव हृतं विश्वं व्याप्तं त्वेवं शिवेन तु ॥ अलिंगं चैव लिंगं च लिंगालिंगानि मूर्तयः ॥ ७ ॥ यथावत्कथिताश्चैव तस्माद्ब्रह्म स्वयं जगत् ॥ अलिंगी भगवान् बीजी स एव परमेश्वरः ॥८॥ बीजं योनिश्च निर्बीजं निर्बीजो बीजमुच्यते ॥ बीजयोनिप्रधानानामात्माख्या वर्तते त्विह ॥ ९ ॥ परमात्मा मुनिर्ब्रह्मा नित्यबुद्धस्वभावतः ॥ विशुद्धोयं तथा रुद्रः पुराणे शिव उच्यते ॥ १० ॥ शिवेन दृष्टा प्रकृतिः शैवी समभवद्द्विजाः ॥ सर्गादौ सा गुणैर्युक्ता पुराव्यक्ता स्वभावतः ॥ ११ ॥ अव्यक्तादिविशेषांतं विश्वं तस्याः समुच्छ्रितम् ॥ विश्वधात्री त्वजाख्या च शैवी सा प्रकृतिः स्मृता ॥ १२ ॥ तामजां लोहितां शुक्लां कृष्णामेकां बहुप्रजाम् ॥ जनित्रीमनुशेते स्म जुषमाणः स्वरूपिणीम् ॥ १३ ॥

मेणान्वयः ॥ ८ ॥ बीजं ब्रह्मा योनिर्विष्णुः निर्गतं बीजं यस्मात्सः निर्बीजो रुद्रः निर्बीजं कारणशून्यं यथास्यात्तथा बीजं जगत्कारणमुच्यत इत्यन्वयः । बीजयोनिप्रधानानां ब्रह्मविष्णुरुद्राणामात्माख्या विश्वप्राज्ञतैजससंज्ञा ॥ ९ ॥ अयं रुद्रो नित्यबुद्धस्वभावतः तथा मुन्यादिप्रकारेण पुराणे पुराणेषु जात्यभिप्रायमेकवचनं परमात्मा तुरीय उच्यते "शिवमद्वैतं तुरीयं मन्यंते" इति श्रुतेः ॥ १० ॥ शिवेन पुरा दृष्टा प्रकृतिः शैवी सर्गादौ स्वभावतः गुणैर्युक्ता व्यक्ता समभवदित्यन्वयः ॥ ११ ॥ अव्यक्तादि महत्त्वादि विशेषांतं स्थूलभूतचरममित्यर्थः । शैवी सा प्रकृतिः अजाख्या स्मृतेत्यन्वयः ॥ १२ ॥ आजामेकामिति श्रुतेरनुवादमाह द्वाभ्याम्–तामजामिति । लोहितां शुक्लां कृष्णां

रजःसत्त्वतमोगुणात्मिकां बहु अनेकविधप्रजां स्वरूपिणीं जनित्रीं जननशीलां जुषमाणः प्रीत्या सेवमानः अजो बद्धजीवः अनुशेतेऽनुसरति ॥ १३ ॥ अन्योऽजः विरक्तजीवः भुक्तभोगामास्वादितरसां जहाति त्यजति । अजेन परमेश्वरेणाधिष्ठिता ईक्षिताऽजा जगतामनंतब्रह्मांडानां जनित्री अभवदित्यन्वयः ॥ १४ ॥ पुरुषाधिष्ठितस्य सर्गकाले त्रिभिर्गुणैर्युक्तस्येति शेषः । प्रधानस्य प्रधानादजाज्ञयेश्वरेच्छया स महान् महत्तत्वं प्रादुर्बभूवेत्यन्वयः । अपादानस्यापि शेषत्वविवक्षायां षष्ठी ॥ १५ ॥ १६ ॥ महतो महत्त्वात्संकल्पाध्यवसायिका वृत्तिः सात्त्विकोऽहंकारस्तथा महतस्त्रिगुणो रजोधिकोऽहंकारः बभूवेत्यन्वयः ॥ १७ ॥ तेनैव रजोगुणेनैव सम्यगावृतः तमोधिकोऽहंकारो बभूव ।

तामेवाजामजोऽन्यस्तु भुक्तभोगां जहाति च ॥ अजा जनित्री जगतां साजेन समधिष्ठिता ॥१४॥ प्रादुर्बभूव स महान् पुरुषाधिष्ठितस्य च ॥ अजाज्ञया प्रधानस्य सर्गकाले गुणैस्त्रिभिः ॥ १५ ॥ सिसृक्षया चोद्यमानः प्रविश्याव्यक्तमव्ययम् ॥ व्यक्तसृष्टिं विकुरुते चात्मनाधिष्ठितो महान् ॥ १६ ॥ महतस्तु तथा वृत्तिः संकल्पाध्यवसायिका ॥ महतस्त्रिगुणस्तस्मादहंकारो रजोधिकः ॥ १७ ॥ तेनैव चावृतः सम्यगहंकारस्तमोधिकः ॥ महतो भूततन्मात्रं सर्गकृद्वै बभूव च ॥ १८ ॥ अहंकाराच्छब्दमात्रं तस्मादाकाशमव्ययम् ॥ सशब्दमावृणोत्पश्चादाकाशं शब्दकारणम् ॥ १९ ॥ तन्मात्राद्भूतसर्गश्च द्विजास्त्वेवं प्रकीर्तितः ॥ स्पर्शमात्रं तथाकाशात्तस्माद्वायुर्महान्मुने ॥ २० ॥ तस्माच्च रूपमात्रं तु ततोग्निश्च रसस्ततः ॥ रसादापः शुभास्ताभ्यो गंधमात्रं धरा ततः ॥ २१ ॥ आवृणोद्धि तथाकाशं स्पर्शमात्रं द्विजोत्तमाः ॥ आवृणोद्रूपमात्रं तु वायुर्वाति क्रियात्मकः ॥ २२ ॥ आवृणोद्रसमात्रं वै देवः साक्षाद्विभावसुः ॥ आवृण्वाना गंधमात्रमापः सर्वरसात्मिकाः ॥ २३ ॥ क्ष्मा सा पंचगुणा तस्मादेकोना रससंभवाः ॥ त्रिगुणो भगवान्वह्निर्द्विगुणः स्पर्शसंभवः ॥ २४ ॥ अवकाशस्ततो देव एकमात्रस्तु निष्कलः ॥ तन्मात्राद्भूतसर्गश्च विज्ञेयश्च परस्परम् ॥ २५ ॥ वैकारिकः सात्त्विको वै युगपत्संप्रवर्तते ॥ सर्गस्तथाप्यहंकारादेवमत्र प्रकीर्तितः ॥२६॥ पंच बुद्धींद्रियाण्यस्य पंच कर्मेंद्रियाणि तु ॥ शब्दादीनामवाप्त्यर्थं मनश्चैवोभयात्मकम् ॥ २७ ॥

महतो महत्तत्त्वात्तज्जन्याहंकाराद्भूततन्मात्रं शब्दरूपमित्यर्थः ॥ १८॥ तन्मात्रद्वारा सर्गं कथयति—अहंकारादित्यादिना । नाशब्दकारणमहंकारः पश्चात्सशब्दमाकाशमावृणोदित्यनेन कारणस्य तत्तत्कार्यव्यापकत्वं बोधितम् ॥ १९ ॥ तन्मात्राद्भूतसर्ग एवमुक्तप्रकारेण प्रकीर्तित इत्यन्वयः । आकाशात्स्पर्शमात्रं स्पर्श एवेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ २५ ॥ वैकारिको राजसस्तामसः सात्त्विकः सर्गो युगपत् समकालं प्रवर्तते तथाप्यहंकारादेवमुक्तक्रमेणात्र लैंगे प्रकीर्तित उक्तः ॥ २६ ॥ अस्य जीवस्य

शब्दादीनां शब्दस्पर्शरूपरसगंधवचनादानगमनोत्सर्गरतीनामवाप्त्यर्थं मन उभयात्मकं ज्ञानकर्मेन्द्रियरूपं च कृतमिति शेषः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ३७ ॥ ३८ ॥ प्राथमिकः मुख्यः शुभः कल्याणरूपः अबुद्धिपूर्वो नाम ईशनिर्मितः तदुक्तं पंचदश्यां कूटस्थदीपे–" ईक्षणादिप्रवेशांता सृष्टिरीशकृता भवत् " इति ॥ ३९ ॥ " भगवन् करुणासिंधो सर्गादस्मात्सुदुस्तरात् । ईशजीवकृतात्मांव प्रपन्नं मां समुद्धर ॥" इति श्रीलिङ्गमहापुराणे पूर्वभागे शिव

महदादिविशेषांता ह्यंडमुत्पादयंति च ॥ जलबुद्बुदवत्तस्मादवतीर्णः पितामहः ॥ २८ ॥ स एव भगवान् रुद्रो विष्णुर्विश्वगतः प्रभुः ॥ तस्मिन्नंडे त्विमे लोका अंतर्विश्वमिदं जगत् ॥ २९ ॥ अंडं दशगुणेनैव वारिणा प्रावृतं बहिः ॥ आपो दशगुणेनैव तद्बाह्ये तेजसा वृताः ॥ ३० ॥ तेजो दशगुणेनैव बाह्यतो वायुना वृतम् ॥ वायुर्दशगुणेनैव बाह्यतो नभसा वृतः ॥ ३१ ॥ आकाशेनावृतो वायुरहंकारेण शब्दजः ॥ महता शब्दहेतुर्वै प्रधानेनावृतः स्वयम् ॥ ३२ ॥ सप्तांडावरणान्याहुस्तस्यात्मा कमलासनः ॥ कोटिकोटियुतान्यत्र चांडानि कथितानि तु ॥ ३३ ॥ तत्रतत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ॥ सृष्टाः प्रधानेन तदा लब्ध्वा शंभोस्तु संनिधिम् ॥ ३४ ॥ लयश्चैव तथान्योन्यमाद्यंतमिति कीर्तितम् ॥ सर्गस्य प्रतिसर्गस्य स्थितेः कर्ता महेश्वरः ॥ ३५ ॥ सर्गे च रजसा युक्तः सत्त्वस्थः प्रतिपालने ॥ प्रतिसर्गे तमोद्रिक्तः स एव त्रिविधः क्रमात् ॥ ३६ ॥ आदिकर्ता च भूतानां संहर्ता परिपालकः ॥ तस्मान्महेश्वरो देवो ब्रह्मणोधिपतिः शिवः ॥ ३७ ॥ सदाशिवो भवो विष्णुर्ब्रह्मा सर्वात्मको यतः ॥ एतदंडे तथा लोका इमे कर्ता पितामहः ॥ ३८ ॥ प्राकृतः कथितस्त्वेष पुरुषाधिष्ठितो मया ॥ सर्गश्चाबुद्धिपूर्वस्तु द्विजाः प्राथमिकः शुभः ॥ ३९ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे प्राकृतप्राथमिकसर्गकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥ सूत उवाच ॥ अथ प्राथमिकस्येह यः कालस्तदहः स्मृतम् ॥ सर्गस्य तादृशी रात्रिः प्राकृतस्य समासतः ॥ १ ॥ दिवा सृष्टिं विकुरुते रजन्यां प्रलयं विभुः ॥ औपचारिकमस्यैतदहोरात्रं न विद्यते ॥ २ ॥ दिवा विकृतयः सर्वे विकारा विश्वदेवताः ॥ प्रजानां पतयः सर्वे तिष्ठंत्यन्ये महर्षयः ॥ ३ ॥ रात्रौ सर्वे प्रलीयंते निशांते संभवंति च ॥ अहस्तु तस्य वैकल्पो रात्रिस्तादृग्विधा स्मृता ॥ ४ ॥

तोषिण्यां टीकायां प्राकृतप्राथमिकसर्गनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थेस्मिंस्तु सर्वेषां कालमानं सुविस्तरम् । असंख्याण्डोद्भवश्चैव ब्रह्मकृत्यं हि वर्ण्यते ॥ अथ प्राथमिकस्य ब्रह्मणः यः सर्गस्य कालस्तदेवाहः तादृशी तत्परिमाणिका रात्रिः ॥ १ ॥ औपचारिकमुत्पत्तिप्रलयकल्पितं न त्वस्मदादिवत्सूर्योदयास्तरूपम् ॥ २ ॥ ३ ॥ ४ ॥

चतुर्युगसहस्राणामंतः समाप्तिर्यस्मिन्नेतादृशे ब्रह्मणोहर्भूते काले चतुर्दश मनव इत्यन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ॥१२॥१३॥१४॥ ॥ १५॥१६॥१७॥

चतुर्युगसहस्रांते मनवस्तु चतुर्दश ॥ चत्वारि तु सहस्राणि वत्सराणां कृतं द्विजाः ॥ ५ ॥ तावच्छती च वै संध्या संध्यांशश्च कृतस्य तु ॥ त्रिशती द्विशती संध्या तथा चैकशती क्रमात् ॥६॥ अंशकः षट्शतं तस्मात्कृतसंध्यांशकं विना ॥ त्रिद्व्येकसाहस्रमितौ विना संध्यांशके न तु ॥ ७ ॥ त्रेताद्वापरतिष्याणां कृतस्य कथयामि वः ॥ निमेषपंचदशका काष्ठा स्वस्थस्य सुव्रताः ॥ ८ ॥ मर्त्यस्य चाक्ष्णोस्तस्याश्च ततस्त्रिंशतिका कला ॥ कलात्रिंशतिको विप्रा मुहूर्त इति कल्पितः ॥९ ॥ मुहूर्तपंचदशिका रजनी तादृशं त्वहः ॥ पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ॥ १० ॥ कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ॥ त्रिंशद्ये मानुषा मासाः पित्र्यो मासस्तु स स्मृतः ॥ ११ ॥ शतानि त्रीणि मासानां षष्ट्या चाप्यधिकानि वै ॥ पित्र्यः संवत्सरो ह्येष मानुषेण विभाव्यते ॥ १२ ॥ मानुषेणैव मानेन वर्षाणां यच्छतं भवेत् ॥ पितृणां त्रीणि वर्षाणि संख्यातानीह तानि वै ॥१३॥ दश वै द्व्यधिका मासाः पितृसंख्येह संस्मृता ॥ लौकिकेनैवं मानेन अब्दो यो मानुषः स्मृतः ॥ १४ ॥ एतद्दिव्यमहोरात्रमिति लैंगेऽत्र पठ्यते ॥ दिव्ये रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ॥१५॥ अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ एते रात्र्यहनी दिव्ये प्रसंख्याते विशेषतः ॥१६॥ त्रिंशद्यानि तु वर्षाणि दिव्यो मासस्तु स स्मृतः॥ मानुषं तु शतं विप्रा दिव्यमासास्त्रयस्तु ते॥१७॥ दश चैव तथाहानि दिव्यो ह्येष विधिः स्मृतः॥ त्रीणि वर्षशतान्येव षष्टिवर्षाणि यानि तु ॥१८॥ दिव्यः संवत्सरो ह्येष मानुषेण प्रकीर्तितः ॥ त्रीणि वर्षसहस्राणि मानुषाणि प्रमाणतः ॥१९॥ त्रिंशदन्यानि वर्षाणि मतः सप्तर्षिवत्सरः॥ नव यानि सहस्राणि वर्षाणां मानुषाणि तु॥२०॥ अन्यानि नवतीश्चैव ध्रौवः संवत्सरस्तु सः ॥ षट्त्रिंशत्तु सहस्राणि वर्षाणां मानुषाणि तु ॥ २१ ॥ वर्षाणां तच्छतं ज्ञेयं दिव्यो ह्येष विधिः स्मृतः ॥ त्रीण्येव नियुतान्याहुर्वर्षाणां मानुषाणि तु ॥ २२ ॥ षष्टिश्चैव सहस्राणि संख्यातानि तु संख्यया ॥ दिव्यं वर्षसहस्रं तु प्राहुः संख्याविदो जनाः ॥ २३ ॥ दिव्येनैव प्रमाणेन युगसंख्याप्रकल्पनम् ॥ पूर्वं कृतयुगं नाम ततस्त्रेता विधीयते ॥ २४ ॥ द्वापरश्च कलिश्चैव युगान्येतानि सुव्रताः ॥ अथ संवत्सरा दृष्टा मानुषेण प्रमाणतः ॥ २५ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ त्रीणि नियुतानि त्रिलक्षाणि षष्टिसहस्राणि च दिव्यं वर्षसहस्रमिति पूर्वस्यैवान्वयः ॥ २३ ॥ २४ ॥ २५ ॥

चतुर्युगकालं पंचभिः कथयति—कृतस्येत्यादिना । अत्रोक्तसंख्यांकाः स्फुटबोधार्थमग्रे लिख्यंते॥२६॥२७॥२८॥२९॥ कृतयुगसंख्या १४४०००० त्रेतासंख्या १०८०००० द्वापरसंख्या ७२०००० कलिसंख्या ३६०००० चतुर्युगः कालः संध्यांशादृते षट्त्रिंशन्नियुतानि स्मृत इत्यग्रिमेणान्वयः ॥ ३० ॥ त्रीणि नियुतानि चत्वारिंशत्त । विंशतिश्च सहस्राणि चतुर्युगः संध्यांश इत्यग्रिमेणान्वयः ॥ ३१ ॥ एवं चतुर्युगाख्यानां कालानामिति शेषः । अधिकेन किंचिदधिककालेन सहिता युक्ता एकसप्ततिर्मन्वंतर

कृतस्याद्यस्य विप्रेंद्रा दिव्यैमानेन कीर्तितम् ॥ सहस्राणां शतान्यासंश्चतुर्दश च संख्यया ॥ २६ ॥ चत्वारिंशत्सहस्राणि तथान्यानि कृतं युगम् ॥ तथा दशसहस्राणां वर्षाणां शतसंख्यया ॥२७॥ अशीतिश्च सहस्राणि कालस्त्रेतायुगस्य च ॥ सप्तैव नियुतान्याहुर्वर्षाणां मानुषाणि तु ॥ २८ ॥ विंशतिश्च सहस्राणि कालस्तु द्वापरस्य च ॥ तथा शतसहस्राणि वर्षाणां त्रीणि संख्यया ॥ २९ ॥ षष्टिश्चैव सहस्राणि कालः कलियुगस्य तु ॥ एवं चतुर्युगः काल ऋते संध्यांशकात्स्मृतः ॥३०॥ नियुतान्येव षट्त्रिंशन्निरंशानि तु तानि वै ॥ चत्वारिंशत्तथा त्रीणि नियुतानीह संख्यया ॥ ३१ ॥ विंशतिश्च सहस्राणि संध्यांशश्च चतुर्युगः ॥ एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः ॥ ३२ ॥ कृतत्रेतादियुक्तानां मनोरंतरमुच्यते ॥ मन्वन्तरस्य संख्या च वर्षाग्रेण प्रकीर्तिता ॥ ३३ ॥ त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण द्विजोत्तमाः ॥ सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ॥ ३४ ॥ विंशतिश्च सहस्राणि कालोयमाधिकं विना ॥ मन्वंतरस्य संख्येषा लैंगेस्मिन्कीर्तिता द्विजाः ॥ ३५ ॥ चतुर्युगस्य च तथा वर्षसंख्याप्रकीर्तिता ॥ चतुर्युगसहस्रं वै कल्पश्चैको द्विजोत्तमाः ॥ ३६ ॥ निशांते सृजते लोकान् नश्यंते निशि जंतवः ॥ तत्र वैमानिकानां तु अष्टाविंशतिकोटयः ॥ ३७ ॥ मन्वंतरेषु वै संख्या सांतरेषु यथातथा ॥ त्रीणि कोटिशतान्यासन् कोट्यो द्विनवतिस्तथा ॥३८॥ कल्पेतीऽते तु वै विप्राः सहस्राणां तु सप्ततिः॥ पुनस्तथाष्टसाहस्रं सर्वत्रैव समासतः॥३९॥कल्पावसानिकांस्त्यक्त्वा प्रलये समुपस्थिते॥महर्लोकात् प्रयांत्येते जनलोकं जनास्ततः॥४०॥

मित्यग्रिमेणान्वयः ॥ ३२ ॥ वर्षाणामग्रेणालंबनेन वा त्रातेन समुदायेनेत्यर्थः । 'आग्रमालंबने त्रातः' इति विश्वः ॥ ३३ ॥ ३४ ॥ केवलं एकसप्ततियुगकालस्तु त्रिंशत्कोटीत्यादिनोक्तः ३०६७२०००० परमयं पूर्वोक्तससंध्यांशचतुर्युग ३९६०००० मानेन न भवतीत्यतः पूर्वापररूपद्विगुणसंध्यांशमादाय ज्योतिषोक्तत्रिचत्वारिंशल्लक्षविंशतिसहस्रमानेन ज्ञेयः । पूर्वोक्तमानेन २८९१६०००० एवमग्रेप्युक्ता संख्यान्यविधमानैरवगम्या ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रलये ब्रह्मदिनावसाने जनाः महर्लोका

ज्नलोकं प्रयातीत्यन्वयः । तदुक्तं विष्णुपुराणे-" तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् ॥ जनं प्रयांति तापार्ता महर्लोकनिवासिनः ॥ " इति ॥ ४० ॥ ४१॥ ॥ ४२ ॥ सर्वदेवोद्भवस्य विष्णोर्युगसाहस्रं ब्रह्मयुगसाहस्रं सवनं दिनं भवतीत्यन्वयः ॥ ४३ ॥ सवनानां विष्णुसवनानां त्रिविधं त्रिगुणं नाम नवसहस्रमित्यर्थः । कालात्मन

कोटीनां द्वे सहस्रे तु अष्टौ कोटिशतानि तु ॥ द्विषष्टिश्च तथा कोट्यो नियुतानि च सप्ततिः ॥४१॥ कल्पार्धसंख्या दिव्या वै कल्पमेवं तु कल्पयेत् ॥ कल्पानां वै सहस्रं तु वर्षमेकमजस्य तु ॥ ४२ ॥ वर्षाणामष्टसाहस्रं ब्राह्मं वै ब्रह्मणो युगम् ॥ सवनं युगसाहस्रं सर्वदेवोद्भवस्य तु ॥ ४३ ॥ सवनानां सहस्रं तु त्रिविधं त्रिगुणं तथा ॥ ब्रह्मणस्तु तथा प्रोक्तः कालः कालात्मनः प्रभोः ॥ ४४ ॥ भवोद्भवस्तपश्चैव भव्यो रंभः क्रतुः पुनः ॥ ऋतुर्वह्निर्हव्यवाहः सावित्रः शुद्ध एव च ॥ ४५ ॥ उशिकः कुशिकश्चैव गांधारो मुनिसत्तमाः ॥ ऋषभश्च तथा षड्जो मज्जालीयश्च मध्यमः ॥ ४६ ॥ वैराजो वै निषादश्च मुख्यो वै मेघवाहनः ॥ पंचमश्चित्रकश्चैव आकूतिर्ज्ञान एव च ॥ ४७ ॥ मनः सुदर्शो बृंहश्च तथा वै श्वेतलोहितः ॥ रक्तश्च पीतवासाश्च असितः सर्वरूपकः ॥ ४८ ॥ एवं कल्पास्तु संख्याता ब्रह्मणोऽव्यक्तजन्मनः ॥ कोटिकोटिसहस्राणि कल्पानां मुनिसत्तमाः ॥ ४९ ॥ गतानि तावच्छेषाणि अहर्निश्यानि वै पुनः ॥ परांते वै विकाराणि विकारं यांति विश्वतः ॥ ५०॥ विकारस्य शिवस्याज्ञावशेनैव तु संहृतिः ॥ संहृते तु विकारे च प्रधाने चात्मनि स्थिते ॥ ५१ ॥ साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ ॥ गुणानां चैव वैषम्ये विप्राः सृष्टिरिति स्मृता ॥ ५२ ॥ साम्ये लयो गुणानां तु तयोर्हेतुर्महेश्वरः ॥ लीलया देवदेवेन सर्गास्त्वीदृग्विधाः कृताः ॥ ५३ ॥ असंख्याताश्च संक्षेपात् प्रधानादन्वधिष्ठितात् ॥ असंख्याताश्च कल्पाख्या ह्यसंख्यताः पितामहाः ॥ ५४ ॥ हरयश्चाप्यसंख्यातास्त्वेक एव महेश्वरः ॥ प्रधानादिप्रवृत्तानि लीलया प्राकृतानि तु ॥५५॥ गुणात्मिका च तद्वृत्तिस्तस्य देवस्य वै त्रिधा ॥ अप्राकृतस्य तस्यादिर्मध्यांतं नास्ति चात्मनः ॥ ५६ ॥ पितामहस्याथ परः परार्धद्वयसंमितः ॥ दिवा सृष्टं तु यत्सर्वं निशि नश्यति चास्य तत् ॥ ५७ ॥

प्रभो रुद्रस्य कालो दिवसः । यद्वा कल्प्यते गण्यतेऽनेनेति कालः निमेषरूपः प्रोक्त इत्यग्रिमणान्वयः ॥ ४४ ॥ भवोद्भवादीनि कल्पनामानि ॥ ४५॥ ४६ ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ परांते महाप्रलयकाले विश्वतः विश्वानीत्यर्थः । सार्वविभक्तिकस्तसिः । विकारं प्रलयं यांति प्राप्नुवंतीत्यर्थः ॥ ५० ॥ विकारस्य प्रलयस्यापि शिवस्याज्ञावशेनैव

संहृतिर्भवति तदानीमन्याभावादित्याशयः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ यः ब्रह्मा अंभसि सुष्वाप तस्मान्नारायण इति स्मृत इत्यन्वयः । तदुक्तं विष्णुपुराणे–" इमं चोदाहरंत्यत्र श्लोकं नारायणं प्रति ॥ ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययम् ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥" इति ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥६३॥ "सांब त्वन्मायया सृष्टौ ब्रह्माणो हरयो हराः ॥ विवर्तंते क चाहं वै कृपया मां समुद्धर ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सृष्टिप्रारंभवर्णनं नाम चतुर्थोऽध्यायः ॥ ४॥ पंचमे ब्रह्मणः साक्षात्सर्गो विद्यादिकस्तथा ॥ ऋषीणां देवतानां च वक्ष्यन्ते हि निरूप्यते ॥ अविद्यां विना सृष्टेष्वपि देहेषु जीवानां कर्तृत्वभोक्तृत्वं न संभवतीत्यतः प्रथमतो विद्याप्रादुर्भावमूलं कथयति–यदेति । अव्यक्तात् प्रधानाज्जन्म यस्यासौ अव्य

भूर्भुवःस्वर्महस्तत्र नश्यते चोर्ध्वतो न च ॥ रात्रौ चैकार्णवे ब्रह्मा नष्टे स्थावरजंगमे ॥ ५८ ॥ सुष्वापांभसि यस्तस्मान्नारायण इति स्मृतः ॥ शर्वर्यंते प्रबुद्धो वै दृष्ट्वा शून्यं चराचरम् ॥५९॥ स्रष्टुं तदा मतिं चक्रे ब्रह्मा ब्रह्मविदां वरः॥ उदकैराप्लुतां क्ष्मां तां समादाय सनातनः ॥ ६० ॥ पूर्ववत्स्थापयामास वाराहं रूपमास्थितः ॥ नदीनदसमुद्रांश्च पूर्ववच्चाकरोत्प्रभुः ॥ ६१ ॥ कृत्वा धरां प्रयत्नेन निम्नोन्नतिविवर्जिताम् ॥ धरायां सोचिनोत्सर्वान् गिरीन् दग्धान् पुराग्निना ॥ ६२ ॥ भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्ववत् ॥ स्रष्टुं च भगवांश्चक्रे तदा स्रष्टा पुनर्मतिम् ॥ ६३ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे सृष्टिप्रारंभवर्णनं नाम चतुर्थोऽध्यायः ॥४॥ सूत उवाच ॥ यदा स्रष्टुं मतिं चक्रे मोहश्चासीन्महात्मनः ॥ द्विजाश्च बुद्धिपूर्वं तु ब्रह्मणाऽव्यक्तजन्मनः ॥ १ ॥ तमो मोहो महामोहस्तामिस्रश्चांधसंज्ञितः ॥ अविद्या पंचधा ह्येषा प्रादुर्भूता स्वयंभुवः ॥२॥ अविद्यया मुनेर्ग्रस्तः सर्गो मुख्य इति स्मृतः ॥ असाधक इति स्मृत्वा सर्गो मुख्यः प्रजापतिः ॥ ३ ॥ अभ्यमन्यत सोऽन्यं वै नगा मुख्योद्भवाः स्मृताः ॥ त्रिधा कंठो मुनेस्तस्य ध्यायतो वै ह्यवर्तत ॥ ४ ॥ प्रथमं तस्य वै जज्ञे तिर्यक्स्रोतो महात्मनः ॥ ऊर्ध्वस्रोतः परस्तस्य सात्त्विकः स इति स्मृतः ॥ ५ ॥

क्तजन्मा तस्य ब्रह्मणः अबुद्धिपूर्वं यथा स्यात्तथा अनवधानमूल इत्यर्थः । मोह आसीदित्यन्वयः॥१॥ एषा तमआदिरूपाविद्या पञ्चधा पंचप्रकारेण स्वयंभुवः प्रादुर्भूतेत्यन्वयः । तमो देहादावनात्मन्यात्माभिमानः मोहस्तत्संबंधिपुत्रदारादिषु ममता महामोहः शब्दादिरम्यविषयेच्छा तामिस्रो विषयप्रतिघाते क्रोधः अंधतामिस्रः ममतास्पदरक्षणाभिनिवेशः । एते पंच विपर्ययाः "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति पातंजलयोगसूत्रे उक्ताः ॥ २ ॥ मुनेर्ब्रह्मणः मुख्यः प्रथमः सर्गः अविद्यया ग्रस्त इति असुख्यः स्मृत इत्यन्वयः । प्रजापतिर्ब्रह्मा सर्गो न साधक इति स्मृत्वान्यमभ्यमन्यतत्याग्रिमेणान्वयः ॥ ३ ॥ मुख्यसर्गमाह–नगाः वृक्षाः मुख्योद्भवाः प्रथमोत्पन्ना इत्यर्थः । त्रिधा तमःसत्त्वरजोरूपः ॥ ४ ॥ तिर्यक् स्रोतो गतिर्यस्यासौ तिर्यक्स्रोताः पश्वादिः 'स्रोतो गतौ समुद्रे च' इति शब्दमहार्णवः । ऊर्ध्वस्रोतोंतरिक्षगः देवादिरित्यर्थः ॥ ५ ॥ अर्वाक्

स्रोतो मनुष्यरूपः अनुगृह्यत इत्यनुग्रहः पूर्वोक्तवृक्षादिचतुष्टये ईश्वरानुग्रहजन्यविपर्यासादिशक्तिविशेष इत्यर्थः । तदुक्तं सप्ततितमाध्याये—"पंचमोऽनुग्रहः सर्गश्चतुर्धा तु व्यवस्थितः ॥ विपर्ययेण शक्त्या च सिद्ध्या तुष्ट्या तथैव च ॥ स्थावरेषु विपर्यासस्तिर्यग्योनिषु शक्तितः ॥ सिद्धात्मानो मनुष्यास्तु ऋषिदेवेषु कृत्स्नशः ॥" इति । तथोक्तसर्गः पुनरन्यप्रकारेणोच्यत इत्यग्रिमेणान्वयः । ब्रह्मणस्तत्मकाशान्महतो महत्तत्त्वस्याद्यः प्रथमः भौतिको भूततन्मात्रासर्गः द्वितीय इत्वन्वयः ॥ ६ ॥ ऐंद्रियः श्रवणेंद्रियादिरूपः

अर्वाक्स्रोतोऽनुग्रहश्च तथा भूतादिकः पुनः ॥ ब्रह्मणो महतस्त्वाद्यो द्वितीयो भौतिकस्तथा ॥ ६ ॥ सर्गस्तृतीयश्चैंद्रियस्तुरीयो मुख्य उच्यते ॥ तिर्यग्योन्यः पंचमस्तु षष्ठो दैविक उच्यते ॥ ७ ॥ सप्तमो मानुषो विप्रा अष्टमोऽनुग्रहः स्मृतः ॥ नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे ॥ ८ ॥ पुरस्तादसृजद्देवः सनंदं सनकं तथा ॥ सनातनं मुनिश्रेष्ठा नैष्कर्म्येण गताः परम् ॥ ९ ॥ मरीचिभृग्वंगिरसः पुलस्त्यं पुलहं क्रतुम् ॥ दक्षमत्रिं वसिष्ठं च सोऽसृजद्योगविद्यया ॥ १० ॥ नवैते ब्रह्मणः पुत्रा ब्रह्मज्ञा ब्राह्मणोत्तमाः ॥ ब्रह्मवादिन एवैते ब्रह्मणः सदृशाः स्मृताः ॥ ११ ॥ संकल्पश्चैव धर्मश्च ह्यधर्मो धर्मसंनिधिः ॥ द्वादशैव प्रजास्त्वेता ब्रह्मणोऽव्यक्तजन्मनः ॥ १२ ॥ ऋभुं सनत्कुमारं च ससर्जादौ सनातनः ॥ तावूर्ध्वरेतसौ दिव्यौ चाग्रजौ ब्रह्मवादिनौ ॥ १३ ॥ कुमारौ ब्रह्मणस्तुल्यौ सर्वज्ञौ सर्वभाविनौ ॥ वक्ष्ये भार्याकुलं तेषां मुनीनामग्रजन्मनाम् ॥ १४ ॥ समासतो मुनिश्रेष्ठाः प्रजासंभूतिमेव च ॥ शतरूपां तु वै राज्ञीं विराजमसृजत्प्रभुः ॥ १५ ॥ स्वायंभुवात्तु वै राज्ञी शतरूपा त्वयोनिजा ॥ लेभे पुत्रद्वयं पुण्या तथा कन्याद्वयं च सा ॥ १६ ॥ उत्तानपादो ह्यवरो धीमाञ्ज्येष्ठः प्रियंव्रतः ॥ ज्येष्ठा वरिष्ठा त्वाकूतिः प्रसूतिश्चानुजा स्मृता ॥ १७ ॥ उपयेमे तदाकूतिं रुचिर्नाम प्रजापतिः ॥ प्रसूतिं भगवान्दक्षो लोकधात्रीं च योगिनीम् ॥ १८ ॥ दक्षिणासहितं यज्ञमाकूतिः सुषुवे तथा ॥ दक्षिणा जनयामास दिव्या द्वादश पुत्रिकाः ॥ १९ ॥ प्रसूतिः सुषुवे दक्षाच्चतुर्विंशतिकन्यकाः ॥ श्रद्धां लक्ष्मीं धृतिं पुष्टिं तुष्टिं मेधां क्रियां तथा ॥ २० ॥

मुख्यो वृक्षादिः तिर्यग्योन्यः पश्वादिः ॥ ७ ॥ अमी पूर्वोक्तनवसर्गाः प्राकृताः प्रकृतिजन्याः वैकृताः विकारं प्राप्ता इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ धर्मसंनिधिर्धर्मसमानाधिकरणः उभयोर्जीववृत्तित्वात् ॥ १२ ॥ १३ ॥ १४ ॥ विराजं स्वायंभुवं मनुं प्रभुर्ब्रह्मेत्यर्थः ॥ १५ ॥ अत्र कन्याद्वयमुक्तम् । भागवते तु कन्यात्रयस्योक्तत्वाद्विरोध इति नाशंक्यम् । अस्मेशानकल्पवृत्तांतमधिकृत्य ब्रह्मणा कल्पितमिति द्वितीये उक्तत्वान्न विरोधः । तदुक्तं—"पुराणेषु च वैषम्यं कल्पकोटिव्यवस्थया" इति । विष्णुपुराणे तु

कन्याद्वयमेवोक्तं "प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ॥ कन्याद्वयं च धर्मज्ञं रूपौदार्यगुणान्वितम् ॥" इति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ महातपाः दक्षः प्रददावित्यग्रिमेणान्वयः ॥ २१ ॥ सुरारणिं भागप्रापणेन रक्षणकर्त्रीमिदं स्वाहा विशेषणम् ॥ २२ ॥ २३ ॥ भार्गवः शुक्रः अरणिं शांतिम् ॥ २४ ॥ २५ ॥ २६ ॥२७॥

बुद्धिं लज्जां वपुःशांतिं सिद्धिं कीर्तिं महातपाः ॥ ख्यातिं शांतिं च संभूतिं स्मृतिं प्रीतिं क्षमां तथा ॥ २१ ॥ सन्नतिं चानसूयां च ऊर्जां स्वाहां सुरारणिम् ॥ स्वधां चैव महाभागां प्रददौ च यथाक्रमम् ॥ २२ ॥ श्रद्धाद्याश्चैव कीर्त्यंतास्त्रयोदश सुदारिकाः ॥ धर्मं प्रजापतिं जग्मुः पतिं परमदुर्लभाः ॥२३॥उपयेमे भृगुर्धीमान् ख्यातिं तां भार्गवारणिम् ॥ संभूतिं च मरीचिस्तु स्मृतिं चैवांगिरा मुनिः॥२४॥ प्रीतिं पुलस्त्यः पुण्यात्मा क्षमां तां पुलहो मुनिः ॥ क्रतुश्च सन्नतिं धीमानात्रिस्तां चानसूयकाम् ॥ २५ ॥ ऊर्जां वसिष्ठो भगवान्वरिष्ठो वारिजेक्षणाम ॥ विभावसुस्तथा स्वाहां स्वधां वै पितरस्तथा ॥ २६ ॥ पुत्रीकृता सती या सा मानसी शिवसंभवा ॥ दक्षेण जगतां धात्री रुद्रमेवास्थिता पतिम् ॥ २७ ॥ अर्धनारीश्वरं दृष्ट्वा सर्गादौ कनकांडजः ॥ विभजस्वेति चाहादौ यदा जाता तदाभवत् ॥२८॥ तस्याश्चैवांशजाः सर्वाः स्त्रियस्त्रिभुवने तथा ॥ एकादशविधा रुद्रास्तस्य चांशोद्भवास्तथा ॥ २९ ॥ स्त्रीलिंगमखिलं सा वै पुल्लिंगं नीललोहितः ॥ तं दृष्ट्वा भगवान् ब्रह्मा दक्षमालोक्य सुव्रताम् ॥ ३० ॥ भजस्व धात्रीं जगतां ममापि च तवापि च ॥ पुन्नाम्नो नरकात्त्राति इति पुत्रेत्विहोक्तितः ॥ ३१ ॥ प्रशस्ता तव कांतेयं स्यात् पुत्री विश्वमातृका ॥ तस्मात् पुत्री सती नाम्ना तवैषा च भविष्यति ॥ ३२ ॥ एवमुक्तस्तदा दक्षो नियोगाद्ब्रह्मणो मुनिः॥ लब्ध्वा पुत्रीं ददौ साक्षात् सतीं रुद्राय सादरम् ॥ ३३ ॥ धर्मस्य पत्न्यः श्रद्धाद्याः कीर्तिता वै त्रयोदश ॥ तासु धर्मप्रजां वक्ष्ये यथाक्रममनुत्तमम् ॥ ३४ ॥ कामो दर्पोऽथ नियमः संतोषो लोभ एव च ॥ श्रुतस्तु दंडः समयो बोधश्चैव महाद्युतिः ॥ ३५ ॥ अप्रमादश्च विनयो व्यवसायो द्विजोत्तमाः ॥ क्षेमं सुखं यशश्चैव धर्मपुत्राश्च तासु वै ॥ ३६ ॥ धर्मस्य वै क्रियायां तु दंडः समय एव च ॥ अप्रमादस्तथा बोधो बुद्धेर्धर्मस्य तौ सुतौ ॥ ३७ ॥ तस्मात्पंचदशैवेते तासु धर्मात्मजास्त्विह ॥ भृगुपत्नी च सुषुवे ख्यातिर्विष्णोः प्रियां श्रियम् ॥ ३८ ॥

॥ २८ ॥ २९ ॥ ३० ॥ त्रातीत्यार्षम् ॥ ३१ ॥ प्रशस्ता कांता सुंदरीयं सती विश्वमातृका तव पुत्री स्यादित्यन्वयः ॥ ३२ ॥ रुद्राय ददावित्यनेन विवाहादिरूपलीला वर्णनं रुद्रस्यैव न तु परमशिवस्य ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ विष्णोः प्रियां विष्णुपत्नीं तदुक्तं विष्णुपुराणे—"भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः

पुनः ॥ देवदानवयत्नेन प्रसूतामृतमंथने ॥ " इति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ अपामयमपि उदकरूपः शनैर्मंदं चर नीति शनैश्चरः अत एव शन्नोदेवीत्युदकप्रार्थनमंत्रस्य तत्र विनियोग उक्तः ॥ ४८ ॥४९॥ भवात्मा रुद्ररूपः 'रुद्रो वा एष यदग्निः' इति श्रुतेः । पैतामहो ब्रह्मपुत्रः 'मुखादिंद्रश्चाग्निश्च' इति श्रुतेः । प्रजानामसुः प्राणभूतः ॥ ५० ॥ " ब्रह्मादिस्थावरांतं हि त्वयि दृश्यमिदं जगत् ॥ शुक्तौ रजतवत्सोऽयं स्वभासा मे निराकुरु" ॥ इति श्रीलिंग

धातारं च विधातारं मेरोर्जामातरौ सुतौ ॥ प्रभूतिर्नाम या पत्नी मरीचेः सुषुवे सुतौ ॥३९॥ पूर्णमासं तु मारीचं ततः कन्याचतुष्टयम् ॥ तुष्टिर्ज्येष्ठा च वै दृष्टिः कृपिश्चापचितिस्तथा ॥ ४० ॥ क्षमा च सुषुवे पुत्रान् पुत्रीं च पुलहाच्छुभाम् ॥ कर्दमं च वरीयांसं सहिष्णुं मुनिसत्तमाः ॥ ४१ ॥ तथा कनकपीतां स पीवरीं पृथिवीसमाम् ॥ प्रीत्यां पुलस्त्यश्च तथा जनयामास वै सुतान् ॥ ४२ ॥ दत्तोर्णं वेदबाहुं च पुत्रीं चान्यां दृषद्वतीम् ॥ पुत्राणां षष्टिसाहस्रं सन्नतिः सुषुवे शुभा ॥४३॥ क्रतोस्तु भार्या सर्वे ते वालखिल्या इति श्रुताः ॥ सिनीवालीं कुहूं चैव राकां चानुमतिं तथा ॥ ४४ ॥ स्मृतिश्च सुषुवे पत्नी मुनेश्चांगिरसस्तथा ॥ लब्धानुभावमग्निं च कीर्तिमंतं च सुव्रता ॥ ४५ ॥ अत्रेर्भार्यानसूया वै सुषुवे षट्प्रजास्तु याः ॥ तास्वेका कन्यका नाम्ना श्रुतिः सा सूनुपंचकम् ॥४६॥ सत्यनेत्रो मुनिर्भव्यो मूर्तिरापः शनैश्चरः॥सोमश्च वै श्रुतिः षष्ठी पंचात्रेयास्तु सूनवः॥४७॥ ऊर्जा वसिष्ठाद्वै लेभे सुतांश्च सुतवत्सला॥ ज्यायसी पुंडरीकाक्षान्वासिष्ठान्वरलोचना ॥ ४८ ॥ रजः सुहोत्रो बाहुश्च सवनश्चानघस्तथा ॥ सुतपाः शुक्र इत्येते मुनेर्वै सप्त सूनवः ॥४९॥ यश्चाभिमानी भगवान् भवात्मा पैतामहो वह्निरसुः प्रजानाम् ॥ स्वाहा च तस्मात्सुषुवे सुतानां त्रयं त्रयाणां जगतां हिताय॥५०॥ इति श्रीलिंगमहापुराणे पूर्वभागे प्रजासृष्टिवर्णनं नाम पंचमोऽध्यायः ॥५॥ सूत उवाच ॥ पवमानः पावकश्च शुचिरग्निश्च ते स्मृताः ॥ निर्मथ्यः पवमानस्तु वैद्युतः पावकः स्मृतः ॥ १ ॥ शुचिः सौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु ते ॥ पुत्रैः पौत्रैस्त्विहैतेषां संख्या संक्षेपतः स्मृता ॥ २ ॥ विसृज्य सप्तकं चादौ चत्वारिंशन्नवैव च ॥ इत्येते वह्नयः प्रोक्ताः प्रणीयंतेऽध्वरेषु च ॥ ३ ॥

महापुराणे पूर्वभागे शिवतोषिण्यां टीकायां प्रजासृष्टिवर्णनं नाम पञ्चमोऽध्यायः ॥५॥ षष्ठे वह्निभवा सृष्टिस्तथा पितृसमुद्भवा ॥ श्रीरुद्रसंभवा चैव वर्ण्यते परमाद्भुता ॥ वह्निसंततिं कथयति—पवमानेति । अग्निरित्येकवचनमार्षम् । ते पवमानादयोऽग्नयः स्मृता इत्यन्वयः । निर्मथ्यतेऽसौ निर्मथ्यः अरण्यादिसंघर्षजन्यः । वैद्युतो विद्युत्संबंधी ॥ १ ॥ सौरः सूर्यसंबंधी ॥२॥ वह्निसंख्यामाह—विसृज्येति । एकोनपंचाशदधिकसप्तशतसंख्याका इति समुदितार्थः 'अंकानां वामतो गतिः' इति तु नाशंक्यम् । 'त एवैकोनपंचाशत' इति

पुरी लब्धाऽतः प्रष्टुमर्हसीत्याहेत्यग्रिमस्थैरन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ पंचभिः पवित्रैः सद्योजातादिमंत्रैः. द्विजैस्त्रैवर्णिकैः स्त्रीशूद्राणां तु नमोंतनाममंत्रैरेवाधिकारोऽनेन ध्वनितः ॥ ४९ ॥ ५० ॥ भावं दत्तमिति पूर्वस्थेनान्वयः । अत्र सामान्ये ' नपुंसकम् ' इति नपुंसकत्वम् ॥ ५१ ॥ ५२ ॥ दृश्यः

चिरकालस्थितिं प्रेक्ष्य गिरौ देव्या महात्मनः ॥ देवि लब्धा पुरी रम्या त्वया यत्प्रष्टुमर्हसि ॥ ४२ ॥ स्थानार्थं कथितं मात्रा विस्मृतेह विलासिनि ॥ पुरा पितामहेनापि पृष्टः प्रश्नवतां वरे ॥ ४३ ॥ यथा त्वयाद्य वै पृष्टो द्रष्टुं ब्रह्मात्मकं त्वहम् ॥ श्वेते श्वेतेन वर्णेन दृष्ट्वा कल्पे तु मां शुभे ॥ ४४ ॥ सद्योजातं तथा रक्ते रक्तं वामं पितामहः ॥ पीते तत्पुरुषं पीतमघोरं कृष्णमीश्वरम् ॥ ४५ ॥ ईशानं विश्वरूपाख्यो विश्वरूपं तदाह माम् ॥ ४६ ॥ पितामह उवाच ॥ वाम तत्पुरुषाघोर सद्योजात महेश्वर ॥ दृष्टो मया त्वं गायत्र्या देवदेव महेश्वर ॥ केन वश्यो महादेव ध्येयः कुत्र घृणानिधे ॥ ४७ ॥ दृश्यः पूज्यस्तथा देव्या वक्तुमर्हसि शंकर ॥ श्रीभगवानुवाच ॥ अवोचं श्रद्धयैवेति वश्यो वारिजसंभव ॥ ४८ ॥ ध्येयो लिंगे त्वया दृष्टे विष्णुना पयसां निधौ ॥ पूज्यः पंचास्यरूपेण पवित्रैः पञ्चभिर्द्विजैः ॥ ४९ ॥ भवभक्त्याद्य दृष्टोहं त्वयांडज जगद्गुरो ॥ सोपि मामाह भावार्थं दत्तं तस्मै मया पुरा ॥ ५० ॥ भावं भावेन देवेशि दृष्टवान्मां हृदीश्वरम् ॥ तस्मात्तु श्रद्धया वश्यो दृश्यः श्रेष्ठगिरेः सुते ॥ ५१ ॥ पूज्यो लिंगे न संदेहः सर्वदा श्रद्धया द्विजैः ॥ श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ॥ ५२ ॥ श्रद्धा स्वर्गश्च मोक्षश्च दृश्योहं श्रद्धया सदा ॥ ५३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भक्तिभावकथनं नाम दशमोऽध्यायः ॥ १० ॥ ऋषय ऊचुः ॥ कथं वै दृष्टवान्ब्रह्मा सद्योजातं महेश्वरम् ॥ वामदेवं महात्मानं पुराणपुरुषोत्तमम् ॥ १ ॥ अघोरं च तथेशानं यथावद्वक्तुमर्हसि ॥ सूत उवाच ॥ एकोनत्रिंशकः कल्पो विज्ञेयः श्वेतलोहितः ॥ २ ॥ तस्मिंस्तत्परमं ध्यानं ध्यायतो ब्रह्मणस्तदा ॥ उत्पन्नस्तु शिखायुक्तः कुमारः श्वेतलोहितः ॥ ३ ॥

प्रेक्षितुं योग्यः ॥ ५३ ॥ "श्रीसांब मायया ते रचितब्रह्मांडवस्तुजालात्तु ॥ गच्छतु मनो विहंगो दृढश्रद्धासिनिकृत्तभवबंधः ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां भक्तिभावकथनं नाम दशमोध्यायः ॥ १० ॥ एकादशेस्मिन्नध्याये सद्योजातसमुद्भवः ॥ तच्छिष्यसंभवश्चैव कथ्यते पापनाशनः ॥ ऋषयः शौनकादयः सूतं प्रत्यूचुः—कथमिति । ब्रह्मा महेश्वरं सद्योजातं वामदेवं तत्पुरुषम् अघोरमीशानं च कथं दृष्टवानित्यग्रिमेणान्वयः ॥ १ ॥ २ ॥ श्वेतं लोहितं रुधिरं यस्य । यद्वा श्वेतः श्वेत

वर्णश्चासौ लोहितः नेत्रप्रांतनखकरचरणेषु रक्तवर्णः ॥ ३ ॥ ४ ॥ ५ ॥ महायशा इदं ब्रह्मविशेषणं श्वेताः शुभ्रवर्णाः ॥ ६ ॥ तत्सद्योजातरूपं ब्रह्म सदावृतं सर्वदा सवितम् ॥ ७ ॥ तस्य सद्योजातस्य अग्रे तस्मात्सद्योजाताज्जज्ञे अतोसौ श्वेतमुनिः हर एव । तदुक्तं सप्तमे 'आद्ये रुद्रः कलौ श्वेतः' इति ॥८ ॥९॥ प्राणायामः प्राणनिरोधः ॥ १० ॥ व्रजंति गच्छंति ॥ ११ ॥ कुंदेंदुशंखस्फटिकावभासं वेदाक्षमालावरदाभयांकम् ॥ सुनंदनंदप्रमुखैर्वृतं तं सद्योऽधिजातं शरणं प्रपद्ये ॥ " इति श्रीलिंगमहापुराणे

तं दृष्ट्वा पुरुषं श्रीमान्ब्रह्मा वै विश्वतोमुखः ॥ हृदि कृत्वा महात्मानं ब्रह्मरूपिणमीश्वरम् ॥४॥ सद्योजातं ततो ब्रह्मा ध्यानयोगपरोऽभवत् ॥ध्यानयोगात्परं ज्ञात्वा ववंदे देवमीश्वरम् ॥ ५॥ सद्योजातं ततो ब्रह्मा ब्रह्म वै समचिंतयत् ॥ ततोस्य पार्श्वतः श्वेताः प्रादुर्भूता महायशाः ॥ ६ ॥ सुनंदो नंदनश्चैव विश्वनंदोपनंदनौ ॥ शिष्यास्ते वै महात्मानो यैस्तद्ब्रह्म सदावृतम् ॥ ७ ॥ तस्याग्रे श्वेतवर्णाभः श्वेतो नाम महामुनिः ॥ विजज्ञेऽथ महातेजास्तस्माज्जज्ञे हरस्त्वसौ ॥ ८ ॥ तत्र ते मुनयः सर्वे सद्योजातं महेश्वरम् ॥ प्रपन्नाः परया भक्त्या गृणंतो ब्रह्म शाश्वतम् ॥ ९ ॥ तस्माद्विश्वेश्वरं देवं ये प्रपद्यंति वै द्विजाः ॥ प्राणायामपरा भूत्वा ब्रह्मतत्परमानसाः ॥ १० ॥ ते सर्वे पापनिर्मुक्ता विमला ब्रह्मवर्चसः ॥ विष्णुलोकमतिक्रम्य रुद्रलोकं व्रजंति ते ॥ ११ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे सद्योजातमाहात्म्यं नामैकादशोध्यायः ॥ ११ ॥ सूत उवाच ॥ ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्तितः ॥ ब्रह्मा यत्र महातेजा रक्तवर्णमधारयत् ॥१॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ॥ प्रादुर्भूतो महातेजाः कुमारो रक्तभूषणः ॥२॥ रक्तमाल्यांबरधरो रक्तनेत्रः प्रतापवान् ॥ स तं दृष्ट्वा महात्मानं कुमारं रक्तवाससम् ॥ ३ ॥ परं ध्यानं समाश्रित्य बुबुधे देवमीश्वरम् ॥ स तं प्रणम्य भगवान् ब्रह्मा परमयंत्रितः ॥४॥ वामदेवं ततो ब्रह्मा ब्रह्म वै समचिंतयत् ॥ तथा स्तुतो महादेवो ब्रह्मणा परमेश्वरः॥५॥ प्रतीतहृदयः सर्व इदमाह पितामहम् ॥ ध्यायता पुत्रकामेन यस्मात्तेहं पितामह ॥ ६ ॥ दृष्टः परमया भक्त्या स्तुतश्च ब्रह्मपूर्वकम् ॥ तस्माद्ध्यानबलं प्राप्य कल्पेकल्पे प्रयत्नतः ॥ ७ ॥

पूर्वभागे शिवतोषिण्यां टीकायां सद्योजातमाहात्म्यं नामैकादशोऽध्यायः ॥ ११ ॥ लैंगेऽस्मिन्द्वादशाध्याये ब्रह्मणोनुग्रहेच्छया ॥ उद्भवो वामदेवस्य शिष्याणां चैव वर्ण्यते ॥ सूतस्त्रिंशत्कल्पवृत्तांतमाह—तत इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥५॥ सर्वः सर्वस्वरूपः ॥६॥ ब्रह्मपूर्वकं ब्रह्म वामदेवायेति मंत्रः पूर्वो यस्मिन्न कर्माणि तथा स्तुत इत्यर्थः ॥७॥

प्रकर्षेण सर्वश्रेष्ठत्वेन संख्यातं सांख्यैर्गणितं लोकधातारं लोकाधारभूतम् ईश्वरं मां वेत्स्यसे विचारतो ज्ञास्यसीत्यर्थः ॥ ८ ॥ ब्रह्मतुल्यं वर्चो येषां ते ब्रह्मवर्चसः ॥ ९ ॥ वीराः विक्रांताः ॥ १० ॥ वर्षसहस्रांते इत्यस्य तृतीयस्थरुद्रं प्रविष्टा इत्यत्रान्वयः । ब्रह्मत्वे ब्रह्मभावे ॥ ११ ॥ वामदैविकं वामदेवदेवताकं तत्पूर्वोक्तं वामदेवायेति मंत्ररूपम् ॥ १२ ॥ १३ ॥ वामं सुंदरम् ईश्वरं युंजानाः समाधिना ध्यायंतः ॥ १४ ॥ पुनरावृत्तिरेव दुर्लभा यत्र तं रुद्रलोकम् ॥ १५ ॥ "वराक्षमालाभयटंकहस्तं सरोज

वेत्स्यसे मां प्रसंख्यातं लोकधातारमीश्वरम् ॥ ततस्तस्य महात्मानश्चत्वारस्ते कुमारकाः ॥ ८ ॥ संबभूवुर्महात्मानो विशुद्धा ब्रह्मवर्चसः ॥ विरजाश्च विबाहुश्च विशोको विश्वभावनः ॥ ९ ॥ ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः ॥ रक्तांबरधराः सर्वे रक्तमाल्यानुलेपनाः ॥ १० ॥ रक्तकुंकुमलिप्तांगा रक्तभस्मानुलेपनाः ॥ ततो वर्षसहस्रांते ब्रह्मत्वेऽध्यवसायिनः ॥ ११ ॥ गृणंतश्च महात्मानो ब्रह्म तद्वामदैविकम् ॥ अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया ॥ १२ ॥ धर्मोपदेशमखिलं कृत्वा ते ब्रह्मणः प्रियाः ॥ पुनरेव महादेवं प्रविष्टा रुद्रमव्ययम् ॥ १३ ॥ येऽपि चान्ये द्विजश्रेष्ठा युंजाना वाममीश्वरम् ॥ प्रपश्यंति महादेवं तद्भक्तास्त त्परायणाः ॥ १४ ॥ ते सर्वे पापनिर्मुक्ता विमला ब्रह्मचारिणः ॥ रुद्रलोकं गमिष्यंति पुनरावृत्तिदुर्लभम् ॥ १५ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे वामदेवमाहात्म्यं नाम द्वादशोऽध्यायः ॥ १२ ॥ सूत उवाच ॥ एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः ॥ ब्रह्मा यत्र महाभागः पीतवासा बभूव ह ॥ १ ॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ॥ प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रधृक् ॥ २ ॥ पीतगंधानुलिप्तांगः पीतमाल्यांबरो युवा ॥ हेमयज्ञोपवीतश्च पीतोष्णीषो महाभुजः ॥ ३ ॥ तं दृष्ट्वा ध्यानसंयुक्तो ब्रह्मा लोकमहेश्वरम् ॥ मनसा लोकधातारं प्रपेदे शरणं विभुम् ॥ ४ ॥ ततो ध्यानगतस्तत्र ब्रह्मा माहेश्वरीं वराम् ॥ गां विश्वरूपां ददृशे महेश्वरमुखाच्च्युताम् ॥ ५ ॥ चतुष्पदां चतुर्वक्त्रां चतुर्हस्तां चतुःस्तनीम् ॥ चतुर्नेत्रां चतुःशृंगीं चतुर्दंष्ट्रां चतुर्मुखीम् ॥ ६ ॥ द्वात्रिंशद्गुणसंयुक्तामीश्वरीं सर्वतोमुखाम् ॥ स तां दृष्ट्वा महातेजा महादेवीं महेश्वरीम् ॥ ७ ॥ पुनराह महादेवः सर्वदेवनमस्कृतः ॥ मतिः स्मृतिर्बुद्धिरिति गायमानः पुनःपुनः ॥ ८ ॥ एह्येहीति महादेवि सातिष्ठत्प्रांजलिर्विभुम् ॥ विश्वमावृत्य योगेन जगत्सर्वं वशीकुरु ॥ ९ ॥

किंजल्कसमानवर्णम् ॥ रक्तांबरं रक्तविभूषणं च तं वामदेवं हृदये युनज्मि ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां वामदेवमाहात्म्यं नाम द्वादशोऽध्यायः ॥१२॥ त्रयोदशेऽस्मिन्नध्याये विश्वसृड्ध्यानयोगतः ॥ तत्पुरुषोद्भवः सम्यग्गायत्र्याश्चैव वर्ण्यते ॥ सूतस्तत्पुरुषोत्पत्तिं वर्णयति—एकत्रिंशत्यादिना ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ द्वात्रिंशद्ये गुणाः सामुद्रशास्त्रप्रसिद्धाः तैः । यद्वा षोडशाध्यायोक्तयोगादिद्वात्रिंशद्गुणास्तैः संयुक्ताम् ॥ ७ ॥ ८ ॥ एह्येहीत्यादरे द्विरुक्तिः । विभुं

तत्पुरुषं प्रांजलिः माऽतिष्ठत् जगत्सर्वं वशीकुर्वित्याहेत्यन्वयः ॥९॥ रुद्राणी उमा परमः मोक्षरूपः अर्थो यस्यां सा परमार्था ॥१०॥११॥ लोकगुरोर्महेश्वरसकाशात् प्रतिपदे प्राप्तवानित्यर्थः ॥ १२ ॥ इत्युक्तरूपां वैदिकीं वेदभवां विद्यां ज्ञानदां रौद्रीं रुद्रदैवत्यां तत्पुरुषायेति गायत्रीम् ॥ १३ ॥ १४ ॥ १५ ॥ १६॥१७ ॥ १८ ॥ १९ ॥ २० ॥



अथ तामाह देवेशो रुद्राणी त्वं भविष्यसि ॥ ब्राह्मणानां हितार्थाय परमार्था भविष्यसि ॥ १० ॥ तथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः ॥ प्रददौ देवदेवेशः चतुष्पादां जगद्गुरुः॥११॥ततस्तां ध्यानयोगेन विदित्वा परमेश्वरीम् ॥ ब्रह्मा लोकगुरोः सोथ प्रतिपेदे महेश्वरीम् ॥१२॥ गायत्रीं तु ततो रौद्रीं ध्यात्वा ब्रह्मानुयंत्रितः ॥ इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रिमीरिताम् ॥ १३ ॥ जपित्वा तु महादेवीं ब्रह्मा लोकनमस्कृताम् ॥ प्रपन्नस्तु महादेवं ध्यानयुक्तेन चेतसा ॥१४॥ ततस्तस्य महादेवो दिव्ययोगं बहुश्रुतम् ॥ ऐश्वर्यं ज्ञानसंपत्तिं वैराग्यं च ददौ प्रभुः ॥ १५ ॥ ततोस्य पार्श्वतो दिव्याः प्रादुर्भूताः कुमारकाः ॥ पीतमाल्यांबरधराः पीतस्रगनुलेपनाः ॥ १६ ॥ पीताभोष्णीषशिरसः पीतास्याः पीतमूर्धजाः ॥ ततो वर्षसहस्रांत उषित्वा विमलौजसः ॥ १७ ॥ योगात्मानस्तपोह्लादाः ब्राह्मणानां हितैषिणः ॥ धर्मयोगबलोपेता मुनीनां दीर्घसत्रिणाम् ॥ १८ ॥ उपदिश्य महायोगं प्रविष्टास्ते महेश्वरम् ॥ एवमेतेन विधिना ये प्रपन्ना महेश्वरम् ॥१९॥अन्येपि नियतात्मानो ध्यानयुक्ता जितेंद्रियाः॥ते सर्वे पापमुत्सृज्य विमला ब्रह्मवर्चसः॥२०॥ प्रविशन्ति महादेवं रुद्रं ते त्वपुनर्भवाः ॥ २१ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे तत्पुरुषमाहात्म्यं नाम त्रयोदशोध्यायः ॥ १३ ॥

सूत उवाच ॥ ततस्तस्मिन्गते कल्पे पीतवर्णे स्वयंभुवः ॥ पुनरन्यः प्रवृत्तस्तु कल्पो नाम्नाऽसितस्तु सः ॥ १ ॥ एकार्णवे तदा वृत्ते दिव्ये वर्षसहस्रके ॥ स्रष्टुकामः प्रजा ब्रह्मा चिंतयामास दुःखितः ॥ २ ॥ तस्य चिंतयमानस्य पुत्रकामस्य वै प्रभोः ॥ कृष्णः समभवद्वर्णो ध्यायतः परमेष्ठिनः ॥ ३ ॥ अथापश्यन्महातेजाः प्रादुर्भूतं कुमारकम् ॥ कृष्णवर्णं महावीर्यं दीप्यमानं स्वतेजसा ॥ ४॥

नास्ति पुनर्भवः संसारे येषां तेऽपुनर्भवाः कैवल्यप्राप्ता इत्यर्थः ॥ २१ ॥ प्रदीप्तविद्युत्कनकावभासं चतुर्मुखं तत्पुरुषं त्रिनेत्रम् ॥ पीतांबरं पीतविभूषणं तं गायत्र्युपेतं सततं प्रपन्नः ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रयोदशोध्यायः ॥ १३ ॥ चतुर्दशेस्मिन्नध्याये विधेः प्रियचिकीर्षया ॥ अघोरस्यो-

द्भवः पुण्यो वर्ण्यते पापपावकः ॥ सूतः अघोरोत्पत्तिं वर्णयन्नाह —नत इत्यादिना ॥ असितः कृष्णः ॥ १ ॥ २ ॥३॥४॥५॥६॥ ७ ॥ ८ ॥ घोरः भयंकरः विक्रमो यस्य ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ अव्ययं नाशशून्यम् ॥१३॥ कुठारखेटांकुशपाशशूलकपालढक्काक्षगुणान्दधानम् ॥ चतुर्मुखं नीलरुचिं ज्वलंतं देवं ह्यघोरं हृदि चिंतयामि ॥

कृष्णांबरधरोष्णीषं कृष्णयज्ञोपवीतिनम्॥कृष्णेन मौलिना युक्तं कृष्णस्रगनुलेपनम्॥५॥स तं दृष्ट्वा महात्मानमघोरं घोरविक्रमम्॥ ववंदे देवदेवेशमद्भुतं कृष्णपिंगलम् ॥ ६ ॥ प्राणायामपरः श्रीमान् हृदि कृत्वा महेश्वरम्॥मनसा ध्यानयुक्तेन प्रपन्नस्तुतमीश्वरम् ॥ ७ ॥ अघोरं तु ततो ब्रह्मा ब्रह्मरूपं व्यचिंतयत् ॥ तथा वै ध्यायमानस्य ब्रह्मणः परमेष्ठिनः॥ ८ ॥ प्रददौ दर्शनं देवो ह्यघोरो घोरविक्रमः ॥ अथास्य पार्श्वतः कृष्णाः कृष्णस्रगनुलेपनाः ॥ ९ ॥ चत्वारस्तु महात्मानः संबभूवुः कुमारकाः ॥ कृष्णः कृष्णशिखश्चैव कृष्णास्यः कृष्णवस्त्रधृक् ॥ १० ॥ ततो वर्षसहस्रं तु योगतः परमेश्वरम् ॥ उपासित्वा महायोगं शिष्येभ्यः प्रददुः पुनः ॥ ११ ॥ योगेन योगसंपन्नाः प्रविश्य मनसा शिवम् ॥ अमलं निर्गुणं स्थानं प्रविष्टा विश्वमीश्वरम्॥१२॥ एवमेतेन योगेन येपि चान्ये मनीषिणः ॥ चिंतयंति महादेवं गंतारो रुद्रमव्ययम् ॥ १३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे अघोरोत्पत्तिवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

सूत उवाच ॥ ततस्तस्मिन् गते कल्पे कृष्णवर्णे भयानके ॥ तुष्टाव देवदेवेशं ब्रह्मा तं ब्रह्मरूपिणम्॥ १ ॥ अनुगृह्य ततस्तुष्टो ब्रह्माणमवदद्धरः ॥ अनेनैव तु रूपेण संहरामि न संशयः ॥ २ ॥ ब्रह्महत्यादिकान् घोरांस्तथान्यानपि पातकान् ॥ हीनांश्चैव महाभाग तथैव विविधान्यपि ॥ ३ ॥ उपपातकमप्येवं तथा पापानि सुव्रत ॥ मानसानि सुतीक्ष्णानि वाचिकानि पितामह॥ ४ ॥ कायिकानि सुमिश्राणि तथा प्रासंगिकानि च ॥ बुद्धिपूर्वं कृतान्येव सहजागंतुकानि च ॥५॥ मातृदेहोत्थितान्येवं पितृदेहे च पातकम् ॥ संहरामि न संदेहः सर्वं पातकजं विभो ॥ ६ ॥ लक्षं जप्त्वा ह्यघोरेभ्यो ब्रह्महा मुच्यते प्रभो ॥ तदर्धं वाचिके वत्स तदर्धं मानसे पुनः ॥ ७ ॥

इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामघोरोत्पत्तिवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ लैंगे पंचदशाध्याये सर्वपापविशोधकः ॥ अघोरमंत्रस्य विधिः श्रीहरोक्तो निरूप्यते ॥ सूतः अघोरमंत्रमाहात्म्यं वर्णयति—तत इत्यादिना । ब्रह्म अघोरमंत्ररूपं रूपयति तच्छीलो ब्रह्म रूपी तम् ॥ १ ॥ अनेनाघोररूपेण ॥ २ ॥ पातक

शब्द पुंस्त्वमार्षम् ॥ ३ ॥ ४॥५॥ पातकजं पातकजातं दुःखमित्यर्थः ॥६॥ अवोरिभ्य इदं मंत्रप्रतीकम् ॥७॥ ८॥९॥ सुरा गौडी माध्वी पैष्टी ॥ १० ॥ वारुणीं मद्यम् ॥ ११ ॥ अदाता देवतातिथिविप्राणामन्नाप्रदाता । तदुक्तं मार्कंडेयपुराणे "देवतातिथिविप्राणामदत्वा योऽन्नमश्नुते ॥ प्रमुक्तो नरकात्सोपि वायसः संप्रजायते" इति ॥ १२ ॥ गुरुतल्पगनादिपातकी एवं पूर्वोक्तं मानसनियुतं जपेदित्यग्रिमेणान्वयः ॥ १३ ॥ १४ ॥ संसर्गात्संसर्गजन्यात्पातकाद्धि निश्चयेन । अयुताज्जपान्मुच्यते मुक्तो

चतुर्गुणं बुद्धिपूर्वं कोधादष्टगुणं स्मृतम् ॥ वीरहा लक्षमात्रेण भ्रूणहा कोटिमभ्यसेत्॥८॥मातृहा नियुतं जप्त्वा शुद्ध्यते नात्र संशयः॥ गोघ्नश्चैव कृतघ्नश्च स्त्रीघ्नः पापयुतो नरः ॥ ९ ॥ अयुताघोरमभ्यस्य मुच्यते नात्र संशयः ॥ सुरापो लक्षमात्रेण बुद्ध्याबुद्ध्यापि वै प्रभो ॥ १० ॥ मुच्यते नात्र संदेहस्तदर्धेन च वारुणीम् ॥ अस्नाताशी सहस्रेण अजपी च तथा द्विजः ॥ ११ ॥ अहुताशी सहस्रेण अदाता च विशुद्ध्यति ॥ ब्राह्मणस्वापहर्ता च स्वर्णस्तेयी नराधमः ॥ १२ ॥ नियुतं मानसं जप्त्वा मुच्यते नात्र संशयः ॥ गुरुतल्परतो वापि मातृघ्नो वा नराधमः ॥ १३ ॥ ब्रह्मघ्नश्च जपेदेवं मानसं वै पितामह ॥ संपर्कात्पापिनां पापं तत्समं परिभाषितम् ॥१४॥ तथाप्ययुतमात्रेण पातकाद्धि प्रमुच्यते ॥ संसर्गात्पातकी लक्षं जपेद्धि मानसं धिया ॥१५॥ उपांशु यच्चतुर्थां वै वाचिकं चाष्टधा जपेत्॥ पातकादर्धमेव स्यादुपपातकिनां स्मृतम् ॥ १६ ॥ तदर्धं केवले पापे नात्र कार्या विचारणा ॥ ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च ॥ १७॥ कृत्वा च गुरुतल्पं च पापकृद्ब्राह्मणो यदि ॥ रुद्रगायत्रिया ग्राह्यं गोमूत्रं कापिलं द्विजाः ॥ १८ ॥ गंधद्वारेति तस्या वै गोमयं स्वस्थमाहरेत् ॥ तेजोसि शुक्रमित्याज्यं कापिलं संहरेद्बुधः ॥१९॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति चाहरेत् ॥ गव्यं दधि नवं साक्षात्कापिलं वै पितामह ॥ २० ॥

भवतीत्यर्थः ॥ धिया पातकी बुद्धिपूर्वं महापातकिसंसर्गी वै निश्चयेन मानसं लक्षं जपेदित्यन्वयः । अत एव 'तत्संसर्गी तु पंचमः' इति संगच्छते ॥ १५ ॥ मानसजपासमर्थस्य प्रतिनिधीनाह–उपांश्विति । उपांशु यज्जप्यं तन्मानसाच्चतुर्था चतुर्गुणं वाचिकं त्वष्टधा अष्टगुणं जपेदित्यन्वयः । उपपातकिनां महापातकान्यपापवताम्॥ १६ ॥ केवले अबुद्धिपूर्वे ॥ १७ ॥ महापातकिनां विशेषमाह–कृत्वेति । रुद्रगायत्रियेत्यत्रेयङ् छांदसः । कापिलं कपिलाया इदं सुवर्णवर्णगोसंबंधि "सुवर्णवर्णा कपिला" इत्युक्तेः ॥१८॥

खस्थमस्पृष्टभूमिकम् ॥ १९ ॥ २० ॥ २१ ॥ सर्वरत्नाढ्यं कांचनं क्षिप्त्वेत्यन्वयः ॥२२ ॥ २३ ॥ प्रत्येकं द्रव्यम् ॥ २४ ॥ अष्टद्रोणघृतेनाष्टद्रोणपरिमितेन तन्मानं तु दान दिनकरे "पलं कर्षचतुष्टयम्॥ तैलक्षौद्रघृतेषु विंशतिपलैर्द्रवस्तु पंचोत्तरैः प्रस्थः क्षीरगतो बुधैर्निगदितस्त्रिंशत्पलैरेव तु" ॥ प्रस्थाश्चत्वार आढकः "आढकैस्तु चतुर्भिस्तु द्रोणस्तु कथितो बुधैः" इति । तथा च विंशतिपलात्मकप्रस्थषोडशरूपो घृतद्रोणो बोध्यः ॥२५॥ कूर्चं ब्रह्मकूर्चविधिनिर्मितं पंचगव्यं पिबेत् प्राशनं कुर्यादित्यर्थः । ब्राह्मं ब्रह्मसंबंधिनं ब्रह्मजपं गायत्रीजपम् ॥ २६ ॥ अयं विधिः सर्वपातकप्रायश्चित्तेषु प्रशस्त इत्यत आह—एवमिति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ एतत्प्रायश्चित्तविधानं रहस्यं गोपनीयं

देवस्य त्वेतिमंत्रेण संग्रहेद्वै कुशोदकम् ॥ एकस्थं हेमपात्रे वा कृत्वाघोरेण राजते॥२१॥ताम्रे वा पद्मपत्रे वा पालाशे वा दले शुभे॥सकूर्चं सर्वरत्नाढ्यं क्षिप्त्वा तत्रैव कांचनम्॥२२॥जपेल्लक्षमघोराख्यं हुत्वा चैव घृतादिभिः ॥ घृतेन चरुणा चैव समिद्भिश्च तिलैस्तथा॥२३॥ यवैश्च व्रीहिभिश्चैव जुहुयाद्वै पृथक्पृथक् ॥ प्रत्येकं सप्तवारं तु द्रव्यालाभे घृतेन तु ॥२४॥हुत्वाघोरेण देवेशं स्नात्वाऽघोरेण वै द्विजाः॥ अष्टद्रोणघृतेनैव स्नाप्य पश्चाद्विशोध्य च ॥ २५ ॥ अहोरात्रोषितः स्नातः पिबेत्कूर्चं शिवाग्रतः ॥ ब्राह्मं ब्रह्मजपं कुर्यादाचम्य च यथा विधि ॥ २६ ॥ एवं कृत्वा कृतघ्नोऽपि ब्रह्महा भ्रूणहा तथा ॥ वीरहा गुरुघाती च मित्रविश्वासघातकः ॥ २७ ॥ स्तेयी सुवर्णस्तेयी च गुरुतल्परतः सदा ॥ मद्यपो वृषलीसक्तः परदारविधर्षकः ॥ २८ ॥ ब्रह्मस्वहा तथा गोघ्नो मातृहा पितृहा तथा ॥ देवप्रच्यावकश्चैव लिंगप्रध्वंसकस्तथा ॥ २९ ॥ तथान्यानि च पापानि मानसानि द्विजो यदि ॥ वाचिकानि तथान्यानि कायिकानि सहस्रशः ॥३०॥ कृत्वा विमुच्यते सद्यो जन्मांतरशतैरपि ॥ एतद्रहस्यं कथितमघोरेशप्रसंगतः ॥ ३१ ॥तस्माज्जपेद्द्विजो नित्यं सर्वपापविशुद्धये॥३२॥

इति श्रीलिङ्गमहापुराणे पूर्वभागेऽघोरेशमाहात्म्यं नाम पंचदशोऽध्यायः ॥ १५ ॥

कथितम् उक्तमित्यर्थः ॥ अनेन विधिपूर्वकोक्तप्रायश्चित्तकरणे शिवभक्तानां दोषनाशनं भवत्येव तथापि प्रायश्चित्तमस्तीति ये दोषकारिणस्तेषां तथा महापातकिनां यत्र कुत्र प्रायश्चित्तविधिं दृष्ट्वा धनलोभादिना प्रायश्चित्तं ददतां चेदं न भवतीति सूचितम् ॥ ३१ ॥ नृणां पापमूल एव बंधोऽनस्तस्य विशुद्धये समूलनाशाय नित्यं प्रत्यहं जपेदित्यर्थः ॥ ३२ ॥ करचरणकृतं वाक्कायजं कर्मजं मे मनसिजमपि पापं यत्कृतं जन्मपूगे ॥ हर सकलजिनाघोऽघोररूपस्त्वमीश कलिमलमपि घोरं नाशय स्वेक्षणेन ॥

इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामघोरेशमाहात्म्यं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ षोडशे वर्ण्यते चास्मिन्नीशानस्य समुद्भवः ॥ पंचब्रह्मात्मकस्तोत्रं गायत्र्या महिमाद्भुतः ॥ सूतः ईशानोद्भवं वर्णयति—अथेत्यादिना । अथास्मिनकल्पानंतरम् ॥ १ ॥ २ ॥ ३ ॥ तथाविधं विश्वरूपम् ॥ ४ ॥ ५ ॥ दीव्यति मायया

सूत उवाच॥ अथान्यो ब्रह्मणः कल्पो वर्तते मुनिपुंगवाः ॥ विश्वरूप इति ख्यातो नामतः परमाद्भुतः ॥१॥ विनिवृत्ते तु संहारे पुनः सृष्टे चराचरे ॥ ब्रह्मणः पुत्रकामस्य ध्यायतः परमेष्ठिनः ॥ २ ॥ प्रादुर्भूता महानाद्या विश्वरूपा सरस्वती ॥ विश्वमाल्यांबरधरा विश्वयज्ञोपवीतिनी ॥ ३ ॥ विश्वोष्णीषा विश्वगंधा विश्वमाता महोष्ठिका ॥ तथाविधं स भगवानीशानं परमेश्वरम् ॥ ४ ॥ शुद्धस्फटिकसंकाशं सर्वाभरणभूषितम् ॥ अथ तं मनसा ध्यात्वा युक्तात्मा वै पितामहः ॥ ५ ॥ ववंदे देवमीशानं सर्वेशं सर्वगं प्रभुम् ॥ ओमीशान नमस्तेऽस्तु महादेव नमोस्तु ते ॥ ६ ॥ नमोस्तु सर्वविद्यानामीशान परमेश्वर ॥ नमोस्तु सर्वभूतानामीशान वृषवाहन ॥ ७ ॥ ब्रह्मणोधिपते तुभ्यं ब्रह्मणे ब्रह्मरूपिणे ॥ नमो ब्रह्माधिपतये शिवं मेऽस्तु सदाशिव ॥ ८ ॥ ओंकारमूर्ते देवेश सद्योजात नमोनमः ॥ प्रपद्ये त्वां प्रपन्नोऽस्मि सद्योजाताय वै नमः ॥ ९ ॥ अभवे च भवे तुभ्यं तथा नातिभवे नमः ॥ भवोद्भव भवेशान मां भजस्व महाद्युते ॥ १० ॥ वामदेव नमस्तुभ्यं ज्येष्ठाय वरदाय च ॥ नमो रुद्राय कालाय कलनाय नमो नमः ॥ ११ ॥ नमो विकरणायैव कालवर्णाय वर्णिने ॥ बलाय बलिनां नित्यं सदा विकरणाय ते ॥ १२ ॥ बलप्रमथनायैव बलिने ब्रह्मरूपिणे ॥ सर्वभूतेश्वरेशाय भूतानां दमनाय च ॥ १३ ॥ मनोन्मनाय देवाय नमस्तुभ्यं महाद्युते ॥ वामदेवाय वामाय नमस्तुभ्यं महात्मने ॥ १४ ॥ ज्येष्ठाय चैव श्रेष्ठाय रुद्राय वरदाय च॥ कालहंत्रे नमस्तुभ्यं नमस्तुभ्यं महात्मने॥ १५॥ इति स्तवेन देवेशं ननाम वृषभध्वजम्॥ यः पठेत् सकृदेवेह ब्रह्मलोकं गमिष्यति ॥१६॥ श्रावयेद्वा द्विजान् श्राद्धे स याति परमां गतिम् ॥ एवं ध्यानगतं तत्र प्रणमंतं पितामहम् ॥१७॥

क्रीडतीति देवः तम् ईशानम् ऐश्वर्यविशिष्टं सर्वेशं सर्वस्वामिनं सर्वगं सर्वव्यापकं प्रभुं ववंदे अभिवादनं कृतवान् पंचब्रह्ममंत्रार्थकस्तोत्रस्य वेदमन्त्रानुवादकत्वात्प्रणवपूर्वकं कथयति-ओमितीत्यादिना ॥६॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ कलनाय संख्यारूपायेत्यर्थः ॥ ११ ॥ विशिष्टं करणं विकरणं तस्मै मनोरूपायेत्यर्थः । विगतं करणं स्वातिरिक्तसाधनं यस्यासौ विकरणस्तस्मै सदा सर्वकाल इत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

१८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ब्रह्मा ईशानः देवेषु वृषं श्रेष्ठं ब्रह्माणं प्राहेत्यन्वयः । सर्वमंत्राणां मध्ये रहस्यं गोपनीयं पावनं शोधनम् ॥ २३ ॥ ॥ २४ ॥ ब्रह्मस्थानं ब्रह्मपदम् ॥ २५ ॥ वैकुंठेन विकुंठात्मजेन ॥ २६ ॥ २७ ॥ मांडव्यं गोत्रं यस्य स त्वं तपसा मम पुत्रत्वमागतः प्राप्तः अतस्त्वया आनंदत्वे आनंदरूपत्वे व्यवस्थितः स ब्रह्मरूप आनंदो विज्ञेयः ज्ञातुं योग्य इत्यर्थः ॥ २८ ॥ ब्रह्मणि ये द्वात्रिंशद्गुणास्तानाह—त्वयीत्यादिना । प्रतिष्ठिता इति तृतीयेनान्वयः ॥ योगश्चित्तवृत्तिनिरोधः १ सांख्यं तत्त्वज्ञानम् २ तपः कृच्छ्रादि ३ विद्या च विधिश्च क्रिया च विद्याविधिक्रियाः ४ ५ ६ ऋतं प्रियभा-

उवाच भगवानीशः प्रीतोहं ते किमिच्छसि ॥ ततस्तु प्रणतो भूत्वा वाग्विशुद्धं महेश्वरम् ॥ १८ ॥ उवाच भगवान् रुद्रं प्रीतं प्रीतेन चेतसा ॥ यदिदं विश्वरूपं ते विश्वगौः श्रेयसीश्वरी ॥ १९ ॥ एतद्वेदितुमिच्छामि यथेयं परमेश्वर ॥ कैषा भगवती देवी चतुष्पादा चतुर्मुखी ॥ २० ॥ चतुःशृंगी चतुर्वक्त्रा चतुर्दंष्ट्रा चतुःस्तनी ॥ चतुर्हस्ता चतुर्नेत्रा विश्वरूपा कथं स्मृता ॥ २१ ॥ किंनामगोत्रा कस्येयं किंवीर्या चापि कर्मतः ॥ तस्य तद्वचनं श्रुत्वा देवदेवो वृषध्वजः ॥२२॥ प्राह देववृषं ब्रह्मा ब्रह्माणं चात्मसंभवम् ॥ रहस्यं सर्वमंत्राणां पावनं पुष्टिवर्धनम् ॥ २३॥ शृणुष्वैतत्परं गुह्यमादिसर्गे यथा तथा ॥ एवं यो वर्तते कल्पो विश्वरूपस्त्वसौ मतः ॥२४॥ ब्रह्मस्थानमिदं चापि यत्र प्राप्तं त्वया प्रभो ॥ त्वत्तः परतरं देवं विष्णुना तत्पदं शुभम् ॥ २५ ॥ वैकुंठेन विशुद्धेन मम वामांगजेन वै ॥ तदाप्रभृति कल्पश्च त्रयस्त्रिंशत्तमो ह्ययम् ॥ २६ ॥ शतं शतसहस्राणामतीता ये स्वयंभुवः ॥ पुरस्तात्तव देवेश तच्छृणुष्व महामते ॥ २७ ॥ आनंदस्तु स विज्ञेय आनंदत्वे व्यवस्थितः ॥ मांडव्यगोत्रस्तपसा मम पुत्रत्वमागतः ॥ २८ ॥ त्वयि योगं च सांख्यं च तपोविद्याविधिक्रियाः ॥ ऋतं सत्यं दया ब्रह्म अहिंसा सन्मतिः क्षमा ॥२९॥ ध्यानं ध्येयं दमः शांतिर्विद्याऽविद्या मतिर्धृतिः॥ कांतिर्नीतिः प्रथा मेधा लज्जा दृष्टिः सरस्वती ॥ ३० ॥

षणम् ७ सत्यं यथार्थभाषणम् ८ दया अनुकंपा ९ ब्रह्म वेदाः १० अहिंसा परपीडात्यागः ११ सन्मतिरव्यभिचारिणी बुद्धिः १२ क्षमा परपीडासहनम् १३ ध्यानं चित्तैकाग्र्यम् १४ ध्येयम् ईश्वरसन्निधानम् १५ दम इन्द्रियनिग्रहः १६ शांतिरक्रोधता १७ विद्या ज्ञानम् १८ अविद्या माया १९ मति ॥ २९ ॥ बुद्धिः २० धृतिर्धैर्यम् २१ कांतिर्द्युतिः २२ नीतिर्न्यायवर्तित्वम् २३ प्रथा ख्यातिः २४ मेधा धारणावती बुद्धिः २५ लज्जा लोकापवादभीतिः २६ दृष्टिर्दिव्य-

ज्ञानम् २७ सरस्वती सर्वलक्षणलक्षिता वाणी २८ ॥ ३० ॥ तुष्टिः संतोषः २९ पुष्टिरिंद्रियपाटवम् ३० क्रिया वेदविहितं कर्म ३१ प्रसादः प्रसन्नता ३२ । एत गुणाः कुतः प्राप्ता इत्यत आह—एषा विश्वरूपा तव प्रसूतिस्त्वत्प्रसूतिः महेश्वरी द्वात्रिंशाक्षररूपा काद्यक्षररूपा या संज्ञा तया । द्वात्रिंशत्सुगुणा यस्यां सा द्वात्रिंशत्सुगुणा ॥ ३१ ॥ प्रकृतिर्मयाविहिता उत्पादिताऽतः प्राप्ता इत्यर्थः । कार्यगुणान्कारणगुणा आरंभंत इति नियमात् । भगवतः षड्गुणैश्वर्यवतो विष्णोरन्येषामिंद्रादीनां प्रसूतिर्जननी ॥ ३२ ॥ मत्तः मत्संनिधानात्प्रसूतिः प्रजोत्पत्तिर्यस्याः । यद्वा ममापि रुद्रादिरूपेण प्रसूतिरुत्पत्तिर्यस्याः सा मत्प्रसूतिः ॥ ३३ ॥ तत्त्वचिंतकाः सांख्याः प्रधानं प्रकृतिश्चेति यां चतु

तुष्टिः पुष्टिः क्रिया चैव प्रसादश्च प्रतिष्ठिताः ॥ द्वात्रिंशत्सुगुणा ह्येषा द्वात्रिंशाक्षरसंज्ञया ॥ ३१ ॥ प्रकृतिर्विहिता ब्रह्मंस्त्वत्प्रसूति महेश्वरी ॥ विष्णोर्भगवतश्चापि तथान्येषामपि प्रभो ॥३२॥ सैषा भगवती देवी मत्प्रसूतिः प्रतिष्ठिता ॥ चतुर्मुखी जगद्योनिः प्रकृतिर्गौः प्रतिष्ठिता ॥ ३३ ॥ गौरी माया च विद्या च कृष्णा हैमवतीति च ॥ प्रधानं प्रकृतिश्चैव यामाहुस्तत्त्वचिंतकाः ॥ ३४ ॥ अजामेकां लोहितां शुक्लकृष्णां विश्वप्रजां सृजमानां सरूपाम् ॥ अजोहं मां विद्धि तां विश्वरूपं गायत्रीं गां विश्वरूपां हि बुद्ध्या॥३५॥एवमुक्त्वा महादेवः ससर्ज परमेश्वरः ॥ ततश्च पार्श्वगा देव्याः सर्वरूपकुमारकाः ॥ ३६ ॥ जटी मुंडी शिखंडी च अर्धमुंडश्च जज्ञिरे ॥ ततस्तेन यथोक्तेन योगेन सुमहौजसः॥३७॥ दिव्यवर्षसहस्रांते उपासित्वा महेश्वरम् ॥ धर्मोपदेशमखिलं कृत्वा योगमयं दृढम् ॥ ३८ ॥ शिष्टाश्च नियतात्मानः प्रविष्टा रुद्रमीश्वरम् ॥ ३९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे ईशानमाहात्म्यकथनं नाम षोडशोऽध्यायः ॥ १६ ॥ सूत उवाच ॥ एवं संक्षेपतः प्रोक्तः सद्यादीनां समुद्भवः ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥१॥स याति ब्रह्मसायुज्यं प्रसादात्परमेष्ठिनः ॥ ऋषय ऊचुः ॥ कथं लिंगमभूल्लिंगे समभ्यर्च्यः स शंकरः ॥ २ ॥

र्विंशामाहुः ॥ ३४ ॥ न जायत इत्यजः अहम् ईशानः विश्वं प्रपंचजातं रूपं यस्यैतादृशं विद्धि विश्वरूपां गायत्रीं तां पूर्वोक्तामजां विद्धि जानीहीत्यर्थः ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ वराभयेष्टांकुशपाशटंककपालढक्काक्षत्रिशूलपाणिम् ॥ अजायुतं पंचमुखं सिताभमीशानरूपं शिवमानतोऽस्मि ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामीशानमाहात्म्यकथनं नाम षोडशोऽध्यायः ॥१६॥ वर्ण्यते सप्तदशके सद्यादिमहिमाद्भुतः ॥ ब्रह्मविष्णुविवादस्य शांत्यै लिंगस्य चोद्भवः ॥ सूत संक्षेपत उक्तसद्यादिसमुद्भवपठनादिफलं निरूपयति—एवमित्यादिना ॥ १ ॥ ऋषयः शौनकादयः कथं केन प्रकारेण लिंगे लिंगरूपाधिष्ठाने समभ्यर्च्यः पूज्यः ॥ २ ॥

रोमहर्षणः देवर्षिब्रह्मसंवादेन उत्तरमाह–एवमित्यादिना ॥ ३ ॥ ४ ॥ प्रधानं प्रकृतिरूपं लिंगी लिंगाधिष्ठानं परमेश्वरः शिवः ॥ ५ ॥ अंबुधौ समुद्रे मह्यं विष्णोश्च रक्षार्थम् आसीदित्यन्वयः ॥ प्रलयकालवर्णनमाह-वैमानिकसर्गे देवसर्गे ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अहीयशयनाच्छेषशयनात् नीरजं

किं लिंगं कस्तथा लिंगी सूत वक्तुमिहार्हसि ॥ रोमहर्षण उवाच ॥ एवं देवाश्च ऋषयः प्रणिपत्य पितामहम् ॥ ३ ॥ अपृच्छन् भगवँल्लिंगं कथमासीदिति स्वयम् ॥ लिंगं महेश्वरो रुद्रः समभ्यर्च्यः कथं त्विति ॥४॥ किं लिंगं कस्तथा लिंगी सोप्याह च पितामहः ॥ पितामह उवाच ॥ प्रधानं लिंगमाख्यातं लिंगी च परमेश्वरः ॥ ५ ॥ रक्षार्थमंबुधौ मह्यं विष्णोस्त्वासीत्सुरोत्तमाः ॥ वैमानिके गते सर्गे जनलोकं सहर्षिभिः ॥ ६ ॥ स्थितिकाले तदा पूर्णे ततः प्रत्याहृते तथा ॥ चतुर्युगसहस्रांते सत्यलोकं गते सुराः ॥ ७॥ विनाधिपत्यं समतां गतेऽन्ते ब्रह्मणो मम ॥ शुष्के च स्थावरे सर्वे त्वनावृष्ट्या च सर्वशः ॥ ८ ॥ पशवो मानुषा वृक्षाः पिशाचाः पिशिताशनाः ॥ गंधर्वाद्याः क्रमेणैव निर्दग्धा भानुभानुभिः ॥ ९ ॥ एकार्णवे महाघोरे तमोभूते समंततः ॥ सुष्वापांभसि योगात्मा निर्मलो निरुपप्लवः ॥ १० ॥ सहस्रशीर्षा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ सहस्रबाहुः सर्वज्ञः सर्वदेवभवोद्भवः ॥ ११ ॥ हिरण्यगर्भो रजसा तमसा शंकरः स्वयम् ॥ सत्त्वेन सर्वगो विष्णुः सर्वात्मत्वे महेश्वरः ॥ १२ ॥ कालात्मा कालनाभस्तु शुक्लः कृष्णस्तु निर्गुणः ॥ नारायणो महाबाहुः सर्वात्मा सदसन्मयः ॥ १३ ॥ तथाभूतमहं दृष्ट्वा शयानं पंकजेक्षणम् ॥ मायया मोहितस्तस्य तमवोचममर्षितः ॥१४॥ कस्त्वं वदेति हस्तेन समुत्थाप्य सनातनम् ॥ तदा हस्तप्रहारेण तीव्रेण स दृढेन तु ॥ १५ ॥ प्रबुद्धोहीयशयनात्समासीनः क्षणं वशी ॥ ददर्श निद्राविक्लिन्न नीरजामललोचनः ॥ १६ ॥ मामग्रे संस्थितं भासाध्यासितो भगवान् हरिः ॥ आह चोत्थाय भगवान् हसन्मां मधुरं सकृत् ॥ १७ ॥ स्वागतंस्वागतं वत्स पितामह महाद्युते ॥ तस्य तद्वचनं श्रुत्वा स्मितपूर्वं सुरर्षभाः ॥ १८ ॥ रजसा बद्धवैरश्च तमवोचं जनार्दनम् ॥ भाषसे वत्सवत्सेति सर्गसंहारकारणम् ॥ १९ ॥ मामिहांतःस्मितं कृत्वा गुरुः शिष्यमिवानघ ॥ कर्तारं जगतां साक्षात्प्रकृतेश्च प्रवर्तकम् ॥ २० ॥ सनातनमजं विष्णुं विरिंचिं विश्वसंभवम् ॥ विश्वात्मानं विधातारं धातारं पंकजेक्षणम् ॥ २१ ॥ किमर्थं भाषसे मोहाद्वक्तुमर्हसि सत्वरम् ॥ सोपि मामाह जगतां कर्ताहमिति लोकय ॥ २२ ॥

कमलं तद्वदमललोचनः निद्राविक्लिन्नं यथा स्यात्तथा ददर्शेत्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥ वत्सवत्सेति मां किमर्थं भाषसे इत्यन्वयः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ प्रसादात्प्रसादेन भवांस्त्वं तथानेकान्यंडानि ब्रह्मांडानि च लीलया सृष्टानीति शेषः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

भर्ता हर्ता भवानंगादवतीर्णो ममाव्ययात् ॥ विस्मृतोऽसि जगन्नाथं नारायणमनामयम् ॥२३॥ पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम् ॥ विष्णुमच्युतमीशानं विश्वस्य प्रभवोद्भवम् ॥२४॥ तवापराधो नास्त्यत्र मम मायाकृतं त्विदम् ॥ शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्ययम् ॥ २५ ॥ कर्ता नेता च हर्ता च न मयास्ति समो विभुः ॥ अहमेव परं ब्रह्म परं तत्त्वं पितामह ॥ २६ ॥ अहमेव परं ज्योतिः परमात्मा त्वहं विभुः ॥ यद्यद्दृष्टं श्रुतं सर्वं जगत्यस्मिंश्चराचरम् ॥ २७ ॥ तत्तद्विद्धि चतुर्वक्त्र सर्वं मन्मयमित्यथ ॥ मया सृष्टं पुराव्यक्तं चतुर्विंशतिकं स्वयम् ॥ २८ ॥ नित्यांता ह्यणवो बद्धाः सृष्टाः क्रोधोद्भवादयः ॥ प्रसादाद्धि भवानंडान्यनेकानीह लीलया ॥२९॥ सृष्टा बुद्धिर्मया तस्यामहंकारस्त्रिधा ततः ॥ तन्मात्रापंचकं तस्मान्मनः षष्ठेन्द्रियाणि च ॥ ३० ॥ आकाशादीनि भूतानि भौतिकानि च लीलया ॥ इत्युक्तवति तस्मिंश्च मयि चापि वचस्तथा ॥ ३१ ॥ आवयोश्चाभवद्युद्धं सुघोरं रोमहर्षणम् ॥ प्रलयार्णवमध्ये तु रजसा बद्धवैरयोः ॥ ३२ ॥ एतस्मिन्नन्तरे लिंगमभवच्चावयोः पुरः ॥ विवादशमनार्थं हि प्रबोधार्थं च भास्वरम् ॥ ३३ ॥ ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥ क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ॥ ३४ ॥ अनौपम्यमनिर्देश्यमव्यक्तं विश्वसंभवम् ॥ तस्य ज्वालासहस्रेण मोहितो भगवान् हरिः ॥ ३५ ॥ मोहितं प्राह मामत्र परीक्षावोऽग्निसंभवम् ॥ अधो गमिष्याम्यनलस्तंभस्यानुपमस्य च ॥ ३६ ॥ भवानूर्ध्वं प्रयत्नेन गंतुमर्हसि सत्वरम् ॥ एवं व्याहृत्य विश्वात्मा स्वरूपमकरोत्तदा ॥ ३७ ॥ वाराहमहमप्याशु हंसत्वं प्राप्तवान्सुराः ॥ तदाप्रभृति मामाहुर्हंसं हंसो विराडिति ॥३८॥ हंसहंसेति यो ब्रूयान्मां हंसः स भविष्यति ॥ सुश्वेतो ह्यनलाक्षश्च विश्वतः पक्षसंयुतः॥३९॥ मनोनिलजवो भूत्वा गतोहं चोर्ध्वतः सुराः ॥ नारायणोपि विश्वात्मा नीलांजनचयोपमम्॥४०॥दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ मेरुपर्वतवर्ष्माणं गौरतीक्ष्णाग्रदंष्ट्रिणम् ॥ ४१ ॥ कालादित्यसमाभासं दीर्घघोणं महास्वनम् ॥ ह्रस्वपादं विचित्रांगं जैत्रं दृढमनौपमम् ॥ ४२ ॥ वाराहमसितं रूपमास्थाय गतवानधः ॥ एवं वर्षसहस्रं तु त्वरन्विष्णुरधोगतः ॥ ४३ ॥ नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः ॥ तावत्कालं गतोह्यूर्ध्वमहमप्यरिसूदनः ॥ ४४ ॥ सत्वरं सर्वयत्नेन तस्यान्तं ज्ञातुमिच्छया ॥ श्रांतो ह्यदृष्ट्वा तस्यांतमहङ्कारादधो गतः ॥ ४५ ॥ तथैव भगवान् विष्णुः श्रांतः संत्रस्तलोचनः ॥ सर्वदेवभवस्तूर्णमुत्थितः स महावपुः ॥४६॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ महावर्ष्मलिंगम् अग्रिमस्थप्रणिपत्योत्तम्भ अत्रान्वयः ॥ [illegible]

ऊर्ध्वमागतः ॥ ४६ ॥ ४७ ॥ ४८ ॥ शब्दा लक्ष्यंते ज्ञायंते यत्रासौ शब्दलक्षणः ॥ ४९ ॥ महास्वनमिदं किमिति संचिंत्यातिष्ठदित्यन्वयः ॥ ५० ॥ नादः अव्यक्तध्वनिरंते यस्य तम् ॥ ५१ ॥ पुरुषर्षभो विष्णुः ॥ ५२ ॥ ५३ ॥ तुरीयं चतुर्थमत एवातीतं गुणत्रयपरम् अमृतं नाशशून्यं निष्कलं भागशून्यं निर्गतः उपप्लवस्तरणमाधनान्यो यस्मात् निर्गतं द्वंद्वं सुखदुःखादिरूपविरुद्धद्वयं यस्मात्केवलम् एकरूपं शून्यं भेदशून्यम् । यद्वा विंदुरूपं बाह्याभ्यंतरवर्जितमपरिच्छिन्नमित्यर्थः ॥ ५४ ॥ बाह्येन सहाभ्यंतरं सबाह्याभ्यंतरं भेदशून्यमत एव सबाह्याभ्यंतरस्थितमित्यर्थः । आनंदस्यापि कारणं प्रकाशकमित्यर्थः ॥ ५५ ॥ मीयंते ज्ञायंते याभिस्ता मात्राः । तिस्रः अकारोकारमकाररूपाः

समागतो मया सार्धं प्रणिपत्य महामनाः ॥ मायया मोहितः शंभोस्तस्थौ संविग्नमानसः ॥४७॥ पृष्ठतः पार्श्वतश्चैव चाग्रतः परमेश्वरम् ॥ प्राणिपत्य मया सार्धं सस्मार किमिदं त्विति ॥ ४८ ॥ तदा समभवत्तत्र नादो वै शब्दलक्षणः ॥ ओमोमिति सुरश्रेष्ठाः सुव्यक्तः प्लुतलक्षणः ॥ ४९ ॥ किमिदं त्विति संचिंत्य मया तिष्ठन्महास्वनम् ॥ लिंगस्य दक्षिणे भागे तदापश्यत्सनातनम् ॥ ५० ॥ आद्यवर्णमकारं तु उकारं चोत्तरे ततः ॥ मकारं मध्यतश्चैव नादांतं तस्य चोमिति ॥ ५१ ॥ सूर्यमंडलवद्दृष्ट्वा वर्णमाद्यं तु दक्षिणे ॥ उत्तरे पावकप्रख्यमुकारं पुरुषर्षभः ॥ ५२ ॥ शीतांशुमंडलप्रख्यं मकारं मध्यमं तथा ॥ तस्योपरि तदापश्यच्छुद्धस्फटिकवत् प्रभुम् ॥ ५३ ॥ तुरीयातीतममृतं निष्कलं निरुपप्लवम् ॥ निर्द्वंद्वं केवलं शून्यं बाह्याभ्यंतरवर्जितम् ॥ ५४॥ सबाह्याभ्यंतरं चैव सबाह्याभ्यंतरस्थितम् ॥ आदिमध्यांतरहितमानंदस्यापि कारणम् ॥५५॥ मात्रास्तिस्रस्त्वर्धमात्रं नादाख्यं ब्रह्मसंज्ञितम् ॥ ऋग्यजुःसामवेदा वै मात्रारूपेण माधवः ॥ ५६ ॥ वेदशब्देभ्य एवेशं विश्वात्मानमचिंतयत् ॥ तदाभवदृषिर्वेद ऋषेः सारतमं शुभम् ॥ ५७ ॥ तेनैव ऋषिणा विष्णुर्ज्ञातवान्परमेश्वरम् ॥ देव उवाच ॥ चिंतया रहितो रुद्रो वाचो यन्मनसा सह ॥ ५८ ॥ अप्राप्य तं निवर्तंते वाच्यस्त्वेकाक्षरेण सः ॥ एकाक्षरेण तद्वाच्यमृतं परमकारणम् ॥ ५९ ॥

मात्राया अर्धमर्धमात्रम् एवंच प्रणवशब्दरूपमित्यर्थः । नादः प्रणवांतध्वनिः आख्या संज्ञा यस्य तं ब्रह्मसंज्ञा संजाता यस्य तं ब्रह्मसंज्ञितम् । ऋग्यजुःसामवेदाः मात्रारूपेण पूर्वोक्तमात्रात्रयस्वरूपेण माधवो विष्णुर्ज्ञातवानिति शेषः ॥ ५६ ॥ वेदशब्देभ्य एवेत्यनेन "श्रोतव्यः श्रुतिवाक्येभ्यः" इति नियमविधिर्दर्शितः । विश्वात्मानं शिवमचिंतयत् मनन निदिध्यासनं कृतवानित्यर्थः । अनेन मनननिदिध्यासनयोः कारणत्वं दर्शितम् । तत्कालमारभ्य ऋषिरतींद्रियदर्शकः वेदः अभवत् ॥ ५७ ॥ तेन वेदाख्यऋषिणा परमेश्वरं शिवं ज्ञातवान् । तत्प्रकारमाह देवो ब्रह्मा उवाच ॥ ५८ ॥ यद्यस्मान्मनसा सह वाचोपि यमप्राप्य निवर्तंते स चिंतया रहितः रुद्रः एकाक्षरेण प्रणवेन वाच्यः तदपि ऋतं परम

कारणं ब्रह्म एकाक्षरेण वाच्यमित्यग्रिमेणान्वयः । अनेन रुद्रस्य ब्रह्मसमानत्वं सूचितम् । अतएव 'तस्य वाचकः प्रणवः' इति पतंजलिसूत्रं संगतम् ॥ ५९ ॥ ६० ॥ ६१ ॥ तयोर्ब्रह्मविष्ण्वोः ॥ ६२ ॥ ६३ ॥ तन्मात्रात्रयं नादेनाख्यायत इति नादाख्यः महेश्वरः शिवः । ब्रह्मांडोत्पत्तिप्रकारमाह—अस्य बीजीनो रुद्रस्य लिंगादकारो बीजं ब्रह्मांड कारणमभृदित्यन्वयः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८॥६९॥ एवमुक्तप्रकारेण ॐ ॐकाररूपं ब्रह्म ॐ इति प्रोक्तं प्रणवप्रतिपाद्यमिति यजुषां वरा याजुषोपनिषद्भागा

सत्यमानंदममृतं परं ब्रह्म परात्परम् ॥ एकाक्षरादकाराख्यो भगवान्कनकांडजः ॥ ६० ॥ एकाक्षरादुकाराख्यो हरिः परमकारणम् ॥ एकाक्षरान्मकाराख्यो भगवान्नीललोहितः ॥६१॥ सर्गकर्ता त्वकाराख्यो ह्युकाराख्यस्तु मोहकः ॥ मकाराख्यस्तयोर्नित्यमनुग्रहकरोऽभवत् ॥ ६२ ॥ मकाराख्यो विभुर्बीजी ह्यकारो बीजमुच्यते ॥ उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः ॥ ६३ ॥ बीजी च बीजं तद्योनिर्नादाख्यश्च महेश्वरः ॥ बीजी विभज्य चात्मानं स्वेच्छया तु व्यवस्थितः ॥६४॥ अस्य लिंगादभूद्बीजमकारो बीजिनः प्रभोः ॥ उकारयोनौ निक्षिप्तमवर्धत समंततः॥ ६५ ॥ सौवर्णमभवच्चांडमावेष्ट्याद्यं तदक्षरम् ॥ अनेकाब्दं तथा चाप्सु दिव्यमंडं व्यवस्थितम् ॥ ६६ ॥ ततो वर्षसहस्रांते द्विधा कृतमजोद्भवम् ॥ अंडमप्सु स्थितं साक्षादाद्याख्येनेश्वरेण तु ॥ ६७ ॥ तस्यांडस्य शुभं हैमं कपालं चोर्ध्वसंस्थितम् ॥ जज्ञे यद्द्यौस्तदपरं पृथिवी पंचलक्षणा ॥ ६८ ॥ तस्मादंडोद्भवो जज्ञे त्वकाराख्यश्चतुर्मुखः ॥ स स्रष्टा सर्वलोकानां स एव त्रिविधः प्रभुः ॥ ६९ ॥ एवमोमोमिति प्रोक्तमित्याहुर्यजुषां वराः ॥ यजुषां वचनं श्रुत्वा ऋचः सामानि सादरम् ॥ ७० ॥ एवमेव हरे ब्रह्मन्नित्याहुः श्रुतयस्तदा ॥ ततो विज्ञाय देवेशं यथावच्छ्रुतिसंभवैः ॥ ७१॥ मंत्रैर्महेश्वरं देवं तुष्टाव सुमहोदयम् ॥ आवयोः स्तुतिसंतुष्टो लिंगे तस्मिन्निरंजनः ॥ ७२ ॥ दिव्यं शब्दमयं रूपमास्थाय प्रहसन् स्थितः ॥ अकारस्तस्य मूर्द्धा तु ललाटं दीर्घमुच्यते ॥ ७३ ॥ इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ॥ उकारो दक्षिणं श्रोत्रमूकारो वाममुच्यते ॥ ७४ ॥ ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ॥ वामं कपोलमॄकारो ऌऌ नासापुटे उभे ॥७५॥ एकारमोष्ठमूर्द्ध्वश्च ऐकारस्त्वधरो विभोः ॥ ओकारश्च तथौकारो दंतपंक्तिद्वयं क्रमात् ॥ ७६ ॥

आहुः । ऋचः सामान्यपि एवमेवेत्यावयोराहुरित्यग्रिमेणान्वयः । अनेन वेदेषु यजुर्वेदस्यैव प्राधान्यं बोधितम् । तथा च श्रुतिः "तस्य यजुरेव शिरः" इति ॥ ७० ॥ ततो वेदवाक्याद्यथावत्साकल्येन देवं शिवं विज्ञाय श्रुत्यां संभवंति ते श्रुतिसंभवास्तैर्वैदिकमंत्रैस्तुष्टावेत्यग्रिमेणान्वयः ॥ ७१ ॥ नास्ति अंजनं मायावरणं यस्यासौ निरंजनः ॥७२॥ दिव्यं स्तुत्यं शब्दमयं शब्दप्रचुरं रूपमास्थाय प्रहसन्मुस्मितः स्थितः । शब्दमयं रूपं विशिनष्टि । तस्य शिवस्य अकारः मूर्धा मस्तकः दीर्घे आकारः ललाटमुच्यते कथ्यते

इत्यर्थः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ अम इत्यनुस्वारविसर्गौ । हस्तानीत्यत्र सामान्ये 'नपुंसकम्' इति नपुंसकत्वम् ॥ ७७ ॥ टादिपंचाक्षरं दक्षिणपादः तादिपंचाक्षरं वामपाद इत्यर्थः ॥ ७८ ॥ ७९ ॥ ८० ॥ तं शब्दब्रह्मात्मकरूपम् उमया अर्धेन सहितं सार्धम् अर्धनारीरूपम् । यद्वा उमया सार्धम् उमासहितं भगवन्तं षड्गुणैश्वर्ययुक्तं महेश्वरं शिवं दृष्ट्वा प्रणम्येत्यग्रिमेणान्वयः । वर्णानां भगवदवयवत्वान्नित्यत्वं वैय्याकरणोक्तं संगतम् । च परम् सोयं क इति प्रत्ययस्याप्यलाक्षणिकत्वोपपत्तिः ॥ ८१ ॥ अत्र मंत्रस्वरूपवर्णने प्रतीकानि तु नोक्तानि तथापि शिवरहस्यदशमांशानुरोधेन मंत्रा निरूप्यंते । विष्णुः पुनश्चोर्ध्वेनः ओंकारप्रभवो यस्यासावोंकारप्रभवः । यद्वा ओंकारः प्रकर्षेणोपरिभागे भवति यस्मिन्नसावोंकारप्रभवः कलापंचकेनावयवपंचकेन संयुक्तं समवेतमित्यर्थः ॥ ८२ ॥ शुद्धस्फटिकसंकाशमतिशुभ्रमित्यर्थः । शुभान्यष्टत्रिंशदक्षराणि

**अमस्तु तालुनी तस्य देवदेवस्य धीमतः॥ कादिपंचाक्षराण्यस्य पंच हस्तानि दक्षिणे ॥७७॥ चादिपंचाक्षराण्येवं पंच हस्तानि वामतः॥ टादिपंचाक्षरं पादस्तादिपंचाक्षरं तथा ॥७८॥ पकारमुदरं तस्य फकारः पार्श्वमुच्यते ॥बकारो वामपार्श्वं वै भकारं स्कंधमस्य तत्॥७९॥ मकारं हृदयं शंभोर्महादेवस्य योगिनः ॥ यकारादिसकारांता विभोर्वै सप्त धातवः ॥८०॥ हकार आत्मरूपं वै क्षकारः क्रोध उच्यते ॥ तं दृष्ट्वा उमया सार्द्धं भगवंतं महेश्वरम् ॥ ८१ ॥ प्रणम्य भगवान् विष्णुः पुनश्चापश्यदूर्ध्वतः ॥ ॐकारप्रभवं मंत्रं कलापंचकसंयुतम् ॥ ८२ ॥ शुद्धस्फटिकसंकाशं शुभाष्टत्रिंशदक्षरम् ॥ मेधाकरमभूद्भूयः सर्वधर्मार्थसाधकम् ॥ ८३ ॥ गायत्रीप्रभवं मंत्रं हरितं वश्यकारकम् ॥ चतुर्विंशतिवर्णाढ्यं चतुष्कलमनुत्तमम्॥ ८४ ॥ अथर्वमसितं मंत्रं कलाष्टकसमायुतम् ॥ अभिचारिकमत्यर्थं त्रयस्त्रिंशच्छुभाक्षरम् ॥ ॥ ८५ ॥ यजुर्वेदसमायुक्तं पंचत्रिंशच्छुभाक्षरम् ॥ कलाष्टकसमायुक्तं सुश्वेतं शांतिकं तथा ॥ ८६ ॥**

यस्यासौ शुभाष्टत्रिंशदक्षरः मेधां प्रज्ञां करोति तच्छीलो मेधाकरस्तं सर्वधर्मार्थसाधकं सिद्धिकरमित्यर्थः । एतादृशमशिानः सर्वविद्येति मंत्रम् । तदुक्तं रहस्ये—"ॐकारबीजप्रभवः कलापंचकसंयुतः । शुद्धस्फटिकसंकाशः शुभमेधाविवर्धनः ॥ सदाशिवात्मा व्योमस्थ ईशानः परिकीर्तितः ॥" इति । एवं कलापंचकविभागः तेषां वर्णाश्च तत्रोक्ता उपासकैरनुध्येयाः ॥ ८३ ॥ गायत्रीषु गायत्रीमंत्रेषु प्रकर्षेण प्राथम्येन भवतीति गायत्रीप्रभवः हरितं हरिद्वर्णम् एतादृशं तत्पुरुषेतिरुद्रगायत्रीमंत्रम् । तदुक्तं रहस्ये—"गायत्रीप्रभवो मंत्रः स्वर्णवर्णश्चतुष्कलः ॥ वश्यकौ गजवाहस्थ ईश्वरः पुरुषः स्मृतः ॥ तत्पुरुषश्चंद्रविंबाभो ऋग्वेदवदनांशुमान् ॥" इति ॥ ८४ ॥ अथर्वमथर्ववेदभवम् असितं कृष्णवर्णम् । अघोरेति मंत्रम् । तदुक्तं रहस्ये—"अथर्वप्रभवो मंत्रः कलाष्टकविभूषितः । अभिचारक इत्यर्थमंजनाद्रिसमप्रभः ॥ अशेषाघहरः पुंसामघोरो रुद्रविग्रहः" ॥ ८५ ॥ शांतिकं शांतिकरं पंचत्रिंशच्छुभाक्षरं यजुर्वेदसमायुक्तं सद्योजातेति मंत्रम् । तत्वस्य सर्वात्रिंशदक्षराणि भवन्ति । अत्र तु पंचत्रिंशदुक्तानि चेत् नमोनम इत्यत्र द्विरुक्तनमःशब्दाक्षरद्वयं

त्यक्त्वा संख्या ज्ञया । तदुक्तम्—"यजुर्वेदोद्भवो मंत्रः कलाष्टकयुतः स्थितः ॥ शांतिकृत्पृथिवीसंस्थः सद्योजातः पितामहः ॥" ॥८६॥ सामोद्भवं सामवेदप्रोक्तं जगत्याः जगती छंदस्याद्यः प्रथमपादो यस्मिंस्तं "जगत्या आदित्याः" इति छंदःसूत्राद्द्वादशाक्षरपादमित्यर्थः । बालाद्यैस्त्रयोदशकलायुक्तमित्यन्वयः । लोहितं रक्तवर्णम् । तदुक्तं "सामवेदभवो मंत्रस्त्रयोदशकलान्वितः ॥ वामदेवः प्रवालाभो वारिणस्त्वस्थितो हरिः" ॥ ८७ ॥ वर्णाः षडधिका षष्टिः तत्संख्याका इत्यर्थः । वामदेवमंत्रस्य तु वर्णा षट्सप्तति वर्तमानपाठे वर्तन्ते इति चेत् अत्रांध्रपाठानुसारिवेदभाष्ये उत्तरवक्त्रपुरुषो वामदेवः तस्यैव विग्रहविशेषा ज्येष्ठादिनामकाः । एते च महादेवपीठशक्तीनां वामादीनां नवानां पतयः पुरुषाः तेभ्यो नवभ्यो नमस्कारोऽस्त्वित्युक्तम् । तथांध्रपाठे तृतीयाष्टमनामरहितमंत्रपाठात्तत्परिग्रहेण षडधिकषष्टिवर्णता बोध्या । तथा पूर्वोक्तप्रकारान् मंत्रान् हरिः विष्णुर्लब्ध्वा जजापेत्यन्वयः । ननु ईशानादिपंचमंत्राः याजुषनारायणोपनिषदि दृश्यंते । तत्पुरुषादिमंत्रास्तु ऋग्वेदादौ न दृश्यंत इति तत्तद्वेदीयत्वोक्तेरसंगतिः । इदानीं समग्रचतुर्वेदशाखानामनुपलंभाद्वा एतन्मंत्राणां तत्तद्वेदादित्वात्तेष्वप्रवेश इति नासंगतिरिति चेन्नारायणोपनिषदि सर्वेषां पाठानुपपत्तिरिति न च वाच्यम् । नारायणोपनिषदि इदानींतनद्विजानामनुग्रहेच्छया

त्रयोदशकलायुक्तं बालाद्यैः सह लोहितम् ॥ सामोद्भवं जगत्याद्यं वृद्धिसंहारकारणम् ॥ ८७ ॥ वर्णाः षडधिकाः षष्टिरस्य मंत्रवरस्य तु ॥ पंच मंत्रांस्तथा लब्ध्वा जजाप भगवान् हरिः ॥८८॥ अथ दृष्ट्वा कलावर्णमृग्यजुःसामरूपिणम् ॥ ईशानमीशमुकुटं पुरुषास्यं पुरातनम् ॥८९॥ अघोरहृदयं हृद्यं वामगुह्यं सदाशिवम् ॥ सद्यःपादं महादेवं महाभोगीन्द्रभूषणम् ॥ ९० ॥ विश्वतः पादवदनं विश्वतोक्षिकरं शिवम् ॥ ब्रह्मणोधिपतिं सर्गस्थितिसंहारकारणम् ॥ ९१ ॥ तुष्टाव पुनरिष्टाभिर्वाग्भिर्वरदमीश्वरम् ॥९२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे लिंगोद्भवो नाम सप्तदशोऽध्यायः ॥ १७ ॥ विष्णुरुवाच ॥ एकाक्षराय रुद्राय अकारायात्मरूपिणे ॥ उकारायादिदेवाय विद्यादेहाय वै नमः ॥ १ ॥

सर्वे वेदविभागकृताः पठितास्तथा च न काप्यनुपपत्तिः ॥ ८८ ॥ कलाश्चतुःषष्टिकलाः वर्णः कांतिर्यस्य कलावर्णः तम् ईशानं शिवम् ईशः ईशानेतिमंत्ररूपो मुकुटो यस्य । यद्वा ईशः ऐश्वर्ययुक्तः मुकुटो यस्य । पुरुषः तत्पुरुषमंत्रः आस्यं मुखं यस्य । यद्वा पुरुषवदास्यं यस्य ॥ ८९ ॥ अघोरोऽघोरमंत्रो हृदयं यस्य अघोरं करुणं हृदयं यस्येति वा । वामः वामदेवायेति मंत्रः । गुह्यं यस्य वामं सुंदरं गुह्यं यस्येति वा । सद्यः सद्योजातेति मंत्रः पादौ यस्य । यद्वा सद्यासौ यश्च सद्यः सुगंधिवायुः तद्वत्पादौ यस्य स सद्यपाद: अनेन सुरभित्वं शीघ्रगामित्वं च बोध्यते । "यः सर्वनामानिलयोः" इति विश्वः । सतः साधून् यातः प्राप्नुतः सद्यौ सद्यौ पादौ यस्य स सद्यपादेति वा । अत्र "आतोनुपसर्गे कः" इति कप्रत्ययः ॥९०॥९१॥ ईश्वरं शिवम् ॥९२॥ प्रलयांबुधिमध्यस्थलिंगोद्भूतमुमायुतम् । शब्दब्रह्मतनुं वन्दे ब्रह्मविष्णुनुतं शिवम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां लिङ्गोद्भवो नाम सप्तदशोऽध्यायः ॥ १७ ॥ लिंगे त्वष्टादशाध्याये महेशस्तोत्रमुत्तमम् ॥ फलश्रुतिसमायुक्तं विष्णुप्रोक्तं निरूप्यते ॥ विष्णुर्महेशं

स्तुवन्नाह—एकाक्षरायेत्यादिना । एकोऽद्वितीयः स चासौ अक्षरो नाशशून्यः । यद्वा एकाक्षरः प्रणवरूपः ॥ १ ॥ २ ॥ ३ ॥ वामाय सुंदराय रंहसे वेगरूपायेत्यर्थः ॥ ४ ॥ श्मशानाय काशीक्षेत्ररूपायेत्यर्थः । श्रुतिभिर्वेदैः पदानि ज्ञायतेऽसौ श्रुतिपादः पदरूज इति यत्र । ऊर्ध्वं लिंगमेव यस्यासौ ऊर्ध्वलिंगः ब्रह्मणाप्यंतादर्शनात् । लिंगिने चित्ररूप-विशिष्टेत्यर्थः ॥ ५ ॥६॥७॥८॥९॥ अनंताय शेषरूपाय विरूपाय गरुडरूपायेत्यर्थः ॥१०॥ आवयोर्ब्रह्मविष्ण्वोर्मध्ये वर्चो यस्य स मध्यवर्चाः प्रकाशमान इत्यर्थः ॥११॥

तृतीयाय मकाराय शिवाय परमात्मने ॥ सूर्याग्निसोमवर्णाय यजमानाय वै नमः ॥२॥ अग्नये रुद्ररूपाय रुद्राणां पतये नमः ॥ शिवाय शिवमंत्राय सद्योजाताय वेधसे ॥ ३ ॥ वामाय वामदेवाय वरदायामृताय ते ॥ अघोरायातिघोराय सद्योजाताय रंहसे ॥ ४ ॥ ईशानाय श्मशानाय अतिवेगाय वेगिने ॥ नमोऽस्तु श्रुतिपादाय ऊर्ध्वलिंगाय लिंगिने ॥५॥ हेमलिंगाय हेमाय वारिलिंगाय चांभसे ॥ शिवाय शिवलिंगाय व्यापिने व्योमव्यापिने ॥ ६ ॥ वायवे वायुवेगाय नमस्ते वायुव्यापिने ॥ तेजसे तेजसां भर्त्रे नमस्तेजोधिव्यापिने ॥ ७ ॥ जलाय जलभूताय नमस्ते जलव्यापिने ॥ पृथिव्यै चांतरिक्षाय पृथिवीव्यापिने नमः ॥८॥ शब्दस्पर्शस्वरूपाय रसगंधाय गंधिने ॥ गणाधिपतये तुभ्यं गुह्याद्गुह्यतमाय ते ॥ ९ ॥ अनंताय विरूपाय अनंतानामयाय च ॥ शाश्वताय वरिष्ठाय वारिगर्भाय योगिने ॥ १० ॥ संस्थिता-याम्भसां मध्ये आवयोर्मध्यवर्चसे ॥ गोप्त्रे हर्त्रे सदा कर्त्रे निधनायेश्वराय च ॥ ११ ॥ अचेतनाय चिंत्याय चेतनायासहारिणे ॥ अरूपाय सुरूपाय अनंगायाङ्गहारिणे ॥ १२ ॥ भस्मदिग्धशरीराय भानुसोमाग्निहेतवे ॥ श्वेताय श्वेतवर्णाय तुहिनाद्रिचराय च ॥ १३ ॥ सुश्वेताय सुवक्राय नमः श्वेतशिखाय च ॥ श्वेतास्याय महास्याय नमस्ते श्वेतलोहित ॥ १४ ॥ सुताराय विशिष्टाय नमो दुंदुभिने हर ॥ शतरूप विरूपाय नमः केतुमते सदा ॥१५॥ ऋद्धिशोकविशोकाय पिनाकाय कपर्दिने ॥ विपाशाय सुपाशाय नमस्ते पाशनाशिने ॥ १६ ॥ सुहोत्राय हविष्याय सुब्रह्मण्याय सूरिणे ॥ सुमुखाय सुवक्राय दुर्दमाय दमाय च॥१७॥ कंकाय कंकरूपाय कंकणीकृतपन्नग ॥ सनकाय नमस्तुभ्यं सनातन सनंदन ॥ १८ ॥

नास्ति चेतना चित्तजन्यं ज्ञानं यस्यासावचेतनः " अप्राणो ह्यमनाः " इति श्रुतेः । चेतनानां जीवानामायासो जन्ममरणरूपक्लेशस्तं हरति नाशयति तच्छीलः तस्मै । नास्ति अंगं शरीरं यस्यासौ अनंगः मदनरूपस्तस्मै अत एवांगं हरयति नाशयति तस्मै ॥ १२ ॥ १३॥ श्वेतं लोहितं रुधिरं यस्य तत्संबुद्धौ हे श्वेतलोहित ते नम इत्यन्वयः । एवमग्रे संबुद्धिस्थले ते इत्यस्यानुषंगः ॥ १४ ॥ १५ ॥ १६ ॥ सुमुखाय गणेशरूपाय ॥ १७ ॥ कंकाय कपटद्विजरूपाय कंकरूपाय यमस्वरूपायेत्यर्थः । "स्वंग यम छन्न

विप्रे कंकः" इति विश्वः ॥ १८ ॥ सारंगमारणाय किरातादिरूपेण तत्संज्ञकपशुपक्षिमारणायेत्यर्थः । " सारंगः पशुपक्षिणोः " इत्यमरः । त्रीणि धामानि यस्य स त्रिधामः अत्र योगविभागात्समासांताऽच् । तस्मै ॥ १९ ॥ २० ॥ विगतः वादो येषां ते विवादास्तेषां वरदाय ॥ २१ ॥ २२ ॥ विष्णवे व्यापकाय ॥ २३ ॥ २४ ॥ नगाणां समूहो

सनत्कुमार सारंगमारणाय महात्मने ॥ लोकाक्षिणे त्रिधामाय नमो विरजसे सदा ॥ १९ ॥ शंखपालाय शंखाय रजसे तमसे नमः ॥ सारस्वताय मेघाय मेघवाहन ते नमः ॥२०॥ सुवाहाय विवाहाय विवादवरदाय च ॥ नमः शिवाय रुद्राय प्रधानाय नमोनमः ॥ २१ ॥ त्रिगुणाय नमस्तुभ्यं चतुर्व्यूहात्मने नमः ॥ संसाराय नमस्तुभ्यं नमः संसारहेतवे ॥ २२ ॥ मोक्षाय मोक्षरूपाय मोक्षकर्त्रे नमोनमः ॥ आत्मने ऋषये तुभ्यं स्वामिने विष्णवे नमः ॥ २३ ॥ नमो भगवते तुभ्यं नागानां पतये नमः ॥ ओंकाराय नमस्तुभ्यं सर्वज्ञाय नमो नमः ॥२४॥ सर्वाय च नमस्तुभ्यं नमो नारायणाय च ॥ नमो हिरण्यगर्भाय आदिदेवाय ते नमः ॥ २५ ॥ नमोस्त्वजाय पतये प्रजानां व्यूहहेतवे ॥ महादेवाय देवानामीश्वराय नमो नमः ॥ २६ ॥ शर्वाय च नमस्तुभ्यं सत्याय शमनाय च॥ब्रह्मणे चैव भूतानां सर्वज्ञाय नमो नमः ॥ २७ ॥ महात्मने नमस्तुभ्यं प्रज्ञारूपाय वै नमः ॥ चितये चितिरूपाय स्मृतिरूपाय वै नमः ॥ २८ ॥ ज्ञानाय ज्ञानगम्याय नमस्ते संविदे सदा ॥ शिखराय नमस्तुभ्यं नीलकंठाय वै नमः ॥ २९ ॥ अर्धनारीशरीराय अव्यक्ताय नमोनमः ॥ एकादशविभेदाय स्थाणवे ते नमः सदा ॥३०॥ नमः सोमाय सूर्याय भवाय भवहारिणे ॥ यशस्कराय देवाय शंकरायेश्वराय च॥३१॥ नमोंबिकाधिपतये उमायाः पतये नमः ॥ हिरण्यबाहवे तुभ्यं नमस्ते हेमरेतसे ॥ ३२ ॥ नीलकेशाय वित्ताय शितिकंठाय वै नमः ॥ कपर्दिने नमस्तुभ्यं नागांगाभरणाय च ॥ ३३ ॥ वृषारूढाय सर्वस्य हर्त्रे कर्त्रे नमोनमः ॥ वीररामातिरामाय रामनाथाय ते विभो ॥ ३४ ॥ नमो राजाधिराजाय राज्ञामधिगताय ते ॥ नमः पालाधिपतये पालाशाकृंतते नमः ॥ ३५ ॥ नमः केयूरभूषाय गोपते ते नमोनमः ॥ नमः श्रीकंठनाथाय नमो लिकुचपाणये ॥ ३६ ॥ भुवनेशाय देवाय वेदशास्त्र नमोस्तु ते ॥ सारंगाय नमस्तुभ्यं राजहंसाय ते नमः ॥ ३७ ॥ कनकांगदहाराय नमः सर्पोपवीतिने ॥ सर्पकुंडलमालाय कटिसूत्रीकृताहिने ॥३८॥ वेदगर्भाय गर्भाय विश्वगर्भाय ते शिव ॥ ब्रह्मोवाच॥ विररामेति संस्तुत्वा ब्रह्मणा सहितो हरिः॥३९॥एतत्स्तोत्रवरं पुण्यं सर्वपापप्रणाशनम्॥ यः पठेच्छ्रावयेद्वापि ब्राह्मणान् वेदपारगान्॥४०॥

नागं तदयनं स्थानं यस्य तस्मै ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ब्रह्मा स्तोत्र

मुक्त्वा फलमाह—एतदिति ॥ ४० ॥ ४१ ॥ परिभाषितं भक्त्या कृतमित्यर्थः ॥४२॥ हर सर्वामराधीश ब्रह्मविष्णुस्तुत प्रभो ॥ अपारमहिमञ्छंभो त्वां स्तौमि कथमल्पधीः ॥
इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां विष्णुस्तवो नामाष्टादशोऽध्यायः ॥ १८ ॥ एकोनविंशे ह्यध्याये स्तुत्या प्रीतान्महेश्वरात् ॥ ब्रह्मविष्ण्वोर्वरप्राप्तिर्मोह
नाशश्च वर्ण्यते ॥ सूतः स्तवानंतरवृत्तं वर्णयति—अथेत्यादिना । अथ स्तवानंतरं सुरसत्तमौ ब्रह्मविष्णू ॥ १—४ ॥ लिंगं तिष्ठतीति लिंगस्थः तं लिंगवर्जितं

स याति ब्रह्मणो लोकं पापकर्मरतोऽपि वै ॥ तस्माज्जपेत्पठेन्नित्यं श्रावयेद्ब्राह्मणाञ्छुभान् ॥४१॥ सर्वपापविशुद्ध्यर्थं विष्णुना परिभाषितम्
॥ ४२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे विष्णुस्तवो नामाष्टादशोऽध्यायः ॥ १८ ॥ सूत उवाच ॥ अथोवाच महादेवः प्रीतोऽहं सुर-
सत्तमौ ॥ पश्यतां मां महादेवं भयं सर्वं विमुच्यताम् ॥ १ ॥ युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ ॥ अयं मे दक्षिणे पार्श्वे ब्रह्मा
लोकपितामहः ॥ २ ॥ वामे पार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः ॥ प्रीतोऽहं युवयोः सम्यग्वरं दद्मि यथेप्सितम् ॥ ३ ॥ एवमुक्त्वा
तु तं विष्णुं कराभ्यां परमेश्वरः ॥ पस्पर्श सुभगाभ्यां तु कृपया तु कृपानिधिः ॥ ४ ॥ ततः प्रहृष्टमनसा प्रणिपत्य महेश्वरम् ॥ प्राह
नारायणो नाथं लिंगस्थं लिंगवर्जितम् ॥ ५ ॥ यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ॥ भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी
॥ ६ ॥ देवः प्रदत्तवान्देवाः स्वात्मन्यव्यभिचारिणीम् ॥ ब्रह्मणे विष्णवे चैव श्रद्धां शीतांशुभूषणः ॥ ७ ॥ जानुभ्यामवनीं गत्वा पुनर्ना-
रायणः स्वयम् ॥ प्रणिपत्य च विश्वेशं प्राह मंदतरं वशी ॥ ८ ॥ आवयोर्देवदेवेश विवादमतिशोभनम् ॥ इहागतो भवान्यस्मा-
द्विवादशमनाय नौ ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा पुनः प्राह हरो हरिम् ॥ प्रणिपत्य स्थितं मूर्ध्ना कृतांजलिपुटं स्मयन् ॥ १० ॥
श्रीमहादेव उवाच ॥ प्रलयस्थितिसर्गाणां कर्ता त्वं धरणीपते ॥ वत्स वत्स हरे विष्णो पालयैतच्चराचरम् ॥११॥ त्रिधा भिन्नो ह्यहं विष्णो
ब्रह्मविष्णुभवाख्यया ॥ सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः ॥ १२॥ संमोहं त्यज भो विष्णो पालयैनं पितामहम् ॥ पाद्मे भविष्यति सुतः
कल्पे तव पितामहः ॥ १३ ॥ तदा द्रक्ष्यसि मां चैवं सोऽपि द्रक्ष्यति पद्मजः ॥ एवमुक्त्वा स भगवांस्तत्रैवांतरधीयत ॥ १४ ॥

लिंगदेहशून्यं स्वेच्छाविग्रहमित्यर्थः ॥५—६॥७॥देवा इति संबोधनम् । मंदतरं यथा स्यात्तथा सूक्ष्ममित्यर्थः ॥८॥ अतिशोभनमुभयोरपि ममत्वस्याच्छोभमानानामित्यर्थः । अतः शम
यन्नित्यध्याहारः ॥९॥ स्मयन्प्राहेत्यनेन विष्णोरपि मोहं दृष्ट्वाश्चर्यं सूचितम् ॥१०॥११॥१२॥ विष्णो व्यापकत्वेनेन तव न्यूनाधिकभावोऽयुक्तोऽतः संमोहं त्यजेत्यन्वयः ॥१३—१४॥

तदाप्रभृति लिंगे शिवप्रादुर्भावमारभ्येत्यर्थः । लिंगवेदी परितालिका महादेवी उमा लिंगं महेश्वरः साक्षात्प्रत्यक्षमित्यस्योभयत्राप्यन्वयः ॥ १५ ॥ लयनात् तिरोभावकत्वात् अस्य पुराणस्य लिंगमाहात्म्यबोधकत्वाल्लिंगसन्निधौ पठने परमफलमाह—यस्त्वित्यादिना ॥ १६ ॥ शिवतां शिवभावतां याति प्राप्नोतीत्यर्थः ॥ १७ ॥ भगवँल्लिंगरूपेश वेदमार्गेशोभित । रतिं त्वत्पूजनेऽस्मभ्यं देहि कल्पतरो सदा ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां विष्णुप्रबोधो नामैकोनविंशोऽध्यायः॥ १९॥

तदाप्रभृति लोकेषु लिंगार्चा सुप्रतिष्ठिता ॥ लिंगवेदी महादेवी लिंगं साक्षान्महेश्वरः ॥१५॥ लयनाल्लिंगमित्युक्तं तत्रैव निखिलं सुराः ॥
यस्तु लैंगं पठेन्नित्यमाख्यानं लिंगसन्निधौ ॥ १६ ॥ स याति शिवतां विप्रो नात्र कार्या विचारणा ॥ १७ ॥ इति श्रीलिंगमहापुराणे
पूर्वभागे विष्णुप्रबोधो नामैकोनविंशोऽध्यायः॥ १९ ॥ ऋषय ऊचुः ॥ कथं पाद्मे पुरा कल्पे ब्रह्मा पद्मोद्भवोऽभवत् ॥ भवं च दृष्टवांस्तेन
ब्रह्मणा पुरुषोत्तमः ॥ १ ॥ एतत्सर्वं विशेषेण सांप्रतं वक्तुमर्हसि ॥ सूत उवाच ॥ आसीदेकार्णवं घोरमविभागं तमोमयम् ॥ २ ॥
मध्ये चैकार्णवे तस्मिन् शंखचक्रगदाधरः ॥ जीमूताभोऽम्बुजाक्षश्च किरीटी श्रीपतिर्हरिः ॥३॥ नारायणमुखोद्गीर्णसर्वात्मा पुरुषोत्तमः ॥
अष्टबाहुर्महावक्षा लोकानां योनिरुच्यते ॥ ४ ॥ किमप्यचिन्त्यं योगात्मा योगमास्थाय योगवित् ॥ फणासहस्रकलितं तमप्रतिमवर्चसम् ॥ ५ ॥ महाभोगपतेर्भोगं साध्वास्तीर्य महोच्छ्रयम् ॥ तस्मिन्महति पर्यंके शेते चैकार्णवे प्रभुः ॥ ६ ॥ एवं तत्र शयानेन विष्णुना
प्रभविष्णुना ॥ आत्मारामेण क्रीडार्थं लीलयाक्लिष्टकर्मणा ॥ ७ ॥ शतयोजनविस्तीर्णं तरुणादित्यसन्निभम् ॥ वज्रदंडं महोत्सेधं नाभ्यां
सृष्टं तु पुष्करम् ॥ ८ ॥ तस्यैवं क्रीडमानस्य समीपं देवमीढुषः ॥ हेमगर्भांडजो ब्रह्मा रुक्मवर्णो ह्यतींद्रियः ॥९॥ चतुर्वक्त्रो विशालाक्षः
समागम्य यदृच्छया ॥ श्रिया युक्तेन दिव्येन सुशुभेन सुगंधिना ॥१०॥ क्रीडमानं च पद्मेन दृष्ट्वा ब्रह्मा शुभेक्षणम् ॥ सविस्मयमथागम्य
सौम्यसंपन्नया गिरा ॥ ११ ॥ प्रोवाच को भवाञ्छेते ह्याश्रितो मध्यमंभसाम् ॥ अथ तस्याच्युतः श्रुत्वा ब्रह्मणस्तु शुभं वचः ॥१२॥
उदतिष्ठत पर्यंकाद्विस्मयोत्फुल्ललोचनः ॥ प्रत्युवाचोत्तरं चैव कल्पे कल्पे प्रतिश्रयः ॥१३ ॥ कर्तव्यं च कृतं चैव क्रियते यच्च किंचन ॥
द्यौरंतरिक्षं भूश्चैव परं पदमहं भुवः ॥१४॥ तमेवमुक्त्वा भगवान् विष्णुः पुनरथाब्रवीत्॥ कस्त्वं खलु समायातः समीपं भगवान्कुतः॥१५॥

विंशे तु वर्ण्यते चास्मिन्ब्रह्मणः परमेष्ठिनः ॥ श्रीविष्णुनाभिकमलादुद्भवो रुद्रदर्शनम् ॥ ऋषयो ब्रह्मणः पद्मोद्भवादिवृत्तमपृच्छन्—कथमित्यादिना । तेन पद्मोद्भवेन ब्रह्मणा सह पुरुषोत्तमः भवं कथं दृष्टवांश्चेत्यन्वयः ॥ १ ॥ २ ॥ ३ ॥ नारायणश्चासौ मुखेन उद्गीर्णाः सर्वात्मानो येन सः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ वज्रस्य हीरकस्य दंडो नालं यस्य तद्वज्रदंडम् ॥ ८ ॥ देवमीढुषः देवश्रेष्ठस्य ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ प्रतिश्रयो जगन्निवासस्थानमित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

ते प्रतिश्रय आश्रयः क्क इत्यर्थः ॥ १६ ॥ पितामहः शंभोर्मायया मोहितोऽतः जनार्दनमविज्ञाय प्रत्युवाचेत्यन्वयः ॥ १७ ॥ महात्मनः शंभोर्मायया मोहितमत एवाविज्ञातमित्यन्वयः ॥ १८ ॥ लोकतन्त्रिणः लोकतंत्राश्रयस्येत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ मनः

क्क वा भूयश्च गंतव्यं कश्च वा ते प्रतिश्रयः ॥ को भवान् विश्वमूर्तिर्वै कर्तव्यं किं च ते मया॥१६॥एवं ब्रुवंतं वैकुंठं प्रत्युवाच पितामहः ॥ मायया मोहितः शंभोरविज्ञाय जनार्दनम् ॥ १७ ॥ मायया मोहितं देवमविज्ञातं महात्मनः ॥ यथा भवांस्तथैवाहमादिकर्ता प्रजापतिः ॥ १८ ॥ सविस्मयं वचः श्रुत्वा ब्रह्मणो लोकतंत्रिणः ॥ अनुज्ञातश्च ते नाथ वैकुंठो विश्वसंभवः ॥ १९ ॥ कौतूहलान्महायोगी प्रविष्टो ब्रह्मणो मुखम् ॥ इमानष्टादश द्वीपान्ससमुद्रान् सपर्वतान् ॥ २० ॥ प्रविश्य सुमहातेजाश्चातुर्वर्ण्यसमाकुलान् ॥ ब्रह्मणस्तंबपर्यंतं सप्तलोकान् सनातनान् ॥ २१ ॥ ब्रह्मणस्तूदरे दृष्ट्वा सर्वान्विष्णुर्महाभुजः ॥ अहोस्य तपसो वीर्यमित्युक्त्वा च पुनःपुनः ॥२२॥ अटित्वा विविधाँल्लोकान् विष्णुर्नानाविधाश्रयान् ॥ ततो वर्षसहस्रांते नांतं हि ददृशे यदा ॥ २३ ॥ तदास्य वक्त्रान्निष्क्रम्य पन्नगेंद्रनिकेतनः ॥ नारायणो जगद्धाता पितामहमथाब्रवीत्॥२४॥भगवानादिरंतश्च मध्यं कालो दिशो नभः ॥ नाहमंतं प्रपश्यामि उदरस्य तवानघ ॥२५॥ एवमुक्त्वाब्रवीद्भूयः पितामहमिदं हरिः ॥ भगवानेवमेवाहं शाश्वतं हि ममोदरम् ॥ २६ ॥ प्रविश्य लोकान् पश्यैतानन्नौपम्यान्सुरोत्तम ॥ ततः प्राह्लादिनीं वाणीं श्रुत्वा तस्याभिनंद्य च ॥ २७ ॥ श्रीपतेरुदरं भूयः प्रविवेश पितामहः ॥ तानेव लोकान् गर्भस्थानपश्यत्सत्यविक्रमः ॥ २८ ॥ पर्यटित्वा तु देवस्य ददृशेऽन्तं न वै हरेः ॥ ज्ञात्वा गतिं तस्य पितामहस्य द्वाराणि सर्वाणि पिधाय विष्णुः॥ विभुर्मनः कर्तुमियेष चाशु सुखं प्रसुप्तोहमिति प्रचिंत्य ॥ २९ ॥ ततो द्वाराणि सर्वाणि पिहितानि समीक्ष्य वै ॥ सूक्ष्मं कृत्वात्मनो रूपं नाभ्यां द्वारमविंदत ॥ ३० ॥ पद्मसूत्रानुसारेण चान्वपश्यत्पितामहः ॥ उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ॥ ३१ ॥ विरराजारविंदस्थः पद्मगर्भसमद्युतिः ॥ ब्रह्मा स्वयंभूर्भगवाञ्जगद्योनिः पितामहः ॥ ३२ ॥

कर्तुम् अभिलाषातिशयं कर्तुम् "मनःशब्दोऽभिलाषातिशये" इति कौमुद्यामुक्तम् । इयेष इच्छितवानित्यर्थः । पर्यटित्वेत्ययं सार्धश्लोकः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

भगवत्प्रसादाल्लब्धबोधाः स्वयमेव तत्स्वरूपं वर्णयंति—महासंहरण इत्यादिना ॥ १० ॥ तस्मात्प्रलयाग्निसकाशादग्निसमा विकृताश्छन्नरूपाग्नयः कामादय एत उत्पन्ना इत्यग्रिमेणान्वयः ॥ ११ ॥ यानि भूतानि मनुष्यादीनि अन्यानि स्थावराणि चराणि च वह्निना दह्यंत इत्यग्रिमेणान्वयः ॥ १२ ॥ १३ ॥ हे महेश्वर लोकहिताय त्वं भूतानि परिषिंचासि सोमरूपेणांबुसिक्तान्करोषीत्यन्वयः ॥ १४ ॥ १५ ॥ स्मेत्यतीते । पूर्वोक्तानंतरूपे अन्तं गंतुं न शक्ताः देवानपि देवयति क्रीडयतीति देवदेवः तत्संबुद्धौ देवदेव ते तुभ्यं नमोऽस्त्वित्यन्वयः । स्मेत्यव्ययमतीते पादपूरणे च ॥ १६॥ अग्नीषोमात्मके भव्ये सर्वगे विश्वकारणे ॥ रूपे प्रकाशयास्माकं सांब सर्वमुनिस्तुत ॥ इतिश्रीलिंगमहापुराणे

महासंहरणे प्राप्ते त्वया देव कृतात्मना ॥ करं ललाटे संविध्य वह्निरुत्पादितस्त्वया ॥१०॥ तेनाग्निना तदा लोका अर्चिर्भिः सर्वतो वृताः॥ तस्मादग्निसमा ह्येते बहवो विकृताग्नयः ॥११॥ कामः क्रोधश्च लोभश्च मोहो दंभ उपद्रवः ॥ यानि चान्यानि भूतानि स्थावराणि चराणि च ॥१२॥ दह्यंते प्राणिनस्ते तु त्वत्समुत्थेन वह्निना ॥ अस्माकं दह्यमानानां त्राता भव सुरेश्वर ॥१३॥ त्वं च लोकहितार्थाय भूतानि परिषिंचसि ॥ महेश्वर महाभाग प्रभो शुभनिरीक्षक ॥१४॥ आज्ञापय वयं नाथ कर्तारो वचनं तव ॥ भूतकोटिसहस्रेषु रूपकोटिशतेषु च ॥१५॥ अन्तं गंतुं न शक्ताः स्म देवदेव नमोऽस्तु ते ॥१६॥ इति श्रीलिंगमहापुराणे पूर्वभागे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ नंद्युवाच॥ ततस्तुतोष भगवाननुगृह्य महेश्वरः ॥ स्तुतिं श्रुत्वा स्तुतस्तेषामिदं वचनमब्रवीत् ॥१॥ यः पठेच्छृणुयाद्वापि युष्माभिः कीर्तितं स्तवम्॥ श्रावयेद्वा द्विजान्विप्रो गाणपत्यमवाप्नुयात् ॥ २॥वक्ष्यामि वो हितं पुण्यं भक्तानां मुनिपुंगवाः ॥ स्त्रीलिंगमखिलं देवी प्रकृतिर्मम देहजा ॥३॥ पुँल्लिंगं पुरुषो विप्रा मम देहसमुद्भवः ॥ उभाभ्यामेव वै सृष्टिर्मम विप्रा न संशयः ॥ ४ ॥ न निंदेद्यतिनं तस्माद्दिग्वाससमनुत्तमम् ॥ बालोन्मत्तविचेष्टं तु मत्परं ब्रह्मवादिनम् ॥ ५ ॥

पूर्वभागे शिवतोषिण्यां टीकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥ त्रयस्त्रिंशे स्तवप्रीत ऋषीणां शंकरः स्वयम् ॥ स्तवस्य चैव शैवानां माहिमानमवर्णयत् ॥ १ ॥ शैलादिः शिवानुग्रहादिवृत्तं वर्णयति—तत इत्यादिना ॥१॥२॥३ ॥ सृष्टिरुभाभ्यां स्त्रीपुल्लिंगाभ्यामेव जायते । यद्वा युक्तेति शेषः । अतो मम वै निश्चयेन न संशय इत्यन्वयः । अतः एवोक्तमुपमन्युना भारते " न पद्मांका न चक्रांका न वज्रांका यतः प्रजा ॥ लिंगांका च भगांका च तस्मान्माहेश्वरी प्रजा " इति ॥ ४ ॥ लिंगानां शिवचिह्नत्वात् कामक्रोधाद्याकुला अज्ञानिनः लोकेषणया लिंगान्यावरयंति तच्छून्या यतयस्तु दिग्वाससो विचरंतीति तन्माहिमानं निरूपयति—न निंदेदिति । तस्माल्लिंगानां शिवरूपत्वात् ॥ ५ ॥

यतिभिन्नब्रह्मचार्यादिशैवानां महिमानं वर्णयति—ये हीत्यादिना ॥ ६ ॥ ७ ॥ व्यक्तं स्वभावोत्पन्नं च तल्लिंगं च व्यक्तलिंगं यस्यास्तीति व्यक्तलिंगी तस्य एतद्व्रतं पूर्वोक्तव्रतं दिव्यं श्रेष्ठम् अव्यक्तं कृच्छ्रसाधनसाध्यत्वादस्पष्टमित्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ एवं पूर्वोक्तप्रकारेण लोकानां हितकाम्यया भस्मगुंठितः क्रीडतीत्यग्रिमेणान्वयः । तदुक्तं भगवद्गीतायाम्— "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति ॥११॥ एवं पूर्वोक्तं शिवव्रतं वः युष्मभ्यं भद्रं सुखकरं चरत ततो व्रताचरणात्सिद्धिमवाप्स्य

ये हि मां भस्मनिरता भस्मना दग्धकिल्बिषाः ॥ यथोक्तकारिणो दांता विप्रा ध्यानपरायणाः ॥६॥ महादेवपरा नित्यं चरंतो ह्यूर्ध्वरेतसः॥ अर्चयंति महादेवं वाङ्मनःकायसंयताः ॥७॥ रुद्रलोकमनुप्राप्य न निवर्तंति ते पुनः ॥ तस्मादेतद्व्रतं दिव्यमव्यक्तं व्यक्तलिंगिनः ॥ ८ ॥ भस्मव्रताश्च मुंडाश्च व्रतिनो विश्वरूपिणः ॥ न तान्परिवदेद्विद्वान्न चैतान्नाभिलंघयेत् ॥९॥ न हसेन्नाप्रियं ब्रूयादमुत्रेह हितार्थवान्॥यस्तान्निंदति मूढात्मा महादेवं स निंदति ॥१०॥ यस्त्वेतान्पूजयेन्नित्यं स पूजयति शंकरम् ॥ एवमेष महादेवो लोकानां हितकाम्यया ॥११॥ युगेयुगे महायोगी क्रीडते भस्मगुण्ठितः ॥ एवं चरत भद्रं वस्ततः सिद्धिमवाप्स्यथ॥१२॥अतुलमिह महाभयप्रणाशहेतुं शिवकथितं परमं पदं विदित्वा॥ व्यपगतभवलोभमोहचित्ताः प्रणिपतिताः सहसा शिरोभिरुग्रम्॥१३॥ततः प्रमुदिता विप्राः श्रुत्वैवं कथितं तदा॥ गंधोदकैः सुशुद्धैश्च कुशपुष्पविमिश्रितैः॥१४ ॥ स्नापयंति महाकुंभैरद्भिरेव महेश्वरम् ॥ गायंति विविधैर्गुह्यैर्हुंकारैश्चापि सुस्वरैः ॥१५॥ नमो देवाधिदेवाय महादेवाय वै नमः ॥ अर्धनारीशरीराय सांख्ययोगप्रवर्तिने ॥१६॥मेघवाहनकृष्णाय गजचर्मनिवासिने ॥ कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने॥ १७ ॥सुरचितसुविचित्रकुंडलाय सुरचितमाल्यविभूषणाय तुभ्यम् ॥ मृगपतिवरचर्मवाससे च प्रथितयशसे नमोऽस्तु शंकराय॥१८॥ततस्तान्स मुनीन्प्रीतः प्रत्युवाच महेश्वरः॥प्रीतोऽस्मि तपसा युष्मान्वरं वृणुत सुव्रताः॥१९॥ततस्ते मुनयः सर्वे प्रणिपत्य महेश्वरम् ॥ भृग्वंगिरा वसिष्ठश्च विश्वामित्रस्तथैव च ॥२०॥ गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ॥ मरीचिः कश्यपः कण्वः संवर्तश्च महातपाः ॥२१॥ ते प्रणम्य महादेवमिदं वचनमब्रुवन् ॥ भस्मस्नानं च नग्नत्वं वामत्वं प्रतिलोमता ॥ २२ ॥

थेत्यन्वयः ॥ १२ ॥ १३ ॥ १४ ॥ गुह्यैस्तोत्रैरिति शेषः ॥ १५ ॥ १६ ॥ मेघेन मेघरूपेण वाहनं कृष्णो विष्णुर्यस्यासौ मेघवाहनकृष्णः तस्मै । धान्येन धनवानितिवत्समासघटकमेव शब्दादभेदे तृतीया ॥ १७॥१८॥१९॥२०॥२१॥ ते भृग्वादयः भस्मस्नानं भस्मना देहशौचं नग्नत्वं नग्नप्रकारः वामत्वं सव्यमार्गप्रकारः " वामः सव्ये प्रतिपथम् " इति

विश्वः । प्रतिलोमता काम्यकर्ममार्गसेवित्वम् ॥२२॥ एवं पूर्वोक्तचतुष्टयम् असेव्यं च सेव्यं च सेव्यासेव्ये तयोर्भावः प्रकारः । अल्पाच्तरत्वात्सेव्यपदस्य पूर्वनिपातः । सेव्या सेव्यत्वं च वेदितुमिच्छाम इत्यन्वयः ॥२३॥ सस्मितमित्यनेन प्रश्नविषये आदरः सूचितः ॥ २४ ॥ ब्रह्माण्डवस्तुजातशिवगौरीचिह्नचिह्नितं सांब ॥त्वद्रूपमेव सर्वं शोभतु मम मानसं शश्वत् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३॥ चतुस्त्रिंशे महेशोक्तऋषिप्रश्नानुसारतः ॥ भस्मस्नानादिसेव्यत्वप्रकारो हि निरूप्यते॥ भगवानृषिप्रश्नोत्तरं कथयति-एतदित्यादिना । भस्मस्नानादिमाहात्म्यमनेकश्रुत्यादिष्वनेककथाभिरुक्तम् । तासां कथानां सर्वस्वं सारभूतं वै निश्चयेन वः कथयामीत्य

सेव्यासेव्यत्वमेवं च ह्येतदिच्छाम वेदितुम्॥ततस्तेषां वचः श्रुत्वा भगवान्परमेश्वरः॥२३॥सस्मितं प्राह संप्रेक्ष्य सर्वान्मुनिवरांस्तदा॥२४॥

इति श्रीलिंगमहापुराणे पूर्वभागे ऋषिवाक्यं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीभगवानुवाच ॥ एतद्वः संप्रवक्ष्यामि कथा सर्वस्वमद्य वै ॥ अग्निर्ह्यहं सोमकर्ता सोमश्चाग्निमुपाश्रितः ॥ १ ॥ कृतमेतद्वहत्यग्निर्भूयो लोकसमाश्रयात् ॥ असकृत्त्वग्निना दग्धं जगत् स्थावरजंगमम् ॥ २ ॥ भस्मसाद्विहितं सर्वं पवित्रमिदमुत्तमम् ॥ भस्मना वीर्यमास्थाय भूतानि परिषिंचति ॥ ३ ॥ अग्निकार्यं च यः कृत्वा करिष्यति त्रियायुषम् ॥ भस्मना मम वीर्येण मुच्यते सर्वकिल्बिषैः ॥ ४॥ भासतेत्येव यद्भस्म शुभं भावयते च यत् ॥ भक्षणात् सर्वपापानां भस्मेति परिकीर्तितम् ॥५॥ ऊष्मपाः पितरो ज्ञेया देवा वै सोमसंभवाः ॥ अग्नीषोमात्मकं सर्वं जगत्स्थावरजंगमम् ॥ ६ ॥ अहमग्निर्महातेजाः सोमश्चैषा महांबिका ॥ अहमग्निश्च सोमश्च प्रकृत्या पुरुषः स्वयम् ॥ ७ ॥ तस्माद्भस्म महाभागा मद्वीर्यमिति चोच्यते॥ स्ववीर्यं वपुषा चैव धारयामीति वै स्थितिः ॥८॥तदाप्रभृति लोकेषु रक्षार्थमशुभेषु च ॥ भस्मना क्रियते रक्षा सूतिकानां गृहेषु च ॥ ९ ॥ भस्मस्नानविशुद्धात्मा जितक्रोधो जितेन्द्रियः ॥ मत्समीपं समागम्य न भूयो विनिवर्तते ॥ १० ॥ व्रतं पाशुपतं योगं कापिलं चैव निर्मितम् ॥ पूर्वं पाशुपतं ह्येतन्निर्मितं तदनुत्तमम् ॥ ११ ॥

न्वयः । सोमकर्ता सोमकारणः अग्निः अग्निमुपाश्रितः नित्यसंयुक्तः सोमश्चाहमित्यन्वयः ॥ १ ॥ लोकसमाश्रयाद्ब्रह्माण्डाश्रयात्कृतमुत्पन्नमेतत्कर्मफलम् अग्निर्वहति प्रापय तीत्यर्थः । असकृदनेकवारमिदं स्थावरजंगमं जगदग्निना दग्धं भस्मसाद्विहितं सर्वमसंगलवस्तुसहितमिदम् उत्तमं पवित्रं भवतीति शेषमादायाग्रिमेणान्वयः ॥ २ ॥ भस्मना वीर्य सामर्थ्यमास्थाय सोम इति शेषः । भूतानि परिषिंचति उज्जीवयतीत्यर्थः ॥ ३ ॥ अग्निकार्यमग्न्युपासनम् ॥ ४ ॥ भासते भावयते भक्षणादित्यनेन "भासृ दीप्तौ । भू प्राप्तौ । भक्ष भक्षणे" इति धातुत्रयस्य भस्मेति रूपं दर्शितम् ॥५॥६॥७॥८॥९॥१०॥ पाशुपतं व्रतं योगं योगशास्त्रं कापिलं सांख्यशास्त्रं च मयेति शेषः । निर्मितं तयोगिनि शेषः ।

एतद्योगरूपं पाशुपतम् अनुत्तमं तत्तस्मात्कारणात्पूर्वनिर्मितमुत्पादितमित्यर्थः ॥ ११॥ मया स्वयंभुवा ब्रह्मणा सृष्टा सर्जितेत्यर्थः॥१२॥नग्नप्रकारं निरूपयति–नग्ना इत्यादिना । ग्राम्यजनैर्विवासस्त्वरूपं नग्नत्वमुच्यते तादृशा अवाससस्तु देवतादयः सर्वे जायंते प्रादुर्भवंतीत्यर्थः ॥ १३ ॥ पूर्वोक्तं नग्नत्वं शास्त्रीयं न भवतीत्यतः शास्त्रीयं कथयति-इंद्रियैरिति द्वाभ्याम्। एतदेवोक्तं विष्णुपुराणे तृतीयेंशे " ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विज। एतामुज्झति यो मोहात्स नग्नः पातकी स्मृतः॥यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते। परिव्राड्वापि मैत्रेय स नग्नः पापकृन्नरः॥ " इत्यादिना ॥१४॥१५॥सिंहावलोकनन्यायेन पुनश्च भस्ममाहात्म्यं निरूपयति–भस्मेत्यादिना॥१६॥ १७॥ वामसंज्ञकसव्यमार्गप्रकारं कथयति-समाहृत्येत्यादिना। सर्वान् क्रतून्पंचमहायज्ञादीन्वेदविहितान् समाहृत्य कृत्वा उत्तमव्रतं मनःस्वास्थ्यरूपं गृहीत्वा संराद्धेत्यर्थः॥१८॥ लीलासद्भावो लीलाविग्रहः भावितो

शेषाश्चाश्रमिणः सर्वे पश्चात्सृष्टाः स्वयंभुवा ॥ सृष्टिरेषा मया सृष्टा लज्जामोहभयात्मिका ॥ १२ ॥ नग्ना एव हि जायंते देवता मुनयस्तथा ॥ ये चान्ये मानवा लोके सर्वे जायंत्यवाससः ॥ १३ ॥ इंद्रियैरजितैर्नग्नो दुकूलेनापि संवृतः ॥ तैरेव संवृतैर्गुप्तो न वस्त्रं कारणं स्मृतम् ॥ १४ ॥ क्षमा धृतिरहिंसा च वैराग्यं चैव सर्वशः ॥ तुल्यौ मानावमानौ च तदावरणमुत्तमम् ॥ १५ ॥ भस्मस्नानेन दिग्धांगो ध्यायते मनसा भवम् ॥ यद्यकार्यसहस्राणि कृत्वा यः स्नाति भस्मना ॥ १६ ॥ तत्सर्वं दहते भस्म यथाग्निस्तेजसा वनम् ॥ तस्माद्यत्नपरो भूत्वा त्रिकालमपि यः सदा॥१७॥ भस्मना कुरुते स्नानं गाणपत्यं स गच्छति ॥ समाहृत्य क्रतून् सर्वान्गृहीत्वा व्रतमुत्तमम् ॥ ॥ १८ ॥ ध्यायंति ये महादेवं लीलासद्भावभाविताः ॥ उत्तरेणार्यपंथानं तेऽमृतत्वमवाप्नुयुः ॥ १९ ॥ दक्षिणेन च पंथानं ये श्मशानानि भेजिरे ॥ अणिमा गरिमा चैव लघिमा प्राप्तिरेव च ॥ २० ॥ इच्छा कामावसायित्वं तथा प्राकाम्यमेव च ॥ ईशित्वं च वशित्वं च अमरत्वं च ते गताः ॥ २१ ॥ इंद्रादयस्तथा देवाः कामिकव्रतमास्थिताः ॥ ऐश्वर्यं परमं प्राप्य सर्वे प्रथिततेजसः ॥२२ ॥ व्यपगतमदमोहमुक्तरागस्तमरजदोषविवर्जितस्वभावः ॥ परिभवमिदमुत्तमं विदित्वा पशुपतियोगपरो भवेत्सदैव ॥ २३ ॥

यैस्ते लीलासद्भावभाविताः। अमृतत्वं मोक्षम्॥१९॥प्रतिलोमसंज्ञं दक्षिणमार्गप्रकारं कथयति-दक्षिण इत्यादिना। श्मशानानि नाशवंति काम्यकर्माणि भेजिरे सिषिवुः ते अणिमादिसिद्ध्यष्टकम् अमरत्वं देवत्वं च गताः प्राप्ता इत्यग्रिमेणान्वयः॥२०॥२१॥इंद्रादयो देवास्तथा पूर्वोक्तप्रकाराः कामिकव्रतम् आस्थाय प्रथिततेजसः अभवन्निति शेषः॥ २२ ॥ असेव्यत्वसेव्यत्वप्रकारं कथयति-व्यपगत इति। अत्र व्यपगतेत्यनेन मदमोहादीनामसेव्यत्वमुक्त्वा इदं पाशुपतव्रतं परिभूतः भवः संसारो येन तत्परिभवमतएवोत्तमं विदित्वा

' पशुपतियोगपरो भवेत् सदैव ' इत्यनेन तस्यैव सेव्यत्वमुक्तम् । पशुपतिशब्दार्थस्तु रुद्रभाष्ये अहोबलेनोक्तः " ब्रह्माद्याः पशवस्तेषां पतिः पशुपतिः स्मृतः" इति ॥२३॥ भगवान् स्वप्रोक्तमाहात्म्यमाह—इममिति । इमं पूर्वोक्तं पाशुपतं पशुपतिप्रोक्तं ध्यायन्सन् यः पठेच्छृणुयाच्चेत्यन्वयः ॥ २४ ॥ २५ ॥ २६ ॥ शैवमाहात्म्यं कथयति—तस्मादिति ॥ २७ ॥ २८ ॥ दधीचः लोके भूलोके रुद्रभक्त्या देवदेवं नारायणं विष्णुं जित्वा व्यवस्थित इत्यग्रिमस्थैरन्वयः ॥ २९ ॥ ३० ॥ गिरा वाण्या ॥ ३१ ॥ भगवन् भव

इमं पाशुपतं ध्यायन् सर्वपापप्रणाशनम् ॥ यः पठेच्च शुचिर्भूत्वा श्रद्दधानो जितेन्द्रियः ॥२४॥ सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥ ते सर्वे मुनयः श्रुत्वा वसिष्ठाद्या द्विजोत्तमाः ॥ २५ ॥ भस्मपांडुरदिग्धांगा बभूवुर्विगतस्पृहाः ॥ रुद्रलोकाय कल्पान्ते संस्थिताः शिव तेजसा ॥ २६ ॥ तस्मान्न निंद्याः पूज्याश्च विकृता मलिना अपि ॥ रूपान्विताश्च विप्रेन्द्राः सदा योगींद्रशंकया ॥ २७ ॥ बहुना किं प्रलापेन भवभक्ता द्विजोत्तमाः ॥ संपूज्याः सर्वयत्नेन शिववन्नात्र संशयः ॥ २८ ॥ मलिनाश्चैव विप्रेंद्रा भवभक्ता दृढव्रताः ॥ दधीचस्तु यथा देवदेवं जित्वा व्यवस्थितः ॥ २९ ॥ नारायणं तथा लोके रुद्रभक्त्या न संशयः ॥ तस्मात्सर्वप्रयत्नेन भस्मदिग्धतनूरुहाः ॥३०॥ जटिनो मुंडिनश्चैव नग्ना नानाप्रकारिणः ॥ संपूज्याः शिववन्नित्यं मनसा कर्मणा गिरा ॥ ३१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे योगिप्रशंसानाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ सनत्कुमार उवाच ॥ कथं जघान राजानं क्षुपं पादेन सुव्रत ॥ दधीचः समरे जित्वा देवदेवं जनार्दनम् ॥ १ ॥ वज्रास्थित्वं कथं लेभे महादेवान्महातपाः ॥ वक्तुमर्हसि शैलादे जितो मृत्युस्त्वया यथा ॥ २ ॥ शैलादिरुवाच ॥ ब्रह्मपुत्रो महातेजा राजा क्षुप इति स्मृतः ॥ अभून्मित्रो दधीचस्य मुनींद्रस्य जनेश्वरः ॥ ३ ॥ चिरात्तयोः प्रसंगाद्वै वादः क्षुपदधीचयोः ॥ अभवत् क्षत्रियश्रेष्ठो विप्र एवेति विश्रुतः ॥४॥ अष्टानां लोकपालानां वपुर्धारयते नृपः ॥ तस्मादिन्द्रो ह्ययं वह्निर्यमश्च निर्ऋतिस्तथा ॥ ५ ॥ वरुणश्चैव वायुश्च सोमो धनद एव च ॥ ईश्वरोहं न संदेहो नावमंतव्य एव च ॥ ६ ॥

मोचकेऽतिशस्ते मुनिवृंदैरनिशं हि सेव्यमाने । त्वदुदाहृतपूर्वजे व्रतेऽस्मिन् रमतां ते मम मानसं सदैव ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां चतुस्त्रिंशोऽध्यायः ॥३४॥ पंचत्रिंशे दधीचोऽस्य विवादे क्षुपघातिनः ॥ वज्रदेहं महेशात्तु लब्ध्वा मूर्ध्न्यहनत्क्षुपम् ॥ सनत्कुमारो दधीचवृत्तांतं पृच्छति—कथमिति ॥१॥२॥३॥४॥५॥६॥

महतोपि वर्णश्रेष्ठब्राह्मणस्यापि महती या देवता विष्णुसंज्ञा सा अहम् । तदुक्तं भगवद्गीतायाम्—'नराणां च नरेंद्रोहम्' इति 'ना विष्णुः पृथिवीपतिः' इत्युक्तेश्च । तस्मात्त्वया नाव मंतव्य इत्यग्रिमेणान्वयः॥७–९॥वज्रिणा इंद्रेण कार्यार्थमसुरपराजयार्थं चोदितः प्रेरितः वज्रं लब्धं तेनासीदिति शेषः॥१०–१२॥ शुक्रोपि योगादेत्य योगगत्या प्राप्य कुलिशेन ताडितं तं दधीचस्य देहं संधयामास संधितं चकारेत्यन्वयः ॥१३–१७॥ मृतसंजीवकमंत्रं विवृणोति–त्रियंबकमिति । त्रैलोक्यपितरमित्यनेनांबकशब्दस्य पितृरूपोर्थो दर्शितः अयमेव त्रयाणां लोकानामबंकः पितेति अमरकोशव्याख्यायामुक्तः । अन्यानपि त्रिशब्दवाच्यार्थान् दर्शयति–त्रिमंडलस्येत्यादिना । त्रिमंडलस्य सोमाग्निसूर्यरूपस्य त्रिगुणस्य

महती देवता या सा महतश्चापि सुव्रत ॥ तस्मात्त्वया महाभाग च्यावनेय सदा ह्यहम् ॥ ७ ॥ नावमन्तव्य एवेह पूजनीयश्च सर्वथा ॥ श्रुत्वा तथा मतं तस्य क्षुपस्य मुनिसत्तमः ॥ ८ ॥ दधीचश्च्यावनिश्चोग्रो गौरवादात्मनो द्विजः ॥ अताडयत्क्षुपं मूर्ध्नि दधीचो वाम मुष्टिना ॥ चिच्छेद वज्रेण च तं दधीचं बलवान् क्षुपः ॥ ९ ॥ ब्रह्मलोके पुरासौ हि ब्रह्मणः क्षुतसंभवः ॥ लब्धं वज्रं च कार्यार्थं वज्रिणा चोदितः प्रभुः ॥ १० ॥ स्वेच्छयैव नरो भूत्वा नरपालो बभूव सः ॥ तस्माद्राजा स विप्रेन्द्रमजयद्वै महाबलः ॥ ११ ॥ यथा वज्रधरः श्रीमान्बलवांस्तमसान्वितः ॥ पपात भूमौ निहतो वज्रेण द्विजपुंगवः ॥ १२ ॥ सस्मार च तदा तत्र दुःखाद्वै भार्गवं मुनिम् ॥ शुक्रोपि संधयामास ताडितं कुलिशेन तम् ॥ १३ ॥ योगादेत्य दधीचस्य देहं देहभृतांवरः ॥ संधाय पूर्ववद्देहं दधीचस्याह भार्गवः ॥ १४ ॥ भो दधीच महाभाग देवदेवमुमापतिम् ॥ संपूज्य पूज्यं ब्रह्माद्यैर्देवदेवं निरंजनम् ॥ १५ ॥ अवध्यो भव विप्रर्षे प्रसादात्त्र्यम्बकस्य तु ॥ मृत संजीवनं तस्माल्लब्धमेतन्मया द्विज ॥ १६ ॥ नास्ति मृत्युभयं शंभोर्भक्तानामिह सर्वतः ॥ मृतसंजीवनं चापि शैवमद्य वदामि ते ॥ ॥ १७ ॥ त्रियंबकं यजामहे त्रैलोक्यपितरं प्रभुम् ॥ त्रिमंडलस्य पितरं त्रिगुणस्य महेश्वरम् ॥ १८ ॥ त्रितत्त्वस्य त्रिवह्नेश्च त्रिधाभूतस्य सर्वतः ॥ त्रिवेदस्य महादेवं सुगंधिं पुष्टिवर्धनम् ॥ १९॥ सर्वभूतेषु सर्वत्र त्रिगुणे प्रकृतौ तथा ॥ इंद्रियेषु तथाऽन्येषु देवेषु च गणेषु च ॥ २० ॥ पुष्पेषु गंधवत्सूक्ष्मः सुगंधिः परमेश्वरः ॥ पुष्टिश्च प्रकृतिर्यस्मात्पुरुषस्य द्विजोत्तम ॥ २१ ॥

सत्त्वरजस्तमोरूपस्येत्यर्थः॥१८॥त्रितत्त्वस्य बुद्ध्यहंकारमनोरूपस्य । त्रिवह्नेर्गार्हपत्याहवनीयदाक्षिणाग्निरूपस्येत्यर्थः । सर्वतः सर्वास्मिन् त्रिधाभूतस्य त्रिप्रकारस्येत्यर्थः । त्रिदेवस्य ब्रह्मविष्णुरुद्ररूपस्येत्यर्थः । सर्वत्र अंबकस्येत्यस्यान्वयः । सुगंधिं पुष्टिवर्धनमिदं मंत्रप्रतीकग्रहणम् ॥ १९ ॥ गंधाधिकरणानि निरूपयति–सर्वभूतेष्वित्यादिना । सर्वत्र सर्वदेश कालेष्वित्यर्थः॥२०॥ पुष्पेषु पुष्परूपाधिकरणेषु गंधवत् गंधसदृशः सूक्ष्मोऽपृथक्त्वेन भासमानः शोभनो गंधो लेशः आमोदः संबंधो वा यस्येति सुगंधिः। अत्र "गंधस्येदुत्पूति"

इतिसूत्रविहित इकारः समासांतः । "गंधो गंधक आमोदे लेशे संबन्धगर्वयोः" इति विश्वः । तथा च गंधः पुष्पेषु यथा घ्राणमात्रग्राह्यस्तद्वत्परमेश्वरः सर्वत्र शुद्धमनोमात्रग्राह्य इत्यर्थः । पुरुषस्य परमेश्वरस्य पुष्टिश्च पुष्टिरेव प्रकृतिः । अवधारणे चकारः॥२१॥महदादिविशेषांतविकल्पस्य मायाभ्रमस्येत्यर्थः । महामुने इदं सनत्कुमारसंबोधनम् ॥२२॥ पूर्वोक्तविकल्पमारभ्य देवांतानां तस्मात्कारणाद्वै निश्चयेन पुष्ट्या प्रकृत्या वर्धयति वृद्धिं प्रापयतीति पुष्टिवर्धनस्तं स्तुत्यममृतं देवं नाशशून्यमनेन अमृतादिति मंत्रस्था पंचमी द्वितीयार्थेऽवगम्या । रुद् अज्ञानं द्रावयतीति रुद्रस्तं कर्मणा पूजनयजनादिना तपसाऽनशनादिनेत्यर्थः ॥ २३ ॥ स्वाध्यायेन वेदाद्यध्ययनेन योगेन समाधिना ध्यानेन चिंतनेन यजामहे पूजयामो वा संगतं कुर्मो वा संप्रदानं कुर्म इत्यर्थः । 'यज देवपूजासंगतिकरणदानेषु' इत्युक्तत्वात् । अनेन पूर्वोक्तेन सत्येन सत्याश्रयणेन स्वयं भवोपि भवसंज्ञोपि मृत्युपाशाज्जन्ममरणबन्धनान्मुक्षीयान्मोचयत्वित्यर्थः । अत्र प्रार्थनायां लिङ् । तदुक्तमुपमन्युना 'भव एव भवांतकः सताम्' इति ॥२४॥ बन्धमोक्षे दृष्टांतं दर्शयति—उर्वारुक

महदादिविशेषांतविकल्पस्यापि सुव्रत॥ विष्णोः पितामहस्यापि मुनीनां च महामुने॥२२॥ इन्द्रस्यापि च देवानां तस्माद्वै पुष्टिवर्धनः ॥तं देवममृतं रुद्रं कर्मणा तपसा तथा॥२३॥स्वाध्यायेन च योगेन ध्यानेन च यजामहे॥ सत्येनानेन मुक्षीयान्मृत्युपाशाद्भवः स्वयम्॥२४॥ बंधमोक्षकरो यस्मादुर्वारुकमिव प्रभुः॥ मृतसंजीवनो मंत्रो मया लब्धस्तु शंकरात्॥२५॥जप्त्वा हुत्वाभिमंत्र्यैवं जलं पीत्वा दिवानिशम्॥ लिंगस्य सन्निधौ ध्यात्वा नास्ति मृत्युभयं द्विज ॥ २६ ॥ तस्य तद्वचनं श्रुत्वा तपसाराध्य शंकरम् ॥ वज्रास्थित्वमवध्यत्वमदीनत्वं च लब्धवान् ॥ २७ ॥ एवमाराध्य देवेशं दधीचो मुनिसत्तमः॥ प्राप्यावध्यत्वमन्यैश्च वज्रास्थित्वं प्रयत्नतः ॥ २८ ॥ अताडयच्च राजेंद्रं पादमूलेन मूर्धनि ॥ क्षुपो दधीचं वज्रेण जघानोरसि च प्रभुः ॥ २९ ॥ नाभून्नाशाय तद्वज्रं दधीचस्य महात्मनः ॥ प्रभावात्परमेशस्य वज्रबद्धशरीरिणः ॥ ३० ॥ दृष्ट्वाप्यवध्यत्वमदीनतां च क्षुपो दधीचस्य तदा प्रभावम् ॥ आराधयामास हरिं मुकुंदमिन्द्रानुजं प्रेक्ष्य तदांबुजाक्षम् ॥ ३१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे क्षुपाभिधनृपपराभववर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

मिवेति । अनेनोर्वारुकं सूर्यकिरणसंयोगात्पक्वं सत् स्वयमेव बन्धनान्मूलबन्धान्मुच्यते तद्वच्छिवसंगत्याऽज्ञानहृदयग्रंथिभेदे सति मोक्षो भवतीति सूचितम् । तदुक्तं शिवगीतायाम् "भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि॥" इति । मृतसंजीवनो मन्त्रो मया शंकराल्लब्ध इत्यनेन केवलमंत्रजपाच्छिवकृपां विना मृतसंजीवकत्वं न भवतीति बोधितम् ॥ २५ ॥ मन्त्रविधानं कथयति—जप्त्वेति ॥२६॥ २७ ॥ २८॥ राजेंद्रं क्षुपम् ॥२९॥३०॥ दधीचस्यावध्यत्वमदीनतां प्रभावं सामर्थ्यं च दृष्ट्वा हरिं भयहारकं मुकुंदं मुक्तिदमिंद्रानुजमेतादृशं प्रेक्ष्य विचार्य अंबुजाक्षं विष्णुं तदा आराधयामास आराधितवानित्यर्थः ॥ ३१ ॥ उर्वारुकमिव बन्धान्मोचनहेतुं त्रियंबकं सांबम् । हृदि भावयामि नित्यं दधीचवरदं विवर्धनं पुष्ट्या ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां क्षुपपराभवो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

षड्विंशेऽस्मिन्क्षुपकृतं वैष्णवं स्तोत्रमुच्यते ॥ विष्णोर्देवगणैर्युद्धे दधीचाच्च पराभवः ॥ नन्दी शैलादिः दधीचवृत्तांतं कथयति—पूजयेत्यादिना । तस्य क्षुपस्येत्यर्थः ॥ १ ॥ देवैरिंद्रादिभिर्दैत्यैः प्रह्लादादिभिः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ भूतादिरहंकारः ॥ ९ ॥ १० ॥ ११ ॥ प्रकृष्टं द्युम्नं बलं धनं वा यस्मादसौ प्रद्युम्नः तत्संबुद्धिः ।

नंद्युवाच ॥ पूजया तस्य संतुष्टो भगवान्पुरुषोत्तमः ॥ श्रीभूमिसहितः श्रीमाञ्शंखचक्रगदाधरः ॥ १ ॥ किरीटी पद्महस्तश्च सर्वाभरणभूषितः ॥ पीतांबरश्च भगवान्देवैर्दैत्यैश्च संवृतः ॥ २ ॥ प्रददौ दर्शनं तस्मै दिव्यं वै गरुडध्वजः ॥ दिव्येन दर्शनेनैव दृष्ट्वा देवं जनार्दनम् ॥ ३ ॥ तुष्टाव वाग्भिरिष्टाभिः प्रणम्य गरुडध्वजम् ॥ त्वमादिस्त्वमनादिश्च प्रकृतिस्त्वं जनार्दनः ॥ ४ ॥ पुरुषस्त्वं जगन्नाथो विष्णुर्विश्वेश्वरो भवान् ॥ योयं ब्रह्मासि पुरुषो विश्वमूर्तिः पितामहः ॥ ५ ॥ तत्त्वमाद्यं भवानेव परं ज्योतिर्जनार्दन ॥ परमात्मा परंधाम श्रीपते भूपते प्रभो ॥ ६ ॥ त्वत्क्रोधसंभवो रुद्रस्तमसा च समावृतः ॥ त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥७॥ त्वत्प्रसादात्स्वयं विष्णुः सत्त्वेन पुरुषोत्तमः ॥ कालमूर्ते हरे विष्णो नारायण जगन्मय ॥ ८ ॥ महांस्तथा च भूतादिस्तन्मात्राणीन्द्रियाणि च ॥ त्वयैवाधिष्ठितान्येव विश्वमूर्ते महेश्वर ॥ ९ ॥ महादेव जगन्नाथ पितामह जगद्गुरो ॥ प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ १० ॥ प्रसीद त्वं जगन्नाथ शरण्यं शरणं गतः ॥ वैकुंठ शौरे सर्वज्ञ वासुदेव महाभुज ॥ ११ ॥ संकर्षण महाभाग प्रद्युम्न पुरुषोत्तम ॥ अनिरुद्ध महाविष्णो सदा विष्णो नमोस्तु ते ॥ १२ ॥ विष्णो तवासनं दिव्यमव्यक्तं मध्यतो विभुः ॥ सहस्रफणसंयुक्तस्तमोमूर्तिर्धराधरः ॥ १३ ॥ अधश्च धर्मो देवेश ज्ञानं वैराग्यमेव च ॥ ऐश्वर्यमासनस्यास्य पादरूपेण सुव्रत ॥ १४ ॥ सप्तपातालपादस्त्वं धराजघनमेव च ॥ वासांसि सागराः सप्त दिशश्चैव महाभुजाः ॥ १५ ॥ द्यौर्मूर्धा ते विभो नाभिः खं वायुर्नासिकां गतः ॥ नेत्रे सोमश्च सूर्यश्च केशा वै पुष्करादयः ॥ १६ ॥ नक्षत्रतारका द्यौश्च ग्रैवेयकविभूषणम् ॥ कथं स्तोष्यामि देवेशं पूज्यश्च पुरुषोत्तमः ॥ १७ ॥ श्रद्धया च कृतं दिव्यं यच्छ्रुतं यच्च कीर्तितम् ॥ यदिष्टं तत्क्षमस्वेश नारायण नमोस्तु ते ॥ १८ ॥

न निरुद्धोऽनिरुद्धः । कुतोपि निरोधमप्राप्त इत्यर्थः ॥ १२ ॥ अव्यक्तं प्रकृतिः मध्यतः क्षीरार्णवमध्ये धराधरः शेषः ॥१३॥१४॥१५॥ पुष्करादयः मेघा इत्यर्थः ॥ १६ ॥ ग्रैवेयकविभूषणं कंठभूषणं मया त्वामिति शेषः । कथं पूज्य इत्यन्वयः ॥ १७ ॥ १८ ॥

शैलादिः स्तोत्रफलश्रुतिं वर्णयति–इदमिति सार्धेन ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

शैलादिरुवाच ॥ इदं तु वैष्णवं स्तोत्रं सर्वपापप्रणाशनम् ॥ यः पठेच्छृणुयाद्वापि क्षुपेण परिकीर्तितम् ॥ १९ ॥ श्रावयेद्वा द्विजान् भक्त्या विष्णुलोकं स गच्छति ॥ २० ॥ संपूज्य चैवं त्रिदशेश्वराद्यैः स्तुत्वा स्तुतं देवमजेयमीशम् ॥ विज्ञापयामास निरीक्ष्य भक्त्या जनार्दनाय प्रणिपत्य मूर्ध्ना ॥ २१ ॥ राजोवाच ॥ भगवन्ब्राह्मणः कश्चिद्दधीच इति विश्रुतः ॥ धर्मवेत्ता विनीतात्मा सखा मम पुराभवत् ॥ २२ ॥ अवध्यः सर्वदा सर्वैः शंकरार्चनतत्परः ॥ सावज्ञं वामपादेन स मां मूर्ध्नि सदस्यथ ॥ २३ ॥ ताडयामास देवेश विष्णो विश्वजगत्पते ॥ उवाच च मदाविष्टो न बिभेमीति सर्वतः ॥२४॥ जेतुमिच्छामि तं विप्रं दधीचं जगदीश्वर ॥ यथा हितं तथा कर्तुं त्वमर्हसि जनार्दन ॥२५॥ शैलादिरुवाच ॥ ज्ञात्वा सोपि दधीचस्य ह्यवध्यत्वं महात्मनः ॥ सस्मार च महेशस्य प्रभावमतुलं हरिः ॥ २६ ॥ एवं स्मृत्वा हरिः प्राह ब्रह्मणः क्षुतसंभवम् ॥ विप्राणां नास्ति राजेंद्र भयमेत्य महेश्वरम् ॥ २७ ॥ विशेषाद्रुद्रभक्तानामभयं सर्वदा नृप ॥ नीचानामपि सर्वत्र दधीचस्यास्य किं पुनः ॥ २८ ॥ तस्मात्तव महाभाग विजयो नास्ति भूपते ॥ दुःखं करोमि विप्रस्य शापार्थं ससुरस्य मे ॥ २९ ॥ भविता तस्य शापेन दक्षयज्ञे सुरैः समम् ॥ विनाशो मम राजेंद्र पुनरुत्थानमेव च ॥ ३० ॥ तस्मात्समेत्य विप्रेंद्रं सर्वयत्नेन भूपते ॥ करोमि यत्नं राजेंद्र दधीचविजयाय ते ॥ ३१ ॥ शैलादिरुवाच ॥ श्रुत्वा वाक्यं क्षुपः प्राह तथास्त्विति जनार्दनम् ॥ भगवानपि विप्रस्य दधीचस्याश्रमं ययौ ॥ ३२ ॥ आस्थाय रूपं विप्रस्य भगवान् भक्तवत्सलः ॥ दधीचमाह ब्रह्मर्षिमभिवंद्य जगद्गुरुः ॥ ३३ ॥ श्रीभगवानुवाच ॥ भोभो दधीच ब्रह्मर्षे भवार्चनरताव्यय ॥ वरमेकं वृणे त्वत्तस्तं भवान्दातुमर्हति॥३४॥ याचितो देवदेवेन दधीचः प्राह विष्णुना॥ ज्ञातं तवेप्सितं सर्वं न बिभेमि तवाप्यहम् ॥ ३५ ॥ भवान् विप्रस्य रूपेण आगतोसि जनार्दन ॥ भूतं भविष्यं देवेश वर्तमानं जनार्दन ॥३६॥ ज्ञातं प्रसादाद्रुद्रस्य द्विजत्वं त्यज सुव्रत ॥ आराधितोसि देवेश क्षुपेण मधुसूदन ॥३७॥ जाने तवैनां भगवन्भक्तवत्सलतां हरे ॥ स्थाने तवैषा भगवन्भक्तवात्सल्यता हरे ॥ ३८॥ अस्ति चेद्भगवन् भीतिर्भवार्चनरतस्य मे ॥ वक्तुमर्हसि यत्नेन वरदांबुजलोचन ॥३९॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ स्थाने युक्तं इत्यर्थः ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ त्रिशूलेनेति शेषः । युगांताग्निरिवापरः युगांताग्निसदृशो

वदामि न मृषा तस्मान्न बिभेमि जनार्दन ॥ न बिभेमि जगत्यस्मिन् देवदैत्यद्विजादपि ॥ ४० ॥ नंद्युवाच ॥ श्रुत्वा वाक्यं दधीचस्य तदास्थाय जनार्दनः॥ स्वरूपं सस्मितं प्राह संत्यज्य द्विजतां क्षणात् ॥४१॥ श्रीभगवानुवाच ॥ भयं दधीच सर्वत्र नास्त्येव तव सुव्रत ॥ भवार्चनरतो यस्माद्भवान् सर्वज्ञ एव च ॥४२॥ बिभेमीति सकृद्वक्तुं त्वमर्हसि नमस्तव ॥ नियोगान्मम विप्रेंद क्षुपं प्रति सदस्यथ ॥४३॥ एवं श्रुत्वापि तद्वाक्यं सांत्वं विष्णोर्महामुनिः ॥ न बिभेमीति तं प्राह दधीचो देवसत्तमम् ॥ ४४ ॥ प्रभावाद्देवदेवस्य शंभोः साक्षात्पिनाकिनः ॥ शर्वस्य शंकरस्यास्य सर्वज्ञस्य महामुनिः ॥ ४५ ॥ ततस्तस्य मुनेः श्रुत्वा वचनं कुपितो हरिः ॥ चक्रमुद्यम्य भगवान्दिधक्षुर्मुनिसत्तमम् ॥ ४६ ॥ अभवत्कुंठिताग्रं हि विष्णोश्चक्रं सुदर्शनम् ॥ प्रभावाद्धि दधीचस्य क्षुपस्यैव हि सन्निधौ ॥ ४७ ॥ दृष्ट्वा तत्कुंठिताग्रं हि चक्रं चक्रिणमाह सः ॥ दधीचः सस्मितं साक्षात्सदसद्व्यक्तिकारणम् ॥ ४८ ॥ भगवन् भवता लब्धं पुरातीव सुदारुणम् ॥ सुदर्शनमिति ख्यातं चक्रं विष्णो प्रयत्नतः॥४९॥ भवस्यैतच्छुभं चक्र न जिघांसति मामिह ॥ ब्रह्मास्त्राद्यैस्तथान्यैर्हि प्रयत्नं कर्तुमर्हसि॥५०॥ शैलादिरुवाच ॥ तस्य तद्वचनं श्रुत्वा दृष्ट्वा निर्वीर्यमायुधम् ॥ ससर्ज च पुनस्तस्मै सर्वास्त्राणि समंततः॥५१॥ चक्रुर्देवास्ततस्तस्य विष्णोः साहाय्यमव्ययाः ॥ द्विजेनैकेन योद्धुं हि प्रवृत्तस्य महाबलाः ॥ ५२ ॥ कुशमुष्टिं तदादाय दधीचः संस्मरन्भवम् ॥ ससर्ज सर्वदेवेभ्यो वज्रास्थिः सर्वतो वशी ॥ ५३ ॥ दिव्यं त्रिशूलमभवत्कालाग्निसदृशप्रभम् ॥ दग्धुं देवान्मतिं चक्रे युगांताग्निरिवापरः ॥५४॥ इंद्रनारायणाद्यैश्च देवैस्त्यक्तानि यानि तु ॥ आयुधानि समस्तानि प्रणेमुस्त्रिशिखं मुने ॥ ५५ ॥ देवाश्च दुद्रुवुः सर्वे ध्वस्तवीर्या द्विजोत्तम ॥ ससर्ज भगवान् विष्णुः स्वदेहात्पुरुषोत्तमः ॥५६॥ आत्मनः सदृशान्दिव्यांल्लक्षलक्षायुतान् गणान् ॥ तानि सर्वाणि सहसा ददाह मुनिसत्तमः ॥ ५७ ॥ ततो विस्मयनार्थाय विश्वमूर्तिरभूद्धरिः ॥ तस्य देहे हरेः साक्षादपश्यद्द्विजसत्तमः ॥५८॥ दधीचो भगवान्विप्रः देवतानां गणान् पृथक् ॥ रुद्राणां कोटयश्चैव गणानां कोटयस्तदा ॥ ५९ ॥

दधीचः देवान् दग्धुं मतिं चक्रे इत्यन्वयः ॥ ५४ ॥ ५५ ॥ ५६ ॥ तानि विष्णुनिर्मितरूपाणि ॥ ५७ ॥ ५८ ॥ ५९ ॥

विस्मितमिदं क्रियाविशेषणम् ॥ ६० ॥ अंभसा तीर्थोदकेन तं विश्वरूपं विष्णुम् अभ्युक्ष्य सिक्त्वा आहेत्यन्वयः ॥६१॥ विज्ञानानां मायानाम् ॥६२॥६३॥६४॥६५॥६६॥

अंडानां कोटयश्चैव विश्वमूर्तेस्तनौ तदा ॥ दृष्ट्वैतदखिलं तत्र च्यावनिर्विस्मितं तदा ॥ ६० ॥ विष्णुमाह जगन्नाथं जगन्मयमजं विभुम् ॥ अंभसाभ्युक्ष्य तं विष्णुं विश्वरूपं महामुनिः ॥ ६१ ॥ मायां त्यज महाबाहो प्रतिभाता विचारतः ॥ विज्ञानानां सहस्राणि दुर्विज्ञेयानि माधव ॥ ६२ ॥ मयि पश्य जगत्सर्वं त्वया सार्धमनिन्दित ॥ ब्रह्माणं च तथा रुद्रं दिव्यां दृष्टिं ददामि ते ॥ ६३ ॥ इत्युक्त्वा दर्शयामास स्वतनौ निखिलं मुनिः ॥ तं प्राह च हरिं देवं सर्वदेवभवोद्भवम् ॥ ६४ ॥ मायया ह्यनया किं वा मंत्रशक्त्याथ वा प्रभो ॥ वस्तुशक्त्याथ वा विष्णो ध्यानशक्त्याथ वा पुनः ॥ ६५ ॥ त्यक्त्वा मायामिमां तस्माद्योद्धुमर्हसि यत्नतः ॥ एवं तस्य वचः श्रुत्वा दृष्ट्वा माहात्म्यमद्भुतम् ॥ ६६ ॥ देवाश्च दुद्रुवुर्भूयो देवं नारायणं च तम् ॥ वारयामास निश्चेष्टं पद्मयोनिर्जगद्गुरुः ॥ ६७ ॥ निशम्य वचनं तस्य ब्रह्मणस्तेन निर्जितः ॥ जगाम भगवान् विष्णुः प्रणिपत्य महामुनिम् ॥ ६८ ॥ क्षुपो दुःखातुरो भूत्वा संपूज्य च मुनीश्वरम् ॥ दधीचमभिवंद्याशु प्रार्थयामास विक्लवः ॥ ६९ ॥ दधीच क्षम्यतां देव मयाऽज्ञानात्कृतं सखे ॥ विष्णुना हि सुरैर्वापि रुद्रभक्तस्य किं तव ॥ ७० ॥ प्रसीद परमेशाने दुर्लभा दुर्जनैर्द्विज ॥ भक्तिर्भक्तिमतां श्रेष्ठ मद्विधैः क्षत्रियाधमैः ॥ ७१ ॥ श्रुत्वानुगृह्य तं विप्रो दधीचस्तपतां वरः ॥ राजानं मुनिशार्दूलः शशाप च सुरोत्तमान् ॥ ७२ ॥ रुद्रकोपाग्निना देवाः सदेवेन्द्रा मुनीश्वरैः ॥ ध्वस्ता भवंतु देवेन विष्णुना च समन्विताः ॥ ७३ ॥ प्रजापतेर्मखे पुण्ये दक्षस्य सुमहात्मनः ॥ एवं शप्त्वा क्षुपं प्रेक्ष्य पुनराह द्विजोत्तमः ॥ ७४ ॥ देवैश्च पूज्या राजेंद्र नृपैश्च विविधैर्गणैः ॥ ब्राह्मणा एव राजेंद्र बलिनः प्रभविष्णवः ॥ ७५ ॥ इत्युक्त्वा स्वोटजं विप्रः प्रविवेश महाद्युतिः ॥ दधीचमभिवंद्यैव जगाम स्वं नृपः क्षयम् ॥ ७६ ॥ तदेव तीर्थमभवत्स्थानेश्वरमिति स्मृतम् ॥ स्थानेश्वरमनुप्राप्य शिवसायुज्यमाप्नुयात् ॥ ७७ ॥ कथितस्तव संक्षेपाद्विवादः क्षुब्दधीचयोः ॥ प्रभावश्च दधीचस्य भवस्य च महामुने ॥ ७८ ॥ य इदं कीर्तयेद्दिव्यं विवादं क्षुब्दधीचयोः ॥ जित्वापमृत्युं देहांते ब्रह्मलोकं प्रयाति सः ॥ ७९ ॥

॥ ६७ ॥ ६८ ॥ विक्लवः विह्वलः ॥ ६९ ॥ ७० ॥ परमेशाने शिवे मद्विधैः क्षत्रियाधमैर्दुर्जनैर्भक्तिर्दुर्लभा दुष्प्रापेत्यर्थः ॥७१–७५॥ स्वं क्षयं स्वगृहम् ॥७६–७९॥

क्षुपदधीचविवादाध्यायद्वयफलश्रुतिं कथयति—य इदमिति द्वाभ्याम् ॥ ८० ॥ यत्पादांबुजसंश्रयाद्धि भगवान्धन्यो दाधीचो मुनिः सद्यो वज्रशरीर एवमभवन्मृत्योर्भयाद्वार्जितः ॥ विष्णुं देवगणैः समागतमसौ जिग्ये क्षुपप्रार्थितं तन्नित्यं शिवया युतस्य चरणांभोजं भजेहं मुदा ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां क्षुपदधीचिसंवादो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ सप्तत्रिंशे कुमारेण पृष्टः शैलादिरादरात् ॥ स्वोद्भवं कथयन् पित्रे शक्रप्रोक्तमवर्णयत् ॥ सनत्कुमारः शैलादिं प्रति तद्वृत्तांतं पृच्छति—

य इदं कीर्त्य संग्रामं प्रविशेत्तस्य सर्वदा ॥ नास्ति मृत्युभयं चैव विजयी च भविष्यति ॥ ८० ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे क्षुपदधीचिसंवादो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ सनत्कुमार उवाच ॥ भवान्कथमनुप्राप्तो महादेवमुमापतिम् ॥ श्रोतुमिच्छामि तत्सर्वं वक्तुमर्हसि मे प्रभो ॥१॥ शैलादिरुवाच॥ प्रजाकामः शिलादोभूत्पिता मम महामुने ॥ सोऽन्धः सुचिरं कालं तपस्तेपे सुदुश्चरम् ॥२ ॥ तपतस्तस्य तपसा संतुष्टो वज्रधृक् प्रभुः॥ शिलादमाह तुष्टोस्मि वरयस्व वरानिति ॥३॥ ततः प्रणम्य देवेशं सहस्राक्षं सहामरैः॥ प्रोवाच मुनिशार्दूल कृतांजलिपुटो हरिम् ॥ ४ ॥ शिलाद उवाच ॥ भगवन्देवतारिघ्न सहस्राक्ष वरप्रद ॥ अयोनिजं मृत्युहीनं पुत्रमिच्छामि सुव्रत ॥५॥ शक्र उवाच ॥ पुत्रं दास्यामि विप्रर्षे योनिजं मृत्युसंयुतम् ॥ अन्यथा ते न दास्यामि मृत्युहीना न संति वै ॥ ६॥ न दास्यति सुतं तेऽत्र मृत्युहीनमयोनिजम् ॥ पितामहोपि भगवान्किमुतान्ये महामुने ॥७॥ सोपि देवः स्वयं ब्रह्मा मृत्युहीनो न चेश्वरः ॥ योनिजश्च महातेजाश्चाण्डजः पद्मसंभवः ॥८॥ महेश्वरांगजश्चैव भवान्यास्तनयः प्रभुः ॥ तस्याप्यायुः समाख्यातं परार्धद्वयसंमितम् ॥९॥ कोटिकोटिसहस्राणि अहर्भूतानि यानि वै ॥ समतीतानि कल्पानां तावच्छेषा परत्र ये ॥ १० ॥ तस्मादयोनिजे पुत्रे मृत्युहीने प्रयत्नतः ॥ परित्यजाशां विप्रेंद्र गृहाणात्मसमं सुतम् ॥ ११ ॥ शैलादिरुवाच ॥ तस्य तद्वचनं श्रुत्वा पिता मे लोकविश्रुतः ॥ शिलाद इति पुण्यात्मा पुनः प्राह शचीपतिम् ॥ १२ ॥ शिलाद उवाच ॥ भगवन्नंडयोनित्वं पद्मयोनित्वमेव च ॥ महेश्वरांगयोनित्वं श्रुतं वै ब्रह्मणो मया ॥ १३ ॥ पुरा महेंद्रदायादाद्भदतश्चास्य पूर्वजात् ॥ नारदाद्वै महाबाहो कथमत्राशु नो वद ॥ १४ ॥

भवानिति ॥ १ ॥ २ ॥ ३ ॥ हरिमिन्द्रम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कल्पानां कोटिकोटिसहस्राणि यान्यहर्भूतानि समतीतानि गतानीत्यर्थः। परत्रापरार्धे तावत्तत्संख्याकाः कल्पाः शेषा अवशिष्टा इत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १२ ॥ अस्य ब्रह्मणः पूर्वजाद्दायादात्पूर्वोत्पन्नपुत्रादित्यर्थः ॥ १४ ॥

पद्मोद्भवात्मजः ब्रह्मपुत्रः देवः प्रजापतिर्दक्षः दाक्षायणी दक्षकन्या सापि कनकगर्भस्य ब्रह्मणः पौत्री तस्याः पौत्र्याः विभुर्ब्रह्मा कथं सुतः वृत्त इत्यर्थः ॥ १५ ॥ संशयितुं
पद्मोद्भवात्मजः ब्रह्मपुत्रः देवः प्रजापतिर्दक्षः दाक्षायणी दक्षकन्या सापि कनकगर्भस्य ब्रह्मणः पौत्री तस्याः पौत्र्याः विभुर्ब्रह्मा कथं सुतः वृत्त इत्यर्थः ॥ १५ ॥ संशयितुं

स्थाने युक्तमित्यर्थः । तव कारणं वक्ष्यामीत्यनेन व्यवधानेनोत्तरं सूच्यते । तत्पुरुषे तत्संज्ञककल्पे परमेष्ठिनः ब्रह्मणः परमशिवस्येत्यर्थः । वृत्तं वृत्तांतः आसीदिति शेषः॥१६॥

पोजी कनकगर्भस्य कथं तस्याः सुतो विभुः ॥ १५ ॥ शक्र उवाच ॥ स्थाने संशयितुं
दाक्षायणी सा दक्षोपि देवः पद्मोद्भवात्मजः ॥ ॥ १६ ॥ ससर्ज सकलं ध्यात्वा ब्रह्माणं परमेश्वरः ॥
विप्र तव वक्ष्यामि कारणम् ॥ कल्पे तत्पुरुषे वृत्तं ब्रह्मणः परमेष्ठिनः ॥ १६ ॥ ससर्ज सकलं ध्यात्वा ब्रह्माणं परमेश्वरः ॥
जनार्दनो जगन्नाथः कल्पे वै मेघवाहने ॥ १७ ॥ दिव्यं वर्षसहस्रं तु मेघो भूत्वावहद्धरम् ॥ नारायणो महादेवं बहुमानेन
सादरम् ॥ १८ ॥ दृष्ट्वा भावं महादेवो हरेः स्वात्मनि शंकरः ॥ प्रददौ तस्य सकलं स्रष्टुं वै ब्रह्मणा सह ॥ १९ ॥
तदा तं कल्पमाहुर्वै मेघवाहनसंज्ञया ॥ हिरण्यगर्भस्तं दृष्ट्वा तस्य देहोद्भवस्तदा ॥२०॥ जनार्दनसुतः प्राह तपसा प्राप्य शंकरम् ॥ तव
वामांगजो विष्णुर्दक्षिणांगभवो ह्यहम् ॥२१॥ मया सह जगत्सर्वं तथाप्यसृजदच्युतः ॥ जगन्मयोवहद्यस्मान्मेघो भूत्वा दिवानिशम् ॥२२॥
भवंतमवहद्विष्णुर्देवदेवं जगद्गुरुम् ॥ नारायणादपि विभो भक्तोहं तव शंकर ॥२३॥ प्रसीद देहि मे सर्वं सर्वात्मत्वं तव प्रभो ॥ तदाथ
लब्ध्वा भगवान् भवात्सर्वात्मतां क्षणात् ॥२४॥ त्वरमाणोथ संगम्य ददर्श पुरुषोत्तमम् ॥ एकार्णवालये शुभ्रे त्वन्धकारे सुदारुणे॥२५॥
हेमरत्नचिते दिव्ये मनसा च विनिर्मिते ॥ दुष्प्राप्ये दुर्जनैः पुण्यैः सनकाद्यैरगोचरे ॥ २६ ॥ जगदावासहृदयं ददर्श पुरुषं त्वजः ॥ अनंत
भोगशय्यायां शायिनं पंकजेक्षणम् ॥२७॥ शंखचक्रगदापद्मं धारयन्तं चतुर्भुजम् ॥ सर्वाभरणसंयुक्तं शशिमंडलसन्निभम् ॥२८॥ श्रीवत्स
लक्षणं देवं प्रसन्नास्यं जनार्दनम् ॥ रमामृदुकरांभोजस्पर्शरक्तपदांबुजम् ॥२९॥ परमात्मानमीशानं तमसा कालरूपिणम् ॥ रजसा सर्व
लोकानां सर्गलीलाप्रवर्तकम् ॥३०॥ सत्त्वेन सर्वभूतानां स्थापकं परमेश्वरम् ॥ सर्वात्मानं महात्मानं परमात्मानमीश्वरम् ॥ ३१ ॥

मेघवाहनकल्पवृत्तांतं कथयति—जनार्दन इत्यादिना॥१७॥
पूर्वोक्तवृत्तांतं कथयति—ससर्जेति । परमेश्वरः शिवः सकलं सर्वमुत्पाद्यं ध्यात्वा ब्रह्माणं ससर्ज उत्पादितवानित्यर्थः । मेघवाहनकल्पवृत्तांतं कथयति—जनार्दन इत्यादिना॥१७॥ रमामृदुकरांभोजस्पर्शेन रक्तं पदांबुजमित्यनेनानि
॥१८॥१९॥२०॥२१॥२२॥२३॥ भवाच्छिवात् ॥२४॥२५॥२६॥ जगदावासं वसतिस्थानं हृदयं यस्य तम् ॥२७॥२८॥

सौकुमार्यं सूचितम् ॥२९॥३०॥३१॥३२॥ प्रसादेन शिवकृपया भवान् यथापूर्वं ग्रस्तवानिति शेषः । तथा त्वामहं ग्रसामीत्यन्वयः ॥३३॥३४॥३५॥३६॥३७॥३८॥ ॥३९॥ जगन्नाथः शिवः अंतरधीयत अंतर्धानं कृतवानित्यर्थः ॥ ४० ॥ यत्सेवाविभवात्परस्परभवौ श्रीब्रह्मनारायणौ सर्वज्ञौ जगतां निवासहृदयौ सर्गस्थिती चक्रतुः ॥ तत्सेवा परमेश्वरस्य दयितायुक्तस्य पादांबुजं देवैरिंद्रमुखैः किरीटमणिभिर्दीपालिनीराजितम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

क्षीरार्णवेऽमृतमये शायिनं योगनिद्रया ॥ तं दृष्ट्वा प्राह वै ब्रह्मा भगवन्तं जनार्दनम्॥३२॥ग्रसामि त्वां प्रसादेन यथापूर्वं भवानहम् ॥ स्मयमानस्तु भगवान् प्रतिबुध्य पितामहम्॥३३॥ उदैक्षत महाबाहुः स्मितमीषच्चकार सः॥ विवेश चांडजं तं तु ग्रस्तस्तेन महात्मना ॥३४॥ ततस्तं चासृजद्ब्रह्मा भ्रुवोर्मध्येन चाच्युतम् ॥ सृष्टस्तेन हरिः प्रेक्ष्य स्थितस्तस्याथ सन्निधौ ॥३५॥ एतस्मिन्नंतरे रुद्रः सर्वदेवभवोद्भवः ॥ विकृतं रूपमास्थाय पुरा दत्तवरस्तयोः ॥३६॥ आगच्छद्यत्र वै विष्णुर्विश्वात्मा परमेश्वरः॥प्रसादमतुलं कर्तुं ब्रह्मणश्च हरेः प्रभुः ॥३७॥ ततः समेत्य तौ देवौ सर्वदेवभवोद्भवम् ॥ अपश्यतां भवं देवं कालाग्निसदृशं प्रभुम् ॥३८॥ तौ तं तुष्टुवतुश्चैव शर्वमुग्रं कपर्दिनम् ॥ प्रणेमतुश्च वरदं बहुमानेन दूरतः ॥३९॥ भवोपि भगवान् देवमनुगृह्य पितामहम् ॥ जनार्दनं जगन्नाथस्तत्रैवांतरधीयत ॥४०॥ इति श्रीलिंगमहापुराणे पूर्वभागे ब्रह्मणो वरप्रदानं नाम सप्तत्रिंशोऽध्यायः ॥३७॥ शैलादिरुवाच ॥ गते महेश्वरे देवे तमुद्दिश्य जनार्दनः ॥ प्रणम्य भगवान्प्राह पद्मयोनिमजोद्भवः ॥१॥ श्रीविष्णुरुवाच ॥ परमेशो जगन्नाथः शंकरस्त्वेष सर्वगः ॥ आवयोरखिलस्येशः शरणं च महेश्वरः ॥ २ ॥ अहं वामांगजो ब्रह्मन् शंकरस्य महात्मनः ॥ भवान् भवस्य देवस्य दक्षिणांगभवः स्वयम् ॥३॥ मामाहुर्ऋषयः प्रेक्ष्य प्रधानं प्रकृतिं तथा ॥ अव्यक्तमजमित्येवं भवंतं पुरुषस्त्विति ॥४॥ एवमाहुर्महादेवमावयोरपि कारणम् ॥ ईशं सर्वस्य जगतः प्रभुमव्ययमीश्वरम् ॥ ५ ॥ सोपि तस्यामरेशस्य वचनाद्वारिजोद्भवः ॥ वरेण्यं वरदं रुद्रमस्तुवत्प्रणनाम च ॥ ६ ॥

अष्टत्रिंशे महेशस्य महिमानं जनार्दनः ॥ विधात्रे कथयित्वादौ सर्गं पूर्ववदाकरोत् ॥ शैलादिरग्रिमवृत्तांतं सनत्कुमाराय कथयति—गत इत्यादिना । पद्मयोनिं ब्रह्माणम् अजाद्ब्रह्मणः सकाशादुद्भवः प्रादुर्भावो यस्य सोऽजोद्भवः विष्णुः ॥ १ ॥ विष्णुर्महेश्वरमहिमानं वर्णयति—परमेश इति ॥ २ ॥ ३ ॥ वामांगभवत्त्वान्मांप्रधानं तथा प्रकृतिं भवंतं दक्षिणांगभवत्वादव्यक्तमजं पुरुष इति ऋषयः प्रेक्ष्य विचार्याहुरित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥ ८ ॥ भूधराकृतिः पृथुभूपालस्वरूपः । तदुक्तं भागवते "चूर्णयन् स्वधनुष्कोट्या गिरिकूटानि राजराट् ॥ भूमंडलमिदं वैन्यः प्रायश्चक्रे समं विभुः" ॥ इति । यद्वा भूधरा आकृतिर्यस्यासौ महावराहस्वरूप इत्यर्थः ॥ ९ ॥ मुख्यं वृक्षसर्गं तैर्यग्योन्यं पशुसर्गम् ॥ १० ॥ विभुर्विष्णुः अनुग्रहं पूर्वोक्तविपर्यासादिशक्तिविशिष्टमित्यर्थः । कौमारकं कुमारसर्गम् ॥ ११ ॥ नैष्कर्म्येण ज्ञानयोगेन परं ब्रह्मस्वरूपं गताः प्राप्ता इत्यर्थः ॥१२॥१३॥ एताः पूर्वोक्तमरीच्यादयः अव्यक्तात् प्रकृतिसकाशाज्जन्म यस्यासौ तस्य ब्रह्मणः सर्गकार्यकरत्वात्तत्संज्ञकस्य विष्णोः प्रकर्षेण जायंते याभ्यस्ताः प्रजाः सर्गकरा इत्यर्थः । द्वादशैव द्वादशसंख्याका एवेत्यर्थः । सनातनः विष्णुः ॥१४॥ ब्रह्मणस्तुल्यौ

अथाम्भसा प्लुतां भूमिं समाधाय जनार्दनः ॥ पूर्ववत्स्थापयामास वाराहं रूपमास्थितः ॥ ७ ॥ नदीनदसमुद्रांश्च पूर्ववच्चाकरोत्प्रभुः ॥ कृत्वा चोर्वीं प्रयत्नेन निम्नोन्नतविवर्जिताम् ॥ ८ ॥ धरायां सोचिनोत्सर्वान् भूधरान् भूधराकृतिः ॥ भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्ववत् ॥ ९ ॥ स्रष्टुं च भगवाँश्चक्रे मतिं मतिमतां वरः ॥ मुख्यं च तैर्यग्योन्यं च दैविकं मानुषं तथा ॥ १० ॥ विभुश्चानुग्रहं तत्र कौमारकमदीनधीः ॥ पुरस्तादसृजद्देवः सनन्दं सनकं तथा ॥ ११ ॥ सनातनं सतां श्रेष्ठं नैष्कर्म्येण गताः परम् ॥ मरीचिभृग्वंगिरसं पुलस्त्यं पुलहं क्रतुम् ॥१२॥ दक्षमत्रिं वसिष्ठं च सोसृजद्योगविद्यया ॥ संकल्पं चैव धर्मं च ह्यधर्मं भगवान्प्रभुः ॥१३॥ द्वादशैव प्रजास्त्वेता ब्रह्मणोऽव्यक्तजन्मनः ॥ ऋभुं सनत्कुमारं च ससर्जादौ सनातनः ॥ १४ ॥ तौ चोर्ध्वरेतसौ दिव्यौ चाग्रजौ ब्रह्मवादिनौ ॥ कुमारौ ब्रह्मणस्तुल्यौ सर्वज्ञौ सर्वभाविनौ ॥ १५ ॥ एवं मुख्यादिकान् सृष्ट्वा पद्मयोनिः शिलाशन ॥ युगधर्मानशेषांश्च कल्पयामास विश्वसृक् ॥ १६ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे वैष्णवकथनं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

ब्रह्मसदृशावित्यर्थः । सर्वभाविनौ सर्वव्यापकावित्यर्थः ॥ १५ ॥ पद्मयोनिः पद्मकारणो विष्णुर्विश्वसृग्विश्वसृष्टिकर इत्यर्थः ॥ १६ ॥ गौरीं वामांगरूपाद्विजनयदनघं विष्णुमीड्यं प्रधानं दक्षांगात्पुत्ररूपाद्विधिममलममौ पूरुषं देवदेवः ॥ मध्यात्स्वात्मस्वरूपाद्भवहरममयं चासृजद्रुद्रसंज्ञं तं वंदेहं तुरीयं शिवममृतमयं सच्चिदानंदमीशम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥

एकोनचत्वारिंशेऽस्मिन्युगधर्माश्च वृत्तयः ॥ वेदव्यासः पुराणानां क्रमश्चैव निरूप्यते ॥ शैलादिरग्निमवृत्तांतं सनत्कुमाराय कथयति–श्रुत्वेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ एते कृतादिसंज्ञाः चत्वारश्चतुःसंख्याकाः पुरुषाः समासतः प्रोक्ता इति शेषः ॥५॥ सत्त्वं सत्त्वगुणरूपमित्यर्थः ॥६॥ कृतयुगे ध्यानमीश्वरचिंतनं परं सर्वोत्कृष्टमुच्यते इत्यस्य सर्वत्रान्वयः ॥ ७ ॥ वर्षाणां दिव्यवर्षाणां तावच्छती चतुःशती ॥ ८ ॥ इह भरतखंडे ॥ ९ ॥ सर्वतः सर्वः युगधर्मः पादेन ऊनोऽवशिष्टः पादावशिष्टः । अत्र मध्यमपद

शैलादिरुवाच ॥ श्रुत्वा शक्रेण कथितं पिता मम महामुनिः॥ पुनः पप्रच्छ देवेशं प्रणम्य रचितांजलिः॥ १॥शिलाद उवाच॥ भगवन् शक्र सर्वज्ञ देवदेवनमस्कृत ॥ शचीपते जगन्नाथ सहस्राक्ष महेश्वरः ॥ २ ॥ युगधर्मान्कथं चक्रे भगवान्पद्मसंभवः ॥ वक्तुमर्हसि मे सर्वं सांप्रतं प्रणताय मे ॥ ३ ॥ शैलादिरुवाच ॥ तस्य तद्वचनं श्रुत्वा शिलादस्य महात्मनः ॥ व्याजहार यथादृष्टं युगधर्मं सुविस्तरम् ॥ ४ ॥ शक्र उवाच ॥ आद्यं कृतयुगं विद्धि ततस्त्रेतायुगं मुने ॥ द्वापरं तिष्यमित्येते चत्वारस्तु समासतः ॥ ५ ॥ सत्त्वं कृतं रजस्त्रेता द्वापरं च रजस्तमः ॥ कलिस्तमश्च विज्ञेयं युगवृत्तिर्युगेषु च ॥ ६ ॥ ध्यानं परं कृतयुगे त्रेतायां यज्ञ उच्यते ॥ भजनं द्वापरे शुद्धं दानमेव कलौ युगे ॥ ७ ॥ चत्वारि च सहस्राणि वर्षाणां तत्कृतं युगम् ॥ तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ ८ ॥ चत्वारि च सहस्राणि मानुषाणि शिलाशन ॥ आयुः कृतयुगे विद्धि प्रजानामिह सुव्रत ॥ ९ ॥ ततः कृतयुगे तस्मिन् संध्यांशे च गते तु वै ॥ पादावशिष्टो भवति युगधर्मस्तु सर्वतः ॥ १० ॥ चतुर्भागैकहीनं तु त्रेतायुगमनुत्तमम् ॥ कृतार्धं द्वापरं विद्धि तदर्धं तिष्यमुच्यते ॥ ११ ॥ त्रिशती द्विशती संध्या तथा चैकशती मुने ॥ संध्यांशकं तथाप्येवं कल्पेष्वेवं युगेयुगे ॥ १२ ॥ आद्ये कृतयुगे धर्मश्चतुष्पादः सनातनः ॥ त्रेतायुगे त्रिपादस्तु द्विपादो द्वापरे स्थितः ॥ १३ ॥ त्रिपादहीनस्तिष्ये तु सत्तामात्रेण धिष्ठितः ॥ कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षाद्रसोल्लसा ॥ १४ ॥ प्रजास्तृप्ताः सदा सर्वाः सर्वानंदाश्च भोगिनः ॥ अधमोत्तमता तासां न विशेषाः प्रजाः शुभाः ॥ १५ ॥

लोपः । त्रिपादावस्थित इत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तिष्ये कलियुगारंभे त्रिपादहीन एकपादावशिष्टः तु पुनः तस्यापि ह्रसमानत्वात्सत्तामात्रेण सत्त्वमात्रेण धिष्ठितः अधिष्ठितः इत्यर्थः । अत्र अल्लोपश्छांदसः । मिथुनस्य स्त्रीपुरुषरूपस्य उत्पत्तिर्जननं रसानां मधुरादीनामुल्लसाः प्रादुर्भावा यस्यां सा रसोल्लसा वृत्तिर्जीवनोपायः तथा च प्रजेच्छया अनेकविधरसप्रादुर्भावः इति तात्पर्यम् ॥ १४ ॥ १५ ॥

न द्वंद्वं शीतोष्णादि द्वंद्वाभावः क्लमो ग्लानिः ॥ १६ ॥ १७ ॥ निष्कामचारिण्यो निष्कामकर्मशीलाः शुभपापयोः स्वर्गनरककारणयोः कर्मणोरप्रवृत्तिरासीदिति शेषः ॥ १८ ॥

पर्वतोदधिवासिन्यो ह्यनिकेताश्च ॥ १६ ॥ तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे ॥ तासां प्रीतिर्न च द्वंद्वं न द्वेषो नास्ति च क्लमः ॥ १६ ॥ पर्वतोदधिवासिन्यो ह्यनिकेताश्च यास्तु ताः ॥ विशोकाः सत्त्वबहुला एकांतबहुलास्तथा ॥ १७ ॥ ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः ॥ अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः ॥ १८ ॥ वर्णाश्रमव्यवस्था च तदासीन्न च संकरः ॥ रसोल्लासः कालयोगात्त्रेताख्ये नश्यते द्विज ॥ १९ ॥ तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिः प्रजायते ॥ अपां सौक्ष्म्ये प्रतिगते तदा मेघात्मना तु वै ॥२०॥ मेघेभ्यस्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम् ॥ सकृदेव तथा वृष्ट्या संयुक्ते पृथिवीतले ॥ २१ ॥ प्रादुरासंस्तदा तासां वृक्षास्ते गृहसंज्ञिताः ॥ सर्ववृत्त्युपभोगस्तु तासां तेभ्यः प्रजायते ॥ २२ ॥ वर्तयंति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥ ततः कालेन महता तासामेव विपर्ययात् ॥ २३ ॥ रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥ विपर्ययेण तासां तु तेन तत्कालभाविना ॥ २४ ॥ प्रणश्यंति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥ ततस्तेषु प्रनष्टेषु विभ्रांता मैथुनोद्भवाः ॥ २५ ॥ अपि ध्यायंति तां सिद्धिं सत्याभिध्यायिनस्तदा ॥ प्रादुर्बभूवुस्तासां तु वृक्षास्ते गृहसंज्ञिताः ॥ २६ ॥ वस्त्राणि ते प्रसूयंते फलान्याभरणानि च ॥ तेष्वेव जायते तासां गंधवर्णरसान्वितम् ॥ २७ ॥ अमाक्षिकं महावीर्यं पुटकेपुटके मधु ॥ तेन ता वर्तयंति स्म सुखमायुः सदैव हि ॥ २८ ॥ हृष्टपुष्टास्तया सिद्ध्या प्रजा वै विगतज्वराः ॥ ततः कालांतरेणैव पुनर्लोभावृतास्तु ताः ॥ २९ ॥ वृक्षांस्तान्पर्यगृह्णंति मधु वा माक्षिकं बलात् ॥ तासां तेनोपचारेण पुनर्लोभकृतेन वै ॥ ३० ॥ [illegible]ष्टा मधुना सार्धं कल्पवृक्षाः क्वचित्क्वचित् ॥ तस्यामेवाल्पशिष्टायां सिद्ध्यां कालवशात्तदा ॥ ३१ ॥ आवर्त्तनात्तु त्रेतायां द्वंद्वान्यभ्युत्थितानि वै ॥ शीतवर्षातपैस्तीव्रैस्ततस्ता दुःखिता भृशम् ॥३२॥ द्वंद्वैः संपीड्यमानाश्च चक्रुरावरणानि तु ॥ कृतद्वंद्वप्रतीघाताः केतनानि गिरौ ततः ॥३३॥ पूर्वं निकामचारास्ता ह्यनिकेता अथावसन् ॥ यथायोगं यथाप्रीति निकेतेष्ववसन्पुनः ॥ ३४ ॥ कृत्वा द्वंद्वोपघातांस्तान्वृत्त्युपायमचिंतयन् ॥ नष्टेषु मधुना सार्धं कल्पवृक्षेषु वै तदा ॥ ३५ ॥

रसोल्लासो रसप्रादुर्भावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४॥२५॥२६॥२७॥॥२८॥२९॥३०॥३१॥३२॥३३॥ निकामचाराः स्वेच्छाचाराः ॥ ३४ ॥ ३५ ॥

॥३६॥३७॥३८॥३९॥ अल्पं कृष्टं कर्षणं यासां ता अल्पकृष्टा न उप्ता अनुप्ताः बीजविकरणशून्याः ग्राम्यारण्याश्चतुर्दश चतुर्दशसंख्याका इत्यर्थः । तदुक्तं विष्णुपुराणे " व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ॥ प्रियंगुसप्तमा ह्येता अष्टमास्तु कुलित्थकाः ॥ श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ॥ तथा वेणुयवाः प्रोक्तास्तद्वन्मर्कटका मुने ॥ ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ॥ " अस्यार्थः—एताः प्रियंग्वन्ताः सप्त ग्राम्या इत्यर्थः । नीवारा अरण्यव्रीहयः जर्तिला अरण्यतिलाः गवेधुकाः श्वेतगुंजेति संज्ञया प्रसिद्धाः वेणुयवा वंशबीजानि मर्कटकाः अरण्यप्रियंगव इति ऋतुषु तत्तदृतुषु पुष्पफलानि येषां ते ऋतुपुष्पफलाः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

विवादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधार्दिताः ॥ ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः॥३६॥ वार्तायाः साधिकाप्यन्या वृष्टिस्तासां निकामतः ॥ तासां वृष्ट्युदकादीनि ह्यभवन्निम्नगानि तु॥३७॥अभवन्वृष्टिसंतत्या स्रोतस्थानानि निम्नगाः ॥ एवं नद्यः प्रवृत्तास्तु द्वितीये वृष्टिसर्जने॥३८॥ये पुनस्तदपां स्तोकाः पतिताः पृथिवीतले ॥ अपां भूमेश्च संयोगादोषध्यस्तास्तदाभवन् ॥३९॥ अथाल्पकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश॥ऋतुपुष्पफलाश्चैव वृक्षगुल्माश्च जज्ञिरे॥४०॥प्रादुर्भूतानि चैतानि वृक्षजात्यौषधानि च॥ तेनौषधेन वर्तंते प्रजास्त्रेतायुगे तदा ॥४१॥ ततः पुनरभूत्तासां रागो लोभश्च सर्वशः ॥ अवश्यं भाविनार्थेन त्रेतायुगवशेन च ॥४२॥ ततस्ताः पर्यगृह्णंत नदीक्षेत्राणि पर्वतान् ॥वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम्॥४३॥विपर्ययेण चौषध्यः प्रनष्टास्ताश्चतुर्दश ॥मत्वा धरां प्रविष्टास्ता इत्यौषध्यः पितामहः॥४४॥ दुदोह गां प्रयत्नेन सर्वभूतहिताय वै ॥ तदाप्रभृति चौषध्यः फालकृष्टास्त्वितस्ततः॥४५॥ वार्तां कृषिं समायाता वर्तुकामाः प्रयत्नतः ॥ वार्ता वृत्तिः समाख्याता कृषिकामप्रयत्नतः ॥ ४६ ॥ अन्यथा जीवितं तासां नास्ति त्रेतायुगात्यये ॥ हस्तोद्भवा ह्यपश्चैव भवंति बहुशस्तदा ॥ ४७ ॥ तत्रापि जगृहुः सर्वं चान्योन्यं क्रोधमूर्च्छिताः ॥ सुतदारधनाद्यांस्तु बलाद्युगबलेन तु ॥ ४८ ॥ मर्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः ॥ ससर्ज क्षत्रियांस्त्रातुं क्षतात्कमलसंभवः ॥ ४९ ॥

पितामहो विष्णुः पृथुरूपेणेति शेषः । गां दुदोहेत्यग्रिमेणान्वयः । 'वैन्येन पृथुना भूमेः पुरा दोहप्रवर्तनम्' इत्यनुक्रमणिकाध्याये उक्तत्वात् ॥ ४४ ॥४५॥ वर्तुं जीवितुं कामो यासां ताः वर्तुकामाः प्रजा इत्यर्थः । कृषिं वार्तां कृषिरूपां जीविकां समायाताः प्राप्ताः कृषिकामप्रयत्नतः कृषिकामप्रयत्नः । सार्वविभक्तिकस्तसिः । वार्ता वृत्तिः समाख्याता कथितेत्यर्थः ॥ ४६ ॥ अन्यथा कृषिं विना तासां प्रजानामित्यर्थः । हस्तादेवोद्भवः प्रादुर्भावो यासां ताः हस्तोद्भवाः खनित्रानपेक्षा इत्यर्थः । अप इत्यत्र दीर्घाभावश्छांदसः ॥ ४७ ॥ युगबलेन युगशक्त्या बलाद्धठादित्यर्थः ॥ ४८ ॥ क्षताद्दुःखात्त्रातुं रक्षितुं क्षत्रियान् ससर्जेत्यन्वयः ॥ ४९ ॥

वृत्तेन स्वस्वधर्मेण वृत्तिना जीवनोपायेन वृत्तं जीवनं विश्वात्मा स्वयं निर्ममे इत्यन्वयः ॥ ५० ॥ तत्रापि त्रेतायामपि केचिन्मुमुक्षवः पशुयज्ञं पशुकरणकं यागं न सेवंते इत्यन्वयः । अत्र वर्तमानप्रयोगाच्छुकशिलादसंवादस्त्रेतायाममवदिति भाति । यद्वा 'वर्तमानसामीप्ये वर्तमानवद्वा' इति विहितोत्र लट् ॥ ५१ ॥ तदा त्रेतायुगे ततः पशुयज्ञकारिणः सकाशात् अहिंसकं मुमुक्षया केवलचरुपुरोडाशयाजिनं प्रशंसांति स्तुवंतीत्यर्थः । अनेन कृते सर्वथा हिंसाभावादहिंसकप्रशंसा नासीदिति सूचितम् ॥ ५२ ॥ ५३ ॥ भृतिर्वेतनग्रहणेन सेवा वणिजां युद्धं वणिग्युद्धं वाणिज्यादिविवादः तत्त्वानां यथार्थवस्तूनामविनिश्चयः चित्तकालुष्यात्संशय इत्यर्थः ॥ ५४ ॥ वेदशाखानां प्रणयनं विभजनं धर्माणां संकरः अन्यधर्मप्रवृत्तिः वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां परिध्वंसः प्रायशो विनाशः ॥ ५५ ॥ द्वापरादिषु द्वापरादिकालेषु ॥ ५६ ॥ चतुष्पादऋगादिपादयुक्तः एकः

**वर्णाश्रमप्रतिष्ठां च चकार स्वेन तेजसा ॥ वृत्तेन वृत्तिना वृत्तं विश्वात्मा निर्ममे स्वयम् ॥ ५० ॥ यज्ञप्रवर्तनं चैव त्रेतायामभवत्क्रमात् ॥ पशुयज्ञं न सेवंते केचित्तत्रापि सुव्रताः ॥ ५१ ॥ बलाद्विष्णुस्तदा यज्ञमकरोत्सर्वदृक् क्रमात् ॥ द्विजास्तदा प्रशंसंति ततस्त्वाहिंसकं मुने ॥ ५२ ॥ द्वापरेष्वपि वर्तंते मतिभेदास्तदा नृणाम् ॥ मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति ॥ ५३ ॥ तदा तु सर्वभूतानां कायक्लेशवशात्क्रमात् ॥ लोभो भृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ॥ ५४॥ वेदशाखाप्रणयनं धर्माणां संकरस्तथा ॥ वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥ ५५ ॥ द्वापरे तु प्रवर्तंते रागो लोभो मदस्तथा ॥ वेदो व्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु ॥५६॥ एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ॥ संक्षयादायुषश्चैव व्यस्यते द्वापरेषु सः ॥ ५७ ॥ ऋषिपुत्रैः पुनर्भेदा भिद्यंते दृष्टिविभ्रमैः ॥ मंत्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥ ५८ ॥ संहिता ऋग्यजुःसाम्नां संहन्यंते मनीषिभिः ॥ सामान्या वैकृताश्चैव द्रष्टृभिस्तैः पृथक्पृथक् ॥ ५९ ॥ ब्राह्मणं कल्पसूत्राणि मंत्रप्रवचनानि च ॥ अन्ये तु प्रस्थितास्तान्वै केचित्तान्प्रत्यवस्थिताः ॥ ६० ॥**

समग्रः इह भूलोके त्रेतासु त्रेतासंज्ञकांतकालेषु विधीयते अधीयते इत्यर्थः ॥ ५७ ॥ ऋग्यजुःसाम्नां संहिताः सामान्याः समानाः वैकृताः विभक्ताः दृष्टिविभ्रमैर्मतिभेदैर्मनीषिभिः ऋषिपुत्रैः पुनरन्यप्रकारेण मंत्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययः पृथक्पृथक् संहन्यंते विभज्यंते इत्यग्रिमस्यैरन्वयः ॥ ५८ ॥ ५९ ॥ ब्राह्मणं विधिप्रशंसनमंत्रविनियोजकं कल्प सूत्राणि क्रियाप्रतिपादकसूत्राणि मंत्रप्रवचनानि मीमांसान्यायसूत्राणि चक्रुरिति शेषः । अन्ये तु तान्प्रस्थिताः तन्न्यूनताबोधका आसन्निति शेषः ॥ ६० ॥

इतिहासपुराणान्यपि कालगौरवात् अनेककल्पभेदात् भिद्यंते भेदविशिष्टानि भवंतीत्यर्थः । पुराणानुक्रमं कथयति—ब्राह्ममित्यादिसार्धद्वाभ्याम् । पुराणमानं तु भागवते द्वादश स्कंधे उक्तम्—"ब्राह्मं दश सहस्राणि पाद्मं पंचोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ दशाष्टौ श्रीभागवतं नारदं पंचविंशति ॥ मार्कंडं नव वाह्नं तु दशपंच चतुःशतम् ॥ चतुर्दश भविष्यं स्यात्तथा पंचशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ " इति ॥ ६१ ॥ ६२ ॥ तथाच पूर्वोक्तप्रकारस्तेषां भेदः प्रकथ्यते वर्ण्यत इत्यर्थः ॥ ६३ ॥ शुभं कल्याणकरं लैंगम् एकादशविधमेकादशाख्यकं द्वापरे प्रभिन्नं विभक्तमित्यर्थः । वेदपुराणविभाजकऋषि मुख्यान्कथयति—मन्वत्रीत्यादिना ॥ ६४ ॥ ६५ ॥ एवमाद्यैरेतन्मुख्यैः सहस्रशः सहस्रावधि ऋषिभिः भिद्यंत इति शेषः । वैराग्यं विना ज्ञानं न दृढं वैराग्यमपि दोषदर्शनं

इतिहासपुराणानि भिद्यंते कालगौरवात् ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा॥६१॥भविष्यं नारदीयं च मार्कंडेयमतः परम् ॥ आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहमेव च ॥ ६२ ॥ वामनाख्यं ततः कूर्मं मात्स्यं गारुडमेव च ॥ स्कांदं तथा च ब्रह्मांडं तेषां भेदः प्रकथ्यते ॥६३॥ लैङ्गमेकादशविधं प्रभिन्नं द्वापरे शुभम् ॥ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ॥ ६४ ॥ यमापस्तंबसंवर्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशंखलिखिता दक्षगौतमौ ॥६५॥ शातातपो वसिष्ठश्च एवमाद्यैः सहस्रशः ॥ अवृष्टिर्मरणं चैव तथा व्याध्याद्युपद्रवाः॥६६॥ वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायते ततः ॥ निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ ६७ ॥ विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम्॥ दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः ॥ ६८ ॥ एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे स्मृता ॥ आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्तते ॥ ६९ ॥ द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ७० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

विना न तत्तु द्वापरादिषु कालेषु दुःखं विना न भवतीति तत्क्रमं निरूपयति—अष्टभिरित्यादिना । मरणमकालमृतिरित्यर्थः । व्याधिः रोगः आदिर्मुख्यो येषां ते चोरव्याघ्र राजकृताः उपद्रवाः उपसर्गा इत्यर्थः ॥ ६६ ॥ ततः उपद्रववशाद्वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायत इत्यन्वयः ॥ ६७ ॥ दोषाणां दर्शनाच्चैवेत्यत्र चकारात्पूर्वोक्तदुःखसंग्रहः । एतदुभयादेव द्वापरे ज्ञानसंभव इत्यनेन कृतत्रेतयोस्तु ज्ञाने स्वाभाविकी प्रवृत्तिर्बोध्यते ॥ ६८ ॥ एषा पूर्वोक्ता रजस्तमोभ्यां युक्ता मिश्रा द्वापरे वृत्तिः प्रवृत्तिरित्यर्थः । आद्यकृते प्रथमकृतयुग इत्यर्थः । धर्मः अस्ति सर्वत्र वर्तत इत्यर्थः । तथा च तत्र धर्मज्ञानं स्वाभाविकमासीदिति सूचितम् । स धर्मस्त्रेतायां प्रवर्तते विधिचोदनया प्रवृत्तो भवतीत्यर्थः ॥ ६९ ॥ द्वापरे व्याकुलीभूत्वा पीडितो भूत्वा कलौ युगे प्रणश्यति प्रनष्टो भविष्यतीत्यर्थः ॥ ७० ॥ कलावधर्मरोगेण ग्रस्तं मां पार्वतीपते । कुरु विश्वेश निरुजं त्वत्स्मृत्याऽमृतरूपया ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

चत्वारिंशे वर्ण्यतेऽस्मिन्धर्माः कलियुगोद्भवाः । कृतारंभक्रमो व्याख्या कल्पमन्वंतरस्य च ॥ शक्रः प्रथमतः कलियुगवृत्तांतं कथयति-तिष्य इत्यादिना ॥ १ ॥ प्रमादकः प्रमादः रोगः क्षुद्भयानि च भवंतीति शेषः । देशानां विपर्ययो नाशः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ मंत्रयोगेन मंत्रोपदेशयोगेन ॥ ६ ॥ ७ ॥ भ्रूणहत्या बालहत्या वीरहत्या

शक्र उवाच ॥ तिष्ये मायामसूयां च वधं चैव तपस्विनाम् ॥ साधयंति नरास्तत्र तमसा व्याकुलेन्द्रियाः॥१॥ कलौ प्रमादको रोगः सततं क्षुद्भयानि च ॥ अनावृष्टिभयं घोरं देशानां च विपर्ययः ॥ २ ॥ न प्रामाण्यं श्रुतेरस्ति नृणां चाधर्मसेवनम् ॥ अधार्मिकास्त्वनाचारा महाकोपाल्पचेतसः ॥ ३ ॥ अनृतं ब्रुवते लुब्धास्तिष्ये जाताश्च दुष्प्रजाः ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ ४ ॥ विप्राणां कर्मदोषेण प्रजानां जायते भयम् ॥ नाधीयन्ते तदा वेदान्न यजंति द्विजातयः ॥ ५ ॥ उत्सीदंति नराश्चैव क्षत्रियाश्च विशः क्रमात् ॥ शूद्राणां मंत्रयोगेन संबंधो ब्राह्मणैः सह ॥ ६ ॥ भवतीह कलौ तस्मिञ्शयनासनभोजनैः ॥ राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयंति ते ॥ ७ ॥ भ्रूणहत्या वीरहत्या प्रजायंते प्रजासु वै ॥ शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥ ८ ॥ राजवृत्तिस्थिताश्चौराश्चौराचाराश्च पार्थिवाः ॥ एकपत्न्यो न शिष्यंति वर्धिष्यंत्यभिसारिकाः ॥ ९ ॥ वर्णाश्रमप्रतिष्ठानो जायते नृषु सर्वतः ॥ तदा स्वल्पफला भूमिः क्वचिच्चापि महाफला ॥ १० ॥ अरक्षितारो हर्तारः पार्थिवाश्च शिलाशन ॥ शूद्रा वै ज्ञानिनः सर्वे ब्राह्मणैरभिवंदिताः ॥ ११ ॥ अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः ॥ आसनस्था द्विजान्दृष्ट्वा न चलंत्यल्पबुद्धयः ॥ १२ ॥ ताडयंति द्विजेन्द्रांश्च शूद्रा वै स्वल्पबुद्धयः ॥ आस्ये निधाय वै हस्तं कर्णे शूद्रस्य वै द्विजाः ॥ १३ ॥ नीचस्येव तदा वाक्यं वदंति विनयेन तम् ॥ उच्चासनस्थान् शूद्रांश्च द्विजमध्ये द्विजर्षभ ॥ १४ ॥ ज्ञात्वा न हिंसते राजा कलौ कालवशेन तु ॥ पुष्पैश्च वासितैश्चैव तथान्यैर्मंगलैः शुभैः ॥ १५ ॥ शूद्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः ॥ न प्रेक्षंते गर्विताश्च शूद्रा द्विजवरान् द्विज ॥ १६ ॥

विक्रांतपुरुषहत्या प्रजासु प्रजायंते व्यभिचारमूलेनेति तात्पर्यार्थः ॥ ८ ॥ एकपत्न्यः पतिव्रताः अभिसारिकाः व्यभिचारिकाः व्यभिचारिण्यः इत्यर्थः ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ न हिंसते दंडं न करोतीत्यर्थः । अन्यैर्मंगलैर्गंधालंकरणादिभिः ॥ १५ ॥ अल्पं श्रुतं ज्ञानं भाग्यं प्रारब्धं बलं सामर्थ्यं तेनान्विताः युक्ताः अतएव शूद्रान् शूद्रादीनित्यर्थः ॥ १६ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ तैः शांतभयादिभिः तत्र प्लक्षद्वीपे प्लक्षद्वीपादिवर्षेषु नाम प्लक्षादि द्वीपेषु शाकद्वीपांतिकेषु शाकद्वीपचरमेषु पंचसु प्लक्षशाल्मलिकुशक्रौंचशाकेषु वर्णाश्रमविभागशः धर्मो ज्ञेय इत्यग्रिमस्थैरन्वयः ॥ ४५ ॥ ४६ ॥ एतेषु पूर्वोक्तेषु पंचसु द्वीपेषु सुखादि सर्वसाधारणं तुल्यं स्मृतं प्रोक्तमित्यर्थः ॥ ४७ ॥ अन्ये पूर्वोक्तभिन्ने पुष्करद्वीपे श्वेतद्वीपे प्रजाता उत्पन्नाः प्रजेश्वराश्च प्रजापतेः प्रजापालकस्य रुद्रस्य अनिरुद्धरूपस्ये

कुशलदेशः कुशलो मनुगस्य मनोनुगः ॥ उष्णस्योष्णः स्मृतो देशः पीवरः पीवरस्य च ॥ ३२ ॥ अंधकारस्य कथितो देशो नाम्नांधकारकः ॥ मुनेर्देशो मुनिः प्रोक्तो दुंदुभेर्दुंदुभिः स्मृतः ॥ ३३ ॥ एते जनपदाः सप्त क्रौंचद्वीपेषु भास्वराः ॥ ज्योतिष्मंतः कुशद्वीपे सप्त चासन्महौजसः ॥ ३४ ॥ उद्भिदो वेणुमांश्चैव द्वैरथो लवणो धृतिः ॥ षष्ठः प्रभाकरश्चापि सप्तमः कपिलः स्मृतः ॥ ३५ ॥ उद्भिदं प्रथमं वर्षं द्वितियं वेणुमंडलम् ॥ तृतीयं द्वैरथं चैव चतुर्थं लवणं स्मृतम् ॥ ३६ ॥ पंचमं धृतिमत्षष्ठं प्रभाकरमनुत्तमम् ॥ सप्तमं कपिलं नाम कपिलस्य प्रकीर्तितम् ॥ ३७ ॥ शाल्मलस्येश्वराः सप्त सुतास्ते वै वपुष्मतः ॥ श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ॥ ३८ ॥ वैद्युतो मानसश्चैव सुप्रभः सप्तमस्तथा ॥ श्वेतस्य देशः श्वेतस्तु हरितस्य च हारितः ॥ ३९ ॥ जीमूतस्य च जीमूतो रोहितस्य च रोहितः ॥ वैद्युतो वैद्युतस्यापि मानसस्य च मानसः॥४०॥ सुप्रभः सुप्रभस्यापि सप्त वै देशलांछकाः॥ प्लक्षद्वीपे तु वक्ष्यामि जंबूद्वीपादनंतरम्॥४१॥ सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरा नृपाः ॥ ज्येष्ठः शांतभयस्तेषां सप्तवर्षाणि तानि वै ॥ ४२ ॥ तस्माच्छांतभयाच्चैव शिशिरस्तु सुखोदयः ॥ आनंदश्च शिवश्चैव क्षेमकश्च ध्रुवस्तथा ॥ ४३ ॥ तानि तेषां तु नामानि सप्तवर्षाणि भागशः ॥ निवेशितानि तैस्तानि पूर्वं स्वायंभुवेन्तरे ॥ ४४ ॥ मेधातिथेस्तु पुत्रैस्तैः प्लक्षद्वीपनिवासिभिः ॥ वर्णाश्रमाचारयुताः प्रजास्तत्र निवेशिताः ॥ ४५ ॥ प्लक्षद्वीपादिवर्षेषु शाकद्वीपांतिकेषु वै ॥ ज्ञेयः पंचसु धर्मो वै वर्णाश्रमविभागशः ॥ ४६ ॥ सुखमायुः स्वरूपं च बलं धर्मो द्विजोत्तमाः ॥ पंचस्वेतेषु द्वीपेषु सर्वसाधारणं स्मृतम् ॥ ४७॥ रुद्रार्चनरता नित्यं महेश्वरपरायणाः ॥ अन्ये च पुष्करद्वीपे प्रजाताश्च प्रजेश्वराः ॥४८॥ प्रजापतेश्च रुद्रस्य भावामृतसुखोत्कटाः ॥ ४९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशे द्वीपद्वीपेश्वरकथनं नाम षट्चत्वारिंशोध्यायः ॥ ४६ ॥

त्यर्थः । भावः श्रद्धैवामृतं भावामृतं तस्य सुखेनोत्कटाः प्रभिन्नावरणा इत्यर्थः । स्मृता इति शेषमादायाग्रिमेणान्वयः ॥ ४८॥४९ ॥ भूद्वीपेषु च सर्वेषु सागरेष्वपि सर्वतः ॥ पूज्यते क्रीडते योसौ सांबो मां रक्षतान्मुदा ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

सप्तचत्वारिंशके तु जंबूवर्षाणि भागशः ॥ आग्नीध्रवंशो विख्यातो भारतांतश्च कथ्यते ॥ सूतः जंबूद्वीपं वर्णयति—आग्नीध्रमित्यादिना । ज्येष्ठदायादं मुख्यभागहारिणं काम्य

सूत उवाच ॥ आग्नीध्रं ज्येष्ठदायादं काम्यपुत्रं महाबलम् ॥ प्रियव्रतोऽभ्यषिंचद्वै जंबूद्वीपेश्वरं नृपः ॥ १ ॥ सोतीव भवभक्तश्च तपस्वी तरुणः सदा ॥ भवार्चनरतः श्रीमान्गोमान्धीमान्द्विजर्षभाः ॥ २ ॥ तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव ॥ सर्वे माहेश्वराश्चैव महादेवपरायणाः ॥ ३ ॥ ज्येष्ठो नाभिरिति ख्यातस्तस्य किंपुरुषोऽनुजः ॥ हरिवर्षस्तृतीयस्तु चतुर्थो वै त्विलावृतः ॥ ४ ॥ रम्यस्तु पंचमस्तत्र हिरण्मान् षष्ठ उच्यते ॥ कुरुस्तु सप्तमस्तेषां भद्राश्वस्त्वष्टमः स्मृतः ॥ ५ ॥ नवमः केतुमालस्तु तेषां देशान्निबोधत ॥ नाभेस्तु दक्षिणं वर्षं हेमाख्यं तु पिता ददौ ॥ ६ ॥ हेमकूटं तु यद्वर्षं ददौ किंपुरुषाय सः ॥ नैषधं यत्स्मृतं वर्षं हरये तत्पिता ददौ ॥ ७ ॥ इलावृताय प्रददौ मेरुर्यत्र तु मध्यमः ॥ नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता ॥ ८ ॥ श्वेतं यदुत्तरं तस्मात्पित्रा दत्तं हिरण्मते ॥ यदुत्तरं शृंगवर्षं पिता तत्कुरवे ददौ ॥ ९ ॥ वर्षं माल्यवतं चापि भद्राश्वस्य न्यवेदयत् ॥ गंधमादनवर्षं तु केतुमालाय दत्तवान् ॥ १० ॥ इत्येतानि महान्तीह नव वर्षाणि भागशः ॥ आग्नीध्रस्तेषु वर्षेषु पुत्रांस्तानभिषिच्य वै ॥ ११ ॥ यथाक्रमं स धर्मात्मा ततस्तु तपसि स्थितः ॥ तपसा भावितश्चैव स्वाध्याय निरतस्त्वभूत् ॥ १२ ॥ स्वाध्यायनिरतः पश्चाच्छिवध्यानरतस्त्वभूत् ॥ यानि किंपुरुषाद्यानि वर्षाण्यष्टौ शुभानि च ॥ १३ ॥ तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः ॥ विपर्ययो न तेष्वस्ति जरामृत्युभयं न च ॥ १४ ॥ धर्माधर्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ॥ न तेष्वस्ति युगावस्था क्षेत्रेष्वष्टसु सर्वतः ॥ १५ ॥ रुद्रक्षेत्रे मृताश्चैव जंगमाः स्थावरास्तथा ॥ भक्ताः प्रासंगिकाश्चापि तेषु क्षेत्रेषु यांति ते ॥ १६ ॥ तेषां हिताय रुद्रेण चाष्टक्षेत्रं विनिर्मितम् ॥ तत्र तेषां महादेवः सान्निध्यं कुरुते सदा ॥ १७ ॥ दृष्ट्वा हृदि महादेवमष्टक्षेत्र निवासिनः ॥ सुखिनः सर्वदा तेषां स एवेह परा गतिः ॥ १८ ॥

पुत्रं प्रियपुत्रमित्यर्थः ॥ १-१३ ॥ विपर्ययो न्यूनाधिकभावः ॥ १४ ॥ १५ ॥ प्रासंगिका अन्यानुषंगप्रवृत्ता इत्यर्थः ॥ १६ ॥ १७ ॥ इह मूलोके ॥ १८ ॥

हिमं हिमालयः अंकश्चिह्नभूतो यस्य तद्धिमांकमस्मिन्निह वर्षे नाभेर्निसर्गं वंशं निबोधत जानीतेत्यर्थः ॥ १९ ॥ सर्वक्षत्रस्य मध्य इति शेषः । पूजितं पूज्यमानमित्यर्थः ॥२०॥ ॥ २१ ॥ ध्वांतमज्ञानं गतं यस्य वा यस्मात्सः ध्वांतगतः । तदुक्तं भागवतपंचमस्कंधे– " नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः । लोकस्य यः करुणया भयमात्मलोकमाख्यान्नमो भगवते ऋषभाय तस्मै ॥" इति ॥ २२ ॥२३॥ २४ ॥ वनं विवेश प्राविशदित्यर्थः । एतदेवोक्तं भागवते–" यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं धनं श्रियः ॥ जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ " इति ॥ २५ ॥ जंबूवर्षेषु नवसु नृपैराग्नीध्रवंशजैः । भक्त्या समर्चितः सांबः पातु मां भवजाद्भयात् ॥

नाभेर्निसर्गं वक्ष्यामि हिमांकेऽस्मिन्निबोधत ॥ नाभिस्त्वजनयत्पुत्रं मेरुदेव्यां महामतिः ॥१९॥ ऋषभं पार्थिवश्रेष्ठं सर्वक्षत्रस्य पूजितम् ॥ ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः ॥२०॥ सोभिषिच्याथ ऋषभो भरतं पुत्रवत्सलः ॥ ज्ञानवैराग्यमाश्रित्य जित्वेन्द्रियमहोरगान् ॥२१॥ सर्वात्मनात्मनि स्थाप्य परमात्मानमीश्वरम् ॥ नग्नो जटी निराहारो चीरी ध्वांतगतो हि सः ॥ २२ ॥ निराशस्त्यक्तसंदेहः शैवमाप परं पदम् ॥ हिमाद्रेर्दक्षिणं वर्षं भरताय न्यवेदयत् ॥ २३ ॥ तस्मात्तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ॥ भरतस्यात्मजो विद्वान्सुमतिर्नाम धार्मिकः ॥ २४ ॥ बभूव तस्मिंस्तद्राज्यं भरतः संन्यवेशयत् ॥ पुत्रसंक्रामितश्रीको वनं राजा विवेश सः ॥ २५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भरतवर्षकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ सूत उवाच ॥ अस्य द्वीपस्य मध्ये तु मेरुर्नाम महागिरिः ॥ नानारत्नमयैः शृंगैः स्थितः स्थितिमतां वरः ॥ १ ॥ चतुराशीतिसाहस्रमुत्सेधेन प्रकीर्तितः ॥ प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु ॥ २ ॥ शराववत्संस्थितत्वाद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ विस्ताराात्रिगुणश्चास्य परिणाहोनुमंडलः ॥ ३ ॥ हैमीकृतो महेशस्य शुभांगस्पर्शनेन च ॥ धत्तूरपुष्पसंकाशः सर्वदेवनिकेतनः ॥ ४ ॥

इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ अष्टचत्वारिंशके च मेरोर्मानादि सर्वतः ॥ पुर्यष्टकं त्रिमूर्तीनां विमानादिकमुच्यते ॥ सूतः मेरुपर्वतं वर्णयति–अस्येत्यादिना ॥ १ ॥ उत्सेधेनोच्छ्रायेण चतुराशीतिसाहस्रं तत्संख्ययोजनैरित्यर्थः । प्रकीर्तितः कथितः षोडशषोडशसहस्रयोजनान्यधः प्रविष्ट इत्यन्वयः ॥ २ ॥ अनुमंडलः मंडलाकारः परिणाहः विस्ताराात्रिगुणः त्रिगुणितस्तथा च षण्णवतिसहस्रयोजनमित इत्यर्थः ॥ ३ ॥ ४ ॥

आयामो दैर्घ्यमित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इंद्रपुरीमादौ निरूपयति—अमरावतीति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ प्रदक्षिणक्रमतः पावकादिपुरीर्वर्णयति—तेजस्विनीत्यादिना ॥ १५ ॥ १६ ॥ शुद्धवती वारुणी ॥ १७ ॥ महोदया कौबेरी ॥ १८ ॥ ब्रह्मविष्णुमहेशस्थानं वर्णयति—ब्रह्मेत्यादिना । नगाः वृक्षाः उत्तमाः



क्रीडाभूमिश्च देवानामनेकाश्चर्यसंयुतः ॥ लक्षयोजन आयामस्तस्यैवं तु महागिरेः ॥ ५ ॥ ततः षोडशसाहस्रं योजनानि क्षितेरधः ॥ शेषं चोपरि विप्रेन्द्रा धरायास्तस्य शृंगिणः ॥ ६ ॥ मूलायामप्रमाणं तु विस्तारान्मूलतो गिरेः ॥ ऊर्ध्वविस्तारमस्यैव द्विगुणं मूलतो गिरेः ॥ ७ ॥ पूर्वतः पद्मरागाभो दक्षिणे हेमसन्निभः ॥ पश्चिमे नीलसंकाश उत्तरे विद्रुमप्रभः ॥ ८ ॥ अमरावती पूर्वभागे नानाप्रासादसंकुला ॥ नानादेवगणैः कीर्णा मणिजालसमावृता ॥ ९ ॥ गोपुरैर्विविधाकारैर्हैमरत्नविभूषितैः ॥ तोरणैर्हैमचित्रैस्तु मणिक्लृप्तैः पथि स्थितैः ॥ १० ॥ सँल्लापालापकुशलैः सर्वाभरणभूषितैः ॥ स्तनभारविनम्रैश्च मदघूर्णितलोचनैः ॥ ११ ॥ स्त्रीसहस्रैः समाकीर्णा चाप्सरोभिः समंततः ॥ दीर्घिकाभिर्विचित्राभिः फुल्लांभोरुहसंकुलैः ॥ १२ ॥ हेमसोपानसंयुक्तैर्हैमसैकतराशिभिः ॥ नीलोत्पलैश्चोत्पलैश्च हैमैश्चापि सुगंधिभिः ॥ १३ ॥ एवंविधैस्तटाकैश्च नदीभिश्च नदैर्युता ॥ विराजते पुरी शुभ्रा तयासौ पर्वतः शुभः ॥ १४ ॥ तेजस्विनी नामपुरी आग्नेय्यां पावकस्य तु ॥ अमरावतीसमा दिव्या सर्वभोगसमन्विता ॥ १५ ॥ वैवस्वती दक्षिणे तु यमस्य यमिनां वराः ॥ भवनैरावृता दिव्यैर्जांबूनदमयैः शुभैः ॥ १६ ॥ नैर्ऋते कृष्णवर्णा च तथा शुद्धवती शुभा ॥ तादृशी गंधवंती च वायव्यां दिशि शोभना ॥ १७ ॥ महोदया चोत्तरे च ऐशान्यां तु यशोवती ॥ पर्वतस्य दिगंतेषु शोभते दिवि सर्वदा ॥ १८ ॥ ब्रह्मविष्णुमहेशानां तथान्येषां निकेतनम् ॥ सर्वभोगयुतं पुण्यं दीर्घिकाभिर्नगोत्तमम् ॥ १९ ॥ सिद्धैर्यक्षैस्तु संपूर्णं गंधर्वैर्मुनिपुंगवैः ॥ तथान्यैर्विविधाकारैर्भूतसंघैश्चतुर्विधैः ॥ २० ॥ गिरेरुपरि विप्रेन्द्राः शुद्धस्फटिकसन्निभम् ॥ सहस्रभौमं विस्तीर्णं विमानं वामतः स्थितम् ॥ २१ ॥ तस्मिन्महाभुजः शर्वः सोमसूर्याग्निलोचनः ॥ सिंहासने मणिमये देव्यास्ते षण्मुखेन च ॥ २२ ॥ हरेस्तदर्धं विस्तीर्णं विमानं तत्र सोपि च ॥ पद्मरागमयं दिव्यं पद्मजस्य च दक्षिणे ॥ २३ ॥

यस्मिन् तन्नगोत्तमम् ॥ १९ ॥ २० ॥ सहस्रभौमं सहस्रमंटपमित्यर्थः । " भौमो मंटपकालयोः " इति विश्वः । वामतः प्रतिपथे मध्य इत्यर्थः । " वामः सव्ये प्रतिपथे " इति विश्वः ॥ २१ ॥ सोमसूर्याग्नयो लोचनानि यस्य सः ॥ २२ ॥ तदर्धं शिवविमानार्धप्रमाणम् ॥ २३ ॥

तस्मिन्मेरौ शर्वालयसमंततः शिवालयसमंताद्देशे विपुलं रम्यं शक्रस्य पुरं यमादीनां चास्तीति शेषमादायाग्रिमेणान्वयः ॥ २४ ॥ तेषां तेषामिंद्रादिदिक्पालानां दिव्येषु विविधेषु विमानेषु ईशान्यामीशानदिग्भागे ईश्वरक्षेत्रे शिवविमाने च नित्यार्चा नित्यशिवपूजा व्यवस्थिता प्रतिष्ठितेत्यर्थः । शिष्यसंमतः इदमग्रिमस्थसनत्कुमारविशेषणम् ॥ २५॥ २६ ॥ सदृशाः सनंदतुल्या इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ सुयशायाः सुनेत्रायाः पार्वतीसख्यो मातॄणां मदनस्य च विमानानि संतीति शेषः । तस्य मेरोः ॥ ३० ॥ ३१ ॥ ३२ ॥ अयं जंबूसंज्ञः ॥ ३३ ॥ नववर्षाणि खंडानि यस्मिन् तन्नववर्षं यथातथं यथास्वरूपमित्यर्थः ॥ ३४ ॥ निबोधत जानीतेत्यर्थः ॥ ३५ ॥ श्रीमेरोर्मध्यभागे सकलपुरवरे दिव्य

तस्मिन् शक्रस्य विपुलं पुरं रम्यं यमस्य च ॥ सोमस्य वरुणस्याथ निर्ऋतेः पावकस्य च ॥ २४ ॥ वायोश्चैव तु रुद्रस्य शर्वालयसमन्ततः ॥ तेषां तेषां विमानेषु दिव्येषु विविधेषु च ॥ २५ ॥ ईशान्यामीश्वरक्षेत्रे नित्यार्चा च व्यवस्थिता ॥ सिद्धेश्वरैश्च भगवांच्छैलादिः शिष्यसंमतः ॥ २६ ॥ सनत्कुमारः सिद्धैस्तु सुखासीनः सुरेश्वरः ॥ सनकश्च सनंदश्च सदृशाश्च सहस्रशः ॥ २७ ॥ योगभूमिः क्वचित्तस्मिन् भोगभूमिः क्वचित्क्वचित् ॥ बालसूर्यप्रतीकाशं विमानं तत्र शोभनम् ॥ २८ ॥ शैलादिनः शुभं चास्ति तस्मिन्नास्ते गणेश्वरः ॥ षण्मुखस्य गणेशस्य गणानां तु सहस्रशः ॥ २९ ॥ सुयशायाः सुनेत्रायाः मातॄणां मदनस्य च ॥ तस्य जंबूनदी नाम मूलमावेष्ट्य संस्थिता ॥ ३० ॥ तस्य दक्षिणपार्श्वे तु जंबूवृक्षः सुशोभनः ॥ अत्युच्छ्रितः सुविस्तीर्णः सर्वकालफलप्रदः ॥ ३१ ॥ मेरोः समंताद्विस्तीर्णं शुभं वर्षमिलावृतम् ॥ तत्र जंबूफलाहाराः केचिच्चामृतभोजनाः ॥ ३२ ॥ जांबूनदसमप्रख्या नानावर्णाश्च भोगिनः ॥ मेरुपादाश्रितो विप्रा द्वीपोयं मध्यमः शुभः ॥ ३३ ॥ नववर्षान्वितश्चैव नदीनदगिरीश्वरैः ॥ नववर्षं तु वक्ष्यामि जंबूद्वीपं यथातथम् ॥ ३४ ॥ विस्तारान्मंडलाच्चैव योजनैश्च निबोधत ॥ ३५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ सूत उवाच ॥ शतमेकं सहस्राणां योजनानां स तु स्मृतः ॥ अनुद्वीपं सहस्राणां द्विगुणं द्विगुणोत्तरम् ॥ १ ॥

भोगे विमाने देव्याः सार्धं महेशं सकलगणयुतं सोमसूर्याग्निनेत्रम् ॥ नानालंकारयुक्तं विधिहरिसहितं देववृन्दैः समंतान्नित्यं संपूज्यमानं सकलमुनिनुतं भावये चंद्रमौलिम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ऊनपंचाशके त्वस्मिन् जंबूद्वीपस्य विग्रहः ॥ वर्षाकाराः पर्वताश्च कीर्त्यंते वनवासिनः ॥ सूतः जंबूद्वीपं विस्तरतो वर्णयति—शतमिति । स तु जंबूद्वीपः सहस्राणां योजनानामेकं शतं लक्षयोजनः स्मृत इत्यन्वयः । एतदेवोक्तं भागवते—"यो वायं द्वीपः कुवलयकमल

कोशाभ्यन्तरकोशो नियुतयोजनविशालः " इति । अनुद्वीपं समीपद्वीपं प्लक्षसंज्ञं सहस्राणां द्विगुणं तस्मादिति शेषः । द्विगुणं च तदुत्तरं च द्विगुणोत्तरमस्तीति शेषः ॥ १ ॥ ससमुद्रमग्रधरप्रमाणं कथयति–पंचाशादिति ॥ २ ॥ जंबूमध्यमेरुसमीपानष्टपर्वतान्कथयति–नील इत्यादिना ॥ ३ ॥ ४ ॥५ ॥ तेषां पूर्वोक्तवर्षपर्वतानामंतरविष्कंभो वर्षरूपः एकशः प्रत्येकं नवसाहस्रमितस्तत्संख्ययोजनपरिमितो ज्ञेय इति शेषः । एतदेवोक्तं भागवतपंचमस्कंधे " यस्मिन्नववर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुवि

पंचाशत्कोटिविस्तीर्णा ससमुद्रा धरा स्मृता ॥ द्वीपैश्च सप्तभिर्युक्ता लोकालोकावृता शुभा ॥ २ ॥ नीलस्तथोत्तरे मेरोः श्वेतस्तस्योत्तरे पुनः ॥ शृंगी तस्योत्तरे विप्रास्त्रयस्ते वर्षपर्वताः ॥ ३ ॥ जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ॥ निषधो दक्षिणे मेरोस्तस्य दक्षिणतो गिरिः ॥ हेमकूट इति ख्यातो हिमवांस्तस्य दक्षिणे ॥ ४ ॥ मेरोः पश्चिमतश्चैव पर्वतौ द्वौ धराधरौ ॥ माल्यवान्गंधमादश्च द्वावेतावुदगायतौ ॥५॥ एते पर्वतराजानः सिद्धचारणसेविताः ॥ तेषामंतरविष्कंभो नवसाहस्रमेकशः॥६॥ इदं हैमवतं वर्षं भारतं नाम विश्रुतम् ॥ हेमकूटं परं तस्मान्नाम्ना किंपुरुषं स्मृतम् ॥ ७ ॥ नैषधं हेमकूटात्तु हरिवर्षं तदुच्यते ॥ हरिवर्षात्परं चैव मेरोः शुभमिलावृतम् ॥ ८ ॥ इलावृतात्परं नीलं रम्यकं नाम विश्रुतम् ॥ रम्यात्परतरं श्वेतं विख्यातं तद्धिरण्मयम् ॥ ९ ॥ हिरण्मयात्परं चापि शृंगी चैव कुरुः स्मृतः ॥ धनुःसंस्थे तु विज्ञेये द्वे वर्षे दक्षिणोत्तरे ॥ १० ॥ दीर्घाणि तत्र चत्वारि मध्यतस्तदिलावृतम् ॥ मेरोः पश्चिमपूर्वेण द्वे तु दीर्घतरे स्मृते ॥ ११ ॥ अर्वाक्तु निषधस्याथ वेद्यर्धं चोत्तरं स्मृतम् ॥ वेद्यर्धे दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ॥ १२ ॥ तयोर्मध्ये च विज्ञेयं मेरुमध्यमिलावृतम् ॥ दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ १३ ॥ उदगायतो महाशैलो माल्यवान्नाम पर्वतः ॥ योजनानां सहस्रे द्वे उपरिष्टात्तु विस्तृतः ॥ १४ ॥ आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्तितः ॥ तस्य प्रतीच्यां विज्ञेयः पर्वतो गंधमादनः ॥ १५ ॥ आयामतः स विज्ञेयो माल्यवानिव विस्तृतः॥ जंबूद्वीपस्य विस्तारात्समेन तु समंततः ॥ १६ ॥ प्रागायताः सुपर्वाणः षडेते वर्षपर्वताः॥ अवगाढाश्चोभयतः समुद्रौ पूर्वपश्चिमौ॥ १७॥ हिमप्रायस्तु हिमवान् हेमकूटस्तु हेमवान् ॥ तरुणादित्यसंकाशो हैरण्यो निषधः स्मृतः॥ १८॥

भक्तानि भवंति" इति ॥ ६ ॥ इदं हैमवतं हिमवत्संबंधि वर्षं भारतं नाम विश्रुतं प्रसिद्धमभवदिति शेषः ॥ ७ ॥ मेरोर्मेरुपर्वतस्य स्थानमिति शेषः ॥ ८ ॥ ९ ॥ वर्षाकारान्निरूपयति–धनुःसंस्थे इत्यादिना ॥१० ॥ दीर्घेतरे अदीर्घे इत्यर्थः ॥११–१३॥ उपरिष्टादुपरिभाग इत्यर्थः ॥१४॥१५॥१६॥१७॥ हिमप्रायः हिमबहुल इत्यर्थः ॥ १८ ॥

सौवर्णः सुवर्णमयः स मेरुश्चतुर्वर्णः चतुर्वर्णविशिष्ट इत्यर्थः । तदुक्तं पूर्वाध्याये–" पूर्वतः पद्मरागाभो दक्षिणे हेमसन्निभः ॥ पश्चिमे नीलसंकाश उत्तरे विद्रुमप्रभः " इति । वृत्तः वर्तुलः आकृतिपरीणाहः आकारविस्तारो यस्य सः चतुरस्रश्चतुष्कोणः समुत्थितः भूम्युद्गत इत्यर्थः ॥ १९ ॥ नीलो नीलपर्वतः वैडूर्यमयः वैडूर्यप्रचुर इत्यर्थः । श्वेतः

चतुर्वर्णः ससौवर्णो मेरुश्चोर्ध्वायतः स्मृतः ॥ वृत्ताकृतिपरीणाहश्चतुरस्रः समुत्थितः ॥ १९ ॥ नीलश्च वैडूर्यमयः श्वेतः शुक्लो हिरण्मयः ॥ मयूरबर्हवर्णस्तु शातकुंभस्त्रिशृंगवान् ॥ २० ॥ एवं संक्षेपतः प्रोक्ताः पुनः शृणु गिरीश्वरान् ॥ मंदरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ॥ २१ ॥ कैलासो गंधमादश्च हेमवांश्चैव पर्वतौ ॥ पूर्वतश्चायतावेतावर्णवांतर्व्यवस्थितौ ॥ २२ ॥ निषधः पारियात्रश्च द्वावेतौ वरपर्वतौ ॥ यथा पूर्वौ तथा याम्यावेतौ पश्चिमतः श्रितौ ॥ २३ ॥ त्रिशृंगो जारुचिश्चैव उत्तरौ वरपर्वतौ ॥ पूर्वतश्चायतावेतावर्णवांतर्व्यवस्थितौ ॥ २४ ॥ मर्यादापर्वतानेतानष्टावाहुर्मनीषिणः ॥ योऽसौ मेरुर्द्विजश्रेष्ठाः प्रांशुः कनकपर्वतः ॥ २५ ॥ तस्य पादास्तु चत्वारश्चतुर्दिक्षु नगोत्तमाः ॥ यैर्विष्टब्धा न चलति सप्तद्वीपवती मही ॥ २६ ॥ दशयोजनसाहस्रमायामस्तेषु पठ्यते ॥ पूर्वे तु मंदरो नाम दक्षिणे गंधमादनः ॥ २७ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ॥ महावृक्षाः समुत्पन्नाश्चत्वारो द्वीपकेतवः ॥ २८ ॥ मंदरस्य गिरेः शृंगे महावृक्षः सकेतुराट् ॥ प्रलंबशाखाशिखरः कदंबश्चैत्यपादपः ॥ २९ ॥ दक्षिणस्यापि शैलस्य शिखरे देवसेविता ॥ जंबूः सदा पुष्पफला सदा माल्योपशोभिता ॥ ३० ॥ सकेतुर्दक्षिणे द्वीपे जंबूर्लोकेषु विश्रुता ॥ विपुलस्यापि शैलस्य पश्चिमे च महात्मनः ॥ ३१ ॥ संजातः शिखरेऽश्वत्थः स महान् चैत्यपादपः ॥ सुपार्श्वस्योत्तरस्यापि शृंगे जातो महाद्रुमः ॥ ३२ ॥ न्यग्रोधो विपुलस्कंधोऽनेकयोजनमंडलः ॥ तेषां चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ॥ ३३ ॥ अमानुष्याणि रम्याणि सर्वकालर्तुकानि च ॥ मनोहराणि चत्वारि देवक्रीडनकानि च ॥ ३४ ॥ वनानि वै चतुर्दिक्षु नामतस्तु निबोधत ॥ पूर्वे चैत्ररथं नाम दक्षिणे गंधमादनम् ॥ ३५ ॥

श्वेतपर्वतः शुक्लः हिरण्मयो हिरण्यप्रचुरः शातकुंभः सुवर्णमयः त्रिशृंगवान् पर्वतः मयूरबर्हवर्ण इत्यन्वयः ॥ २० ॥ अष्टौ दिक्पर्वतान् कथयति–एवमित्यादिना ॥ २१ ॥ २२ ॥ ॥ २३ २४ ॥ २५ २६ ॥ २७ ॥ २८ ॥ प्रलंबान्यतिदीर्घाणि शाखाशिखराणि शाखाग्राणि यस्य सः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

सवितुः शिवस्य उत्तरे उत्तरदिग्भागे वनं नंदनसंज्ञमित्यर्थः । एतदुक्तं विष्णुपुराणे द्वितीयेंशे-"उत्तरे नंदनं स्मृतम्" इति । चतुर्दिक्षु शिवक्षेत्राणि कथयति-मित्रेश्वरमिति ॥३६॥ ॥ ३७ ॥ ३८ ॥ कार्तिकेयस्य शाखादिमूर्तिभेदेन क्षेत्राणि वर्णयति-शाखस्येत्यादिना ॥ ३९ ॥ अरुणोदस्य तत्संज्ञकपूर्वसरसः नामतः संज्ञाभिरित्यर्थः ॥ ४० ॥

वैभ्राजं पश्चिमे विद्यादुत्तरे सवितुर्वनम् ॥ मित्रेश्वरं तु पूर्वे तु षष्ठेश्वरमतः परम् ॥ ३६ ॥ वर्येश्वरं पश्चिमे तु उत्तरे चाम्रकेश्वरम् ॥ महासरांसि च तथा चत्वारि मुनिपुंगवाः ॥ ३७ ॥ यत्र क्रीडंति मुनयः पर्वतेषु वनेषु च ॥ अरुणोदं सरः पूर्वं दक्षिणं मानसं स्मृतम् ॥३८॥ सितोदं पश्चिमसरो महाभद्रं तथोत्तरम् ॥ शाखस्य दक्षिणे क्षेत्रं विशाखस्य च पश्चिमे ॥ ३९ ॥ उत्तरे नैगमेयस्य कुमारस्य च पूर्वतः ॥ अरुणोदस्य पूर्वेण शैलेंद्रा नामतः स्मृताः ॥ ४० ॥ तांस्तु संक्षेपतो वक्ष्ये न शक्यं विस्तरेण तु ॥ सितांतश्च कुरंडश्च कुररश्चाचलोत्तमः ॥ ४१ ॥ विकरो मणिशैलश्च वृक्षवांश्चाचलोत्तमः ॥ महानीलोथ रुचकः सबिन्दुर्दर्दुरस्तथा ॥ ४२ ॥ वेणुमांश्च समेघश्च निषधो देवपर्वतः ॥ इत्येते पर्वतवरा ह्यन्ये च गिरयस्तथा ॥ ४३ ॥ पूर्वेण मंदरस्यैते सिद्धावासा उदाहृताः ॥ तेषुतेषु गिरींद्रेषु गुहासु च वनेषु च ॥ ४४ ॥ रुद्रक्षेत्राणि दिव्यानि विष्णोर्नारायणस्य च ॥ सरसो मानसस्येह दक्षिणेन महाचलाः ॥ ४५ ॥ ये कीर्त्यमानास्तान्सर्वान् संक्षिप्य प्रवदाम्यहम् ॥ शैलश्च विशिराश्चैव शिखरश्चाचलोत्तमः ॥ ४६ ॥ एकशृंगो महाशूलो गजशैलः पिशाचकः ॥ पंचशैलोथ कैलासो हिमवांश्चाचलोत्तमः ॥ ४७ ॥ इत्येते देवचरिता उत्कटाः पर्वतोत्तमाः ॥ तेषुतेषु च सर्वेषु पर्वतेषु वनेषु च ॥ ४८ ॥ रुद्रक्षेत्राणि दिव्यानि स्थापितानि सुरोत्तमैः ॥ दिग्भागे दक्षिणे प्रोक्ताः पश्चिमे च वदामि वः ॥४९॥ अपरेण सितोदश्च सुरपश्च महाबलः ॥ कुमुदो मधुमांश्चैव ह्यंजनो मुकुटस्तथा ॥ ५० ॥ कृष्णश्च पांडुरश्चैव सहस्रशिखरश्च यः ॥ पारिजातश्च शैलेंद्रः श्रीशृंगश्चाचलोत्तमः ॥ ५१ ॥ इत्येते देवचरिता उत्कटाः पर्वतोत्तमाः ॥ सर्वे पश्चिमदिग्भागे रुद्रक्षेत्रसमन्विताः ॥ ५२ ॥ महाभद्रस्य सरसश्चोत्तरे च महाबलाः ॥ ये स्थिताः कीर्त्यमानांस्तान्संक्षिप्येह निबोधत ॥ ५३ ॥ शंखकूटो महाशैलो वृषभो हंसपर्वतः ॥ नागश्च कपिलश्चैव इंद्रशैलश्च सानुमान् ॥ ५४ ॥ नीलः कंटकशृंगश्च शतशृंगश्च पर्वतः ॥ पुष्पकोशः प्रशैलश्च विरजश्चाचलोत्तमः ॥ ५५ ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ अंतरद्रोण्यः अभ्यंतरदरीविशेषाः ॥ ५८ ॥ शिवः भावितः परमादरेण स्वांतःकरणे प्रापितो यैस्ते शिवभाविताः ॥ ५९ ॥ बिल्ववने तत्संज्ञकवने लक्ष्मीः आद्या मुख्या येषां ते लक्ष्म्याद्यास्तेषां । ते च विष्णुपुराणे उक्ताः–" लक्ष्मीविष्ण्वग्निसूर्याणां देवानां मुनिसत्तम " इति । ककुभेऽर्जुनवृक्षवने "ककुभो रागभेदेऽपि वीणांकेऽर्जुन पादपे " इति विश्वः । उपेंद्रो वामनः उरगात्मनां सर्पमुख्यानामित्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ बीजपूरवने मातुलिंगवृक्षवने ॥ ६३ ॥ अशेषभोगिनः शेषभिन्ननागा इत्यर्थः । अशेषजगतां पतिः शेषस्तु पाताले व्यवस्थित इत्याग्रमणान्वयः ॥ ६४ ॥ सः शेष एव दिव्यः हलायुधः । विष्णोर्मूर्तिरित्यन्वयः ॥ ६५ ॥ सः हरेः शयनं विभोः

वराहपर्वतश्चैव मयूरश्चाचलोत्तमः॥ जारुधिश्चैव शैलेंद्र एत उत्तरसंस्थिताः॥५६॥ तेषु शैलेषु दिव्येषु देवदेवस्य शूलिनः ॥ असंख्यातानि दिव्यानि विमानानि सहस्रशः ॥५७॥ एतेषां शैलमुख्यानामंतरेषु यथाक्रमम् ॥ संति चैवांतरद्रोण्यः सरांस्युपवनानि च॥ ५८ ॥ वसंति देवा मुनयः सिद्धाश्च शिवभाविताः ॥ कृतवासाः सपत्नीकाः प्रसादात्परमेष्ठिनः ॥ ५९ ॥ लक्ष्म्याद्यानां बिल्ववने ककुभे कश्यपादयः ॥ तथा तालवने प्रोक्तमिंद्रोपेंद्रोरगात्मनाम् ॥ ६० ॥ उदुंबरे कर्दमस्य तथान्येषां महात्मनाम् ॥ विद्याधराणां सिद्धानां पुण्ये त्वाम्रवने शुभे ॥ ६१ ॥ नागानां सिद्धसंघानां तथा निंबवने स्थितिः ॥ सूर्यस्य किंशुकवने तथा रुद्रगणस्य च ॥ ६२ ॥ बीजपूरवने पुण्ये देवाचार्यो व्यवस्थितः॥ कौमुदे तु वने विष्णुप्रमुखानां महात्मनाम् ॥६३॥ स्थलपद्मवनांतस्थन्यग्रोधेऽशेषभोगिनः॥ शेषस्त्वशेषजगतां पतिरास्तेऽतिगर्वितः ॥ ६४ ॥ स एव जगतां कालः पाताले च व्यवस्थितः ॥ विष्णोर्विश्वगुरोर्मूर्तिर्दिव्यः साक्षाद्धलायुधः॥६५॥ शयनं देवदेवस्य स हरेः कंकणं विभोः ॥ वने पनसवृक्षाणां सशुक्रा दानवादयः ॥ ६६ ॥ किन्नरैरुरगाश्चैव विशाखकवने स्थिताः ॥ मनोहरवने वृक्षाः सर्वे कोटिसमन्विताः॥६७॥ नंदीश्वरो गणवरैः स्तूयमानो व्यवस्थितः॥ संतानकस्थलीमध्ये साक्षाद्देवी सरस्वती ॥६८॥ एवं संक्षेपतः प्रोक्ता वनेषु वनवासिनः॥ असंख्याता मयाप्यत्र वक्तुं नो विस्तरेण तु ॥६९॥ इति श्रीलिंगमहापुराणे पूर्वभागे एकोनपंचाशत्तमोऽध्यायः॥४९॥

शिवस्य कंकणमित्यन्वयः॥६६॥ विगताः शाखाः येषां ते विशाखकाः क्रमुकनारिकेलादयस्तद्वने स्थिता इत्यन्वयः। मनोहरवने वृक्षाः सर्वे च ते कोटिसमन्विताश्च सर्वेकोटिसमन्विताः सर्वेऽपि कोटिसंख्या इत्यर्थः । तत्रेति शेषः । नंदीश्वरः शैलादिरवस्थित इत्यग्रिमेणान्वयः ॥ ६७ ॥ सन्तानकस्थलीमध्ये कल्पवृक्षवाटीमध्य इत्यर्थः । " संतानः कल्पवृक्षश्च " इत्यमरः ॥ ६८ ॥ विस्तरेण तु मयापि अत्रास्मिन् जन्मनि वक्तुं नो शक्या इति शेषः ॥ ६९ ॥ आनन्दकाननसमुत्थितकल्पवृक्षो रुद्राभिधः सुरसभक्तिकृतालवालः ॥ आमोदकृन्मुनिमानसभृंगसंघो यत्रास्ति तत्र वसतिं मम देहि शंभो ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

लैंगपंचाशकेऽध्यायें नानागिरिवरेषु वै ॥ शक्रादीनां हि कीर्त्यंते पुराण्यायतनानि च ॥ सूतः गिरिवरेष्वायतनानि पुरीश्च वर्णयति–शितांतशिखर इत्यादिना । शक्रस्तिष्ठतीति शेषः । कुमुदाद्रेः कूटः शृंगं बहुविस्तरस्तत्रेति शेषः । दानवानामष्टौ पुराणीत्यग्रिमेणान्वयः ॥ १–४ ॥ वैकुंठे तत्संज्ञकपर्वते नीललोहितो रुद्रः ॥ ५–१३ ॥ पुष्पकेतौ

सूत उवाच ॥ शितांतशिखरे शक्रः पारिजातवने शुभे ॥ तस्य प्राच्यां कुमुदाद्रिकूटोसौ बहुविस्तरः ॥ १ ॥ अष्टौ पुराण्युदीर्णानि दानवानां द्विजोत्तमाः ॥ सुवर्णकोटरे पुण्ये राक्षसानां महात्मनाम् ॥२॥ नीलकानां पुराण्याहुरष्टषष्टिर्द्विजोत्तमाः॥ महानीलेपि शैलेन्द्रे पुराणि दश पंच च ॥ ३ ॥ हयाननानां मुख्यानां किन्नराणां च सुव्रताः ॥ वेणुसौधे महाशैले विद्याधरपुरत्रयम् ॥ ४ ॥ वैकुंठे गरुडः श्रीमान् करंजे नीललोहितः ॥ वसुधारे वसूनां तु निवासः परिकीर्तितः ॥ ५ ॥ रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम् ॥ सप्तस्थानानि पुण्यानि सिद्धावासयुतानि च ॥ ६ ॥ महत्प्रजापतेः स्थानमेकशृंगे नगोत्तमे ॥ गजशैले तु दुर्गायाः सुमेधे वसवस्तथा ॥ ७ ॥ आदित्याश्च तथा रुद्राः कृतावासास्तथाश्विनौ ॥ अशीतिर्देवपुर्यस्तु हेमकक्षे नगोत्तमे ॥ ८ ॥सुनीले रक्षसां वासाः पंचकोटिशतानि च॥ पंचकूटे पुराण्यासन्पंचकोटिप्रमाणतः ॥ ९ ॥ शतशृंगे पुरशतं यक्षाणाममितौजसाम् ॥ ताम्राभे काद्रवेयाणां विशाखे तु गुहस्य वै ॥ १० ॥ श्वेतोदरे मुनिश्रेष्ठाः सुपर्णस्य महात्मनः ॥ पिशाचके कुबेरस्य हरिकूटे हरेर्गृहम् ॥ ११ ॥ कुमुदे किंनरावासस्त्वंजने चारणालयः ॥ कृष्णे गंधर्वनिलयः पांडुरे पुरसप्तकम् ॥ १२ ॥ विद्याधराणां विप्रेन्द्रा विश्वभोगसमन्वितम् ॥ सहस्रशिखरे शैले दैत्यानामुग्रकर्मणाम् ॥१३॥ पुराणां तु सहस्राणि सप्त शक्रारिणां द्विजाः॥ मुकुटे पन्नगावासः पुष्पकेतौ मुनीश्वराः॥ १४ ॥ वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च ॥ तक्षके चैव शैलेन्द्रे चत्वार्यायतनानि च ॥१५॥ ब्रह्मेन्द्रविष्णुरुद्राणां गुहस्य च महात्मनः ॥ कुबेरस्य च सोमस्य तथान्येषां महात्मनाम्॥१६॥ संत्यायतनमुख्यानि मर्यादापर्वतेष्वपि ॥ श्रीकंठाद्रिगुहावासी सर्वावासः सहोमया ॥ १७ ॥ श्रीकंठस्याधिपत्यं वै सर्वदेवेश्वरस्य च ॥ अंडस्यास्य प्रवृत्तिस्तु श्रीकंठेन न संशयः ॥ १८ ॥

तत्संज्ञकपर्वते वैवस्वतादीनामावास इति शेषमादायाग्रिमेणान्वयः॥ १४–१६॥सर्वं विश्वमावासो यस्य स सर्वावासः शिवः उमया सह श्रीकंठाद्रिगुहावासीत्यन्वयः ॥ १७॥वै निश्चयेन श्रीकंठस्य तत्संज्ञकाद्रेराधिपत्यं सर्वदेवेश्वरस्य शिवस्येत्यर्थः । अस्य ब्रह्मसंज्ञकस्यांडस्य प्रवृत्तिरुत्पत्तिः श्रीकंठेन शिवेन शिवरूपकारणेन अत्र संशयो नेत्यन्वयः ॥ १८ ॥

अनंतो विष्णुरीशो रुद्रः तदाद्याः ब्रह्मपुरोगाः देवाः प्रत्येकं प्रत्येकशः एवं पूर्वोक्तशिवरूपहेतुनाण्डपालकाः ब्रह्मांडरक्षकाः अविद्यायाः मायायाः ईश्वराः स्वामिनः ततस्तस्मात् कारणादिह ब्रह्मांडे चक्रवर्तिनः अप्रतिहताज्ञा इत्युक्ताः कथिता इत्यर्थः ॥ १९ ॥ अत्र भूलोके मर्यादापर्वतेषु श्रीकंठाधिष्ठितानि स्थानानि शृण्वंतु अहं समासतः संक्षेपेणाद्य प्रवदामीत्यन्वयः ॥ २० ॥ ननु भवान् वयं शिवभक्ताः अतः शिवस्थानकथने संक्षेपोऽयुक्त इत्याकांक्षां नुदति—श्रीकंठाधिष्ठितमिति । सविस्तरं कथं वक्ष्ये कथमपि वक्तुमसमर्थ इत्यर्थः ॥ २१ ॥ सर्वावासोपि भवाञ्श्रीकंठाद्रौ यथा स्थितः ॥ प्रीत्यातद्वन्मम हृदयेस्मिन् शिवया सहितश्चिरं तिष्ठ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां

अनंतेशादयस्त्वेवं प्रत्येकं चाण्डपालकाः ॥ चक्रवर्तिन इत्युक्तास्ततो विद्येश्वरास्त्विह ॥ १९ ॥ श्रीकंठाधिष्ठितान्यत्र स्थानानि च समासतः ॥ मर्यादापर्वतेष्वद्य शृण्वंतु प्रवदाम्यहम् ॥ २० ॥ श्रीकंठाधिष्ठितं विश्वं चराचरमिदं जगत् ॥ कालाग्निशिवपर्यंतं कथं वक्ष्ये सविस्तरम् ॥ २१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनविन्यासोद्देशस्थानवर्णनं नाम पंचाशत्तमोऽध्यायः॥५०॥ सूत उवाच ॥ देवकूटे गिरौ मध्ये महाकूटे सुशोभने ॥ हेमवैडूर्यमाणिक्यनीलगोमेदकांतिभिः ॥ १ ॥ तथान्यैर्मणिमुख्यैश्च निर्मिते निर्मले शुभे ॥ शाखाशतसहस्राढ्ये सर्वद्रुमविभूषिते ॥१॥ चंपकाशोकपुंनागवकुलासनमंडिते ॥ पारिजातकसंपूर्णे नानापक्षिगणान्विते ॥ ३ ॥ नैकधातुशतैश्चित्रे विचित्रकुसुमाकुले ॥ नितंबपुष्पसालंबे नैकसत्त्वगणान्विते ॥ ४ ॥ विमलस्वादुपानीये नैकप्रस्रवणैर्युते ॥ निर्झरैः कुसुमाकीर्णैरनेकैश्च विभूषिते ॥ ५ ॥ पुष्पोडुपवहाभिश्च स्रवंतीभिरलंकृते ॥ स्निग्धवर्णं महामूलमनेकस्कंधपादपम् ॥ ६ ॥ रम्यं ह्यविरलच्छायं दशयोजनमंडलम् ॥ तत्र भूतवनं नाम नानाभूतगणालयम् ॥ ७ ॥

पंचाशत्तमोऽध्यायः ॥ ५० ॥ एकपंचाशकेऽध्याये सुरम्याणि शिवस्य च ॥ चतुःस्थानानि प्राधान्यात्कीर्त्यतेऽन्यानि सर्वशः ॥ सूतः प्रथमतो भूतवनायतनं वर्णयति—देवकूट इत्यादिना । देवकूटे गिरौ तत्संज्ञकपर्वते मध्ये मध्यस्थे महाकूटे महाशिखरे॥१॥२॥३॥ नितंबे कटीरके यानि पुष्पानि तैः सालंबे धृतवसन इत्यर्थः । " नितंबो रोधसि स्कंधे शिखरेपि कटीरके" इति विश्वः ॥ ४ ॥ ५ ॥ महांति मूलानि यस्य अनेकस्कंधाः पादपाः वृक्षाः यस्मिन् ॥ ६ ॥ तत्र पूर्वोपवर्णिते शृंगे रम्यमविरलच्छायं दश योजनमंडलं भूतवनं नाम न तु भूतयोन्याश्रयमस्तीति शेषः ॥ ७ ॥

तत्र भूवने महादेवस्य दीप्तमायतनमस्तीति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ रोमशैरातिशायिवकेशैः ॥ १४ ॥ १५॥ भूतपतेः सकलभूतपालकस्य॥ १६ ॥ ललितमावासितमवसानं यस्मिन्केतादृशं बहुगीतमुत्तमगानं तैः वृत्तवल्गितं घंटाधारानादः गर्जितं जयशब्दश्च तैः " वृत्तं प्रसववंधे स्याद्दृष्टाधाराकुचाग्रयोः" इति विश्वः ॥१७॥ ॥ १८ ॥ तत्र भूतवमालय इत्यर्थः । कैलासायतनं वर्णयति—विभक्तेत्यादिना । विभक्तान्यसंलग्नानि चारुशिखराणि सूक्ष्मशिखराणि यस्मिन् तदेव शंखवर्चसमतिशुभ्रं यत्र

महादेवस्य देवस्य शंकरस्य महात्मनः ॥ दीप्तमायतनं तत्र महामाणिविभूषितम् ॥ ८ ॥ हेमप्राकारसंयुक्तं मणितोरणमंडितम् ॥ स्फाटिकैश्च विचित्रैश्च गोपुरैश्च समन्वितम् ॥९॥ सिंहासनैर्मणिमयैः शुभास्तरणसंयुतैः ॥ क्षितावितस्ततः सम्यक् शर्वेणाधिष्ठितैः शुभैः॥१०॥ अम्लानमालानिचितैर्नानावर्णैर्गृहोत्तमैः ॥ मंडपैः सुविचित्रैस्तु स्फाटिकस्तंभसंयुतैः॥११॥ संयुतं सर्वभूतेन्द्रैर्ब्रह्मेन्द्रोपेन्द्रपूजितैः॥वराहगजसिंहर्क्षशार्दूलकरभाननैः॥१२॥ गृध्रोलूकमुखैश्चान्यैर्मृगोष्ट्रजमुखैरपि ॥ प्रमथैर्विविधैः स्थूलैर्गिरिकूटोपमैः शुभैः ॥१३॥ करालैर्हरिकेशैश्च रोमशैश्च महाभुजैः॥ नानावर्णाकृतिधरैर्नानासंस्थानसंस्थितैः॥१४॥ दीप्तास्यैर्दीप्तचरितैर्नन्दीश्वरमुखैः शुभैः॥ब्रह्मेन्द्रविष्णुसंकाशैरणिमादिगुणान्वितैः ॥ १५ ॥ अशून्यममरैर्नित्यं महापरिषदैस्तथा ॥ तत्र भूतपतेर्देवाः पूजां नित्यं प्रयुंजते ॥ १६॥ झर्झरैः शंखपटहैर्भेरीडिंडिमगोमुखैः ॥ ललितावसितोद्गीतैर्वृत्तवल्गितगर्जितैः ॥ १७ ॥ पूजितो वै महादेवः प्रमथैः प्रमथेश्वरः ॥ सिद्धर्षिदेवगंधर्वैर्ब्रह्मणा च महात्मना ॥ १८ ॥ उपेन्द्रप्रमुखैश्चान्यैः पूजितस्तत्र शंकरः ॥ विभक्तचारुशिखरं यत्र तच्छंखवर्चसम् ॥ १९ ॥ कैलासो यक्षराजस्य कुबेरस्य महात्मनः ॥ निवासः कोटियक्षाणां तथान्येषां महात्मनाम् ॥ २० ॥ तत्रापि देवदेवस्य भवस्यायतनं महत् ॥ तस्मिन्नायतने सोमः सदास्ते सगणो हरः ॥२१॥ यत्र मंदाकिनी नाम नलिनी विपुलोदका ॥ सुवर्णमणिसोपाना कुबेरशिखरे शुभे ॥२२॥ जांबूनदमयैः पद्मैर्गंधस्पर्शगुणान्वितैः ॥ नीलवैडूर्यपत्रैश्च गंधोपेतैर्महोत्पलैः ॥२३॥ तथा कुमुदपण्डैश्च महापद्मैरलंकृता ॥ यक्षगंधर्वनारीभिरप्सरोभिश्च सेविता ॥ २४ ॥ देवदानवगंधर्वैर्यक्षराक्षसकिन्नरैः ॥ उपस्पृष्टजला पुण्या नदी मंदाकिनी शुभा ॥ २५ ॥

यस्मिन् शिखरे कुबेरस्य निवासः वसतिस्थानं कैलासः कैलाससंज्ञ इत्यग्रिमेणान्वयः ॥ १९ ॥ २० ॥ तत्रापि कैलासेपि सोमः उमासहितः ॥२१॥ यत्र यस्मिन्कुबेरशिखरे मन्दाकिनी नाम नलिनी व्योमसिंधुः " नलिनी पद्मिनी पद्मा व्योमसिंधुसरोवरे" इति विश्वः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

तस्याः मंदाकिन्याः उत्तरपार्श्वे उत्तरतीरे भवस्यायतनं तत्र पूर्वोक्तस्थाने अव्ययो नाशशून्यः शंकरः आस्ते तिष्ठतीत्यर्थः॥२६॥ तृतीयस्थानं वर्णयति–द्विजा इत्यादिना। द्विजाः शौनकादयः कनकवन्नंदयतीति कनकनंदा तस्याः भागीरथ्याः प्राचीदक्षिणे तीरे प्राग्दक्षिणाश्रिततटे द्विजसहस्राढ्यमनेकतापसद्विजयुक्तमित्यर्थः ॥ २७ ॥ अद्रिसमे अत्युच्चे वा। हिमाद्रियुक्ते इत्यर्थः । रुद्रपुरीं वर्णयति–नंदाया इत्यादिना ॥२८॥२९॥ अन्यान्युद्देशतः शिवस्थानानि कथयति–एवमिति ॥३०॥ अर्णवसंधिषु समुद्रसंधिष्वित्यर्थः॥३१॥

तस्याश्चोत्तरपार्श्वे तु भवस्यायतनं शुभम् ॥ वैडूर्यमणिसंपन्नं तत्रास्ते शंकरोऽव्ययः॥ २६ ॥ द्विजाः कनकनंदायास्तीरे वै प्राचिदक्षिणे ॥ वनं द्विजसहस्राढ्यं मृगपक्षिसमाकुलम् ॥२७॥ तत्रापि सगणः सांबः क्रीडतेद्रिसमे गृहे ॥ नंदायाः पश्चिमे तीरे किंचिद्वै दक्षिणाश्रिते ॥२८॥ पुरं रुद्रपुरी नाम नानाप्रासादसंकुलम् ॥ तत्रापि शतधा कृत्वा ह्यात्मानं चांबया सह ॥ २९ ॥ क्रीडते सगणः सांबस्तच्छिवालयमुच्यते ॥ एवं शतसहस्राणि शर्वस्यायतनानि तु ॥ ३० ॥ प्रतिद्वीपे मुनिश्रेष्ठाः पर्वतेषु वनेषु च ॥ नदीनदतटाकानां तीरेष्वर्णवसंधिषु ॥ ३१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ सूत उवाच ॥ नद्यश्च बहवः प्रोक्ताः सदा बहुजलाः शुभाः॥ सरोवरेभ्यः संभूतास्त्वसंख्याता द्विजोत्तमाः ॥१॥ प्राङ्मुखा दक्षिणास्यास्तु चोत्तरप्रभवाः शुभाः॥ पश्चिमाग्राः पवित्राश्च प्रतिवर्षं प्रकीर्तिताः ॥२॥ आकाशांभोनिधिर्योसौ सोम इत्यभिधीयते ॥ आधारः सर्वभूतानां देवानाममृताकरः ॥ ३ ॥ अस्मात्प्रवृत्ता पुण्योदा नदी त्वाकाशगामिनी ॥ सप्तमेनानिलपथा प्रवृत्ता चामृतोदका ॥४॥ सा ज्योतींष्यनुवर्तन्ती ज्योतिर्गणनिषेविता ॥ ताराकोटिसहस्राणां नभसश्च समायुता ॥ ५ ॥ परिवर्तत्यहरहो यथा सोमस्तथैव सा ॥ चत्वार्यशीतिश्च तथा सहस्राणां समुच्छ्रितः ॥ ६ ॥ योजनानां महामेरुः श्रीकंठाक्रीडकोमलः ॥ तत्रासीनो यतः शर्वः सांबः सह गणेश्वरैः ॥ ७ ॥

भूतवने कैलासे नंदायाः पूर्वपश्चिमे तीरे । क्रीडसि तद्वच्छंभो क्रीडस्वांते चतुष्टये त्वंगे ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकपंचाशत्तमोऽध्यायः ॥५१ ॥ द्विपंचाशत्तमेऽध्याये गंगायाश्चोद्भवः शुभः । नववर्षमनुष्याणां वर्णादिनगवासिनः ॥ सूतः जंबूसंबंधि नद्यादि वर्णयति–नद्यश्चेत्यादिना ॥ १ ॥ २ ॥ गंगाप्रादुर्भावं कथयति–आकाशांभोनिधिरित्यादिना ॥ ३ ॥ ४ ॥ ताराकोटिसहस्राणां नभसश्चेत्यत्र तृतीयार्थे षष्ठी ॥ ५ ॥ ६ ॥ तत्र मेरौ ॥ ७ ॥

गिरिं मेरुं शिवाक्रीडकं साकाशनदी प्रदक्षिणं प्रयाति तस्मात्पुण्यजलेत्यन्वयः । क्रीडतेत्यत्र आत्मनेपदमार्षम् ॥८॥९॥ देवदेवस्य शिवस्य नियोगादाज्ञयेत्यर्थः ॥ १०॥११॥ गंगापदव्युत्पत्तिं दर्शयति—यद्यस्मात्कारणादंबराद्गां पृथिवीं गता प्राप्ता ततः गंगा स्मृतेति शेषः । नववर्षमनुष्यवर्णादि कथयति—केतुमाल इत्यादिना । कालाः कृष्णवर्णाः

क्रीडते सुचिरं कालं तस्मात्पुण्यजला शिवा ॥ गिरिं मेरुं नदी पुण्या सा प्रयाति प्रदक्षिणम् ॥ ८ ॥ विभज्यमानसलिला सा जवेनानिलेन च ॥ मेरोरंतरकूटेषु निपपात चतुर्ष्वपि ॥ ९ ॥ समंतात्समतिक्रम्य सर्वाद्रीन्प्रविभागशः॥ नियोगाद्देवदेवस्य प्रविष्टा सा महार्णवम् ॥ १०॥ अस्या विनिर्गता नद्यः शतशोथ सहस्रशः ॥ सर्वद्वीपाद्रिवर्षेषु बहवः परिकीर्तिताः॥ ११ ॥ क्षुद्रनद्यस्त्वसंख्याता गंगा यद्गां गताम्बरात् ॥ केतुमाले नराः कालाः सर्वे पनसभोजनाः ॥ १२ ॥ स्त्रियश्चोत्पलवर्णाभा जीवितं चायुतं स्मृतम् ॥ भद्राश्वे शुक्लवर्णाश्च स्त्रियश्चन्द्रांशुसन्निभाः ॥ १३ ॥ कालाम्रभोजनाः सर्वे निरातंका रतिप्रियाः ॥ दशवर्षसहस्राणि जीवंति शिवभाविताः ॥ १४ ॥ हिरण्मया इवात्यर्थमीश्वरार्पितचेतसः ॥ तथा रमणके जीवा न्यग्रोधफलभोजनाः ॥ १५ ॥ दशवर्षसहस्राणि शतानि दशपंच च ॥ जवींति शुक्लास्ते सर्वे शिवध्यानपरायणाः ॥ १६ ॥ हैरण्मया महाभागा हिरण्मयवनाश्रयाः ॥ एकादश सहस्राणि शतानि दशपंच च ॥ १७ ॥ वर्षाणां तत्र जीवंति अश्वत्थाशनजविनाः ॥ हिरण्मया इवात्यर्थमीश्वरार्पितमानसाः ॥ १८ ॥ कुरुवर्षे तु कुरवः स्वर्गलोकात्परिच्युताः ॥ सर्वे मैथुनजाताश्च क्षीरिणः क्षिरिभोजनाः ॥ १९ ॥ अन्योन्यमनुरक्ताश्च चक्रवाकसधर्मिणः ॥ अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः ॥ २० ॥ त्रयोदश सहस्राणि शतानि दशपंच च ॥ जीवंति ते महावीर्या न चान्यस्त्रीनिषेविणः ॥ २१ ॥ सहैव मरणं तेषां कुरूणां स्वर्गवासिनाम् ॥ हृष्टानां सुप्रवृद्धानां सर्वान्नामृतभोजिनाम् ॥ २२ ॥ सदा तु चंद्रकान्तानां सदा यौवनशालिनाम् ॥ श्यामांगानां सदा सर्वभूषणास्पददेहिनाम् ॥ २३ ॥ जंबूद्वीपे तु तत्रापि कुरुवर्षं सुशोभनम् ॥ तत्र चन्द्रप्रभं शम्भोर्विमानं चंद्रमौलिनः ॥ २४ ॥

'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति विश्वः ॥ १२ ॥ अयुतं दशसहस्रवर्षमितमित्यर्थः ॥ १३ ॥१४॥१५॥१६॥ हैरण्मयाः हिरण्मयवर्षीया इत्यर्थः ॥१७॥१८॥ क्षीरिणः क्षीरमयाः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तत्र कुरुवर्षे ॥ २४ ॥

भारते वर्षे मर्त्याः मनुष्याः पुण्याः पुण्यविशिष्टा इत्यर्थः । एतन्माहात्म्यमुक्तं विष्णुपुराणे–" गायंति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ॥ स्वर्गापवर्गास्पद हेतुभूते भवंति भूयः पुरुषाः सुरत्वात् ॥" इति । एतदेवोक्तं भागवते " कल्पायुषां स्थानजयात्पुनर्भवात्क्षणायुषां भारतभूजयो वरम्" इति ॥२५॥२६॥ भारतखंडांतरद्वीपानि वर्णयति–इंद्रद्वीप इति । एतदेवोक्तं विष्णुपुराणे " इंद्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गांधर्वस्त्वथ वारुणः ॥ अयं तु नवमस्तेषां द्वीपः सागर

वर्षे तु भारते मर्त्याः पुण्याः कर्मवशायुषः ॥ शतायुषः समाख्याता नानावर्णाल्पदेहिनः॥२५॥ नानादेवार्चने युक्ता नानाकर्मफलाशिनः॥ नानाज्ञानार्थसंपन्ना दुर्बलाश्चाल्पभोगिनः ॥ २६ ॥ इंद्रद्वीपे तथा केचित्तथैव च कसेरुके ॥ ताम्रद्वीपं गताः केचित्केचिद्देशं गभस्तिमत् ॥ २७ ॥ नागद्वीपं तथा सौम्यं गांधर्वं वारुणं गताः ॥ केचिन्म्लेच्छाः पुलिंदाश्च नानाजातिसमुद्भवाः ॥ २८ ॥ पूर्वे किरातास्तस्यांते पश्चिमे यवनाः स्मृताः ॥ ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च सर्वशः ॥ २९ ॥ इज्यायुद्धवाणिज्याभिर्वर्तयंतो व्यवस्थिताः ॥ तेषां संव्यवहारोयं वर्ततेऽत्र परस्परम् ॥ ३० ॥ धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ॥ संकल्पश्चाभिमानश्च आश्रमाणां यथाविधि ॥३१॥ इह स्वर्गापवर्गार्थं प्रवृत्तिर्यत्र मानुषी ॥ तेषां च युगकर्माणि नान्यत्र मुनिपुंगवाः ॥ ३२ ॥ दशवर्षसहस्राणि स्थितिः किंपुरुषे नृणाम् ॥ सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ॥ ३३ ॥ अनामया ह्यशोकाश्च सर्वे ते शिवभाविताः ॥ शुद्धसत्त्वाश्च हेमाभाः सदाराः प्लक्षभोजनाः ॥ ३४ ॥ महारजतसंकाशा हरिवर्षेपि मानवाः ॥ देवलोकाच्च्युताः सर्वे देवाकाराश्च सर्वशः ॥३५॥ हरं यजंति सर्वेश पिबंतीक्षुरसं शुभम् ॥ न जरा बाधते तेन न च जीर्यंति ते नराः ॥ ३६ ॥ दशवर्षसहस्राणि तत्र जीवंति मानवाः ॥ मध्यमं यन्मया प्रोक्तं नाम्ना वर्षमिलावृतम् ॥ ३७ ॥ न तत्र सूर्यस्तपति न ते जीर्यंति मानवाः ॥ चंद्रसूर्यौ न नक्षत्रं न प्रकाशमिलावृते ॥ ३८ ॥ पद्मप्रभाः पद्ममुखाः पद्मपत्रनिभेक्षणाः ॥ पद्मपत्रसुगंधाश्च जायत भवभाविताः ॥ ३९ ॥

संवृतः ॥" इति ॥ २७ ॥ नवममेतद्भारतवर्षसंज्ञं द्वीपं वर्णयति–केचिदित्यादिना ॥ २८ ॥ २९॥३०॥३१॥ इह भरतखंडे यत्र भारतवर्षे मानुषी प्रवृत्तिः मानुषजन्मेत्यर्थः । तेषां भारतवर्षीयाणामित्यर्थः । युगकर्माणि कृतादियुगधर्माः । एतदेवोक्तं विष्णुपुराणे–"चत्वारि भारते वर्षे युगान्यत्र महामुने । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित्॥" इति ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ तेनेक्षुरसपानेन जराक्षुधेत्यर्थः । न बाधते न च जीर्यंति जरां न प्राप्नुवंतीर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

अनिष्पंदाः घर्मादिशून्या इत्यर्थः ॥४०४१॥ मृत्युमानपमृत्युविशिष्ट इत्यर्थः ॥४२॥४३॥४४॥ पर्वतवासिनः कथयति—हेमकूट इत्यादिना ॥४५॥४६॥४७॥४८॥ नीलश्च श्वेतश्च त्रिशृंगश्चेति समाहारः । तस्मिन्पर्वतत्रय इत्यर्थः ॥ ४९ ॥ ५० ॥ एते नीलादय इत्यर्थः ॥५१॥ देवाद्यैः स्पृहणीयं ब्राह्मण्यं भारते वर्षे ॥ दत्तं कृपया शंभो सफलं

जंबूफलरसाहारा अनिष्पन्दाः सुगंधिनः ॥ देवलोकागतास्तत्र जायंते ह्यजरामराः ॥ ४० ॥ त्रयोदशसहस्राणि वर्षाणां ते नरोत्तमाः ॥ आयुःप्रमाणं जीवंति वर्षे दिव्ये त्विलावृते ॥ ४१ ॥ जंबूफलरसं पीत्वा न जरा बाधते त्विमान् ॥ न क्षुधा न क्लमश्चापि न जनो मृत्युमांस्तथा ॥ ४२ ॥ तत्र जाम्बूनदं नाम कनकं देवभूषणम् ॥ इंद्रगोपप्रतीकाशं जायते भास्वरं तु तत् ॥ ४३ ॥ एवं मया समाख्याता नववर्षानुवर्तिनः ॥ वर्णायुर्भोजनाद्यानि संक्षिप्य न तु विस्तरात् ॥ ४४ ॥ हेमकूटे तु गंधर्वा विज्ञेयाश्चाप्सरोगणाः ॥ सर्वे नागाश्च निषधे शेषवासुकितक्षकाः ॥ ४५ ॥ महाबलास्त्रयस्त्रिंशद्रमंते याज्ञिकाः सुराः ॥ नीले तु वैडूर्यमये सिद्धा ब्रह्मर्षयोऽमलाः ॥ ४६ ॥ दैत्यानां दानवानां च श्वेतः पर्वत उच्यते ॥ शृंगवान् पर्वतश्चैव पितॄणां निलयः सदा ॥ ४७ ॥ हिमवान् यक्षमुख्यानां भूतानामीश्वरस्य च ॥ सर्वाद्रिषु महादेवो हरिणा ब्रह्मणांबया ॥ ४८ ॥ नंदिना च गणैश्चैव वर्षेषु च वनेषु च ॥ नीलश्वेतत्रिशृंगे च भगवान्नीललोहितः ॥ ४९ ॥ सिद्धैर्देवैश्च पितृभिर्दृष्टो नित्यं विशेषतः ॥ नीलश्च वैडूर्यमयः श्वेतः शुक्लो हिरण्मयः ॥५०॥ मयूरबर्हवर्णस्तु शातकुंभस्त्रिशृंगवान् ॥ एते पर्वतराजानो जंबूद्वीपे व्यवस्थिताः॥५१॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशस्वभाववर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

सूत उवाच ॥ प्लक्षद्वीपादिद्वीपेषु सप्त सप्तसु पर्वताः ॥ ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्वताः॥ १ ॥ प्लक्षद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् ॥ गोमेदकोत्र प्रथमो द्वितीयश्चांद्र उच्यते ॥ २ ॥ तृतीयो नारदो नाम चतुर्थो दुंदुभिः स्मृतः॥ पंचमः सोमको नाम सुमनाः षष्ठ उच्यते ॥ ३ ॥ स एव वैभवः प्रोक्तो वैभ्राजः सप्तमः स्मृतः ॥ सप्तैते गिरयः प्रोक्ताः प्लक्षद्वीपे विशेषतः ॥ ४ ॥

भूयात्प्रसादात्ते ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विपंचाशोऽध्यायः ॥ ५२ ॥ त्रिपंचाशत्तमे प्रोक्तं प्लक्षद्वीपाद्यनुक्रमात् । भूलोकश्चोर्ध्वलोकाश्च नरका यक्षचेष्टितम् ॥ प्लक्षद्वीपादिद्वीपेषु सप्त सप्तसु पर्वताः । संतीति शेषः । वर्षपर्वताः वर्षविभाजकगिरयः । ऋज्वायताः प्रतिदिशं निविष्टा इत्यन्वयः ॥१॥२॥ ३ ॥ ४ ॥

॥५॥६॥ तान् कुलपर्वतानित्यर्थः॥७॥८॥ मंदरशब्दार्थं दर्शयति—मन्दा इति। अपां शिवमौलिनिःसृतगंगोदकानाम् एतदर्थकं मंदर इति रूपं पृषोदरादित्वात् ज्ञेयम् ॥९–१२॥

सप्त वै शाल्मलिद्वीपे तांस्तु वक्ष्याम्यनुक्रमात् ॥ कुमुदश्चोत्तमश्चैव पर्वतश्च बलाहकः ॥ ५ ॥ द्रोणः कंकश्च महिषः ककुद्मान् सप्तमः स्मृतः ॥ कुशद्वीपे तु सप्तैव द्वीपाश्च कुलपर्वताः ॥ ६ ॥ तांस्तु संक्षेपतो वक्ष्ये नाममात्रेण वै क्रमात् ॥ विद्रुमः प्रथमः प्रोक्तो द्वितीयो हेमपर्वतः ॥ ७ ॥ तृतीयो द्युतिमान्नाम चतुर्थः पुष्पितः स्मृतः ॥ कुशेशयः पंचमस्तु षष्ठो हरिगिरिः स्मृतः ॥ ८ ॥ सप्तमो मंदरः श्रीमान्महादेवनिकेतनम् ॥ मंदा इति ह्यपां नाम मंदरो धारणादपाम् ॥ ९ ॥ तत्र साक्षाद्वृषांकस्तु विश्वेशो विमलः शिवः ॥ सोमः सनंदी भगवानास्ते हेमगृहोत्तमे ॥१०॥ तपसा तोषितः पूर्वं मंदरेण महेश्वरः ॥ अविमुक्ते महाक्षेत्रे लेभे स परमं वरम् ॥११॥ प्रार्थितश्च महादेवो निवासार्थं सहांबया॥ अविमुक्तादुपागम्य चक्रे वासं स मंदरे॥१२॥सनंदी सगणः सोमस्तेनासौ तत्र मुंचति ॥ क्रौञ्चद्वीपे तु सप्तेह क्रौंचाद्याः कुलपर्वताः॥१३॥क्रौंचो वामनकः पश्चात्तृतीयश्चांधकारकः॥ अंधकारात्परश्चापि दिवावृन्नाम पर्वतः ॥१४॥दिवावृतः परश्चापि विविंदो गिरिरुच्यते ॥ विविंदात्परतश्चापि पुंडरीको महागिरिः ॥१५॥ पुंडरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः ॥ एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्वताः ॥ १६ ॥ शाकद्वीपे च गिरयः सप्त तांस्तु निबोधत ॥ उदयो रैवतश्चापि इतामको मुनिसत्तमाः ॥१७॥ राजतश्च गिरिः श्रीमानांबिकेयः शुशोभनः॥आंबिकेयात्परो रम्यः सर्वौषधिसमन्वितः॥ १८ ॥ तथैव केसरीत्युक्तो यतो वायुः प्रजायते ॥ पुष्करे पर्वतः श्रीमानेक एव महाशिलः॥१९॥चित्रैर्मणिमयैः कूटैः शिलाजालैः समुच्छ्रितैः ॥ द्वीपस्य तस्य पूर्वार्धे चित्रसानुस्थितो महान्॥२०॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ अधश्चैव चतुस्त्रिंशत्सहस्राणि महाचलः ॥ २१ ॥ द्वीपस्यार्धे परिक्षिप्तः पर्वतो मानसोत्तरः ॥ स्थितो वेलासमीपे तु नवचंद्र इवोदितः ॥२२॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ तावदेव तु विस्तीर्णः पार्श्वतः परिमंडलः ॥ २३ ॥ स एव द्वीपपश्चार्धे मानसः पृथिवीधरः ॥ एक एव महासानुः सन्निवेशाद्द्विधा कृतः ॥ २४ ॥ तस्मिन्द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ॥ राजतौ मानसस्याथ पर्वतस्यानुमंडलौ ॥ २५ ॥

तेन वेगेणेत्यर्थः ॥ १३–१८ ॥ महत्यः शिलाः यस्मिन्नसौ महाशिलः ॥ १९ ॥ चित्राणि चित्रवर्णानि मानूनि शिखराणि यस्य स चित्रसानुः ॥ २०–२५ ॥

॥२६॥२७॥२८॥ एवं पूर्वोक्तक्रमेणेत्यर्थः ॥ २९-३५ ॥ आभानोर्भानुमंडलपर्यंतमित्यर्थः । भुवः तत्संज्ञकलोकः आध्रुवात् ध्रुवपर्यंतं स्वः स्वर्लोकः इत्यर्थः । वायुचक्राणि कथयति-आवहाद्या इति ॥३६॥३७॥ आवहादिवायुसप्तचक्रवर्तिनः क्रमशः कथयति-बलाहका इत्यादिना ॥ ३८ ॥ महीपृष्ठाद्भूपृष्ठमारभ्य आध्रुवात् ध्रुवपर्यंतमूर्ध्वं योजनानां

महावीतं तु यद्वर्षं बाह्यतो मानसस्य तु ॥ तस्यैवाभ्यंतरो यस्तु धातकीखण्ड उच्यते ॥ २६ ॥ स्वादूदकेनोदधिना पुष्करः परिवारितः॥ पुष्करद्वीपविस्तारविस्तीर्णोसौ समंततः॥२७॥विस्तारान्मंडलाच्चैव पुष्करस्य समेन तु ॥ एवं द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ॥२८॥ द्वीपस्यानंतरो यस्तु समुद्रः सप्तमस्तु वै ॥ एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम् ॥ २९॥ परेण पुष्करस्याथ अनुवृत्य स्थितो महान् ॥ स्वादूदकसमुद्रस्तु समंतात्परिवेष्टय च ॥ ३० ॥ परेण तस्य महती दृश्यते लोकसंस्थितिः ॥ कांचनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥ ३१ ॥ तस्याः परेण शैलस्तु मर्यादापारमंडलः ॥ प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ ३२ ॥ दृश्यादृश्यगिरिर्यावत्तावदेषा धरा द्विजाः ॥ योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ ३३ ॥ तावांश्च विस्तरस्तस्य लोकालोकमहागिरेः ॥ अर्वाचीने तु तस्यार्धे चरंति रविरश्मयः॥ ३४ ॥ परार्धे तु तमो नित्यं लोकालोकस्ततः स्मृतः ॥ एवं संक्षेपतः प्रोक्तो भूर्लोकस्य च विस्तरः॥३५॥ आभानोर्वै भुवः स्वस्तु आध्रुवान्मुनिसत्तमाः ॥ आवहाद्या निविष्टास्तु वायोर्वै सप्त नेमयः ॥ ३६ ॥ आवहः प्रवहश्चैव ततश्चानुवहस्तथा ॥ संवहो विवहश्चाथ ततश्चोर्ध्वं परावहः ॥ ३७ ॥ द्विजाः परिवहश्चेति वायोर्वै सप्त नेमयः ॥ बलाहकास्तथा भानुश्चंद्रो नक्षत्रराशयः ॥ ३८ ॥ ग्रहाणि ऋषयः सप्त ध्रुवो विप्राः क्रमादिह ॥ योजनानां महीपृष्ठादूर्ध्वं पंचदशाध्रुवात् ॥ ३९ ॥ नियुतान्येकनियुतं भूपृष्ठाद्भानुमंडलम् ॥ रथः षोडशसाहस्रो भास्करस्य तथोपरि ॥ ४० ॥ चतुराशीतिसाहस्रो मेरुश्चोपरि भूतलात् ॥ कोटियोजनमाक्रम्य महर्लोको ध्रुवाद्ध्रुवः ॥ ४१ ॥ जनलोको महर्लोकात्तथा कोटिद्वयं द्विजाः ॥ जनलोकात्तपोलोकश्चतस्रः कोट्यो मतः ॥ ४२ ॥ प्राजापत्याद्ब्रह्मलोकः कोटिषट्कं विसृज्य तु ॥ पुण्यलोकास्तु सप्तैते ह्यंडेस्मिन्कथिता द्विजाः ॥ ४३ ॥

पंचदश नियुतानि भवंतीति शेषमादायाग्रिमस्थेनान्वयः॥३९॥४०॥ध्रुवात् ध्रुवलोकात् कोटियोजनमाक्रम्य परिच्छिद्य महर्लोकः ध्रुवः दैनन्दिनप्रलयरहित इत्यर्थः ॥४१-४३॥

मायाऽविधान्ते समाप्तौ यासां ता मायांताः घोरोऽहंकारः आद्यः कारणभूतो यासां ताः घोराद्याः नरकाणामष्टाविंशतिकोटय इत्यन्वयः ॥ ४४ ॥ ४५ ॥ नरकाणि प्रत्येकं पंचकानि पंचसंख्याकानि ॥४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ अदेहिनः वस्तुतो देहशून्यस्य परमात्मनः शिवस्य अखिलं समस्तं मायिकं देहम् अहो आश्चर्यमित्यर्थः । गृहमेधिनः अष्टमूर्तेः शर्वस्य गृहिणी प्रकृतिरित्यग्रिमेणान्वयः ॥ ५१ ॥ ५२ ॥ भगवान् शिव एव षड्विंशतितत्त्वरूप इति वर्णयति—आद्यंतेति । पुमान् पुरुषः प्रधानमूर्तिः

अधः सप्ततलानां तु नरकाणां हि कोटयः ॥ मायान्ताश्चैव घोराद्या अष्टाविंशतिरेव तु ॥४४॥ पापिनस्तेषु पच्यंते स्वस्वकर्मानुरूपतः ॥ अवीच्यंतानि सर्वाणि रौरवाद्यानि तेषु च ॥ ४५ ॥ प्रत्येकं पंचकान्याहुर्नरकाणि विशेषतः ॥ अंडमादौ मया प्रोक्तमंडस्यावरणानि च ॥ ४६ ॥ हिरण्यगर्भसर्गश्च प्रसंगाद्बहुविस्तरात् ॥ अंडानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः ॥ ४७ ॥ सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधस्तथा ॥ अंडेष्वेतेषु सर्वेषु भुवनानि चतुर्दश ॥ ४८ ॥ प्रत्यंडं द्विजशार्दूलास्तेषां हेतुर्महेश्वरः ॥ अंडेषु चांडबाह्येषु तथांडावरणेषु च ॥ ४९ ॥ तमोऽन्ते च तमःपारे चाष्टमूर्तिर्व्यवस्थितः ॥ अस्यात्मनो महेशस्य महादेवस्य धीमतः ॥५०॥ अदेहिनस्त्वहो देहमखिलं परमात्मनः ॥ अस्याष्टमूर्तेः शर्वस्य शिवस्य गृहमेधिनः ॥५१ ॥ गृहिणी प्रकृतिर्दिव्या प्रजाश्च महदादयः ॥ पशवः किंकरास्तस्य सर्वे देहाभिमानिनः ॥ ५२ ॥ आद्यंतहीनो भगवाननंतः पुमान्प्रधानप्रमुखाश्च सप्त ॥ प्रधानमूर्तिस्त्वथ षोडशांगो महेश्वरश्चाष्टतनुः स एव॥५३॥ आज्ञाबलात्तस्य धरा स्थितेह धराधरा वारिधराः समुद्राः ॥ज्योतिर्गणः शक्रमुखाः सुराश्च वैमानिकाः स्थावरजंगमाश्च॥५४॥ दृष्ट्वा यक्षं लक्षणैर्हीनमीशं दृष्ट्वा सेन्द्रास्ते किमेतत्त्विहेति ॥ यक्षं गत्वा निश्चयात्पावकाद्याः शक्तिक्षीणाश्चाभवन्यत्ततोपि ॥ ५५ ॥ दग्धुं तृणं वापि समक्षमस्य यक्षस्य वह्निर्न शशाक विप्राः ॥ वायुस्तृणं चालयितुं तथान्ये स्वान्स्वान्प्रभावान् सकलामरेन्द्राः॥५६॥ तदा स्वयं वृत्ररिपुः सुरेन्द्रैः सुरेश्वरः सर्वसमृद्धिहेतुः ॥ सुरेश्वरं यक्षमुवाच को वा भवानितीत्थं स कुतूहलात्मा ॥ ५७ ॥

प्रकृतिरूपः प्रधानप्रमुखाः प्रधानाद्याः सप्त महत्तत्त्वाहंकारशब्दादि पंच गुणरूपाः षोडशांगः पंचभूतदशेन्द्रियमनोरूपः अष्टतनुः स शिव एवेत्यन्वयः ॥ ५३ ॥ ५४ ॥ लक्षणैः स्वकीयचिह्नैर्हीनम् ईशं शिवं यक्षं यक्षरूपिणं दृष्ट्वा सेन्द्राः इंद्रसहिताः देवाः इहैतत्किंविति अनिश्चयाद्यक्षं गत्वा शक्तिक्षीणाः अभवन्नित्यन्वयः। एतद्विस्तरो ब्रह्मगीताया मुक्तः—"स्वस्य दर्शयितुं तेषां दुर्ज्ञेयत्वं तथैव च । आविर्बभूव सर्वज्ञो यक्षरूपेण हे सुराः ॥" इत्यादिना ॥ ५५ ॥ सुरेश्वरं शिवं यक्षं यक्षरूपिणमुवाचेत्यन्वयः ॥ ५६॥५७॥

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ अजस्य शिवस्य नियोगादजः ब्रह्मा तस्मात् अजात् ब्रह्मणः अंडं तस्मादंडाज्ज्योतिर्गणैरखिलं लोकजातमभूत्तस्मात्तत्पूर्वोक्तं सर्वमजात्मकं शिवस्वरूपमित्यर्थः ॥६२॥ शिवः स्वकीयैः सकलैश्च चिह्नैरुमायुतः प्राविश मानसं मे । नो चेद्विमो तच्छिव भेदभ्रांत्या यक्षादिरूपं न विभावयिष्यति ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ चतुःपंचाशकेऽध्याये सूर्यस्य गतिरुत्तमा ॥ ध्रुवस्य चाभ्रमेघानां विशेषाः समुदाहृताः ॥ सूतः ज्योतिश्चक्रं

तदा ह्यदृश्यं गत एव यक्षस्तदांबिका हैमवती शुभास्या ॥ उमा शुभैराभरणैरनेकैः सुशोभमाना त्वनु चाविरासीत् ॥ ५८ ॥ तां शक्रमुख्या बहुशोभमानामुमामजां हैमवतीमपृच्छन् ॥ किमेतदीशे बहुशोभमाने को वांबिके यक्षवपुश्चकास्ति ॥ ५९ ॥ निशम्य तद्यक्षमुमाम्बिकाह त्वगोचरश्चेति सुराः सशक्राः ॥ प्रणेमुरेनां मृगराजगामिनीमुमामजां लोहितशुक्लकृष्णाम् ॥ ६० ॥ संभाविता सा सकलामरेन्द्रैः सर्वप्रवृत्तिस्तु सुरासुराणाम् ॥ अहं पुरासं प्रकृतिश्च पुंसो यक्षस्य चाज्ञावशगेत्यथाह ॥ ६१ ॥ तस्माद्द्विजाः सर्वमजस्य तस्य नियोगतश्चांडमभूदजाद्वै ॥ अजश्च अंडादखिलं च तस्माज्ज्योतिर्गणैर्लोकमजात्मकं तत् ॥ ६२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशविन्यासनिर्णयो नाम त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ सूत उवाच ॥ ज्योतिर्गणप्रचारं वै संक्षिप्यांडे ब्रवीम्यहम् ॥ देवक्षेत्राणि चालोक्य ग्रहचारप्रसिद्धये ॥ १ ॥ मानसोपरि माहेन्द्री प्राच्यां मेरोः पुरी स्थिता ॥ दक्षिणे भानुपुत्रस्य वरुणस्य च वारुणी ॥ २ ॥ सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः ॥ अमरावती संयमनी सुखा चैव विभा क्रमात् ॥ ३ ॥ लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने ॥ काष्ठां गतस्य सूर्यस्य गतिर्या तां निबोधत ॥ ४ ॥ दक्षिणप्रक्रमे भानुः क्षिप्तेषुरिव धावति ॥ ज्योतिषां चक्रमादाय सततं परिगच्छति ॥ ५ ॥ पुरांतगो यदा भानुः शक्रस्य भवति प्रभुः ॥ सर्वैः सायमनैः सौरो ह्युदयो दृश्यते द्विजाः ॥ ६ ॥

निरूपयाति–ज्योतिरित्यादिना । ग्रहाणां चारो गतिः तस्य प्रसिद्धये सम्यक् ज्ञानार्थं देवक्षेत्राणि स्थानानि आलोक्य निरूप्येत्यर्थः ॥ १ ॥ मेरोः प्राच्यां मानसोपरि मानसाचलोपरि भानुपुत्रस्य यमस्य ॥ २ ॥ ३ ॥ लोकपालोपरिष्टाल्लोकपालोपरिभागे सर्वतः सूर्यस्य गतिः दक्षिणायने काष्ठां दक्षिणाशां गतस्य या गतिस्तां निबोधत जानीतेत्यर्थः ॥ ४ ॥ क्षिप्तेषुरिव अतित्वरितगत्येत्यर्थः ॥ ५ ॥ ६ ॥

स एव संयमिनीस्थ एव सुखवत्यां निशांतस्थः प्रातःकालः प्रदृश्यते इत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ पुष्करमध्ये गगनमध्ये इत्यर्थः । "पुष्करं पंकजे व्योम्नि " इति विश्वः ॥ ॥ १० ॥ मुहूर्तेस्य तत्कालगमनस्य योजनानामिमां वक्ष्यमाणां संख्यां निबोधतेत्यन्वयः ॥ ११ ॥ सा पूर्वोक्ता संख्या शतसहस्राणामेकात्रिंशत्तथान्यानि अधिकानि पंचाशच्च

स एव सुखवत्यां तु निशांतस्थः प्रदृश्यते॥ अस्तमेति पुनः सूर्यो विभायां विश्वदृग्विभुः॥७॥मया प्रोक्तोमरावत्यां यथासौ वारितस्करः॥ तथा संयमनीं प्राप्य सुखां चैव विभां खगः ॥ ८ ॥ यदापराह्णस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः ॥ तदा त्वपररात्रश्च वायुभागे सुदारुणः ॥९॥ ईशान्यां पूर्वरात्रस्तु गतिरेषा च सर्वतः ॥ एवं पुष्करमध्ये तु यदा सर्पति वारिपः ॥१०॥त्रिंशांशकं तु मेदिन्यां मुहूर्तेनैव गच्छति ॥ योजनानां मुहूर्तस्य इमां संख्यां निबोधत ॥ ११ ॥ पूर्णा शतसहस्राणामेकात्रिंशत्तु सा स्मृता ॥ पंचाशच्च तथान्यानि सहस्राण्यधिकानि तु ॥ १२ ॥ मौहूर्तिकी गतिर्ह्येषा भास्करस्य महात्मनः ॥ एतेन गतियोगेन यदा काष्ठां तु दक्षिणाम् ॥ १३ ॥ पर्यपृच्छेत् पतंगोपि सौम्याशां चोत्तरेऽहनि ॥ मध्ये तु पुष्करस्याथ भ्रमते दक्षिणायने ॥१४॥ मानसोत्तरशैले तु महातेजा विभावसुः ॥ मंडलानां शतं पूर्णं तदशीत्यधिकं विभुः ॥ १५ ॥ बाह्यं चाभ्यंतरं प्रोक्तमुत्तरायणदक्षिणे ॥ प्रत्यहं चरते तानि सूर्यो वै मंडलानि तु ॥ १६ ॥ कुलालचक्रपर्यंतो यथा शीघ्रं प्रवर्तते ॥ दक्षिणप्रक्रमे देवस्तथा शीघ्रं प्रवर्तते ॥ १७ ॥ तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥ सूर्यो द्वादशभिः शीघ्रं मुहूर्तैर्दक्षिणायने ॥ १८ ॥ त्रयोदशार्धमृक्षाणामह्ना तु चरते रविः ॥ मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन्॥१९॥ कुलालचक्रमध्यं तु यथा मंदं प्रसर्पति ॥ तथोदगयने सूर्यः सर्पते मंदविक्रमः ॥ २० ॥ तस्माद्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ स रथो धिष्ठितो भानोरादित्यैर्मुनिभिस्तथा ॥ २१॥ गंधर्वैरप्सरोभिश्च ग्रामणीः सर्पराक्षसैः ॥ प्रदीपयन् सहस्रांशुरग्रतः पृष्ठतोप्यधः ॥२२॥ ऊर्ध्वतश्च करं त्यक्त्वा सभां ब्राह्मीमनुत्तमाम् ॥ अंभोभिर्मुनिभिस्त्यक्तैः संध्यायां तु निशाचरान् ॥ २३ ॥ हत्वा हत्वा तु संप्राप्तान्ब्राह्मणे श्चरते रविः ॥ अष्टादश मुहूर्तं तु उत्तरायणपश्चिमम् ॥ २४ ॥

सहस्राणि पूर्णा संपूर्णा स्मृतेत्यन्वयः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

॥ २६ ॥ २७ ॥ २८ ॥ तस्य ध्रुवस्य मनसा इच्छयेत्यर्थः । तेन ध्रुवेण अधिष्ठितः ध्रुवे स्थित इत्यर्थः । ससमीरणः देवो भानुः किरणैः सर्वतः तोयमादाय तिष्ठतीत्यग्रिम स्थैरन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ भास्करशब्दार्थं दर्शयति—अभासयज्जगद्दीप्तं चकार तेन दीप्तकरणेन भास्करः स्मृत इति शेषः । अत्र अभासयादिति पदच्छेदः ।



अहर्भवाति तत्रापि चरते मंदविक्रमः ॥ त्रयोदशार्धमृक्षाणि नक्तं द्वादशभी रविः ॥ मुहूर्तैस्तावदृक्षाणि दिवाष्टादशभिश्चरन् ॥ २५ ॥ ततो मंदतरं नाभ्यां चक्रं भ्रमाति वै यथा ॥ मृत्पिंड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ २६ ॥ त्रिंशन्मुहूर्तैरेवाहुरहोरात्रं पुराविदः ॥ उभयोः काष्ठयोर्मध्ये भ्रमतो मंडलानि तु ॥ २७ ॥ कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ॥ औत्तानपादो भ्रमाति ग्रहैः सार्धं ग्रहाग्रणीः ॥२८॥ गणो मुनिज्योतिषां तु मनसा तस्य सर्पति ॥ अधिष्ठितः पुनस्तेन भानुस्त्वादाय तिष्ठति ॥ २९ ॥ किरणैः सर्वतस्तोयं देवो वै ससमीरणः ॥ औत्तानपादस्य सदा ध्रुवत्वं वै प्रसादतः ॥ ३० ॥ विष्णोरौत्तानपादेन चाप्तं तातस्य हेतुना ॥ आपः पीतास्तु सूर्येण क्रमंते शशिनः क्रमात् ॥ ३१ ॥ निशाकरान्निस्रवंते जीमूतान्प्रत्यपः क्रमात् ॥ वृन्दं जलमुचां चैव श्वसनेनाभिताडितम् ॥ ३२ ॥ क्ष्मायां सृष्टिं विसृजतेऽभासयत्तेन भास्करः ॥ तोयस्य नास्ति वै नाशः तदेव परिवर्तते ॥ ३३ ॥ हिताय सर्वजंतूनां गतिः शर्वेण निर्मिता ॥ भूर्भुवः स्वस्तथा ह्यापो ह्यन्नं चामृतमेव च ॥ ३४ ॥ प्राणा वै जगतामापो भूतानि भुवनानि च ॥ बहुनात्र किमुक्तेन चराचरमिदं जगत् ॥३५॥ अपां शिवस्य भगवानाधिपत्ये व्यवस्थितः॥ अपां त्वधिपतिर्देवो भव इत्येव कीर्तितः॥३६॥भवात्मकं जगत्सर्वमिति किं चेह चाद्भुतम्॥ नारायणत्वं देवस्य हरेश्चाद्भिः कृतं विभोः॥ जगतामालयो विष्णुस्त्वापस्तस्यालयानि तु॥३७॥ दन्दह्यमानेषु चराचरेषु गोधूमभूतास्त्वथ निष्क्रमंति ॥ या या ऊर्ध्वं मारुतेनेरिता वै तास्तास्त्वभ्राण्यग्निना वायुना च ॥ ३८ ॥ अतो धूमाग्निवातानां संयोगस्त्वभ्रमुच्यते ॥ वारीणि वर्षतीत्यभ्रमभ्रस्येशः सहस्रदृक् ॥३९॥ यज्ञधूमोद्भवं चापि द्विजानां हितकृत्सदा ॥ दावाग्निधूमसंभूतमभ्रं वनहितं स्मृतम्॥४०॥



तत्पूर्वस्थितजलमेव परिवर्तते ऊर्ध्वाधो गच्छतीत्यर्थः ॥३३–३७॥ गोधूमभूताः पृथिवीसंबंधिधूमरूपाः या याः ऊर्ध्वमाकाशे निष्क्रमंति तास्ताः मारुतेनेरिताः अग्निना वायुना च सहिता अभ्राणि भवंतीति शेषः ॥३८॥ अभ्रशब्दार्थमाह । आपः वारीणि भ्रमति वर्षतीत्यभ्रम ॥ ३९ ॥ अभ्रविशेषान् [illegible] कथयति—यज्ञ इत्यादिना ॥ ४० ॥

ततः शंखस्पर्शात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ततो विष्णुवरदानानंतरम् ॥३९॥४०॥ अवापेत्ययं द्विपाच्छ्लोकः ॥४१॥ तस्योत्तानपाद्पुत्रस्य तद्द्वादशाक्षरमंत्रजपात्तथा पूर्वोक्तप्रकारेण ध्रुवत्वं निश्चलस्थानवर्तित्वमित्यर्थः ॥ ४२ ॥ बालोपि यं समाराध्य ध्रुव आप परं पदम् । तमीशवामांगभवं विष्णुमीडे जगत्पतिम् ॥

ततः स परमं ज्ञानमवाप्य पुरुषोत्तमम् ॥ तुष्टाव प्रांजलिर्भूत्वा सर्वलोकेश्वरं हरिम् ॥ ३२ ॥ प्रसीद देवदेवेश शंखचक्रगदाधर ॥ लोकात्मन् वेदगुह्यात्मन् त्वां प्रपन्नोस्मि केशव ॥ ३३ ॥ न विदुस्त्वां महात्मानं सनकाद्या महर्षयः ॥ तत्कथं त्वामहं विद्यां नमस्ते भुवनेश्वर ॥ ३४ ॥ तमाह प्रहसन्विष्णुरेहि वत्स ध्रुवो भवान् ॥ स्थानं ध्रुवं समासाद्य ज्योतिषामग्रभुग्भव ॥ ३५ ॥ मात्रा त्वं सहितस्तत्र ज्योतिषां स्थानमाप्नुहि ॥ मत्स्थानमेतत्परमं ध्रुवं नित्यं सुशोभनम् ॥ ३६ ॥ तपसाराध्य देवेशं पुरा लब्धं हि शंकरात् ॥ वासुदेवेति यो नित्यं प्रणवेन समन्वितम् ॥ ३७ ॥ नमस्कारसमायुक्तं भगवच्छब्दसंयुतम् ॥ जपेदेवं हि यो विद्वान्ध्रुवं स्थानं प्रपद्यते॥ ३८ ॥ ततो देवाः सगंधर्वाः सिद्धाश्च परमर्षयः ॥ मात्रा सह ध्रुवं सर्वे तस्मिन् स्थाने न्यवेशयन् ॥३९॥ विष्णोराज्ञां पुरस्कृत्य ज्योतिषां स्थानमाप्तवान् ॥ एवं ध्रुवो महातेजा द्वादशाक्षरविद्यया ॥ ४० ॥ अवाप महतीं सिद्धिमेतत्ते कथितं मया ॥ ४१ ॥ सूत उवाच ॥ तस्माद्यो वासुदेवाय प्रणामं कुरुते नरः ॥ स याति ध्रुवसालोक्यं ध्रुवत्वं तस्य तत्तथा ॥ ४२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशे ध्रुवसंस्थानवर्णनं नाम द्विषष्टितमोऽध्यायः॥६२॥ऋषय ऊचुः ॥ देवानां दानवानां च गंधर्वोरगरक्षसाम् ॥ उत्पत्तिं ब्रूहि सूताद्य यथाक्रममनुत्तमम् ॥१॥ सूत उवाच ॥ संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ॥ दक्षात्प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसंभवा ॥ २ ॥ यदा तु सृजतस्तस्य देवर्षिगणपन्नगान् ॥ न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः ॥ ३ ॥ दक्षः पुत्रसहस्राणि पंच सूत्यामजीजनत् ॥ तांस्तु दृष्ट्वा महाभागान् सिसृक्षुर्विविधाः प्रजाः ॥ ४ ॥

इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥ त्र्यधिकेऽस्मिन्षष्टितमे सृष्टिर्दक्षसमुद्भवा ॥ देवादीनां क्रमेणैव वासिष्ठांता निगद्यते ॥ ऋषयः सृष्टिक्रममपृच्छन्–देवानामित्यादिना ॥ १ ॥ पूर्वेषां ब्रह्मादीनां मैथुनसंभवा स्त्रीपुरुषसंयोगजन्येत्यर्थः ॥ २ ॥ ३ ॥ सूत्यां तत्संज्ञकस्वस्त्रियामित्यर्थः ॥ ४ ॥

भुवः संसारक्षेत्रभूतलिंगशरीरस्य प्रमाणं विस्तारमूर्ध्वमवसानमधः मूलं सर्वं ज्ञात्वा ततः सृष्टिं कुरुध्वमित्याग्रिमेणान्वयः । तदुक्तं भागवते "भूः क्षेत्रं जीवसंज्ञं यदनादिनिजबन्धनम् । अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत्॥" इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ धर्मपत्नीनामानि कथयति—मरुत्वतीत्यादिना

नारदः प्राह हर्यश्वान्दक्षपुत्रान्समागतान् ॥ भुवः प्रमाणं सर्वं तु ज्ञात्वोर्ध्वमध एव च ॥ ५ ॥ ततः सृष्टिं विशेषेण कुरुध्वं मुनिसत्तमाः ॥ ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् ॥ ६ ॥ अद्यापि न निवर्तंते समुद्रादिव सिंधवः ॥ हर्यश्वेषु च नष्टेषु पुनर्दक्षः प्रजापतिः ॥७॥ सूत्यामेव च पुत्राणां सहस्रमसृजत्प्रभुः ॥ शबला नाम ते विप्राः समेताः सृष्टिहेतवः ॥ ८ ॥ नारदोनुगतान्प्राह पुनस्तान्सूर्यवर्चसः ॥ भुवः प्रमाणं सर्वं तु ज्ञात्वा भ्रातॄन् पुनः पुनः ॥९॥ आगत्य वाथ सृष्टिं वै करिष्यथ विशेषतः ॥ तेपि तेनैव मार्गेण जग्मुर्भ्रातृगतिं तथा ॥ १० ॥ ततस्तेष्वपि नष्टेषु षष्टिकन्याः प्रजापतिः ॥ वैरिण्यां जनयामास दक्षः प्राचेतसस्तदा ॥ ११ ॥ प्रादात्स दशकं धर्मे कश्यपाय त्रयोदश ॥ विंशत्सप्त च सोमाय चतस्रोऽरिष्टनेमये ॥ १२ ॥ द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते ॥ द्वे चैवाङ्गिरसे तद्वत्तासां नामानि विस्तरात् ॥ १३ ॥ शृणुध्वं देवमातॄणां प्रजाविस्तारमादितः ॥ मरुत्वती वसूर्यामिर्लंबा भानुररुंधती ॥ १४ ॥ संकल्पा च मुहूर्ता च साध्या विश्वा च भामिनी ॥ धर्मपत्न्यः समाख्यातास्तासां पुत्रान्वदामि वः ॥ १५ ॥ विश्वेदेवास्तु विश्वायाः साध्या साध्यानजीजनत् ॥ मरुत्वत्यां मरुत्वंतो वसोस्तु वसवस्तथा॥ १६॥भानोस्तु भानवः प्रोक्ता मुहूर्ताया मुहूर्तकाः॥ लंबाया घोषनामानो नागवीथिस्तु यामिजः ॥ १७ ॥ संकल्पायास्तु संकल्पो वसुसर्गं वदामि वः ॥ ज्योतिष्मंतस्तु ये देवा व्यापकाः सर्वतोदिशम् ॥ १८ ॥ वसवस्ते समाख्याताः सर्वभूतहितैषिणः ॥ आपो ध्रुवश्च सोमश्च धरश्चैवानिलोनलः॥ १९ ॥ प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥ अजैकपादहिर्बुध्न्यो विरूपाक्षः सभैरवः ॥ २० ॥ हरश्च बहुरूपश्च त्र्यंबकश्च सुरेश्वरः ॥ सावित्रश्च जयंतश्च पिनाकी चापराजितः ॥ २१ ॥ एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्रपौत्रकम् ॥ २२ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ १८ ॥ वसुनामानि कथयति—आप इत्यादिना ॥ १९ ॥ रुद्रनामानि कथयति—अजैकपादित्यादिना ॥ २० ॥ २१ ॥ २२ ॥

अदितिश्च दितिश्चैव अरिष्टा सुरसा मुनिः ॥ सुरभिर्विनता ताम्रा तद्वत् क्रोधवशा इला ॥२३॥ कद्रूस्त्विषा दनुस्तद्वत्तासां पुत्रान्वदामि वः ॥ तुषिता नाम ये देवाश्चाक्षुषस्यांतरे मनोः ॥ २४ ॥ वैवस्वतांतरे ते वै आदित्या द्वादश स्मृताः ॥ इंद्रो धाता भगस्त्वष्टा मित्रोथ वरुणोर्यमा ॥ २५ ॥ विवस्वान्सविता पूषा अंशुमान् विष्णुरेव च ॥ एते सहस्रकिरणा आदित्या द्वादश स्मृताः ॥२६॥ दितिः पुत्रद्वयं लेभे कश्यपादिति नः श्रुतम् ॥ हिरण्यकशिपुं चैव हिरण्याक्षं तथैव च ॥ २७ ॥ दनुः पुत्रशतं लेभे कश्यपाद्बलदर्पितम् ॥ विप्रचित्तिः प्रधानोभूत्तेषां मध्ये द्विजोत्तमाः ॥ २८ ॥ ताम्रा च जनयामास षट् कन्या द्विजपुंगवाः ॥ शुकीं श्येनीं च भासीं च सुग्रीवीं गृध्रिकां शुचिम् ॥ २९ ॥ शुकी शुकानुलूकांश्च जनयामास धर्मतः ॥ श्येनी श्येनांस्तथा भासी कुरंगांश्च व्यजीजनत् ॥ ३० ॥ गृध्री गृध्रान् कपोतांश्च पारावतविहंगमान् ॥ हंससारसकारंडप्लवाञ्छुचिरजीजनत् ॥३१॥ अजाश्वमेषोष्ट्रखरान् सुग्रीवी चाप्यजीजनत्॥ विनता जनयामास गरुडं चारुणं शुभा ॥ ३२ ॥ सौदामिनीं तथा कन्यां सर्वलोकभयंकरीम् ॥ सुरसायाः सहस्रं तु सर्पाणामभवत्पुरा ॥ ३३ ॥ कद्रूः सहस्रशिरसां सहस्रं प्राप सुव्रता ॥ प्रधानास्तेषु विख्याताः षड्विंशतिरनुत्तमाः ॥ ३४ ॥ शेषवासुकिकर्कोटशंखैरावतकंबलाः ॥ धनंजयमहानीलपद्माश्वतरतक्षकाः ॥ ३५ ॥ एलापत्रमहापद्मधृतराष्ट्रबलाहकाः ॥ शंखपालमहाशंखपुष्पदंष्ट्रशुभाननाः ॥ ३६ ॥ शंखलोमा च नहुषो वामनः फणितस्तथा ॥ कपिलो दुर्मुखश्चापि पतंजलिरिति स्मृतः ॥ ३७॥ रक्षोगणं क्रोधवशा महामायं व्यजीजनत् ॥ रुद्राणां च गणं तद्वद्गोमहिष्यो वरांगना ॥ ३८ ॥ सुरभिर्जनयामास कश्यपादिति नः श्रुतम् ॥ मुनिर्मुनीनां च गणं गणमप्सरसां तथा ॥ ३९ ॥ तथा किंनरगंधर्वानरिष्टाजनयद्बहून् ॥ तृणवृक्षलतागुल्ममिला सर्वमजीजनत् ॥ ४० ॥ त्विषा तु यक्षरक्षांसि जनयामास कोटिशः ॥ एते तु काश्यपेयाश्च संक्षेपात्परिकीर्तिताः ॥ ४१ ॥ एतेषां पुत्रपौत्रादिवंशाश्च बहवः स्मृताः ॥ एवं प्रजासु सृष्टासु कश्यपेन महात्मना ॥ ४२ ॥ प्रतिष्ठितासु सर्वासु चरासु स्थावरासु च ॥ अभिषिच्याधिपत्येषु तेषां मुख्यान्प्रजापतिः ॥ ४३ ॥

॥४४॥४५॥४६॥एतेषु स्वायंभुवादिषु अतीतेषु मन्वंतरेषु पार्थिवाः पृथिवीश्वराः गता अतिक्रांताः एवं प्राप्ते मन्वंतरेन्येभिषिच्यंत इत्यन्वयः॥४७॥४८॥४९ ॥५०॥ ५१ ॥

ततो मनुष्याधिपतिं चक्रे वैवस्वतं मनुम् ॥ स्वायंभुवेन्तरे पूर्वं ब्रह्मणा येऽभिषेचिताः ॥ ४४ ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता ॥ यथोपदेशमद्यापि धर्मेण प्रतिपाल्यते ॥ ४५ ॥ स्वायंभुवेन्तरे पूर्वं ब्रह्मणा येऽभिषेचिताः ॥ ते ह्येते चाभिषिच्यंते मनवश्च भवन्ति ते ॥ ४६ ॥ मन्वंतरेष्वतीतेषु गता ह्येतेषु पार्थिवाः ॥ एवमन्येभिषिच्यन्ते प्राप्ते मन्वंतरे ततः ॥ ४७ ॥ अतीतानागताः सर्वे नृपा मन्वन्तरे स्मृताः ॥ एतानुत्पाद्य पुत्रांस्तु प्रजासंतानकारणात् ॥ ४८ ॥ कश्यपो गोत्रकामस्तु चचार स पुनस्तपः ॥ पुत्रो गोत्रकरो मह्यं भवतादिति चिंतयन् ॥ ४९ ॥ तस्यैवं ध्यायमानस्य कश्यपस्य महात्मनः ॥ ब्रह्मयोगात्सुतौ पश्चात्प्रादुर्भूतौ महौजसौ ॥ ५० ॥ वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ॥ वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः ॥ ५१ ॥ रैभ्यस्य रैभ्या विज्ञेया नैध्रुवस्य वदामि वः ॥ च्यवनस्य तु कन्यायां सुमेधाः समपद्यत ॥ ५२ ॥ नैध्रुवस्य तु सा पत्नी माता वै कुंडपायिनाम् ॥ असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ॥ ५३ ॥ शांडिल्यानां वरः श्रीमान्देवलः सुमहातपाः ॥ शांडिल्या नैध्रुवा रैभ्यास्त्रयः पक्षास्तु काश्यपाः ॥ ५४ ॥ नव प्रकृतयो देवाः पुलस्त्यस्य वदामि वः ॥ चतुर्युगे ह्यतिक्रांते मनोरेकादशे प्रभोः ॥ ५५ ॥ अर्धावशिष्टे तस्मिंस्तु द्वापरे संप्रवर्तिते ॥ मानवस्य नरिष्यन्तः पुत्र आसीद्दमः किल ॥ ५६ ॥ दमस्य तस्य दायादस्तृणबिंदुरिति स्मृतः ॥ त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥ ५७ ॥ तस्य कन्या त्विलविला रूपेणाप्रतिमाभवत् ॥ पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥ ५८ ॥ ऋषिरैलविलो यस्यां विश्रवाः समपद्यत ॥ तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धनाः ॥ ५९ ॥ बृहस्पतेः शुभा कन्या नाम्ना वै देववर्णिनी ॥ पुष्पोत्कटा बलाका च सुते माल्यवतः स्मृते ॥ ६० ॥ कैकसी मालिनः कन्या तासां वै शृणुत प्रजाः ॥ ज्येष्ठं वैश्रवणं तस्मात्सुषुवे देववर्णिनी ॥ ६१ ॥ कैकसी चाप्यजनयद्रावणं राक्षसाधिपम् ॥ कुंभकर्णं शूर्पनखां धीमन्तं च विभीषणम् ॥ ६२ ॥

॥५२॥५३॥५४॥पुलस्त्यस्य प्रकृतयः प्रजाः अदेवाः राक्षसाः नव वः वदामि कथयामीत्यर्थः॥५५॥तस्मिंस्त्रेतायुग इत्यर्थः॥५६॥५७॥५८॥५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ भद्राश्वस्य राजर्षेः घृताच्यामप्सरसि दशसूनवः पुत्र्यः सुंदर्यश्च पतिव्रताः अत्रेः पत्न्यो दशैव दशापि आसन्नित्यग्रिमेणा न्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ आत्रेयवंशस्य प्रभवाः उत्पादका इत्यर्थः । तासां भद्रादीनां भर्ता प्रभाकरः अत्रिः ॥ ७१ ॥ ७२ ॥ अत्रेः प्रभाकरसंज्ञाकारणं कथयति

पुष्पोत्कटा ह्यजनयत्पुत्रांस्तस्माद्द्विजोत्तमाः ॥ महोदरं प्रहस्तं च महापार्श्वं खरं तथा ॥ ६३ ॥ कुंभीनसीं तथा कन्यां बलायाः शृणुत प्रजाः ॥ त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः ॥६४॥ कन्या वै मालिका चापि बलायाः प्रसवः स्मृतः ॥ इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा नव ॥ ६५ ॥ विभीषणोतिशुद्धात्मा धर्मज्ञः परिकीर्तितः ॥ पुलस्त्यस्य मृगाः पुत्राः सर्वे व्याघ्राश्च दंष्ट्रिणः ॥ ६६ ॥ भूताः पिशाचाः सर्पाश्च सूकरा हस्तिनस्तथा ॥ वानराः किंनराश्चैव ये च किंपुरुषास्तथा ॥६७॥ अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेन्तरे ॥ अत्रेः पत्न्यो दशैवासन् सुंदर्यश्च पतिव्रताः॥६८॥ भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः॥ भद्राभद्रा च जलदा मंदा नंदा तथैव च ॥६९॥ बलाबला च विप्रेन्द्रा या च गोपाबला स्मृता ॥ तथा तामरसा चैव वरक्रीडा च वै दश ॥ ७० ॥ आत्रेयवंशप्रभवास्तासां भर्ता प्रभाकरः॥ स्वर्भानुपिहिते सूर्ये पतितेस्मिन्दिवो महीम् ॥७१॥ तमोऽभिभूते लोकेस्मिन्प्रभा येन प्रवर्तिता ॥ स्वस्त्यस्तु हि तवेत्युक्ते पतन्निह दिवाकरः ॥ ७२ ॥ ब्रह्मर्षेर्वचनात्तस्य पपात न विभुर्दिवः ॥ ततः प्रभाकरेत्युक्तः प्रभुरत्रिर्महर्षिभिः ॥ ७३ ॥ भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ॥ स तासु जनयामास पुनः पुत्रांस्तपोधनः ॥ ७४ ॥ स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ॥ तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ च महौजसौ ॥ ७५ ॥ दत्तो ह्यत्रिवरो ज्येष्ठो दुर्वासास्तस्य चानुजः ॥ यवीयसी स्वसा तेषाममला ब्रह्मवादिनी ॥७६॥ तस्य गोत्रद्वये जाताश्चत्वारः प्रथिता भुवि ॥ श्यावश्च प्रत्वसश्चैव ववल्गुश्चाथ गह्वरः॥७७॥ आत्रेयाणां च चत्वारः स्मृताः पक्षा महात्मनाम् ॥ काश्यपो नारदश्चैव पर्वतोनुद्धतस्तथा ॥ ७८ ॥ जज्ञिरे मानसा ह्येते अरुंधत्या निबोधत ॥ नारदस्तु वसिष्ठायारुन्धतीं प्रत्यपादयत्॥७९॥ ऊर्ध्वरेता महातेजा दक्षशापात्तु नारदः ॥ पुरा देवासुरे युद्धे घोरे वै तारकामये ॥ ८० ॥

ब्रह्मर्षेरित्यादिना ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ कश्यपादयः एते चत्वारः मानसाः ब्रह्मणो मनोभवाः जज्ञिरे इत्यग्रिमेणान्वयः ॥ ७८ ॥ अरुंधत्याः वसिष्ठपत्न्याः सर्गमिति शेषः । निबोधतेत्यनेन तस्या अपि श्रैष्ठ्यं सूचितम् ॥ ७९ ॥ दक्षशापात्पुत्रप्रव्राजनक्रोधेन दक्षदत्तशापादित्यर्थः ॥ ८० ॥

॥ ८१ ॥ ८२ ॥ ज्यायसः श्रेष्ठाच्छक्तेः । अदृश्यंती पराशरमजनयदित्यन्वयः ॥ ८३ ॥ ८४ ॥ द्वैपायनो व्यासः अरण्यां शुकमुपमन्युं च सुतमुत्पादयदित्यन्वयः ॥८५॥ ॥ ८६ ॥ ८७ ॥ ८८ ॥ वसिष्ठस्य वसिष्ठादित्यर्थः। घृताच्यां तत्संज्ञकाप्सरसि कपिंजल्यः उदपद्यतेत्यन्वयः ॥ ८९॥९० ॥ मित्रावरुणयोश्चैव सुतादिति शेषः । वसिष्ठादित्यर्थः। ये परिश्रुताः कौण्डिन्याः तथान्ये पूर्वोक्ताः वासिष्ठाः एकार्षेया नाम विश्रुता इत्यग्रिमेणान्वयः। अत एव कौण्डिन्यवासिष्ठानां न विवाहः। निमिशापात्त्यक्तदेहो वसिष्ठो

अनावृष्ट्या हते लोके ह्युग्रे लोकेश्वरैः सह ॥ वसिष्ठस्तपसा धीमान्धारयामास वै प्रजाः ॥ ८१ ॥ अन्नोदकं मूलफलमोषधीश्च प्रवर्तयन् ॥ तानेताञ्जीवयामास कारुण्यादौषधेन च ॥ ८२ ॥ अरुन्धत्यां वसिष्ठस्तु सुतानुत्पादयच्छतम् ॥ ज्यायसोजनयच्छक्तेरदृश्यंती पराशरम् ॥ ८३ ॥ रक्षसा भक्षिते शक्तौ रुधिरेण तु वै तदा ॥ काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम् ॥ ८४ ॥ द्वैपायनो ह्यरण्यां वै शुकमुत्पादयत्सुतम् ॥ उपमन्युं च पीवर्यां विद्धीमे शुकसूनवः॥ ८५ ॥ भूरिश्रवाः प्रभुः शंभुः कृष्णो गौरस्तु पंचमः ॥ कन्या कीर्तिमती चैव योगमाता धृतव्रता ॥८६॥ जननी ब्रह्मदत्तस्य पत्नी सा त्वनुहस्य च ॥ श्वेतः कृष्णश्च गौरश्च श्यामो धूम्रस्तथारुणः ॥८७॥ नीलो बादरिकश्चैव सर्वे चैते पराशराः ॥ पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ॥ ८८ ॥ अत ऊर्ध्वं निबोधध्वमिंद्रप्रमितिसंभवम् ॥ वसिष्ठस्य कपिंजल्यो घृताच्यामुदपद्यत ॥८९॥ त्रिमूर्तिर्यः समाख्यात इंद्रप्रमितिरुच्यते ॥ पृथोः सुतायां संभूतो भद्रस्तस्याभवद्वसुः ॥ ९० ॥ उपमन्युः सुतस्तस्य बहवो ह्यौपमन्यवः ॥ मित्रावरुणयोश्चैव कौण्डिन्या ये परिश्रुताः ॥ ९१ ॥ एकार्षेयास्तथा चान्ये वासिष्ठा नाम विश्रुताः ॥ एते पक्षा वसिष्ठानां स्मृता दश महात्मनाम् ॥ ९२ ॥ इत्येते ब्रह्मणः पुत्रा मानसा विश्रुता भुवि ॥ भर्तारश्च महाभागा एषां वंशाः प्रकीर्तिताः ॥ ९३ ॥ त्रिलोकधारणे शक्ता देवर्षिकुलसंभवाः ॥ तेषां पुत्राश्च पौत्राश्च शतशोथ सहस्रशः ॥ ९४ ॥ यैस्तु व्याप्तास्त्रयो लोकाः सूर्यस्येव गभस्तिभिः ॥ ९५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे देवादिसृष्टिकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ऋषय ऊचुः ॥ कथं हि रक्षसा शक्तिर्भक्षितः सोनुजैः सह ॥ वासिष्ठो वदतां श्रेष्ठ सूत वक्तुमिहार्हसि॥ १॥

मित्रावरुणयोर्जज्ञे इति भागवतादौ विस्तरेणोक्तम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ यैर्वासिष्ठैरित्यर्थः ॥ ९५ ॥ श्रीशंभो भवदंशा देवाद्या अंतवासिष्ठाः । स्मरणादघौघनाशा नामता ह्यस्मान्सदावन्तु ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ चतुःषष्टितमेध्याये वसिष्ठसुतशोचनम् । पराशरोद्भवः सम्यक् रक्षोदाहश्च वर्ण्यते ॥ ऋषयः शक्तिवृत्तांतमपृच्छन्—कथमिति ॥ १ ॥

अनुजैः सह वसिष्ठस्य सुतं शक्तिं रुधिरो नाम राक्षसः । पुरा त्रिशंकुयज्ञनिमंत्रणावसरे शक्तेः शापाद्विश्वामित्रदत्तशक्तिशापाद्भक्षयामासेत्यन्वयः । इयं विश्वामित्रशापकथा वाल्मीकीये विस्तरेणोक्ता ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ मुनिशार्दूलो वसिष्ठः संज्ञामवाप्यारुन्धतीमालिंग्य अस्रा

सूत उवाच ॥ राक्षसो रुधिरो नाम वसिष्ठस्य सुतं पुरा ॥ शक्तिं स भक्षयामास शक्तेः शापात्सहानुजैः ॥ २ ॥ वसिष्ठयाज्यं विप्रेन्द्रास्तदा दिश्यैव भूपतिम् ॥ कल्माषपादं रुधिरो विश्वामित्रेण चोदितः ॥ ३ ॥ भक्षितः स इति श्रुत्वा वसिष्ठस्तेन रक्षसा ॥ शक्तिः शक्तिमतां श्रेष्ठो भ्रातृभिः सह धर्मवित् ॥ ४ ॥ हा पुत्र पुत्र पुत्रेति क्रंदमानो मुहुर्मुहुः ॥ अरुंधत्या सह मुनिः पपात भुवि दुःखितः ॥ ५ ॥ नष्टं कुलमिति श्रुत्वा मर्तुं चक्रे मतिं तदा ॥ स्मरन्पुत्रशतं चैव शक्तिज्येष्ठं च शक्तिमान् ॥६॥ न तं विनाहं जीविष्ये इति निश्चित्य दुःखितः ॥ ७ ॥ आरुह्य मूर्धानमजात्मजोसौ तयात्मवान् सर्वविदात्मविच्च ॥ धराधरस्यैव तदा धरायां पपात पत्न्या सहसाश्रुदृष्टिः ॥ ८ ॥ धराधरात्तं पतितं धरा तदा दधार तत्रापि विचित्रकण्ठी ॥ कराम्बुजाभ्यां करिखेलगामिनी रुदन्तमादाय रुरोद सा च ॥ ९ ॥ तदा तस्य स्नुषा प्राह पत्नी शक्तेर्महामुनिम् ॥ वसिष्ठं वदतां श्रेष्ठं रुदंती भयविह्वला ॥ १० ॥ भगवन्ब्राह्मणश्रेष्ठ तव देहमिदं शुभम् ॥ पालयस्व विभो द्रष्टुं तव पौत्रं ममात्मजम् ॥ ११ ॥ न त्याज्यं तव विप्रेन्द्र देहमेतत्सुशोभनम् ॥ गर्भस्थो मम सर्वार्थसाधकः शक्तिजो यतः॥१२॥ एवमुक्त्वाथ धर्मज्ञा कराभ्यां कमलेक्षणा ॥ उत्थाप्य श्वशुरं नत्वा नेत्रे संमृज्य वारिणा ॥ १३ ॥ दुःखितापि परित्रातुं श्वशुरं दुःखितं तदा ॥ अरुन्धतीं च कल्याणीं प्रार्थयामास दुःखिताम् ॥ १४॥ स्नुषावाक्यं ततः श्रुत्वा वसिष्ठोत्थाय भूतलात् ॥ संज्ञामवाप्य चालिंग्य सा पपात सुदुःखिता ॥ १५ ॥ अरुंधती कराभ्यां तां संस्पृश्यास्राकुलेक्षणाम् ॥ रुरोद मुनिशार्दूलो भार्यया सुतवत्सलः ॥ १६ ॥ अथ नाभ्यंबुजे विष्णोर्यथा तस्याश्चतुर्मुखः ॥ आसीनो गर्भशय्यायां कुमार ऋचमाह सः ॥१७॥ ततो निशम्य भगवान्वसिष्ठ ऋचमादरात् ॥ केनोक्तमिति संचिंत्य तदातिष्ठत्समाहितः ॥ १८ ॥

कुलेक्षणां तामदृश्यंतीं संस्पृश्य भार्यया सह सुतवत्सलः रुरोद सा अदृश्यन्ती सुदुःखिता पपात चेत्यग्रिमेणान्वयः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

हरिर्विष्णुः ॥ १९ ॥ २० ॥ २१ ॥ संतरिष्यति तारयिष्यतीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तव मात्रा अरुंधत्या सह ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ तवात्मजं शक्तिसुतं दृष्ट्वा गर्भस्थं ज्ञात्वा आर्यसूनोर्वक्त्रामृतम् ऋग्रूपं आस्वाद्य देहं त्रातुं यतो मुनींद्रः सुनिश्चितस्ततः शरीरं पाहीत्यन्वयः ॥ ३२ ॥ अरुंधती

व्योमांगणस्थोथ हरिः पुंडरीकनिभेक्षणः ॥ वसिष्ठमाह विश्वात्मा घृणया स घृणानिधिः ॥१९॥ भो वत्सवत्स विप्रेन्द्र वसिष्ठ सुतवत्सल ॥ तव पौत्रमुखांभोजादृगेपाद्य विनिःसृता ॥ २० ॥ मत्समस्तव पौत्रोसौ शक्तिजः शक्तिमान्मुने ॥ तस्मादुत्तिष्ठ संत्यस्य शोकं ब्रह्मसुतोत्तम ॥ २१ ॥ रुद्रभक्तश्च गर्भस्थो रुद्रपूजापरायणः ॥ रुद्रदेवप्रभावेण कुलं ते संतरिष्यति ॥ २२ ॥ एवमुक्त्वा घृणी विप्रं भगवान् पुरुषोत्तमः ॥ वसिष्ठं मुनिशार्दूलं तत्रैवान्तरधीयत ॥ २३ ॥ ततः प्रणम्य शिरसा वसिष्ठो वारिजेक्षणम् ॥ अदृश्यंत्या महातेजाः पस्पर्शोदरमादरात् ॥२४॥ हा पुत्र पुत्र पुत्रेति पपात च सुदुःखितः ॥ ललापारुंधती प्रेक्ष्य तदासौ रुदतीं द्विजाः ॥ २५ ॥ स्वपुत्रं च स्मरन् दुःखात्पुनरेह्येहि पुत्रक ॥ तव पुत्रमिमं दृष्ट्वा भो शक्ते कुलधारणम् ॥ २६ ॥ तवांतिकं गमिष्यामि तव मात्रा न संशयः॥ सूत उवाच ॥ एवमुक्त्वा रुदन्विप्र आलिंग्यारुंधतीं तदा ॥ २७ ॥ पपात ताडयंतीव स्वस्य कुक्षी करेण वै ॥ अदृश्यंती जगामाथ शक्तिजस्यालयं शुभा ॥ २८ ॥ स्वोदरं दुःखिता भूमौ ललाप च पपात च ॥ अरुंधती तदा भीता वसिष्ठश्च महामतिः ॥ २९ ॥ समुत्थाप्य स्नुषां बाला मूचतुर्भयविह्वलौ ॥ ३० ॥ विचारमुग्धे तव गर्भमंडलं करांबुजाभ्यां विनिहत्य दुर्लभम् ॥ कुलं वसिष्ठस्य समस्तमप्यहो निहंतुमार्ये कथमुद्यता वद ॥ ३१ ॥ तवात्मजं शक्तिसुतं च दृष्ट्वा चास्वाद्य वक्त्रामृतमार्यसूनोः ॥ त्रातुं यतो देहमिमं मुनींद्रः सुनिश्चितः पाहि ततः शरीरम् ॥ ३२ ॥ सूत उवाच ॥ एवं स्नुषामुपालभ्य मुनिं चारुंधती स्थिता ॥ अरुंधती वसिष्ठस्य प्राह चार्तातिविह्वला ॥३३॥ त्वय्येव जीवितं चास्य मुनेर्यत्सुव्रते मम ॥ जीवितं रक्ष देहस्य धात्री च कुरु यद्धितम् ॥ ३४ ॥ अदृश्यंती उवाच ॥ मया यदि मुनिश्रेष्ठो त्रातुं वै निश्चितं स्वकम् ॥ ममाशुभं शुभं देहं कथंचित्पालयाम्यहम् ॥ ३५ ॥

वसिष्ठस्य मम अस्य गर्भस्य च त्वय्येव जीवितमित्यार्ता प्राहेत्यग्रिमस्थैरन्वयः ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ पुष्करायाः मेघाः जलमिति शेषः । खचरा देवाः ।

प्रियदुःखमहं भ्राता ह्यसती नात्र संशयः ॥ मुने दुःखादहं दग्धा यतः पुत्री मुने तव ॥ ३६ ॥ अहोद्भुतं मया दृष्टं दुःखपात्री ह्यहं विभो ॥ दुःखत्राता भव ब्रह्मन्ब्रह्मसूनो जगद्गुरो॥३७॥ तथापि भर्तृरहिता दीना नारी भवेदिह ॥ पाहि मां तत आर्येन्द्र परिभूता भविष्यति॥३८॥ पिता माता च पुत्राश्च पौत्राः श्वशुर एव च ॥ एते न ... स्त्रीणां भर्ता बंधुः परा गतिः ॥ ३९ ॥ आत्मनो यद्वि कथितमप्यर्धमिति पंडितैः ॥ तदप्यत्र मृषा ह्यासीद्भुतः शक्तिरहं स्थिता ॥ ४० ॥ अहो ममात्र काठिन्यं मनसो मुनिपुंगव ॥ पतिं प्राणसमं त्यक्त्वा स्थिता यत्र ... यतः ॥ ४१ ॥ वसिष्ठाश्वत्थमाश्रित्य ह्यमृता तु यथा लता ॥ निर्मूलाप्यमृता भर्त्रा त्यक्ता दीना स्थिताप्यहम् ॥ ४२ ॥ स्नुषा वाक्यं निशम्यैव वसिष्ठो भार्यया सह ॥ तदा चक्रे मतिं धीमान् यातुं स्वाश्रममाश्रमी ॥ ४३ ॥ कृच्छ्रात्सभार्यो भगवान्वासिष्ठः स्वाश्रमं क्षणात् ॥ अदृश्यंत्या च पुण्यात्मा संविवेश स चिंतयन् ॥ ४४ ॥ सा गर्भं पालयामास कथंचिन्मुनिपुंगवाः ॥ कुलसंधारणार्थाय शक्तिपत्नी पतिव्रता ॥ ४५ ॥ ततः साऽसूत तनयं दशमे मासि सुप्रभम् ॥ शक्तिपत्नी यथा शक्तिं शक्तिमंतमरुंधती ॥ ४६ ॥ असूत सा दितिर्विष्णुं यथा स्वाहा गुहं सुतम् ॥ अग्निं यथारणिः पत्नी शक्तेः साक्षात्पराशरम् ॥ ४७ ॥ यदा तदा शक्तिसूनुरवतीर्णो महीतले ॥ शक्तिस्त्यक्त्वा तदा दुःखं पितॄणां समतां ययौ ॥ ४८ ॥ भ्रातृभिः सह पुण्यात्मा आदित्यैरिव भास्करः ॥ रराज पितृलोकस्थो वासिष्ठो मुनिपुंगवाः ॥ ४९ ॥ जगुस्तदा च पितरो ननृतुश्च पितामहाः ॥ प्रपितामहाश्च विप्रेन्द्रा ह्यवतीर्णे पराशरे ॥ ५० ॥ ये ब्रह्मवादिनो भूमौ ननृतुर्दिवि देवताः ॥ पुष्करायाश्च ससृजुः पुष्पवर्षं च खेचराः ॥५१॥ पुरेषु राक्षसानां च प्रणादं विषमं द्विजाः ॥ आश्रमस्थाश्च मुनयः समूहुर्हर्षसंततिम् ॥ ५२ ॥ अवतीर्णो यथा ह्यंडाद्भानुः सोपि पराशरः ॥ अदृश्यंत्याश्चतुर्वक्त्रो मेघजालाद्दिवाकरः ॥ ५३ ॥

पुष्पवर्षं च ससृजुरित्यन्वयः ॥ ५१ ॥ द्विजाः गृध्रादयः राक्षसानां पुरेषु विषमं प्रणादमशिवशब्दं ससृजुरित्यनुषंगः ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ त्यज्य मंत्यज्येत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ तव पिता रक्षसा भक्षित इति

सुखं च दुःखम्भवदहश्यंत्यास्तथा द्विजाः ॥ दृष्ट्वा पुत्रं पतिं स्मृत्वा अरुंधत्या मुनेस्तथा ॥ ५४ ॥ दृष्ट्वा च तनयं बाला पराशरमति द्युतिम् ॥ रुराप विह्वला बाला सन्नकंठी पपात च ॥ ५५ ॥ सा पराशरमहो महामतिं देवदानवगणैश्च पूजितम् ॥ जातमात्रमनघं शुचि स्मिता बुध्य साश्रुनयना रुराप च ॥ ५६ ॥ हा वसिष्ठसुत कुत्राचिद्गतः पश्य पुत्रमनघं तवात्मजम् ॥ त्यज्य दीनवदनां वनान्तरे पुत्र दर्शनपरामिमां प्रभो ॥ ५७ ॥ शक्ते स्वं च सुतं पश्य भ्रातृभिः सह षण्मुखम् ॥ यथा महेश्वरोपश्यत्सगणो हृषिताननः ॥ ५८ ॥ अथ तस्यास्तदालापं वसिष्ठो मुनिसत्तमः ॥ श्रुत्वा स्नुषामुवाचेदं मारोदीरिति दुःखितः ॥ ५९ ॥ आज्ञया तस्य सा शोकं वसिष्ठस्य कुलांगना ॥ त्यक्त्वा ह्यपालयद्बालं बाला बालमृगेक्षणा ॥ ६० ॥ दृष्ट्वा तामबलां प्राह मङ्गलाभरणैर्विना ॥ आसीनामाकुलां साध्वीं बाष्पपर्याकुले क्षणाम् ॥ ६१ ॥ शाक्तेय उवाच ॥ अंब मंगलविभूषणैर्विना देहयष्टिरनघे न शोभते ॥ वक्तुमर्हसि तवाद्य कारणं चंद्रबिंबरहितेव शर्वरी ॥ ६२ ॥ मातर्मातः कथं त्यक्त्वा मंगलाभरणानि वै ॥ आसीना भर्तृहीनेव वक्तुमर्हसि शोभने ॥ ६३ ॥ अदृश्यंती तदा वाक्यं श्रुत्वा तस्य सुतस्य सा ॥ न किंचिदब्रवीत्पुत्रं शुभं वा यदि वेतरत् ॥ ६४ ॥ अदृश्यंतीं पुनः प्राह शाक्तेयो भगवान्मम ॥ मातः कुत्र महातेजाः पिता वद वदेति ताम् ॥ ६५ ॥ श्रुत्वा रुरोद सा वाक्यं पुत्रस्यातीव विह्वला ॥ भक्षितो रक्षसा तातस्तवेति निपपात च ॥ ६६ ॥ श्रुत्वा वसिष्ठोपि पपात भूमौ पौत्रस्य वाक्यं स रुदन्दयालुः ॥ अरुंधती चाश्रमवासिनस्तदा मुनेर्वसिष्ठस्य मुनीश्वराश्च ॥ ६७ ॥ भक्षितो रक्षसा मातुः पिता तव मुखादिति ॥ श्रुत्वा पराशरो धीमान्प्राह चात्राविलेक्षणः ॥ ६८ ॥ पराशर उवाच ॥ अभ्यर्च्य देवदेवेशं त्रैलोक्यं सचराचरम् ॥ क्षणेन मातः पितरं दर्शयामीति मे मतिः ॥ ६९ ॥ सा निशम्य वचनं तदा शुभं सस्मिता तनयमाह विस्मिता ॥ तथ्यमे तदिति तं निरीक्ष्य सा पुत्रपुत्र भवमर्चयेति च ॥ ७० ॥

मातुर्मुखाच्छ्रुत्वा पराशरः प्राहेत्यन्वयः ॥ ६८ ॥ देवदेवेशं शिवमित्यर्थः । त्रैलोक्यं सचराचरं दग्ध्वेति शेषः ॥ ६९ ॥ ७० ॥

ज्ञात्वा शक्तिसुतस्यास्य संकल्पं मुनिपुंगवः॥ वसिष्ठो भगवान्प्राह पौत्रं धीमान् घृणानिधिः ॥ ७१ ॥ स्थाने पौत्र मुनिश्रेष्ठ संकल्पस्तव सुव्रत ॥ तथापि शृणु लोकस्य क्षयं कर्तुं न चार्हसि॥७२॥ राक्षसानामभावाय कुरु सर्वेश्वरार्चनम् ॥ त्रैलोक्यं शृणु शाक्तेय अपराध्यति किं तव ॥ ७३ ॥ ततस्तस्य वसिष्ठस्य नियोगाच्छक्तिनंदनः ॥ राक्षसानामभावाय मतिं चक्रे महामतिः ॥ ७४ ॥ अदृश्यंतीं वसिष्ठं च प्रणम्यारुन्धतीं ततः ॥ कृत्वैकलिंगं क्षणिकं पांसुना मुनिसन्निधौ ॥ ७५ ॥ संपूज्य शिवसूक्तेन त्र्यंबकेन शुभेन च ॥ जप्त्वा त्वरित रुद्रं च शिवसंकल्पमेव च ॥ ७६ ॥ नीलरुद्रं च शाक्तेयस्तथा रुद्रं च शोभनम् ॥ वामीयं पवमानं च पंचब्रह्म तथैव च ॥ ७७ ॥ होतारं लिंगसूक्तं च अथर्वशिर एव च ॥ अष्टांगमर्घ्यं रुद्राय दत्वाभ्यर्च्य यथाविधि ॥ ७८ ॥ पराशर उवाच ॥ भगवन्रक्षसा रुद्र भक्षितो रुधिरेण वै ॥ पिता मम महातेजा भ्रातृभिः सह शंकर ॥ ७९॥ द्रष्टुमिच्छामि भगवन् पितरं भ्रातृभिः सह ॥ एवं विज्ञापयँल्लिङ्गं प्रणिपत्य मुहुर्मुहुः ॥ ८० ॥ हा रुद्र रुद्ररुद्रेति रुरोद निपपात च॥ तं दृष्ट्वा भगवान्रुद्रो देवीमाह च शंकरः ॥ ८१ ॥ पश्य बालं महाभागे बाष्पपर्याकुलेक्षणम् ॥ ममानुस्मरणे युक्तं मदाराधनतत्परम् ॥ ८२ ॥ सा च दृष्ट्वा महादेवी पराशरमनिन्दिता ॥ दुःखात्संक्लिन्नसर्वाङ्गं मन्नाकुलविलोचनम् ॥ ८३ ॥ लिंगार्चनविधौ सक्तं हर रुद्रेति वादिनम् ॥ प्राह भर्तारमीशानं शंकरं जगतामुमा ॥ ८४ ॥ ईप्सितं यच्छ सकलं प्रसीद परमेश्वर ॥ निशम्य वचनं तस्याः शंकरः परमेश्वरः ॥ ८५ ॥ भार्यामार्यामुमां प्राह ततो हालाहलाशनः ॥ रक्षाम्येनं द्विजं बालं फुल्लेन्दीवरलोचनम् ॥ ८६ ॥ ददामि दृष्टिं मद्रूपदर्शनक्षम एष वै ॥ एवमुक्त्वा गणैर्दिव्यैर्भगवान्नीललोहितः ॥ ८७ ॥ ब्रह्मेन्द्रविष्णुरुद्राद्यैः संवृतः परमेश्वरः ॥ ददौ च दर्शनं तस्मै मुनिपुत्राय धीमते ॥ ८८ ॥ सोपि दृष्ट्वा महादेवमानन्दास्राविलेक्षणः ॥ निपपात च हृष्टात्मा पादयोस्तस्य सादरम् ॥ ८९ ॥ पुनर्भवान्याः पादौ च नंदिनश्च महात्मनः ॥ सफलं जीवितं मेद्य ब्रह्माद्यांस्तांस्तदाह सः ॥ ९० ॥ रक्षार्थमागतस्त्वद्य मम बालेन्दुभूषणः ॥ कोन्यः समो मया लोके देवो वा दानवोपि वा ॥ ९१ ॥

॥९२॥९३॥९४॥९५॥९६॥९७॥९८॥९९॥ हे बाल अद्य तवाननं दृष्टमत इति शेषः । मया अणिमादिगुणैश्वर्यं लब्धमित्यन्वयः । ममाज्ञयेत्यस्याग्रिमेणान्वयः ॥१००॥ ॥ १०१ ॥ सदैव मत्यमेवेत्यर्थः ॥ १०२ ॥ ईप्सितं रक्षोविनाशरूपमित्यर्थः ॥ १०३ ॥ एवमुक्तप्रकारेण पुत्रं पराशरमुपामंत्र्य महेश्वरं पितरं वसिष्ठं च प्रणम्य भार्यां सदसि

अथ तस्मिन्क्षणादेव ददर्श दिवि संस्थितम् ॥ पितरं भ्रातृभिः सार्धं शाक्तेयस्तु पराशरः ॥ ९२ ॥ सूर्यमंडलसंकाशे विमाने विश्वतो मुखे ॥ भ्रातृभिः सहितं दृष्ट्वा ननाम च जहर्ष च ॥ ९३ ॥ तदा वृषध्वजो देवः सभार्यः सगणेश्वरः ॥ वसिष्ठपुत्रं प्राहेदं पुत्रदर्शनतत्परम् ॥ ९४ ॥ श्रीदेव उवाच ॥ शक्ते पश्य सुतं बालमानन्दाश्रुविलेक्षणम् ॥ अदृश्यन्तीं च विप्रेन्द्र वसिष्ठं पितरं तव॥९५॥अरुंधतीं महाभागां कल्याणीं देवतोपमाम् ॥ मातरं पितरं चोभौ नमस्कुरु महामते ॥ ९६ ॥ तदा हरं प्रणम्याशु देवदेवमुमां तथा ॥ वसिष्ठं च तदा श्रेष्ठं शक्तिर्वै शंकराज्ञया ॥ ९७ ॥ मातरं च महाभागां कल्याणीं पतिदेवताम् ॥ अरुंधतीं जगन्नाथनियोगात्प्राह शक्तिमान् ॥ ९८ ॥ वासिष्ठ उवाच ॥ भो वत्सवत्स विप्रेन्द्र पराशर महाद्युते ॥ रक्षितोहं त्वया तात गर्भस्थेन महात्मना ॥ ९९ ॥ अणिमादिगुणैश्वर्यं मया वत्स पराशर ॥ लब्धमद्याननं दृष्टं तव बाल ममाज्ञया ॥ १०० ॥ अदृश्यन्तीं महाभागां रक्ष वत्स महामते ॥ अरुंधतीं च पितरं वसिष्ठं मम सर्वदा ॥ १०१ ॥ अन्वयः सकलो वत्स मम संतारितस्त्वया ॥ पुत्रेण लोकाञ्जयतीत्युक्तं सद्भिः सदैव हि ॥ १०२ ॥ ईप्सितं वरयेशानं जगतां प्रभवं प्रभुम् ॥ गमिष्याम्यभिवंद्येशं भ्रातृभिः सह शंकरम्॥१०३॥ एवं पुत्रमुपामंत्र्य प्रणम्य च महेश्वरम् ॥ निरीक्ष्य भार्यां सदसि जगाम पितरं वशी ॥ १०४ ॥ गतं दृष्ट्वाथ पितरं तदाभ्यर्च्यैव शंकरम् ॥ तुष्टाव वाग्भिरिष्टाभिः शाक्तेयः शशि भूषणम् ॥ १०५ ॥ ततस्तुष्टो महादेवो मन्मथांधकमर्दनः ॥ अनुगृह्याथ शाक्तेयं तत्रैवांतरधीयत ॥ १०६ ॥ गते महेश्वरे सांबे प्रणम्य च महेश्वरम् ॥ ददाह राक्षसानां तु कुलं मंत्रेण मंत्रवित् ॥ १०७ ॥ तदाह पौत्रं धर्मज्ञो वसिष्ठो मुनिभिर्वृतः ॥ अलमत्यंतकोपेन तात मन्युमिमं जहि ॥ १०८ ॥ राक्षसा नापराध्यन्ति पितुस्ते विहितं तथा ॥ मूढानामेव भवति क्रोधो बुद्धिमतां न हि ॥ १०९ ॥

निरीक्ष्य वशी शक्तिर्जगामेत्यन्वयः ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ विहितं प्रारब्धमित्यर्थः ॥ १०९ ॥

॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ देवतापरमार्थं वास्तवस्वरूपम् ॥ ११८ ॥ ११९ ॥ १२० ॥ षट्प्रकारं षडंशरूपम् ॥ १२१ ॥ १२२ ॥ शक्तिसूनोः पराशरस्येत्यर्थः ॥१२३॥ बालस्यापि पराशरस्य भगवान् भक्त्या शिवः पूजितः प्रत्यक्षः शिवया युतः सगणपो लिंगे कृपासागरः । भूत्वा तत्पितरं च भ्रातृसहितं यो दर्शयित्वा ददौ रक्षोदाहनमंत्रशक्तिममलां तं कामपूरं भजे ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां चतुःषष्टितमोऽध्यायः ॥६४॥

हन्यते तात कः केन यतः स्वकृतभुक्पुमान् ॥ संचितस्यातिमहता वत्स क्लेशेन मानवैः ॥ ११० ॥ यशसस्तपसश्चैव क्रोधो नाशकरः स्मृतः ॥ अलं हि राक्षसैर्दग्धैर्दीनैरनपराधिभिः ॥ १११ ॥ सत्रं ते विरमत्वेतत्क्षमासारा हि साधवः ॥ एवं वसिष्ठवाक्येन शाक्तेयो मुनिपुंगवः ॥ ११२ ॥ उपसंहृतवान् सत्रं सद्यस्तद्वाक्यगौरवात् ॥ ततः प्रीतश्च भगवान्वसिष्ठो मुनिसत्तमः ॥ ११३ ॥ संप्राप्तश्च तदा सत्रं पुलस्त्यो ब्रह्मणः सुतः ॥ वसिष्ठेन तु दत्तार्घ्यः कृतासनपरिग्रहः ॥११४॥ पराशरमुवाचेदं प्रणिपत्य स्थितं मुनिः ॥ वैरे महति यद्वाक्या द्गुरोरप्याश्रिताक्षमा ॥ ११५ ॥ त्वया तस्मात्समस्तानि भवाञ्छास्त्राणि वेत्स्यति ॥ संततेर्मम न च्छेदः क्रुद्धेनापि यतः कृतः ॥११६॥ त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् ॥ पुराणसंहिताकर्ता भवान्वत्स भविष्यति॥११७॥देवतापरमार्थं च यथावद्वेत्स्यते भवान् ॥ प्रवृत्तौ वा निवृत्तौ वा कर्मणस्तेऽमला मतिः ॥ ११८ ॥ मत्प्रसादादसंदिग्धा तव वत्स भविष्यति ॥ ततश्च प्राह भगवान्वसिष्ठो वदतां वरः ॥११९॥ पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति ॥ अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः ॥१२०॥ प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ॥ षट्प्रकारं समस्तार्थसाधकं ज्ञानसंचयम् ॥१२१॥ षट्साहस्रमितं सर्वं वेदार्थेन च संयुतम् ॥ चतुर्थं हि पुराणानां संहितासु सुशोभनम्॥१२२॥एष वः कथितः सर्वो वासिष्ठानां समासतः॥ प्रभवः शक्तिसूनोश्च प्रभावो मुनिपुंगवाः॥१२३॥ इति श्रीलिंगमहापुराणे पूर्वभागे वासिष्ठकथनं नाम चतुःषष्टितमोऽध्यायः ॥६४॥ ऋषय ऊचुः ॥ आदित्यवंशं सोमस्य वंशं वंशविदां वर ॥ वक्तुमर्हसि चास्माकं संक्षेपाद्रोमहर्षणम् ॥ १ ॥ सूत उवाच ॥ अदितिः सुषुवे पुत्रमादित्यं कश्यपाद्द्विजाः ॥ तस्यादित्यस्य चैवासीद्भार्यात्रयमथापरम् ॥२॥

पंचषष्टितमे सूर्यसोमवंशसमुद्भवः । अष्टाधिकसहस्रं च तंडिप्रोक्तं निगद्यते ॥ ऋषय आदित्यसोमवंशमपृच्छन्—आदित्येत्यादिना ॥ १ ॥ तस्यादितिपुत्रस्यादित्यस्य भार्या मुख्यत्री अथापरमन्यस्त्रीत्रयं चासीदित्यन्वयः ॥ २ ॥

तामां संज्ञादिचतसृणाम् ॥ ३ ॥ ४ ॥ ५ ॥ तदापत्यजननानंतरं छाया स्वपुत्रे अभ्यधिकं स्वपुत्राभ्यधिकं मनौ सावर्णिके स्नेहमनुरागं चक्रे पूर्वः प्रथमो वैवस्वतमनुः चक्षाम क्रोधमूर्च्छितः यमस्तु नेत्यन्वयः ॥ ६ ॥ ७ ॥ क्लिन्नं पूयादिना आर्द्रमभवदिति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ लिखितः भ्रमिमारोप्य निर्गलिततेजाः कृत

संज्ञा राज्ञी प्रभा छाया पुत्रांस्तासां वदामि वः ॥ संज्ञा त्वाष्ट्री च सुषुवे सूर्यान्मनुमनुत्तमम् ॥ ३ ॥ यमं च यमुनां चैव राज्ञी रेवतमेव च ॥ प्रभा प्रभातमादित्याच्छायां संज्ञाप्यकल्पयत् ॥ ४ ॥ छाया च तस्मात्सुषुवे सावर्णिं भास्कराद्द्विजाः ॥ ततः शनिं च तपतीं विष्टिं चैव यथाक्रमम् ॥ ५ ॥ छाया स्वपुत्राभ्यधिकं स्नेहं चक्रे मनौ तदा ॥ पूर्वो मनुर्न चक्षाम यमस्तु क्रोधमूर्च्छितः ॥ ६ ॥ संताडयामास रुषा पादमुद्यम्य दक्षिणम् ॥ यमेन ताडिता सा तु छाया वै दुःखिताभवत् ॥ ७ ॥ छायाशापात्पदं चैकं यमस्य क्लिन्नमुत्तमम् ॥ पूयशोणित संपूर्णं कृमीणां निचयान्वितम् ॥ ८ ॥ सोपि गोकर्णमाश्रित्य फलकेनानिलाशनः ॥ आराधयन्महादेवं यावद्वर्षायुतायुतम् ॥ ९ ॥ भवप्रसादादागत्य लोकपालत्वमुत्तमम् ॥ पितॄणामाधिपत्यं तु शापमोक्षं तथैव च ॥ १० ॥ लब्धवान्देवदेवस्य प्रभावाच्छूलपाणिनः ॥ असहंती पुरा भानोस्तेजोमयमनिंदिता ॥ ११ ॥ रूपं त्वाष्ट्री स्वदेहात्तु छायाख्यां सा त्वकल्पयत् ॥ वडवारूपमास्थाय तपस्तेपे तु सुव्रता ॥ १२ ॥ कालात्प्रयत्नतो ज्ञात्वा छायां छायापतिः प्रभुः ॥ वडवामगमत्संज्ञामश्वरूपेण भास्करः ॥ १३ ॥ वडवा च तदा त्वाष्ट्री संज्ञा तस्माद्दिवाकरात् ॥ सुषुवे चाश्विनौ देवौ देवानां तु भिषग्वरौ ॥ १४ ॥ लिखितो भास्करः पश्चात्संज्ञापित्रा महात्मना ॥ विष्णोश्चक्रं तु यद्घोरं मंडलाद्भास्करस्य तु ॥ १५ ॥ निर्ममे भगवांस्त्वष्टा प्रधानं दिव्यमायुधम् ॥ रुद्रप्रसादाच्च शुभं सुदर्शनमिति स्मृतम् ॥ १६ ॥ लब्धवान् भगवांश्चक्रं कृष्णः कालाग्निसन्निभम् ॥ मनोस्तु प्रथमस्यासन्नव पुत्रास्तु तत्समाः ॥ १७ ॥ इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च ॥ नरिष्यंतश्च वै धीमान् नाभागोरिष्ट एव च ॥ १८ ॥ करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ॥ इला ज्येष्ठा वरिष्ठा च पुंस्त्वं प्राप च या पुरा ॥ १९ ॥ सुद्युम्न इति विख्याता पुंस्त्वं प्राप्ता त्विला पुरा ॥ मित्रावरुणयोस्त्वत्र प्रसादान्मुनिपुंगवाः ॥ २० ॥

इत्यर्थः । इयं कथा मार्कंडेयपुराणे विस्तरेणोक्ता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इलापुंस्त्वप्रयोजनं कथयति–सुद्युम्न इति । इला पुरा प्रथमतः मित्रावरुणयोः प्रसादात्तत्पुत्रद्वारेत्यर्थः । वसिष्ठप्रभावात्पुंस्त्वप्राप्तिकथा भागवते विस्तरेणोक्ता । पुंस्त्वं प्राप्ता सुद्युम्न इति विख्याता अभवदिति शेषः ॥ २० ॥

पुनस्तदनन्तरं शरवणं तत्संज्ञकशिवाक्रीडास्थानं प्राप्तो गतः भवाज्ञया रुद्राज्ञया सोमवंशप्रवृद्धये सुद्युम्नः स्त्रीत्वं प्राप्त इत्यन्वयः। शरवणे देव्याः प्रियचिकीर्षया यः पुरुषस्तत्र गच्छेत्स स्त्री भवेदिति शिवेन वरो दत्तः। इयं कथा भागवतादौ विस्तृता ॥ २१ ॥ किंपुरुषः मासानंतरं स्त्रीभावात्कुत्सितपुरुष इत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

पुनः शरवणं प्राप्य स्त्रीत्वं प्राप्तो भवाज्ञया ॥ सुद्युम्नो मानवः श्रीमान् सोमवंशप्रवृद्धये॥२१॥ इक्ष्वाकोरश्वमेधेन इला किंपुरुषोऽभवत् ॥ इला किंपुरुषत्वे च सुद्युम्न इति चोच्यते ॥ २२ ॥ मासमेकं पुमान्वीरः स्त्रीत्वं मासमभूत्पुनः ॥ इला बुधस्य भवनं सोमपुत्रस्य चाश्रिता ॥२३॥ बुधेनांतरमासाद्य मैथुनाय प्रवर्तिता ॥ सोमपुत्राद्बुधाच्चापि ऐलो जज्ञे पुरूरवाः॥२४॥सोमवंशाग्रजो धीमान्भवभक्तः प्रतापवान्॥ इक्ष्वाकोर्वंशविस्तारं पश्चाद्वक्ष्ये तपोधनाः॥२५॥पुत्रत्रयमभूत्तस्य सुद्युम्नस्य द्विजोत्तमाः॥ उत्कलश्च गयश्चैव विनताश्वस्तथैव च ॥२६॥ उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम् ॥ गया गयस्य चाख्याता पुरी परमशोभना॥ २७ ॥सुराणां संस्थितिर्यस्यां पितॄणां च सदा स्थितिः ॥ इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ २८ ॥ कन्याभावाच्च सुद्युम्नो नैव भागमवाप्तवान् ॥ वसिष्ठवचनात्त्वासीत्प्रतिष्ठाने महाद्युतिः ॥ २९ ॥ प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ॥ तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः ॥ ३० ॥ मानवेयो महाभागः स्त्रीपुंसोर्लक्षणान्वितः॥ इक्ष्वाकोरभवद्वीरो विकुक्षिर्धर्मवित्तमः॥३१॥ज्येष्ठः पुत्रशतस्यासीद्दश पंच च तत्सुताः ॥ अभूज्ज्येष्ठः ककुत्स्थश्च ककुत्स्थात्तु सुयोधनः ॥ ३२ ॥ ततः पृथुर्मुनिश्रेष्ठा विश्वकः पार्थिवस्तथा ॥ विश्वकस्यार्द्रको धीमान्युवनाश्वस्तु तत्सुतः ॥ ३३ ॥ शावस्तिश्च महातेजा वंशकस्तु ततोभवत् ॥ निर्मिता येन शावस्ती गौडदेशे द्विजोत्तमाः ॥ ३४ ॥ वंशाच्च बृहदश्वोभूत्कुवलाश्वस्तु तत्सुतः ॥ धुंधुमारत्वमापन्नो धुंधुं हत्वा महाबलम् ॥ ३५ ॥ धुंधुमारस्य तनयास्त्रयस्त्रैलोक्यविश्रुताः ॥ दृढाश्वश्चैव चंडाश्वः कपिलाश्वश्च ते स्मृताः ॥ ३६ ॥ दृढाश्वस्य प्रमोदस्तु हर्यश्वस्तस्य वै सुतः ॥ हर्यश्वस्य निकुंभस्तु संहताश्वस्तु तत्सुतः ॥ ३७ ॥ कृशाश्वोथ रणाश्वश्च संहताश्वात्मजावुभौ ॥ युवनाश्वो रणाश्वस्य मांधाता तस्य वै सुतः ॥ ३८ ॥ मांधातुः पुरुकुत्सोभूदंबरीषश्च वीर्यवान् ॥ मुचुकुंदश्च पुण्यात्मा त्रयस्त्रैलोक्यविश्रुताः ॥ ३९ ॥

तस्य पुंस्त्वविशिष्टस्य ॥ २६ ॥ २७ ॥ २८ ॥ भागं मुख्यभागमित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

तासां संज्ञादिचतसृणाम्॥३॥४॥५॥तदापत्यजननानंतरं छाया स्वपुत्रे अभ्यधिकं स्वपुत्राभ्यधिकं मनौ सावर्णिके स्नेहमनुरागं चक्रे पूर्वः प्रथमो वैवस्वतमनुः चक्षाम क्रोधमूर्छितः यमस्तु नेत्यन्वयः ॥ ६ ॥ ७ ॥ क्लिन्नं पूयादिना आर्द्रमभवदिति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ लिखितः भ्रमिमारोप्य निर्गलिततेजाः कृत

संज्ञा राज्ञी प्रभा छाया पुत्रांस्तासां वदामि वः ॥ संज्ञा त्वाष्ट्री च सुषुवे सूर्यान्मनुमनुत्तमम् ॥३॥ यमं च यमुनां चैव राज्ञी रेवतमेव च ॥ प्रभा प्रभातमादित्याच्छायां संज्ञाप्यकल्पयत् ॥ ४ ॥ छाया च तस्मात्सुषुवे सावर्णिं भास्कराद्द्विजाः ॥ ततः शनिं च तपतीं विष्टिं चैव यथाक्रमम् ॥ ५ ॥ छाया स्वपुत्राभ्यधिकं स्नेहं चक्रे मनौ तदा ॥ पूर्वो मनुर्न चक्षाम यमस्तु क्रोधमूर्च्छितः ॥ ६ ॥ संताडयामास रुषा पादमुद्यम्य दक्षिणम् ॥ यमेन ताडिता सा तु छाया वै दुःखिताभवत् ॥ ७ ॥ छायाशापात्पदं चैकं यमस्य क्लिन्नमुत्तमम् ॥ पूयशोणित संपूर्णं कृमीणां निचयान्वितम् ॥ ८ ॥ सोपि गोकर्णमाश्रित्य फलकेनानिलाशनः ॥ आराधयन्महादेवं यावद्वर्षायुतायुतम् ॥ ९ ॥ भवप्रसादादागत्य लोकपालत्वमुत्तमम् ॥ पितृणामाधिपत्यं तु शापमोक्षं तथैव च ॥ १० ॥ लब्धवान्देवदेवस्य प्रभावाच्छूलपाणिनः ॥ असहंती पुरा भानोस्तेजोमयमनिंदिता ॥ ११ ॥ रूपं त्वाष्ट्री स्वदेहात्तु छायाख्यां सा त्वकल्पयत् ॥ वडवारूपमास्थाय तपस्तेपे तु सुव्रता ॥ १२ ॥ कालात्प्रयत्नतो ज्ञात्वा छायां छायापतिः प्रभुः ॥ वडवामगमत्संज्ञामश्वरूपेण भास्करः ॥ १३ ॥ वडवा च तदा त्वाष्ट्री संज्ञा तस्माद्दिवाकरात् ॥ सुषुवे चाश्विनौ देवौ देवानां तु भिषग्वरौ ॥ १४ ॥ लिखितो भास्करः पश्चात्संज्ञापित्रा महात्मना ॥ विष्णोश्चक्रं तु यद्घोरं मंडलाद्भास्करस्य तु ॥ १५ ॥ निर्ममे भगवांस्त्वष्टा प्रधानं दिव्यमायुधम् ॥ रुद्रप्रसादाच्च शुभं सुदर्शनमिति स्मृतम् ॥ १६ ॥ लब्धवान् भगवांश्चक्रं कृष्णः कालाग्निसन्निभम् ॥ मनोस्तु प्रथमस्यासन्नव पुत्रास्तु तत्समाः ॥ १७ ॥ इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च ॥ नरिष्यंतश्च वै धीमान् नाभागोरिष्ट एव च ॥ १८ ॥ करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ॥ इला ज्येष्ठा वरिष्ठा च पुंस्त्वं प्राप च या पुरा ॥१९॥ सुद्युम्न इति विख्याता पुंस्त्वं प्राप्ता त्विला पुरा ॥ मित्रावरुणयोस्त्वत्र प्रसादान्मुनिपुंगवाः ॥२०॥

इत्यर्थः । इयं कथा मार्कंडेयपुराणे विस्तरेणोक्ता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इलापुंस्त्वप्रयोजनं कथयति–सुद्युम्न इति । इला पुरा प्रथमतः मित्रावरुणयोः प्रसादात्तत्पुत्रद्वारेत्यर्थः । वसिष्ठप्रभावात्पुंस्त्वप्राप्तिकथा भागवते विस्तरेणोक्ता । पुंस्त्वं प्राप्ता सुद्युम्न इति विख्याता अभवदिति शेषः ॥ २० ॥

पुनस्तदनन्तरं शरवणं तत्संज्ञकशिवाक्रीडास्थानं प्राप्तो गतः भवाज्ञया रुद्राज्ञया सोमवंशप्रवृद्धये सुद्युम्नः स्त्रीत्वं प्राप्त इत्यन्वयः । शरवणे देव्याः प्रियचिकीर्षया यः पुरुषस्तत्र
गच्छेत्स स्त्री भवेदिति शिवेन वरो दत्तः । इत्थं कथा भागवतादौ विस्तृता ॥ २१ ॥ किंपुरुषः मासानंतरं स्त्रीभावात्कुत्सितपुरुष इत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

पुनः शरवणं प्राप्य स्त्रीत्वं प्राप्तो भवाज्ञया ॥ सुद्युम्नो मानवः श्रीमान् सोमवंशप्रवृद्धये॥२१॥ इक्ष्वाकोरश्वमेधेन इला किंपुरुषोऽभवत् ॥ इला किंपुरुषत्वे च सुद्युम्न इति चोच्यते ॥ २२ ॥ मासमेकं पुमान्वीरः स्त्रीत्वं मासमभूत्पुनः ॥ इला बुधस्य भवनं सोमपुत्रस्य चाश्रिता ॥२३॥ बुधेनांतरमासाद्य मैथुनाय प्रवर्तिता ॥ सोमपुत्राद्बुधाच्चापि ऐलो जज्ञे पुरूरवाः॥२४॥सोमवंशाग्रजो धीमान्भवभक्तः प्रतापवान्॥ इक्ष्वाकोर्वंशविस्तारं पश्चाद्वक्ष्ये तपोधनाः॥२५॥पुत्रत्रयमभूत्तस्य सुद्युम्नस्य द्विजोत्तमाः॥ उत्कलश्च गयश्चैव विनताश्वस्तथैव च ॥२६॥ उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम् ॥ गया गयस्य चाख्याता पुरी परमशोभना॥ २७ ॥सुराणां संस्थितिर्यस्यां पितॄणां च सदा स्थितिः ॥ इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ २८ ॥ कन्याभावाच्च सुद्युम्नो नैव भागमवाप्तवान् ॥ वसिष्ठवचनात्त्वासीत्प्रतिष्ठाने महाद्युतिः ॥ २९ ॥ प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ॥ तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः ॥ ३० ॥ मानवेयो महाभागः स्त्रीपुंसोर्लक्षणान्वितः॥ इक्ष्वाकोरभवद्वीरो विकुक्षिर्धर्मवित्तमः॥३१॥ज्येष्ठः पुत्रशतस्यासीद्दश पंच च तत्सुताः ॥ अभूज्ज्येष्ठः ककुत्स्थश्च ककुत्स्थात्तु सुयोधनः ॥ ३२ ॥ ततः पृथुर्मुनिश्रेष्ठा विश्वकः पार्थिवस्तथा ॥ विश्वकस्यार्द्रको धीमान्युवनाश्वस्तु तत्सुतः ॥ ३३ ॥ शावस्तिश्च महातेजा वंशकस्तु ततोभवत् ॥ निर्मिता येन शावस्ती गौडदेशे द्विजोत्तमाः ॥ ३४ ॥ वंशाच्च बृहदश्वोभूत्कुवलाश्वस्तु तत्सुतः ॥ धुंधुमारत्वमापन्नो धुंधुं हत्वा महाबलम् ॥ ३५ ॥ धुंधुमारस्य तनयास्त्रयस्त्रैलोक्यविश्रुताः ॥ दृढाश्वश्चैव चंडाश्वः कपिलाश्वश्च ते स्मृताः ॥ ३६ ॥ दृढाश्वस्य प्रमोदस्तु हर्यश्वस्तस्य वै सुतः ॥ हर्यश्वस्य निकुंभस्तु संहताश्वस्तु तत्सुतः ॥ ३७ ॥ कृशाश्वोथ रणाश्वश्च संहताश्वात्मजावुभौ ॥ युवनाश्वो रणाश्वस्य मांधाता तस्य वै सुतः ॥ ३८ ॥ मांधातुः पुरुकुत्सोभूदंबरीषश्च वीर्यवान् ॥ मुचुकुंदश्च पुण्यात्मा त्रयस्त्रैलोक्यविश्रुताः ॥ ३९ ॥

तस्य पुंस्त्वविशिष्टस्य ॥ २६ ॥ २७ ॥ २८ ॥ भागं मुख्यभागमित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ अंगिरसः पक्षे तत्संज्ञक ऋषिगोत्रे क्षत्रात्क्षत्रियकुलादुपेताः प्राप्ता इत्यर्थः ॥ ४१ ॥ ४२ ॥ एते विष्णुवृद्धाः ॥ ४३ ॥ ४४ ॥ त्रिधन्वा ब्रह्मसूनोस्तांडिनः शिष्यतां प्राप्य प्रसादादश्वमेधसहस्रस्य फलं प्राप्य तदाज्ञया गणैश्वर्यमनुप्राप्त इति तृतीयेनान्वयः ॥ ४५ ॥ ४६ ॥ त्रिधन्वनः अश्वमेधफलादिप्राप्तिप्रकारं कथयति—कथमित्यादिना ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ यदष्टोत्तरनामसहस्रं गाणपत्यं शिवगणस्वामित्वमित्यर्थः । एतत्स्तवराजमहिमा भारतानुशासनपर्वणि उपमन्युना श्रीकृष्णायातीवोक्तः । तदुक्तम्—" इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः । सर्वस्तवानां राजत्वे दिव्यानां समकल्पयत् । यतस्तांडिः पुरा प्राप तेन तंडिकृतोऽभवत्॥ " इति।

अंबरीषस्य दायादो युवनाश्वोपरः स्मृतः ॥ हरितो युवनाश्वस्य हारितास्तु यतः स्मृताः॥४०॥एते ह्यंगिरसः पक्षे क्षत्रोपेता द्विजातयः ॥ पुरुकुत्सस्य दायादस्त्रसदस्युर्महायशाः ॥ ४१ ॥ नर्मदायां समुत्पन्नः संभूतिस्तस्य चात्मजः ॥ विष्णुवृद्धः सुतस्तस्य विष्णुवृद्धा यतः स्मृताः॥ ४२ ॥ एते ह्यंगिरसः पक्षे क्षत्रोपेताः समाश्रिताः॥ संभूतिरपरं पुत्रमनरण्यमजीजनत्॥४३॥रावणेन हतो योऽसौ त्रैलोक्यविजये द्विजाः ॥ बृहदश्वोऽनरण्यस्य हर्यश्वस्तस्य चात्मजः ॥ ४४ ॥ हर्यश्वात्तु दृषद्वत्यां जज्ञे वसुमना नृपः ॥ तस्य पुत्रोऽभवद्राजा त्रिधन्वा भवभावितः ॥ ४५ ॥ प्रसादाद्ब्रह्मसूनोर्वै तंडिनः प्राप्य शिष्यताम् ॥ अश्वमेधसहस्रस्य फलं प्राप्य तदाज्ञया॥ ४६ ॥ गणैश्वर्यमनुप्राप्तो भवभक्तः प्रतापवान् ॥ कथं चैवाश्वमेधं वै करोमीति विचिंतयन् ॥ ४७ ॥ धनहीनश्च धर्मात्मा दृष्टवान् ब्रह्मणः सुतम् ॥ तंडिसंज्ञं द्विजं तस्माल्लब्धवान्द्विजसत्तमाः॥४८॥ नाम्नां सहस्रं रुद्रस्य ब्रह्मणा कथितं पुरा ॥ तेन नाम्नां सहस्रेण स्तुत्वा तण्डिर्महेश्वरम् ॥४९॥ लब्धवान्गाणपत्यं च ब्रह्मयोनिर्द्विजोत्तमः ॥ ततस्तस्मान्नृपो लब्ध्वा तण्डिना कथितं पुरा ॥५०॥ नाम्नां सहस्रं जप्त्वा वै गाणपत्यमवाप्तवान् ॥ ऋषय ऊचुः ॥ नाम्नां सहस्रं रुद्रस्य तांडिना ब्रह्मयोनिना ॥ ५१ ॥ कथितं सर्ववेदार्थसंचयं सूत सुव्रत ॥ नाम्नां सहस्रं विप्राणां वक्तुमर्हसि शोभनम् ॥ ५२ ॥ सूत उवाच ॥ सर्वभूतात्मभूतस्य हरस्यामिततेजसः ॥ अष्टोत्तरसहस्रं तु नाम्नां शृणुत सुव्रताः ॥ ५३ ॥ यज्जप्त्वा तु मुनिश्रेष्ठा गाणपत्यमवाप्तवान् ॥ ॐ स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः॥५४ ॥

तत्रत्यनाम्नामत्र प्रायशः साम्यं क्वचिद्भेदः कल्पभेदव्यवस्थया बोध्यः । तदुक्तं मेघवाहनपर्वणि—" दश नामसहस्राणि यान्याह प्रपितामहः । तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ॥ " इति । अत्र नाम्नां शब्दतोऽर्थतश्च पौनरुक्त्येऽपि शब्दार्थभेदान्न पौनरुक्त्यं 'विधिगत एव शब्दः प्रयोक्तव्य' इति मीमांसकनियमात् अन्यथा 'अग्नये जुष्टं निर्वपामि' इत्यत्र वह्न्यादिपदप्रयोगापत्तिर्दुर्वारा । श्रीरुद्रस्यैव विश्वरूपत्वाद्ब्रह्मविष्ण्वादि सर्वशब्दैः स एव प्रतिपाद्यते। तथा च श्रुतयः—"विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं

च यत् ॥ सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ एवं यो देवानां नामधा एक एव नामानि सर्वाणि यमाविशंति ॥ " इति श्रुत्युपवर्णितानंतैश्वर्यसच्चिदानंदैकरसस्य परम-शिवस्यानेकार्थानि नामानि कथयति–स्थिर इत्यादिना । सर्वसहस्रनामसु नमःशब्दांतचतुर्थ्यन्तनामप्रयोगस्यैव सर्वसंमतत्वाच्चतुर्थ्यंतनामानि प्रदर्श्यैव व्याख्यायंते । शाब्दशास्त्र-स्यानंतत्वाद्यावदर्थज्ञानं तल्लेखनं चाशक्यमतः यत्किंचिच्छब्दार्थाः प्रदर्श्यंते । स्थिरायेति १ तिष्ठतीति स्थिरः कूटस्थत्वाद्गमनागमनवर्जित इत्यर्थः । स्थाणवे २ तिष्ठंत्यस्मिन्निति स्थाणुः । तदुक्तं " संसारमंडपस्यास्य मूलस्तंभाय शंभवे " इति । प्रभवे ३ प्रभुः सर्वस्वामीत्यर्थः । भानवे ४ भासतीति भानुः सूर्यरूप इत्यर्थः । यद्वा भासयतीति भानुः 'यस्य भासा सर्वमिदं विभाति 'इति श्रुतेः । प्रवराय ५ प्रवरः श्रेष्ठः । यद्वा प्रकर्षेण व्रियते चतुर्विधपुरुषार्थार्थिभिः प्रार्थ्यत इत्यर्थः। वरदाय ६ वरान् भक्ताभिलषितान् ददाति वा वरानावरकान्मायाविलासान् द्यति खंडयतीत्यर्थः । वराय ७ वरोऽभीष्टरूपो वा जगदावरक इत्यर्थः ॥ ५४ ॥ सर्वात्मने ८ सर्वेषामात्मा सर्वात्मा प्रत्यग्रूपः सर्वेषामंतर्यामीत्यर्थः । सर्वविख्याताय ९ सर्वेषां जीवानां विख्यातः नियंतृत्वेन स्वत एव प्रतीयमान इत्यर्थः । सर्वस्मै १० सर्वः विश्वरूप इत्यर्थः । सर्वकराय ११ सर्वं वस्तुजातं करोत्युत्पादयतीति सर्वकरः जगदुपादानभूत इत्यर्थः । "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः । "कृञो हेतु" इति टः । अयमेवाग्र एतादृशप्रयोगेषु ज्ञेयः । भवाय १२

**सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ॥ जटी दंडी शिखंडी च सर्वगः सर्वभावनः ॥ ५५ ॥ हरिश्च हरिणाक्षश्च सर्वभूतहरः स्मृतः ॥ प्रवृत्तिश्च निवृत्तिश्च शांतात्मा शाश्वतो ध्रुवः ॥ ५६ ॥**

भवंत्यस्मिन्निति भवः प्रातिभासिकजगत्सत्ताधिकरणस्थानभूत इत्यर्थः । जटिने १३ जटा लग्नकचास्तद्वान् जटीत्यर्थः । "जटा लग्नकचे मूले" इति विश्वः । व्रीह्यादित्वादिनिः । दंडिने १४ दण्डी दंडविशिष्टः । शिखण्डिने १५ मयूरबर्हः शिखंडः तद्वान् शिखंडी अर्जुनप्रसादावसरे धृतकिरातवपुषो मयूरबर्हमुकुटधारणं भारते उक्तम् । एतदेवोपवर्णितं भारतचंपौ " हेरंबगंडमदपंकविशेषकांकौ स्कंधोपवाह्यशिखिपिच्छविलासचूडौ " इति । सर्वगाय १६ सर्वस्मिन् गच्छतीति सर्वगः । सर्वभावनाय १७ सर्वं विश्वजातं भावयते प्रापयतीति सर्वभावनः सर्वप्रापक इत्यर्थः ॥ ५५ ॥ हरये १८ हरति पातकजातं स्मृतिमात्रेणापनयतीति हरिः । हरिणाक्षाय १९ हरिणवदक्षिणी यस्य स हरिणाक्षः विशालनयन इत्यर्थः । सर्वभूतहराय २० सर्वभूतानां हरः सर्वभूतहरः । स्मृताय २१ स्मर्यते इति स्मृतः मुमुक्षुभिः निरंतरं स्मर्यमाण इत्यर्थः । प्रवृत्तये २२ प्रवृत्तिः कर्ममार्गरूप इत्यर्थः । निवृत्तये २३ निवृत्तिर्मोक्षमार्गरूपः । शांतात्मने २४ शांतानां त्यक्तेषणानामात्मा सततं विद्यमान इत्यर्थः । " यच्चास्य संततो भावस्तस्मादात्मेति गीयते " इति श्रुतेः । शाश्वताय २५ शश्वन्निरंतरं भवतीति शाश्वतः नित्य इत्यर्थः । ध्रुवाय २६ ध्रुवोऽचल इत्यर्थः ॥ ५६ ॥

श्मशानवासिने २७ श्मशाने सुषुम्नायां वसति तच्छील: श्मशानवासी । तदुक्तं हठदीपिकायाम् " सुषुम्ना शून्यपदवी ब्रह्मरंध्रं महापथः । श्मशानं शांभवी मध्यमार्ग-
श्चेत्येकवाचकाः॥" इति । भगवते २८ भगवान्षड्गुणैश्वर्यविशिष्टः । तदुक्तं विष्णुपुराणे–"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भग-
वानिति ॥" इति । खचराय २९ खे हृदयाकाशे चरतीति खचरः । गोचराय ३० गोष्विंद्रियेषु चरति विषयरूपेण गच्छति वा गोभिः इंद्रियैश्चरति विषयान् भुंक्त इति गोचर
इत्यर्थः । अर्दनाय ३१ अर्दयति पापिनं कालांतकरूपेण पीडयति वा अर्दति याचति भैक्ष्यचर्यया चरतीत्यर्थः । अभिवाद्याय ३२ अभिवादयितुं योग्योऽभिवाद्यः सर्वेषां
नमस्कार्य इत्यर्थः । महाकर्मणे ३३ महज्जगत्सर्जनादिकं कर्म यस्य स महाकर्मा । तपस्विने ३४ तप एव स्वं धनं यस्यास्तीति तपस्वी वा तपोविशिष्टः " तपःसहस्राभ्याम् "
इति विनिः । भूतधारणाय ३५ भूतानि गगनादीनि धारयतीति भूतधारणः ॥ ५७॥ उन्मत्तवेषाय ३६ उन्मत्तवद्वेषो यस्य स उन्मत्तवेषः । दारुवनस्थऋषिपरीक्षार्थमागत-
स्यात्रैवोपवर्णितः । प्रच्छन्नाय ३७ प्रकर्षेण च्छन्नः मायाजवनिकया तिरोहित इत्यर्थः । सर्वलोकाय ३८ सर्वान् लोकयतीति सर्वलोकः सर्वदर्शीत्यर्थः। प्रजापतये ३९ प्रजानां

**श्मशानवासी भगवान्खचरो गोचरोऽर्दनः ॥ अभिवाद्यो महाकर्मा तपस्वी भूतधारणः ॥५७॥ उन्मत्तवेषः प्रच्छन्नः सर्वलोकः प्रजापतिः ॥**
**महारूपो महाकायः सर्वरूपो महायशाः ॥ ५८ ॥ महात्मा सर्वभूतश्च विरूपो वामनो नरः ॥ लोकपालोऽन्तर्हितात्मा प्रसादोऽभयदो**
**विभुः ॥ ५९ ॥ पवित्रश्च महांश्चैव नियतो नियताश्रयः ॥ स्वयंभूः सर्वकर्मा च आदिरादिकरो निधिः ॥ ६० ॥**

हिरण्यगर्भादीनां पतिः स्वामीत्यर्थः । महारूपाय ४० महदपरिच्छिन्नं रूपं यस्य स महारूपः " महतो महीयान् " इति श्रुतेः । महाकायाय ४१ महान् कायो विराड्रूपं यस्य
स महाकायः । सर्वरूपाय ४२ सर्वं दृश्यमात्रं रूपं यस्य स सर्वरूपः । महायशसे ४३ महत् सर्वातिशयितं यशो यस्य स महायशाः ॥ ५८ ॥ महात्मने ४४ महांश्चासावात्मा
च महात्मा व्यष्टिजीवपूज्यः समष्टिरूप इत्यर्थः । सर्वभूताय ४५ सर्वं विश्वं भूतमुत्पन्नं यस्मादसौ सर्वभूतः । विरूपाय ४६ विरूपः शरभपक्षिरूप इत्यर्थः । इयं कथात्रैव विस्त-
रणोक्ता । वामनाय ४७ वामनो ह्रस्वरूप इत्यर्थः । नराय ४८ नरः पुरुषरूपो वा नरावताररूप इत्यर्थः । लोकपालाय ४९ लोकान् भूरादीन् पालयतीति लोकपालः । अंतर्हि-
तात्मने ५० अंतर्हितः आविद्यकादाहंकारादिना तिरोहितः आत्मा अखंडैकरसस्वरूपं यस्य सोऽन्तर्हितात्मा । प्रसादाय ५१ प्रकर्षेण सादयति मोक्षाख्यपरमगतिं प्रापयतीति
प्रसादः । यद्वा प्रसादः प्रसन्नतारूप इत्यर्थः । अभयदाय ५२ अभयं स्वात्मैक्यं ददातीत्यभयदः । तदुक्तं भागवते–" भयं द्वितीयाभिनिवेशतः स्यात् " इति । विभवे
५३ विभुर्व्यापक इत्यर्थः । "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः ॥ ५९ ॥ पवित्राय ५४ पवित्रः पावनः । महते ५५ महान्पूज्य इत्यर्थः । नियताय ५६ नियतः निगृही

तेन्द्रियवृत्तिरित्यर्थः । नियताश्रयाय ५७ नियतो नित्यः आश्रयो यस्य स नियताश्रयः । स्वयंभुवे ५८ स्वयमेव भवतीति स्वयंभूः तत्संज्ञकलिंगरूप इत्यर्थः । सर्वकर्मणे ५९ सर्वकर्मा विश्वकर्मरूप इत्यर्थः । आदये ६० आदिः प्रथमः " यो देवानां प्रथमं पुरस्तात् " इति श्रुतेः । आदिकराय ६१ आदिं हिरण्यगर्भं करोतीत्यादिकरः " यो ब्रह्माणं विदधाति पूर्वम् " इति श्रुतेः । निधये ६२ निधिरक्षयः पद्मशंखादिरूप इत्यर्थः ॥ ६० ॥ सहस्राक्षाय ६३ सहस्राण्यपरिमितान्यक्षीणि यस्य स सहस्राक्षः विश्वरूपत्वादि त्यर्थः । विशालाक्षाय ६४ विस्तृतचंद्रसूर्यरूपनयनविशिष्ट इत्यर्थः । सोमाय ६५ सोमा उमासहित इत्यर्थः । नक्षत्रसाधकाय ६६ न क्षरंति तानि नक्षत्राणि साधयति क्रमशः चन्द्रादिग्रहरूपेणाक्रमतीति नक्षत्रसाधकः । चंद्राय ६७ सूर्याय ६८ शनये ६९ केतवे ७० इमानि तत्तद्ग्रहरूप इति स्पष्टान्येव । ग्रहाय ७१ गृह्णातीति ग्रहः वृष्ट्यवग्रहकारको भौम इत्यर्थः । ग्रहपतये ७२ ग्रहाणां पतिः गुरुरित्यर्थः । मताय ७३ मतो बुध इत्यर्थः ॥ ६१ ॥ राज्ञे ७४ राजते परमभासा शोभतीति राजा शुक्र इत्यर्थः । राज्योदयाय ७५ राज्यस्य उदयो यस्मादसौ राज्योदयः राहुरित्यर्थः । अत एव नरपतिजयचर्यारूपस्वरशास्त्रे राहोः प्राधान्यं संगतम् । कर्त्रे ७६ करोतीति कर्ता जगत्सर्जनव्यापारा

**सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ॥ चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्मतः ॥ ६१ ॥ राजा राज्योदयः कर्ता मृगबाणार्पणो घनः ॥ महातपा दीर्घतपा अदृश्यो धनसाधकः ॥ ६२ ॥ संवत्सरः कृतो मंत्रः प्राणायामः परंतपः ॥ योगी योगो महाबीजो महारेता महाबलः ॥ ६३ ॥**

श्रय इत्यर्थः । मृगबाणार्पणाय ७७ बाणमर्पयतीति बाणार्पणः मृगस्य मृगरूपधारिणो ब्रह्मणः बाणार्पणः मृगबाणार्पणः । एतदेवोपवर्णितं महिम्नस्तोत्रे—" प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा । धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसंतं तेऽद्यापि त्यजति न मृगव्याधरभसः " इति । घनाय ७८ घनो मेघरूपः । महातपसे ७९ महत्सर्वातिशयितं तपो यस्य स महातपाः । दीर्घतपसे ८० दीर्घं चिरकालं तपो यस्य स दीर्घतपाः अजरामरत्वादित्यर्थः। अदृश्याय ८१ न दृश्योऽदृश्यः सर्वेषामतींद्रिय इत्यर्थः । धनसाधकाय ८२ धनं साधयति कामुकभक्तेभ्यः प्रतिपादयतीति धनसाधकः ॥ ६२ ॥ संवत्सराय ८३ संवत्सरः प्रभवादिकरूप इत्यर्थः । कृताय ८४ कृतः कृतयुगरूप इत्यर्थः । मंत्राय ८५ मननात्त्रायत इति मंत्रः प्रणवादिरूप इत्यर्थः । प्राणायामाय ८६ प्राणायामो योगांगरूप इत्यर्थः । परंतपाय ८७ परानसुरान्तापयतीति परंतपः । योगिने ८८ योगश्चित्तवृत्तिनिरोधस्तद्विशिष्ट इत्यर्थः । योगाय ८९ योगः समाधिरूप इत्यर्थः । महाबीजाय ९० महत्पूज्यं बीजं यस्य सः महाबीजः । महारेतसे ९१ महन्महत्तत्त्वं रेतो यस्य स महारेता इत्यर्थः । महाबलाय ९२ महदतुलं बलं यस्य स महाबलः ॥ ६३ ॥

सुवर्णरेतसे ९३ सुवर्णं रेतो यस्य स सुवर्णरेताः । सर्वज्ञाय ९४ सर्वं वस्तुजातं जानाति युगपत्पश्यतीति सर्वज्ञः। सुबीजाय ९५ सु शोभनमवंध्यं बीजं वीर्यं यस्य सः सुबीजः वह्निनिक्षिप्तेपि पुत्रजननादित्यर्थः । वृषवाहनाय ९६ वृषो नान्दिकेश्वरः वाहनं यस्य स वृषवाहनः । दशबाहवे ९७ दशबाहुर्दशभुजः । अनिमिषाय ९८ अनिमिषो निमेषरहित इत्यर्थः । नीलकंठाय ९९ नीलकंठो नीलग्रीव इत्यर्थः । उमापतये १०० उमा प्रणवरूपिणी चिच्छक्तिः तस्याः पतिः स्वामी । तदुक्तं पंचाशीतितमे श्रीशिवेन देव्यै—"उकारं च मकारं च अकारं च क्रमेण वै। त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम्॥ "इति। तथा च उम इति देवीप्रणवाददन्तत्वाट्टापि कृते उमेति रूपं ज्ञेयम् । अत एव केनोपनिषदि ब्रह्म विद्यैवोमेत्युक्तम् । इति प्रथमशतकं समाप्तम् ॥ ६४ ॥ विश्वरूपाय १ विश्वं रूपं यस्य स विश्वरूपः । स्वयंश्रेष्ठाय २ स्वयमेव श्रेष्ठः अन्यानपेक्ष्यश्रैष्ठ्यविशिष्ट इत्यर्थः । बलवीराय ३ बलेन स्वसामर्थ्येन वीरो विक्रांत इत्यर्थः । बलाग्रण्ये ४ बलेन सामर्थ्येन अग्रणीः स्वभक्तान्सर्वश्रेष्ठस्थानप्रापक इत्यर्थः । गणकर्त्रे ५ गणान् स्वसेवकसंघान्करोति उत्पादयतीति गणकर्ता । गणपतये ६ गणानां प्रमथादीनां पतिः स्वामी। दिग्वाससे ७ दिश एव वासो यस्य स दिग्वासाः । काम्याय ८ कामयितुं स्पृहयितुं योग्यः काम्यः॥ ६५॥

**सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ॥ दशबाहुस्त्वनिमिषो नीलकंठ उमापतिः ॥ ६४ ॥ विश्वरूपः स्वयंश्रेष्ठो बलवीरो बलाग्रणीः ॥ गणकर्ता गणपतिर्दिग्वासाः काम्य एव च ॥ ६५ ॥ मंत्रवित्परमो मंत्रः सर्वभावकरो हरः ॥ कमंडलुधरो धन्वी बाणहस्तः कपालवान् ॥ ६६ ॥ शरी शतघ्नी खड्गी च पट्टिशी चायुधी महान् ॥ अजश्च मृगरूपश्च तेजस्तेजस्करो विधिः ॥ ६७ ॥**

मंत्रविदे ९ मंत्रान् सार्धत्रिकोटीन् वेत्तीति मंत्रवित् । परमाय १० परमः सर्वोत्कृष्ट इत्यर्थः । मंत्राय ११ मंत्रो गुप्तसंभाषणीय इत्यर्थः । सर्वभावकराय १२ सर्वान् भावान् उत्पत्त्यादीन् करोति तच्छीलः सर्वभावकरः । हराय १३ हरति स्मृतिमात्रेण भक्तानिष्टं नाशयतीति हरः। कमंडलुधराय १४ कमंडलोरुदकपात्रस्य धरः कमंडलुधरः । धन्विने १५ धन्वमाजगवं यस्यास्तीति धन्वी । बाणहस्ताय १६ बाणो विष्णुरूपः हस्ते यस्य स बाणहस्तः । तदुक्तं महिम्नि—' रथचरणपाणिः शरः ' इति । कपालवते १७ कपालं ब्रह्मकपालं विद्यते यस्य स कपालवान् ॥ ६६ ॥ शरिणे १८ शरी बाणविशिष्ट इत्यर्थः । शतघ्निने १९ शतघ्नीशक्तिविशिष्ट इत्यर्थः । अत्र व्रीह्यादित्वादिनिः । खड्गिने २० खड्गश्चंद्रहास संज्ञस्तद्विशिष्ट इत्यर्थः । पट्टिशिने २१ पट्टिशः सरलाकृतिखड्गविशेषस्तद्विशिष्टः । आयुधिने २२ आयुधं स्वकीयासाधारणं शूलं तद्विशिष्ट इत्यर्थः । महते २३ महान् महत्तत्त्वरूप इत्यर्थः । अजाय २४ न जायत इत्यजः पूर्वसिद्ध इत्यर्थः । मृगरूपाय २५ मृगमन्वेष्यं रूपं यस्य स मृगरूपः । अत्र घञर्थे कः । तेजसे २६ तेजस्तेजोरूपः । तेजस्कराय २७ तेजः करोतीति तेजस्करः । विधये २८ विधिर्ब्रह्मरूप इत्यर्थः ॥ ६७ ॥

उष्णीषिणे २९ उष्णीषं शिरोवेष्टनं तद्विशिष्ट इत्यर्थः । उष्णीषवत्त्वं सद्योजाताद्यवतारेष्वत्रैवोक्तम् । सुवक्त्राय ३० शोभनं वक्त्रं मुखं यस्य स सुवक्त्रः । उदग्राय ३१ उदग्रः ऊर्जितरूप इत्यर्थः । विनताय ३२ विनतो नम्र इत्यर्थः । दीर्घाय ३३ दीर्घोऽत्युच्च इत्यर्थः । हरिकेशाय ३४ हरिर्विष्णुः कः ब्रह्मा तयोरीशः स्वामीत्यर्थः । सुतीर्थाय ३५ शोभनानि तीर्थानि पुष्कराद्यादीनि यस्मादसौ सुतीर्थः । कृष्णाय ३६ कृष्णः कृष्णवर्णविशिष्टः तत्तु अघोरावतारे अस्मिन्नेवोक्तम् ॥ ३८ ॥ शृगालरूपाय ३७ शृगालेन तत्संज्ञक दैत्यहननहेतुना रूप्यते प्रशस्यत इति शृगालरूपः । तदुक्तं द्विनवतितमे “ पुरा जंबुकरूपेण असुरो देवकंटकः । निहतो हिमवत्पुत्रि जंबुकेशस्ततो ह्यहम् ॥ ” इति । सर्वार्थाय ३८ सर्वे धनादयोऽर्थाः यस्मादसौ सर्वार्थः । मुंडाय ३९ मुंडः परिव्राड्रूप इत्यर्थः । सर्वशुभंकराय ४० सर्वस्मिन् शुभं भक्तकल्याणं करोतीति सर्वशुभंकरः । यद्वा सर्वेषां शुभंकरः कल्याणकर्तेत्यर्थः । बाहुलकात्खच् । सिंहशार्दूलरूपाय ४१ सिंहः शार्दूलो व्याघ्रः तौ देवीवाहनभूतौ रूपयति प्रशंसतीति सिंहशार्दूलरूपः । गंधकारिणे ४२ गंधान्कस्तूर्यादीन्करोतीति गंधकारी । कपर्दिने ४३ कपर्दो जटाजूटस्तद्विशिष्ट इत्यर्थः ॥ ६९ ॥ ऊर्ध्वरेतसे ४४ ऊर्ध्वरेता अविप्लुतब्रह्मचर्य इत्यर्थः । संधिरार्षः । ऊर्ध्व

**उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ॥ ६८ ॥ शृगालरूपः सर्वार्थो मुंडः सर्वशुभंकरः ॥ सिंहशार्दूलरूपश्च गंधकारी कपर्द्यपि ॥ ६९ ॥ ऊर्ध्वरेतोर्ध्वलिङ्गी च ऊर्ध्वशायी नभस्तलः ॥ त्रिजटी चीरवासाश्च रुद्रः सेना पति विभुः ॥ ७० ॥ अहोरात्रं च नक्तं च तिग्ममन्युः सुवर्चसः ॥ गजहा दैत्यहा कालो लोकधाता गुणाकरः ॥ ७१ ॥**

लिंगिने ४५ ऊर्ध्वं सर्वोपरि लिंगं यस्यास्तीति ऊर्ध्वलिंगी । ऊर्ध्वशायिने ४६ ऊर्ध्वमंतरिक्षे शेत तच्छील ऊर्ध्वशायी । नभसे ४७ नभो गगनरूप इत्यर्थः । तलाय ४८ तलः पातालरूप इत्यर्थः । त्रिजटिने ४९ त्रयाणां सत्त्वादिगुणानां जटा मूलं त्रिजटा प्रकृतिर्यस्यास्तीति त्रिजटी “ जटा लग्नकचे मूले ” इति विश्वः । चीरवाससे ५० चीरं वस्त्रं वा वल्कलं वासो यस्य स चीरवासाः । रुद्राय ५१ रोदयतीति रुज्जन्ममरणादिदुःखं तद्द्रावयति दूरीकरोतीति रुद्रः । सेनायै ५२ सेना देवसेनारूप इत्यर्थः । पत्ये ५३ पतिः पालक इत्यर्थः । विभवे ५४ विशेषण भवति स्वाविर्भावान्करोतीति विभुः ॥ ७० ॥ अहोरात्राय ५५ अहश्च रात्रिश्चानयोः समाहारः अहोरात्रं तद्रूप इत्यर्थः । नक्ताय ५६ नक्तव्रतरूप इत्यर्थः । तिग्ममन्यवे ५७ तिग्मः तीक्ष्णो मन्युर्यस्य स तिग्ममन्युः । सुवर्चसाय ५८ शोभनं वर्चो दीप्तिर्यस्य स सुवर्चसः । अत्र योगविभागात्समासांतोऽच् । गजघ्ने ५९ गजं गजासुरं हन्ति इति गजहा । दैत्यघ्ने ६० दैत्यान्दितिपुत्रान् हंतीति दैत्यहा । कालाय ६१ कालो निमेषादिरूप इत्यर्थः । लोकधात्रे ६२ लोकानां चतुर्दशभुवनानां धाता आधारभूत इत्यर्थः । गुणाकराय ६३ गुणानां षोडशाध्यायोक्तयोगादिगुणानां वा नैय्यायिकोक्तरूपादिचतुर्विंशतिगुणानामाकरः खनीभूत इत्यर्थः ॥ ७१ ॥

सिंहशार्दूलरूपाणामार्द्रचर्मांबरंधराय ६४ सिंहशार्दूलरूपा ये स्वभक्ताः तेषां चार्द्रं सद्योद्धृतं यच्चर्म तदंबरं धरतीति धरः । काल्योगिने ६५ कालवंचको योगी काल्योगी । महानादाय ६६ महानत्युच्चः नादो यस्य स महानादः । सर्वावासाय ६७ सर्वस्य विश्वस्यावासो वसतिस्थानमित्यर्थः । चतुष्पथाय ६८ चतुर्णां धर्मादिपुरुषार्थानां पंथाः मार्गरूपः । यद्वा चत्वारः ब्रह्मचर्यादयः पंथानो यस्मादिति चतुष्पथः ॥ ७२ ॥ निशाचराय ६९ निशायां रात्रौ चरतीति निशाचरः निर्ऋत्यादिरक्षोरूप इत्यर्थः । प्रेतचारिणे ७०प्रेतैन चरति तच्छीलः प्रेतचारी चामुंडारूपः 'चामुंडा शववाहना' इत्युक्तत्वात् । सर्वदर्शिने ७१ सर्वं पश्यतीति सर्वदर्शी । महेश्वराय ७२ महांतो ब्रह्मेन्द्रादय ईश्वराः यस्मात्स महेश्वरः । बहुने ७३ बहुः अनेकरूप इत्यर्थः । भूताय ७४ भूतोऽतीतकालरूप इत्यर्थः । बहुधनाय ७५ बहु अपरिमितं धनं यस्मादसौ बहुधनः । सर्वसाराय ७६ सर्वस्य सारो बलरूप इत्यर्थः। "सारो बले स्थिरांशे च" इत्यमरः। अमृतेश्वराय ७७ अमृतस्य मोक्षस्येश्वरः अमृतेश्वरः॥७३॥ नृत्यप्रियाय ७८ नृत्यं नर्तनं तांडवरूपं प्रियं यस्य स नृत्यप्रियः। नित्यनृत्याय ७९ नित्यं सततं नृत्यं यस्य स नित्यनृत्यः। नर्तनाय ८० नर्तयतीति नर्तनः सर्वप्रेरक इत्यर्थः । सर्वसाधकाय ८१ सर्वं साधयति सिद्धिं प्रापयतीति सर्वसाधकः सकार्मुकाय ८२ सकार्मुको धनुःसहित इत्यर्थः । महाबाहवे ८३ महांतः बाहवो यस्य स महाबाहुः । महाघोराय ८४ महांश्चासौ घोरश्च महाघोरः महाप्रलयकारक

**सिंहशार्दूलरूपाणामार्द्रचर्मांबरंधरः ॥ काल्योगी महानादः सर्वावासश्चतुष्पथः॥ ७२॥ निशाचरः प्रेतचारी सर्वदर्शी महेश्वरः ॥ बहु भूतो बहुधनः सर्वसारोऽमृतेश्वरः ॥ ७३ ॥ नृत्यप्रियो नित्यनृत्यो नर्तनः सर्वसाधकः ॥ सकार्मुको महाबाहुर्महाघोरो महातपाः ॥ ७४ ॥ महाशरो महापाशो नित्यो गिरिचरो मतः ॥ सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ॥ ७५ ॥ अमर्षणो मर्षणात्मा यज्ञहा कामनाशनः ॥ दक्षहा परिचारी च प्रहसो मध्यमस्तथा ॥ ७६ ॥**

इत्यर्थः । महातपसे ८५ महत्तपो यस्य स महातपाः ॥ ७४ ॥ महाशराय ८६ महान् त्रिपुरदाहकः शरो यस्य स महाशरः । महापाशाय ८७ महान्पाशः मायारूपो यस्य स महापाशः । नित्याय ८८ नित्यो ध्वंसाप्रतियोगी इत्यर्थः । गिरिचराय ८९ गिरिषु कैलासादिषु चरतीति गिरिचरः । अमताय ९० अमतो विकृताकृतिधारणाद्दारुवनस्थ ऋष्यादिभिरज्ञात इत्यर्थः । सहस्रहस्ताय ९१ सहस्रहस्तोऽसंख्यातबाहुरित्यर्थः । विजयाय ९२ विशेषेण जयो रामपार्थादीनां यस्माद्यत्प्रसादादसौ विजयः । व्यवसायाय ९३ विशेषेण अवसीयते मुनिभिर्निश्चीयते इति व्यवसायः। अनिंदिताय ९४ न निंदितोऽनिंदितः सर्वदोषरहित इत्यर्थः॥७५॥ अमर्षणाय ९५ नास्ति मर्षणं यस्य सोऽमर्षणः पापादितितिक्षाशून्य इत्यर्थः । मर्षणात्मने ९६ मर्षणो भक्तापराधतितिक्षुरात्मा स्वभावो यस्य स मर्षणात्मा । यज्ञघ्ने ९७ यज्ञं मृगरूपेण दक्षमखे धावंतं हन्तीति यज्ञहा । कामनाशनाय ९८ कामः नश्यत्यनेन कामनाशनः । दक्षघ्ने ९९ दक्षं दक्षप्रजापतिं हंतीति दक्षहा । परिचारिणे २०० परितः सर्वतः चरणशीलः परिचारी । द्वितीयं शतकं समाप्तम् ॥ प्रहसाय १ प्रकर्षेण हसतीति प्रहसः । तदुक्तं शिवकवचे-" स्फुटाट्टहासोच्चलितांडकोशः " इति । मध्यमाय २ मध्ये मध्यशरीरे भवतीति मध्यमो रुद्ररूपः । तदुक्तं पाद्मे-" मध्यतो रुद्रमीशानम् " इति ॥ ७६ ॥

तेजसे ३ तेजो वह्निरूपः । " रुद्रो वा एष यदग्निः " इति श्रुतेः । अपहारिणे ४ अपहरति तच्छीलः अपहारी सकलजगदपहारक इत्यर्थः । बलवते ५ बलं शरीरसामर्थ्य विद्यते यस्य स बलवान् । विदिताय ६ वित् ब्रह्मज्ञानं संजातं यस्य स विदितः ब्रह्मविद्रूपः । " ब्रह्मविद्ब्रह्मैव भवति " इति श्रुतेः । अभ्युदिताय ७ अभितः अरूपमरसमित्यादि निषेधमुखेनैव उदितः वेदैरप्युक्त इत्यर्थः । अबहवे ८ अबहुरेकरूपः । " एकं सद्विप्रा बहुधा वदंति " इति श्रुतेः । गंभीरघोषाय ९ गंभीरः घोषो यस्य स गंभीरघोषः समुद्ररूप इत्यर्थः । योगात्मने १० योगः समाधिरात्मा स्वरूपं यस्य स योगात्मा । यज्ञघ्ने ११ यज्ञं दक्षयागं हंतीति यज्ञहा । कामनायै १२ कामना मुमुक्षा तद्रूप इत्यर्थः । अशनाय १३ अश्नातीत्यशनः । नन्द्यादित्वाल्ल्युः । सर्वजगद्भक्षक इत्यर्थः ॥७७॥ गंभीररोषाय १४ गंभीरोऽपारो रोषो यस्य स गंभीररोषः । गंभीराय १५ गंभीरोऽक्षोभ्य इत्यर्थः । गंभीरबलवाहनाय १६ गंभीरमक्षोभ्यं बलवाहनं यस्य स गंभीरबलवाहनः । न्यग्रोधरूपाय १७ न्यग्नीचैः रोहतीति न्यग्रोधः संसारवृक्षस्तं रूपयति उत्पादयतीति न्यग्रोधरूपः । न्यग्रोधाय १८ न्यग्रोधो वटवृक्षस्वरूप इत्यर्थः । विश्वकर्मणे १९ विश्वं ब्रह्मांडं कर्म यस्य स विश्वकर्मा । विश्वभुजे २० विश्वं भुनक्ति पालयतीति विश्वभुक् ॥७८॥

**तेजोपहारी बलवान्विदितोऽभ्युदितो बहुः ॥ गंभीरघोषो योगात्मा यज्ञहा कामनाऽशनः ॥ ७७ ॥ गंभीररोषो गंभीरो गंभीरबलवाहनः ॥ न्यग्रोधरूपो न्यग्रोधो विश्वकर्मा च विश्वभुक् ॥ ७८ ॥ तीक्ष्णोपायश्च हर्यश्वः सहायः कर्मकालवित् ॥ विष्णुः प्रसादितो यज्ञः समुद्रो वडवामुखः ॥ ७९ ॥ हुताशनसहायश्च प्रशांतात्मा हुताशनः ॥ उग्रतेजा महातेजा जयो विजयकालवित् ॥ ८० ॥**

तीक्ष्णाय २१ तीक्ष्णो निशितरूपः । अपायाय २२ अपगतः आयोऽभक्तधनादिप्राप्तिरूपो यस्मादसौ अपायः । हर्यश्वाय २३ हरिर्विष्णुरश्वो वाहनं यस्य स हर्यश्वः । सहायाय २४ सहायः स्वभक्तसाह्यकर इत्यर्थः । कर्मणे २५ कर्म इष्टापूर्तादि तद्रूप इत्यर्थः । कालविदे २६ कालं सर्वेषामिष्टानिष्टसमयं वेत्तीति कालवित् । विष्णवे २७ विष्णुस्तत्संज्ञक पालकमूर्तिः । प्रसादिताय २८ प्रसादितोऽसुरादिभयत्राणार्थं देवैः स्तुत इत्यर्थः । यज्ञाय २९ यज्ञो देवपूजारूपः । समुद्राय ३० समुद्रः सागररूप इत्यर्थः । वडवामुखाय ३१ वडवामुखः समुद्रजलशोषकाग्निरूपः ॥ ७९ ॥ हुताशनसहायाय ३२ हुताशनस्य वह्नेः सहायो वायुरूपः । प्रशांतात्मने ३३ प्रशांतः आत्मा स्वरूपं यस्य स प्रशांतात्मा । हुताशनाय ३४ हुतं विधिवत्प्रक्षिप्तं हविः अश्नातीति हुताशनः । उग्रतेजसे ३५ उग्रं दाहकं तेजो यस्य स उग्रतेजाः वह्निरूप इत्यर्थः । महातेजसे ३६ महद्विश्वप्रकाशकं तेजो यस्य सः महातेजाः सूर्यरूप इत्यर्थः । जयाय ३७ जयो जयरूपः । विजयकालविदे ३८ विजयकालं वेत्तीति विजयकालवित् ॥ ८० ॥

ज्योतिषामयनाय ३९ ज्योतिषामयनं स्थानभूतः । सिद्धये ४० सिद्धिरीप्सितफलप्राप्तिस्तद्रूपः । संधये ४१ संधिः शत्रोर्मैत्रीकरणं तद्रूपः । विग्रहाय ४२ विग्रहः कलहस्तद्रूपः । खड्गिने ४३ खड्गस्तत्संज्ञको मृगस्तद्विशिष्ट इत्यर्थः । शंखिने ४४ शंखी शंखविशिष्ट इत्यर्थः । जटिने ४५ जटा जगन्मूलं यस्मिन्नस्तीति जटी । ज्वालिने ४६ ज्वालाः संति यस्मिन्निति ज्वाली अर्चिरादिमार्गरूपः । खचराय ४७ खे आकाशे चरतीति खचरः । द्युचराय ४८ दिवि चरतीति द्युचरः । बलिने ४९ बलं सैन्यं यस्यास्तीति बली ॥८१॥ वैणविने ५० वैणवं वेणुवाद्यं यस्यास्तीति वैणवी । पणविने ५१ पणवस्तत्संज्ञकवाद्यं यस्यास्तीति पणवी । कालाय ५२ कालो मृत्युरूपः । कालकंठाय ५३ कालः कृष्णवर्णः कंठो यस्य स कालकण्ठः । कटंकटाय ५४ कटं गजाननमस्तकं कटाति प्रेम्णा वरयतीति कटंकटः । नक्षत्रविग्रहाय ५५ नक्षत्राणि विग्रहे यस्य स नक्षत्रविग्रहः शिशुमाररूप इत्यर्थः । भावाय ५६ भावः श्रद्धारूप इत्यर्थः । निभावाय ५७ निभावो जगदात्यंतिकसत्ता यस्मादसौ निभावः । सर्वतोमुखाय ५८ सर्वतः मुखानि यस्य स सर्वतोमुखः "विश्वतश्चक्षुरुत विश्वतो मुखः " इति श्रुतेः ॥ ८२ ॥ विमोचनाय ५९ विशेषेण मोचयतीति विमोचनः चतुर्विंशतितत्त्वबंधमोचक इत्यर्थः । शरणाय ६० शरणो भक्तजन

ज्योतिषामयनं सिद्धिः संधिर्विग्रह एव च ॥ खड्गी शंखी जटी ज्वाली खचरो द्युचरो बली ॥ ८१ ॥ वैणवी पणवी कालः कालकंठः कटं कटः ॥ नक्षत्रविग्रहो भावो निभावः सवतोमुखः ॥ ८२ ॥ विमोचनस्तु शरणो हिरण्यकवचोद्भवः ॥ मेखलाकृतिरूपश्च जलाचारः स्तुत स्तथा ॥ ८३ ॥ वीणी च पणवी ताली नाली कलिकटुस्तथा ॥ सर्वतूर्यनिनादी च सर्वव्याप्यपरिग्रहः ॥ ८४ ॥

रक्षकः । हिरण्यकवचोद्भवाय ६१ हिरण्यकवचो हिरण्यगर्भस्तस्य उद्भव उत्पत्तिर्यस्मादसौ हिरण्यकवचोद्भवः । मेखलायै ६२ मेखला लिंगपरिणालिका तद्रूपः । कृतिरूपाय ६३ कृतिर्यत्नः रूपं यस्य स कृतिरूपः । जलाचाराय ६४ आ समंताच्चारः संचारो आचारः जलस्य भागीरथ्युदकस्य आचारो यस्मिन्नसौ जलाचारः । स्तुताय ६५ स्तुतो भगीरथादि कृतस्तुतिविषयः ॥ ८३ ॥ वीणिन ६६ वीणी वीणावाद्यविशिष्टः । पणविन ६७ पणो व्यवहारः तं वाति गच्छतीति पणवः सोस्यास्तीति पणवी । तालिने ६८ तालाख्यवाद्य विशिष्टः " वाद्यभांडे तु कांसस्य तालं " इति विश्वः । नालिने ६९ नालं सरोजदंडः अस्ति यस्येति नाली पद्मनाभत्वाद्वा पद्महस्तत्वादित्यर्थः । कलिकटवे ७० कलेः कलियुगस्य कटुः अप्रियः तद्धर्मनिवारकत्वादित्यर्थः । सर्वतूर्यनिनादिने ७१ सर्वतूर्याणि वाद्यानि निनादयति वादयति तच्छीलः सर्वतूर्यनिनादी । सर्वव्याप्यपरिग्रहाय ७२ सर्वव्याप्यः सर्वसूक्ष्मः परिग्रहो यस्य स सर्वव्याप्यपरिग्रहः । " अणोरणीयान् " इति श्रुतेः ॥ ८४ ॥

व्यालरूपिणे ७३ व्यालरूपं वासुकिरूपं यस्यास्तीति व्यालरूपी । बिलावासिने ७४ बिले पाताले आवसतीति बिलावासी । गुहावासिने ७५ गुहायां बुद्धौ वसति तच्छीलः गुहावासी । तरंगविदे ७६ तरंगान् समुद्रादूर्मीन् वेत्तीति तरंगवित् । वृक्षाय ७७ वृक्षो बिल्वसंज्ञक इत्यर्थः । श्रीमालकर्मणे ७८ श्रीमालं लक्ष्मीक्षेत्रं कर्म पूजादिकं यस्य स श्रीमालकर्मा । "मालं क्षेत्रे जले" इति विश्वः । सर्वबंधविमोचनाय ७९ सर्वबंधा अविद्याकामादिरूपाः मुच्यंतेऽनेनेति सर्वबंधविमोचनः ॥ ८५ ॥ बंधनाय ८० बंधयत्यविद्यादिनाऽभक्तान्बंधयुक्तान् कारयतीति बंधनः । सुरेन्द्राणां युधि शत्रुविनाशनाय ८१ सुरेन्द्राणां देवस्वामिनां युधि संग्रामे शत्रून्दैत्यादीन् विनाशयति पराभावयतीति शत्रुविनाशनः । सख्ये ८२ सखा जीवस्य मित्रम् "सुपर्णावेतौ सदृशौ सखायौ" इति श्रुतेः । प्रवासाय ८३ प्रकर्षेण वासो यस्मिन्निति प्रवासः सकलनिवासभूत इत्यर्थः । दुर्वापाय ८४ दुःखेनातिकृच्छ्रेण वाप्तुं मनोनिर्वापं कर्तुं योग्यो दुर्वापः । वपधातोर्णिजंतात्खल् । सर्वसाधुनिषेविताय ८५ सर्वसाधुभिः निषेवितः अत्यंतसेवित इत्यर्थः ॥ ८६ ॥ प्रस्कंदाय ८६ प्रकर्षेण स्कंदयति ब्रह्मादीनपि स्वस्थानेभ्यः चालयतीति प्रस्कंदः । अविभावाय ८७ न विभावः विशिष्टैश्वर्यं यस्मादित्यविभावः । तुल्याय ८८

**व्यालरूपी बिलावासी गुहावासी तरंगवित् ॥ वृक्षः श्रीमालकर्मा च सर्वबंधविमोचनः॥ ८५ ॥ बंधनस्तु सुरेन्द्राणां युधि शत्रुविनाशनः ॥ सखा प्रवासो दुर्वापः सर्वसाधुनिषेवितः ॥ ८६ ॥ प्रस्कंदोऽप्यविभावश्च तुल्यो यज्ञविभागवित् ॥ सर्ववासः सर्वचारी दुर्वासा वासवो मतः ॥ ८७ ॥ हैमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ॥ आकाशो निर्विरूपश्च विवासा उरगः खगः ॥ ८८ ॥**

तुल्यो निष्पक्षपातः । यज्ञविभागविदे ८९ यज्ञविभागानग्निष्टोमादिसर्वक्रतुभेदान् जानातीति यज्ञविभागवित् । सर्ववासाय ९० सर्वं वास्यते वेष्ट्यते अनेनेति सर्ववासः । "ईशावास्यमिदं सर्वम्" इति श्रुतेः । सर्वचारिणे ९१ सर्वस्मिन् चरतीति सर्वचारी । दुर्वाससे ९२ दुर्वासास्तत्संज्ञकमुनिरूप इत्यर्थः । वासवाय ९३ वासव इंद्ररूपः । मताय ९४ मतोऽद्वैतादिमतरूपः ॥ ८७ ॥ हैमाय ९५ हैमः सुवर्णविकाररूपः । हेमकराय ९६ हेम सुवर्णं करोति तच्छीलः हेमकरः । यज्ञाय ९७ यज्ञः संगतिकरणः तद्रूपः । सर्वधारिणे ९८ सर्वमनंतब्रह्मांडसमूहं धरति तच्छीलः सर्वधारी । धरोत्तमाय ९९ धरेषु धारणकर्तृषु शेषादिष्वपि उत्तमः श्रेष्ठः तेषामपि धारणकर्तृत्वादित्यर्थः । आकाशाय ३०० अतिशयेन काशते दीप्यते इत्याकाशः । इति तृतीयशतकं समाप्तम् ॥ निर्विरूपाय १ निर्गतं विरूपं शरभपक्षिरूपं यस्मादसौ निर्विरूपः । विवाससे २ विशिष्टं सर्वश्रेष्ठं वासो यस्य सः वा विगतं वासः आच्छादकं यस्य स विवासाः । उरगाय ३ उरसा गच्छतीत्युरगः सर्परूप इत्यर्थः । खगाय ४ खे गगने गच्छतीति खगः पक्षिरूप इत्यर्थः ॥ ८८ ॥

भिक्षव ५ भिक्षुः संन्यस्तरूपः । भिक्षुरूपिणे ६ भिक्षुं संन्यासिनं रूपयति प्रशंसतीति भिक्षुरूपी । रौद्ररूपाय ७ रौद्रं भयंकरं रूपं यस्य स रौद्ररूपः । सुरूपवते ८ सुरूपं शांत रूपं विद्यते यस्य स सुरूपवान् "तस्यैते तनुवौ घोरान्या शिवान्या " इति श्रुतेः । वसुरेतसे ९ वसु हाटकं रेतो यस्य स वसुरेताः । "वसु हाटकेषु च " इति विश्वः । सुवर्चस्विने १० शोभनं वर्चोस्ति यस्य स सुवर्चस्वी । वसुवेगाय ११ वसुना धनेन वेगयति वेगविशिष्टान् करोतीति वसुवेगः । महाबलाय १२ महद्बलं सैन्यं यस्य स महाबलः ॥ ८९ ॥ मनसे १३ मनोरूप इत्यर्थः । वेगाय १४ वेगः शैघ्र्यरूपः । निशायै १५ निशा रात्रिरूपः । चाराय १६ चारः प्राणिनां शुभाशुभनिरीक्षणार्थं गुप्तसंचारकारक इत्यर्थः । सर्वलोकशुभप्रदाय १७ सर्वे कोहं कस्मादिह आयात इत्यादि लोकयंति विचारयंति ते सर्वलोकाः तेषां शुभं परमसुखं प्रददातीति सर्वलोकशुभप्रदः । सर्वावासिने १८ सर्वत्र आवसति तच्छीलः सर्वावासी । त्रयीवासिने १९ त्रय्यां वेदत्रय्याम् आवसति तच्छीलः त्रयीवासी । उपदेशकराय २० उपदेशं करोति तच्छीलः उपदेशकरः गुरुरूप इत्यर्थः । अधराय २१ नास्ति धरो धारको यस्य सोऽधरः ॥ ९० ॥ मुनये २२ मननशीलो मुनिः । आत्मने २३ आत्मा देशकालाद्यवच्छेदशून्यः । मुनये २४ मुनिरगस्ति

**भिक्षुश्च भिक्षुरूपी च रौद्ररूपः सुरूपवान् ॥ वसुरेताः सुवर्चस्वी वसुवेगो महाबलः ॥ ८९ ॥ मनो वेगो निशाचारः सर्वलोकशुभप्रदः ॥ सर्वावासी त्रयीवासी उपदेशकरो धरः ॥ ९० ॥ मुनिरात्मा मुनिर्लोकः सभाग्यश्च सहस्रभुक् ॥ पक्षी च पक्षरूपश्च अतिदीप्तो निशाकरः ॥ ९१ ॥ समीरो दमनाकारो ह्यर्थो ह्यर्थकरो वशः ॥ वासुदेवश्च देवश्च वामदेवश्च वामनः ॥ ९२ ॥**

वृक्षरूपः "मुनिर्यतींगुदीवृद्धपिप्पलागस्तिकिंशुके" इति विश्वः । लोकाय २५ लोको भुवनरूपः । सभाग्याय २६ भाग्यमचिंत्यैश्वर्यं तत्सहितः सभाग्यः । सहस्रभुजे २७ सहस्रमनंतजीवसमुदायं भुनक्ति भुंक्ते भक्षयति पालयति वेति सहस्रभुक् । पक्षिणे २८ पक्षौ ऋक्साम्नी यस्य स्तः स पक्षी । "ऋक् दक्षिणः पक्षः सामोत्तरः पक्षः" इति श्रुतेः । पक्षरूपाय २९ पक्षौ शुक्लकृष्णसंज्ञौ रूपे यस्य स पक्षरूपः । अतिदीप्ताय ३० अति अत्यंतं दीप्तः सूर्यरूपः । निशाकराय ३१ निशायां कराः किरणा यस्य स निशाकरः । चंद्ररूप इत्यर्थः ॥ ९१ ॥ समीराय ३२ सम्यगीरयति जगत्प्रेरयतीति समीरो वायुरूपः । दमनाकाराय ३३ दमनः शान्तिकरः आकारो यस्य स दमनाकारः । अर्थाय ३४ अर्थो धर्मादिपुरुषार्थरूपः । अर्थकराय ३५ अर्थान् चतुर्विधपुरुषार्थान् करोतीत्यर्थकरः । वशाय ३६ वशः स्वभक्ताधीन इत्यर्थः । वासुदेवाय ३७ वासयति आच्छादयति इति वासुः दीव्यति क्रीडत इति देवः वासुश्चासौ देवश्च वासुदेवः स्वमायया स्वरूपमाच्छाद्य क्रीडमान इत्यर्थः । देवाय ३८ दीव्यति पुण्यपापानुसारेण फलप्रदानरूपव्यवहारं करोतीति देवः । वामदेवाय ३९ वामं कामं दीव्यति विजिगीषतीति वामदेवः । वामनाय ४० वामनो वामनावताररूपः ॥ ९२ ॥

सिद्धियोगापहारिणे ४१ योगं चित्तवृत्तिनिरोधमपहरति तच्छीलः योगापहारी सिद्ध्या योगापहारी सिद्धियोगापहारी । सिद्धाय ४२ सिद्धः कपिलादिरूपः । तदुक्तं भगवद्गीतायाम्—"सिद्धानां कपिलो मुनिः" इति । सर्वार्थसाधकाय ४३ सर्वार्थाः धर्मार्थकाममोक्षरूपाः साधयति स्वभक्तान्प्रापयतीति सर्वार्थसाधकः । अक्षुण्णाय ४४ अक्षुण्णः प्रलयेप्यसंपिष्टः । 'क्षुदिर् संपेषणे' तस्मात्कर्मणि क्तः । क्षुण्णरूपाय ४५ क्षुण्णं संपिष्टमपि रूपं यस्य स क्षुण्णरूपः । वृषणाय ४६ वृषणोण्डकोशरूपः केदारे तथैव वर्णनात् । मृदवे ४७ मृदुर्मृदुरूपः गोकर्णे ब्रह्मोत्तरखंडे तथैव वर्णनात् । "आक्रांतसप्तपातालकुहरोपि महाबलः । प्राप्ते कलियुगे घोरे मृदुतामुपयास्यति॥" इति । अव्ययाय ४८ अव्ययो नाशशून्य इत्यर्थः ॥ ९३ ॥ महासेनाय ४९ महती सेना यस्य स महासेनः स्कंदरूपः । विशाखाय ५० विशाखः स्कंदस्यैव मूर्तिभेदः तद्रूप इत्यर्थः । षष्टिभागाय ५१ षष्टिस्तत्संख्याकतत्त्वानि मांडूक्योपनिषदि प्रसिद्धानि भागो यस्य स षष्टिभागः । गवांपत्ये ५२ गवां छंदोरूपधेनूनां पतिः स्वामी प्रणवरूपः । तदुक्तं शिवगीतायाम्—"छंदसां यस्तु धेनूनामृषभत्वेन कीर्तितः" इति । चक्रहस्ताय ५३ चक्रं वायुद्भवं सुदर्शनचक्रं हस्ते यस्य स चक्रहस्तः । विष्टंभिने ५४ विशेषेण स्तंभयति सर्वदेवान् स्तंभितान् करोतीति विष्टंभी । देवीस्वयंवरे शिशुरूपेण सर्वदेवस्तंभनं शिवकृतमत्रैवाग्रे उक्तम् । मूलस्तंभनाय ५५ मूलं जगदुपादानकारणं प्रकृतिं स्तंभयतीति मूलस्तंभनः ॥ ९४ ॥ ऋतवे ५६

**सिद्धियोगापहारी च सिद्धः सर्वार्थसाधकः ॥ अक्षुण्णः क्षुण्णरूपश्च वृषणो मृदुरव्ययः ॥ ९३ ॥ महासेनो विशाखश्च षष्टिभागो गवां पतिः ॥ चक्रहस्तस्तु विष्टंभी मूलस्तम्भन एव च ॥ ९४ ॥ ऋतुर्ऋतुकरस्तालो मधुर्मधुकरो वरः ॥ वानस्पत्यो वाजसनो नित्यमाश्रम पूजितः ॥ ९५ ॥ ब्रह्मचारी लोकचारी सर्वचारी सुचारवित् ॥ ईशान ईश्वरः कालो निशाचारी ह्यनेकदृक् ॥ ९६ ॥**

ऋतुर्वसंतादिरूपः । ऋतुकराय ५७ ऋतून् वसंतादीन् करोति तत्तत्काले उत्पादयतीति ऋतुकरः । तालाय ५८ तले संसारपादपतले भवति बीजरूपेण तिष्ठतीति तालः । मधवे ५९ मधुः चैत्रमासस्तद्रूपो वा मधुर्जीवरूपः । मधुकराय ६० मधु पुष्परसं करोति उत्पादयतीति मधुकरः । वराय ६१ वरः सर्वश्रेष्ठ इत्यर्थः । वानस्पत्याय ६२ वनस्पतिषु वृक्षेषु भवति फलादिरूपेणोत्पद्यत इति वानस्पत्यः । वाजसनाय ६३ वाजसनस्तत्संज्ञकसूर्यप्रणीतशाखारूपः । नित्याय ६४ नित्यं निर्विकारं ब्रह्म तद्रूपः । आश्रमपूजिताय ६५ आश्रमेषु ब्रह्मचर्यादिषु पूजितः आश्रमपूजितः ॥ ९५ ॥ ब्रह्मचारिणे ६६ ब्रह्मणि वेदे चरतीति ब्रह्मचारी । लोकचारिणे ६७ लोकेषु चतुर्दशभुवनेषु चरतीति लोकचारी । सर्वचारिणे ६८ सर्वत्र चरति तच्छीलः सर्वचारी अप्रतिहतगतिरित्यर्थः । सुचारविदे ६९ सुचारं शोभनाचारं वेत्तीति सुचारवित् । ईशानाय ७० ईशानः सर्वविद्यास्वामी "ईशानः सर्वविद्यानाम्" इति श्रुतेः । ईश्वराय ७१ ईश्वरो नियंता "ईश्वरः सर्वभूतानाम्" इति श्रुतेः । कालाय ७२ कलयति सर्वसंख्यानं करोतीति कालः । निशाचारिणे ७३ निशायां कालरात्रौ चरति तच्छीलः निशाचारी । अनेकदृशे ७४ अनेकदृगसंख्यनयनः । "नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे" इति श्रुतेः ॥ ९६ ॥

निमित्तस्थाय ७५ निमित्तं निमित्तकारणं तत्र तिष्ठतीति निमित्तस्थः । निमित्ताय ७६ निमित्तं निमित्तकारणरूपः । नंदये ७७ नंदयतीति नंदिः समृद्धिकर इत्यर्थः । नंदिकराय ७८ नंदिं मोदं करोतीति नंदिकरः । हराय ७९ हरतीति हरः सकलसंहारकर्ता । नंदिने ८० नंदी शैलादिरूपः । ईश्वराय ८१ ईश्वरो विभवाढ्यः 'ईश्वरो विभवैराढ्यः' इति विश्वः । सुनंदिने ८२ सुनंदं तत्संज्ञकमुसलं यस्यास्तीति सुनंदी संकर्षणरूपः । नंदनाय ८३ नंदयतीति नंदनः आनंदकर्ता । विषमर्दनाय ८४ विषं कालकूटं मर्दयति वीर्यरहितं करोतीति विषमर्दनः॥ ९७ ॥ भगहारिणे ८५ भगमिंद्राद्यैश्वर्यं हरति तच्छीलः भगहारी । नियंत्रे ८६ नियंता सूतः । तदुक्तमहोबलरुद्रभाष्ये—"जगद्यंत्रस्वरूपस्य रथस्य श्रीमहेश्वरः । नियंता तत एवेशः सूत इत्यभिधीयते ॥" इति । कालाय ८७ कालो महाकालरूपः । लोकपितामहाय ८८ लोकयंति ते लोकाः जीवाः तेषां पितामहः लोकपितामहः सकललोकजनकप्रकृतिपुरुषजनक इत्यर्थः। चतुर्मुखाय ८९ चत्वारि मुखानि यस्य वा चत्वारो वेदाः मुखे यस्य स चतुर्मुखः ब्रह्मरूपः। महालिंगाय ९० महत्सर्वपूज्यं लिङ्गं यस्य स महालिंगः। चारुलिंगाय ९१ चारु रमणीयं लिंगं यस्य स चारुलिंगः ॥ ९८ ॥ लिंगाध्यक्षाय ९२ लिंगमव्यक्तं तस्य अध्यक्षः प्रकृतिनियामक इत्यर्थः ।

**निमित्तस्थो निमित्तं च नंदिर्नंदिकरो हरः ॥ नंदीश्वरः सुनंदी च नंदनो विषमर्दनः ॥९७॥ भगहारी नियंता च कालो लोकपितामहः ॥ चतुर्मुखो महालिंगश्चारुलिङ्गस्तथैव च ॥९८॥ लिंगाध्यक्षः सुराध्यक्षः कालाध्यक्षो युगावहः ॥ बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ॥ ९९ ॥ इतिहासश्च कल्पश्च दमनो जगदीश्वरः ॥ दंभो दंभकरो दाता वंशो वंशकरः कलिः ॥ १०० ॥**

सुराध्यक्षाय ९३ सुराणां देवानामध्यक्षः स्वामी । कालाध्यक्षाय ९४ कालस्य महाकालस्याध्यक्षः प्रवृत्तिनियामक इत्यर्थः । युगावहाय ९५ युगानि कृतादीन्यावहति तत्तत्काले प्रापयतीति युगावहः । बीजाध्यक्षाय ९६ बीजं धर्माधर्मरूपं तस्याध्यक्षः फलदाता । बीजकर्त्रे ९७ बीजं धर्माधर्मरूपं तस्य कर्ता उत्पादकः । अध्यात्मने ९८ आत्मनि अधीत्यध्यात्मा स्वाधिकरण इत्यर्थः । अनुगताय ९९ अनु गम्यत इत्यनुगतः मुमुक्षुसेव्य इत्यर्थः । बलाय ४०० बलो बलसंज्ञः "बलाय नमः" इति श्रुतेः ॥९९॥ इति चतुर्थशतकं समाप्तम् ॥ इतिहासाय १ इतिहासो भारतादिस्तद्रूपः । कल्पाय २ कल्पो रुद्रादिकल्परूपः । दमनाय ३ दमयतीति दमनः सर्वभूतदमन इत्यर्थः । जगदीश्वराय ४ जगतामखिलब्रह्मांडानामीश्वरः स्वामी । दंभाय ५ दभ्नोति शत्रून्दमयतीति दंभो वा दंभयत्यसुरादीन्धर्मध्वजान्करोतीति दंभः । दंभकराय ६ दंभं करोति उत्पादयतीति दंभकरः । दात्रे ७ ददातीति दाता सकलप्रद इत्यर्थः । वंशाय ८ वंशः सूर्यवंशरूपः । वंशकराय ९ वंशं सौरवंशं करोतीति वंशकरः । कलये १० कलिः कलियुगरूपः ॥ १०० ॥

लोककर्त्रे ११ लोकानां चतुर्दशभुवनानां कर्ता उत्पादक इत्यर्थः । पशुपतये १२ पशवो ब्रह्माद्याः देहधारिणस्तेषां पतिः स्वामी । महाकर्त्रे १३ महांश्चासौ कर्ता च महाकर्ता ब्रह्माण्डोत्पादकः । अधोक्षजाय १४ अक्षादिंद्रियाज्जातमक्षजम् अधः अक्षजं यस्मादसावधोक्षजः इंद्रियजन्यज्ञानाविषय इत्यर्थः । अक्षराय १५ अक्षरं नाशशून्यं यत्कैवल्यं तद्रूपः। परमाय १६ परा अक्षरत्वात्सर्वातिशायिता मा लक्ष्मीर्यस्य तत्परमं तद्रूपः। ब्रह्मणे १७ ब्रह्म सच्चिदानन्दं तद्रूपः। बलवते १८ बलं रूपं विद्यते यस्य स बलवान् "बलं गंधे रसे रूपे" इति विश्वः। शुक्राय १९ शुक्रः शुक्लवर्णः ॥१०१॥ नित्याय २० नितरां त्यजतीति नित्यः। त्यजधातोरन्यत्रापि दृश्यत इति डः। अविद्याबंधशून्य इत्यर्थः। अनीशाय २१ नास्ति ईशो यस्य सोऽनीशः। शुद्धात्मने २२ शुद्धश्चासावात्मा च शुद्धात्मा शुद्धमनोरूपः। 'आत्मा देहमनोबुद्धिषु' इति विश्वः। शुद्धाय २३ शुद्धो मायारहित इत्यर्थः । मानाय २४ मानः प्रमाणरूपः । गतये २५ गतिः सन्मार्गरूपः । हविषे २६ हविर्यागद्रव्यरूपः । प्रासादाय २७ प्रासादो देवालयरूपः । बलाय २८ बलं कैलासादि स्थानं यस्यास्तीति बलः 'बलं स्थाने' इति विश्वः। दर्पाय २९ दर्पयति मोहयतीति दर्पः असुरमोहक इत्यर्थः। दर्पणाय ३० दर्पणो जगदादर्शरूपः। हव्याय ३१ होतुं योग्यो

**लोककर्ता पशुपतिर्महाकर्ता ह्यधोक्षजः ॥ अक्षरं परमं ब्रह्म बलवाञ्छुक्र एव च ॥ १ ॥ नित्यो ह्यनीशः शुद्धात्मा शुद्धो मानो गतिर्हविः ॥ प्रासादस्तु बलो दर्पो दर्पणो हव्य इन्द्रजित् ॥२ ॥ वेदकारः सूत्रकारो विद्वांश्च परमर्दनः॥ महामेघनिवासी च महाघोरो वशी करः ॥ ३ ॥ अग्निज्वालो महाज्वालः परिधूम्रावृतो रविः ॥ धिषणः शंकरो नित्यो वर्चस्वी धूम्रलोचनः ॥ ४ ॥**

हव्यः । इंद्रजिते ३२ इंद्रं जयतीति इंद्रजित् ॥ २ ॥ वेदकाराय ३३ वेदकारो वेदकर्ता । सूत्रकाराय ३४ सूत्राणि ब्रह्मसूत्रादीनि करोतीति सूत्रकारः । विदुषे ३५ वेत्तीति विद्वान् सर्वज्ञ इत्यर्थः। परमर्दनाय ३६ परान् शत्रून् मर्दयतीति परमर्दनः। महामेघनिवासिने ३७ महांश्चासौ मेघश्च महामेघः विष्णुरूपः तत्र निवसति तच्छीलः । इयं कथा अत्रैवोक्ता । महाघोराय ३८ महांश्चासावघोरश्च महाघोरः। वशिने ३९ वशोऽस्यास्तीति वशी । कराय ४० कृणोति जगद्धिनस्तीति करः ॥ ३ ॥ अग्निज्वालाय ४१ अग्निरिव ज्वाला यस्य सोऽग्निज्वालः । महाज्वालाय ४२ महत्यो ज्वाला यस्य स महाज्वालः प्रलयवह्निरूपः । परिधूम्रावृताय ४३ परितः धूम्रेणेव धूसरा तया दशाऽविद्यया आवृतः परिधूम्रावृतः । रवये ४४ रौति अनाहतध्वनिं करोतीति रविः । धिषणाय ४५ प्रशस्ता धिषणा अस्येत्यर्शाद्यच् । शंकराय ४६ शं सुखं करोतीति शंकरः । अनित्याय ४७अनित्यो जगद्रूपः। वर्चस्विने ४८ वर्चस्वी नित्यवर्चोविशिष्टः । धूम्रलोचनाय ४९ धूम्रो लोचनाद्वह्निरूपनयनाद्यस्य स वा धूम्रवर्णानि लोचनानि यस्य स धूम्रलोचनः॥४॥

नीलाय ५० नीलो नीलवर्णः अघोरमूर्तेस्तथैव वर्णनात् । अंगलुप्ताय ५१ अंगं वामशरीरं लुप्तं देव्या प्रेमहृतं यस्य सोऽङ्गलुप्तः । शोभनाय ५२ शोभनोऽर्धनारीरूपत्वादति शोभमान इत्यर्थः । नरविग्रहाय ५३ नरेणार्जुनेन विग्रहः शौर्यपरीक्षार्थं कलहो यस्य स नरविग्रहः । स्वस्ति ५४ स्वस्तीत्यव्ययं मंगले तद्रूप इत्यर्थः । स्वस्तिस्वभावाय ५५ स्वस्ति मंगलः स्वभावो यस्य स स्वस्तिस्वभावः । भोगिने ५६ भोगः सुखं नित्यं यस्यास्तीति भोगी । भोगकराय ५७ भोगान् सुखानि स्वभक्तेभ्यः करोतीति भोगकरः । लघवे ५८ लघुर्मनोज्ञः "लघुर्मनोज्ञनिःसारागुरुषु" इति विश्वः॥५॥उत्संगाय ५९ उद्गतः संगो यस्य स उत्संगः। महांगाय ६० महदंगं विराड्रूपं यस्य स महांगः । महागर्भाय ६१ महान् वह्न्यादेरसह्यः गर्भो वीर्यजो यस्य स महागर्भः । प्रतापवते ६२ प्रतापवान् तेजोविशिष्टः । कृष्णवर्णाय ६३ कृष्णेन वर्णः स्तुतः कृष्णवर्णः "वर्णो द्विजादौ शुक्लादौ स्तुतौ" इति विश्वः । सुवर्णाय ६४ सुष्ठु वर्णः रूपं यस्य स सुवर्णः । इंद्रियाय ६५ इंद्रियः इंद्रजुष्टः । सर्ववर्णिकाय ६६ सर्ववर्णाः संति यस्य स सर्ववर्णिकः "अत इनिठनौ" इति ठन् ॥ ६ ॥ महापादाय ६७ महांतौ पादौ यस्य स महापादः । महाहस्ताय ६८ महांतः हस्ता यस्य स महाहस्तः । महाकायाय ६९ महायशसे ७०

**नीलस्तथाङ्गलुप्तश्च शोभनो नरविग्रहः ॥ स्वस्ति स्वस्तिस्वभावश्च भोगी भोगकरो लघुः॥५॥ उत्संगश्च महांगश्च महागर्भः प्रतापवान् । कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्ववर्णिकः॥६॥ महापादो महाहस्तो महाकायो महायशाः ॥ महामूर्धा महामात्रो महामित्रो नगालयः ॥७॥ महास्कंधो महाकर्णो महोष्ठश्च महाहनुः ॥ महानासो महाकंठो महाग्रीवः श्मशानवान् ॥ ८ ॥ महाबलो महातेजा ह्यंतरात्मा मृगालयः॥ लंबितोष्ठश्च निष्ठश्च महामायः पयोनिधिः ॥ ९ ॥**

महामूर्ध्ने ७१ नामत्रयं पूर्ववत्स्पष्टम् । महामात्राय ७२ महामात्रो दुर्निवारमृत्युगजनियंता । महामित्राय ७३ महान्विष्णुर्मित्रं यस्य स महामित्रः । नगालयाय ७४ नगेषु कैलासादिपर्वतेषु आलयो यस्य स नगालयः ॥ ७ ॥ महास्कंधाय ७५ महास्कंधो महाविटपिरूपः । महाकर्णाय ७६ महोष्ठाय ७७ महाहनवे ७८ महानासाय ७९ महा कंठाय ८० महाग्रीवाय ८१ इमानि षण्नामानि पूज्यतत्तदवयववाचीनि । श्मशानवते ८२ श्मनां शरीराणां शानं तनूकरणं पुनर्जन्मनिवारकत्वात् काशीपुरं यस्यास्तीति श्मशानवान् ॥ ८ ॥ महाबलाय ८३ महदपरिमितं बलं यस्मादिति महाबलः । महातेजसे ८४ महत्तेजः सूर्यादीनां यस्मादिति महातेजाः । अंतर्नमः ८५ अंतरित्यव्ययं मध्ये सर्वमध्यवर्तीत्यर्थः । आत्मने ८६ आत्मा अन्नमयादिकोशरूपः । मृगालयाय ८७ मृगस्य यज्ञहरिणस्यालयः स्थानभूतः । लंबितोष्ठाय ८८ लंबितः ओष्ठो यस्य सः लंबितोष्ठः गजाननरूप इत्यर्थः । निष्ठाय ८९ नितरां तिष्ठतीति निष्ठः कूटस्थत्वादचंचल इत्यर्थः । महामायाय ९० महती विष्ण्वादिमोहिका माया यस्य स महामायः । पयोनिधये ९१ पयोनिधिः क्षीरसमुद्रस्तद्रूपः ॥ ९ ॥

महादन्ताय ९२ महादंष्ट्राय ९३ महाजिह्वाय ९४ महामुखाय ९५ महानखाय ९६ महादंतायेत्यादि नामपंचकं पूज्यमानतत्तदवयवसंबंधिवाचकम् । महारोम्णे ९७ महांति पूज्यानि रोमाणि शारीरलोमानि यस्य स महारोमा । महाकेशाय ९८ महांतः केशाः शिरोबालाः यस्य स महाकेशः। महाजटाय ९९ महत्यो जटाः यस्य स महाजटः॥१०॥ असपत्नाय ५०० नास्ति सपत्नी जगदंबिकान्यस्त्री यस्य वा सपत्नः शत्रुर्यस्य सोऽसपत्नः ॥ इति पंचमशतकं समाप्तम् ॥ प्रसादाय १ प्रकर्षेण सादयति असुरादिविशरणं करोतीति प्रसादः । प्रत्ययाय २ प्रत्ययोऽनुभवरूपः । गीतसाधकाय ३ गीतं गायनं साधकं संसिद्धिकरं यस्य स गीतसाधकः । प्रस्वेदनाय ४ प्रकर्षेण स्वेदयति निदाघकाले घर्मविशिष्टान्करोतीति प्रस्वेदनः । अस्वहेनाय ५ शोभनमहः स्वहः तस्य इनः स्वामी स्वहेनः अः विष्णुः स्वहेनो यस्मात्सोऽस्वहेनः । अहेत्यव्ययमद्भुते अहनीत्यर्थे च । आदिकाय ६ आदिको मुख्यप्रजापतिः । तदुक्तं द्रोणपर्वणि-" प्रजापतीनां प्रथमम्" इति । महामुनये ७ महामुनिर्नारदरूपः ॥ ११ ॥ वृषकाय ८ वृषको धर्मरूपः । वृषकेतवे ९ वृषो नंदिकेश्वरः केतौ यस्य स वृषकेतुः । अनलाय १० अनलः अग्निरूपः । वायुवाहनाय ११ वायुर्वाहनं यस्य स वायुवाहनः । तदुक्तं शिवरहस्ये-" मरुन्मयरथः शंभुः "

**महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ महानखो महारोमा महाकेशो महाजटः ॥ १० ॥ असपत्नः प्रसादश्च प्रत्ययो गीतसाधकः ॥**
**प्रस्वेदनोऽस्वहेनश्च आदिकश्च महामुनिः ॥ ११ ॥ वृषको वृषकेतुश्च अनलो वायुवाहनः ॥ मंडली मेरुवासश्च देववाहन एव च॥ १२ ॥**
**अथर्वशीर्षः सामास्य ऋक्सहस्रोर्जितेक्षणः॥ यजुःपादभुजो गुह्यः प्रकाशौजास्तथैव च॥ १३॥ अमोघार्थप्रसादश्च अंतर्भाव्यः सुदर्शनः ॥**
**उपहारः प्रियः सर्वः कनकः कांचनस्थितः ॥ १४ ॥**

इति । मंडलिने १२ मंडलं सौरचांद्रं यस्य नेत्रे अस्तीति मंडली । मेरुवासाय १३ मेरौ वासो यस्य स मेरुवासः । देववाहनाय १४ देवो धर्मः वाहनं यस्य स देववाहनः ॥ १२ ॥ अथर्वशीर्षाय १५ अथर्वस्तत्संज्ञकवेदः शीर्षं यस्य स अथर्वशीर्षः । सामास्याय १६ साम तत्संज्ञको वेदः आस्यं मुखं यस्य स सामास्यः । ऋक्सहस्रोर्जितेक्षणाय १७ ऋक्सहस्रमनंतऋक्समुदायः ऊर्जितानि ईक्षणानि यस्य स ऋक्सहस्रोर्जितेक्षणः। यजुःपादभुजाय १८ यजुस्तत्संज्ञकवेदः पादभुजा यस्य स यजुःपादभुजः । गुह्याय १९ गुह्यायै वद्यायै हितः गुह्यः । प्रकाशौजसे २० प्रकाशं प्रसिद्धमोजो यस्य स प्रकाशौजाः ॥ १३ ॥ अमोघार्थप्रसादाय २१ अमोघार्थः प्रसादो यस्य सः अमोघार्थप्रसादः । अंतर्भाव्याय २२ अंतः अभ्यन्तरे भावितुं योग्यः अंतर्भाव्यः । सुदर्शनाय २३ शोभनं दर्शनं यस्य स सुदर्शनः । उपहाराय २४ उपहरंति बलिं सर्वे देवाः यस्मै इत्युपहारः । " सर्वेऽस्मै देवा बलिमावहन्ति " इति श्रुतेः । प्रियाय २५ प्रियः आत्मत्वात्सर्वप्रेष्ठः । सर्वाय २६ सरति भक्ताभिमुखमायातीति सर्वः । कनकाय २७ कनकः सुवर्णरूपः । कांचनस्थिताय २८ कांचने सुवर्णासने स्थितः कांचनस्थितः ॥ १४ ॥

नाभये २९ नाभिर्भुवनमध्यरूपः । " विश्वं बिभर्ति भुवनस्य नाभिः " इति श्रुतेः । नंदिकराय ३० नंदिकरो यज्ञफलसमृद्धिकर्ता । हर्म्याय ३१ हर्म्यं कुबेरगृहं यस्यास्तीति हर्म्यः। अर्शआद्यच् । पुष्कराय ३२ पुष्करं तत्संज्ञकं तीर्थमस्यास्तीति पुष्करः। स्थपतये ३३ " स्थपतिः प्रभुरध्यक्षः" इति रुद्रभाष्ये उक्तम् । स्थिताय ३४ स्थितोऽचंचलः " वृक्ष इव स्तब्धो दिवि तिष्ठति " इति श्रुतेः । सर्वशास्त्राय ३५ सर्वाणि शास्त्राणियस्मात्स सर्वशास्त्रः । धनाय ३६ धनो धनस्वरूपः । आद्याय ३७ आदौ भवः आद्यः । यज्ञाय ३८ यज्ञो जीवेशयोः संगतिकरणं तद्रूपः । यज्वने ३९ यज्वा विधिवद्यज्ञकर्ता । समाहिताय ४० सम्यग्यथाविधि आहितः स्थापितो गार्हपत्यादिरूप इत्यर्थः ॥ १५ ॥ नगाय ४१ नगः श्रीशैलादिरूपः । नीलाय ४२ नीलो लांछनरूपः " नीलः कपीश्वरे नीलिवृक्षलांछनभेदयोः " इति विश्वः । कवये ४३ कविः काव्यकरः । कालाय ४४ कालो यमरूपः। मकराय ४५ मकरो मत्स्येन्द्ररूपः। कालपूजिताय ४६ कालेन यमेनापि पूजितः कालपूजितः। सगणाय ४७ गणैः सहितः सगणः। गणकाराय ४८ गणान्बाणादीन् करोतीति गणकारः । भूतभावनसारथये ४९ भूतभावनो ब्रह्मा सारथिः रथप्रेरको यस्य स भूतभावनसारथिः ॥ १६ ॥ भस्मशायिने ५० भस्मनि शेते तच्छीलः भस्मशायी ।

**नाभिर्नन्दिकरो हर्म्यः पुष्करः स्थपतिः स्थितः ॥ सर्वशास्त्रो धनश्चाद्यो यज्ञो यज्वा समाहितः ॥ १५ ॥ नगो नीलः कविः कालो मकरः कालपूजितः ॥ सगणो गणकारश्च भूतभावनसारथिः ॥ १६ ॥ भस्मशायी भस्मगोप्ता भस्मभूततनुर्गणः ॥ आगमश्च विलोपश्च महात्मा सर्वपूजितः ॥ १७ ॥ शुक्लः स्त्रीरूपसंपन्नः शुचिर्भूतनिषेवितः ॥ आश्रमस्थः कपोतस्थो विश्वकर्मा पतिर्विराट् ॥ १८ ॥**

भस्मगोप्त्रे ५१ भस्मना गोपायतीति भस्मगोप्ता । तदुक्तं भागते–"रक्षार्थं मंगलार्थं च पवित्रार्थं च भामिनि । लांछनार्थं च भक्तानां भस्म दत्तं मया पुरा ॥" इति । भस्मभूततनवे ५२ भस्मभूतमुत्पन्नं यस्यां सा भस्मभूता सा तनुः शरीरं यस्य स भस्मभूततनुः । मंकणो ऋषिः शरीरोद्भूतं शाकरसं दृष्ट्वा हर्षान्ननर्त तत्तपसा नर्तमानं भयाकुलं त्रैलोक्यं वीक्ष्य स्वगात्रतो भस्मोद्भवं दर्शयित्वा प्रकृतिस्थं चकारेति कथा भारतादौ प्रसिद्धा । गणाय ५३ गणो भृंग्यादिरूपः । आगमाय ५४ आगमयति स्वात्मरूपं प्रापयतीत्यागमः शास्त्ररूपः । विलोपाय ५५ विशेषेण लोपयति परमभक्तेभ्यः जगद्दर्शनं करोतीति विलोपः। महात्मने ५६ महात्मा परमात्मेत्यर्थः । सर्वपूजिताय ५७ सर्वस्मिन् पूजितः सर्वपूजितः ॥ १७ ॥ शुक्लाय ५८ शुक्लः शुद्ध इत्यर्थः । स्त्रीरूपसंपन्नाय ५९ स्त्रीरूपेण स्त्रीरूपवामभागेन संपन्नो युक्तः वा स्त्री रूपसंपन्ना परमरूपवती त्रिपुरसुंदरी यस्य स स्त्रीरूपसंपन्नः । शुचये ६० शुचिर्बाह्याभ्यंतरमलशून्यः । भूतनिषेविताय ६१ भूतैः पूर्वाचार्यैः निषेवितो भूतनिषेवितः । आश्रमस्थाय ६२ आश्रमेषु चतुर्ष्वपि धर्मरूपेण तिष्ठतीत्याश्रमस्थः । कपोतस्थाय ६३ कपोतः शिविपरीक्षार्थमागतो वह्निः तत्र तिष्ठतीति कपोतस्थः । विश्वकर्मणे ६४ विश्वकर्मा तत्संज्ञकदेवशिल्पिरूपः । पत्ये ६५ पतिर्गतिरूपः । "पतिः प्रभौ गतौ मूले " इति विश्वः । विराजे ६६ विशेषेण राजत इति विराट् ॥ १८ ॥

विशालशाखाय ६७ विशाला शाखा यस्य स विशालशाखः वेदद्रुमरूप इत्यर्थः । ताम्रोष्ठाय ६८ ताम्रौ ओष्ठौ यस्य स ताम्रोष्ठः । अंबुजालाय ६९ अंबूनां जालं समुदाय स्तद्रूपः । सुनिश्चिताय ७० सुतरां निश्चितः सतामत्यंतनिश्चितविषयः । कपिलाय ७१ कपिलस्तद्वर्णविशिष्टः । कलशाय ७२ कलशः पृषदाज्यादिकलशरूपः । स्थूलाय ७३ स्थूलो बृहद्वपुः । आयुधाय ७४ आयुधो वज्रादिरूपः । रोमशाय ७५ रोमशस्तत्संज्ञकगणरूपः ॥१९॥ गंधर्वाय ७६ गंधर्वश्चित्ररथादिरूपः । अदितये ७७ अदितिर्देवमाता तद्रूपः । तार्क्ष्याय ७८ तार्क्ष्यो वैनतेयरूपः । अविज्ञेयाय ७९ न विज्ञेयोऽविज्ञेयः प्रत्यग्रूपेण ज्ञातुमशक्य इत्यर्थः । सुशारदाय ८० शोभना शारदा वाक् यस्मादिति सुशारदः । परश्वधायुधाय ८१ परश्वधः कुठारः आयुधं यस्य स परश्वधायुधः । देवाय ८२ देवो विजिगीषुः । अर्थकारिणे ८३ अर्थान्नानाविधशब्दार्थान्करोति तच्छीलः अर्थकारी । सुबांधवाय ८४ शोभनो बांधवः सुबांधवः आपत्कालेप्युपकारक इत्यर्थः ॥ २० ॥ तुंबवीणाय ८५ तुंबीफलद्वययुक्ता वीणा यस्य स तुंबवीणः । अत एव तादृशी लोके रुद्रवीणेत्युच्यते । महाकोपाय ८६ महान् पूज्यः कोपो यस्य स महाकोपः । अत एव "नमस्ते रुद्र मन्यव" इत्यनेन वेदेपि कोपनमनमुक्तम् । ऊर्ध्वरेतसे ८७ ऊर्ध्वं ब्रह्मांडो-

विशालशाखस्ताम्रोष्ठो ह्यंबुजालः सुनिश्चितः ॥ कपिलः कलशः स्थूल आयुधश्चैव रोमशः ॥ १९ ॥ गंधर्वो ह्यदितिस्तार्क्ष्यो ह्यविज्ञेयः सुशारदः ॥ परश्वधायुधो देवो ह्यर्थकारी सुबांधवः ॥ २० ॥ तुंबवीणो महाकोप ऊर्ध्वरेता जलेशयः ॥ उग्रो वंशकरो वंशो वंशवादी ह्यनिन्दितः ॥ २१ ॥ सर्वांगरूपी मायावी सुहृदो ह्यनिलो बलः ॥ बंधनो बंधकर्ता च सुबंधनविमोचनः ॥ २२ ॥

परि रेतः उदकरूपं यस्य स ऊर्ध्वरेताः । जलेशयाय ८८ जले शेते इति जलेशयः । "शयवास" इत्यनेन सप्तम्यलुक् । नारायणरूपः । उग्राय ८९ उग्रः क्रूररूपः । वंशकराय ९० वंशं सोमवंशं करोतीति वंशकरः । वंशाय ९१ वंशः सोमवंशरूपः । वंशवादिने ९२ वंशं वेणुं वादयति तच्छीलो वंशवादी । अनिंदिताय ९३ अः विष्णुः निंदितः दधीच्यादिभिः तिरस्कृतो यस्मात्सोऽनिंदितः ॥ २१ ॥ सर्वांगरूपिणे ९४ सर्वांगानि देवीगात्राणि रूपयति प्रशंसति तच्छीलः सर्वांगरूपी । मायाविने ९५ माया प्रकृतिः यस्यास्तीति मायावी ' मायिनं तु महेश्वरम् ' इत्युक्तत्वात् । सुहृदाय ९६ सुहृदः साधवः संति यस्मिन्निति सुहृदः । अनिलाय ९७ नितरां लाति विषयान् गृह्णातीति निलो जीवो न निलोऽनिलः परमात्मरूप इत्यर्थः । बलाय ९८ बलो हलायुधरूपः । "बलो हलायुधे दैत्यभेदे बलिनि वायसे" इति विश्वः । बंधनाय ९९ बंधनो बलिधर्मपाश रूपः । बंधकर्त्रे ६०० बंधकर्ता वामनरूपः ॥ इति षष्ठशतकं समाप्तम् ॥ सुबंधनविमोचनाय १ सुतरां बंधनं सुबंधनं संसाररूपं तस्य मोचनो जन्ममरणनिवर्तक इत्यर्थः॥२२॥

राक्षसघ्नाय २ राक्षसान् हंतीति राक्षसघ्नः। अत्र मूलविभुजादित्वात्कप्रत्यये 'गमहन' इत्युपधालोपः। कामारये ३ कामस्य मदनस्यारिर्नाशकः। महादंष्ट्राय ४ महती दंष्ट्रा यस्य स महादंष्ट्रः यज्ञवराहदंष्ट्रायुक्तः। इयं कथाग्रे उक्ता। महायुधाय ५ महत्पूज्यमायुधं यस्य स महायुधः। लंबिताय ६ लंबितो महाकालरूपत्वादतिदीर्घः। लंबितोष्ठाय ७ लंबितावतिदीर्घौ ओष्ठौ जगद्रक्षणार्थं येन स लंबितोष्ठः। लंबहस्ताय ८ लंबहस्तो दीर्घबाहुः। वरप्रदाय ९ वरान् भक्ताभिलाषान् प्रकर्षेण ददातीति वरप्रदः ॥ २३ ॥ बाहवे १० बाहुः सर्वेषां हस्तरूपः। अनिन्दिताय ११ नास्ति इंदितं परमैश्वर्यं यस्मादित्यनिन्दितः। सर्वाय १२ सर्वो ज्ञानरूपः। शंकराय १३ शं कल्याणं करे यस्मादिति शंकरः। अकोपनाय १४ न कोपनोऽकोपनः। अमरेशाय १५ अमरगणां देवानामीशः स्वामी। महाघोराय १६ महांतः पूज्या घोराः भयंकरविग्रहा यस्य स महाघोरः। विश्वदेवाय १७ विश्वेन दीव्यतीति विश्वदेवः। सुरारिघ्ने १८ सुरारीन्देवशत्रून् हंतीति सुरारिहा ॥ २४ ॥ अहिर्बुध्न्याय १९ बुध्ने पृथिवीमूले पाताले भवंतीति बुध्न्यः अहिः सर्पश्चासौ बुध्न्यश्च अहिर्बुध्न्यः शेषरूप इत्यर्थः। "मूलं बुध्नोऽंघ्रिनामकः" इत्यमरः। निर्ऋतये २० निर्ऋतिः तत्संज्ञकदिक्पालरूपः। चेकितानाय २१ 'कित ज्ञाने' अस्मा

**राक्षसघ्नोऽथ कामारिर्महादंष्ट्रो महायुधः ॥ लंबितो लंबितोष्ठश्च लंबहस्तो वरप्रदः ॥ २३ ॥ बाहुस्त्वनिंदितः सर्वः शंकरोथाप्यकोपनः ॥ अमरेशो महाघोरो विश्वदेवः सुरारिहा ॥ २४ ॥ अहिर्बुध्न्यो निर्ऋतिश्च चेकितानो हली तथा ॥ अजैकपाच्च कापाली शं कुमारो महागिरिः ॥ २५ ॥ धन्वंतरिर्धूमकेतुः सूर्यो वैश्रवणस्तथा ॥ धाता विष्णुश्च शक्रश्च मित्रस्त्वष्टा धरो ध्रुवः ॥ २६ ॥**

द्यङ्लुकि ताच्छील्ये चानश्। अतिशयेन चेकेति जानातीति चेकितानः युगपदशेषज्ञानवानित्यर्थः। हलिने २२ हली तत्संज्ञकायुधविशिष्टः। अजैकपदे २३ अजैकपात्तत्संज्ञकरुद्ररूपः। यद्वा अजायाः मायारूपदेव्याः एकपादो यस्य सः अजैकपात् अर्धनारीरूपत्वादित्यर्थः। कापालिने २४ कपालाभ्यां द्यावापृथिवीरूपाभ्यां निर्मितं कापालं ब्रह्माण्डं यस्यास्तीति कापाली। शं नमः २५ शमित्यव्ययं सुखे तद्रूप इत्यर्थः। कुमाराय २६ कुमारः सनत्कुमारादिरूपः। महागिरये २७ महांश्चासौ गिरिश्च महागिरिः हिमालयरूपः "स्थावराणां हिमालयः" इति भगवद्गीतोक्तेः ॥२५॥ धन्वन्तरये २८ धन्वंतरिर्भिषग्वररूपः "भिषक्तमं त्वा भिषजां शृणोमि" इति श्रुतेः। धूमकेतवे २९ धूमः केतुर्यस्य स धूमकेतुः वह्निरूप इत्यर्थः। सूर्याय ३० 'षु प्रेरणे' तस्य क्यबंतनिपातितः सूर्यशब्दः सूर्यो जगत्प्रेरक इत्यर्थः। वैश्रवणाय ३१ वैश्रवणः कुबेररूपः। धात्रे ३२ धाता जगद्धारकः। विष्णवे ३३ विष्णुर्व्यापकः। शक्राय ३४ शक्रो देवराजरूपः। मित्राय ३५ मित्रस्तत्संज्ञकादित्यरूपः। त्वष्ट्रे ३६ त्वष्टा तत्संज्ञकादित्यरूपः। धराय ३७ ध्रुवाय ३८ नामद्वयं वसुवाचकं तद्रूप इत्यर्थः ॥ २६ ॥

प्रभासाय ३९ प्रभासस्तत्संज्ञकवसुरूपः । पर्वताय ४० पर्वतस्तत्संज्ञकऋषिरूपः । वायवे ४१ वाति गच्छति इति वायुस्तद्रूपः । अर्यम्णे ४२ अर्यमा तत्संज्ञकादित्यरूपः । सवित्रे ४३ सूतेऽसौ सविता जगदुत्पादक इत्यर्थः । रवये ४४ रौतीति रविः ब्रह्मकृपया रोदमान इत्यर्थः । इयं कथात्रैवोक्ता । धृतये ४५ धृतिर्धैर्यरूपः । विधात्रे ४६ विधाता विशेषेण पोषक इत्यर्थः । मांधात्रे ४७ मांधाता तत्संज्ञकभूपालरूपः । भूतभावनाय ४८ भूतानि भावयतीति भूतभावनः जगदुत्पादकः ॥ २७ ॥ नीराय ४९ नितरामीरयतीति नीरः । तीर्थाय ५० तीर्थः सर्वतीर्थरूपः । भीमाय ५१ भीमो भयंकरः । सर्वकर्मणे ५२ सर्वं कर्म यस्य स सर्वकर्मा । गुणोद्वहाय ५३ गुणाः उद्वहंति यस्मादसौ गुणोद्वहः । पद्मगर्भाय ५४ पद्मस्य हृत्कमलस्य गर्भो मध्यवर्तीत्यर्थः । महागर्भाय ५५ महान् विराट् गर्भो यस्य स महागर्भः । चंद्रवक्त्राय ५६ चंद्रमाह्लादकं वक्त्रं यस्य स चंद्रवक्त्रः । नभाय ५७ नास्ति भं जन्मर्क्षं यस्य स नभः । अनघाय ५८ अनघः पातकशून्यः ॥ २८ ॥ बलवते ५९ बलं रसो विद्यते यस्मिन्स बलवान् गंगाधरत्वा दित्यर्थः । उपशांताय ६० उप समीपे शांताः शमयुक्ताः यस्य स उपशांतः । पुराणाय ६१ पुरापि नवः पुराणः । यद्वा पुराणरूपः । पुण्यकृते ६२ पुण्यं करोतीति

**प्रभासः पर्वतो वायुरर्यमा सविता रविः ॥ धृतिश्चैव विधाता च मांधाता भूतभावनः ॥ २७ ॥ नीरस्तीर्थश्च भीमश्च सर्वकर्मा गुणोद्वहः ॥**
**पद्मगर्भो महागर्भश्चंद्रवक्त्रो नभोऽनघः ॥ २८ ॥ बलवांश्चोपशांतश्च पुराणः पुण्यकृत्तमः ॥ क्रूरकर्ता क्रूरवासी तनुरात्मा महौषधः ॥ २९ ॥**
**सर्वाशयः सर्वचारी प्राणेशः प्राणिनां पतिः ॥ देवदेवः सुखोत्सिक्तः सदसत्सर्वरत्नवित् ॥ ३० ॥**

पुण्यकृत् । तमसे ६३ तमस्तत्संज्ञकगुणरूपः । क्रूरकर्त्रे ६४ क्रूरान् सिंहव्याघ्रादीन्करोति तच्छीलः क्रूरकर्ता । क्रूरवासिने ६५ क्रूरेष्वपि वसतीति क्रूरवासी । तनवे ६६ तनुः देहरूपः । आत्मने ६७ आत्मा जीवरूपः । महौषधाय ६८ महौषधः सर्वरोगनिवर्तकः ॥ २९ ॥ सर्वाशयाय ६९ सर्वे आशेरते यस्मिन्निति सर्वाशयः सुषुप्तिस्थानप्राज्ञ रूपः । सर्वचारिणे ७० सर्वान् चारयतीति सर्वचारी समष्टिरूपः । प्राणेशाय ७१ प्राणस्य तत्संज्ञकवायोरीशः प्राणेशः । प्राणिनां पत्ये ७२ प्राणिनां जीवानां पतिः स्वामी। देवदेवाय ७३ देवानां विष्ण्वादीनां देवो गतिरित्यर्थः । सुखोत्सिक्ताय ७४ सुखमानंदः उत्सिक्तो यस्मादसौ सुखोत्सिक्तः । "तस्यैवानंदस्य मात्रामुपजीवंति" इति श्रुतेः । सते ७५ सत्कारणरूपः । असते ७६ असत्कार्यरूपः । सर्वरत्नविदे ७७ सर्वाणि च तानि रत्नानि सर्वजातिश्रेष्ठानि वा सर्वरत्नानि तानि वेत्तीति सर्वरत्नवित् । "रत्नं स्वजाति श्रेष्ठेऽपि" इत्यमरः ॥ ३० ॥

कैलासस्थाय ७८ कैलासस्थः तत्संज्ञकपर्वतवासी । गुहावासिने ७९ गुहायां मेरुगुहायां वसति तच्छीलः गुहावासी । हिमवते ८० हिमवत्केदारस्थानं तत्स्वरूपः । गिरिसंश्रयाय ८१ गिरेः हिमालयस्य संश्रयः आश्रयभूतः । कुलहारिणे ८२ कुलानि देहान् हरति तच्छीलः कुलहारी । कुलाकर्त्रे ८३ कुलानि देहान् वा गोत्राण्याकरोति तच्छीलः कुलाकर्ता । "सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्" इति विश्वः । बहुवित्ताय ८४ बहु अपरिमितं वित्तं यस्मादसौ बहुवित्तः । बहुप्रजाय ८५ बह्वी प्रजा कृष्णादीनां यस्मादसौ बहुप्रजः ॥ ३१ ॥ प्राणेशाय ८६ प्राणो बलं तस्येशः स्वामी । "प्राणो बलम्" इति विश्वः । बंधक्यै ८७ बंधकी पुंश्चली माया तद्रूपः । वृक्षाय ८८ वृश्चतीति वृक्षः मायाच्छेदक इत्यर्थः । नकुलाय ८९ नास्ति कुलं यस्य स नकुलः । अद्रिकाय ९० अद्रिकोऽद्रिरूपः । ह्रस्वग्रीवाय ९१ ह्रस्वा संकुचिता ग्रीवा यस्य स ह्रस्वग्रीवः । महाजानवे ९२ महांतौ जानू यस्य स महाजानुः । नामद्वयं सलक्षणदेहवाचकम् । अलोलाय ९३ अलोलोऽचंचलः । महौषधये ९४ महत्य ओषधयो व्रीह्यादयो यस्मात्स महौषधिः ॥ ३२ ॥ सिद्धांतकारिणे ९५ सिद्धांतान् सकलशास्त्रीयादिशंकानिवर्तकभागान् करोति तच्छीलः सिद्धांतकारी । सिद्धार्थाय ९६ सिद्धाः निष्पन्ना अर्था यस्मात्स

**कैलासस्थो गुहावासी हिमवद्गिरिसंश्रयः ॥ कुलहारी कुलाकर्ता बहुवित्तो बहुप्रजः ॥ ३१ ॥ प्राणेशो बंधकी वृक्षो नकुलश्चाद्रिकस्तथा ॥ ह्रस्वग्रीवो महाजानुरलोलश्च महौषधिः ॥ ३२ ॥ सिद्धांतकारी सिद्धार्थश्छंदो व्याकरणोद्भवः ॥ सिंहनादः सिंहदंष्ट्रः सिंहास्यः सिंहवाहनः ॥ ३३ ॥ प्रभावात्मा जगत्कालः कालः कंपी तरुस्तनुः ॥ सारंगो भूतचक्रांकः केतुमाली सुवेधकः ॥ ३४ ॥**

सिद्धार्थः । छंदसे ९७ छंदः गायत्र्यादिच्छंदोरूपः । व्याकरणोद्भवाय ९८ व्याकरणस्य तत्संज्ञकशास्त्रस्योद्भवः उत्पत्तिर्यस्मात्स व्याकरणोद्भवः । सिंहनादाय ९९ सिंहः शत्रुविनाशकः नादो यस्य स सिंहनादः । सिंहदंष्ट्राय ७०० सिंहवत् दंष्ट्रा यस्य स सिंहदंष्ट्रः ॥ इति सप्तमं शतकं समाप्तम् ॥ सिंहास्याय १ सिंहसदृशमास्यं यस्य सः सिंहास्यः नृसिंहरूप इत्यर्थः । सिंहवाहनाय २ सिंहयुक्तं वाहनं रथो यस्य स सिंहवाहनः ॥ ३३ ॥ प्रभावात्मने ३ प्रभावः सत्ता आत्मा स्वरूपं यस्य स प्रभावात्मा । जगत्कालाय ४ जगत्कलयति गमयतीति जगत्कालः । कालाय ५ कालो यमस्वरूपः । कंपिने ६ कंपोस्यास्तीति कंपी वायुरूपः । तरवे ७ तरुर्वृक्षरूपः । तनवे ८ तनुः सूक्ष्मः । सारङ्गाय ९ सारंगस्तत्संज्ञकपक्षिरूपः । भूतचक्रांकाय १० भूतानां चक्रं परिवर्तनम् अंकः चिह्नं यस्य स भूतचक्रांकः "यतो वा इमानि भूतानि जायंते" इति श्रुतेः । केतुमालिने ११ केतुना वृषध्वजेन मालते शोभते इति केतुमाली । सुवेधकाय १२ सुतरां वेधकः सुवेधकः अज्ञानग्रंथिनाशक इत्यर्थः ॥ ३४ ॥

भूतालयाय १३ भूतं तत्संज्ञकवनमालयो यस्य स भूतालयः । भूपतये १४ भूतानां पंचभूतानां पतिः पालकः । अहोरात्राय १५ अहः राति ददातीत्यहोरास्तं सूर्यं त्रायत इत्यहोरात्रः । अमलाय १६ अमलो निष्पापः । मलाय १७ मलोऽभक्तकृपणः । " मलं कृपणे " इति विश्वः । वसुभृते १८ वसून् मयूखान् बिभर्तीति वसुभृत । सर्वभूतात्मने १९ सर्वभूतानि अतति सातत्येन जानातीति सर्वभूतात्मा । निश्चलाय २० निश्चलो निष्कंपः । सुविदे २१ सुष्ठु सम्यग्वेत्तीति सुविदुः । बुधाय २२ बुधः कविः । "बुधः कवौ रौहिणेये " इति विश्वः ॥ ३५ ॥ सर्वभूतानामसुहृते २३ असून्प्राणान् हरतीति असुहृत् । निश्चलाय २४ निर्गतं चलमंतःकरणं यस्मात्स निश्चलः । "अमनाः" इति श्रुतेः । चलविदे २५ चलं चित्तं वेत्तीति चलवित् । बुधाय २६ बोधयतीति बुधः । अमोघाय २७ न मोघोऽमोघः । संयमाय २८ संयमः प्राणायामरूपः । हृष्टाय २९ हृष्टो हर्षविशिष्टः । भोजनाय ३० भोजनोऽभ्यवहारकर्ता । प्राणधारणाय ३१ प्राणं तत्संज्ञकवायुं धारयतीति प्राणधारणः ॥ ३६ ॥ धृतिमते ३२ धृतिमान्धैर्यविशिष्टः ।

**भूतालयो भूतपतिरहोरात्रो मलोऽमलः ॥ वसुभृत्सर्वभूतात्मा निश्चलः सुविदुर्बुधः ॥ ३५ ॥ असुहृत्सर्वभूतानां निश्चलश्चलविद्बुधः ॥ अमोघः संयमो हृष्टो भोजनः प्राणधारणः ॥ ३६ ॥ धृतिमान्मतिमांस्त्र्यक्षः सुकृतस्तु युधांपतिः ॥ गोपालो गोपतिर्ग्रामो गोचर्मवसनो हरः ॥ ३७ ॥ हिरण्यबाहुश्च तथा गुहावासः प्रवेशनः ॥ महामना महाकामो चित्तकामो जितेन्द्रियः ॥ ३८ ॥**

मतिमते ३३ मतिमानित्यबुद्धिविशिष्टः । त्र्यक्षाय ३४ त्रीणि अक्षीणि यस्य स त्र्यक्षः। सुकृताय ३५ सुष्ठु कृतं यस्य स सुकृतः । युधांपत्ये ३६ युधां संप्रहारकर्तॄणां पतिः स्वामी । गोपालाय ३७ गाः इंद्रियाणि पालयतीति गोपालः । गोपतये ३८ गवां वाणीनां पतिः गोपतिः । ग्रामाय ३९ ग्रामः स्वरशास्त्रोक्तग्रामत्रयरूपः । गोचर्मवसनाय ४० गोचर्मवसनं यस्य स गोचर्मवसनः । हराय ४१ हरतीति हरः । तदुक्तं भारते द्रोणपर्वणि–"ब्रह्माणमिंद्रं वरुणं यमं धनदमेव च । निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः ॥ " इति ॥ ३७ ॥ हिरण्यबाहवे ४२ हिरण्यभूषणाः बाहवो यस्य स हिरण्यबाहुः । गुहावासाय ४३ गुहा बुद्धिरावास उपलब्धिस्थानं यस्य स गुहावासः । प्रवेशनाय ४४ प्रकर्षेण विशति ब्रह्माभेदं भक्तः प्राप्नोत्यनेनेति प्रवेशनः । महामनसे ४५ महत्पूज्यं मनो यस्मात्स महामनाः । महाकामाय ४६ महान्सर्वजयी कामो मदनो यस्मात्स महाकामः । चित्तकामाय ४७ चित्ते कामो यस्मादसौ चित्तकामः अनंगकरणादित्यर्थः । जितेन्द्रियाय ४८ जितानि इंद्रियाणि यस्मादसौ जितेंद्रियः ॥ ३८ ॥

गांधाराय ४९ गांधारस्तत्संज्ञकस्वररूपः । सुरापाय ५० आ पातीत्यापः सुराणां देवानामापः सुरापः । यद्वा सुराममरवारुणीं पिबतीति सुरापः । तदुक्तं हठदीपिकायां—"जिह्वाप्रवेशसंभूतवह्निनोत्पादितः खलु । चन्द्रात्स्रवति यः सारः सा स्यादमरवारुणी ॥ " इति । तापकर्मरताय ५१ तापकर्मणि रतः तापकर्मरतः वह्निरूप इत्यर्थः । हिताय ५२ हितो हितरूपः । महाभूताय ५३ महाभूतस्तत्संज्ञः । तदुक्तं द्रोणपर्वणि—"ज्येष्ठं भूतं वदंत्येनम् " इति । भूतवृताय ५४ भूतैः पूर्वभक्तैः वृतो वेष्टितः । अप्सरसे ५५ अप्पूर्णं सरोऽप्सरः तद्रूपः । गणसेविताय ५६ गणैः बाणादिभिः सेवितो गणसेवितः ॥ ३९ ॥ महाकेतवे ५७ महान्पूज्यो यः केतुर्ध्वजस्तद्रूपः । धराधात्रे ५८ धराया धाता धारकः । नैकतानरताय ५९ न एकाः नैकाश्च तास्ताना मूर्छनाश्च नैकतानास्तासु रतः । स्वराय ६० स्वरः उदात्तादिरूपः । अवेदनीयाय ६१ अवेदनीयो ज्ञातुमशक्यः । आवेद्याय ६२ आवेद्यः ईषत् ज्ञातुं योग्यः । सर्वगाय ६३ सर्वैः गीयत इति सर्वगः । सुपीति योगविभागात्कः । सुखावहाय ६४ सुखमावहति प्रापयतीति सुखावहः॥४०॥ तारणाय ६५ तारयति भवसागरमिति तारणः । चरणाय ६६ चरणो बह्वृचादिः तद्रूपः । धात्रे ६७ धाता पोषकः । परिधायै ६८ परितः दधाति सा परिधा पृथिवीरूपः । परिपूजिताय ६९ परितः पूजितः परिपूजितः । संयोगिने ७० संयोगः प्रकृतिसंयोगोस्ति यस्य स संयोगी । वर्धनाय ७१ वर्धनो जगद्वर्धकः । वृद्धाय ७२

**गांधारश्च सुरापश्च तापकर्मरतो हितः ॥ महाभूतो भूतवृतो ह्यप्सरो गणसेवितः॥ ३९ ॥ महाकेतुर्धराधाता नैकतानरतः स्वरः ॥ अवेदनीय आवेद्यः सर्वगश्च सुखावहः ॥ ४० ॥ तारणश्चरणो धाता परिधा परिपूजितः ॥ संयोगी वर्धनो वृद्धो गणिकोऽथ गणाधिपः ॥ ४१ ॥ नित्यो धाता सहायश्च देवासुरपतिः पतिः ॥ युक्तश्च युक्तबाहुश्च सुदेवोपि सुपर्वणः॥ ४२ ॥ आषाढश्च सुषाढश्च स्कंधदो हरितो हरः ॥ वपुरावर्तमानोऽन्यो वपुःश्रेष्ठो महावपुः ॥ ४३ ॥**

वृद्धो वयोधिकः । गणिकाय ७३ गणिं गणनां कायति कथयतीति गणिकः । गणाधिपाय ७४ गणाधिपो गणपतिरूपः ॥४१॥ नित्याय ७५ नित्यो विकारशून्यः । धात्रे ७६ धाता ब्रह्मरूपः । सहायाय ७७ आयेन सहितः सहायः । देवासुरपतये ७८ स्पष्टम् । पत्ये ७९ पतिः सर्वपालकः । युक्ताय ८० युक्तो नित्यमुमासंगतः । युक्तबाहवे ८१ युक्तावुमायोगविशिष्टौ बाहू यस्य स युक्तबाहुः । सुदेवाय८२ सुष्ठु दीव्यति देव्या साकं क्रीडतीति सुदेवः । सुपर्वणाय ८३ सुष्ठु पर्वाणि यस्य स सुपर्वणः । अत्र समासांतोच् ॥ ४२ ॥ आषाढाय ८४ आषाढस्तत्संज्ञकमासरूपः । सुषाढाय ८५ सुष्ठु साहयतीति सुषाढः । स्कन्धदाय ८६ स्कंधकोपं द्यति खंडयतीति स्कंधदः । हरिताय ८७ हरितः तद्वर्णः । हराय ८८ ह अद्भुतं राति ददातीति हरः । "हेत्यद्भुते खेदे " इत्यमरः । वपुषे ८९ वपति जगद्बीजसंतानं करोतीति वपुः । आवर्तमानाय ९० आवर्ततेऽसावावर्तमानः संवत्सरादिरूपेण परिवर्तमान इत्यर्थः । अन्याय ९१ अन्यो जगद्भिन्नः । वपुःश्रेष्ठाय ९२ वपुः शरीरं श्रेष्ठं यस्य स वपुःश्रेष्ठः । महावपुषे ९३ महत्पूज्यं वपुर्यस्य स महावपुः ॥४३॥

शिरसे ९४ शिरो यजूरूपः । "तस्य यजुरेव शिरः" इति श्रुतेः । विमर्शनाय ९५ विमर्शतीति विमर्शनः । विचारकर्ता सर्वलक्ष्यलक्षणभूषिताय ९६ सर्वैः लक्ष्याणि लक्षितुं योग्यानि यानि लक्षणानि तैर्भूषितोऽलंकृतः । अक्षयाय ९७ अक्षयो नाशशून्यः । रथगीताय ९८ रथेन रथंतरसाम्ना गीतः स्तुत इत्यर्थः । सर्वभोगिने ९९ सर्वं भुनक्ति पालयति तच्छीलः सर्वभोगी । महाबलाय ८०० महत्पूज्यं बलं गणसैन्यं यस्य स महाबलः ॥ इत्यष्टमं शतकं समाप्तम् ॥ ४४ ॥ साम्नायाय १ आम्नायेन वेदेन सहितः साम्नायः । महाम्नायाय २ महान्पूज्य आम्नायो वेदो यस्मात्स महाम्नायः । तीर्थदेवाय ३ तीर्थानां देवः स्वामी । महायशसे ४ महद्यशः कृष्णादीनां यस्मादसौ महायशाः । निर्जीवाय ५ निर्जीवोऽचेतनस्वरूपः । जीवनाय ६ जीवयतीति जीवनः । मंत्राय ७ मंत्रो मृतसंजीवनरूपः । सुभगाय ८ सुभगः शोभनः । बहुकर्कशाय ९ बहुकर्कशः अनेकरूपत्वमनिर्देयः ॥ ४५ ॥ रत्नभूताय १० रत्नानि चतुर्दशरत्नानि भूतानि यस्मादसौ रत्नभूतः । रत्नांगाय ११ रत्नानि स्वस्वजातिश्रेष्ठान्यंगे यस्य स रत्नांगः । महार्णवनिपातविदे १२ महार्णवः संसारसागरः तस्य निपातं नाशं वेत्तीति महार्णवनिपातवित् । मूलाय १३ मूलं संसारवृक्षांघ्रिरूपः । विशालाय १४ विशेषेण शालत इति विशालः ।

**शिरो विमर्शनः सर्वलक्ष्यलक्षणभूषितः ॥ अक्षयो रथगीतश्च सर्वभोगी महाबलः ॥ ४४ ॥ साम्नायोथ महाम्नायस्तीर्थदेवो महायशाः ॥ निर्जीवो जीवनो मंत्रः सुभगो बहुकर्कशः ॥ ४५ ॥ रत्नभूतोऽथ रत्नाङ्गो महार्णवनिपातवित् ॥ मूलं विशालो ह्यमृतं व्यक्ताव्यक्तस्तपोनिधिः ॥ ४६ ॥ आरोहणोधिरोहश्च शीलधारी महातपाः ॥ महाकण्ठो महायोगी युगो युगकरो हरिः ॥४७॥ युगरूपो महारूपो वहनो गहनो नगः ॥ न्यायो निर्वापणोऽपादः पण्डितो ह्यचलोपमः ॥ ४८ ॥**

अमृताय १५ अमृतं सुधारूपः । व्यक्ताव्यक्ताय १६ व्यक्तं स्पष्टमव्यक्तं प्रधानं यस्मात्स व्यक्ताव्यक्तः । तपोनिधये १७ तपसां निधिः स्थानभूतः ॥ ९ ॥ आरोहणाय १८ आरोहयतीत्यारोहणः परमपदप्रापक इत्यर्थः । अधिरोहाय १९ अधिरोहंति भक्ता यस्मिन्नित्यधिरोहः । शीलधारिणे २० शीलं सद्वृत्तं धारयति तच्छीलः शीलधारी । महातपसे २१ महत् ज्ञानमयं तपो यस्य स महातपाः । महाकंठाय २२ कंठमभिव्याप्येत्याकंठं महः उत्सवो यस्मात्स महाकंठः । महायोगिने २३ महानष्टांगयोगो यस्यास्ति स महायोगी । युगाय २४ युगः कृतादिरूपः । युगकराय २५ युगानि करोतीति युगकरः । हरये २६ हरिर्मारुतिरूपः ॥ ४७ ॥ युगरूपाय २७ युगानि शीतोष्णादिद्वंद्वानि रूपाणि यस्य स युगरूपः । महारूपाय २८ महांश्चासावरूपश्च महारूपः । वहनाय २९ वहति सर्वं प्रापयतीति वहनः । गहनाय ३० गहनो दुर्गम इत्यर्थः । नगाय ३१ नगो बिल्वादिवृक्षरूपः । न्यायाय ३२ न्यायो यथार्थनिर्णयरूपः । निर्वापणाय ३३ नितरां वापयति क्षेत्रे बीजान्याकिरयतीति निर्वापणः । अपादाय ३४ अपादः पादशून्यः । पंडिताय ३५ पंडितो विवेकीत्यर्थः । अचलोपमाय ३६ अचलः पर्वतः उपमा यस्य सोऽचलोपमः कूटस्थ इत्यर्थः ॥ ४८ ॥

बहुमालाय ३७ बह्वचोऽनेकभक्तसमर्पिताः मालाः पुष्पादिस्रजो यस्य स बहुमालः । महामालाय ३८ महती पादावलंबिनी माला यस्य स महामालः । शिपिविष्टाय ३९ शिपिविष्टो विष्णुरूपः " विष्णुः शिपिविष्टः " इति श्रुतेः । सुलोचनाय ४० शोभनानि लोचनानि यस्य स सुलोचनः । विस्ताराय ४१ विस्तीर्यंते सर्वाणि जगंति यस्मिन्निति विस्तारः । लवणाय ४२ लवणः क्षारसमुद्ररूपः । कूपाय ४३ कूपोन्धुरूपः । कुसुमांगाय ४४ कुसुमसदृशमृदुलान्यंगानि यस्य स कुसुमांगः । फलोदयाय ४५ फलानां सत्कर्मफलानामुदयो यस्मादसौ फलोदयः ॥४९॥ ऋषभाय ४६ ऋषभः सर्वश्रेष्ठः । वृषभाय ४७ वृषभो नंदिकेश्वररूपः । भंगाय ४८ भंगोनेकविधबुद्धितरंगरूपः । " भंगस्तरंगे रुग्भेदे" इति विश्वः । मणिबिंबजटाधराय ४९ मणीनां हीरकादीनां बिंबानि प्रतिबिंबानि तद्वज्जटानां धरः माणिबिंबजटाधरः । इन्दवे ५० इंदुश्चंद्ररूपः । विसर्गाय ५१ विशिष्टो जरामृत्युहीनः सर्गो रुद्रगणसृष्टिर्यस्मात्सः विसर्गः । इयं कथात्रैवोक्ता । सुमुखाय ५२ शोभनानि मुखानि यस्य स सुमुखः । शूराय ५३ शूरो विक्रमकर्ता । सर्वायुधाय ५४ सर्वाण्यायुधानि यस्माद्वा यस्य स सर्वायुधः । सहाय ५५ सहति सर्वायुधप्रहारान्न गणयतीति सहः ॥ ५० ॥ निवेदनाय ५६ नितरां वेदयति स्वभक्तान्बोधयतीति निवेदनः ।

बहुमालो महामालः शिपिविष्टः सुलोचनः ॥ विस्तारो लवणः कूपः कुसुमांगः फलोदयः ॥ ४९ ॥ ऋषभो वृषभो भंगो माणिबिंबजटाधरः ॥ इंदुर्विसर्गः सुमुखः शूरः सर्वायुधः सहः ॥ ५० ॥ निवेदनः सुधाजातः स्वर्गद्वारो महाधनुः ॥ गिरावासो विसर्गश्च सर्वलक्षणलक्षवित् ॥ ५१ ॥ गन्धमाली च भगवाननन्तः सर्वलक्षणः ॥ संतानो बहुलो बाहुः सकलः सर्वपावनः ॥ ५२ ॥

सुधाजाताय ५७ सुधा अमृतं जातं यस्मात्स सुधाजातः । स्वर्गद्वाराय ५८ स्वर्गस्य मोक्षसुखस्य द्वारं कारणभूतः । तदुक्तम्—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनंतरम् । अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥ " इति । महाधनुषे ५९ महत् मेरुरूपं धनुर्यस्य स महाधनुः । गिरावासाय ६० गिरा वाण्या सह उष्यते अर्थरूपेणानेनेति गिरावासः । विसर्गाय ६१ विसर्गो विसर्जनीयरूपः । सर्वलक्षणलक्षविदे ६२ सर्वलक्षणानि च वेत्तीति सर्वलक्षणलक्षवित् ॥ ५१ ॥ गंधमालिने ६३ गंधेन स्वांगसुगंधेन मालते शोभते तच्छीलः गंधमाली । भगवते ६४ भगं माहात्म्यं विद्यते यस्य स भगवान् । "भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु" इति विश्वः । अनंताय ६५ नास्त्यंतः पारो यस्य सोऽनंतः । सर्वलक्षणाय ६६ सर्वाणि लक्षणानि यस्मिन्स सर्वलक्षणः । सन्तानाय ६७ संतानः कल्पवृक्षरूपः । बहुलाय ६८ बहु लाति ददातीति बहुलः । बाहवे ६९ बाहति स्वभक्तानाह्वयतीति बाहुः । सकलाय ७० कलया चंद्रकलया सहितः सकलः । सर्वपावनाय ७१ सर्वान्पावयतीति सर्वपावनः ॥ ५२ ॥

करस्थालिने ७२ कर एव स्थाली भोजनपात्रं यस्यास्तीति करस्थाली । तदुक्तं भागवते–"ततः करतलीकृत्य व्यापि हालाहलं विषम् " इति । कपालिने ७३ कं ब्रह्माणं पालयति तच्छीलः कपाली । ऊर्ध्वसंहननाय ७४ ऊर्ध्वं सर्वोपरि संहननं बलं यस्य स ऊर्ध्वसंहननः । यून ७५ युवा नित्यतरुणः । यंत्रतंत्रसुविख्याताय ७६ यंत्रतंत्रेषु सुतरां विख्यातो यंत्रतंत्रसुविख्यातः । लोकाय ७७ लोक्यतेऽनेनेति लोकः सूर्यादिरूप इत्यर्थः । सर्वाश्रयाय ७८ सर्वेषामाश्रयः सर्वाश्रयः । मृदवे ७९ मृदुरत्यंतकोमलरूपः ॥ ५३ ॥ मुंडाय ८० मुंडो मुंडितशिराः । विरूपाय ८१ विशिष्टं रूपं प्रशंसा यस्य स विरूपः । विकृताय ८२ विशिष्टं कृतं यस्य स विकृतः । दंडिने ८३ दंडो दमः यस्यास्ति स दंडी । "दंडो यमे मानभेदे लगुडे दमसैन्ययोः" इति विश्वः । कुंडिने ८४ कुंडं देवजलाधारो नाम गंगोदकाश्रयः यस्य मौलिरस्ति स कुण्डी "कुंडं देवजलाधारे पीठरे तु कमंडलौ" इति विश्वः । विकुर्वणाय ८५ करोतीति कुर्वाणः विगतः कुर्वाणो यस्मादसौ विकुर्वणः कर्माप्राप्य इत्यर्थः । कुर्वण इत्यत्र ह्रस्वत्वं छांदसम् । वार्यक्षाय ८६ वारयतीति वारि भक्तजनकामपूरकमक्षि नेत्रं यस्य स वार्यक्षः कृपाकटाक्षमात्रेण सर्वप्रद इत्यर्थः । ककुभाय ८७ ककुभो वीणांकः । 'ककुभः स्वरभेदेपि वीणांकेऽर्जुनपादपे " इति विश्वः ।

**करस्थाली कपाली च ऊर्ध्वसंहननो युवा ॥ यंत्रतंत्रसुविख्यातो लोकः सर्वाश्रयो मृदुः ॥ ५३ ॥ मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः ॥ वार्यक्षः ककुभो वज्री दीप्ततेजाः सहस्रपात् ॥ ५४ ॥ सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ॥ सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ॥ ५५ ॥ पवित्रं त्रिमधुर्मंत्रः कनिष्ठः कृष्णपिंगलः ॥ ब्रह्मदंडविनिर्माता शतघ्नः शतपाशधृक् ॥ ५६ ॥**

वज्रिणे ८८ वज्राणि भूषणहीरकाः सांति यस्य स वज्री । दीप्ततेजसे ८९ दीप्तं तेजो यस्य स दीप्ततेजाः । सहस्रपदे ९० सहस्रमनंताः पादाः यस्य स सहस्रपात् ॥ ५४ ॥ सहस्रमूर्ध्ने ९१ सहस्रमपरिमिताः मूर्धानो यस्य स सहस्रमूर्धा । देवेंद्राय ९२ देवानामिंद्रः परमेश्वरः । सर्वदेवमयाय ९३ सर्वदेवमयः सर्वदेवरूपः । गुरवे ९४ गृणातीति गुरुः हितोपदेशक इत्यर्थः । सहस्रबाहवे ९५ सहस्रमसंख्याः बाहवो यस्य स सहस्रबाहुः । सर्वागाय ९६ सर्वं ब्रह्मांडमंगं यस्य स सर्वांगः । शरण्याय ९७ शरणेषु साधुः शरण्यः । सर्वलोककृत ९८ सर्वलोकान्करोतीति सर्वलोककृत् ॥ ५५ ॥ पवित्राय ९९ पवेर्वज्रादपि स्वभक्तान् त्रायत इति पवित्रम् । त्रिमधवे ९०० त्रिविधं क्षौद्रजलक्षीर-रूपं मधु यस्मादसौ त्रिमधुः ॥ इति नवमशतकं संपूर्णम् ॥ मंत्राय १ मंत्रो देवप्रसादनरूपः " मंत्रो वेदप्रभेदे स्याद्देवादीनां प्रसादने" इति विश्वः। कनिष्ठाय २ कनिष्ठार्थोऽहोबलभाष्ये–" नित्ययूने कनिष्ठाय यद्वाऽविज्ञेयमूर्तये " इति । कृष्णपिंगलाय ३ कृष्णः कंठे कृष्वर्णः अन्यत्र पिंगलो लोहितः कृष्णपिंगलः । ब्रह्मदंडविनिर्मात्रे ४ ब्रह्मणो दंडविनिर्माता तस्यापि कन्यानुगमनकाले दंडकर्तेत्यर्थः । शतघ्नाय ५ शतान्यसंख्यजीवान् युगपद्धंतीति शतघ्नः । शतपाशधृषे ६ शतान्यसंख्यपाशान् धृष्णोतीति शत-पाशधृक् ॥ ५६ ॥

कलायै ७ कला तत्संज्ञककालमानरूपः । " अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला " इत्यमरः । काष्ठायै ८ अष्टादशनिमेषात्मककालरूपः । लवाय ९ लवो लेशमात्र-कालरूपः । "लवो लेशे विलासे च " इति विश्वः । मात्रायै १० मात्रा ह्रस्वाजुच्चारणकालरूपः । मुहूर्ताय ११ मुहूर्तो द्विघटिकात्मककालरूपः । अह्ने १२ अहो दिवसरूपः । क्षपायै १३ क्षपा रात्रिरूपः । क्षणाय १४ क्षणस्त्रिंशत्कलात्मककालरूपः । विश्वक्षेत्रप्रदाय १५ प्रददातीति प्रदः विश्वेषां सर्वजीवानां क्षेत्राणि शरीराणि तेषां प्रदो विश्वक्षेत्रप्रदः । बीजाय १६ बीजं वीर्यरूपः । लिंगाय १७ लिंगं चिह्नरूपः । आद्याय १८ आदौ ब्रह्मांडोत्पत्तिप्राग्लिंगरूपेण भवतीत्याद्यः । निर्मुखाय १९ निर्गतं मुखं मुखविशिष्टं रूपं यस्मादसौ निर्मुखः नीरूप इत्यर्थः ॥५७॥ सदसते २० सच्चासच्च तयोः समाहारः सदसत् चेतनाचेतनसमाहाररूप इत्यर्थः । व्यक्ताय २१ विशेषेण अक्तं मायाकार्यानुरंजितं ब्रह्म तद्रूपः । अव्यक्ताय २२ न व्यक्तमव्यक्तं मायाकार्याननुरक्तं तद्रूप इत्यर्थः । पित्रे २३ पिता सकलजगज्जनकः । मात्रे २४ माता जगज्जननीरूपः । पितामहाय २५ पितामहो ब्रह्मरूपः । स्वर्गद्वाराय २६ स्वर्गद्वारं तपस्तद्रूपः । मोक्षद्वाराय २७ मोक्षद्वारं वैराग्यं तद्रूपः । प्रजाद्वाराय २८ प्रजाद्वारं रागस्तद्रूपः । त्रिविष्टपाय २९ त्रीणि विष्टपानि यस्य स त्रिवि

**कला काष्ठा लवो मात्रा मुहूर्तोऽहः क्षपा क्षणः ॥ विश्वक्षेत्रप्रदो बीजं लिंगमाद्यस्तु निर्मुखः ॥ ५७ ॥ सदसद्व्यक्तमव्यक्तं पिता माता पिता महः ॥ स्वर्गद्वारं मोक्षद्वारं प्रजाद्वारं त्रिविष्टपः॥५८॥ निर्वाणं हृदयश्चैव ब्रह्मलोकः परा गतिः ॥ देवासुरविनिर्माता देवासुरपरायणः ॥५९॥ देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ देवासुरमहामात्रो देवासुरगणाश्रयः ॥ ६० ॥ देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ॥ देवाधिदेवो देवर्षिर्देवासुरवरप्रदः ॥ ६१ ॥**

ष्टपः स्वर्गमृत्युपातालाधीशः॥५८॥ निर्वाणाय ३० निर्वाणं मोक्षस्तद्रूपः । हृदयाय ३१ अयते प्राप्नोतीत्ययः हृदि अयः हृदयः । ब्रह्मलोकाय ३२ ब्रह्मलोकः सत्यलोकरूपः। परागतये ३३ परा मोक्षाख्या आगतिर्यस्मात्स परागतिः । देवासुरविनिर्मात्रे ३४ देवासुरौ हि सामर्थ्यविशेषात्सर्वश्रेष्ठावतस्तद्धेतुकनामान्याह देवासुराणां विनिर्माता उत्पादकः । देवासुरपरायणाय ३५ तेषां परायणः परमस्थानभूतः ॥ ५९ ॥ देवासुरगुरवे ३६ देवासुराणां गुरुः हितोपदेशकः । देवाय ३७ देवयति देवासुरान् विजिगीषयतीति देवः । देवासुरनमस्कृताय ३८ देवासुरैः नमस्कृतः देवासुरनमस्कृतः । देवासुरमहामात्राय ३९ देवासुररूपौ मत्तगजौ तेषां महामात्रौ नियंता । देवासुरगणाश्रयाय ४० देवासुरगणानामाश्रयः देवासुरगणाश्रयः ॥ ६० ॥ देवासुरगणाध्यक्षाय ४१ देवासुरगणानामध्यक्षः स्वामी । देवासुरगणाग्रण्ये ४२ देवासुरगणानामग्रणीः मुख्यः । देवाधिदेवाय ४३ देवानधिदेवयति स्वसमीपं क्रीडयतीति देवाधिदेवः । देवर्षये ४४ देवानाम् ऋषिरतीन्द्रियदर्शकः । देवासुरवरप्रदाय ४५ देवासुरयोः वरप्रदः देवासुरवरप्रदः ॥ ६१ ॥

देवासुरेश्वराय ४६ तयोरीश्वरः स्वामीत्यर्थः । विष्णवे ४७ विशति देवासुरसभां मोहिनीरूपेण प्रविशतीति विष्णुः । देवासुरमहेश्वराय ४८ देवासुराणां महेश्वरः पूज्यः स्वामी। सर्वदेवमयाय ४९ सर्वदेवानां मयः सुखं यस्मात् स सर्वदेवमयः । अचिंत्याय ५० अस्य विष्णोरपि चिंत्यः अचिंत्यः । देवतात्मने ५१ देवतानामात्मा ब्रह्मरूपः । “आत्मा देहमनोब्रह्मस्वभाव धृतिबुद्धिषु ” इति विश्वः । स्वयंभवाय ५२ स्वयमात्मनैव भवतीति स्वयंभवः ॥ ६२ ॥ उद्गताय ५३ उत् उत्कृष्टं गतं यस्य स उद्गतः । त्रिक्रमाय ५४ त्रिषु त्रिभुवनेषु क्रमः पादविक्षेपो यस्य स त्रिक्रमः । वैद्याय ५५ वैद्यो भवरोगचिकित्सकः । वरदाय ५६ वराणि सर्वोत्कृष्टानि दैत्यत्रिपुराणि द्यति खंडयतीति वरदः । अवरजाय ५७ अस्य विष्णोर्वरात्स्वदत्तवरप्रदानाज्जातः सांबरूपेणोत्पन्नः वा अवरे प्रलयकाले जायते कालाग्निरूपेणोत्पद्यते इत्यवरजः । अंबराय ५८ अंबरो गगनरूपः । इज्याय ५९ इज्यो यजनार्हः । हस्तिने ६० हस्ती ऐरावतरूपः । व्याघ्राय ६१ व्याघ्रो देवीवाहनरूपः । देवसिंहाय ६२ दीव्यत्यसुरान् विजिगीषतीति देवः देवश्चासौ सिंहश्च देवसिंहः देवीवाहनसिंहरूप इत्यर्थः । महर्षभाय ६३ महांश्चासौ ऋषभश्च महर्षभः सर्वपूज्यनंदिकेश्वररूपः ॥ ६३ ॥ विबुधाग्र्याय ६४ विबुधेष्वग्र्यः प्रथमः । सुराय ६५

**देवासुरेश्वरो विष्णुर्देवासुरमहेश्वरः ॥ सर्वदेवमयोऽचिंत्यो देवतात्मा स्वयंभवः ॥ ६२ ॥ उद्गतस्त्रिक्रमो वैद्यो वरदोऽवरजोंबरः ॥ इज्यो हस्ती तथा व्याघ्रो देवसिंहो महर्षभः ॥ ६३ ॥ विबुधाग्र्यः सुरः श्रेष्ठः स्वर्गदेवस्तथोत्तमः ॥ संयुक्तः शोभनो वक्ता आशानां प्रभवोव्ययः ॥ ६४ ॥ गुरुः कांतो निजः सर्गः पवित्रः सर्ववाहनः ॥ शृंगी शृंगप्रियो बभ्रू राजराजो निरामयः ॥ ६५ ॥**

सुरो देवरूपः । श्रेष्ठाय ६६ श्रेष्ठोतिप्रशस्यः । स्वर्गदेवाय ६७ स्वर्गस्य देवः स्वामी । उत्तमाय ६८ उत्तमः परमात्मरूपः । तदुक्तं भगवद्गीतायाम् “ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः” इति । संयुक्ताय ६९ संयुक्तः समाधिसंयुक्तः । शोभनाय ७० शोभयतीति शोभनः कृपामात्रेण सर्वेषां शोभाकर इत्यर्थः । वक्त्रे ७१ वक्ता परम वाग्मी । “अधिवक्ता” इति श्रुतेः । आशानां प्रभवाय ७२ आशानां दिशां प्रभवः कारणः । अव्ययाय ७३ अस्य विष्णोः विशेषणायः त्रैलोक्यैश्वर्यप्राप्तिर्यस्मादित्य व्ययः ॥ ६४ ॥ गुरवे ७४ गुरुः जगद्बीजनिषकत्वादित्यर्थः । कांताय ७५ कांतोऽभिरूपदेहयुक्तः वा कस्य ब्रह्मणोप्यंतो यस्मादिति कांतः । निजाय ७६ निजः सर्वेषां स्वकीयः । सर्गाय ७७ सृजति जगदुत्सृजतीति सर्गः । पवित्राय ७८ पावयतीति पवित्रः । सर्ववाहनाय ७९ सर्वाणि शरीराणि वाहनानि यस्य स सर्ववाहनः । शृंगिणे ८० शृंगाणि संति यस्य सः शृंगी कैलासाद्रिरूपः । शृंगप्रियाय ८१ शृंगं मेरुमध्यशिखरं प्रियं यस्य स शृंगप्रियः । बभ्रवे ८२ बभ्रुः पिंगलवर्णः राजराजाय ८३ राज्ञामपि राजा नियंतेत्यर्थः । निरामयाय ८४ निर्गतः आमयो भवरोगादिर्यस्मात्स निरामयः ॥ ६५ ॥

अभिरामाय ८५ अभिरमंते योगिनो यस्मिन्नित्यभिरामः । सुशरणाय ८६ शोभनानि मनोज्ञानि शरणानि गृहाणि यस्मात्स सुशरणः । निरामाय ८७ नितरां रमंते योगिनो यस्मिन्निति निरामः । सर्वसाधनाय ८८ सर्वाणि साधनानि यस्मात्स सर्वसाधनः । ललाटाक्षाय ८९ ललाटे अक्षि यस्य स ललाटाक्षः । विश्वदेहाय ९० विश्वं देहो यस्य सः विश्वदेहः । हरिणाय ९१ हरिणः कुरंगरूपः । ब्रह्मवर्चसाय ९२ ब्रह्मवर्चो विद्यातपउद्भवं तेजस्तदस्ति यस्य स ब्रह्मवर्चसः ॥ ६६ ॥ स्थावराणां पत्ये ९३ स्थावराणां वृक्षगुल्मादीनां पतिः पालकः । नियतेंद्रियवर्तनाय ९४ नियतेंद्रियाः वर्ततेऽनेनेति नियतेंद्रियवर्तनः । सिद्धार्थाय ९५ सिद्धः नित्यसिद्ध एव कंठगतविस्मृतचामीकरवदज्ञानापगमलभ्यः अर्थो मोक्षरूपो यस्मात्स सिद्धार्थः । सर्वभूतार्थाय ९६ सर्वभूतानामर्थाः धर्माद्यो यस्मात्स सर्वभूतार्थः । अचिंत्याय ९७ अचिंत्यः सर्वेषां चिंतयितुमप्यशक्यः । सत्याय ९८ सत्यो यथार्थरूपः । शुचिव्रताय ९९ शुचि व्रतं यस्य स शुचिव्रतः ॥ ६७ ॥ व्रताधिपाय १००० व्रतानां नक्तव्रतादीनामधिपः स्वामी ॥ इति दशमं शतकं समाप्तम् ॥ परं १ पृणातीति परं निर्गुणं ब्रह्म तद्रूपः । ब्रह्मणे २ बृंहयतीति ब्रह्म मायाशबलं तद्रूपः । मुक्तानां परमायै गतये ३ मुक्तानां मुक्तसंगानां परमा आत्यंतिकी गतिः स्थानरूपः । विमुक्ताय

**आभिरामः सुशरणो निरामः सर्वसाधनः ॥ ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः ॥ ६६ ॥ स्थावराणां पतिश्चैव नियतेन्द्रियवर्तनः ॥ सिद्धार्थः सर्वभूतार्थोऽचिंत्यः सत्यः शुचिव्रतः ॥ ६७ ॥ व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः ॥ विमुक्तो मुक्तकेशश्च श्रीमाञ्छ्रीवर्धनो जगत् ॥ ६८ ॥ यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ॥ भक्तिमेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ ६९ ॥ ततो ह्यनुज्ञां प्राप्यैवं स्तुतो भक्तिमतां गतिः ॥ तस्माल्लब्ध्वा स्तवं शंभोर्नृपस्त्रैलोक्यविश्रुतः ॥ ७० ॥ अश्वमेधसहस्रस्य फलं प्राप्य महायशाः ॥ गणाधिपत्यं संप्राप्तस्तंडिनस्तेजसा प्रभोः ॥ ७१ ॥**

४ विशेषेणाद्वैतानुभवेन मुक्ताः यस्मादिति विमुक्तः । मुक्तकेशाय ५ मुक्तो वस्तुतः मायाबंधशून्यः कः ब्रह्मा तस्यापीशः सृष्ट्यादौ नियंता । श्रीमते ६ श्रीमान्नित्यश्रीयुक्तः । श्रीवर्धनाय ७ श्रियं स्वभक्तसंपत्तिं वर्धयतीति श्रीवर्धनः । जगते १००८ जगत्सकलविश्वरूपः ॥ इत्यष्टाधिकनामसहस्रं समाप्तम् ॥ ६८ ॥ तंडिऋषिः अष्टाधिकनामसहस्रं त्रिधन्वने नृपायोक्त्वा स्वकृतस्तवप्रकारं निरूपयति—यथाप्रधानमिति । अत्र सहस्रनाम्नि शिवनाम पृथक् नोक्तं तदेव सर्वनाम्नां मुख्यं विशेष्यमिति कथयति—प्रधानं मुख्यं शिवनाम अनतिक्रम्येति यथाप्रधानं यज्ञपतिर्भगवान् विभुः शिवः इति पूर्वोक्तनामभिः भक्तिं पुरस्कृत्य ततः ब्रह्मणः सकाशात् एवं पूर्वोक्तप्रकारामनुज्ञां प्राप्य भक्तिमतां गतिः मया भक्त्या स्तुत इत्यग्रिमस्थैरन्वयः । तदुक्तं भारते—"शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्धनैः" इति । अनेन गुरूपदेशं गृहीत्वा स्तवनं कार्यमिति सूचितम् ॥ ६९ ॥ तस्मात् तंडिऋषिसकाशान्नृपः शंभोः स्तवं लब्ध्वा तंडिनस्तेजसा अश्वमेधसहस्रस्य फलं प्राप्य शंभोः गणाधिपत्यं संप्राप्त इत्यग्रिमेणान्वयः ॥ ७० ॥ ७१ ॥

एतत्पठनश्रवणश्रावणफलं कथयति-य इति ॥ ७२ ॥ एतज्जपस्य महापातकमोचकत्वं कथयति-ब्रह्मघ्न इत्यादिना सार्धद्वाभ्याम् ॥ ७३ ॥ ७४ ॥ १७५ ॥ विश्वं भूतमिति श्रुतौ हि सकलं प्रोक्तं वपुः शांकरं तत्संज्ञाः सकलास्ततो वरतरं ब्रह्माऽब्रवीच्चंडिने । तच्चाष्टाधिकमप्रमेयममलं नाम्नां सहस्रं मया व्याख्यातं शिवयोर्मुदेऽस्तु सततं सर्वाघनिर्मोचकम् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचषष्टितमोऽध्यायः ॥ ६५ ॥ षट्षष्टितमेऽध्याये त्रिधन्वाद्या नृपा रवेः ॥ वंशीया

यः पठेच्छृणुयाद्वापि श्रावयेद्ब्राह्मणानपि ॥ अश्वमेधसहस्रस्य फलं प्राप्नोति वै द्विजाः ॥ ७२ ॥ ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः॥ शरणागतघाती च मित्रविश्वासघातकः ॥ ७३ ॥ मातृहा पितृहा चैव वीरहा भ्रूणहा तथा ॥ संवत्सरं क्रमाज्जप्त्वा त्रिसंध्यं शंकराश्रमे ॥ ७४ ॥ देवमिष्ट्वा त्रिसंध्यं च सर्वपापैः प्रमुच्यते ॥ १७५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे रुद्रसहस्रनामकथनं नाम पंचषष्टितमोध्यायः ॥ ६५ ॥ सूत उवाच ॥ त्रिधन्वा देवदेवस्य प्रसादात्तंडिनस्तथा ॥ अश्वमेधसहस्रस्य फलं प्राप्य प्रयत्नतः ॥ १ ॥ गाणपत्यं दृढं प्राप्तः सर्वदेवनमस्कृतः ॥ आसीत्त्रिधन्वनश्चापि विद्वांस्त्रय्यारुणो नृपः ॥ २ ॥ तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ॥ तेन भार्या विदर्भस्य हृता हत्वामितौजसम् ॥ ३ ॥ पाणिग्रहणमंत्रेषु निष्ठामप्रापितेष्विह ॥ तेनाधर्मेण संयुक्तं राजा त्रय्यारुणोऽत्यजत् ॥ ४ ॥ पितरं सोऽब्रवीत्त्यक्तः क्व गच्छामीति वै द्विजाः ॥ पिता त्वेनमथोवाच श्वपाकैः सह वर्तय ॥ ५ ॥ इत्युक्तः स विचक्राम नगराद्वचनात् पितुः ॥ स तु सत्यव्रतो धीमाञ्श्वपाकावसथान्तिके ॥ ६ ॥ पित्रा त्यक्तोऽवसद्वीरः पिता चास्य वनं ययौ ॥ सर्वलोकेषु विख्यातस्त्रिशंकुरिति वीर्यवान् ॥ ७ ॥ वसिष्ठकोपात्पुण्यात्मा राजा सत्यव्रतः पुरा ॥ विश्वामित्रो महातेजा वरं दत्त्वा त्रिशंकवे ॥ ८ ॥ राज्येऽभिषिच्य तं पित्र्ये याजयामास तं मुनिः ॥ मिषतां देवतानां च वसिष्ठस्य च कौशिकः ॥ ९ ॥ सशरीरं तदा तं वै दिवमारोपयद्विभुः ॥ तस्य सत्यव्रता नाम भार्या कैकयवंशजा ॥ १० ॥ कुमारं जनयामास हरिश्चंद्रमकल्मषम् ॥ हरिश्चंद्रस्य च सुतो रोहितो नाम वीर्यवान् ॥ ११ ॥

श्चैव सोमस्य ययात्यंताः प्रकीर्तिताः ॥ सूतस्त्रिधन्वनोऽग्रिमोक्तवृत्तांतं कथासंदर्भार्थमनुवदति–त्रिधन्वेत्यादिना सार्धेन ॥ १ ॥ २ ॥ तेन सत्यव्रतेन अमितौजसं तत्संज्ञक राजानं हत्वा विदर्भस्य तद्देशपतेः भार्या स्त्री पाणिग्रहणमंत्रेषु विवाहमंत्रेषु निष्ठां समाप्तिम् अप्रापितेषु हृताऽनेन इह भारतखंडे अधर्मेण संयुक्तं त्रय्यारुणः तत्पिता अत्यजदित्यग्रिमेणान्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ १२ ॥ १३ ॥ १४ ॥ और्वाग्निः अग्निमदृश और्वऋषिः ॥ १५ ॥ १६ ॥ १७ ॥ पृथिवीं खनंतः पितुरश्वमेधीयाश्वमिंद्रहृतमार्गणार्थं विदारयंतः विष्णोः कापिलरूपस्य

हरितो रोहितस्याथ धुंधुर्हारित उच्यते ॥ विजयश्च सुतेजाश्च धुंधुपुत्रौ बभूवतुः ॥ १२ ॥ जेता क्षत्रस्य सर्वत्र विजयस्तेन स स्मृतः ॥ रुचकस्तस्य तनयो राजा परमधार्मिकः ॥ १३ ॥ रुचकस्य वृकः पुत्रस्तस्माद्बाहुश्च जज्ञिवान् ॥ सगरस्तस्य पुत्रोभूद्राजा परम धार्मिकः ॥ १४ ॥ द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा ॥ ताभ्यामाराधितः पूर्वमौर्वोग्निः पुत्रकाम्यया ॥ १५ ॥ और्वस्तुष्टस्तयोः प्रादाद्यथेष्टं वरमुत्तमम् ॥ एका षष्टिसहस्राणि सुतमेकं परा तथा ॥ १६ ॥ अगृह्लाद्वंशकर्तारं प्रभागृह्लात्सुतान्बहून् ॥ एकं भानुमतिः पुत्र मगृह्लादसमंजसम् ॥ १७ ॥ ततः षष्टिसहस्राणि सुषुवे सा तु वै प्रभा ॥ खनंतः पृथिवीं दग्धा विष्णुहुंकारमार्गणैः ॥ १८ ॥ असमंजस्य तनयः सोंऽशुमान्नाम विश्रुतः ॥ तस्य पुत्रो दिलिपस्तु दिलीपात्तु भगीरथः ॥ १९॥ येन भागीरथी गंगा तपः कृत्वाऽवतारिता ॥ भगीरथ सुतश्चापि श्रुतो नाम बभूव ह ॥ २० ॥ नाभागस्तस्य दायादो भवभक्तः प्रतापवान् ॥ अंबरीषः सुतस्तस्य सिंधुद्वीपस्ततोभवत् ॥ २१ ॥ नाभागेनांबरीषेण भुजाभ्यां परिपालिता ॥ बभूव वसुधात्यर्थं तापत्रयविवर्जिता ॥ २२ ॥ अयुतायुः सुतस्तस्य सिन्धुद्वीपस्य वीर्यवान् ॥ पुत्रोऽयुतायुषो धीमानृतुपर्णो महायशाः ॥ २३ ॥ दिव्याक्षहृदयज्ञो वै राजा नलसखो बली ॥ नलौ द्वावेव विख्यातौ पुराणेषु दृढव्रतौ ॥ २४ ॥ वीरसेनसुतश्चान्यो यश्चेक्ष्वाकुकुलोद्भवः ॥ ऋतुपर्णस्य पुत्रोभूत्सार्वभौमः प्रजेश्वरः ॥ २५ ॥ सुदासस्तस्य तनयो राजा त्विन्द्रसमोभवत् ॥ सुदासस्य सुतः प्रोक्तः सौदासो नाम पार्थिवः॥ २६ ॥ ख्यातः कल्माषपादो वै नाम्ना मित्रसहश्च सः॥ वसिष्ठस्तु महा तेजाः क्षेत्रे कल्माषपादके ॥ २७ ॥ अश्मकं जनयामास इक्ष्वाकुकुलवर्धनम् ॥ अश्मकस्योत्तरायां तु मूलकस्तु सुतोभवत् ॥ २८ ॥ स हि रामभयाद्राजा स्त्रीभिः परिवृतो वने ॥ बिभर्ति त्राणमिच्छन्वै नारीकवचमुत्तमम् ॥ २९ ॥ मूलकस्यापि धर्मात्मा राजा शतरथः सुतः ॥ तस्माच्छतरथाज्जज्ञे राजा त्विलविलो बली ॥ ३० ॥

हुंकारमार्गणैस्तद्रूपशरैर्दग्धा इत्यन्वयः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३॥२४॥२५॥२६॥२७॥२८॥ रामभयात् क्षत्रियांतकपरशुरामभयादित्यर्थः ॥२९ ॥३०॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ परमवीर्यवानैश्वर्यसामर्थ्यविशिष्टः यज्ञैरश्वमेधादिभिः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९॥४० ॥ ४१ ॥ भारते कौरवपांडवयुद्धे सौभद्रेण अभिमन्युना निपातितो निषूदित इत्यर्थः ॥ ४२ ॥ ४३ ॥४४ ॥ मुक्तात्मयोगिन इत्यत्र संधिरार्षः । सौरं बृहद्बलान्तं मुख्यं ज्येष्ठवंशमुक्त्वा अन्यानपि तद्वंशीयान्कांश्चिच्छ्रे-

आसीत्त्वैलविलिः श्रीमान्वृद्धशर्मा प्रतापवान् ॥ पुत्रो विश्वसहस्तस्य पितृकन्या व्यजीजनत् ॥ ३१ ॥ दिलीपस्तस्य पुत्रोभूत्खट्वांग इति विश्रुतः ॥ येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ॥ ३२ ॥ त्रयोऽग्नयस्त्रयो लोका बुद्ध्या सत्येन वै जिताः ॥ दीर्घबाहुः सुतस्तस्य रघुस्तस्मादजायत ॥ ३३ ॥ अजः पुत्रो रघोश्चापि तस्माज्जज्ञे च वीर्यवान् ॥ राजा दशरथस्तस्माच्छ्रीमानिक्ष्वाकुवंशकृत् ॥ ३४ ॥ रामो दशरथाद्वीरो धर्मज्ञो लोकविश्रुतः ॥ भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥ ३५ ॥ तेषां श्रेष्ठो महातेजा रामः परमवीर्यवान् ॥ रावणं समरे हत्वा यज्ञैरिष्ट्वा च धर्मवित् ॥ ३६ ॥ दशवर्षसहस्राणि रामो राज्यं चकार सः ॥ रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ॥ ३७ ॥ लवश्च सुमहाभागः सत्यवानभवत्सुधीः ॥ अतिथिस्तु कुशाज्जज्ञे निपधस्तस्य चात्मजः ॥ ३८ ॥ नलस्तु निषधाज्जातो नभस्तस्मादजायत ॥ नभसः पुंडरीकाख्यः क्षेमधन्वा ततः स्मृतः ॥ ३९ ॥ तस्य पुत्रोभवद्वीरो देवानीकः प्रतापवान् ॥ अहीनरः सुतस्तस्य सहस्राश्वस्ततः परः ॥ ४० ॥ शुभश्चंद्रावलोकश्च तारापीडस्ततोभवत् ॥ तस्यात्मजश्चन्द्रगिरिर्भानुचन्द्रस्ततोभवत् ॥ ४१ ॥ श्रुतायुरभवत्तस्माद्बृहद्बल इति स्मृतः ॥ भारते यो महातेजाः सौभद्रेण निपातितः ॥ ४२ ॥ एते इक्ष्वाकुदायादा राजानः प्रायशः स्मृताः ॥ वंशे प्रधाना एतस्मिन्प्राधान्येन प्रकीर्तिताः ॥ ४३ ॥ सर्वे पाशुपते ज्ञानमधीत्य परमेश्वरम् ॥ समभ्यर्च्य यथाज्ञानमिष्ट्वा यज्ञैर्यथाविधि ॥ ४४ ॥ दिवं गता महात्मानः केचिन्मुक्तात्मयोगिनः ॥ नृगो ब्राह्मणशापेन कृकलासत्वमागतः ॥ ४५ ॥ धृष्टश्च धृष्टकेतुश्च यमबालश्च वीर्यवान् ॥ रणधृष्टश्च ते पुत्रास्त्रयः परमधार्मिकाः ॥४६॥ आनर्तो नाम शर्यातेः सुकन्या नाम दारिका ॥ आनर्तस्याभवत् पुत्रो रोचमानः प्रतापवान् ॥ ४७ ॥ रोचमानस्य रेवोभूद्रेवाद्रैवत एव च ॥ ककुद्मी चापरो ज्येष्ठपुत्रः पुत्रशतस्य तु ॥ ४८ ॥ रेवती यस्य सा कन्या पत्नी रामस्य विश्रुता ॥ नरिष्यन्तस्य पुत्रोभूज्जितात्मा तु महाबली ॥ ४९ ॥

ष्ठनृपान्कथयाति—नृग इत्यादिना ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ रामस्य बलरामस्येत्यर्थः ॥ ४९ ॥

अंबरीषः पूर्वमुक्तोपि तदन्य ऋतस्तुतवंशकथनार्थं पुनरुक्तिः ॥५०॥ पृषितः तु अन्यः करूषः तस्य कारूषा इत्यन्वयः ॥५१॥ अनुक्तं पृषितवृत्तांतं कथयति–पृषित इति। गुरोः गां हिंसयित्वा कल्मषमाप इत्यन्वयः। अयं रजन्यां व्याघ्रबुद्ध्या गां हतवानियं कथा भागवतादौ विस्तृता ॥ ५२॥५३॥५४॥५५॥५६॥ गंधर्वलोके विदिताः उर्वशी

नाभागादंबरीषस्तु विष्णुभक्तः प्रतापवान् ॥ ऋतस्तस्य सुतः श्रीमान्सर्वधर्मविदांवरः ॥ ५० ॥ कृतस्तस्य सुधर्माभूत्पृषितो नाम विश्रुतः॥ करूषस्य तु कारूषाः सर्वे प्रख्यातकीर्तयः ॥ ५१॥ पृषितो हिंसयित्वा गां गुरोः प्राप सुकल्मषम् ॥ शापाच्छूद्रत्वमापन्नश्च्यवनस्येति विश्रुतः ॥ ५२ ॥ दिष्टपुत्रस्तु नाभागस्तस्मादपि भलंदनः ॥ भलंदनस्य विक्रांतो राजासीद्जवाहनः ॥ ५३ ॥ एते समासतः प्रोक्ता मनुपुत्रा महाभुजाः ॥ इक्ष्वाकोः पुत्रपौत्राद्या ऐलस्याथ वदामि वः ॥ ५४ ॥ सूत उवाच ॥ ऐलः पुरूरवा नाम रुद्रभक्तः प्रतापवान् ॥ चक्रे त्वकण्टकं राज्यं देशे पुण्यतमे द्विजाः ॥ ५५ ॥ उत्तरे यमुनातीरे प्रयागे मुनिसेविते ॥ प्रतिष्ठानाधिपः श्रीमान्प्रतिष्ठाने प्रतिष्ठितः ॥५६॥ तस्य पुत्राः सप्त भवन्सर्वे वितततेजसः ॥ गंधर्वलोकविदिता भवभक्ता महाबलाः ॥ ५७ ॥ आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्यवान् ॥ श्रुतायुश्च शतायुश्च दिव्याश्चैवोर्वशीसुताः ॥ ५८ ॥ आयुषस्तनया वीराः पंचैवासन्महौजसः ॥ स्वर्भानुतनयायां ते प्रभायां जज्ञिरे नृपाः ॥ ५९ ॥ नहुषः प्रथमस्तेषां धर्मज्ञो लोकविश्रुतः ॥(नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः ॥ ६० ॥ उत्पन्नाः पितृकन्यायां विरजायां महौजसः ॥ यतिर्ययातिः संयातिरायातिः पंचमोऽन्धकः ॥ ६१ ॥ विजातिश्चेति षडिमे सर्वे प्रख्यातकीर्तयः ॥ यतिर्ज्येष्ठश्च तेषां वै ययातिस्तु ततोऽवरः ॥ ६२ ॥ ज्येष्ठस्तु यतिर्मोक्षार्थी ब्रह्मभूतोऽभवत्प्रभुः ॥ तेषां ययातिः पंचानां महाबलपराक्रमः ॥ ६३ ॥ देवयानीमुशनसः सुतां भार्यामवाप सः ॥ शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ॥ ६४ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ तावुभौ शुभकर्माणौ स्तुतौ विद्याविशारदौ ॥ ६५ ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ययातये रथं तस्मै ददौ शुक्रः प्रतापवान् ॥ ६६ ॥ तोषितस्तेन विप्रेन्द्रः प्रीतः परमभास्वरम् ॥ सुसंगं कांचनं दिव्यमक्षये च महेषुधी ॥ ६७ ॥ युक्तं मनोजवैरश्वैर्येन कन्यां समुद्वहन् ॥ स तेन रथमुख्येन षण्मासेनाजयन्महीम् ॥ ६८ ॥ ययातिर्युधि दुर्धर्षो देवदानवमानुषैः ॥ भवभक्तस्तु पुण्यात्मा धर्मनिष्ठः समंजसः ॥ ६९ ॥ यज्ञयाजी जितक्रोधः सर्वभूतानुकंपनः ॥ कौरवाणां च सर्वेषां स भवद्रथ उत्तमः ॥ ७० ॥)

पुत्रत्वात्प्रसिद्धा इत्यर्थः॥५७॥५८॥५९॥६०॥६१॥६२॥६३॥६४॥ देवयानी शुक्रकन्या व्यजायत अजनयदित्यर्थः॥६५–६७॥ षण्मासेन तत्परिमाणकालेन॥६८–७०॥

पूरोः राज्ञः वंशस्य पारिक्षितस्य राज्ञः जनमेजयस्य स रथः गर्गस्य शापात् नाशमदर्शनं जगामेत्यग्रिमेणान्वयः ॥ ७१ ॥ शापकारणं कथयति–गर्गस्येत्यादिना ॥ ७२ ॥ लोहगंधी रुधिरगंधवानित्यर्थः ॥ ७३ ॥ ७४ ॥ ७५ ॥ इंद्रोतिस्तं जनमेजयं नृपं पावनार्थं च लोहगंधनिर्मुक्त्यर्थमपि अश्वमेधेन याजयामासेत्यन्वयः ॥ ७६ ॥ अवभृथे सति इत्यत्र "यस्य च भावेन" इति सूत्रविहिता सप्तमी । अवभृथमध्यकाल इत्यर्थः । दिव्यो रथः यातो दिवं गतः ॥ ७७ ॥ वसोस्तत्संज्ञस्य चेदिपतेः पुनः शक्रेण दत्तः तदुक्तं भारते सभापर्वणि–"यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः" इति ॥ ७८ ॥ भीमो भीमसेनः वासुदेवाय श्रीकृष्णायेत्यर्थः । तदुक्तं भारते–"शक्रविष्णू हि संग्रमे

यावन्नरेन्द्रप्रवरः कौरवो जनमेजयः ॥ पूरोर्वंशस्य राज्ञस्तु राज्ञः पारीक्षितस्य तु ॥ ७१ ॥ जगाम स रथो नाशं शापाद्गर्गस्य धीमतः ॥ गर्गस्य हि सुतं बालं स राजा जनमेजयः ॥७२॥ अक्रूरं हिंसयामास ब्रह्महत्यामवाप सः ॥स लोहगंधी राजर्षिः परिधावन्नितस्ततः॥७३॥ पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् ॥ ततः स दुःखसंतप्तो न लेभे संविदं क्वचित् ॥ ७४ ॥ जगाम शौनकमृषिं शरण्यं व्यथितस्तदा ॥ इन्द्रोतिर्नाम विख्यातो योऽसौ मुनिरुदारधीः ॥ ७५ ॥ याजयामास चेंद्रोतिस्तं नृपं जनमेजयम् ॥ अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः ॥ ७६ ॥ स लोहगंधान्निर्मुक्त एनसा च महायशाः ॥ यज्ञस्यावभृथे मध्ये यातो दिव्यो रथः शुभः ॥ ७७ ॥ तस्माद्वंशात्परिभ्रष्टो वसोश्चेदिपतेः पुनः ॥ दत्तः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः ॥७८॥ ततो हत्वा जरासंधं भीमस्तं रथमुत्तमम् ॥ प्रददौ वासुदेवाय प्रीत्या कौरवनंदनः ॥ ७९ ॥ सूत उवाच ॥ अभ्यषिंचत्पुरुं पुत्रं ययातिर्नाहुषः प्रभुः ॥ कृतोपकारस्तेनैव पुरुणा द्विजसत्तमाः ॥ ८० ॥ अभिषेक्तुकामं च नृपं पुरुं पुत्रं कनीयसम् ॥ ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥८१॥ कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ॥ ज्येष्ठं यदुमतिक्रम्य कनीयान्राज्यमर्हति ॥ ८२ ॥ एते संबोधयामस्त्वां धर्मं च अनुपालय ॥ ८३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

चेरतुस्तारकामये । रथेन तेन वै कृष्ण उपालभ्य ययौ तदा ॥" इति ॥ ७९ ॥ सूतः प्रकृतययातिचरितं कथयति–अभ्यषिंचदित्यादिना ॥८०॥ प्रथमपादेऽक्षराधिक्यं छांदसम् ॥ ८१ ॥ ८२ ॥ धर्ममनुपालय रक्षस्वेत्यर्थः ॥ ८३ ॥ श्रीशंभो तव भक्तेषु कनीयानप्यहं विभो । कृपाकटाक्षाद्भूयासं पूरुवज्ज्येष्ठदायभाक् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

सप्तषष्टितमे राज्ञो ययातेश्चरितं शुचि । सर्वबोधकरा गाथाः कीर्तिताश्च सुखावहाः ॥ प्रजाक्षिप्तो ययातिः कनिष्ठस्यापि पूरोः मुख्यराज्यदाने युक्तिं कथयति—ब्राह्मणेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ द्विविधप्रयोगात्पुरुपूर्वेत्युभयाविधः शब्दो ज्ञेयः ॥ ५ ॥ संचारिणी स्वीकारिपुत्रगामिनीत्यर्थः ॥ ६ ॥ ७ ॥ प्रकृतयः सद्युक्तिं श्रुत्वाऽनुमुमुदुः यः

ययातिरुवाच ॥ ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ॥ ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन ॥ १ ॥ मम ज्येष्ठेन यदुना नियोगो नानुपालितः ॥ प्रतिकूलमतिश्चैव न स पुत्रः सतां मतः ॥ २ ॥ मातापित्रोर्वचनकृत्सद्भिः पुत्रः प्रशस्यते ॥ स पुत्रः पुत्रव द्यस्तु वर्तते मातृपितृषु ॥ ३ ॥ यदुनाहमवज्ञातस्तथा तुर्वसुनापि च ॥ द्रुह्येन चानुना चैव मय्यवज्ञा कृता भृशम् ॥ ४ ॥ पुरुणा च कृतं वाक्यं मानितश्च विशेषतः ॥ कनीयान्मम दायादो जरा येन धृता मम ॥ ५ ॥ शुक्रेण मे समादिष्टा देवयान्याः कृते जरा ॥ प्रार्थि तेन पुनस्तेन जरा संचारिणी कृता ॥६॥ शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ॥ पुत्रो यस्त्वानुवर्तेत स ते राज्यधरस्त्विति ॥७॥ भवंतोऽप्यनुजानंतु पूरू राज्येऽभिषिच्यते ॥ प्रकृतय ऊचुः ॥ यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा॥८॥ सर्वमर्हति कल्याणं कनीया नपि स प्रभुः ॥ अर्हः पूरुरिदं राज्यं यः सुतो वाक्यकृत्तव ॥ ९ ॥ वरदानेन शुक्रस्य न शक्यं कर्तुमन्यथा ॥ सूत उवाच ॥ एवं जान पदैस्तुष्टैरित्युक्तो नाहुषस्तदा ॥ १० ॥ अभिषिच्य ततो राज्ये पूरुं स सुतमात्मनः ॥ दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत् ॥ ११ ॥ दक्षिणायामथो राजा यदुं ज्येष्ठं न्ययोजयेत् ॥ प्रतीच्यामुत्तरस्यां तु द्रुह्युं चानुं च तावुभौ ॥ १२ ॥ सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ॥ व्यभजच्च त्रिधा राज्यं पुत्रेभ्यो नाहुषस्तदा ॥ १३ ॥ पुत्रसंक्रामितश्रीस्तु हर्षनिर्भरमानसः ॥ प्रीतिमानभवद्राजा भार मावेश्य बंधुषु ॥ १४ ॥ अत्र गाथा महाराज्ञा पुरा गीता ययातिना ॥ याभिः प्रत्याहरेत्कामान्सर्वतोंगानि कूर्मवत् ॥ १५॥ ताभिरेव नरः श्रीमान्नान्यथा कर्मकोटिकृत् ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ १६ ॥

इत्यादिना ॥ ८ ॥ ९ ॥ १० ॥ राज्ये मुख्यराज्ये इत्यर्थः । दक्षिणायां यदुं ज्येष्ठं न्ययोजदथो दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशदित्यग्रिमस्थैरन्वयः ॥ ११ ॥ १२ ॥ पुत्रेभ्य स्त्रिधा राज्यविभागस्तु मध्यराज्यं पूरवे दक्षिणपूर्वराज्यं देवयानीपुत्राभ्यां पश्चिमोत्तरराज्यं शर्मिष्ठापुत्राभ्यामिति प्रकारेण ज्ञेयः॥१३॥१४॥१५॥ श्रीमान्नित्यशोभायुक्तः॥१६॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ प्राणस्यांतिकः समीपवर्ती ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ययातिचरितमाहात्म्यं कथयति—धनीत्यादिना ॥ २७ ॥ महीयते पूज्यते इत्यर्थः ॥ २८ ॥ इह राज्यादिपदसुखं दत्वा चांते हि मोचकं बंधात् । चेतस्तमेव सांबं भज बुद्ध्या त्वं ययातिनृपगाथाः ॥ इति श्रीलिंगमहा

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥१७॥ नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् ॥ १८ ॥ कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ यदा परान्न बिभेति परे चास्मान्न बिभ्यति ॥ १९ ॥ यदा न निन्देन्न द्वेष्टि ब्रह्म संपद्यते तदा ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ २० ॥ योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ जीर्यन्ति जीर्यतः केशा दन्ता जीर्यंति जीर्यतः ॥ २१ ॥ चक्षुः श्रोत्रे च जीर्येते तृष्णैका निरुपद्रवा ॥ जीर्यंति देहिनः सर्वे स्वभावादेव नान्यथा ॥ २२ ॥ जीविताशा धनाशा च जीर्यतोपि न जीर्यते ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ ॥ २३ ॥ तृष्णाक्षयसुखस्यैतत्कलां नार्हति षोडशीम् ॥ एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनम् ॥२४॥ भृगुतुंगे तपस्तप्त्वा तत्रैव च महायशाः ॥ साधयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥ २५ ॥ तस्य वंशास्तु पंचैते पुण्या देवर्षिसत्कृताः ॥ यैर्व्याप्ता पृथिवी कृत्स्ना सूर्यस्येव मरीचिभिः ॥ २६ ॥ धनी प्रजावानायुष्मा न्कीर्तिमांश्च भवेन्नरः ॥ ययातिचरितं पुण्यं पठञ्छृण्वंश्च बुद्धिमान् ॥२७॥ सर्वपाप विनिर्मुक्तः शिवलोके महीयते ॥ २८ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सोमवंशे ययातिचरितं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

सूत उवाच ॥ यदोर्वंशं प्रवक्ष्यामि ज्येष्ठस्योत्तमतेजसः ॥ संक्षेपेणानुपूर्व्याच्च गदतो मे निबोधत ॥ १ ॥ यदोः पुत्रा बभूवुर्हि पञ्च देव सुतोपमाः ॥ सहस्रजित्सुतो ज्येष्ठः क्रोष्टुर्नीलोजको लघुः ॥२॥ सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ॥ सुताः शतजितः ख्यातास्त्रयः परमकीर्तयः ॥ ३ ॥ हैहयश्च हयश्चैव राजा वेणुहयश्च यः ॥ हैहयस्य तु दायादो धर्म इत्यभिविश्रुतः ॥ ४ ॥ तस्य पुत्रोभवद्विप्रा धर्म नेत्र इति श्रुतः ॥ धर्मनेत्रस्य कीर्तिस्तु संजयस्तस्य चात्मजः ॥ ५ ॥

पुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमेऽध्याये यदोर्ज्येष्ठस्य ह्यन्वयः । कृष्णावतारहेतुत्वात्सात्वतांतो निरूप्यते ॥ सूतः ययाति ज्येष्ठपुत्रवंशं कथयति—यदोरित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ रामः परशुरामः नारायणात्मको विष्ण्ववतारः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तेषां वीतिहोत्रान्यतालजंघपुत्राणां पुण्यकर्मण इदं तस्य विशेषणम्

सञ्जयस्य तु दायादो महिष्मान्नाम धार्मिकः ॥ आसन्माहिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ॥ ६ ॥ भद्रश्रेण्यस्य दायादो दुर्दमो नाम पार्थिवः ॥ दुर्दमस्य सुतो धीमान्धनको नाम विश्रुतः ॥ ७ ॥ धनकस्य तु दायादाश्चत्वारो लोकसंमताः ॥ कृतवीर्यः कृताग्निश्च कृतवर्मा तथैव च ॥ ८ ॥ कृतौजाश्च चतुर्थोभूत्कार्तवीर्यस्ततोर्जुनः ॥ जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरोत्तमः ॥ ९ ॥ तस्य रामस्तदा त्वासीन्मृत्युर्नारायणात्मकः ॥ तस्य पुत्रशतान्यासन्पंच तत्र महारथाः ॥ १० ॥ कृतास्त्रा बलिनः शूरा धर्मात्मानो मनस्विनः ॥ शूरश्च शूरसेनश्च धृष्टः कृष्णस्तथैव च ॥ ११ ॥ जयध्वजश्च राजासीदावन्तीनां विशां पतिः॥ जयध्वजस्य पुत्रोभूत्तालजंघो महाबलः ॥ १२ ॥ शतं पुत्रास्तु तस्येह तालजंघाः प्रकीर्तिताः ॥ तेषां ज्येष्ठो महावीर्यो वीतिहोत्रोऽभवन्नृपः ॥ १३ ॥ वृषप्रभृतयश्चान्ये तत्सुताः पुण्यकर्मणः॥ वृषो वंशकरस्तेषां तस्य पुत्रोभवन्मधुः ॥ १४ ॥ मधोः पुत्रशतं चासीद्वृष्णिस्तस्य तु वंशभाक् ॥ वृष्णेस्तु वृष्णयः सर्वे मधोर्वै माधवाः स्मृताः॥ यादवा यदुवंशेन निरुच्यन्ते तु हैहयाः॥१५॥तेषां पञ्च गणा ह्येते हैहयानां महात्मनाम् ॥१६॥ वीतिहोत्राश्च हर्याता भोजाश्चावन्तयस्तथा ॥ शूरसेनास्तु विख्यातास्तालजंघास्तथैवं च॥१७॥शूरश्च शूरसेनश्च वृषः कृष्णस्तथैव च ॥ जयध्वजः पंचमस्तु विख्याता हैहयोत्तमाः ॥१८॥ शूरश्च शूरवीरश्च शूरसेनस्य चानघाः ॥ शूरसेना इति ख्याता देशास्तेषां महात्मनाम् ॥१९ ॥ वीतिहोत्रसुतश्चापि विश्रुतोऽवर्तं इत्युत ॥ दुर्जयः कृष्णपुत्रस्तु बभूवामित्रकर्शनः ॥ २० ॥ क्रोष्टुश्च शृणु राजर्षे वंशमुत्तमपौरुषम् ॥ यस्यान्वये तु संभूतो विष्णुर्वृष्णिकुलोद्वहः ॥२१॥ क्रोष्टोरेकोऽभवत्पुत्रो वृजिनीवान्महायशाः ॥ तस्य पुत्रोभवत्स्वाती कुशंकुस्तत्सुतोभवत् ॥ २२ ॥ अथ प्रसूतिमिच्छन्वै कुशंकुः सुमहाबलः ॥ महाक्रतुभिरीजेसौ विविधैराप्तदक्षिणैः ॥ २३ ॥ जज्ञे चित्ररथस्तस्य पुत्रः कर्मभिरान्वितः ॥ अथ चैत्ररथो वीरो यज्वा विपुलदक्षिणः ॥ २४ ॥ शशबिंदुस्तु वै राजा अन्वयाद्व्रतमुत्तमम् ॥ चक्रवर्ती महासत्त्वो महावीर्यो बहुप्रजाः ॥२५॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ विष्णुर्वासुदेवः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अनंतकं तत्संज्ञकमित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ वयःपरिणता वृद्धेत्यर्थः । राजपुत्रसुतायां ज्यामघाहृतराजकन्यायां ज्यामघः स्वयंवरे गत्वा भोज्यां कन्यामाहरत्स इयं केति शैब्यया पृष्टस्तद्भयात्स्नुषेत्युवाच ततः प्रहस्य शैब्या अहमपुत्रा स्नुषा कथं युज्यत इति

शशबिंदोस्तु पुत्राणां सहस्राणामभूच्छतम् ॥ शंसंति तस्य पुत्राणामनंतकमनुत्तमम् ॥२६॥ अनंतकात्सुतो यज्ञो यज्ञस्य तनयो धृतिः ॥ उशनास्तस्य तनयः संप्राप्य तु महीमिमाम् ॥२७॥ आजहाराश्वमेधानां शतमुत्तमधार्मिकः ॥ स्मृतश्चोशनसः पुत्रः सितेषुर्नाम पार्थिवः ॥२८॥ मरुतस्तस्य तनयो राजर्षिर्वंशवर्धनः ॥ वीरः कंबलबर्हिस्तु मरुत्तस्यात्मजः स्मृतः ॥ २९ ॥ पुत्रस्तु रुक्मकवचो विद्वान्कंबलबर्हिषः ॥ निहत्य रुक्मकवचो वीरान्कवचिनो रणे ॥ ३० ॥ धन्विनो निशितैर्बाणैरवाप श्रियमुत्तमाम् ॥ अश्वमेधे तु धर्मात्मा ऋत्विग्भ्यः पृथिवीं ददौ ॥ ३१ ॥ जज्ञे तु रुक्मकवचात्परावृत्परवीरहा ॥ जज्ञिरे पंच पुत्रास्तु महासत्त्वाः परावृतः ॥ ३२ ॥ रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघं हरिः ॥ परिघं च हरिं चैव विदेहेषु पिता न्यसत् ॥ ३३ ॥ रुक्मेषुरभवद्राजा पृथुरुक्मस्तदाश्रयात् ॥ तैस्तु प्रव्राजितो राजा ज्यामघोऽवसदाश्रमे ॥३४॥ प्रशांतः स वनस्थोपि ब्राह्मणैरेव बोधितः ॥ जगाम धनुरादाय देशमन्यं ध्वजी रथी ॥३५॥ नर्मदातीरमेकाकी केवल भार्यया युतः ॥ ऋक्षवंतं गिरिं गत्वा त्यक्तमन्यरुवास सः ॥ ३६ ॥ ज्यामघस्याभवद्भार्या शैब्या शीलवती सती ॥ सा चैव तपसो ग्रेण शैब्या वै संप्रसूयत ॥३७॥ सुतं विदर्भ सुभगा वयःपरिणता सती ॥ राजपुत्रसुतायां तु विद्वांसौ क्रथकैशिकौ ॥३८॥ पुत्रौ विदर्भराजस्य शूरौ रणविशारदौ ॥ रोमपादस्तृतीयश्च बभ्रुस्तस्यात्मजः स्मृतः ॥३९॥ सुधृतिस्तनयस्तस्य विद्वान्परमधार्मिकः ॥ कौशिकस्तनयस्तस्मात्तस्माच्चैद्यान्वयः स्मृतः ॥४०॥ क्रथो विदर्भस्य सुतः कुंतिस्तस्यात्मजोऽभवत् ॥ कुंतेर्वृतस्ततो जज्ञे रणधृष्टः प्रतापवान् ॥४१॥ रणधृष्टस्य च सुतो निधृतिः परवीरहा ॥ दशार्हो नैधृतो नाम्ना महारिगणसूदनः ॥४२॥ दशार्हस्य सुतो व्याप्तो जीमूत इति तत्सुतः ॥ जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः ॥ ४३ ॥ अथ भीमरथस्यासीत्पुत्रो नवरथः किल ॥ दानधर्मरतो नित्यं सत्यशीलपरायणः ॥ ४४ ॥

प्रोवाच ततो ज्यामघः प्राह । तदुक्तं भागवते—"जनयिष्यासि यं राज्ञि तस्येयमुपयुज्यते । अन्वमोदंत तद्विश्वेदेवाः पितर एव च ॥ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् । स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥" इति ॥ ३८ ॥ तस्य रोमपादस्येत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ प्रकृष्टं बहुकालं जीवति राज्यं सौख्यं विंदति लभते वै निश्चयेन स्वर्गं च एति गच्छतीत्यर्थः ॥ ५१ ॥ श्रीशंभो कृपया ते विष्णोरंशाद्धि यादवो वंशः । अभवद्धन्यो लोके तद्वच्छैवो ममान्वयो भूयात् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ नवषष्टितमेऽध्याये कृष्णस्य परमात्मनः ॥ यदुर्वंशावतरणं चरित्रं च निरूप्यते ॥ सूतः सात्त्वतमारभ्य यदुवंशं कथयति—सात्त्वत इति । भ्राजमानमिदं भजनविशेषणम् ॥१॥



तस्य चासीद्दृढरथः शकुनिस्तस्य चात्मजः ॥ तस्मात्करंभः संभूतो देवरातोऽभवत्ततः ॥ ४५ ॥ देवरातादभूद्राजा देवरातिर्महायशाः ॥ देवगर्भोपमो जज्ञे यो देवक्षत्रनामकः॥४६॥देवक्षत्रसुतः श्रीमान् मधुर्नाम महायशाः ॥ मधूनां वंशकृद्राजा मधोस्तु कुरुवंशकः ॥४७॥ कुरुवंशादनुस्तस्मात्पुरुत्वान्पुरुषोत्तमः ॥ अंशुर्जज्ञे च वैदर्भ्यां भद्रवत्यां पुरुत्वतः ॥ ४८ ॥ ऐक्ष्वाकीमवहच्चांशुः सत्त्वस्तस्मादजायत ॥ सत्त्वात्सर्वगुणोपेतः सात्त्वतः कुलवर्धनः ॥ ४९ ॥ ज्यामघस्य मया प्रोक्ता सृष्टिर्वै विस्तरेण वः ॥ यः पठेच्छृणुयाद्वापि निसृष्टिं ज्यामघस्य तु ॥ ५० ॥ प्रजीवत्येति वै स्वर्गं राज्यं सौख्यं च विंदति ॥ ५१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे वंशानुवर्णनंनामाष्टषष्टितमोऽध्यायः ॥६८॥ सूत उवाच ॥ सात्त्वतः सत्यसंपन्नः प्रजज्ञे चतुरः सुतान् ॥ भजनं भ्राजमानं च दिव्यं देवावृधं नृपम् ॥ १ ॥ अंधकं च महाभागं वृष्णिं च यदुनंदनम् ॥ तेषां निसर्गाश्चतुरः शृणुध्वं विस्तरेण वै ॥ २ ॥ सृंजय्यां भजनाच्चैव भ्राजमानाद्द्विजज्ञिरे ॥ अयुतायुः शतायुश्च बलवान् हर्षकृत्स्मृतः ॥ ३ ॥ तेषां देवावृधो राजा चचार परमं तपः ॥ पुत्रः सर्वगुणोपेतो मम भूयादिति स्मरन् ॥ ४ ॥ तस्य बभ्रुरिति ख्यातः पुण्यश्लोको नृपोत्तमः ॥ अनुवंशपुराणज्ञा गायंतीति परिश्रुतम् ॥ ५ ॥ गुणान्देवावृधस्याथ कीर्तयंतो महात्मनः ॥ यथैव शृणुमो दूरात् संपश्यामस्तथांतिकात् ॥ ६ ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ पुरुषाः पंच षष्टिस्तु षट् सहस्राणि चाष्ट च ॥ ७ ॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ यज्वा दानमतिर्वीरो ब्रह्मण्यस्तु दृढव्रतः ॥ ८ ॥ कीर्तिमांश्च महातेजाः सात्त्वतानां महारथः ॥ तस्यान्ववाये संभूता भोजा वै दैवतोपमाः ॥ ९ ॥



॥ २ ॥ भजनपुत्रान् कथयति—सृंजय्यां तद्देशीयराजकन्यायाम् ॥ ३ ॥ तेषां भजनान्यत्रयाणां मध्य इत्यर्थः ॥ ४ ॥ ५ ॥ देवावृधबभ्रुमहिमानं कथयति—गुणा इत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

वृष्णिभार्ये तत्संज्ञकसात्वतचतुर्थपुत्रजाये ॥ १० ॥ माद्री देवमीढुषं पुत्रं ततः अनंतरं अनमित्रं शिनिं चैव लेभे इत्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥ प्रसेनजित्तेन स्यमंतकमणिना युक्तो मृगयां यातः सिंहाद्वधं प्राप्त इत्यग्रिमेणान्वयः ॥ १४ ॥ कनिष्ठशिनिवंशं कथयति—अथ इत्यादिना ॥ १५ ॥ १६ ॥ १७ ॥ माद्र्याः सुतस्य देवमीढुषसंज्ञक

गांधारी चैव माद्री च वृष्णिभार्ये बभूवतुः ॥ गांधारी जनयामास सुमित्रं मित्रनंदनम् ॥ १० ॥ माद्री लेभे च तं पुत्रं ततः सा देवमीढुषम् ॥ अनमित्रं शिनिं चैव तावुभौ पुरुषोत्तमौ ॥ ११ ॥ ॥ अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभूवतुः ॥ प्रसेनश्च महाभागः सत्राजिच्च सुतावुभौ ॥ १२ ॥ तस्य सत्राजितः सूर्यः सखा प्राणसमोऽभवत् ॥ स्यमंतको नाम मणिर्दत्तस्तस्मै विवस्वता ॥ १३ ॥ पृथिव्यां सर्वरत्नानामसौ राजाऽभवन्मणिः ॥ कदाचिन्मृगयां यातः प्रसेनेन सहैव सः ॥ १४ ॥ वधं प्राप्तो सहायश्च सिंहादेव सुदारुणात् ॥ अथ पुत्रः शिनेर्जज्ञे कनिष्ठाद्वृष्णिनंदनात् ॥ १५ ॥ सत्यवाक् सत्यसंपन्नः सत्यकस्तस्य चात्मजः ॥ सात्यकिर्युयुधानस्तु शिनेर्नप्ता प्रतापवान् ॥ १६ ॥ असंगो युयुधानस्य कुणिस्तस्य सुतोऽभवत् ॥ कुणेर्युगंधरः पुत्रः शैनेया इति कीर्तिताः ॥ १७ ॥ माद्र्याः सुतस्य संजज्ञे सुतो वार्ष्णिर्युधाजितः ॥ श्वफल्क इति विख्यातस्त्रैलोक्यहितकारकः ॥ १८ ॥ श्वफल्कश्च महाराजो धर्मात्मा यत्र वर्तते ॥ नास्ति व्याधिभयं तत्र नावृष्टिभयमप्युत ॥ १९ ॥ श्वफल्कः काशिराजस्य सुतां भार्यामवाप सः ॥ गांदिनीं नाम काश्यो हि ददौ तस्मै स्वकन्यकाम् ॥ २० ॥ सा मातुरुदरस्था वै बहून्वर्षगणान्किल ॥ वसंती न च संजज्ञे गर्भस्था तां पिताऽब्रवीत् ॥ २१ ॥ जायस्व शीघ्रं भद्रं ते किमर्थं चाभितिष्ठसि ॥ प्रोवाच चैनं गर्भस्था सा कन्या गांदिनी तदा ॥ २२ ॥ वर्षत्रयं प्रतिदिनं गामेकां ब्राह्मणाय तु ॥ यदि दद्यास्ततः कुक्षेर्निर्गमिष्याम्यहं पितः ॥ २३ ॥ तथेत्युवाच तस्या वै पिता काममपूरयत् ॥ दाता शूरश्च यज्वा च श्रुतवानतिथिप्रियः ॥२४॥ तस्याः पुत्रः स्मृतोऽक्रूरः श्वफल्काद्भूरिदक्षिणः ॥ रत्ना कन्या च शैवस्य ह्यक्रूरस्तामवाप्तवान्॥२५॥अस्यामुत्पादयामास तनयांस्तान्निबोधत ॥ उपमन्युस्तथा मागुर्वृतस्तु जनमेजयः ॥ २६ ॥ गिरिरक्षस्तथोपेक्षः शत्रुघ्नो योरिमर्दनः ॥ धर्मभृद्दृष्टधर्मा च गोधनोथ वरस्तथा ॥ २७ ॥

प्रथमपुत्रस्य युधाजितः सुतः वार्ष्णिर्वृष्णिकुलोद्भवः श्वफल्क इति विख्यातः संजज्ञे इत्यन्वयः ॥१८॥१९॥२०॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

उग्रसेन्यां द्वितीयभार्यायाम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ तृतीयांधकपुत्रवंशं कथयति—अंधकादित्यादिना ॥३२॥३३॥ तुंबुरुसखो तुंबुरुसंज्ञकगंधर्वमित्रमित्यर्थः ॥३४॥ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ वसुदेवपत्नीषु देवकीरोहिण्योरुभयोः श्रैष्ठ्यं कथयति—देवकस्येति द्वाभ्याम् ॥ ४३ ॥ ४४ ॥ रोहिणी



आवाहप्रतिवाहौ च सुधारा च वरांगना ॥ अक्रूरस्योग्रसेन्यां तु पुत्रौ द्वौ कुलनंदनौ ॥ २८ ॥ देववानुपदेवश्च जज्ञाते देवसंमतौ ॥ सुमित्रस्य सुतो जज्ञे चित्रकश्च महायशाः॥ २९ ॥ चित्रकस्याभवन्पुत्रा विपृथुः पृथुरेव च ॥ अश्वग्रीवः सुबाहुश्च सुधासूकगवेक्षणौ ॥ ३० ॥ अरिष्टनेमिरश्वश्च धर्मो धर्मभृदेव च ॥ सुभूमिर्बहुभूमिश्च श्रविष्ठाश्रवणे स्त्रियौ ॥ ३१ ॥ अंधकात्काश्यदुहिता लेभे च चतुरः सुतान् ॥ कुकुरं भजमानं च शुचिं कंबलबर्हिषम् ॥ ३२ ॥ कुकुरस्य सुतो वृष्णिर्वृष्णेः शूरस्ततोऽभवत् ॥ कपोतरोमातिबलस्तस्य पुत्रो विलोमकः ॥ ३३ ॥ तस्यासीत्तुंबुरुसखो विद्वान्पुत्रो नलः किल ॥ ख्यायते स सुनाम्ना तु चंदनानकदुंदुभिः ॥ ३४ ॥ तस्मादप्यभिजित्पुत्र उत्पन्नोस्य पुनर्वसुः ॥ अश्वमेधं स पुत्रार्थमाजहार नरोत्तमः ॥ ३५ ॥ तस्य मध्येतिरात्रस्य सदोमध्यात्समुत्थितः ॥ ततस्तु विद्वान् सर्वज्ञो दाता यज्वा पुनर्वसुः ॥ ३६ ॥ तस्यापि पुत्रमिथुनं बभूवाभिजितः किल॥ आहुकश्चाहुकी चैव ख्यातौ कीर्तिमतां वरौ ॥३७॥ आहुकात्काश्यदुहितुर्द्वौ पुत्रौ संबभूवतुः ॥ देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ॥ ३८ ॥ देवकस्य सुता राज्ञो जज्ञिरे त्रिदशोपमाः ॥ देववानुपदेवश्च सुदेवो देवरक्षितः ॥ ३९ ॥ तेषां स्वसारः सप्तासन् वसुदेवाय ता ददौ ॥ वृषदेवोपदेवा च तथान्या देवरक्षिता ॥ ४० ॥ श्रीदेवा शांतिदेवा च सहदेवा तथापरा ॥ देवकी चापि तासां च वरिष्ठाऽभूत्सुमध्यमा ॥ ४१ ॥ नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्वजः ॥ तेषां पुत्राश्च पौत्राश्च शतशोथ सहस्रशः ॥ ४२ ॥ देवकस्य सुता पत्नी वसुदेवस्य धीमतः ॥ बभूव वंद्या पूज्या च देवैरपि पतिव्रता ॥ ४३ ॥ रोहिणी च महाभागा पत्नी चानकदुंदुभेः ॥ पौरवी बाह्लिकसुता संपूज्यासीत्सुरैरपि ॥ ४४ ॥ असूत रोहिणी रामं बलश्रेष्ठं हलायुधम् ॥ आश्रितं कंसभीत्या च स्वात्मानं शांततेजसम् ॥ ४५ ॥

कंसभीत्या कंसहननभयेन स्वात्मानं स्वशरीरम् आश्रितं देवकीगर्भान्निःसृत्य स्वगर्भगतं रामं असूत इत्यन्वयः ॥ ४५ ॥

अतिदक्षिणेऽत्यंतसुंदरे षड्गर्भे निहते कंसेन वधिते च परं रामे बलदेवे जाते रोहिण्यामुत्पन्ने सति अथानंतरं वसुदेवो देवक्यां हरिं श्रीकृष्णम् उदपादयत् उत्पादितवान् ॥४६॥ कृष्णरामयोः पूर्णावतारत्वं कथयति–स एवेति ॥ ४७ ॥ भृगुशापच्छलेन व्याजेनेत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥ तां प्रकृतिरूपां कन्याम् ॥ ५१ ॥ चतुर्भुजमित्यादिना यथावतीर्णं रूपं नंदगोपस्य यशोदायै तत्संज्ञकपत्न्यै दत्त्वा रक्षतामिति चाब्रवीदित्यग्रिमेणान्वयः । भागवते तु मानुषरूपमेव यशोदाशयने न्यस्य तया अविज्ञातः कन्यां जग्राहे

जाते रामेऽथ निहते षड्गर्भे चातिदाक्षिणे ॥ वसुदेवो हरिं धीमान्देवक्यामुदपादयत् ॥ ४६ ॥ स एव परमात्मासौ देवदेवो जनार्दनः ॥ हलायुधश्च भगवाननंतो रजतप्रभः ॥ ४७ ॥ भृगुशापच्छलेनैव मानयन्मानुषीं तनुम् ॥ बभूव तस्यां देवक्यां वासुदेवो जनार्दनः ॥४८॥ उमादेहसंमुद्भूता योगनिद्रा च कौशिकी ॥ नियोगाद्देवदेवस्य यशोदातनया ह्यभूत् ॥ ४९ ॥ सा चैव प्रकृतिः साक्षात्सर्वदेवनमस्कृता ॥ पुरुषो भगवान्कृष्णो धर्ममोक्षफलप्रदः ॥ ५० ॥ तां कन्यां जगृहे रक्षन्कंसात्स्वस्यात्मजं तदा ॥ चतुर्भुजं विशालाक्षं श्रीवत्सकृतलांछनम् ॥ ५१ ॥ शंखचक्रगदापद्मं धारयंतं जनार्दनम् ॥ यशोदायै प्रदत्त्वा तु वसुदेवश्च बुद्धिमान् ॥ ५२ ॥ दत्त्वैनं नंदगोपस्य रक्षतामिति चाब्रवीत् ॥ रक्षकं जगतां विष्णुं स्वेच्छया धृतविग्रहम् ॥ ५३ ॥ प्रसादाच्चैव देवस्य शिवस्यामिततेजसः ॥ रामेण सार्धं तं दत्त्वा वरदं परमेश्वरम् ॥ ५४ ॥ भूभारनिग्रहार्थं च ह्यवतीर्णं जगद्गुरुम् ॥ अतो वै सर्वकल्याणं यादवानां भविष्यति ॥ ५५ ॥ अयं स गर्भो देवक्या यो नः क्लेश्यान्हरिष्यति ॥ उग्रसेनात्मजायाथ कंसायानकदुंदुभिः ॥ ५६ ॥ निवेदयामास तदा जातां कन्यां सुलक्षणाम् ॥ अस्यास्त्वष्टमो गर्भो देवक्याः कंस सुव्रत ॥ ५७ ॥ मृत्युरेव न संदेह इति वाणी पुरातनी ॥ ततस्तां हंतुमारेभे कंसः सोल्लंघ्य चांबरम् ॥ ५८ ॥ उवाचाष्टभुजा देवी मेघगंभीरया गिरा ॥ रक्षस्व तत्स्वकं देहमायातो मृत्युरेव ते ॥ ५९ ॥ रक्षमाणस्य देहस्य मायावी कंसरूपिणः॥ किं कृतं दुष्कृतं मूर्ख जातः खलु तवांतकृत् ॥ ६० ॥ देवक्याः स भयात्कंसो जघानैवाष्टमं त्विति ॥ स्मरंति विहितो मृत्युर्देवक्यास्तनयोऽष्टमः ॥ ६१ ॥

त्युक्तमयं भेदः कल्पव्यवस्थया ज्ञेयः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ देवक्याः अयं कृष्णः सः अष्टमः गर्भः यो नः क्लेश्यानस्मच्छत्रून् हरिष्यति नाशयिष्यतीत्यर्थः ॥ ५६ ॥ ॥५७॥५८॥५९॥६०॥ स कंसः भयान्मृत्युभीत्या देवक्याः अष्टमं त्विति मत्वा जघानैव देवक्यास्तनयोऽष्टमः मृत्युर्विहित इति मुनय इति शेषः । स्मरंति कथयंतीत्यर्थः ॥६१॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥६८॥६९॥७०॥ सुरेशसंमितं शिवतुल्यम् ॥७१॥७२॥७३॥ ऋषिमुपमन्युम् ॥ ७४ ॥७५॥७६॥७७॥७८॥७९॥८०॥



यस्तत्प्रतिकृतौ यत्नो भोजस्यासीद्वृथा हरेः ॥ प्रभावान्मुनिशार्दूलास्तया चैव जडीकृतः ॥ ६२ ॥ कंसोपि निहतस्तेन कृष्णेनाक्लिष्ट कर्मणा ॥ निहता बहवश्चान्ये देवब्राह्मणघातिनः ॥ ६३ ॥ तस्य कृष्णस्य तनयाः प्रद्युम्नप्रमुखास्तथा ॥ बहवः परिसंख्याताः सर्वे युद्ध विशारदाः ॥ ६४ ॥ कृष्णपुत्राः समाख्याताः कृष्णेन सदृशाः सुताः ॥ पुत्रेष्वेतेषु सर्वेषु चारुदेष्णादयो हरेः ॥६५॥ विशिष्टा बलवंतश्च रौक्मिणेयारिसूदनाः ॥ षोडशस्त्रीसहस्राणि शतमेकं तथाधिकम् ॥ ६६ ॥ कृष्णस्य तासु सर्वासु प्रिया ज्येष्ठा च रुक्मिणी ॥ तया द्वादशवर्षाणि कृष्णेनाक्लिष्टकर्मणा ॥ ६७ ॥ उष्यता वायुभक्षेण पुत्रार्थं पूजितो हरः ॥ चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः ॥ ६८ ॥ चारुश्रवाश्चारुयशाः प्रद्युम्नः सांब एव च ॥ एते लब्धास्तु कृष्णेन शूलपाणिप्रसादतः ॥ ६९ ॥ तान् दृष्ट्वा तनयान्वीरान् रौक्मिणेयांश्च रुक्मिणीम् ॥ जांबवत्यब्रवीत्कृष्णं भार्या कृष्णस्य धीमतः ॥ ७० ॥ मम त्वं पुंडरीकाक्ष विशिष्टं गुणवत्तरम् ॥ सुरेशसंमितं पुत्रं प्रसन्नो दातुमर्हसि ॥ ७१ ॥ जांबवत्या वचः श्रुत्वा जगन्नाथस्ततो हरिः ॥ तपस्तप्तुं समारेभे तपोनिधिरनिंदितः ॥ ७२ ॥ सोऽथ नारायणः कृष्णः शंखचक्रगदाधरः ॥ व्याघ्रपादस्य च मुनेर्गत्वा चैवाश्रमोत्तमम् ॥७३॥ ऋषिं दृष्ट्वा त्वंगिरसं प्रणिपत्य जनार्दनः ॥ दिव्यं पाशुपतं योगं लब्धवांस्तस्य चाज्ञया ॥ ७४ ॥ प्रलुप्तश्मश्रुकेशश्च घृताक्तो मुंजमेखली ॥ दीक्षितो भगवान्कृष्णस्तताप च परंतपः ॥७५ ॥ ऊर्ध्व बाहुर्निरालंबः पादांगुष्ठाग्रधिष्ठितः ॥ फलाम्ब्वनिलभोजी च ऋतुत्रयमधोक्षजः ॥७६॥ तपसा तस्य संतुष्टो ददौ रुद्रो बहून् वरान्॥ सांबं जांबवतीपुत्रं कृष्णाय च महात्मने ॥७७॥ तथा जांबवती चैव सांबं भार्या हरेः सुतम् ॥ प्रहर्षमतुलं लेभे लब्ध्वादित्यं यथादितिः॥७८॥ बाणस्य च तदा तेन च्छेदितं मुनिपुंगवाः॥ भुजानां चैव साहस्रं शापाद्रुद्रस्य धीमतः ॥ ७९ ॥ अथ दैत्यवधं चक्रे हलायुधसहायवान् ॥ तथा दुष्टक्षितीशानां लीलयैव रणाजिरे ॥ ८० ॥ स हत्वा देवसंभूतं नरकं दैत्यपुंगवम् ॥ ब्राह्मणस्योर्ध्वचक्रस्य वरदानान्महात्मनः ॥८१ ॥

देवाद्यज्ञवराहात्संभूतमुत्पन्नम् ऊर्ध्वचक्रस्य ऊर्ध्वे गगने चक्राणि यस्य स ऊर्ध्वचक्रो वायुस्तस्य ब्राह्मणस्य ब्रह्मपुत्रनारदस्य वरदानात्कन्यानां शताधिकानि षोडशसहस्राणि

जग्राहेत्यग्रिमेणान्वयः । तदुक्तं हरिवंशे– " सत्यं बत पुरा वायुरिहास्मान् वाक्यमब्रवीत् । सर्वभूतमतज्ञश्च देवर्षिरपि नारदः ॥ विष्णुर्नारायणो देवः शंखचक्रगदासिभृत् । स भौमं नरकं हत्वा भर्ता च भविता शुचा ॥ " इति ॥ ८१ ॥ ८२ ॥ ८३ ॥८४॥ विश्वामित्रादीनां शापं यदुकुमारान्प्रति– " जनयिष्यति वो मंदा मुसलं कुलनाशनम् " इति भागवतोक्तम् । तथा दुर्वाससो वचः पादतले वध्यत्वं रूपमरक्षदित्यन्वयः ॥ ८५ ॥ जरकास्त्रच्छलेन तत्संज्ञकव्याधप्रयुक्तमुसललोहप्रहारव्याजेनेत्यर्थः ॥ ८६ ॥ अष्टा

स्वोपभोग्यानि कन्यानां षोडशातुलविक्रमः ॥ शताधिकानि जग्राह सहस्राणि महाबलः ॥ ८२ ॥ शापव्याजेन विप्राणामुपसंहृतवान् कुलम् ॥ संहृत्य तत्कुलं चैव प्रभासेऽतिष्ठदच्युतः ॥ ८३ ॥ तदा तस्यैव तु गतं वर्षाणामधिकं शतम् ॥ कृष्णस्य द्वारकायां वै जराछे शापहारिणः ॥ ८४ ॥ विश्वामित्रस्य कण्वस्य नारदस्य च धीमतः ॥ शापं पिंडारकेऽरक्षद्वचो दुर्वाससस्तदा ॥ ८५ ॥ त्यक्त्वा च मानुषं रूपं जरकास्त्रच्छलेन तु ॥ अनुगृह्य च कृष्णोपि लुब्धकं प्रययौ दिवम् ॥ ८६ ॥ अष्टावक्रस्य शापेन भार्याः कृष्णस्य धीमतः ॥ चौरैश्चापहृताः सर्वास्तस्य मायाबलेन च ॥ ८७ ॥ बलभद्रोपि संत्यज्य नागो भूत्वा जगाम च ॥ महिष्यस्तस्य कृष्णस्य रुक्मिणीप्रमुखाः शुभाः ॥ ८८ ॥ सहाग्निं विविशुः सर्वाः कृष्णेनाक्लिष्टकर्मणा ॥ रेवती च तथा देवी बलभद्रेण धीमता ॥ ८९ ॥ प्रविष्टा पावकं विप्राः सा च भर्तृपथं गता ॥ प्रेतकार्यं हरेः कृत्वा पार्थः परमवीर्यवान् ॥ ९० ॥ रामस्य च तथान्येषां वृष्णीनामपि सुव्रतः ॥ कंदमूलफलैस्तस्य बलिकार्यं चकार सः ॥ ९१ ॥ द्रव्याभावात्स्वयं पार्थो भ्रातृभिश्च दिवं गतः ॥ एवं संक्षेपतः प्रोक्तः कृष्णस्याक्लिष्टकर्मणः ॥९२॥ प्रभावो विलयश्चैव स्वेच्छयैव महात्मनः ॥ इत्येतत्सोमवंशानां नृपाणां चरितं द्विजाः॥ ९३ ॥

वक्रस्य तत्संज्ञकमुनेः शापेन पूर्वजन्मनि शापहेतुना । तदुक्तं विष्णुपुराणे– " यस्माद्विरूपरूपं मां मत्वा हासावमानना । भवतीभिः कृता तस्मादेष शापं ददाम्यहम् ॥ मत्प्रसादेन भर्तारं लब्ध्वा तु पुरुषोत्तमम् ॥ मच्छापोपहताः सर्वा दस्युहस्तं गमिष्यथ ॥ " इति ॥ ८७ ॥ रुक्मिणीप्रमुखाः मुख्याष्टनायिका इत्यर्थः ॥८८॥ ८९ ॥ पार्थोऽर्जुनः ॥९०॥ ॥ ९१ ॥ द्रव्याभावात्सामग्र्यभावादित्यर्थः ॥ ९२ ॥ सोमवंशचरितफलं कथयति–इत्येतदिति सार्धेन ॥ ९३ ॥

॥९४॥ यः पूर्णरूपोपि हि वासुदेवो मुक्तेश्च मुक्तेरधिपस्त्विवतीशः ॥ प्रबोधयन्मर्त्यतनुं प्रविष्टो रुद्राश्रितो रक्षतु सर्वदास्मान् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकोनसप्ततितमोध्यायः ॥ ६९ ॥ लैंगे सप्ततिकेध्याये आदिसर्गस्तु विस्तरात् । शिवादेव हि सर्वेषां याथातथ्येन कीर्त्यते ॥ ऋषयः शौनकादयः सर्गं विस्तरेणापृच्छन्-आदिसर्गं इति ॥ १ ॥ सूतः कथयति–महेश्वर इत्यादिना । परमात्मा महेश्वरः शिवः प्रकृतेः पुरुषस्य च परत्वे नियंतृत्वे संस्थितः । एतदेवोक्तं शिवपुराणे–"प्रकृतेश्च परं ब्रह्म यत्तच्छिवमुदाहृतम्" इति ॥२॥ तस्मादीश्वराच्छिवात्परं कारणं जगदुपादानकारणम् । अव्यक्तमभवत् यदव्यक्तं प्रधानं प्रकृतिश्चेति तत्त्वचिंतकाः सांख्या आहुः ॥३॥ ब्रह्मस्वरूपं कथयति–गंधर्वेणेत्यादिना ॥४॥५॥ अग्रे सर्गादिकाले अविज्ञेयमव्यक्तं ब्रह्म ब्रह्मरूपमेव समवर्ततेत्यन्वयः । "सदेव सौम्येदमग्रआसीत्" इति श्रुतेः ॥६॥ तदा सर्गादि

यः पठेच्छृणुयाद्वापि ब्राह्मणान् श्रावयेदपि ॥ स याति वैष्णवं लोकं नात्र कार्या विचारणा ॥ ९४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सोमवंशानुकीर्तनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ऋषय ऊचुः ॥ आदिसर्गस्त्वया सूत सूचितो न प्रकाशितः ॥ सांप्रतं विस्तरेणैव वक्तुमर्हसि सुव्रत ॥ १ ॥ सूत उवाच ॥ महेश्वरो महादेवः प्रकृतेः पुरुषस्य च ॥ परत्वे संस्थितो देवः परमात्मा मुनीश्वराः ॥ २ ॥ अव्यक्तं चेश्वरात्तस्मादभवत्कारणं परम् ॥ प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिंतकाः ॥ ३ ॥ गंधवर्णरसैर्हीनं शब्दस्पर्शविवर्जितम् ॥ अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ॥ ४ ॥ जगद्योनिं महाभूतं परं ब्रह्म सनातनम् ॥ विग्रहः सर्वभूतानामीश्वराज्ञाप्रचोदितम् ॥ ५ ॥ अनाद्यंतमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम् ॥ अप्रकाशमविज्ञेयं ब्रह्माग्रे समवर्तत ॥ ६ ॥ अस्यात्मना सर्वमिदं व्याप्तं त्वासीच्छिवेच्छया ॥ गुणसाम्ये तदा तस्मिन्नविभागे तमोमये ॥ ७ ॥ सर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै ॥ गुणभावाद्व्यज्यमानो महान्प्रादुर्बभूवह ॥ ८ ॥ सूक्ष्मेण महता चाथ अव्यक्तेन समावृतम् ॥ सत्त्वोद्रिक्तो महानग्रे सत्तामात्रप्रकाशकः ॥ ९ ॥

काले तमोमये तमःप्रचुरे अविभागे सति शिवेच्छया अस्याव्यक्तस्यात्मना स्वरूपेण सर्वमुत्पद्यमानं जगद्व्याप्तमासीदित्यन्वयः । तथा च श्रुतिः " तम आसीत्तमसा गूढमग्रे " इति । एवं च केवलतमोगुणस्य सर्वश्रेष्ठत्वं सत्त्वरजःसंपृक्तस्यैव निंद्यता ज्ञेया ॥ ७ ॥ सर्गकाले क्षेत्रज्ञेन पुरुषेणाधिष्ठितस्य प्रधानस्य तत्सकाशादित्यर्थः । गुणभावाद्गुणसत्तया महान्महत्तत्त्वं प्रादुर्बभूवेत्यन्वयः ॥ ८ ॥ सूक्ष्मेण महता अव्यक्तेन च समावृतम् । अग्रे जगदासीदिति शेषः । अथानंतरं सत्तामात्रस्य यावत्सत्तायाः प्रकाशकः सत्त्वोद्रिक्तः सत्त्वगुणप्रधानः महान्समवर्तत इति शेषः ॥ ९ ॥

महांस्तु महत्तत्त्वमेव एकं समष्टिरूपं मनः परं सर्वोत्कृष्टं कारणं स्मृतं तत्तस्मात्समष्टिसकाशात् लिंगमात्रं व्यष्टयंतःकरणं जातं क्षेत्रज्ञैः जीवैरधिष्ठितं समुत्पन्नमित्यन्वयः ॥ १० ॥ महान् सिसृक्षया चोद्यमान ईश्वरेण प्रेर्यमाणः । सृष्टिं लोकानां सृष्टजीवानां तत्त्वार्थहेतवो वेदाः धर्मादीनि च धर्मार्थकाममोक्षसंज्ञानि रूपाणि प्रशस्यानि विकुरुते विस्तारयती त्यर्थः ॥ ११ ॥ स महेश्वर एव मनआदित्रयोदशसंज्ञकः स्मृत इत्यन्वयः ॥ १२ ॥ क्रमशः मनआदिसंज्ञाप्रयोजनानि दर्शयति-मनुत इत्यादिना । सर्वभूतानां निखिलजीवानां चेष्टाफलं कर्मफलं यस्मान्मनुते अवबुद्ध्यते तु पुनः येन मनसा सौक्ष्म्यादतिसूक्ष्मत्वेन तेन कर्मफलेन तदुत्पद्यमानं जगद्विभक्तं ततः तस्मात्कारणान्मनस्तत्संज्ञकः उच्यत इत्यन्वयः ॥ १३ ॥ तत्त्वानामहंकारादीनामग्रजः प्रथमोत्पन्नः परिमाणतः प्रमाणेन विशेषेभ्यः सत्त्वादिभ्यः गुणेभ्यः शब्दादिभ्यश्च महान्पूज्य इति हेतोः महान्स्मृत

मनो महांस्तु विज्ञेयमेकं तत्कारणं स्मृतम् ॥ समुत्पन्नं लिंगमात्रं क्षेत्रज्ञाधिष्ठितं हि तत् ॥ १० ॥ धर्मादीनि च रूपाणि लोकतत्त्वार्थहेतवः ॥ महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया ॥ ११ ॥ मनो महान्मतिर्ब्रह्म पूर्बुद्धिः ख्यातिरीश्वरः ॥ प्रज्ञा चितिः स्मृतिः संविद्वि श्वेशश्चेति स स्मृतः ॥ १२ ॥ मनुते सर्वभूतानां यस्माच्चेष्टा फलं ततः ॥ सौक्ष्म्यात्तेन विभक्तं तु येन तन्मन उच्यते ॥ १३ ॥ तत्त्वाना मग्रजो यस्मान्महांश्च परिमाणतः ॥ विशेषेभ्यो गुणेभ्योपि महानिति ततः स्मृतः ॥ १४ ॥ बिभर्ति मानं मनुते विभागं मन्यतेपि च ॥ पुरुषो भोगसंबंधात्तेन चासौ मतिः स्मृतः ॥ १५ ॥ बृहत्त्वाद्बृंहणत्वाच्च भावानां सकलाश्रयात् ॥ यस्माद्धारयते भावान्ब्रह्म तेन निरुच्यते ॥ १६ ॥ यः पूरयति यस्माच्च कृत्स्नान्देवाननुग्रहैः ॥ नयते तत्त्वभावं च तेन पूरिति चोच्यते ॥ १७ ॥ बुध्यते पुरुषश्चात्र सर्वान् भावान् हितं तथा ॥ यस्माद्बोधयते चैव बुद्धिस्तेन निरुच्यते ॥ १८ ॥

इत्यन्वयः ॥ १४ ॥ पुरुष ईश्वरः भोगसंबंधाद्बिभर्ति सकलभावद्यकमपि पोषयति मानं सकलप्रमाणं मनुते विभागं सकलभेदं मन्यते तेन हेतुना असौ महेश्वरः मतिस्तत्संज्ञः स्मृतः ॥ १५ ॥ बृहत्वादतिमहत्त्वाद्भावानामुत्पद्यमानानां बृंहकत्वात्पोषणात्सकलाश्रयाद्यस्माद्भावान्धारयतेऽनेन हेतुना ब्रह्म निरुच्यत इत्यन्वयः ॥१६॥ ईश्वरः यस्मात्कृत्स्नान्देवाननुग्रहैः पूरयति तत्त्वभावं सकलतत्त्वसत्तां नयते प्रापयति तेन हेतुना पूरिति चोच्यत इत्यन्वयः ॥ १७ ॥ पुरुष ईश्वरः अत्र ब्रह्मांडाख्यपुरि सर्वान् भावान् हितं धर्मं च यस्माद्बुध्यते तथा बोधयते जीवान्बोधयति तेनैव बुद्धिः निरुच्यत इत्यन्वयः ॥ १८ ॥

ज्ञाननिष्ठत्वादात्मज्ञानावधित्वात् भोगस्य वैषयिकसुखस्य ख्यातिः प्रशंसा प्रत्युपभोगः भोगप्राप्तिश्च यस्मात्संवर्तते ततः ख्यातिरीति स्मृत इत्यन्वयः ॥ १९ ॥ तेषां गगनादीनां गुणाः शब्दादयस्तैर्वा ज्ञानादिभिः भगशब्दवाच्यैः षड्गुणैः अनेकशः ख्यायते साद्भिः प्रशस्यते तस्मान्महतः पूज्यस्येश्वरस्य ख्यातिरीति संज्ञाऽभिधीयत इत्यन्वयः ॥ २० ॥ सर्वं विश्वं साक्षात्प्रत्यक्षतः विजानाति इन्द्रियानधीनं पश्यति महात्मा सर्वव्यापकरूपः तेन ईश्वरः यस्मात् ज्ञानानुगो ज्ञानरूपः तेन प्रज्ञा च सः परमेश्वरः उच्यत इत्यन्वयः ॥ २१ ॥ असौ परमेश्वरः भोगार्थं जीवानामनेकविधभोगप्राप्त्यर्थं ज्ञानादीनि रूपाणि ज्ञानैश्वर्ययशःप्रभृतीनि रूपाणि बह्वनेकविधकर्मफलानि च यस्माच्चिनोति विस्तारयति तेन चितिः उच्यत इत्यन्वयः ॥ २२ ॥ असौ परमेश्वरः वर्तमानानि व्यतीतान्यनागतान्यापि सर्वकार्याणि स्मरते तेन स्मृतिरुच्यत इत्यन्वयः ॥ २३ ॥ संविदर्थं

ख्यातिः प्रत्युपभोगश्च यस्मात्संवर्तते ततः ॥ भोगस्य ज्ञाननिष्ठत्वात्तेन ख्यातिरीति स्मृतः ॥ १९ ॥ ख्यायते तद्गुणैर्वापि ज्ञानादिभिरनेकशः ॥ तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते ॥२०॥ साक्षात्सर्वं विजानाति महात्मा तेन चेश्वरः ॥ यस्माज्ज्ञानानुगश्चैव प्रज्ञा तेन स उच्यते ॥ २१ ॥ ज्ञानादीनि च रूपाणि बहुकर्मफलानि च ॥ चिनोति यस्माद्भोगार्थं तेनासौ चितिरुच्यते ॥ २२ ॥ वर्तमानव्यतीतानि तथैवानागतान्यपि ॥ स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते ॥ २३ ॥ कृत्स्नं च विंदते ज्ञानं यस्मान्माहात्म्यमुत्तमम् ॥ तस्माद्विंदेर्विदेश्चैव संविदित्यभिधीयते ॥ २४ ॥ विद्यतेपि च सर्वत्र तस्मिन्सर्वं च विंदति ॥ तस्मात्संविदिति प्रोक्तो महद्भिर्मुनिसत्तमाः ॥ २५ ॥ जानातेर्ज्ञानमित्याहुर्भगवान् ज्ञानसंनिधिः ॥ बंधनादिपरीभावादीश्वरः प्रोच्यते बुधैः ॥ २६ ॥ पर्यायवाचकैः शब्दैस्तत्त्वमाद्यमनुत्तमम् ॥ व्याख्यातं तत्त्वभावज्ञैर्देवसद्भावचिंतकैः ॥ २७ ॥ महान्सृष्टिं विकुरुते चोद्यमानः सिसृक्षया ॥ संकल्पोध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम् ॥ २८ ॥

बोधयति—कृत्स्नमिति । कृत्स्नमशेषं ज्ञानम् उत्तमं सर्वश्रेष्ठमाहात्म्यं च तत्स्माद्विंदते तस्माद्विन्देः 'विद्लृ लाभे' इत्यस्य विदेः 'विद ज्ञानम्' इति धातोश्च संविदिति रूपमभिधीयत इत्यन्वयः ॥ २४ ॥ सर्वत्र सर्वदेशकालेषु विद्यते ज्ञायते तस्मिन्परमशिवे भक्त इति शेषः । सर्वं विंदति लभते तस्मान्महाद्भिः संविदिति प्रोक्त इत्यन्वयः ॥ २५ ॥ जानातेर्ज्ञाधातोः ज्ञानमिति ज्ञानमित्याकारकं रूपमाहुः । भगवान् षड्गुणैश्वर्यविशिष्टः शिवः ज्ञानसंनिधिर्ज्ञानसमुद्रः बंधनादिपरीभावात्तिरस्क्रियया 'उपसर्गस्य घञि' इति दीर्घः । बुधैः प्राज्ञैरीश्वरः तत्संज्ञः प्रोच्यत इत्यन्वयः ॥ २६ ॥ उक्तसंज्ञाहेतून्प्रदर्श्य उक्तसर्वसंज्ञाभिः शिव एव प्रतिपाद्यते इति कथयति—पर्यायेति । पर्यायवाचकैरेकार्थप्रतिपादकैः शब्दैः आद्यं सकलादिभूतम् अनुत्तमं तत्त्वं शिवाख्यं देवसद्भावचिंतकैः सकलं शिवक्रीडनामिति विचारकैः अत एव तत्त्वभावज्ञैः तत्त्वविद्भिः व्याख्यातं वर्णितमित्यर्थः ॥ २७ ॥ २८ ॥

ततो महत इत्यर्थः । स उत्पद्यमानः सर्गः भूतादिरहंकारश्च महता बाह्यतो वृत इत्यन्वयः॥ २९ ॥ अहंकाराद्भूततन्मात्राणां शब्दादिगुणानां भूतादिः गगनादिभूतहेतुः तामसः अजायत इत्यन्वयः ॥ ३० ॥ क्रमशः अहंकारसर्गं कथयति—भूतादिरित्यादिना । आकाशं सुषिरं पुष्करसंज्ञं शब्दः लक्षणं यस्य तच्छब्दलक्षणमित्यर्थः ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ संघातः पृथिवीसंज्ञः ॥ ३६ ॥ ते शब्दादयः अविशेषवाचकत्वात्तन्मात्रशब्दप्रतिपादकत्वात्तु पुनः प्रशांतघोरमूढत्वात्सात्विकराजसतामसत्वादविशेषाः स्मृता इति शेषः ॥ ३७ ॥ वैकारिकाद्राजसात्तु पुनः सत्त्वोद्रिक्तात्सात्विकादहंकाराद्वैकारिकः सः सात्विकस्तु सर्गः युगपत्संप्रवर्तत इत्यग्रिमेणान्वयः ॥ ३८ ॥ सात्त्विकराजसाहं

त्रिगुणाद्रजसोद्रिक्तादहंकारस्ततोऽभवत् ॥ महता च वृतः सर्गो भूतादिर्बाह्यतस्तु सः ॥ २९ ॥ तस्मादेव तमोद्रिक्तादहंकारादजायत ॥ भूततन्मात्रसर्गस्तु भूतादिस्तामसस्तु सः ॥ ३०॥ भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह ॥ आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥ ३१ ॥ आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ॥ वायुश्चापि विकुर्वाणो रूपमात्रं ससर्ज ह ॥ ३२ ॥ ज्योतिरुत्पद्यते वायोस्तद्रूप गुणमुच्यते ॥ स्पर्शमात्रस्तु वै वायू रूपमात्रं समावृणोत् ॥ ३३ ॥ ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ॥ संभवंति ततो ह्यापस्ता वै सर्वरसात्मिकाः ॥ ३४ ॥ रसमात्रास्तु ता ह्यापो रूपमात्रोग्निरावृणोत् ॥ आपश्चापि विकुर्वंत्यो गंधमात्रं ससर्जिरे ॥ ३५ ॥ संघातो जायते तस्मात्तस्य गंधो गुणो मतः ॥ तस्मिंस्तस्मिंश्च तन्मात्रं तेन तन्मात्रता स्मृता ॥ ३६ ॥ अविशेपवाचकत्वादविशेपास्ततस्तु ते ॥ प्रशांतघोरमूढत्वादविशेपास्ततः पुनः ॥ ३७ ॥ भूततन्मात्रसर्गोयं विज्ञेयस्तु परस्परम् ॥ वैकारिकादहंकारात्सत्त्वोद्रिक्तात्तु सात्विकात् ॥ ३८ ॥ वैकारिकः ससर्गस्तु युगपत्संप्रवर्तते ॥ बुद्धींद्रियाणि पंचैव पंच कर्मेन्द्रियाणि च ॥ ३९ ॥ साधकानीन्द्रियाणि स्युर्देवा वैकारिका दश ॥ एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् ॥ ४० ॥ श्रोत्रं त्वक् चक्षुपी जिह्वा नासिका चैव पंचमी ॥ शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि तानि वै ॥ ४१ ॥ पादौ पायुरुपस्थश्च हस्तौ वाग्दशमी भवेत् ॥ गतिर्विसर्गो ह्यानंदः शिल्पं वाक्यं च कर्म तत् ॥ ४२ ॥

कारसर्गं कथयति—बुद्धींद्रियाणीति ॥ ३९ ॥ इंद्रियाणि साधकानि करणानि स्युः तेषामितिशेषः। देवाः नियंतारः वैकारिकाः राजसाः दश स्युरित्यन्वयः । तत्र दशेन्द्रियमध्ये स्वगुणेन मनः उभयात्मकं ज्ञानकर्मेन्द्रियात्मकमित्यर्थः॥ ४० ॥ ज्ञानेन्द्रियाणि क्रमशः कथयति—श्रोत्रमिति ॥ ४१ ॥ कर्मेन्द्रियाणि तत्कर्म च कथयति—पादाविति ॥ ४२ ॥

भूतमात्राणां क्रमशः संक्रमं कथयति–आकाशमित्यादिना॥४३–४६॥तस्मादधिकगुणत्वात् ते शब्दादयः शांतघोराः मूढाः त्रिगुणाश्चेत्यर्थः । तेन हेतुना विशेषा विभिन्नकार्यकराः स्मृता इत्यन्वयः ॥४७॥४८॥ विशेषाः शब्दादयः नियतत्वात्तत्तदिंद्रियमात्रग्राह्यत्वादिंद्रियग्राह्या इत्यन्वयः। पूर्वस्य सर्गस्य गगनादेर्गुणमुत्तरोत्तराः वाय्वादयः प्राप्नुवंती

आकाशं शब्दमात्रं च स्पर्शमात्रं समाविशत् ॥ द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥ ४३ ॥ रूपं तथैव विशतः शब्दस्पर्शगुणावुभौ ॥ त्रिगुणस्तु ततस्त्वग्निः सशब्दस्पर्शरूपवान् ॥ ४४ ॥ सशब्दस्पर्शरूपं च रसमात्रं समाविशत् ॥ तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥ ४५ ॥ शब्दस्पर्शं च रूपं च रसो वै गंधमाविशत् ॥ संगता गंधमात्रेण आविशंतो महीमिमाम् ॥ ४६ ॥ तस्मात्पंचगुणा भूमिः स्थूला भूतेषु शस्यते ॥ शांता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ ४७ ॥ परस्परानुप्रवेशाद्धारयंति परस्परम् ॥ भूमेरन्तस्त्विदं सर्वं लोकालोकाचलावृतम् ॥ ४८ ॥ विशेषाश्चेन्द्रियग्राह्या नियतत्वाच्च ते स्मृताः ॥ गुणं पूर्वस्य सर्गस्य प्राप्नुवंत्युत्तरोत्तराः ॥ ४९ ॥ तेषां यावच्च यद्यच्च यच्च तावद्गुणं स्मृतम् ॥ उपलभ्याप्सु वै गंधं केचिद्ब्रूयुरपां गुणम् ॥ ५० ॥ पृथिव्यामेव तं विद्यादपां वायोश्च संश्रयात् ॥ एते सप्त महात्मानो ह्यन्योन्यस्य समाश्रयात् ॥ ५१ ॥ पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ॥ महादयो विशेषांता ह्यण्डमुत्पादयंति ते ॥ ५२ ॥ एककालसमुत्पन्नं जलबुद्बुदवच्च तत् ॥ विशेषेभ्योऽण्डमभवन्महत्तदुदकेशयम् ॥ ५३ ॥ अद्भिर्दशगुणाभिस्तु बाह्यतोण्डं समावृतम् ॥ आपो दशगुणेनैतास्तेजसा बाह्यतो वृताः ॥ ५४ ॥ तेजो दशगुणेनैव वायुना बाह्यतो वृतम् ॥ वायुर्दशगुणेनैव बाह्यतो नभसा वृतः ॥५५॥ आकाशेनावृतो वायुः खं तु भूतादिनावृतम् ॥ भूतादिर्महता चापि अव्यक्तेनावृतो महान् ॥ ५६ ॥ शर्वश्चांडकपालस्थो भवश्चांभसि सुव्रताः॥ रुद्रोग्निमध्ये भगवानुग्रो वायौ पुनः स्मृतः ॥ ५७ ॥ भीमश्चावनिमध्यस्थो ह्यहंकारे महेश्वरः ॥ बुद्धौ च भगवानीशः सर्वतः परमेश्वरः ॥ ५८ ॥

त्यन्वयः॥४९॥केचिदेकदर्शिनः॥५०॥ तं गंधं पृथिव्यामेव विद्यादपां वायोश्च संश्रयाद्गंधविशिष्टपार्थिवपरमाणुयोगाद्विद्यादित्यनुषंगः एते सप्त महत्तत्त्वाहंकारशब्दादयः ॥५१॥ महादयो महत्तत्त्वादय इत्यर्थः ॥५२॥५३॥ अंडावरणानि कथयति–अद्भिरित्यादिना ॥५४–५६॥ अंडतदावरणाभिमानिशिवाष्टमूर्तीः कथयति–शर्व इत्यादिना ॥५७॥५८॥

प्राकृतैः प्रकृतिजन्यैः सप्तभिः पूर्वोक्तैरित्यर्थः । अष्टौ प्रकृतयः प्रकृतिभेदाः॥५९॥६०॥६१॥ स एवेशः परमेश्वर इत्यर्थः । तस्मिन्पुरुषे कार्यस्योत्पद्यमानसर्गस्य करणमुत्पादनं

एतैरावरणैरंडं सप्तभिः प्राकृतैर्वृतम् ॥ एता आवृत्य चान्योन्यमष्टौ प्रकृतयः स्थिताः ॥ ५९ ॥ प्रसर्गकाले स्थित्वा तु ग्रसंत्येताः परस्परम् ॥ एवं परस्परोत्पन्ना धारयंति परस्परम् ॥ ६० ॥ आधाराधेयभावेन विकारास्ते विकारिषु ॥ महेश्वरः परोव्यक्तादंडमव्यक्तसंभवम् ॥ ६१ ॥ अंडाज्जज्ञे स एवेशः पुरुषोर्कसमप्रभः ॥ तस्मिन्कार्यस्य करणं संसिद्धं स्वेच्छयैव तु ॥ ६२ ॥ स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ तस्य वामाङ्गजो विष्णुः सर्वदेवनमस्कृतः ॥ ६३ ॥ लक्ष्म्या देव्या ह्यभूद्देव इच्छया परमेष्ठिनः ॥ दक्षिणांगभवो ब्रह्मा सरस्वत्या जगद्गुरुः ॥ ६४ ॥ तस्मिन्नंडे इमे लोका अंतर्विश्वमिदं जगत् ॥ चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ॥६५॥ लोकालोकद्वयं किंचिदंडे ह्यस्मिन्समर्पितम् ॥ यत्तु सृष्टौ प्रसंख्यातं मया कालान्तरं द्विजाः ॥ ६६ ॥ एतत्कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् ॥ रात्रिश्चैतावती ज्ञेया परमेशस्य कृत्स्नशः ॥ ६७ ॥ अहस्तस्य तु या सृष्टिः रात्रिश्च प्रलयः स्मृतः ॥ नाहस्तु विद्यते तस्य न रात्रिरिति धारयेत् ॥ ६८ ॥ उपचारस्तु क्रियते लोकानां हितकाम्यया ॥ इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ॥ ६९ ॥ तस्मात्सर्वाणि भूतानि बुद्धिश्च सह दैवतैः ॥ अहस्तिष्ठन्ति सर्वाणि परमेशस्य धर्मितः ॥ ७० ॥ अहरंते प्रलीयंते रात्र्यंते विश्वसंभवः ॥ स्वात्मन्यव स्थिते व्यक्ते विकारे प्रतिसंहृते ॥ ७१ ॥ साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ ॥ तमःसत्त्वरजोपेतौ समत्वेन व्यवस्थितौ ॥ ७२ ॥ अनुपृक्तावभूतांतावोतप्रोतौ परस्परम् ॥ गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ॥ ७३ ॥ तिले यथा भवेत्तैलं घृतं पयसि वा स्थितम् ॥ तथा तमसि सत्त्वे च रजस्यनुसृत जगत्॥७४॥उपास्य रजनीं कृत्स्नां परां माहेश्वरीं तथा ॥ अहर्मुखे प्रवृत्तश्च परः प्रकृतिसंभवः ॥७५॥ क्षोभयामास योगेन परेण परमेश्वरः॥ प्रधानं पुरुषं चैव प्रविश्य स महेश्वरः ॥ ७६ ॥ महेश्वरात्त्रयो देवा जज्ञिरे जगदीश्वरात् ॥ शाश्वताः परमा गुह्याः सर्वात्मानः शरीरिणः ॥ ७७ ॥ एत एव त्रयो देवा एत एव त्रयो गुणाः ॥ एत एव त्रयो लोका एत एव त्रयोग्नयः ॥७८॥ परस्पराश्रिता ह्येते परस्परमनुव्रताः ॥ परस्परेण वर्तंते धारयंति परस्परम् ॥ ७९ ॥

स्वेच्छयैव न त्वन्यसामग्र्या सिद्धमित्यन्वयः ॥६२॥६३॥६४॥६५॥६६॥६७॥६८॥६९॥७०॥७१॥७२॥७३॥७४॥७५॥७६॥७७॥ एते ब्रह्मविष्णुमहेश्वराः॥७८॥७९॥

अन्योन्यादुत्पन्नानि मिथुनानि दांपत्यानि येषां तेऽन्योन्यमिथुनाः ॥ ८० ॥ ८१ ॥ स महेश्वर इत्यर्थः ॥ ८२ ॥ ८३ ॥ प्रधानगुणवैषम्यात्प्राकृतगुणोद्रेकात् ॥ ८४ ॥

अन्योन्यमिथुना ह्येते अन्योन्यमुपजीविनः ॥ क्षणं वियोगो न ह्येषां न त्यजंति परस्परम् ॥ ८० ॥ ईश्वरस्तु परो देवो विष्णुश्च महतः परः ॥ ब्रह्मा च रजसा युक्तः सर्गादौ हि प्रवर्तते ॥ ८१ ॥ परः स पुरुषो ज्ञेयः प्रकृतिः सा परा स्मृता ॥ ८२ ॥ अधिष्ठिता सा हि महेश्वरेण प्रवर्तते चोद्यमने समंतात् ॥ अनुप्रवृत्तस्तु महांस्तदेनां चिरस्थिरत्वाद्विषयं श्रियः स्वयम् ॥ ८३ ॥ प्रधानगुणवैषम्यात्सर्गकालः प्रवर्तते ॥ ईश्वराधिष्ठितात्पूर्वं तस्मात्सदसदात्मकात् ॥ ८४ ॥ संसिद्धः कार्यकरणे रुद्रश्चाग्रे ह्यवर्तत ॥ तेजसाप्रतिमो धीमानव्यक्तः संप्रकाशकः ॥ ८५ ॥ स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ ब्रह्मा च भगवांस्तस्माच्चतुर्वक्त्रः प्रजापतिः ॥ ८६ ॥ संसिद्धः कार्यकरणे तथा वै समवर्तत ॥ एक एव महादेवस्त्रिधैवं स व्यवस्थितः ॥ ८७ ॥ अप्रतीपेन ज्ञानेन ऐश्वर्येण समन्वितः ॥ धर्मेण चाप्रतीपेन वैराग्येण च तेऽन्विताः ॥ ८८ ॥ अव्यक्ताज्जायते तेषां मनसा यद्यदीहितम् ॥ वशीकृतत्वात्त्रैगुण्यं सापेक्षत्वात्स्वभावतः ॥ ८९ ॥ चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चान्तिकः स्मृतः ॥ सहस्रमूर्धा पुरुषस्तिस्रोऽवस्थाः स्वयंभुवः ॥९० ॥ ब्रह्मत्वे सृजते लोकान्कालत्वे संक्षिपत्यपि ॥ पुरुषत्वे ह्युदासीनस्तिस्रोवस्थाः प्रजापतेः॥९१॥ ब्रह्मा कमलगर्भाभो रुद्रः कालाग्निसन्निभः॥ पुंरुपः पुंडरीकाक्षो रूपं तत्परमात्मनः॥९२॥ एकधा स द्विधा चैव त्रिधा च बहुधा पुनः ॥ महेश्वरः शरीराणि करोति विकरोति च ॥९३॥ नानाकृतिक्रियारूपनामवंति स्वलीलया ॥ महेश्वरः शरीराणि करोति विकरोति च ॥ ९४ ॥ त्रिधा यद्वर्तते लोके तस्मात्त्रिगुण उच्यते ॥ चतुर्धा प्रविभक्तत्वाच्चतुर्व्यूहः प्रकीर्तितः ॥ ९५ ॥ यदाप्नोति यदादत्ते यच्चात्ति विषयानयम् ॥ यच्चास्य सततं भावस्तस्मादात्मा निरुच्यते ॥ ९६ ॥ ऋषिः सर्वगतत्वाच्च शरीरी सोस्य यत्प्रभुः ॥ स्वामित्वमस्य यत्सर्वं विष्णुः सर्वप्रवेशनात् ॥ ९७ ॥ भगवान् भगवद्भावान्निर्मलत्वाच्छिवः स्मृतः ॥ परमः संप्रकृष्टत्वादवनादोमिति स्मृतः ॥ ९८ ॥ सर्वज्ञः सर्वविज्ञानात्सर्वः सर्वमयो यतः ॥ त्रिधा विभज्य चात्मानं त्रैलोक्यं संप्रवर्तते ॥ ९९ ॥

॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

त्रिभिः ब्रह्मरुद्रविष्ण्वाख्यतनुभिः ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥५ ॥ ६ ॥ विश्वात्मनः वृत्तस्य स्वयंभुवो ब्रह्मणोऽपि जात्यभिप्रायमेकवचनम् । यः कालः स वर्षशतैरपि परिसंख्यातुं गणयितुं न शक्य इत्यन्वयः ॥ ७ ॥ विवृत्तस्य वर्तमानस्य ब्रह्मणः कालसंख्या परार्धः स्मृतः तावत् तत्परिमाणोस्य कालः शेषः तस्यांते द्वितीयपरार्धांते प्रतिसृ–

सृजते ग्रसते चैव रक्षते च त्रिभिः स्वयम् ॥ आदित्वादादिदेवोसावजातत्वादजः स्मृतः ॥ १०० ॥ पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः ॥ देवेषु च महान्देवो महादेवस्ततः स्मृतः ॥ १ ॥ सर्वगत्वाच्च देवानामवश्यत्वाच्च ईश्वरः ॥ बृहत्त्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भूत उच्यते ॥ २ ॥ क्षेत्रज्ञः क्षेत्रविज्ञानादेकत्वात्केवलः स्मृतः ॥ यस्मात्पुर्यां स शेते च तस्मात्पूरुष उच्यते ॥ ३ ॥ अनादित्वाच्च पूर्वत्वात्स्वयंभूरिति संस्मृतः ॥ याज्यत्वादुच्यते यज्ञः कविर्विक्रांतदर्शनात् ॥४॥ क्रमणः क्रमणीयत्वात्पालकश्चापि पालनात् ॥ आदित्यसंज्ञः कपिलो ह्यग्रजोग्निरिति स्मृतः ॥५॥ हिरण्यमस्य गर्भोभूद्धिरण्यस्यापि गर्भजः॥ तस्माद्धिरण्यगर्भत्वं पुराणेऽस्मिन्निरुच्यते ॥ ६ ॥ स्वयंभुवोपि वृत्तस्य कालो विश्वात्मनस्तु यः ॥ न शक्यः परिसंख्यातुमपि वर्षशतैरपि ॥ ७ ॥ कालसंख्याविवृत्तस्य परार्धो ब्रह्मणः स्मृतः ॥ तावच्छेषोस्य कालोन्यस्तस्यांते प्रतिसृज्यते ॥ ८ ॥ कोटिकोटिसहस्राणि अहर्भूतानि यानि वै ॥ समतीतानि कल्पानां तावच्छेषाः परे तु ये ॥ यस्त्वयं वर्तते कल्पो वाराहस्तं निबोधत ॥ ९ ॥ प्रथमः सांप्रतस्तेषां कल्पोयं वर्तते द्विजाः॥ यस्मिन्स्वायंभुवाद्यास्तु मनवस्ते चतुर्दश ॥ ११० ॥ अतीता वर्तमानाश्च भविष्या ये च वै पुनः ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता ॥११॥ पूर्णं युगसहस्रं वै परिपाल्या महेश्वरैः ॥ प्रजाभिस्तपसा चैव तेषां शृणुत विस्तरम् ॥ १२ ॥ मन्वंतरेण चैकेन सर्वाण्येवांतराणि च ॥ कथितानि भविष्यंति कल्पः कल्पेन चैव हि ॥ १३ ॥ अतीतानि च कल्पानि सोदर्काणि सहान्वयैः ॥ अनागतेषु तद्वच्च तर्कः कार्यो विजानता ॥१४॥ आपो ह्यग्रे समभवन्नष्टे च पृथिवीतले ॥ शांततारैकनीरेस्मिन्न प्राज्ञायत किंचन ॥ १५ ॥ एकार्णवे तदा तस्मिन्नष्टे स्थावरजंगमे ॥ तदा भवति वै ब्रह्मा सहस्राक्षः सहस्रपात् ॥१६॥ सहस्रशीर्षा पुरुषो रुक्मवर्णस्त्वतींद्रियः॥ ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ॥१७॥ सत्त्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमुदैक्षत ॥ इमं चोदाहरंत्यत्र श्लोकं नारायणं प्रति ॥ १८ ॥

ज्यते जगत्संह्रियत इत्यर्थः ॥८॥९॥१०॥११॥१२॥१३॥१४॥ शांताः नष्टाः ताराः नक्षत्राणि यस्मिंस्तच्चैकनीरं च तादृशे ब्रह्मांडे इत्यर्थः ॥१५॥१६॥१७॥१८॥

आपो नाराः सूनवो नरसूनवश्चेति द्वयमपां नाम शुश्रुम इत्यन्वयः ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ आपः सामुद्राः समुद्रेषु नादेयाः नदीषु



आपो नाराश्च सूनव इत्यपां नाम शुश्रुमः ॥ आपूर्य ताभिरयनं कृतवानात्मनो यतः ॥ १९ ॥ अप्सु शेते यतस्तस्मात्ततो नारायणः स्मृतः ॥ चतुर्युगसहस्रस्य नैशं कालमुपास्यतः॥१२०॥ शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ॥ ब्रह्मा तु सलिले तस्मिन्वायुर्भूत्वा समाचरत् ॥ २१ ॥ निशायामिव खद्योतः प्रावृट्काले ततस्तु सः ॥ ततस्तु सलिले तस्मिन् विज्ञायांतर्गतां महीम् ॥ २२ ॥ अनुमानादसंमूढो भूमेरुद्धरणं पुनः ॥ अकरोत्स तनूमन्यां कल्पादिषु यथापुरा ॥ २३ ॥ ततो महात्मा भगवान्दिव्यरूपमचिंतयत् ॥ सलिलेनाप्लुतां भूमिं दृष्ट्वा स तु समंततः ॥ २४ ॥ किंनु रूपमहं कृत्वा उद्धरेयं महीमिमाम् ॥ जलक्रीडानुसदृशं वाराहं रूपमाविशत् ॥ २५॥ अधृष्यं सर्वभूतानां वाङ्मयं ब्रह्मसंज्ञितम् ॥ पृथिव्युद्धरणार्थाय प्रविवेश रसातलम् ॥ २६ ॥ अद्भिः संछादितां भूमिं स तामाशु प्रजापतिः ॥ उपगम्योज्जहारैनामापश्चापि समाविशत् ॥ २७ ॥ सामुद्रा वै समुद्रेषु नादेयाश्च नदीषु च ॥ रसातलतले मग्नां रसातलपुटे गताम् ॥२८॥ प्रभुर्लोकहितार्थाय दंष्ट्रयाभ्युज्जहार गाम् ॥ ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ॥ २९ ॥ मुमोच पूर्ववदसौ धारयित्वा धराधरः ॥ तस्योपरि जलौघस्य महती नौरिव स्थिता॥१३०॥तत्समा ह्युरुदेहत्वान्न मही याति संप्लवम्॥तत उत्क्षिप्य तां देवो जगतः स्थापनेच्छया ॥ ३१ ॥ पृथिव्याः प्रविभागाय मनश्चक्रेम्बुजेक्षणः॥ पृथिवीं च समां कृत्वा पृथिव्यां सोचिनोद्गिरीन् ॥ ३२ ॥ प्राक्सर्गे दह्यमाने तु तदा संवर्तकाग्निना ॥ तेनाग्निना विशीर्णास्ते पर्वता भूरिविस्तराः ॥ ३३ ॥ शैत्यादेकार्णवे तस्मिन् वायुना तेन संहताः ॥ निषिक्ता यत्रयत्रासंस्तत्रतत्राचलाभवन् ॥३४॥ तदाचलत्वादचलाः पर्वभिः पर्वताः स्मृताः॥ गिरयो हि निगीर्णत्वाच्छयानत्वाच्छिलोच्चयाः॥३५॥ ततस्तेषु विकीर्णेषु कोटिशो हि गिरिष्वथ ॥ विश्वकर्मा विभजते कल्पादिषु पुनःपुनः ॥३६॥ ससमुद्रामिमां पृथ्वीं सप्तद्वीपां सपर्वताम् ॥ भूराद्यांश्चतुरो लोकान्पुनः सोथ व्यकल्पयत् ॥३७॥ लोकान्प्रकल्पयित्वाथ प्रजासर्गं ससर्ज ह ॥ ब्रह्मा स्वयंभूर्भगवान्सिसृक्षुर्विविधाः प्रजाः ॥३८॥



समाविशत्पूर्ववत्समावेशयादित्यग्रिमस्थैरन्वयः ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

तस्य ब्रह्मणः तदा सृष्ट्यादिकाले बुद्धिपूर्वकं विचारपूर्वकं सर्गमभिध्यायतश्चिंतयतः बुद्ध्याश्च विचारस्यापि समकालं तमोमयः अविद्यात्मकः सर्गः प्रादुर्भूत इत्याग्रिमेणा न्वयः ॥ ३९ ॥ सृष्टजीवानामविद्यां विना कर्मबंधो न संभवतीत्यतः पंचविधाविद्यासर्गं कथयति—तम इत्यादिना । तदुक्तं पातंजले—" अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः " इति ॥ १४० ॥ ४१ ॥ ४२ ॥ नगाः मुख्याः प्रथमोत्पन्ना इत्यर्थः ॥ ४३ ॥ ४४ ॥ तिर्यक् बहिर्मुखानि स्रोतांसींद्रियप्रवाहाः यस्य स तिर्यक्स्रोताः ॥ ४५ ॥

ससर्ज सृष्टिं तद्रूपां कल्पादिषु यथापुरा ॥ तस्याभिध्यायतः सर्गं तथा वै बुद्धिपूर्वकम् ॥ ३९ ॥ बुद्ध्याश्च समकाले वै प्रादुर्भूतस्त मोमयः ॥ तमोमोहो महामोहस्तामिस्रश्चांधसंज्ञितः ॥ १४० ॥ अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः ॥ पंचधावस्थितः सर्गो ध्यायतः सोभिमानिनः ॥ ४१ ॥ संवृतस्तमसा चैव बीजांकुरवदावृतः ॥ बहिरन्तश्चाप्रकाशस्तब्धो निःसंज्ञ एव च ॥ ४२ ॥ यस्मात्तेषां वृता बुद्धिर्दुःखानि करणानि च ॥ तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्तिताः ॥ ४३ ॥ मुख्यसर्गं तथाभूतं दृष्ट्वा ब्रह्मा ह्यसाधकम् ॥ अप्र सन्नमनाः सोथ ततोन्यं सो ह्यमन्यत ॥ ४४ ॥ तस्याभिध्यायतश्चैव तिर्यक्स्रोता ह्यवर्तत ॥ तस्मात्तिर्यक्प्रवृत्तः स तिर्यक्स्रोतास्ततः स्मृतः ॥ ४५ ॥ पश्वादयस्ते विख्याता उत्पथग्राहिणो द्विजाः ॥ तस्याभिध्यायतोन्यं वै सात्त्विकः समवर्तत ॥ ४६ ॥ ऊर्ध्वस्रोतास्तृ तीयस्तु स वै चोर्ध्वं व्यवस्थितः ॥ यस्मात्प्रवर्तते चोर्ध्वमूर्ध्वस्रोतास्ततः स्मृतः ॥४७॥ ते सुखप्रीतिबहुला बहिरंतश्च संवृताः ॥ प्रकाशा बहिरंतश्च ऊर्ध्वस्रोतोभवाः स्मृताः ॥ ४८ ॥ ते सत्त्वस्य च योगेन सृष्टाः सत्त्वोद्भवाः स्मृताः ॥ ऊर्ध्वस्रोतास्तृतीयो वै देवसर्गस्तु स स्मृतः ॥ ४९ ॥ प्रकाशाद्बहिरंतश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः ॥ ते ऊर्ध्वस्रोतसो ज्ञेयास्तुष्टात्मानो बुधैः स्मृताः ॥ १५० ॥ ऊर्ध्वस्रोतस्सु सृष्टेषु देवेषु वरदः प्रभुः ॥ प्रीतिमानभवद्ब्रह्मा ततोन्यं सोभ्यमन्यत॥५१॥ ससर्ज सर्गमन्यं हि साधकं प्रभुरीश्वरः ॥ ततोभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा ॥ ५२ ॥ प्रादुरासीत्तदा व्यक्तादर्वाक्स्रोतास्तु साधकः ॥ यस्मादर्वाक् न्यवर्तत ततोर्वाक्स्रोतसस्तु ते ॥ ५३ ॥ ते च प्रकाशबहुलास्तमःपृक्ता रजोधिकाः ॥ तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः ॥ ५४ ॥

पश्वादयः पशुपक्षिकीटा इत्यर्थः ॥ ४६ ॥ ऊर्ध्वमंतर्मुखानि स्रोतांसि यस्य स ऊर्ध्वस्रोताः ॥ ४७ ॥ ४८ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ अर्वाक् बाह्याभ्यंतरतः स्रोतांसि यस्य सोर्वाक्स्रोताः साधकः सकलकारणः । तदुक्तं भागवते—'नृदेहमाद्यम्' इति । तेऽर्वाक्स्रोतसो मनुष्या इत्यर्थः ॥ ५३ ॥ ५४ ॥

तारकाद्यष्टलक्षणानि विचार्याणि ॥ ५५ ॥ ५६ ॥ ५७ ॥ स्थावरेषु वृक्षेषु विपर्यासो विस्तारादिभेदः तिर्यग्योनिषु पश्वादिषु शक्तितः सामर्थ्येनेत्यर्थः । मनुष्यास्तु सिद्धात्मानः प्रारब्धजन्यसिद्धियुक्ताः ऋषिदेवेषु कृत्स्नशः संपूर्णतुष्टिप्रकारेणेत्यर्थः ॥ ५८ ॥ इत्येष पूर्वोक्तचतुःप्रकारः प्राकृतः प्रकृतनिरूपणविषयः वैकृतो विकारं प्राप्तः सर्गोऽनुग्रहाख्योऽनवमः श्रेष्ठः स्मृत इत्यन्वयः । भूतादिकानां मन्वादीनां सर्गः षष्ठः स उच्यते कथ्यत इत्यर्थः ॥ ५९ ॥ तेषामुत्पद्यमानानां भूतानामिति पर्वश्लोकीयस्यात्रान्वयः । निवृत्तं प्राक्तनं वर्तमानं पुनर्भविष्यं च ते भूतादिका इत्यग्रिमस्थस्यात्रान्वयः । वै निश्चयेन जानंतीत्यन्वयः ॥ १६० ॥ ते पूर्वोक्ताः भूतादिकाः सर्वे अपरिग्राहिणो निस्पृहाः

संवृता बहिरन्तश्च मनुष्याः साधकाश्च ते ॥ लक्षणैस्तारकाद्यैस्ते ह्यष्टधा तु व्यवस्थिताः ॥ ५५ ॥ सिद्धात्मानो मनुष्यास्ते गंधर्वसहधर्मिणः ॥ इत्येष तैजसः सर्गो ह्यर्वाक्स्रोतः प्रकीर्तितः ॥ ५६ ॥ पंचमोऽनुग्रहः सर्गश्चतुर्धा तु व्यवस्थितः ॥ विपर्ययेण शक्त्या च सिद्ध्या तुष्ट्या तथैव च ॥ ५७ ॥ स्थावरेषु विपर्यासस्तिर्यग्योनिषु शक्तितः ॥ सिद्धात्मानो मनुष्यास्तु ऋषिदेवेषु कृत्स्नशः ॥ ५८ ॥ इत्येष प्राकृतः सर्गो वैकृतोऽनवमः स्मृतः॥ भूतादिकानां भूतानां षष्ठः सर्गः स उच्यते॥५९॥ निवृत्तं वर्तमानं च तेषां जानन्ति वै पुनः ॥ भूतादिकानां भूतानां सप्तमः सर्ग एव च ॥ १६० ॥ तेऽपरिग्राहिणः सर्वे संविभागरताः पुनः ॥ स्वादनाश्चाप्यशीलाश्च ज्ञेया भूतादिकाश्च ते ॥ ६१ ॥ विपर्ययेण भूतादिरशक्त्या च व्यवस्थितः ॥ प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणः स्मृतः ॥ ६२ ॥ तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः॥ ६३ ॥ इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ॥ मुख्यसर्गश्चतुर्थश्च मुख्या वै स्थावराः स्मृताः ॥ ६४ ॥ ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः॥६५॥

संविभागरताः यथोक्तदानशीलाः स्वादनाः कर्मफलास्वादका अपि अशीलाः ज्ञानवशात्कर्मफलानिषेविणः ज्ञेया इत्यन्वयः ॥६१ ॥ भूतादिरहंकारः विपर्ययेणाज्ञानेन अशक्त्या विष्णुमायया च व्यवस्थित इत्यन्वयः । तदुक्तं विष्णुना कौर्म्ये–"इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी । माया मम प्रियानंता ययेदं मोहितं जगत् ॥ " इति । नवसर्गान् क्रमशः कथयति–प्रथम इत्यादिना ॥ ६२ ॥ ६३ ॥ ६४ ॥ ततश्चतुर्थानंतरमर्वाक्स्रोतसां सर्गः सप्तमः तिर्यक्स्रोतऊर्ध्वस्रोतोर्वाक्स्रोतःक्रमेण सप्तसंख्याक इत्यर्थः । सात्त्विको देवेषु तामसः स्थावरपशुषु चकाराद्राजसो मनुष्येषु ज्ञेय इति शेषः ॥ ६५ ॥

एते मुख्याद्याः पंच त्रयो महदाद्याः स्मृता इत्यन्वयः । कौमारः सनकादिसर्गः नवमस्तत्संख्याकः प्राकृतो वैकृतश्चोभयरूपः स्मृतः प्रोक्त इत्यर्थः ॥ ६६ ॥ ६७ ॥ विस्तर युक्तो योनुग्रहस्तत्संज्ञकः सर्गः कीर्त्यमानो निबोधतेत्यन्वयः ॥ ६८ ॥ ६९ ॥ १७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ तस्मात् पूर्वोक्तकारणात्सनत् नित्यं कुमारेति नाम प्रकीर्तित मुक्तमित्यर्थः ॥ ७४ ॥ नानात्वे अविद्यापरिकल्पिते भेदे संबुद्धाः मिथ्येति निश्चययुक्ता अत एवाप्रवृत्ताः योगिनः समाधियुक्ता इत्यर्थः॥७५॥ प्रतिसर्गं मोक्षमित्यर्थः ॥७६॥

पंचैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥ ६६ ॥ अबुद्धिपूर्वकाः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ बुद्धिपूर्वं प्रवर्तन्ते षट् पुनर्ब्रह्मणस्तु ते ॥६७॥ विस्तरानुग्रहः सर्गः कीर्त्यमानो निबोधत ॥ चतुर्धावस्थितः सोथ सर्वभूतेषु कृत्स्नशः ॥६८ ॥ इत्येते प्राकृताश्चैव वैकृताश्च नवस्मृताः ॥ परस्परानुरक्ताश्च कारणैश्च बुधैः स्मृताः ॥६९॥ अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् ॥ ऋभुः सनत्कुमारश्च द्वावेतावूर्ध्वरेतसौ ॥ १७० ॥ पूर्वोत्पन्नौ पुरा तेभ्यः सर्वेषामपि पूर्वजौ ॥ व्यतीते त्वष्टमे कल्पे पुराणौ लोकसाक्षिणौ ॥ ७१ ॥ तौ वाराहे तु भूर्लोके तेजः संक्षिप्य धिष्ठितौ ॥ तावुभौ मोक्षकर्माणावारोप्यात्मानमात्मनि ॥ ७२ ॥ प्रजां धर्मं च कामं च त्यक्त्वा वैराग्यमास्थितौ ॥ यथोत्पन्नस्तथैवेह कुमारः स इहोच्यते ॥ ७३ ॥ तस्मात्सनत्कुमारेति नामास्येह प्रकीर्तितम् ॥ सनंदं सनकं चैव विद्वांसं च सनातनम् ॥ ७४ ॥ विज्ञानेन निवृत्तास्ते व्यवर्तत महौजसः ॥ संबुद्धाश्चैव नानात्वे अप्रवृत्ताश्च योगिनः ॥ ७५ ॥ असृष्ट्वैव प्रजासर्गं प्रतिसर्गं गताः पुनः ॥ ततस्तेषु व्यतीतेषु ततोन्यान्साधकान्सुतान् ॥७६॥ मानसानसृजद्ब्रह्मा पुनः स्थानाभिमानिनः ॥ आभूतसंप्लवावस्था यैरियं विधृता मही ॥७७॥ आपोग्निं पृथिवीं वायुमंतरिक्षं दिवं तथा ॥ समुद्रांश्च नदीश्चैव तथा शैलवनस्पतीन् ॥ ७८ ॥ ओषधीनां तथात्मानो वल्लीनां वृक्षवीरुधाम् ॥ लताः काष्ठाः कलाश्चैव मुहूर्ताः संधिरात्र्यहान् ॥ ७९ ॥ अर्धमासांश्च मासांश्च अयनाब्दयुगानि च ॥ स्थानाभिमानिनः सर्वे स्थानाख्याश्चैव ते स्मृताः ॥ १८० ॥

॥ ७७॥७८॥ओषधीनां व्रीह्यादीनां तथा वृक्षवीरुधामात्मानः लवा मुहूर्ता इत्यत्र द्वितीयार्थे प्रथमा ज्ञेया । संधिरात्र्यहानित्यत्र ' रात्राह्नाहाः पुंसि ' इत्यनेन पुंस्त्वम् ॥७९॥ युगानि चासृजदिति पूर्वोक्तस्यानुषंगः । ते पूर्वोक्ताः सर्वस्थानाभिमानिनः स्थानाख्याश्च स्मृता इत्यन्वयः ॥ १८० ॥

मरीचिभृग्वंगिरसमित्यत्राचीति योगविभागादच् समासान्तः ॥८१–८७॥ इत्येते संकल्पधर्ममरीच्यादय एकादश स्मृता इत्यन्वयः ॥ ८८ ॥ ८९ ॥ तेषां रुचिसहितानाम् ॥ १९० ॥ ऋभुसनत्कुमारोद्देशेन पूर्वोक्तमेवानुवदति–ऋभुरित्यादिना ॥ ९१॥९२॥९३॥९४॥९५॥९६॥ ततः क्षेत्रज्ञसर्गानंतरं देवासुरपितॄन् मानुषांश्च चतुष्टयमेतान्यंभांसि

देवानृषींश्च महतो गदतस्तान्निबोधत ॥ मरीचिभृग्वंगिरसं पुलस्त्यं पुलहं क्रतुम् ॥ ८१ ॥ दक्षमत्रिं वसिष्ठं च सोऽसृजन्मानसान्नव ॥ नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ ८२ ॥ तेषां ब्रह्मात्मकानां वै सर्वेषां ब्रह्मवादिनाम् ॥ स्थानानि कल्पयामास पूर्ववत्पद्मसंभवः ॥ ८३ ॥ ततोऽसृजच्च संकल्पं धर्मं चैव सुखावहम् ॥ सोऽसृजद्व्यवसायात्तु धर्मं देवो महेश्वरः ॥ ८४ ॥ संकल्पं चैव संकल्पात्सर्वलोकपिता महः ॥ मानसश्च रुचिर्नाम विजज्ञे ब्रह्मणः प्रभोः॥ ८५ ॥ प्राणाद्ब्रह्मासृजद्दक्षं चक्षुर्भ्यां च मरीचिनम् ॥ भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः ॥ ८६ ॥ शिरसोऽङ्गिरसश्चैव श्रोत्रादत्रिं तथासृजत् ॥ पुलस्त्यं च तथोदानाद्व्यानाच्च पुलहं पुनः ॥ ८७ ॥ समानजो वसिष्ठश्च अपानान्निर्ममे क्रतुम् ॥ इत्येते ब्रह्मणः पुत्रा दिव्या एकादश स्मृताः ॥ ८८ ॥ धर्मादयः प्रथमजाः सर्वे ते ब्रह्मणः सुताः ॥ भृग्वादयस्तु ते सृष्टा नवैते ब्रह्मवादिनः ॥ ८९ ॥ गृहमेधिनः पुराणास्ते धर्मस्तैः संप्रवर्तितः ॥ तेषां द्वादश ते वंशा दिव्या देवगुणान्विताः ॥ १९० ॥ क्रियावंतः प्रजावंतो महर्षिभिरलंकृताः॥ ऋभुः सनत्कुमारश्च द्वावेतावूर्ध्वरेतसौ ॥९१॥ पूर्वोत्पन्नौ परं तेभ्यः सर्वेषामपि पूर्वजौ ॥ व्यतीते त्वष्टमे कल्पे पुराणौ लोकसाक्षिणौ ॥ ९२ ॥ विराजेतामुभौ लोके तेजः संक्षिप्य धिष्ठितौ ॥ तावुभौ योगकर्माणावारोप्यात्मानमात्मनि ॥९३॥ प्रजां धर्मं च कामं च त्यक्त्वा वैराग्यमास्थितौ ॥ यथोत्पन्नः स एवेह कुमारः स इहोच्यते ॥९४॥ तस्मात्सनत्कुमारोऽते नामास्येह प्रतिष्ठितम् ॥ ततोऽभिध्यायतस्तस्य जज्ञिरे मानसाः प्रजाः ॥ ९५ ॥ तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह ॥ क्षेत्रज्ञाः समवर्तंत गात्रेभ्यस्तस्य धीमतः ॥ ९६ ॥ ततो देवासुरपितॄन्मानुषांश्च चतुष्टयम् ॥ सिसृक्षुरंभास्येतानि स्वमात्मानमयूयुजत् ॥ ९७ ॥ ततस्तु युञ्जतस्तस्य तमोमात्रसमुद्भवम् ॥ समभिध्यायतः सर्गं प्रयत्नेन प्रजापतेः ॥९८॥ ततोऽस्य जघनात्पूर्वमसुरा जज्ञिरे सुताः॥ असुः प्राणः स्मृतो विप्रास्तज्जन्मानस्ततोऽसुराः ॥ ९९ ॥

सिसृक्षुर्ब्रह्मा आत्मानं मनः अयूयुजदित्यन्वयः । तथा च याजुषश्रुतिः–"तानि वा एतानि चत्वार्यंभांसि देवा मनुष्याः पितरोऽसुराः इति" ॥ ९७ ॥ ९८ ॥ ९९॥

सृष्टा असुरा इत्यत्र संधिरार्षः । अपविद्धा त्यक्तेत्यर्थः ॥ २०० ॥ सा ब्रह्मतनुः रात्रिर्यस्मात्तमोबहुला तमःप्रचुरा ततो नियामिका सकलस्वापकर्त्री ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अन्यां तृतीयां तनुमपद्यत प्राप्तवानित्यर्थः ॥ ५ ॥ सा द्वितीयतनुः ॥ ६ ॥ पितृवन्मन्यमानस्य प्रभोर्ब्रह्मणस्तानुत्पद्यमानान्पुत्रान्ध्यायतः पितरोऽभवन्नित्यग्रिमेणान्वयः ॥ ७ ॥

यया सृष्टासुराः सर्वे तां तनुं स व्यपोहत ॥ सापविद्धा तनुस्तेन सद्यो रात्रिरजायत ॥ २०० ॥ सा तमोबहुला यस्मात्ततो रात्रिर्नियामिका ॥ आवृतास्तमसा रात्रौ प्रजास्तस्मात्स्वपन्त्युत ॥ २०१ ॥ सृष्ट्वासुरांस्ततः सो वै तनुमन्यामगृह्णत ॥ अव्यक्तां सत्त्वबहुलां ततस्तां सोऽभ्यपूजयत् ॥ २ ॥ ततस्तां युंजतस्तस्य प्रियमासीत्प्रजापतेः ॥ ततो मुखात्समुत्पन्ना दीव्यतस्तस्य देवताः ॥ ३ ॥ यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्तिताः ॥ धातुर्दिविति यः प्रोक्तः क्रीडायां स विभाव्यते ॥ ४ ॥ यस्मात्तस्य तु दीव्यंतो जज्ञिरे तेन देवताः ॥ देवान्सृष्ट्वाथ देवेशस्तनुमन्यामपद्यत॥५॥उत्सृष्टा सा तनुस्तेन सद्योऽहः समजायत ॥ तस्मादहो धर्मयुक्तं देवताः समुपासते॥६॥ सत्त्वमात्रात्मिकामेव ततोऽन्यां सोऽभ्यमन्यत ॥ पितृवन्मन्यमानस्य पुत्रांस्तान्ध्यायतः प्रभोः ॥ ७ ॥ पितरो ह्युपपक्षाभ्यां रात्र्यह्नोरंतरेभवन् ॥ तस्मात्ते पितरो देवाः पितृत्वं तेन तेषु तत् ॥ ८ ॥ यया सृष्टास्तु पितरस्तनुं तां स व्यपोहत ॥ सापविद्धा तनुस्तेन सद्यः संध्या व्यजायत ॥ ९ ॥ यस्मादहर्देवतानां रात्रिर्या सासुरी स्मृता ॥ तयोर्मध्ये तु पैत्री या तनुः सा तु गरीयसी ॥ २१० ॥ तस्माद्देवासुराः सर्वे ऋषयो मानवास्तथा ॥ उपासंते मुदायुक्ता रात्र्यह्नोर्मध्यमां तनुम् ॥ ११ ॥ ततो ह्यन्यां पुनर्ब्रह्मा तनुं वै समगृह्णत ॥ रजोमात्रात्मिकायां तु मनसा सोऽसृजत्प्रभुः ॥ १२ ॥ रजःप्रियांस्ततः सोथ मानसानसृजत्सुतान् ॥ मनस्विनस्ततस्तस्य मानवा जज्ञिरे सुताः ॥ १३ ॥ सृष्ट्वा पुनः प्रजाश्चापि स्वां तनुं तामपोहत ॥ सापविद्धा तनुस्तेन ज्योत्स्ना सद्यस्त्वजायत ॥ १४ ॥ यस्माद्भवंति संहृष्टा ज्योत्स्नाया उद्भवे प्रजाः ॥ इत्येतास्तनवस्तेन ह्यपविद्धा महात्मना ॥ १५ ॥ सद्यो रात्र्यहनी चैव संध्या ज्योत्स्ना च जज्ञिरे ॥ ज्योत्स्ना संध्या अहश्चैव सत्त्वमात्रात्मकं त्रयम् ॥ १६ ॥ तमोमात्रात्मिका रात्रिः सा वै तस्मात्त्रिशात्मिका ॥ तस्माद्देवा दिव्यतन्वा तुष्ट्या सृष्टा मुखात्तु वै ॥ १७ ॥ यस्मात्तेषां दिवा जन्म बलिनस्तेन वै दिवा ॥ तन्वा यथासुरान् रात्रौ जघनादसृजत्प्रभुः ॥ १८ ॥

॥ ८ ॥ ९ ॥ २१० ॥ ११ ॥ रजोमात्रात्मिकायां राजसतन्वां मनसा असृजदित्यन्वयः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९॥२२०॥ अंभःशब्दस्य छांदसव्युत्पत्तिं दर्शयति–भांति यस्मादिति ॥ २१ ॥ भातिर्भाधातुः स प्रजापतिः एतानि ज्योत्स्नादिरूपाण्यंभांसि दृष्ट्वा विविधान्देवमानुषदान

प्राणेभ्यो निशिजन्मानो बलिनो निशि तेन ते ॥ एतान्येव भविष्याणां देवानामसुरैः सह ॥ १९ ॥ पितॄणां मानवानां च अतीतानागतेषु वै ॥ मन्वंतरेषु सर्वेषु निमित्तानि भवंति हि ॥२२०॥ ज्योत्स्ना रात्र्यहनी संध्या चत्वार्यंभांसि तानि वै ॥ भांति यस्मात्ततोंभांसि शब्दोयं सुमनीषिभिः ॥ २१ ॥ भातिर्दीप्तौ निगदितः पुनश्चाथ प्रजापतिः ॥ सोऽम्भांस्येतानि सृष्ट्वा तु देवमानुषदानवान् ॥ २२ ॥ पितॄंश्चैवा सृजत्तन्वा आत्मना विविधान्पुनः ॥ तामुत्सृज्य तनुं ज्योत्स्नां ततोन्यां प्राप्य स प्रभुः ॥ २३ ॥ मूर्तिं तमोरजःप्रायां पुनरेवाभ्यपूजयत् ॥ अंधकारे क्षुधाविष्टांस्ततोन्यान्सोसृजत्प्रभुः ॥ २४ ॥ तेन सृष्टाः क्षुधात्मानो अंभांस्यादातुमुद्यताः ॥ अभांस्येतानि रक्षाम उक्तवंतस्तु तेषु ये ॥ २५ ॥ राक्षसा नाम ते यस्मात् क्षुधाविष्टा निशाचराः ॥ येब्रुवन्यक्षमोम्भांसि तेषां हृष्टाः परस्परम् ॥ २६ ॥ तेन ते कर्मणा यक्षा गुह्यका गूढकर्मणा ॥ रक्षेति पालने चापि धातुरेष विभाष्यते ॥ २७ ॥ एवं च यक्षतिर्धातुर्भक्षणे स निरुच्यते ॥ तं दृष्ट्वा ह्यप्रियेणास्य केशाः शीर्णास्तु धीमतः ॥ २८ ॥ ते शीर्णाश्चोत्थिता ह्यूर्ध्वं ते चैवारुरुधुः प्रभुम् ॥ हीनास्तच्छिरसो बाला यस्माच्चैवावसर्पिणः ॥ २९ ॥ व्यालात्मानः स्मृता बाला हीनत्वादहयः स्मृताः ॥ पतत्वात्पन्नगाश्चैव सर्पाश्चैवावसर्पणात् ॥ २३० ॥ तस्य क्रोधोद्भवो योसौ अग्निगर्भः सुदारुणः ॥ स तु सर्पान् सहोत्पन्नानाविवेश विषात्मकः ॥ ३१ ॥ सर्पान्सृष्ट्वा ततः क्रुद्धः क्रोधात्मानो विनिर्ममे ॥ वर्णेन कपिशेनोग्रास्ते भूताः पिशिताशनाः ॥ ३२ ॥ भूतत्वात्ते स्मृता भूताः पिशाचाः पिशिताशनात् ॥ प्रसन्नं गायतस्तस्य गंधर्वा जज्ञिरे यदा ॥ ३३ ॥ धयतीत्येष वै धातुः पानत्वे परिपठ्यते ॥ धयंतो जज्ञिरे वाचं गंधर्वास्तेन ते स्मृताः ॥ ३४ ॥ अष्टस्वेतासु सृष्टासु देवयोनिषु स प्रभुः ॥ ततः स्वच्छंदतोन्यानि वयांसि वयसासृजत् ॥ ३५ ॥ स्वच्छंदतः स्वच्छंदांसि वयसा च वयांसि च ॥ पशून्सृष्ट्वा स देवेशोऽसृजत्पक्षिगणानपि ॥ ३६ ॥ मुखतोजाः ससर्जाथ वक्षसश्चावयोसृजत् ॥ गाश्चैवाथोदराद्ब्रह्मा पार्श्वाभ्यां च विनिर्ममे ॥ ३७ ॥

वान्पितॄंश्च तन्वा स्वशरीरेणासृजदित्यग्रिमेणान्वयः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥२९ ॥२३० ॥ ३१ ॥ ३२ ॥३३ ॥ ३४ ॥ ३५ ॥३६॥३७॥

॥ ३८ ॥ ३९ ॥ पुरुषो मनुष्यस्तस्य नरमेधे पशुत्वकल्पनात् ॥ २४० ॥ श्वापदो व्याघ्रादिः द्विखुरो गवयादिः ॥ ४१ ॥ अन्यान् सप्तारण्यान्कथयति–महिष इति । प्रशस्ते अक्षिणी येषां ते अक्षाः हरिणा इत्यर्थः ॥ ४२ ॥ गायत्रं गायत्रीछंदम् ऋचं ऋग्वेदं त्रिवृत्रिरावृत्तम् ऋचां गीयमानं साम रथंतरं तत्संज्ञकं साम यज्ञानां यागमध्ये अग्निष्टोमं सोमयागमुख्यं प्रथमान्मुखान्निर्ममे इत्यन्वयः ॥ ४३ ॥ स्तोमं पंचदशं पंचदशावृत्तं सामेत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ रोहितानि रक्तवर्णानींद्रधनूंषि इंद्रधनुष्याणीत्यर्थः

पश्वां चाश्वान् समातंगान् रासभानावयान्मृगान् ॥ उष्ट्रानश्वतरांश्चैव तथान्याश्चैव जातयः ॥ ३८ ॥ ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ॥ एवं पश्वोषधीः सृष्ट्वायूयुजत्सोध्वरे प्रभुः ॥ ३९ ॥ गौरजः पुरुषो मेषो ह्यश्वोश्वतरगर्दभौ ॥ एतान्ग्राम्यान्पशूनाहुरारण्यान्वै निबोधत ॥ २४० ॥ श्वापदो द्विखुरो हस्ती वानराः पक्षिपंचमाः ॥ आदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥ ४१ ॥ महिषा गवयाक्षाश्च प्लवंगाः शरभा वृकाः ॥ सिंहस्तु सप्तमस्तेषामारण्याः पशवः स्मृताः ॥ ४२ ॥ गायत्रं च ऋचं चैव त्रिवृत्साम रथंतरम् ॥ अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ ४३ ॥ यजूंषि त्रैष्टुभं छंदस्तोमं पंचदशं तथा ॥ बृहत्साम तथोक्थ्यं च दक्षिणादसृजन्मुखात् ॥ ४४ ॥ सामानि जगतीच्छंदस्तोमं सप्तदशं तथा ॥ वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् ॥ ४५ ॥ एकविंशमथर्वाणमातोर्यामाणमेव च ॥ अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ ४६ ॥ विद्युतोशनिमेघांश्च रोहितेंद्रधनूंषि च ॥ तेजांसि च ससर्जादौ कल्पस्य भगवान्प्रभुः ॥ ४७ ॥ उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ ब्रह्मणस्तु प्रजासर्गं सृजतो हि प्रजापतेः ॥ ४८ ॥ सृष्ट्वा चतुष्टयं पूर्वं देवासुरनरान्पितॄन् ॥ ततोसृजत्स भूतानि स्थावराणि चराणि च ॥ ४९ ॥ यक्षान्पिशाचान् गंधर्वांस्त्वथैवाप्सरसां गणान् ॥ नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥२५०॥ अव्ययं च व्ययं चापि यदिदं स्थाणुजंगमम् ॥ तेषां वै यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ॥५१॥ तान्येव प्रतिपद्यंते सृज्यमानाः पुनः पुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे नृतानृते ॥ ५२ ॥ तद्भाविताः प्रपद्यंते तस्मात्तत्तस्य रोचते ॥ महाभूतेषु सृष्टेषु इंद्रियार्थेषु मूर्तिषु ॥ ५३ ॥

कल्पस्यादौ भगवान ससर्जेत्यन्वयः ॥ ४७ ॥ ४८ ॥ ४९ ॥ २५० ॥ ५१ ॥ पुनः पुनः प्रतिकल्पं सृज्यमानास्तानि प्राक्कर्माण्येव प्रतिपद्यंते प्राप्नुवंतीत्यर्थः ॥ ५२ ॥ मूर्तिषु शरीरेष्वित्यर्थः ॥ ५३ ॥

भूतानां विनियोगं धाता ब्रह्मरूपो महेश्वर एव स्वयं व्यदधात्तथा च श्रुतिः–"यज्ञो जंतूरनीशोयमात्मनः सुखदुःखयोः ॥ ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च " इति मुख्यमत मुक्त्वा अविद्यया जीवकल्पितमतानि कथयति–केचिदित्यादिना । पुरुषकारं प्रयत्नं सुमानवाः कर्म आहुरित्यन्वयः ॥ ५४ ॥ पौरुषं कर्म दैवं फलवृत्तिस्वभावतः स्वभावं च आहुरित्यनुषंगः कर्मस्थाः कर्ममार्गवर्तिनो जीवाः विषमं वैचित्र्यं प्राति एकं पूर्वोक्तचतुष्टयात्प्रत्येकं पृथग्भावं विभिन्नसत्ताकं न किं तु समुच्चितमाहुरिति शेषः । ततः कारणसमु

विनियोगं च भूतानां धातैव व्यदधात्स्वयम् ॥ केचित्पुरुषकारं तु प्राहुः कर्म सुमानवाः ॥ ५४ ॥ दैवमित्यपरे विप्राः स्वभावं भूत चिंतकाः ॥ पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ॥ ५५ ॥ न चैकं न पृथग्भावमधिकं न ततो विदुः ॥ एतदेवं च नैकं च नामभेदेन नाप्युभे ॥ ५६ ॥ कर्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शिनाः ॥ नाम रूपं च भूतानां कृतानां च प्रपंचनम् ॥ ५७ ॥ वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ ऋषीणां नामधेयानि याश्च वेदेषु वृत्तयः ॥ ५८ ॥ शर्वर्यंते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ एवंविधाः सृष्टयस्तु ब्रह्मणोव्यक्तजन्मनः ॥५९॥ शर्वर्यंते प्रदृश्यंते सिद्धिमाश्रित्य मानसीम् ॥ एवंभूतानि सृष्टानि स्थावराणि चराणि च ॥२६० ॥ यदास्य ताः प्रजाः सृष्टा न व्यवर्धंत सत्तमाः ॥ तमोमात्रावृतो ब्रह्मा तदा शोकेन दुःखितः ॥ ६१ ॥ ततः स विदधे बुद्धिमर्थनिश्चयगामिनीम् ॥ अथात्मनि समद्राक्षीत्तमोमात्रां नियामिकाम् ॥ ६२ ॥ रजः सत्त्वं परित्यज्य वर्तमानां स्वधर्मतः ॥ ततः स तेन दुःखेन दुःखं चक्रे जगत्पतिः ॥६३॥ तमश्च व्यनुदत्पश्चाद्रजः सत्त्वं तमावृणोत् ॥ तत्तमः प्रतिनुन्नं वै मिथुनं समजायत ॥६४॥ अधर्मस्तमसो जज्ञे हिंसा शोकादजायत ॥ ततस्तस्मिन्समुद्भूते मिथुने दारुणात्मिके ॥६५ ॥ गतासुर्भगवानासीत्प्रीतिश्चैनमशिश्रियत् ॥ स्वां तनुं स ततो ब्रह्मा तामपोहत भास्वराम् ॥ ६६ ॥ द्विधा कृत्वा स्वकं देहमर्धेन पुरुषोभवत् ॥ अर्धेन नारी सा तस्य शतरूपा व्यजायत ॥ ६७ ॥

स्मयादधिकं सकलनियंतारमीश्वरं न विदुरित्यग्रिमस्थैरन्वयः । सत्त्वस्थाः समदर्शनास्तु जगतो मायिकत्वादेतदेवं पूर्वोक्तचतुष्टयं नामभेदेन एकं नाप्युभे द्वे द्वे आहुरित्यन्वयः ॥५५॥ ॥ ५६ ॥ ५७ ॥ स ब्रह्मरूपी महेश्वरः कृतानां पूर्वकल्पीयभूतानां नामरूपं प्रपंचनं च आदौ सर्गादौ वेदशब्देभ्य एव निर्ममे उत्पादितवानिति पूर्वस्थैरन्वयः ॥ ५८ ॥ अजः ब्रह्मा शर्वर्यंते प्रसूतानां वेदेषु ऋषीणां वृत्तयः यानि नामधेयानि तान्येवैभ्यः ददातीति पूर्वस्थैरन्वयः ॥५९॥ २६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७॥

॥ ६८ ॥ ६९ ॥ २७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ शतरूपा स वैराजो मनुश्च वै सम्राट् स्मृत इत्यन्वयः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ २८० ॥ ८१ ॥

प्रकृतिं भूतधात्रीं तां कामाद्वै सृष्टवान्प्रभुः ॥ सा दिवं पृथिवीं चैव महिम्ना व्याप्यधिष्ठिता ॥ ६८ ॥ ब्रह्मणः सा तनुः पूर्वा दिवमावृत्य तिष्ठति ॥ या त्वर्धात्सृजतो नारी शतरूपा व्यजायत ॥ ६९॥ सा देवी नियुतं तप्त्वा तपः परमदुश्चरम् ॥ भर्तारं दीप्तयशसं पुरुषं प्रत्यपद्यत ॥ २७० ॥ स वै स्वायंभुवः पूर्वं पुरुषो मनुरुच्यते ॥ तस्यैव सप्ततियुगं मन्वंतरमिहोच्यते ॥ ७१ ॥ लेभे स पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ तया सार्धं स रमते तस्मात्सा रतिरुच्यते ॥ ७२ ॥ प्रथमः संप्रयोगात्मा कल्पादौ समपद्यत ॥ विराजमसृजद्ब्रह्मा सोभवत्पुरुषो विराट् ॥ ७३ ॥ सम्राट् च शतरूपा वै वैराजः स मनुः स्मृतः ॥ स वैराजः प्रजासर्गं ससर्ज पुरुषो मनुः ॥ ७४ ॥ वैराजात्पुरुषाद्वीराच्छतरूपा व्यजायत ॥ प्रियव्रतोत्तानपादौ पुत्रौ द्वौ लोकसंमतौ ॥ ७५ ॥ कन्ये द्वे च महाभागे याभ्यां जाता इमाः प्रजाः ॥ देवी नाम तथाकूतिः प्रसूतिश्चैव ते उभे॥७६॥स्वायंभुवः प्रसूतिं तु दक्षाय प्रददौ प्रभुः ॥ प्राणो दक्ष इति ज्ञेयः संकल्पो मनुरुच्यते॥७७॥ रुचेः प्रजापतेः सोथ आकूतिं प्रत्यपादयत् ॥ आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभम् ॥ ७८ ॥ यज्ञश्च दक्षिणा चैव यमलौ संबभूवतुः ॥ यज्ञस्य दक्षिणायां तु पुत्रा द्वादश जज्ञिरे ॥ ७९ ॥ यामा इति समाख्याता देवाः स्वायंभुवेंतरे ॥ एतस्य पुत्रा यज्ञस्य तस्माद्यामाश्च ते स्मृताः॥२८०॥अजितश्चैव शुक्रश्च गणौ द्वौ ब्रह्मणा कृतौ॥ यामाः पूर्वं प्रजाता ये तेऽभवंस्तु दिवौकसः॥८१॥स्वायंभुवसुतायां तु प्रसूत्यां लोकमातरः ॥ तस्यां कन्याश्चतुर्विंशद्दक्षस्त्वजनयत्प्रभुः ॥ ८२ ॥ सर्वास्ताश्च महाभागाः सर्वाः कमललोचनाः ॥ भोगवत्यश्च ताः सर्वाः सर्वास्ता योगमातरः ॥ ८३ ॥ सर्वाश्च ब्रह्मवादिन्यः सर्वा विश्वस्य मातरः ॥ श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥ ८४ ॥ बुद्धिर्लज्जा वपुः शांतिः सिद्धिः कीर्तिस्त्रयोदश ॥ पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ॥ ८५ ॥ दाराण्येतानि वै तस्य विहितानि स्वयंभुवा ॥ ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥ ८६॥ सती ख्यात्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ संनतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ॥ ८७ ॥

॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥

॥ ८८ ॥ ८९ ॥ २९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ रौरवः रुरुसंज्ञककीटयुक्तनरक इत्यर्थः ॥ ३०० ॥ ३०१ ॥ २ ॥



तास्तथा प्रत्यपद्यंत पुनरन्ये महर्षयः ॥ रुद्रो भृगुर्मरीचिश्च अंगिराः पुलहः क्रतुः ॥ ८८ ॥ पुलस्त्योत्रिर्वसिष्ठश्च पितरोग्निस्तथैव च ॥ सतीं भवाय प्रायच्छत् ख्यातिं च भृगवे ततः ॥ ८९ ॥ मरीचये च संभूतिं स्मृतिमंगिरसे ददौ ॥ प्रीतिं चैव पुलस्त्याय क्षमां वै पुलहाय च ॥ २९० ॥ क्रतवे संनतिं नाम अनसूयां तथात्रये ॥ ऊर्जां ददौ वसिष्ठाय स्वाहामप्यग्नये ददौ ॥ ९१॥ स्वधां चैव पितृभ्यस्तु तास्वप त्यानि बोधत ॥ एताः सर्वा महाभागाः प्रजास्वनुसृताः स्थिताः ॥ ९२ ॥ मन्वंतरेषु सर्वेषु यावदाभूतसंप्लवम् ॥ श्रद्धा कामं विजज्ञे वै दर्पो लक्ष्मीसुतः स्मृतः ॥ ९३ ॥ धृत्यास्तु नियमः पुत्रस्तुष्ट्याः संतोष एव च ॥ पुष्ट्या लोभः सुतश्चापि मेधापुत्रः श्रुतस्तथा ॥९४॥ क्रियायामभवत्पुत्रो दंडः समय एव च ॥ बुद्ध्यां बोधः सुतस्तद्वत्प्रमादोप्युपजायत ॥ ९५ ॥ लज्जायां विनयः पुत्रो व्यवसायो वसोः सुतः ॥ क्षेमः शांतिसुतश्चापि सुखं सिद्धेर्व्यजायत ॥९६॥ यशः कीर्तिसुतश्चापि इत्येते धर्मसूनवः ॥ कामस्य हर्षः पुत्रो वै देव्यां प्रीत्यां व्यजायत ॥ ९७ ॥ इत्येष वै सुतोदर्कः सर्गो धर्मस्य कीर्तितः ॥ जज्ञे हिंसा त्वधर्माद्वै निकृतिं चानृतं सुतम् ॥ ९८ ॥ निकृत्यां तु द्वयं जज्ञे भयं नरक एव च ॥ माया च वेदना चापि मिथुनद्वयमेतयोः ॥ ९९ ॥ भूयो जज्ञेथ वै माया मृत्युं भूतापहारिणम् ॥ वेदनायाः सुत श्चापि दुःखं जज्ञे च रौरवः ॥ ३०० ॥ मृत्योर्व्याधिजराशोकक्रोधासूयाश्च जज्ञिरे ॥ दुःखोत्तराः सुता ह्येते सर्वे चाधर्मलक्षणाः ॥३०१॥ नैषां भार्यास्तु पुत्राश्च सर्वे ह्येते परिग्रहाः ॥ इत्येष तामसः सर्गो जज्ञे धर्मनियामकः ॥२॥ प्रजाः सृजेति व्यादिष्टो ब्रह्मणा नीललोहितः॥ सोभिध्याय सतीं भार्यां निर्ममे ह्यात्मसंभवान् ॥ ३ ॥ नाधिकान्न च हीनांस्तान्मानसानात्मनः समान् ॥ सहस्रं हि सहस्राणां सोसृजत्कृत्ति वाससः ॥ ४ ॥ तुल्यानेवात्मनः सर्वान् रूपतेजोबलश्रुतैः ॥ पिंगलान्सनिषंगांश्च सकपर्दान्सलोहितान् ॥ ५ ॥ विशिष्टान् हरिकेशांश्च दृष्टिघ्नांश्च कपालिनः ॥ महारूपान्विरूपांश्च विश्वरूपान्स्वरूपिणः ॥६॥ रथिनश्चर्मिणश्चैव वर्मिणश्च वरूथिनः॥ सहस्रशतबाहूंश्च दिव्यान्भौमांतरिक्षगान् ॥ ७ ॥ स्थूलशीर्षानष्टदंष्ट्रान्द्विजिह्वांस्तांस्त्रिलोचनान् ॥ अन्नादान्पिशिताशांश्च आज्यपान्सोमपानपि ॥ ८ ॥ मीढुषोतिकपालांश्च शितिकंठोर्ध्वरेतसः ॥ हव्यादाश्च्युतधर्मांश्च धर्मिणो ह्यथ बर्हिणः ॥ ९ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अनंत्यश्रीरुद्रगणोत्पत्तिं कथयति-प्रजा इत्यादिना । नीललोहितो रुद्रः ॥ ३ ॥ ४ ॥ ५ ॥ दृष्ट्या दृक्पातमात्रेण घ्नंति नाशयंति ते दृष्टिघ्नाः ॥

पंचभूतान्विस्तृतभूतानित्यर्थः॥३१०॥नदीमंतो गंगाधराः द्वितीयार्थे प्रथमा॥११॥१२॥१३॥१४॥१५॥१६॥ 'सहस्राणि सहस्रशो ये रुद्राः' इति श्रुत्युक्तान् रुद्रानुपदर्शयति

आसीनान्धावतश्चैव पंचभूतान्सहस्रशः ॥ अध्यापिनोध्यायिनश्च जपतो युंजतस्तथा ॥३१०॥ धूमवंतो ज्वलंतश्च नदीमंतोतिदीप्तिनः ॥ वृद्धान्बुद्धिमतश्चैव ब्रह्मिष्ठाञ्शुभदर्शनान् ॥ ११ ॥ नीलग्रीवान्सहस्राक्षान्सर्वांश्चाथ क्षमाकरान् ॥ अदृश्यान्सर्वभूतानां महायोगान्महौजसः ॥ १२ ॥ भ्रमंतोभिद्रवंतश्च प्लवंतश्च सहस्रशः ॥ अयातयामानसृजद्रुद्रानेतान् सुरोत्तमान् ॥ १३ ॥ ब्रह्मा दृष्ट्वाब्रवीदेनं मास्राक्षीरीदृशीः प्रजाः ॥ स्रष्टव्या नात्मनस्तुल्याः प्रजा देव नमोस्तु ते ॥ १४ ॥ अन्याः सृज त्वं भद्रं ते प्रजा वै मृत्युसंयुताः ॥ नारप्स्यंते हि कर्माणि प्रजा विगतमृत्यवः ॥ १५ ॥ एवमुक्तोऽब्रवीदेनं नाहं मृत्युजरान्विताः ॥ प्रजाः स्रक्ष्यामि भद्रं ते स्थितोहं त्वं सृज प्रजाः ॥१६॥ एते ये वै मया सृष्टा विरूपा नीललोहिताः ॥ सहस्राणां सहस्रं तु आत्मनो निस्सृताः प्रजाः ॥ १७ ॥ एते देवा भविष्यंति रुद्रा नाम महाबलाः ॥ पृथिव्यामंतरिक्षे च दिक्षु चैव परिश्रिताः ॥ १८ ॥ शतरुद्राः समात्मानो भविष्यंतीति याज्ञिकाः ॥ यज्ञभाजो भविष्यंति सर्वदेवगणैः सह ॥ १९ ॥ मन्वंतरेषु ये देवा भविष्यंतीह भेदतः ॥ सार्धं तैरीज्यमानास्ते स्थास्यंतीहायुगक्षयात् ॥३२०॥ एवमुक्तस्तदा ब्रह्मा महादेवेन धीमता ॥ प्रत्युवाच नमस्कृत्य हृष्यमाणः प्रजापतिः ॥ २१ ॥ एवं भवतु भद्रं ते यथा ते व्याहृतं विभो ॥ ब्रह्मणा समनुज्ञाते तथा सर्वमभूत्किल ॥ २२ ॥ ततःप्रभृति देवेशो न चासूयत वै प्रजाः ॥ ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् ॥ २३ ॥ यस्मादुक्तः स्थितोस्मीति तस्मात्स्थाणुरिति स्मृतः ॥ एष देवो महादेवः पुरुषोर्कसमद्युतिः ॥ २४ ॥ अर्धनारीनरवपुस्तेजसा ज्वलनोपमः ॥ स्वेच्छयासौ द्विधाभूतः पृथक् स्त्री पुरुषः पृथक् ॥ २५ ॥ स एवैकादशार्धेन स्थितोसौ परमेश्वरः ॥ तत्र या सा महाभागा शंकरस्यार्धकायिनी ॥ २६ ॥ प्रागुक्ता तु महादेवी स्त्री सैवेह सती ह्यभूत् ॥ हिताय जगतां देवी दक्षेणाराधिता पुरा ॥ २७ ॥ कार्यार्थं दक्षिणं तस्याः शुक्लं वामं तथासितम् ॥ आत्मानं विभजस्वेति प्रोक्ता देवेन शंभुना ॥ २८ ॥

एत इत्यादिना॥१७॥१८॥१९॥३२०॥२१॥२२॥२३॥२४॥२५॥एकादशार्धेन तत्संख्याकार्धपुरुषरूपेणेत्यर्थः॥२६॥देवीप्रादुर्भावं कथयति–प्रागुक्तेत्यादिना ॥२७॥२८॥

॥ २९ ॥ ३३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ देवीनाममाहात्म्यं कथयति–देव्या इत्यादिना ॥ ३९ ॥३४०॥ ४१ ॥ कुंभीनो गजयूथपा



सा तथोक्ता द्विधाभूता शुक्ला कृष्णा च वै द्विजाः ॥ तस्या नामानि वक्ष्यामि शृण्वंतु च समाहिताः ॥ २९ ॥ स्वाहा स्वधा महाविद्या मेधा लक्ष्मीः सरस्वती ॥ सती दाक्षायणी विद्या इच्छाशक्तिः क्रियात्मिका ॥३३०॥ अपर्णा चैकपर्णा च तथा चैवैकपाटला ॥ उमा हैमवती चैव कल्याणी चैकमातृका ॥३१॥ ख्यातिः प्रज्ञा महाभागा लोके गौरीति विश्रुता ॥ गणांबिका महादेवी नंदिनी जातवेदसी ॥३२॥ एकरूपमथैतस्याः पृथग्देहविभावनात् ॥ सावित्री वरदा पुण्या पावनी लोकविश्रुता ॥ ३३ ॥ आज्ञा आवेशनी कृष्णा तामसी सात्त्विकी शिवा ॥ प्रकृतिर्विकृता रौद्री दुर्गा भद्रा प्रमाथिनी ॥ ३४ ॥ कालरात्रिर्महामाया रेवती भूतनायिका ॥ द्वापरांतविभागे च नामानीमानि सुव्रताः ॥ ३५ ॥ गौतमी कौशिकी चार्या चंडी कात्यायनी सती ॥ कुमारी यादवी देवी वरदा कृष्णपिंगला ॥३६॥ बर्हिध्वजा शूलधरा परमा ब्रह्मचारिणी ॥ महेंद्रोपेंद्रभगिनी दृषद्वत्येकशूलधृक् ॥ ३७ ॥ अपराजिता बहुभुजा प्रगल्भा सिंहवाहिनी ॥ शुंभादिदैत्यहंत्री च महामहिषमर्दिनी ॥ ३८ ॥ अमोघा विंध्यनिलया विक्रांता गणनायिका ॥ देव्या नामविकाराणि इत्येतानि यथाक्रमम् ॥ ३९ ॥ भद्रकाल्या मयोक्तानि सम्यक्फलप्रदानि च ॥ ये पठंति नरास्तेषां विद्यते न च पातकम् ॥ ३४० ॥ अरण्ये पर्वते वापि पुरे वाप्यथवा गृहे ॥ रक्षामेतां प्रयुंजीत जले वाथ स्थलेऽपि वा ॥ ४१ ॥ व्याघ्रकुंभीनचोरेभ्यो भयस्थाने विशेषतः ॥ आपत्स्वपि च सर्वासु देव्या नामानि कीर्तयेत् ॥ ४२ ॥ आर्यकग्रहभूतैश्च पूतनामातृभिस्तथा ॥ अभ्यर्दितानां बालानां रक्षामेतां प्रयोजयेत् ॥ ४३ ॥ महादेवीकले द्वे तु प्रज्ञा श्रीश्च प्रकीर्तिते ॥ आभ्यां देवीसहस्राणि यैर्व्याप्तमखिलं जगत् ॥ ४४ ॥ अनया देवदेवोसौ सत्या रुद्रो महेश्वरः ॥ आतिष्ठत्सर्वलोकानां हिताय परमेश्वरः ॥ ४५ ॥ रुद्रः पशुपतिश्चासीत्पुरा दग्धं पुरत्रयम् ॥ देवाश्च पशवः सर्वे बभूवुस्तस्य तेजसा ॥ ४६ ॥



इत्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ त्रिपुरदाहकथां सूचयति–रुद्र इति ॥ ४६ ॥

एतदादिसर्गाध्यायफलं कथयति—य इति ॥ २४७ ॥ " यो ब्रह्मरूपेण जगद्धि सर्वं ससर्ज वेदेषु पुरोपदिष्टम् । स विश्वरूपो भगवान्महेशो देव्या युतो रक्षतु सर्वतो माम् ॥
इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥ एकसप्ततिकेऽध्याये चरितं त्रिपुरौकसाम् । तन्नाशाय च देवानां यत्नः सर्वो

यः पठेच्छृणुयाद्वापि आदिसर्गक्रमं शुभम् ॥ स याति ब्रह्मणो लोकं श्रावयेद्वा द्विजोत्तमान्॥२४७॥इति श्रीलिंगमहापुराणे पूर्वभागे सृष्टि विस्तारो नाम सप्ततितमोध्यायः ॥ ७० ॥ ऋषय ऊचुः ॥ समासाद्विस्तराच्चैव सर्गः प्रोक्तस्त्वया शुभः ॥ कथं पशुपतिश्चासीत्पुरं दग्धुं महेश्वरः ॥ १ ॥ कथं च पशवश्चासन्देवाः सब्रह्मकाः प्रभोः ॥ मयस्य तपसा पूर्वं सुदुर्गं निर्मितं पुरम् ॥२ ॥ हैमं च राजतं दिव्यमयस्मय मनुत्तमम् ॥सुदुर्गं देवदेवेन दग्धमित्येव नः श्रुतम् ॥३॥ कथं ददाह भगवान् भगनेत्रनिपातनः॥ एकेनेषुनिपातेन दिव्येनापि तदा कथम् ॥४॥ विष्णुनोत्पादितैर्भूतैर्नं दग्धं तत्पुरत्रयम् ॥ पुरस्य संभवः सर्वो वरलाभः पुरा श्रुतः ॥ ५ ॥ इदानीं दहनं सर्वं वक्तुमर्हसि सुव्रत ॥ तेषां तद्वचनं श्रुत्वा सूतः पौराणिकोत्तमः॥६॥ यथा श्रुतं तथा प्राह व्यासाद्विश्वार्थसूचकात् ॥ सूत उवाच ॥ त्रैलोक्यस्यास्य शापाद्धि मनोवाक्कायसंभवात् ॥ ७ ॥ निहते तारके दैत्ये तारपुत्रे सबांधवे ॥ स्कंदेन वा प्रयत्नेन तस्य पुत्रा महाबलाः ॥ ८ ॥ विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् ॥ तपस्तेपुर्महात्मानो महाबलपराक्रमाः ॥ ९ ॥ तप उग्रं समास्थाय नियमे परमे स्थिताः ॥ तपसा कर्शयामासुर्देहान् स्वान्दानवोत्तमाः ॥ १० ॥ तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ दैत्या ऊचुः ॥ अवध्यत्वं च सर्वेषां सर्वभूतेषु सर्वदा ॥ ११ ॥ सहिता वरयामासुः सर्वलोकपितामहम् ॥ तानब्रवीत्तदा देवो लोकानां प्रभुरव्ययः ॥१२॥ नास्ति सर्वामरत्वं वै निवर्तध्वमतोसुराः ॥ अन्यं वरं वृणीध्वं वै यादृशं संप्ररोचते ॥ १३ ॥ ततस्ते सहिता दैत्याः संप्रधार्य परस्परम् ॥ ब्रह्माणमब्रुवन्दैत्याः प्रणिपत्य जगद्गुरुम् ॥ १४ ॥ वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ॥ विचरिष्याम लोकेश त्वत्प्रसादाज्जगद्गुरो ॥ १५ ॥

निरूप्यते ॥ ऋषयः शौनकादयः तेषामसुराणां तिस्रः पुर आसन्निति याजुषश्रुत्युपदर्शितां त्रिपुरासुरकथामपृच्छन्—कथमित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ पुरा श्रुतः संक्षेपेण श्रुत इत्यर्थः ॥ ५ ॥ तेषामियं व्यासोक्तिः श्रीधरैर्भागवते तथैव व्याख्यानात् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

॥१६॥१७॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥२५॥२६॥२७॥२८॥२९॥ प्रपादिभिः पानीयशालादिभिः ॥ ३०–३५ ॥नीलोत्पलदलेत्ययं सार्धश्लोकः ॥ ३६ ॥

तथा वर्षसहस्रेषु समेष्यामः परस्परम् ॥ एकीभावं गमिष्यंति पुराण्येतानि चानघ ॥ १६ ॥ समागतानि चैतानि यो हन्याद्भगवंस्तदा ॥ एकेनैवेषुणा देवः स नो मृत्युर्भविष्यति ॥ १७ ॥ एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥ ततो मयः स्वतपसा चक्रे वीरः पुराण्यथ ॥ १८ ॥ कांचनं दिवि तत्रासीदंतरिक्षे च राजतम् ॥ आयसं चाभवद्भूमौ पुरं तेषां महात्मनाम् ॥ १९ ॥ एकैकं योजनशतं विस्तारायामतः समम् ॥ कांचनं तारकाक्षस्य कमलाक्षस्य राजतम्॥२०॥विद्युन्मालेश्चायसं वै त्रिविधं दुर्गमुत्तमम् ॥ मयश्च बलवांस्तत्र दैत्यदानवपूजितः ॥ २१ ॥ हैरण्ये राजते चैव कृष्णायसमये तथा ॥ आलयं चात्मनः कृत्वा तत्रास्ते बलवांस्तदा ॥ २२ ॥ एवं बभूवु दैत्यानामतिदुर्गाणि सुव्रताः ॥ पुराणि त्रीणि विप्रेंद्रास्त्रैलोक्यमिव चापरम्॥२३॥ पुरत्रये तदा जाते सर्वे दैत्या जगत्रये॥ पुरत्रयं प्रविश्यैव बभूवुस्ते बलाधिकाः ॥ २४ ॥ कल्पद्रुमसमाकीर्णं गजवाजिसमाकुलम् ॥ नानाप्रासादसंकीर्णं मणिजालैः समावृतम् ॥ २५ ॥ सूर्यमंडलसंकाशैर्विमानैर्विश्वतोमुखैः ॥ पद्मरागमयैः शुभ्रैः शोभितं चंद्रसंन्निभैः ॥ २६ ॥ प्रासादैर्गोपुरैर्दिव्यैः कैलासशिखरोपमैः ॥ शोभितं त्रिपुरं तेषां पृथक्पृथगनुत्तमैः ॥ २७ ॥ दिव्यस्त्रीभिः सुसंपूर्णं गंधर्वैः सिद्धचारणैः ॥ रुद्रालयैः प्रतिगृहं साग्निहोत्रैर्द्विजोत्तमाः ॥ २८ ॥ वापीकूपतडागैश्च दीर्घिकाभिस्तु सर्वतः ॥ मत्तमातंगयूथैश्च तुरंगैश्च सुशोभनैः ॥२९॥ रथैश्च विविधाकारैर्विचित्रैर्विश्वतोमुखैः ॥ सभाप्रपादिभिश्चैव क्रीडास्थानैः पृथक्पृथक् ॥ ३० ॥ वेदाध्ययनशालाभिर्विविधाभिः समंततः ॥ अधृष्यं मनसाप्यन्यैर्मयस्यैव च मायया ॥ ३१ ॥ पतिव्रताभिः सर्वत्र सेवितं मुनिपुंगवाः ॥ कृत्वापि सुमहत्पापमपापैः शंकरार्चनात् ॥ ३२ ॥ दैत्येश्वरैर्महाभागैः सदारैः ससुतैर्द्विजाः ॥ श्रौतस्मार्तार्थधर्मज्ञैस्तद्धर्मनिरतैः सदा ॥ ३३ ॥ महादेवेतरं त्यक्त्वा देवं तस्यार्चनं स्थितैः ॥ व्यूढोरस्कैर्वृषस्कंधैः सर्वायुधधरैः सदा ॥ ३४ ॥ सर्वदा क्षुधितैश्चैव दावाग्निसदृशेक्षणैः ॥ प्रशांतैः कुपितैश्चैव कुब्जैर्वामनकैस्तथा ॥३५॥ नीलोत्पलदलप्रख्यैर्नीलकुंचितमूर्धजैः ॥ नीलाद्रिमेरुसंकाशैर्नीरदोपमनिःस्वनैः ॥ मयेन रक्षितैः सर्वैः शिक्षितैर्युद्धलालसैः ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥३९॥ ४० ॥ ४१ ॥ ततो यज्ञः तेन विष्णुना स्मृतः देवकार्यार्थसिद्धये आगत इति शेषः ॥४२॥४३॥ अनेनोपस्थितेन उपसदा तत्संज्ञकयागेन परमेश्वरं

अथ समररतैः सदा समंताच्छिवपदपूजनया सुलब्धवीर्यैः ॥ रविमरुदमरेंद्रसन्निकाशैः सुरमथनैः सुदृढैः सुसेवितं तत् ॥ ३७ ॥ सेंद्रा देवा द्विजश्रेष्ठा द्रुमा दावाग्निना यथा ॥ पुरत्रयाग्निना दग्धा ह्यभवन्दैत्यवैभवात् ॥ ३८ ॥ अथैवं ते तदा दग्धा देवा देवेश्वरं हरिम् ॥ अभिवंद्य तदा प्राहुस्तमप्रतिमवर्चसम् ॥ ३९ ॥ सोपि नारायणः श्रीमान् चिंतयामास चेतसा ॥ किं कार्यं देवकार्येषु भगवानिति स प्रभुः ॥ ४० ॥ तदा सस्मार वै यज्ञं यज्ञमूर्तिर्जनार्दनः ॥ यज्वा यज्ञभुगीशानो यज्वनां फलदः प्रभुः ॥ ४१ ॥ ततो यज्ञः स्मृतस्तेन देवकार्यार्थसिद्धये ॥ देवं ते पुरुषं चैव प्रणेमुस्तुष्टुवुस्तदा ॥ ४२ ॥ भगवानपि तं दृष्ट्वा यज्ञं प्राह सनातनम् ॥ सनातनस्तदा सेन्द्रान्देवा नालोक्य चाच्युतः ॥ ४३ ॥ श्रीविष्णुरुवाच ॥ अनेनोपसदा देवा यजध्वं परमेश्वरम् ॥ पुरत्रयविनाशाय जगत्त्रयविभूतये ॥४४॥ सूत उवाच ॥ अथ तस्य वचः श्रुत्वा देवदेवस्य धीमतः ॥ सिंहनादं महत्कृत्वा यज्ञेशं तुष्टुवुः सुराः॥ ४५ ॥ ततः संचिंत्य भगवान् स्वयमेव जनार्दनः ॥ पुनः प्राह स सर्वांस्तांस्त्रिदशांस्त्रिदशेश्वरः ॥ ४६ ॥ हत्वा दग्ध्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ॥ यजेद्यदि महादेव मपापो नात्र संशयः॥४७॥ अपापा नैव हंतव्याः पापा एव न संशयः॥ हंतव्याः सर्वयत्नेन कथं वध्याः सुरोत्तमाः॥४८॥ असुरा दुर्मदाः पापा अपि देवैर्महाबलैः॥तस्मान्न वध्या रुद्रस्य प्रभावात्परमेष्ठिनः॥४९॥कोहं ब्रह्माथवा देवा दैत्या देवारिसूदनाः ॥ मुनयश्च महात्मानः प्रसादेन विना प्रभोः ॥ ५० ॥ यः सप्तविंशको नित्यः परात्परतरः प्रभुः ॥ विश्वामरेश्वरो वंद्यो विश्वाधारो महेश्वरः ॥ ५१ ॥ स एव सर्व देवेशः सर्वेषामपि शंकरः ॥ लीलया देवदैत्येंद्रविभागमकरोद्धरः ॥ ५२ ॥ तस्यांशमेकं संपूज्य देवा देवत्वमागताः ॥ ब्रह्मा ब्रह्मत्वमापन्नो ह्यहं विष्णुत्वमेव च ॥५३॥ तमपूज्य जगत्यस्मिन् कः पुमान् सिद्धिमिच्छति ॥ तस्मात्तेनैव हंतव्या लिंगार्चनविधेर्बलात् ॥५४॥ धर्मनिष्ठाश्च ते सर्वे श्रौतस्मार्तविधौ स्थिताः॥ तथापि यजमानेन रौद्रेणोपसदा प्रभुम् ॥ रुद्रमिष्ट्वा यथान्यायं जेष्यामो दैत्यसत्तमान्॥५५॥

शिवमित्यर्थः ॥४४॥४५॥४६॥४७॥४८॥४९॥५०॥ सप्तविंशको जीवेशभेदमादायेत्यर्थः ॥ ५१ ॥ ५२ ॥ तस्य रुद्रस्य एकमंशं लिंगरूपमित्यर्थः ॥५३॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ धिष्ठिता अधिष्ठिता इत्यर्थः। अकारलोपश्छांदसः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

सतारकाक्षेण मयेन गुप्तं स्वस्थं च गुप्तं स्फटिकाभमेकम् ॥ को नाम हंतुं त्रिपुरं समर्थो मुक्त्वा त्रिनेत्रं भगवंतमेकम् ॥ ५६ ॥ सूत उवाच ॥ एवमुक्त्वा हरिश्चेष्ट्वा यज्ञेनोपसदा प्रभुम् ॥ उपविष्टो ददर्शाथ भूतसंघान्सहस्रशः ॥ ५७ ॥ शूलशक्तिगदाहस्तान् टंकोपलशिलायुधान् ॥ नानाप्रहरणोपेतान्नानावेषधरांस्तदा ॥ ५८ ॥ कालाग्निरुद्रसंकाशान् कालरुद्रोपमांस्तदा ॥ प्राह देवो हरिः साक्षात्प्रणिपत्य स्थितान् प्रभुः ॥ ५९ ॥ विष्णुरुवाच ॥ दग्ध्वा भित्त्वा च भुक्त्वा च गत्वा दैत्यपुरत्रयम् ॥ पुनर्यथागतं वीरा गंतुमर्हथ भूतये ॥ ६० ॥ ततः प्रणम्य देवेशं भूतसंघाः पुरत्रयम् ॥ प्रविश्य नष्टास्ते सर्वे शलभा इव पावकम् ॥ ६१ ॥ ततस्तु नष्टास्ते सर्वे भूता देवेश्वराज्ञया ॥ ननृतुर्मुमुदुश्चैव जगुर्दैत्याः सहस्रशः ॥ ६२ ॥ तुष्टुवुर्देवदेवेशं परमात्मानमीश्वरम् ॥ ततः पराजिता देवा ध्वस्तवीर्याः क्षणेन तु ॥ ६३ ॥ सेन्द्राः संगम्य देवेशमुपेन्द्रं धिष्ठिता भयात् ॥ तान्दृष्ट्वा चिंतयामास भगवान्पुरुषोत्तमः ॥ ६४ ॥ किं कृत्यमिति संतप्तः संतप्तान्सेन्द्रकान् क्षणम् ॥ कथं तु तेषां दैत्यानां बलं हत्वा प्रयत्नतः ॥ ६५ ॥ देवकार्य्यं करिष्यामि प्रसादात्परमेष्ठिनः ॥ पापं विचारतो नास्ति धर्मिष्ठानां न संशयः ॥ ६६ ॥ तस्माद्दैत्या न वध्यास्ते भूतैश्चोपसदोद्भवैः ॥ पापं नुदति धर्मेण धर्मे सर्वं प्रतिष्ठितम् ॥ ६७ ॥ धर्माद्दैश्वर्यमित्येषा श्रुतिरेषा सनातनी ॥ दैत्याश्चैते हि धर्मिष्ठाः सर्वे त्रिपुरवासिनः ॥ ६८ ॥ तस्मादवध्यतां प्राप्ता नान्यथा द्विजपुंगवाः ॥ कृत्वापि सुमहत्पापं रुद्रमभ्यर्चयंति ये ॥ ६९ ॥ मुच्यंते पातकैः सर्वैः पद्मपत्रमिवांभसा ॥ पूजया भोगसंपत्तिरवश्यं जायते द्विजाः ॥ ७० ॥ तस्मात्ते भोगिनो दैत्या लिंगार्चनपरायणाः ॥ तस्मात्कृत्वा धर्मविघ्नमहं देवाः स्वमायया ॥ ७१ ॥ दैत्यानां देवकार्यार्थं जेष्येहं त्रिपुरं क्षणात् ॥ सूत उवाच ॥ विचार्यैवं ततस्तेषां भगवान्पुरुषोत्तमः ॥ कर्तुं व्यवसितश्चाभूद्धर्मविघ्नं सुरारिणाम् ॥ ७२ ॥ असृजच्च महातेजाः पुरुषं चात्मसंभवम् ॥ मायी मायामयं तेषां धर्मविघ्नार्थमच्युतः ॥ ७३ ॥

॥ ७० ॥ ७१ ॥ ७२ ॥ मायी अच्युतः तेषां त्रिपुरवासिनां धर्मविघ्नार्थं मायामयं पुरुषमसृजत् ॥ ७३ ॥

मायी सर्वेषां शास्ता विष्णुः दृष्टप्रत्ययसंयुतमत एव सर्वसंमोहकं शास्त्रमकरोदित्यन्वयः ॥ ७४ ॥ ग्रंथः षोडशलक्षो यस्य तद्ग्रंथषोडशलक्षकमतिविस्तृतमित्यर्थः ॥ ७५ ॥ नास्तिकशास्त्रस्वरूपं कथयति—श्रौतामिति । एतद्विस्तर उक्तः काशीखंडे सौगतरूपेण विष्णुना-"अनादिसिद्धः संसारः कर्तृकर्मविवर्जितः॥ स्वयं प्रादुर्भवेदेष स्वयमेव विलीयते॥ अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ॥ परितः परिपूज्यानि किमन्यैः परिपूजितैः ॥ पंच कर्मेंद्रियाण्येव पंच बुद्धींद्रियाणि च ॥ मनोबुद्धिरिह प्रोक्तं द्वादशायतनं शुभम् ॥ इहैव स्वर्गनरकौ प्राणिनां नान्यतः क्वचित् ॥ सुखं स्वर्गः समाख्यातो दुःखं नरक एव हि ॥ सुखेषु भुज्यमानेषु यत्स्याद्देहविसर्जनम् ॥ अयमेव परो मोक्षो न मोक्षोन्यः

शास्त्रं च शास्ता सर्वेषामकरोत्कामरूपधृक् ॥ सर्वसंमोहनं मायी दृष्टप्रत्ययसंयुतम् ॥ ७४ ॥ एतत्स्वांगभवायैव पुरुषायोपदिश्य तु ॥ मायी मायामयं शास्त्रं ग्रंथषोडशलक्षकम् ॥ ७५ ॥ श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम् ॥ इहैव स्वर्गनरकं प्रत्ययं नान्यथा पुनः ॥ ७६ ॥ तच्छास्त्रमुपदिश्यैव पुरुषायाच्युतः स्वयम् ॥ पुरत्रयविनाशाय प्राहैनं पुरुषं हरिः ॥ ७७ ॥ गंतुमर्हसि नाशाय भो तूर्णं पुरवासिनाम् ॥ धर्मास्तथा प्रणश्यंतु श्रौतस्मार्ता न संशयः ॥ ७८ ॥ ततः प्रणम्य तं मायी मायाशास्त्रविशारदः ॥ प्रविश्य तत्पुरं तूर्णं मुनिर्मायां तदाकरोत् ॥ ७९ ॥ मायया तस्य ते दैत्याः पुरत्रयनिवासिनः ॥ श्रौतं स्मार्तं च संत्यज्य तस्य शिष्यास्तदाभवन् ॥ ८० ॥ तत्यजुश्च महादेवं शंकरं परमेश्वरम् ॥ नारदोपि तदा मायी नियोगान्मायिनः प्रभोः ॥८१ ॥ प्रविश्य तत्पुरं तेन मायिना सह दीक्षितः ॥ मुनिः शिष्यैः प्रशिष्यैश्च संवृतः सर्वतः स्वयम् ॥ ८२ ॥ स्त्रीधर्मं चाकरोत्स्त्रीणां दुश्चारफलसिद्धिदम् ॥ चक्रुस्ताः सर्वदा लब्ध्वा सद्य एव फलं स्त्रियः ॥८३॥ जनासक्ता बभूवुस्ता विनिंद्य पतिदेवताः ॥ अद्यापि गौरवात्तस्य नारदस्य कलौ मुनेः ॥८४॥ नार्यश्चरंति संत्यज्य भर्तॄन्स्वैरं वृथाधमाः ॥ स्त्रीणां माता पिता बंधुः सखा मित्रं च बांधवः ॥ ८५ ॥ भर्ता एव न संदेहस्तथाप्यासहमायया ॥ कृत्वापि सुमहत्पापं या भर्तुः प्रेमसंयुता ॥ ८६ ॥ प्राप्नुयात्परमं स्वर्गं नरकं च विपर्ययात् ॥ पुरैका मुनिशार्दूलाः सर्वधर्मान् सद्म पतिम् ॥ ८७ ॥

क्वचित्पुनः॥" इत्यादि ॥७६॥७७॥७८॥ मुनिस्तत्संज्ञः 'मुनिः शाक्यमुनिस्तु यः' इत्यमरः ॥७९॥८०॥८१॥८२॥ दुश्चारफलसिद्धिदं व्यभिचारफलसिद्धिदमित्यर्थः ॥८३॥ तस्य मायिशिष्यनारदस्य गौरवात् गुरुत्वादित्यर्थः । तत्प्रकार उक्तः काशीखंडे—"याचमानमनोवृत्तिप्रीणने यस्य नो जनिः ॥ तेन भूर्भारवत्येषा समुद्रागद्रुमैर्न हि ॥ सत्वरो गत्वरो देहः संचयाः सपरिक्षयाः । इति विज्ञाय विज्ञाता देहसौख्यं प्रसाधयेत्॥" इत्यादि॥८४॥८५॥ अस्य विष्णोरसहा आसहा सा चासौ माया चासहमाया तयेत्यर्थः॥८६॥८७॥

पुरैकाः सर्वान्धर्मानन्यान्देवान् जगद्गुरूंश्च संत्यज्य पतिमपूजयंस्ताः स्वर्गलोकमासाद्य मोदंत इति पूर्वस्थैरन्वयः ॥८८॥८९॥९०॥९१॥९२॥९३॥९४॥९५॥९६॥९७॥९८॥

संत्यज्यापूजयन्साध्व्यो देवानन्याञ्जगद्गुरून् ॥ ताः स्वर्गलोकमासाद्य मोदंते विगतज्वराः ॥ ८८ ॥ नरकं च जगामान्या तस्माद्भर्ता परा गतिः ॥ तथापि भर्तॄन्स्वांस्त्यक्त्वा बभूवुः स्वैरवृत्तयः ॥ ८९ ॥ मायया देवदेवस्य विष्णोस्तस्याज्ञया प्रभोः ॥ अलक्ष्मीश्च स्वयं तस्य नियोगात्त्रिपुरं गता ॥ ९० ॥ या लक्ष्मीस्तपसा तेषां लब्धा देवेश्वरादजात् ॥ बहिर्गता परित्यज्य नियोगाद्ब्रह्मणः प्रभोः ॥ ९१ ॥ बुद्धिमोहं तथाभूतं विष्णुमायाविनिर्मितम् ॥ तेषां दत्त्वा क्षणं देवस्तासां मायी च नारदः ॥ ९२ ॥ सुखासीनौ ह्यसंभ्रांतौ धर्मविघ्नार्थमव्ययौ ॥ एवं नष्टे तदा धर्मे श्रौतस्मार्ते सुशोभने ॥ ९३ ॥ पाषंडे ख्यापिते तेन विष्णुना विश्वयोनिना ॥ त्यक्ते महेश्वरे दैत्यैस्त्यक्ते लिंगार्चने तथा ॥ ९४ ॥ स्त्रीधर्मे निखिले नष्टे दुराचारे व्यवस्थिते ॥ कृतार्थ इव देवेशो देवैः सार्धमुमापतिम् ॥ ९५ ॥ तपसा प्राप्य सर्वज्ञं तुष्टाव पुरुषोत्तमः ॥ श्रीभगवानुवाच ॥ महेश्वराय देवाय नमस्ते परमात्मने ॥ ९६ ॥ नारायणाय शर्वाय ब्रह्मणे ब्रह्मरूपिणे ॥ शाश्वताय ह्यनंताय अव्यक्ताय च ते नमः ॥ ९७ ॥ सूत उवाच ॥ एवं स्तुत्वा महादेवं दंडवत्प्रणिपत्य च ॥ जजाप रुद्रं भगवान्कोटिवारं जले स्थितः ॥ ९८ ॥ देवाश्च सर्वे ते देवं तुष्टुवुः परमेश्वरम् ॥ सेंद्राः ससाध्याः सयमाः सरुद्राः समरुद्गणाः ॥९९॥ देवा ऊचुः ॥ नमः सर्वात्मने तुभ्यं शंकरायार्तिहारिणे ॥ रुद्राय नीलरुद्राय कद्रुद्राय प्रचेतसे ॥ १०० ॥ गतिर्नः सर्वदास्माभिर्वंद्यो देवारिमर्दनः ॥ त्वमादिस्त्वमनंतश्च अनंतश्चाक्षयः प्रभुः ॥ १ ॥ प्रकृतिः पुरुषः साक्षात्स्रष्टा हर्ता जगद्गुरो ॥ त्राता नेता जगत्यास्मिन्द्विजानां द्विजवत्सल ॥ २ ॥ वरदो वाङ्मयो वाच्यो वाच्यवाचकवर्जितः ॥ याज्यो मुक्त्यर्थमीशानो योगिभिर्योगविभ्रमैः ॥ ३ ॥ हृत्पुंडरीकसुषिरे योगिनां संस्थितः सदा ॥ वदंति सूरयः संतं परं ब्रह्मस्वरूपिणम् ॥ ४ ॥ भवंतं तत्त्वमित्यार्यास्तेजोराशिं परात्परम् ॥ परमात्मानमित्याहुरस्मिञ्जगति तद्विभो ॥ ५ ॥ दृष्टं श्रुतं स्थितं सर्वं जायमानं जगद्गुरो ॥ अणोरल्पतरं प्राहुर्महतोपि महत्तरम् ॥ ६ ॥

॥९९॥ कद्रुद्रः प्रशस्तो रुद्रः 'कश्च श्लाघायाम्' इति धातोर्निष्पन्नः कच्छब्द इति वेदभाष्ये उक्तम् ॥ १०० ॥ अनंतः शेषरूपः॥१॥२॥३॥संतं सर्वत्र विद्यमानम्॥४-६ ॥

॥ ७ ॥ ८ ॥९ ॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ सोम उमासहितः अथ देववाक्यश्रवणानंतरं स उमामालिंग्येत्यनेन देवकार्ये विलंबः सूच्यते ॥ १६ ॥
॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ वारीजरागः पद्मरागस्तदादिमणिमिश्रितैश्चमत्कृतैः हारैस्तथांगदैर्भूषितमित्यनुषंगः ॥२४॥२५॥ कुंकुमाद्यैः कुंकुम

सर्वतः पाणिपादं त्वां सर्वतोक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठसि ॥ ७ ॥ महादेवमनिर्देश्यं सर्वज्ञं त्वामनामयम् ॥ विश्वरूपं विरूपाक्षं सदाशिवमनामयम् ॥ ८ ॥ कोटिभास्करसंकाशं कोटिशीतांशुसन्निभम् ॥ कोटिकालाग्निसंकाशं षड्विंशकमनीश्वरम् ॥ ९ ॥ प्रवर्तकं जगत्यस्मिन्प्रकृतेः प्रपितामहम् ॥ वदंति वरदं देवं सर्वावासं स्वयंभुवम् ॥११०॥ श्रुतयः श्रुतिसारं त्वां श्रुतिसारविदो जनाः ॥ ११ ॥ अदृष्टमस्माभिरनेकमूर्ते विना कृतं यद्भवताथ लोके ॥ त्वमेव दैत्यान्सुरभूतसंघान्देवान्नरान्स्थावरजंगमांश्च ॥ १२ ॥ पाहि नान्या गतिः शंभो विनिहत्यासुरोत्तमान् ॥ मायया मोहिताः सर्वे भवतः परमेश्वर ॥ १३ ॥ यथा तरंगा लहरीसमूहा युध्यंति चान्योन्यमपांनिधौ च ॥ जलाश्रयादेव जडीकृताश्च सुरासुरास्तद्वदजस्य सर्वम् ॥ १४ ॥ सूत उवाच ॥ य इदं प्रातरुत्थाय शुचिर्भूत्वा जपेन्नरः ॥ शृणुयाद्वा स्तवं पुण्यं सर्वकाममवाप्नुयात् ॥ १५ ॥ स्तुतस्त्वेवं सुरैर्विष्णोर्जपेन च महेश्वरः ॥ सोमः सोमामथालिंग्य नंदिदत्तकरः स्मयन् ॥ १६ ॥ प्राह गंभीरया वाचा देवानालोक्य शंकरः ॥ ज्ञातं मयेदमधुना देवकार्यं सुरेश्वराः ॥ १७ ॥ विष्णोर्मायाबलं चैव नारदस्य च धीमतः ॥ तेषामधर्मनिष्ठानां दैत्यानां देवसत्तमाः ॥१८॥पुरत्रयविनाशं च करिष्येहं सुरोत्तमाः ॥ सूत उवाच ॥ अथ सब्रह्मका देवाः सेंद्रोपेंद्राः समागताः॥१९॥श्रुत्वा प्रभोस्तदा वाक्यं प्रणेमुस्तुष्टुवुश्च ते॥अप्येतदंतरं देवी देवमालोक्य विस्मिता ॥१२०॥ लीलांबुजेन चाहत्य कलमाह वृषध्वजम् ॥ देव्युवाच ॥ क्रीडमानं विभो पश्य षण्मुखं रविसन्नि ।भम्॥२१॥पुत्रं पुत्रवतां श्रेष्ठं भूषितं भूषणैः शुभैः॥ मुकुटैः कटकैश्चैव कुंडलैर्वलयैः शुभैः॥२२॥नूपुरैश्छन्नवीरैश्च तथा ह्युदरबन्धनैः ॥ किंकिणीभिरनेकाभिर्हैमैरश्वत्थपत्रकैः ॥२३॥ कल्पकद्रुमजैः पुष्पैः शोभितैरलकैः शुभैः ॥ हारैर्वारीजरागादिमणिचित्रैस्तथांगदैः॥२४॥मुक्ताफलमयैर्हारैः पूर्णचंद्रसमप्रभैः ॥ तिलकैश्च महादेव पश्य पुत्रं सुशोभनम् ॥ २५ ॥ अंकितं कुंकुमाद्यैश्च वृत्तं भसितनिर्मितम् ॥ वक्त्रवृंदं च पश्येश वृंदं कामलकं यथा ॥ २६ ॥

कस्तूर्यादिद्रव्यैरंकितं भसितेन भस्मना निर्मितं वृत्तं भालस्थवर्तुलतिलकं कामलकं कमलसंबंधि यथा वृंदं तद्वद्वक्त्रवृंदं मुखसमुदायं च पश्येत्यन्वयः ॥ २६ ॥

हे विभो त्वं शुभानि नेत्राणि च परं मंगलार्थं विचित्राणि अंजनानि मातृभिः चामुंडादिभिः गंगादिभिः कृत्तिकाद्यैः षट्कृत्तिकादिगणैः स्वाहया वह्निपत्न्या च विशेषतः कल्पितानीति शेषः । पश्येत्यग्रिमस्थैरन्वयः । आसां सर्वासां स्कंदमातृता भारते विस्तरेणोक्ता ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ ससृजुरित्ययं सार्धश्लोकः ॥ ३३ ॥

नेत्राणि च विभो पश्य शुभानि त्वं शुभानि च ॥ अंजनानि विचित्राणि मंगलार्थं च मातृभिः ॥ २७ ॥ गंगादिभिः कृत्तिकाद्यैः स्वाहया च विशेषतः ॥ इत्येवं लोकमातुश्च वाग्भिः संबोधितः शिवः ॥ २८ ॥ न ययौ तृप्तिमीशानः पिबन्स्कंदाननामृतम् ॥ न सस्मार च तान्देवान्दैत्यशस्त्रनिपीडितान् ॥२९॥ स्कंदमालिंग्य चाघ्राय नृत्य पुत्रेत्युवाच ह ॥ सोपि लीलालसो बालो ननर्तार्तिहरः प्रभुः॥१३०॥ सहैव ननृतुश्चान्ये सह तेन गणेश्वराः ॥ त्रैलोक्यमखिलं तत्र ननर्तेशाज्ञया क्षणम् ॥ ३१ ॥ नागाश्च ननृतुः सर्वे देवाः सेंद्रपुरोगमाः ॥ तुष्टुवुर्गणपाः स्कंदं मुमोदांबा च मातरः ॥३२॥ ससृजुः पुष्पवर्षाणि जगुर्गंधर्वकिन्नराः ॥ नृत्यामृतं तदा पीत्वा पार्वतीपरमेश्वरौ ॥ अवापतुस्तदा तृप्तिं नंदिना च गणेश्वराः ॥३३॥ ततः स नंदी सह षण्मुखेन तथा च सार्धं गिरिराजपुत्र्या ॥ विवेश दिव्यं भवनं भवोपि यथांबुदोऽन्यांबुदमंबुदाभः ॥३४॥ द्वारस्य पार्श्वे ते तस्थुर्देवा देवस्य धीमतः ॥ तुष्टुवुश्च महादेवं किंचिदुद्विग्नचेतसः ॥३५॥ किंतु किंत्विति चान्योन्यं प्रेक्ष्य चैतत्समाकुलाः ॥ पापा वयमिति ह्यन्ये अभाग्याश्चेति चापरे ॥३६ ॥ भाग्यवंतश्च दैत्येंद्रा इति चान्ये सुरेश्वराः ॥ पूजाफलमिमं तेषामित्यन्ये नेति चापरे ॥३७॥ एतस्मिन्नंतरे तेषां श्रुत्वा शब्दाननेकशः ॥ कुंभोदरो महातेजा दंडेनाताडयत्सुरान् ॥ ३८ ॥ दुद्रुवुस्ते भयाविष्टा देवा हाहेतिवादिनः॥ अपतन्मुनयश्चान्ये देवाश्च धरणीतले॥३९॥ अहो विधेर्बलं चेति मुनयः कश्यपादयः॥ दृष्ट्वापि देवदेवेशं देवानां चासुरद्विषाम् ॥१४०॥ अभाग्यान्न समाप्तं तु कार्यमित्यपरे द्विजाः॥ प्रोचुर्नमः शिवायेति पूज्य चाल्पतरं हृदि ॥ ४१॥ ततः कपर्दी नंदीशो महादेवप्रियो मुनिः॥ शूली माली तथा हाली कुंडली कल्पी गदी॥४२॥ वृषमारुह्य सुश्वेतं ययौ तस्याज्ञया तदा॥ ततो वै नंदिनं दृष्ट्वा गणः कुंभोदरोपि सः॥४३॥ प्रणम्य नंदिनं मूर्ध्ना सह तेन त्वरन्ययौ ॥ नंदी भाति महातेजा वृषपृष्ठे वृषध्वजः॥४४॥

अंबुदवत्सूर्यवदाभा कांतिर्यस्य सोंबुदाभः भवः शिवः अंबुदो मेघो यथान्यांबुदं तथा स्वभासदृशं दिव्यं भवनं विवेशेत्यन्वयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ कुंभोदरस्तत्संज्ञकगणः ॥ ३८ ॥ ३९ ॥ १४० ॥ अल्पतरं सूक्ष्मरूपं हृदि हृत्कमल इत्यर्थः ॥ ४१ ॥ कपर्दी जटाजूटवान् ॥ ४२ ॥ ४३ ॥ ४४ ॥

मेघपृष्ठे मेघरूपविष्णुपृष्ठे इत्यर्थः ॥ ४५ ॥ तत्र छत्रे मुक्ताफलमयी शुभा सा अंतर्बद्धमाला विभोः शिवस्य मूर्ध्नि आकाशान्निपतिता यथा गंगा तथा भातीत्यग्रिमेणान्वयः ॥ ४६ ॥ ४७ ॥ वज्रिणः इंद्रस्येत्यर्थः ॥ ४८ ॥ ४९ ॥१५०॥ भवः शिवरूपो नंदी गंधवारिणा देवनिसृष्टगंधोदकेन स्नातया दिव्यया चांद्रया चंद्रलेखया रेजे इत्यन्वयः

सगणो गणसेनानीर्मेघपृष्ठे यथा भवः ॥ दशयोजनविस्तीर्णं मुक्ताजालैरलंकृतम् ॥ ४५ ॥ सितातपत्रं शैलादेराकाशमिव भाति तत् ॥ तत्रांतर्बद्धमाला सा मुक्ताफलमयी शुभा ॥ ४६ ॥ गंगाकाशान्निपतिता भाति मूर्ध्नि विभोर्यथा ॥ अथ दृष्ट्वा गणाध्यक्षं देवदुंदुभयः शुभाः ॥ ४७ ॥ नियोगाद्वज्रिणः सर्वे विनेदुर्मुनिपुंगवाः ॥ तुष्टुवुश्च गणेशानं वाग्भिरिष्टप्रदं शुभम् ॥ ४८ ॥ यथा देवा भवं दृष्ट्वा प्रीतिकंटकितत्वचः ॥ नियोगाद्वज्रिणो मूर्ध्नि पुष्पवर्षं च खेचराः ॥ ४९ ॥ ववृषुश्च सुगंधाढ्यं नंदिनो गगनोदितम् ॥ वृष्ट्या तुष्टस्तदा रेजे तुष्ट्या पुष्ट्या यथार्थया ॥ १५० ॥ नंदी भवश्चांद्रया तु स्नातया गंधवारिणा ॥ पुष्पैर्नानाविधैस्तत्र भाति पृष्ठं वृषस्य तत् ॥५१॥ संकीर्णं तु दिवः पृष्ठं नक्षत्रैरिव सुव्रताः ॥ कुसुमैः संवृतो नंदी वृषपृष्ठे रराज सः ॥ ५२ ॥ दिवः पृष्ठे यथा चंद्रो नक्षत्रैरिव सुव्रताः ॥ तं दृष्ट्वा नंदिनं देवाः सेंद्रोपेंद्रास्तथाविधम् ॥ ५३ ॥ तुष्टुवुर्गणपेशानं देवदेवमिवापरम् ॥ देवा ऊचुः ॥ नमस्ते रुद्रभक्ताय रुद्रजाप्यरताय च ॥ ५४ ॥ रुद्रभक्तार्तिनाशाय रौद्रकर्मरताय ते ॥ कूष्मांडगणनाथाय योगिनां पतये नमः ॥ ५५ ॥ सर्वदाय शरण्याय सर्वज्ञायार्तिहारिणे ॥ वेदानां पतये चैव वेदवेद्याय ते नमः ॥ ५६ ॥ वज्रिणे वज्रदंष्ट्राय वज्रिवज्रनिवारिणे ॥ वज्रालंकृतदेहाय वज्रिणाराधिताय ते ॥ ५७ ॥ रक्ताय रक्तनेत्राय रक्तांबरधराय ते ॥ रक्तानां भवपादाब्जे रुद्रलोकप्रदायिने ॥ ५८ ॥ नमः सेनाधिपतये रुद्राणां पतये नमः ॥ भूतानां भुवनेशानां पतये पापहारिणे ॥ ॥ ५९ ॥ रुद्राय रुद्रपतये रौद्रपापहराय ते ॥ नमः शिवाय सौम्याय रुद्रभक्ताय ते नमः ॥ १६० ॥ सूत उवाच ॥ ततः प्रीतो गणाध्यक्षः प्राह देवाञ्छिलात्मजः ॥ रथं च सारथिं शंभोः कार्मुकं शरमुत्तमम् ॥ ६१ ॥ कर्तुमर्हथ यत्नेन नष्टं मत्वा पुरत्रयम् ॥ अथ ते ब्रह्मणा सार्धं तथा वै विश्वकर्मणा ॥ ६२ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ वज्रिवज्रमिंद्रप्रयुक्तवज्रं निवारयति तच्छीलस्तस्मै वज्रैर्हीरकैरलंकृतो देहो यस्य तस्मै नम इत्यन्वयः ॥ ५७ ॥ ५८ ॥ ॥ ५९ ॥ १६० ॥ ६१ ॥ ६२ ॥

सुसंरब्धा अतित्वरायुक्ता इत्यर्थः ॥ १६३ ॥ पाषण्डानामसद्वादैः कलिजैर्दोषसंचयैः । अपविद्धा न मे सांब कृपयास्तु मतिस्त्वयि ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ द्विसप्ततितमेऽध्याये महाटोपाच्च वै विभोः । यानं त्रिपुरनाशाय कार्यसिद्ध्यादि कीर्त्यते ॥ सूतः रथनिर्माणादिकं कथयति—अथेत्यादिना । अथ देवप्रेरणानंतरं सर्वलोकमयः सप्तलोकावयव इत्यर्थः ॥ १ ॥ सर्वभूतमयो गगनादिपंचभूतात्मकः सर्वदेवमयः सर्व देवप्रचुरः ॥ २ ॥ रथांगं चक्रम् ॥ ३ ॥ ४ ॥ ऋक्षाणि नक्षत्राणि वामस्य चंद्ररूपसव्यचक्रस्यैव भूषणमित्यनेन दक्षिणचक्रस्य सूर्यरूपत्वादक्षेषु तद्भूषणत्वाभावो बोध्यते । तयोश्चक्रयोर्नेम्योः भूस्पर्शि बहिर्भागाः षड् ऋतवो वसंतादय इत्यर्थः ॥ ५ ॥ पुष्करमवकाशः अंतरिक्षं गगनमित्यर्थः । रथनीडः सारथिस्थानं मंदरस्तत्संज्ञकपर्वतः रथकूबरौ पूर्वापरयुगंधरौ अस्तादि

रथं चक्रुः सुसंरब्धा देवदेवस्य धीमतः ॥१६३॥ इति श्रीलिंगमहापुराणे पूर्वभागे पुरदाहे नंदिकेश्वरवाक्यं नाम एकसप्ततितमोऽध्यायः॥७१॥

सूत उवाच ॥ अथ रुद्रस्य देवस्य निर्मितो विश्वकर्मणा ॥ सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥ १ ॥ सर्वभूतमयश्चैव सर्वदेवनमस्कृतः॥ सर्वदेवमयश्चैव सौवर्णः सर्वसंमतः ॥२॥ रथांगं दक्षिणं सूर्यो वामांगं सोम एव च ॥ दक्षिणं द्वादशारं हि षोडशारं तथोत्तरम्॥३॥ अरेषु तेषु विप्रेंद्राश्चादित्या द्वादशैव तु ॥ शशिनः षोडशारेषु कला वामस्य सुव्रताः॥४॥ ऋक्षाणि च तदा तस्य वामस्यैव तु भूषणम् ॥ नेम्यः षड्ऋतवश्चैव तयोर्वै विप्रपुंगवाः ॥ ५ ॥ पुष्करं चांतरिक्षं वै रथनीडश्च मंदरः ॥ अस्ताद्रिरुदयाद्रिश्च उभौ तौ कूबरौ स्मृतौ ॥ ६ ॥ अधिष्ठानं महामेरुराश्रयाः केसराचलाः ॥ वेगः संवत्सरस्तस्य अयने चक्रसंगमौ ॥ ७ ॥ मुहूर्ता बंधुरास्तस्य शम्याश्चैव कलाः स्मृताः॥ तस्य काष्ठाः स्मृता घोणा चाक्षदंडा क्षणाश्च वै ॥ ८ ॥ निमेषाश्चानुकर्षाश्च ईषा चास्य लवाः स्मृताः ॥ द्यौर्वरूथं रथस्यास्य स्वर्गमोक्षावुभौ ध्वजौ ॥ ९ ॥ धर्मो विरागो दंडोस्य यज्ञा दंडाश्रयाः स्मृताः ॥ दक्षिणाः संधयस्तस्य लोहाः पंचाशदग्रयः ॥ १० ॥

रुदयाद्रिरुभौ पर्वतौ स्मृतावित्यन्वयः ॥ ६ ॥ अधिष्ठानं मुख्यासनं महामेरुः पूज्यसुमेरुपर्वतः आश्रयाः मेर्वाश्रयाः केसराचलाः प्रत्यंतपर्वता इत्यर्थः । तस्य रथस्य वेगश्चक्रभ्रमः संवत्सरः चक्रसंगमौ अक्षप्रांतभागौ अयने दक्षिणोत्तरसंज्ञे ॥ ७ ॥ तस्य रथस्य बंधुरास्तल्पानि मुहूर्ताः शम्याः वर्तुलपट्टिकाः 'शंब्या' इति लोके प्रसिद्धाः । कलास्त्रिंशत्काष्ठात्मिकाः तस्य घोणा नासिका काष्ठा अष्टादशनिमेषरूपाः अक्षदंडाश्चक्राधारदंडाः क्षणास्त्रिंशत्कलात्मकाः स्मृता इत्यन्वयः ॥ ८ ॥ अनुकर्षाः अधःस्थदारूणि निमेषाः अक्षिस्पंदकालाः ईषा युगाक्षसंधानं त्रिवेणुमयं काष्ठं लवाः निमेषादपि सूक्ष्मकालाः वरूथं रथगुप्तिर्द्यौः स्वर्गः ॥ ९ ॥ धर्मो विसर्गोस्य दंडः ध्वजस्तंभः दंडाश्रयाः ध्वजदंडप्रग्रहाः यज्ञास्तत्र स्वर्गध्वजस्य सकामाः मोक्षध्वजस्य निष्कामा इति विवेकः। दक्षिणाः यज्ञेषु दीयमानाः तस्य रथस्य संधयः संधिस्थानानीत्यर्थः। पंचाशदग्रयः लोहाः आयसकीलकाः॥१०॥

युगांतकोटी धुर्ययोजनदंडाग्रभागौ अव्यक्तं प्रधानमीषादंड इषादं[illegible]महनद्रव्यपात्रवणुमान् बुद्धिर्महत्तत्त्वम् ॥ ११ ॥ भूतानि गगनादीनीत्यर्थः ॥ १२ ॥ पदानि वेदपदविभागाः षडंगानि शिक्षादीनि ॥ १३ ॥ पुराणादीनि वालाश्रयाः पटाः कंबला इत्यर्थः ॥ १४ ॥ मंत्राः गायत्र्यादयः वर्णाः कादयः पादाश्छंदश्चतुर्थांशाः आश्रमाः ब्रह्मचर्यादयस्तेषां कंबलानां घंटाः स्मृता इत्यन्वयः । अवच्छेदो बंधनरज्जुरनंतः शेषः ॥ १५ ॥ पुष्कराद्यास्तत्संज्ञकादिमेघाः पताकाः ॥ १६ ॥ रथकंबलिकाः बाह्यकंबला इत्यर्थः ॥ १७ ॥ १८ ॥ आवहाद्याः सप्त तत्संख्याका वायुनेमयः हैमं सौवर्णं सोपानं अभीषुधरा रथरश्मिग्राहकाः ॥ १९ ॥ समं समप्रमाणेन ततो विस्तृतः लोकालोकाचलः

युगांतकोटी तौ तस्य धर्मकामावुभौ स्मृतौ ॥ ईषादंडस्तथाव्यक्तं बुद्धिस्तस्यैव नड्वलः ॥ ११ ॥ कोणस्तथा ह्यहंकारो भूतानि च बलं स्मृतम् ॥ इंद्रियाणि च तस्यैव भूषणानि समंततः ॥ १२ ॥ श्रद्धा च गतिरस्यैव वेदास्तस्य हयाः स्मृताः ॥ पदानि भूषणान्येव षडंगान्युपभूषणम् ॥ १३ ॥ पुराणन्यायमीमांसाधर्मशास्त्राणि सुव्रताः ॥ वालाश्रयाः पटाश्चैव सर्वलक्षणसंयुताः ॥ १४ ॥ मंत्रा घंटाः स्मृतास्तेषां वर्णाः पादास्तथाश्रमाः ॥ अवच्छेदो ह्यनंतस्तु सहस्रफणभूषितः ॥ १५ ॥ दिशः पादा रथस्यास्य तथा चोपदिशश्च ह ॥ पुष्कराद्याः पताकाश्च सौवर्णा रत्नभूषिताः ॥ १६ ॥ समुद्रास्तस्य चत्वारो रथकंबलिकाः स्मृताः ॥ गंगाद्याः सरितः श्रेष्ठाः सर्वाभरणभूषिताः ॥ १७ ॥ चामरासक्तहस्ताग्राः सर्वाः स्त्रीरूपशोभिताः ॥ तत्रतत्र कृतस्थानाः शोभयांचक्रिरे रथम् ॥ १८ ॥ आवहाद्यास्तथा सप्त सोपानं हैममुत्तमम् ॥ सारथिर्भगवान्ब्रह्मा देवाभीषुधराः स्मृताः ॥ १९ ॥ प्रतोदो ब्रह्मणस्तस्य प्रणवो ब्रह्मदैवतम् ॥ लोकालोकाचलस्तस्य ससोपानः समंततः ॥२०॥ विषमश्च तदाबाह्यो मानसाद्रिः सुशोभनः ॥ नासाः समंततस्तस्य सर्व एवाचलाः स्मृताः॥२१॥ तलाः कपोताः कापोताः सर्वे तलनिवासिनः ॥ मेरुरेव महाछत्रं मंदरः पार्श्वडिंडिमः ॥ २२ ॥ शैलेंद्रः कार्मुकं चैव ज्या भुंजगाधिपः स्वयम् ॥ कालरात्र्या तथैवेह तथेन्द्रधनुषा पुनः ॥ २३ ॥

ससोपानः सप्तवायुस्कंधात्मकसोपानयुक्तः ॥ २० ॥ तस्य रथस्याबाह्य आभ्यंतरः विषमः पादन्यासाधोभागः मानसाद्रिः सर्वे अचलाः पर्वताः समंततः तस्य रथस्य नासाः स्मृता इत्यन्वयः ॥ २१ ॥ तलाः सप्ततलानि कापोताः मज्जनाः सर्वे तलनिवासिनः कपोताः कपोतपक्षिसदृशाः कपोताः कूपादिदरीषु प्रायशस्तिष्ठंतीति तलवासिनां तत्सादृश्यं ' कापोतं मज्जने ' इति विश्वः । मेरुरेव महाछत्रमत्र सौवर्णच्छत्रे मेरोरुत्प्रेक्षा वा आसन्नभूतस्यापि अंशतः छत्रधनुष्यरूपता ज्ञेया मंदरस्तत्संज्ञकपर्वतोप्यंशतः पार्श्वडिंडिमः पृष्ठराघम् ॥ २२ ॥ शैलेंद्रो मेरुः भुजंगाधिपो वासुकिः कालरात्र्या इंद्रधनुषा च सह स्वयं ज्या धनुर्मौर्वीत्यर्थः ॥ २३ ॥

शल्यमायसनिर्मिताग्रभागः सोमश्चंद्रः ॥ २४ ॥ कालाग्निः प्रलयाग्निः तीक्ष्णः निशिताग्रभागः अनीकं बलं विषसंभूतं कालकूटविषोत्पन्नं वायव आवहाद्या वाजकाः पिच्छाः स्मृता इत्यन्वयः ॥ २५ ॥ एवं पूर्वोक्तप्रकारं रथादि कृत्वा देवैः कारयित्वा रणमंडनानि कवचमुकुटादीनि धृष्णोतीति रणमंडनधृग्भवः शिवः रथमारुरोहेत्यग्रिमेणान्वयः । अत्र विशेष उक्तः शिवरहस्यदशमांशे– " हंसोत्थममलपक्षचामरमरुत्संवीजितः शंकरो रत्नभ्राजितपादुकायुतपदो देवांतिकं प्राप हि । छत्रैश्चापि पताककैः शरकरैर्नानादक्षू यैकै रुद्राणीकरमुक्तमौक्तिकफलैर्मूर्ध्न्यर्चितः शंकरः ॥ रत्नभ्राजितपात्रमध्यगलसत्सौवर्णदीपावली देव्यालीकरकंकणध्वनियुतैः सप्तार्चिनीराजितः ॥ पश्यंस्तामगकन्यकाब्जवदनं संवीक्ष्य संवीजतीं देव्यासारमरंदसौरभसमोत्कर्षोरुवर्षैरपि ॥ " संवीजतीं चामरेण वीजमानां तां गंगां वीक्ष्य अगकन्यकाब्जवदनं पार्वतीमुखं पश्यन् रत्नभ्राजितपात्र

यंत्र सरस्वती देवी धनुषः श्रुतिरूपिणी ॥ इषुर्विष्णुर्महातेजाः शल्यं सोमः शरस्य च ॥ २४ ॥ कालाग्निस्तच्छरस्यैव साक्षात्तीक्ष्णः सुदारुणः ॥ अनीकं विषसंभूतं वायवो वाजकाः स्मृताः ॥ २५ ॥ एवं कृत्वा रथं दिव्यं कार्मुकं च शरं तथा ॥ सारथिं जगतां चैव ब्रह्माणं प्रभुमीश्वरम् ॥ २६ ॥ आरुरोह रथं दिव्यं रणमंडनधृग्भवः॥ सर्वदेवगणैर्युक्तं कंपयन्निव रोदसी ॥२७॥ ऋषिभिः स्तूयमानश्च वंद्यमानश्च वंदिभिः ॥ उपनृत्यश्चाप्सरसां गणैर्नृत्यविशारदैः ॥ २८ ॥ सुशोभमानो वरदः संप्रेक्ष्यैव च सारथिम् ॥ तस्मिन्नारोहति रथं कल्पितं लोकसंभृतम् ॥ २९ ॥ शिरोभिः पतिता भूमिं तुरगा वेदसंभवाः ॥ अथाधस्ताद्रथस्यास्य भगवान् धरणीधरः ॥ ३० ॥ वृषेन्द्ररूपी चोत्थाप्य स्थापयामास वै क्षणम् ॥ क्षणांतरे वृषेंद्रोपि जानुभ्यामगमद्धराम् ॥ ३१ ॥ अभीषुहस्तो भगवानुद्यम्य च हयान् विभुः ॥ स्थापयामास देवस्य वचनाद्वै रथं शुभम् ॥ ३२ ॥ ततोश्वांश्चोदयामास मनोमारुतरंहसः ॥ पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ॥ ३३ ॥ अथाह भगवान् रुद्रो देवानालोक्य शंकरः ॥ पशूनामाधिपत्यं मे दत्तं हन्मि ततोऽसुरान् ॥ ३४ ॥

मध्यगलसत्सौवर्णदीपावली च देव्याः पार्वत्याः आल्यः सख्यस्तासां करकंकणध्वनयश्च तैर्युतैर्देव्याः गंगायाः आसाराः शीकरास्तेषां मकरंदसौरभसमोत्कर्षोरुवर्षैः सहापि सप्तार्चिनीराजितः कृतमंगलार्तिक्य इत्यर्थः । " नंदीशानपुरः प्रसारितमहावेत्राग्रतोत्सारितैर्विष्णुब्रह्मसुरासुरादिकगणैः संप्रोक्तवाचां भरैः । शंभो पाहि सुरासुरान्प्रमथपाधीशोक्तिसूक्तिप्रभामंदारानतमौलिजालगणयुक्पादप्रभावः शिवः ॥ इत्यादि ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ धरणीधरः शेषः वृषेंद्ररूपी, रथस्याधःस्तादुत्थाप्य क्षणं स्थापयामासेत्यग्रिमेणान्वयः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ " सोब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि " इति याजुषश्रुत्युपबृंहककथां वर्णयति–अथेत्यादिना ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ विनायको गणेशः बालो बालरूपोपि अबालपराक्रमः महापराक्रम इत्यर्थः ॥ ४४ ॥ ४५ ॥

पृथक्पशुत्वं देवानां तथान्येषां सुरोत्तमाः ॥ कल्पयित्वैव वध्यास्ते नान्यथा नैव सत्तमाः ॥ ३५ ॥ इति श्रुत्वा वचः सर्वे देवदेवस्य धीमतः ॥ विषादमगमन् सर्वे पशुत्वं प्रति शंकिताः ॥ ३६ ॥ तेषां भावं ततो ज्ञात्वा देवस्तानिदमब्रवीत् ॥ मा वोस्तु पशुभावेस्मिन् भयं विबुधसत्तमाः ॥ ३७ ॥ श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ॥ यो वै पाशुपतं दिव्यं चरिष्यति स मोक्ष्यति ॥ ३८ ॥ पशुत्वादिति सत्यं च प्रतिज्ञातं समाहिताः ॥ ये चाप्यन्ये चरिष्यंति व्रतं पाशुपतं मम ॥ ३९ ॥ मोक्ष्यंति ते न संदेहः पशुत्वात्सुरसत्तमाः ॥ नैष्ठिकं द्वादशाब्दं वा तदर्धं वर्षकत्रयम् ॥ ४० ॥ शुश्रूषां कारयेद्यस्तु स पशुत्वाद्विमुच्यते ॥ तस्मात्परमिदं दिव्यं चरिष्यथ सुरोत्तमाः ॥ ४१ ॥ तथेति चाब्रुवन्देवाः शिवे लोकनमस्कृते ॥ तस्माद्वै पशवः सर्वे देवासुरनराः प्रभोः ॥ ४२ ॥ रुद्रः पशुपतिश्चैव पशुपाशविमोचकः ॥ यः पशुस्तत्पशुत्वं च व्रतेनानेन संत्यजेत् ॥ ४३ ॥ तत्कृत्वा न च पापीयानिति शास्त्रस्य निश्चयः ॥ ततो विनायकः साक्षाद्बालोऽबालपराक्रमः ॥ ४४ ॥ अपूजितस्तदा देवैः प्राह देवान्निवारयन् ॥ श्रीविनायक उवाच ॥ मामपूज्य जगत्यस्मिन् भक्ष्यभोज्यादिभिः शुभैः ॥ ४५ ॥ कः पुमान्सिद्धिमाप्नोति देवो वा दानवोपि वा ॥ ततस्तस्मिन् क्षणादेव देवकार्ये सुरेश्वराः ॥ ४६ ॥ विघ्नं करिष्ये देवेश कथं कर्तुं समुद्यताः ॥ ततः सेंद्राः सुराः सर्वे भीताः संपूज्य तं प्रभुम् ॥ ४७ ॥ भक्ष्यभोज्यादिभिश्चैव उंडरैश्चैव मोदकैः ॥ अब्रुवंस्ते गणेशानं निर्विघ्नं चास्तु नः सदा ॥ ४८ ॥ भवोप्यनेकैः कुसुमैर्गणेशं भक्ष्यैश्च भोज्यैः सुरसैः सुगंधैः ॥ आलिंग्य चाघ्राय सुतं तदानीमपूजयत्सर्वसुरेन्द्रमुख्यः ॥ ४९ ॥ संपूज्य पूज्यं सह देवसंघैर्विनायकं नायकमीश्वराणाम् ॥ गणेश्वरैरेव नगेंद्रधन्वा पुरत्रयं दग्धुमसौ जगाम ॥ ५० ॥ तं देवदेवं सुरसिद्धसंघा महेश्वरं भूतगणाश्च सर्वे ॥ गणेश्वरा नंदिमुखास्तदानीं स्ववाहनैरन्वयुरीशमीशाः ॥५१॥ अग्रे सुराणां च गणेश्वराणां तदाथ नंदी गिरिराजकल्पम् ॥ विमानमारुह्य पुरं प्रहर्तुं जगाम मृत्युं भगवानिवेशः ॥५२॥

॥४६॥४७॥४८॥४९॥ नगेंद्रधन्वा मेरुधनुष्यः ॥ ५० ॥ नंदिमुखाः शैलादिप्रमुखाः ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ खगध्वजो विष्णुः ॥५४॥५५॥विवाहनः पक्षिवाहनः ॥ ५६ ॥ सहस्रनेत्र इंद्रः ॥५७॥५८॥ यथा अंबा तनयं सेनापतिं तथा इंद्रमालोक्य प्रणेमुरित्यन्वयः ॥५९॥ अन्यसमदिक्पालान् कथयति—यम इति ॥ ६० ॥ रोमजैस्तत्संज्ञकगणैः ॥ ६१ ॥ ६२ ॥ ६३ ॥ सेनया देवसेनाख्यपत्न्या वाऽनीकिन्या तथा इंद्रसदृशः ॥ ६४ ॥

यान्तं तदानीं तु शिलादपुत्रमारुह्य नागेंद्रवृषाश्ववर्यान् ॥ देवास्तदानीं गणपाश्च सर्वे गणा ययुः स्वायुधचिह्नहस्ताः ॥ ५३ ॥ खगेंद्रमारुह्य नगेंद्रकल्पं खगध्वजो वामत एव शंभोः ॥ जगाम तूर्णं जगतां हिताय पुरत्रयं दग्धुमलुप्तशक्तिः ॥ ५४ ॥ तं सर्वदेवाः सुरलोकनाथं समंततश्चान्वयुरप्रमेयम् ॥ सुरासुरेशं शितशक्तिटंकगदात्रिशूलासिवरायुधैश्च ॥ ५५ ॥ रराज मध्ये भगवान्सुराणां विवाहनो वारिजपत्रवर्णः ॥ यथा सुमेरोः शिखराधिरूढः सहस्ररश्मिर्भगवान्सुतीक्ष्णः ॥ ५६ ॥ सहस्रनेत्रः प्रथमः सुराणां गजेन्द्रमारुह्य च दक्षिणेऽस्य ॥ जगाम रुद्रस्य पुरं निहंतुं यथोरगांस्तत्र तु वैनतेयः ॥ ५७ ॥ तं सिद्धगंधर्वसुरेंद्रवीराः सुरेंद्रवृंदाधिपमिंद्रमीशम् ॥ समंततस्तुष्टुवुरिष्टदं ते जयेति शक्रं वरपुष्पवृष्ट्या ॥ ५८ ॥ तदा ह्यहल्योपपतिं सुरेशं जगत्पतिं देवपतिं दिविष्ठाः ॥ प्रणेमुरालोक्य सहस्रनेत्रं सलीलमंबा तनयं यथेंद्रम् ॥ ५९ ॥ यमपावकवित्तेशा वायुर्निर्ऋतिरेव च ॥ अपां पतिस्तथेशानो भवं चानुसमागताः ॥ ६० ॥ वीरभद्रो रणे भद्रो नैर्ऋत्यां वै रथस्य तु ॥ वृषभेंद्रं समारुह्य रोमजैश्च समावृतः ॥ ६१ ॥ सेवां चक्रे पुरं हंतुं देवदेवं त्रियंबकम् ॥ महाकालो महातेजा महादेव इवापरः ॥ ६२ ॥ वायव्यां सगणैः सार्धं सेवांचक्रे रथस्य तु ॥ ६३ ॥ षण्मुखोपि सह सिद्धचारणैः सेनया च गिरिराजसन्निभः ॥ देवनाथगणवृंदसंवृतो वारणेन च तथाग्निसंभवः ॥ ६४ ॥ विघ्नं गणेशोप्यसुरेश्वराणां कृत्वा सुराणां भगवानविघ्नम् ॥ विघ्नेश्वरो विघ्नगणैश्च सार्धं तं देशमीशानपदं जगाम ॥ ६५ ॥ काली तदा कालनिशाप्रकाशं शूलं कपालाभरणा करेण ॥ प्रकंपयंती च तदा सुरेंद्रान्महासुरासृङ्मधुपानमत्ता ॥ ६६ ॥ मत्तेभगामी मदलोलनेत्रा मत्तैः पिशाचैश्च गणैश्च मत्तैः ॥ मत्तेभचर्मांबरवेष्टितांगी ययौ पुरस्ताच्च गणेश्वरस्य ॥ ६७ ॥ तां सिद्धगंधर्वपिशाचयक्षविद्याधराहींद्रसुरेन्द्रमुख्याः ॥ प्रणेमुरुच्चैरभितुष्टुवुश्च जयेति देवीं हिमशैलपुत्रीम् ॥ ६८ ॥ मातरः सुरवरारिसूदनाः सादरं सुरगणैः सुपूजिताः ॥ मातरं ययुरथ स्ववाहनैः स्वैर्गणैर्ध्वजधरैः समंततः ॥ ६९ ॥

॥ ६५ ॥ ६६ ॥ गणेश्वरस्य गजाननस्य पुरस्तादग्रभाग इत्यर्थः ॥ ६७ ॥ ६८ ॥ ६९ ॥

आरूढमृगाधिपा सिंहारूढेत्यर्थः । वाला वालरूपाप्यवालपराक्रमा भगवती षड्गुणैश्वर्यविशिष्टा ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ गणाधिपान्नामशः कथयति केश इत्यादिना ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ गजवक्रोर्ध्ववक्रश्चेत्यत्र संधिरार्षः ॥ ८२ ॥ ८३ ॥ ८४ ॥ त्रयस्त्रिंशद्वसुरुद्रादित्याश्विनाः त्रयः ब्रह्म

दुर्गारूढमृगाधिपा दुरतिगा दोर्दंडवृंदैः शिवा बिभ्राणांकुशशूलपाशपरशुं चक्रासिशंखायुधम् ॥ प्रौढादित्यसहस्रवह्निसदृशैर्नेत्रैर्दहंती पथं बालाबालपराक्रमा भगवती दैत्यान्प्रहर्तुं ययौ ॥ ७० ॥ तं देवमीशं त्रिपुरं निहंतुं तदा तु देवेंद्ररविप्रकाशाः ॥ गजैर्हयैः सिंहवरै रथैश्च वृषै र्ययुस्ते गणराजमुख्याः ॥ ७१ ॥ हलैश्च फालैर्मुसलैर्भुशुंडैर्गिरींद्रकूटैर्गिरिसन्निभास्ते ॥ ययुः पुरस्ताद्धि महेश्वरस्य सुरेश्वरा भूतगणेश्वराश्च ॥ ७२ ॥ तथेंद्रपद्मोद्भवविष्णुमुख्याः सुरा गणेशाश्च गणेशमीशम् ॥ जयेति वाग्भिर्भगवंतमूचुः किरीटदत्तांजलयः समंतात् ॥ ७३ ॥ ननृतुर्मुनयः सर्वे दंडहस्ता जटाधराः ॥ ववृषुः पुष्पवर्षाणि खेचराः सिद्धचारणाः ॥ पुरत्रयं च विप्रेंद्राः प्राणदत्सर्वतस्तथा ॥ ७४ ॥ गणेश्वरै र्देवगणैश्च भृंगी समावृतः सर्वगणेंद्रवर्यः ॥ जगाम योगी त्रिपुरं निहंतुं विमानमारुह्य यथा महेंद्रः ॥ ७५ ॥ केशो विगतवासाश्च महाकेशो महाज्वरः ॥ सोमवल्ली सवर्णश्च सोमपः सेनकस्तथा ॥ ७६ ॥ सोमधृक् सूर्यवाचश्च सूर्यपेषणकस्तथा ॥ सूर्याक्षः सूरिनामा च सुरः सुंदर एव च ॥ ७७ ॥ प्रकुदः ककुदंतश्च कंपनश्च प्रकंपनः ॥ इंद्रश्चेंद्रजयश्चैव महाभर्भीमकस्तथा ॥ ७८ ॥ शताक्षश्चैव पंचाक्षः सहस्राक्षो महोदरः ॥ यमजिह्वः शताश्वश्च कण्ठनः कंठपूजनः ॥ ७९ ॥ द्विशिखस्त्रिशिखश्चैव तथा पंचशिखो द्विजाः ॥ मुंडोर्धमुंडो दीर्घश्च पिशाचास्यः पिनाकधृक् ॥ ८० ॥ पिप्पलायतनश्चैव तथा ह्यंगारकाशनः ॥ शिथिलः शिथिलास्यश्च अक्षपादो ह्यजः कुजः ॥ ८१ ॥ अजवक्रो हयवक्रो गजवक्रोर्ध्ववक्रकः ॥ इत्याद्याः परिवार्येशं लक्ष्यलक्षणवर्जिताः ॥ ८२ ॥ वृंदशस्तं समावृत्य जग्मुः सोमं गणैर्वृताः ॥ सहस्राणां सहस्राणि रुद्राणामूर्ध्वरेतसाम् ॥ ८३ ॥ समावृत्य महादेवं देवदेवं महेश्वरम् ॥ दग्धुं पुरत्रयं जग्मुः कोटिकोटिगणैर्वृताः ॥ ८४ ॥ त्रयस्त्रिंशत्सुराश्चैव त्रयश्च त्रिशतास्तथा ॥ त्रयश्च त्रिसहस्राणि जग्मुर्देवाः समंततः ॥ ८५ ॥ मातरः सर्वलोकानां गणानां चैव मातरः ॥ भूतानां मातरश्चैव जग्मुर्देवस्य पृष्ठतः ॥ ८६ ॥ भाति मध्ये गणानां च रथमध्ये गणेश्वरः ॥ नभस्यमलनक्षत्रे तारामध्य इवोडुराट् ॥ ८७ ॥

विष्णुरुद्ररूपाः त्रिशतादयस्तद्भेदा ज्ञेयाः ॥ ८५ ॥ ८६ ॥ गणानां मध्ये रथमध्ये च गणेश्वरः शिवः भातीत्यन्वयः ॥ ८७ ॥

भवस्य शिवस्यैव प्रभावतः सामर्थ्येन गौरी जगन्मयी विश्वरूपा गिरिजा पार्वती देवी देवस्य शिवस्य पार्श्वसंस्थिता वामपार्श्वस्थिता रराजेत्यन्वयः ॥ ८८ ॥ शुभावती तत्संज्ञा सखी ॥ ८९ ॥ विभोः शिवस्य विशदमतिस्वच्छं भसितेन भस्मना भासितं दीप्यमानं तया वामभागस्थितया अंबिकया देव्या विद्युता सिताभ्रमिव विभातीत्यन्वयः ॥ ९० ॥ ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ देववितर्कं कथयति—दग्धुमित्यादिना ॥ ९५ ॥ ९६ ॥ ९७ ॥ पुरत्रयस्यासुरपुरत्रयस्य समीपवर्ती नंदिमुखैर्नंदिकेश्वरप्रमुखैः सुरेश्वरैर्नंदी

रराज देवी देवस्य गिरिजा पार्श्वसंस्थिता ॥ तदा प्रभावतो गौरी भवस्यैव जगन्मयी ॥ ८८ ॥ शुभावती तदा देवी पार्श्वसंस्था विभाति सा ॥ चामरासक्तहस्ताग्रा सा हेमांबुजवर्णिका ॥ ८९ ॥ अथ विभाति विभोर्विशदं वपुर्भसितभासितमंबिकया तया ॥ सितमिवाभ्रमहो इह विद्युता नभसि देवपतेः परमेष्ठिनः ॥ ९० ॥ भातींद्रधनुषाकाशं मेरुणा च यथा जगत् ॥ हिरण्यधनुषा सौम्यं वपुः शंभोः शशिद्युति ॥ ९१ ॥ सितातपत्रं रत्नांशुमिश्रितं परमेष्ठिनः ॥ यथोदये शशांकस्य भात्यखंडं हि मंडलम् ॥ ९२ ॥ सदुकूला शिवे रक्ता लंबिता भाति मालिका ॥ छत्रांता रत्नजाकाशात्पतंतीव सरिद्वरा ॥ ९३ ॥ अथ महेंद्रविरिंचिविभावसुप्रभृतिभिर्नतपादसरोरुहः ॥ सह तदा च जगाम तयांबया सकललोकहिताय पुरत्रयम् ॥ ९४ ॥ दग्धुं समर्थो मनसा क्षणेन चराचरं सर्वमिदं त्रिशूली ॥ किमत्र दग्धुं त्रिपुरं पिनाकी स्वयं गतश्चात्र गणैश्च सार्धम् ॥ ९५ ॥ रथेन किं चेषुवरेण तस्य गणैश्च किं देवगणैश्च शंभोः ॥ पुरत्रयं दग्धुमलुप्तशक्तेः किमेतदित्याहुरजेंद्रमुख्याः ॥ ९६ ॥ मन्वाम नूनं भगवान्पिनाकी लीलार्थमेतत्सकलं प्रवर्तुम् ॥ व्यवस्थितश्चेति तथान्यथा चेदाडंबरेणास्य फलं किमन्यत् ॥ ९७ ॥ पुरत्रयस्यास्य समीपवर्ती सुरेश्वरैर्नन्दिमुखैश्च नंदी ॥ गणैर्गणेशस्तु रराज देव्या जगद्रथो मेरुरिवाष्टशृंगैः ॥ ९८ ॥ अथ निरीक्ष्य सुरेश्वरमीश्वरं सगणमद्रिसुतासहितं तदा ॥ त्रिपुरंगतलोपरि संस्थितः सुरगणोनुजगाम स्वयं तथा ॥ ९९ ॥ जगत्रयं सर्वमिवापरं तत्पुरत्रयं तत्र विभाति सम्यक् ॥ नरेश्वरैश्चैव गणैश्च देवैः सुरेतरैश्च त्रिविधैर्मुनींद्राः ॥ १०० ॥ अथ सज्यं धनुः कृत्वा शर्वः संधाय तं शरम् ॥ युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिंतयत् ॥ १०१ ॥

शैलादिः गणैर्गणेशो गजाननः अष्टशृंगैरष्टौ दिक्पालपुरीशृंगैर्मेरुरिवाष्टौ दिक्पालावृतः देव्या उमया सहितः जगद्रथो यस्य स जगद्रथः शिवश्च रराजेत्यन्वयः ॥ ९८॥९९ ॥ नरेश्वरैः राजभिः गणैः सिद्धादिगणैः देवैरिंद्रादिभिः सर्वं जगत्रयमिवापरं तत्पुरत्रयं त्रिविधैः सुरेतरैः दैत्यैः तत्र युद्धकाले सम्यक् तुल्योपमं विभातीत्यन्वयः । मुनींद्रा इति शौनकादिसंबुद्धिः ॥ १०० ॥ तेन वर्षसहस्रकालेन ॥ १०१ ॥

॥ २ ॥ त्रिपुरमेकीभावं मेलनं गते च परं समुपागते समीपभागं प्राप्ते सति देवतानामिंद्रादीनां तुमुलो हर्षो बभूवेत्यन्वयः ॥ ३ ॥ ४ ॥ पुष्ययोगे पुष्यनक्षत्रयोगे प्राप्तेपी त्यनेन जये तस्यातिश्रैष्ठ्यं सूचितम् । लीलावशं क्रीडासक्तमित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ सर्वज्ञः सर्ववेत्तापि महादेवः शिवः अथ ब्रह्मवाक्यश्रवणानंतरं विरूपाक्षो

तस्मिंस्थिते महादेवे रुद्रे विततकार्मुके ॥ पुराणि तेन कालेन जग्मुरेकत्वमाशु वै ॥ २ ॥ एकीभावं गते चैव त्रिपुरे समुपागते ॥ बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥ ३ ॥ ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः ॥ जयेति वाचो मुमुचुः संस्तुवंतोष्टमूर्तिनम् ॥ ४ ॥ अथाह भगवान्ब्रह्मा भगनेत्रनिपातनम् ॥ पुष्ययोगेपि संप्राप्ते लीलावशमुमापतिम् ॥ ५ ॥ स्थाने तव महादेव चेष्टेयं परमेश्वर ॥ पूर्वदेवाश्च देवाश्च समास्तव यतः प्रभो ॥ ६ ॥ तथापि देवा धर्मिष्ठाः पूर्वदेवाश्च पापिनः ॥ यतस्तस्माज्जगन्नाथ लीलां त्यक्तुमिहार्हसि ॥ ७ ॥ किं रथेन ध्वजेनेश तव दग्धुं पुरत्रयम् ॥ इषुणा भूतसंघैश्च विष्णुना च मया प्रभो ॥ ८ ॥ पुष्ययोगे त्वनुप्राप्ते पुरं दग्धुमिहार्हसि ॥ यावन्न यांति देवेश वियोगं तावदेव तु ॥ ९ ॥ दग्धुमर्हसि शीघ्रं त्वं त्रीण्येतानि पुराणि वै ॥ अथ देवो महादेवः सर्वज्ञस्तदवैक्षत ॥ ११० ॥ पुरत्रयं विरूपाक्षस्तत्क्षणाद्भस्म वै कृतम् ॥ सोमश्च भगवान्विष्णुः कालाग्निर्वायुरेव च ॥ ११ ॥ शरे व्यवस्थिताः सर्वे देवमूचुः प्रणम्य तम् ॥ दग्धमप्यथ देवेश वीक्षणेन पुरत्रयम् ॥ १२ ॥ अस्मद्धितार्थं देवेश शरं मोक्तुमिहार्हसि ॥ अथ संमृज्य धनुषो ज्यां हसन्त्रिपुरार्दनः ॥ १३ ॥ मुमोच बाणं विश्वेंद्रा व्याकृष्याकर्णमीश्वरः ॥ तत्क्षणात्त्रिपुरं दग्ध्वा त्रिपुरांतकरः शरः ॥ १४ ॥ देवदेवं समासाद्य नमस्कृत्वा व्यवस्थितः ॥ रेजे पुरत्रयं दग्धं दैत्यकोटिशतैर्वृतम् ॥ १५ ॥ इषुणा तेन कल्पांते रुद्रेणेव जगत्त्रयम् ॥ ये पूजयंति तत्रापि दैत्या रुद्रं सबांधवाः ॥ १६ ॥ गाणपत्यं तदा शंभोर्ययुः पूजाविधेर्बलात् ॥ न किंचिदब्रुवन्देवाः सेंद्रोपेंद्रा गणेश्वराः ॥ १७ ॥ भयाद्देवं निरीक्ष्यैव देवीं हिमवतः सुताम् ॥ दृष्ट्वा भीतं तदानीकं देवानां देवपुंगवः ॥ १८ ॥

विकृताक्षस्तत्क्षणाद्भस्म वै कृतं पुरत्रयमवैक्षतेत्याग्रिमस्थैरन्वयः ॥ ११० ॥ ११ ॥ १२ ॥ अथ सोमादिवाक्यश्रवणानंतरम् ॥ १३ ॥ त्रिपुरं दग्ध्वा पूर्वदग्धमपि निःशेषं सर्वदर्शन विषयं संदह्य शरो देवदेवं शिवं नमस्कृत्य व्यवास्थित इत्याग्रिमेणान्वयः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ देवपुंगवः शिवः ॥ १८ ॥

किंचेत्ययं द्विपाच्छ्लोकः ॥ १९ ॥ अद्रिसुतासुतं गजाननम् ॥१२०॥२१॥ ब्रह्मा शिवं स्तौति–प्रसीदेत्यादिना । आनंदं ब्रह्मरूपसहजानंदं ददातीत्यानंददः ॥ २२ ॥ रोदयंति ते रुद्राः यमादयस्तानपि रोदयतीति रुद्ररुद्रः । यद्वा रुद्राणामज्ञानद्रावकाणामपि रुद्रोऽज्ञाननिवर्तकः तस्मै नम इत्यस्य सर्वत्रानुषंगः । पंचाशत्कोटितत्संख्याकाः रुद्राः मूर्तयो यस्य तस्मै आत्मत्रयं विश्वप्राज्ञतैजसरूपं तास्मिन्नुपविशति तुरीयरूपेण तिष्ठतीति तस्मै विद्यानां तत्त्वं मुख्यकारणम् ' ईशानः सर्वविद्यानाम् ' इति श्रुतेः ॥ २३ ॥ शिवाय शिवशब्दार्थ उक्तोऽह्योबलरुद्रभाष्ये–'शिवो निष्कल्मषो यद्वा सच्चिदानंदलक्षणः । यद्वा निर्धर्मको यद्वा कल्याणात्मेति मन्महे॥' इति । अघोराष्टकं भैरवाष्टकं तस्य तत्त्वं कारणं द्वादशात्मा सूर्यः स्वरूपमस्यास्ति तस्मै ॥२४॥ अष्टसु पृथिव्यादिषु काशते तदष्टकाशम् ॥२५॥ अंबिका ब्रह्मविद्यारूपा उमा अर्धशरीरं यस्यास्तीति तस्मै धवलश्यामरक्तानां

**किं चेत्याह तदा देवान्प्रणेमुस्तं समंततः ॥ १९ ॥ ववंदिरे नंदिनमिंदुभूषणं ववंदिरे पर्वतराजसंभवाम् ॥ ववंदिरे चाद्रिसुतासुतं प्रभुं ववंदिरे देवगणा महेश्वरम् ॥ १२० ॥ तुष्टाव हृदये ब्रह्मा देवैः सह समाहितः ॥ विष्णुना च भवं देवं त्रिपुरारातिमीश्वरम् ॥ २१ ॥ श्रीपितामह उवाच ॥ प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ प्रसीद जगतां नाथ प्रसीदानंददाव्यय ॥ २२ ॥ पंचास्य रुद्ररुद्राय पंचाशत्कोटिमूर्तये ॥ आत्मत्रयोपविष्टाय विद्यातत्त्वाय ते नमः ॥ २३ ॥ शिवाय शिवतत्त्वाय अघोराय नमोनमः॥ अघोराष्टकतत्त्वाय द्वादशात्मस्वरूपिणे ॥ २४ ॥ विद्युत्कोटिप्रतीकाशमष्टकाशं सुशोभनम् ॥ रूपमास्थाय लोकेस्मिन् संस्थिताय शिवात्मने ॥ २५ ॥ अग्निवर्णाय रौद्राय अंबिकार्धशरीरिणे ॥ धवलश्यामरक्तानां मुक्तिदायामराय च ॥ २६ ॥ ज्येष्ठाय रुद्ररूपाय सोमाय वरदाय च ॥ त्रिलोकाय त्रिदेवाय वषट्काराय वै नमः॥२७॥मध्ये गगनरूपाय गगनस्थाय ते नमः ॥ अष्टक्षेत्राष्टरूपाय अष्टतत्त्वाय ते नमः॥२८॥चतुर्धा च चतुर्धा च चतुर्धा संस्थिताय च॥ पंचधा पंचधा चैव पंचमंत्रशरीरिणे ॥ २९ ॥ चतुःषष्टिप्रकाराय अकाराय नमोनमः ॥ द्वात्रिंशत्तत्त्वरूपाय उकाराय नमोनमः ॥ १३० ॥**

रुद्रविष्णुब्रह्मणाम् ॥ २६ ॥ २७ ॥ मध्ये हृत्पुंडरीकमध्ये गगनवद्वृत्तिरूपं यस्य अष्टक्षेत्रेषु अर्कादिस्थानेषु अष्टौ रुद्रादिरूपाणि यस्य अष्टतत्त्वायं पृथिव्यादिकारणायेत्यर्थः ॥ २८ ॥ चतुर्धा चतुर्वेदरूपेण चतुर्धा चतुराश्रमरूपेण चतुर्धा चतुर्व्यूहरूपेण च संस्थितोऽवस्थित इत्यर्थः । पंचधा गगनादिपंचभूतप्रकारेण पंचधा सद्योजातादिरूपेण संस्थितायेत्यनुषंगः । पंचमंत्रात्मकं सद्योजातादिरूपं शरीरं यस्यास्तीति पंचमंत्रशरीरी ॥२९॥ चतुःषष्टिप्रकाराय तत्संख्याकशिक्षोक्तवर्णरूपाय अकाराय अकाररूपायेत्यर्थः। द्वात्रिंशत्तत्त्वरूपाय तत्संख्याकमातृकारूपाय उकाराय उकारस्वरूपायेत्यर्थः ॥ १३० ॥

षोडशं षोडशाब्जरूपं वा षोडशतत्त्वरूपं यदात्मरूपं तस्मै मकाराय मकारस्वरूपायेत्यर्थः ॥ ३१ ॥ चतुर्धा पूर्वोक्त-अकारोकारमकारार्धमात्रात्मकनादरूपचतुःप्रकारेण संस्थिताय ॐकाराय प्रणवरूपायेत्यर्थः ॥ ३२ ॥ अष्टक्षेत्राणि पृथिव्यादीनि अष्टरूपाणि स्वरूपाणि यस्य तस्मै परात्परतरः सर्वोत्कृष्टः । तदुक्तं भगवद्गीतायां-"इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥" इति ॥ ३३ ॥ ३४ ॥ नव तत्संख्याकानि यान्यात्मतत्त्वानि तद्रूपस्तस्मै । तदुक्तं भागवते-"पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोनिलः । ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि ते नव ॥" इति । नवाष्ट सप्तदशतत्त्वरूपाः आत्मशक्तयो यस्य तस्मै अष्टसु उरःप्रभृतिस्थानेषु प्रकाशयति वर्णानभिव्यंजयतीति अष्टप्रकाशस्तस्मै अष्टाष्टकाश्चतुःषष्टिवर्णरूपाः मूर्तयो यस्य तस्मै ॥ ३५ ॥ चतुःषष्टिस्तत्संख्याकयोगिनीनामात्मतत्त्वः प्राणतत्त्वरूपस्तस्मै अष्टविधाय

**षोडशात्मस्वरूपाय मकाराय नमोनमः ॥ अष्टधात्मस्वरूपाय अर्धमात्रात्मने नमः ॥ ३१ ॥ ओंकाराय नमस्तुभ्यं चतुर्धा संस्थिताय च ॥ गगनेशाय देवाय स्वर्गेशाय नमोनमः ॥ ३२ ॥ सप्तलोकाय पातालनरकेशाय वै नमः ॥ अष्टक्षेत्राष्टरूपाय परात्परतराय च ॥ ३३ ॥ सहस्रशिरसे तुभ्यं सहस्राय च ते नमः ॥ सहस्रपादयुक्ताय शर्वाय परमेष्ठिने ॥ ३४ ॥ नवात्मतत्त्वरूपाय नवाष्टात्मात्मशक्तये ॥ पुनरष्टप्रकाशाय तथाष्टाष्टकमूर्तये ॥ ३५ ॥ चतुःषष्ट्यात्मतत्त्वाय पुनरष्टविधाय ते ॥ गुणाष्टकवृतायैव गुणिने निर्गुणाय ते ॥ ३६ ॥ मूलस्थाय नमस्तुभ्यं शाश्वतस्थानवासिने ॥ नाभिमंडलसंस्थाय हृदि निस्स्वनकारिणे ॥ ३७ ॥ कंधरे च स्थितायैव तालुरंध्रस्थिताय च ॥ भ्रूमध्ये संस्थितायैव नादमध्ये स्थिताय च ॥ ३८ ॥ चंद्रबिंबस्थितायैव शिवाय शिवरूपिणे ॥ वह्निसोमार्करूपाय षट्त्रिंशच्छक्तिरूपिणे ॥ ३९ ॥ त्रिधा संवृत्य लोकान्वै प्रसुप्तभुजगात्मने ॥ त्रिप्रकारं स्थितायैव त्रेताग्निमयरूपिणे ॥१४०॥ सदाशिवाय शांताय महेशाय पिनाकिने ॥ सर्वज्ञाय शरण्याय सद्योजाताय वै नमः ॥ ४१ ॥ अघोराय नमस्तुभ्यं वामदेवाय ते नमः ॥ तत्पुरुषाय नमोस्तु ईशानाय नमोनमः ॥ ४२ ॥**

भवाद्यष्टसंज्ञकायेत्यर्थः । गुणाष्टकेन वृतो युक्तः । तदुक्तं न्यायमुक्तावल्यां-" संख्यादिकाः पंच बुद्धिरिच्छायत्नोपि.चेश्वरः " इति । गुणी सर्गादिकाले गुणत्रयविशिष्टस्तस्मै निर्गताः गुणाः यस्मादसौ निर्गुणः गुणकारणो वा वस्तुतो गुणशून्यः ॥३६॥ मूले मूलाधारचक्रे तिष्ठतीति मूलस्थः शाश्वतस्थानं तदुपरि मेंढ्रस्थानं तत्र वसति तच्छीलस्तस्मै हृदि निःस्वनं प्राणवायुस्वनं करोति तच्छीलः ॥ ३७ ॥ कंधरे ग्रीवायाम् इत्यर्थः ॥ ३८ ॥ ३९ ॥ त्रिधा त्रिप्रकारकसत्त्वादिगुणैर्लोकान्वै संवृत्य संवेष्ट्य प्रसुप्तभुजगात्मने कुंडलिनीरूपायेत्यर्थः । त्रिप्रकारं गार्हपत्याहवनीयदक्षिणाग्निरूपेण स्थितायात एव त्रेताग्निमयरूपं यस्यास्तीति तस्मै ॥ १४० ॥ ४१ ॥ ४२ ॥

त्रिंशत्तत्संख्याकमु(?)ष्वपि प्रकाशो यस्य स त्रिंशत्प्रकाशः सर्वदा प्रकाशमान इत्यर्थः ॥ ४३ ॥ एकं ज्ञानरूपमक्षं ज्ञानसाधनं यस्य स एकाक्षः एकोऽद्वितीयः रुद्रो नीललोहित रूपस्तस्मै ॥४४–४६॥ नीवारशूकवदरण्यशालिसूक्ष्माग्रवदतिसूक्ष्मरूपेण योगिनां हृदि संस्थाय प्रकाशमानायेत्यर्थः। तथा च श्रुतिः–“नीवारशूकवत्तन्वी” इति ॥४७–४९॥ ध्येयं ध्यातुमर्हं ध्यानं यस्य स ध्येयध्यानः ध्येयानां ब्रह्मविष्ण्वादीनामपि ध्येयो ध्यातुं योग्यः ॥ १५०–५३ ॥ विभो हे व्यापक पुरत्रयं जगत्रयं चैव निरीक्षणादेव दग्धुं समर्थ इति शेषः । असि च परमांबिकया देव्या सह लीलालसेन निरीक्षणादेव पुरत्रयमस्याप्यनुषंगः । क्षणेन दग्धं किल अथ सोमादिप्रार्थनानंतरं तदा दाहकाले इषुश्च मुक्त

नमस्त्रिंशत्प्रकाशाय शांतातीताय वै नमः ॥ अनंतेशाय सूक्ष्माय उत्तमाय नमोस्तु ते ॥ ४३ ॥ एकाक्षाय नमस्तुभ्यमेकरुद्राय ते नमः ॥ नमस्त्रिमूर्तये तुभ्यं श्रीकंठाय शिखंडिने ॥ ४४ ॥ अनंतासनसंस्थाय अनंतायांतकारिणे ॥ विमलाय विशालाय विमलांगाय ते नमः ॥ ४५ ॥ विमलासनसंस्थाय विमलार्थार्थरूपिणे ॥ योगपीठांतरस्थाय योगिने योगदायिने ॥ ४६ ॥ योगिनां हृदि संस्थाय सदा नीवारशूकवत् ॥ प्रत्याहाराय ते नित्यं प्रत्याहाररताय ते ॥ ४७ ॥ प्रत्याहाररतानां च प्रतिस्थानस्थिताय च ॥ धारणायै नमस्तुभ्यं धारणाभिरताय ते ॥ ४८ ॥ धारणाभ्यासयुक्तानां पुरस्तात्संस्थिताय च ॥ ध्यानाय ध्यानरूपाय ध्यानगम्याय ते नमः ॥ ४९ ॥ ध्येयाय ध्येयगम्याय ध्येयध्यानाय ते नमः ॥ ध्येयानामपि ध्येयाय नमो ध्येयतमाय ते ॥ १५० ॥ समाधानाभिगम्याय समाधानाय ते नमः ॥ समाधानरतानां तु निर्विकल्पार्थरूपिणे ॥ ५१ ॥ दग्ध्वोद्धृतं सर्वमिदं त्वयाद्य जगत्रयं रुद्र पुरत्रयं हि ॥ कस्तोतुमिच्छेत्कथमीदृशं त्वां स्तोष्येह तुष्टाय शिवाय तुभ्यम् ॥५२॥ भक्त्या च तुष्ट्याद्भुतदर्शनाच्च मर्त्या अमर्त्या अपि देवदेव ॥ एते गणाः सिद्धगणैः प्रणामं कुर्वंति देवेश गणेश तुभ्यम् ॥ ५३॥ निरीक्षणादेव विभोसि दग्धुं पुरत्रयं चैव जगत्रयं च ॥ लीलालसेनांबिकया क्षणेन दग्धं किलेषुश्च तदाथ मुक्तः॥५४॥ कृतो रथश्चेषुवरश्च शुभ्रं शरासनं ते त्रिपुरक्षयाय ॥ अनेकयत्नैश्च मयाथ तुभ्यं फलं न दृष्टं सुरसिद्धसंघैः॥५५॥ रथो रथी देववरो हरिश्च रुद्रः स्वयं शक्रपितामहो च ॥ त्वमेव सर्वं भगवन् कथं तु स्तोष्ये ह्यतोष्यं प्रणिपत्य मूर्ध्ना ॥ ५६ ॥ अनंतपादस्त्वमनंतबाहुरनंतमूर्धांतकरः शिवश्च ॥ अनंतमूर्तिः कथमीदृशं त्वां तोष्ये ह्यतोष्यं कथमीदृशं त्वाम् ॥ ५७ ॥

इत्यन्वयः ॥५४॥५५॥ अतोष्यं सर्वैरपि तोषयितुमशक्यं कथं स्तोष्ये “यतो वाचो निवर्तंते अप्राप्य मनसा सह” इति श्रुतेः॥ ५६ ॥ त्वमनंतपादः अनंतबाहुः अनंतमूर्धा अंतकरः संहारकारकश्चेदृशं हि पुनः अनंतमूर्तिरनंतशरीरः शिवः सुखरूप ईदृशमतोष्यं तोषयितुमशक्यं त्वां कथंकथं तोष्ये केनकेनापि प्रकारेण तोषयितुमसमर्थ इत्यर्थः॥५७॥

सुसूक्ष्मसूक्ष्मसूक्ष्माय निरवधिकसूक्ष्मरूपायेत्यर्थः । तदुक्तं शिवगीतायाम्—"वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानंत्याय कल्पते" इति ॥ ५८ ॥ ५९ ॥ १६० ॥ तथा त्वशून्याय शून्यत्वशून्याय सत्यरूपायेत्यर्थः । लिंगिने चित्ररूपविशिष्टायेत्यर्थः । अलिंगिने चिह्नशून्याय लिंगमयाय लिंगरूपाय साक्षाद्वेदादिमयाय प्रणवरूपायेत्यर्थः ॥ ६१ ॥ मम आदिदेवस्य कारणस्य यज्ञमूर्तेर्विष्णोर्मम ब्रह्मणश्च विध्वांतभंगं निबिडाज्ञानभंगं कर्तुं भूमौ अपराधस्थाने दृष्ट्वैव करजाग्रकोट्या हस्तनखाग्रभागेन मूर्धाननिकृंतनाय मस्तकच्छेदकायेत्यर्थः । तत्र यज्ञमस्तकच्छेदनं दक्षयज्ञे ब्रह्मशिरःकृंतनं कालभैरवरूपेण काशीखंडे उक्तम् ॥ ६२ ॥ निर्गुणरूपं तत्त्वं मुख्यं यस्य तत्संबुद्धौ निर्गुणरूपतत्त्व ॥ ६३ ॥ अष्टमूर्तिरूपेण स्तौति—एकमिति । अत्र ब्रह्मांडे ते तत्त्वम् एकं स्थूलं पृथिवीरूपम् एकं सूक्ष्मं जलरूपं सुसूक्ष्मं वह्निरूपं

**नमोनमः सर्वविदे शिवाय रुद्राय शर्वाय भवाय तुभ्यम् ॥ स्थूलाय सूक्ष्माय सुसूक्ष्मसूक्ष्मसूक्ष्माय सूक्ष्मार्थविदे विधात्रे ॥ ५८ ॥ स्रष्ट्रे नमः सर्वसुरासुराणां भर्त्रे च हर्त्रे जगतां विधात्रे ॥ नेत्रे सुराणामसुरेश्वराणां दात्रे प्रशास्त्रे मम सर्वशास्त्रे ॥५९ ॥ वेदांतवेद्याय सुनिर्मलाय वेदार्थविद्भिः सततं स्तुताय ॥ वेदात्मरूपाय भवाय तुभ्यमंताय मध्याय सुमध्यमाय ॥ १६० ॥ आद्यन्तशून्याय च संस्थिताय तथा त्वशून्याय च लिंगिने च ॥ अलिंगिने लिंगमयाय तुभ्यं लिंगाय वेदादिमयाय साक्षात् ॥ ६१ ॥ रुद्राय मूर्धाननिकृंतनाय ममादिदेवस्य च यज्ञमूर्तेः ॥ विध्वांतभंगं मम कर्तुमीश दृष्ट्वैव भूमौ करजाग्रकोट्या ॥ ६२ ॥ अहो विचित्रं तव देवदेव विचेष्टितं सर्वसुरासुरेश ॥ देहीव देवैः सह देवकार्यं करिष्यसे निर्गुणरूपतत्त्व ॥ ६३ ॥ एकं स्थूलं सूक्ष्ममेकं सुसूक्ष्मं मूर्तामूर्तं मूर्तमेकं ह्यमूर्तम् ॥ एकं दृष्टं वाङ्मयं चैकमीशं ध्येयं चैकं तत्त्वमत्राद्भुतं ते ॥ ६४ ॥ स्वप्ने दृष्टं यत्पदार्थं ह्यलक्ष्यं दृष्टं नूनं भाति मन्ये न चापि ॥ मूर्तिर्नो वै देवमीशान देवैर्लक्ष्या यत्नैरप्यलक्ष्यं कथं तु ॥ ६५ ॥ दिव्यः क्व देवेश भवत्प्रभावो वयं क्व भक्तिः क्व च ते स्तुतिश्च ॥ तथापि भक्त्या विलपंतमीश पितामहं मां भगवन्क्षमस्व ॥ ६६ ॥**

तस्य ब्रह्मांडादावपि प्रवेशात् मूर्तत्वममहत्परिमाणवत्त्वममूर्तत्वं महत्परिमाणवत्त्वमेतदुभयाश्रयं मूर्तामूर्तं क्षयवृद्ध्याश्रयत्वात्सोमरूपम् । एकं मूर्तं सूर्यरूपम् अमूर्तं वायुरूपं तस्य व्यापकत्वान्महत्परिमाणं ज्ञेयम् । एकं वाङ्मयं दृष्टं शब्दगुणेनैव ज्ञातं गगनरूपमित्यर्थः । एकं ध्येयं तव ध्यानसमर्थमीशम् । आत्मरूपमद्भुतं चिद्रूपत्वात्सर्वश्रेष्ठमित्यर्थः॥ ६४ ॥ अदृष्टं श्रुतं दृष्टं च पदार्थं पदार्थजातं स्वप्नेपि नूनं भाति ह्यलक्ष्यमदृष्टाश्रुतं च न मन्ये ईशान हे सांब ते मूर्तिः देवैर्यत्नैर्नो लक्ष्या वै ह्यलक्ष्यं देवं निर्गुणरूपं तु कथं कथमपि नेत्यर्थः॥ ६५ ॥ स्तुतिं समापयति—दिव्यमिति ॥ ६६ ॥

सूतो ब्रह्मस्तुतिफलं कथयति–य इति॥६७॥६८॥६९॥१७०॥७१॥७२॥७३॥तत्र वाहनत्वं वृषभादिरूपेण वाहकत्वं नित्यमीहे सततमिच्छामीत्यर्थः॥७४॥७५॥७६॥७७॥ ॥७८॥७९॥ एतदध्यायफलं कथयति–त्रिपुरारेरिममित्यादिना ॥१८०–८३॥ लभेत् प्राप्नुयादित्यर्थः ॥१८४॥ दृष्ट्वैव दाहात्त्रिपुरस्य शंभो संस्थापिता देवगणा हि नाके।

सूत उवाच ॥ य इमं शृणुयाद्द्विजोत्तमा भुवि देवं प्रणिपत्य वा पठेत् ॥ स च मुंचति पापबंधनं भवभक्त्या पुरशासितुः स्तवम् ॥६७॥ श्रुत्वा च भक्त्या चतुराननेन स्तुतो हसञ्शैलसुतां निरीक्ष्य ॥ स्तवं तदा प्राह महानुभावं महाभुजो मंदरशृंगवासी ॥ ६८ ॥ शिव उवाच ॥ स्तवेनानेन तुष्टोस्मि तव भक्त्या च पद्मज ॥ वरान् वरय भद्रं ते देवानां च यथेप्सितान् ॥ ६९ ॥ सूत उवाच ॥ ततः प्रणम्य देवेशं भगवान्पद्मसंभवः ॥ कृतांजलिपुटो भूत्वा प्राहेदं प्रीतमानसः ॥१७० ॥ श्रीपितामह उवाच ॥ भगवन्देवदेवेश त्रिपुरांतक शंकर ॥ त्वयि भक्तिं परां मेऽद्य प्रसीद परमेश्वर ॥ ७१ ॥ देवानां चैव सर्वेषां त्वयि सर्वार्थदेश्वर ॥ प्रसीद भक्तियोगेन सारथ्येन च सर्वदा ॥७२॥ जनार्दनोपि भगवान्नमस्कृत्य महेश्वरम् ॥ कृतांजलिपुटो भूत्वा प्राह सांबं त्रियंबकम् ॥ ७३ ॥ वाहनत्वं तवेशान नित्यमीहे प्रसीद मे ॥ त्वयि भक्तिं च देवेश देवदेव नमोस्तु ते ॥ ७४ ॥ सामर्थ्यं च सदा मह्यं भवंतं वोढुमीश्वरम् ॥ सर्वज्ञत्वं च वरद सर्वगत्वं च शंकर ॥७५॥ सूत उवाच ॥ तयोः श्रुत्वा महादेवो विज्ञप्तिं परमेश्वरः॥ सारथ्ये वाहनत्वे च कल्पयामास वै भवः ॥ ७६ ॥ दत्त्वा तस्मै ब्रह्मणे विष्णवे च दग्ध्वा दैत्यान्देवदेवो महात्मा ॥ सार्धं देव्या नंदिना भूतसंघैरंतर्धानं कारयामास शर्वः ॥७७॥ ततस्तदा महेश्वरे गते रणाद्गणैः सह ॥ सुरेश्वराः सुविस्मिता भवं प्रणम्य पार्वतीम् ॥ ७८ ॥ ययुश्च दुःखवर्जिताः स्ववाहनैर्दिवं ततः ॥ सुरेश्वरा मुनीश्वरा गणेश्वराश्च भास्कराः ॥ ७९ ॥ त्रिपुरारेरिमं पुण्यं निर्मितं ब्रह्मणा पुरा ॥ यः पठेच्छ्राद्धकाले वा दैवे कर्मणि च द्विजाः ॥१८० ॥ श्रावयेद्वा द्विजान् भक्त्या ब्रह्मलोकं स गच्छति ॥ मानसैर्वाचिकैः पापैस्तथा वै कायिकैः पुनः ॥ ८१ ॥ स्थूलैः सूक्ष्मैः सुसूक्ष्मैश्च महापातकसंभवैः ॥ पातकैश्च द्विजश्रेष्ठा उपपातकसंभवैः ॥ ८२ ॥ पापैश्च मुच्यते जंतुः श्रुत्वाऽध्यायमिमं शुभम् ॥ शत्रवो नाशमायांति संग्रामे विजयी भवेत् ॥ ८३ ॥ सर्वरोगैर्न बाध्येत आपदो न स्पृशंति तम् ॥ धनमायुर्यशो विद्यां प्रभावमतुलं लभेत् ॥१८४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे त्रिपुरदाहे ब्रह्मस्तवो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

तथैव कामादिपुरत्रयं त्वं दग्ध्वा विभो मां कुरु पार्श्वसंस्थम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिपुरदाहे ब्रह्मस्तवो नाम द्विसप्ततितमोऽध्यायः ॥७२ ॥

त्रिसप्ततितमेऽध्याये देवेभ्यो ब्रह्मणोदितः ॥ लिंगार्चनविधिः सम्यक् सफलश्च निरूप्यते ॥ सूतस्त्रिपुरदाहानंतरकथां वर्णयति–गत इत्यादिना ॥ १ ॥ २ ॥ दैत्येशः अन्ये इत्यत्र पूर्वरूपाभावश्छांदसः ॥ ३ ॥ ४ ॥ ५ ॥ सर्वस्य शिवस्य लिंगमयः लिंगप्रचुरः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ पाशुपतं पशुपतिप्रोक्तं व्रतं कृत्वा ततो व्रतप्रभावात्पशुत्वं परित्यज्य महादेवः पूजनीय इत्यग्रिमेणान्वयः ॥ १० ॥ व्रतप्रकारं कथयति–विशोध्येत्यादिना । पंचभूतानि गगनादीनि पंचभिः प्रणवैः समं समायुक्तैः प्राणायामैर्विशोध्ये

सूत उवाच ॥ गते महेश्वरे देवे दग्ध्वा च त्रिपुरं क्षणात् ॥ सदस्याह सुरेंद्राणां भगवान्पद्मसंभवः ॥ १ ॥ पितामह उवाच ॥ संत्यज्य देव देवेशं लिंगमूर्तिं महेश्वरम् ॥ तारपौत्रो महातेजास्तारकस्य सुतो बली ॥ २ ॥ तारकाक्षोपि दितिजः कमलाक्षश्च वीर्यवान् ॥ विद्यु न्माली च दैत्येशः अन्ये चापि सबांधवाः ॥ ३ ॥ त्यक्त्वा देवं महादेवं मायया च हरेः प्रभोः ॥ सर्वे विनष्टाः प्रध्वस्ताः स्वपुरैः पुर संभवैः ॥ ४ ॥ तस्मात्सदा पूजनीयो लिंगमूर्तिः सदाशिवः ॥ यावत्पूजा सुरेशानां तावदेव स्थितिर्यतः ॥ ५ ॥ पूजनीयः शिवो नित्यं श्रद्धया देवपुंगवैः ॥ सर्वलिंगमयो लोकः सर्वं लिंगे प्रतिष्ठितम् ॥ ६ ॥ तस्मात्संपूजयेल्लिंगं य इच्छेत्सिद्धिमात्मनः ॥ सर्वे लिंगार्चनादेव देवा दैत्याश्च दानवाः ॥ ७ ॥ यक्षा विद्याधराः सिद्धा राक्षसाः पिशिताशनाः ॥ पितरो मुनयश्चापि पिशाचाः किन्नरादयः ॥ ८ ॥ अर्चयित्वा लिंगमूर्तिं संसिद्धा नात्र संशयः ॥ तस्माल्लिंगं यजेन्नित्यं येन केनापि वा सुराः ॥ ९ ॥ पशवश्च वयं तस्य देवदेवस्य धीमतः ॥ पशुत्वं च परित्यज्य कृत्वा पाशुपतं ततः ॥ १० ॥ पूजनीयो महादेवो लिंगमूर्तिः सनातनः ॥ विशोध्य चैव भूतानि पंचभिः प्रणवैः समम् ॥ ११ ॥ प्राणायामैः समायुक्तैः पंचभिः सुरपुंगवाः ॥ चतुर्भिः प्रणवैश्चैव प्राणायामपरायणैः ॥ १२ ॥ त्रिभिश्च प्रणवैर्देवाः प्राणायामैस्तथाविधैः ॥ द्विधा न्यस्य तथोंकारं प्राणायामपरायणः ॥ १३ ॥ ततश्चोंकारमुच्चार्य प्राणापानौ नियम्य च ॥ ज्ञानामृतेन सर्वांगान्यापूर्य प्रणवेन च ॥ १४ ॥ गुणत्रयं चतुर्धाख्यमहंकारं च सुव्रताः ॥ तन्मात्राणि च भूतानि तथा बुद्धींद्रियाणि च ॥ १५ ॥

त्यग्रिमस्थैरन्वयः ॥ ११ ॥ प्राणायामः परमयनं स्थानं येषां ते प्राणायामपरायणास्तैश्चतुर्भिः प्रणवैरित्यन्वयः ॥ १२ ॥ त्रिभिः प्रणवैस्तथाविधैः प्राणायामैः प्रणवयुक्तै रित्यर्थः । प्राणायामपरायणस्तत्परः तथा प्राणायामैरोंकारं द्विधा न्यस्येत्यन्वयः ॥ १३ ॥ ततः पूर्वोक्तप्राणायामानंतरं प्राणापानौ नियम्योंकारमुच्चार्य ज्ञानामृतेन प्रणवेन च सर्वांगान्यापूर्येत्यन्वयः ॥ १४ ॥ चतुर्धा मनोबुद्ध्यहंकारचित्तरूपचतुःप्रकारेणाख्यायते स चतुर्धाख्यस्तम् ॥ १५ ॥

पुरुषं विश्वं युगलं तैजसप्राज्ञद्वयमित्यर्थः । चिदात्मानं तनुं कृत्वा चैतन्यरूपां तनुं भावयित्वा अग्निरित्यादिमंत्रैर्भस्म संस्पृशेदित्यन्वयः ॥ १६ ॥ त्रियायुषं जमदग्नेरित्यादिमंत्रैः ॥ १७ ॥ भवेन पाशमोक्षार्थं त्विदं पाशुपतं व्रतं कथितमित्यन्वयः ॥ १८ ॥ एवं पूर्वोक्तप्रकारं पाशुपतं पशुपतिप्रोक्तं व्रतं कृत्वा मया ब्रह्मणा महात्मना विष्णुना च पुरा प्रथमतः दृष्टे लिंगे लिंगाकृतौ परमेश्वरं शिवं संपूज्य वर्षमात्रेण पशवो नैव जायंत इत्यग्रिमेणान्वयः ॥ अस्माभिः ब्रह्मविष्णुरुद्रैः सह बाह्ये चाभ्यंतरे चैव ईश्वरं शिवमभ्यर्च्य सर्वे कार्याणां कर्तव्यं कर्तृयोग्यतेत्यर्थः । मन्य इत्यग्रिमेणान्वयः॥ एषा पूर्वोक्ता मम विष्णोर्मुनीनां च दिव्या प्रतिज्ञा संदेहो न तस्माच्छिवं संपूजयेदित्यग्रिमेणान्वयः॥१९–२१॥

कर्मेंद्रियाणि संशोध्य पुरुषं युगलं तथा ॥ चिदात्मानं तनुं कृत्वा चाग्निर्भस्मेति संस्पृशेत् ॥ १६ ॥ वायुर्भस्मेति च व्योम तथांभो पृथिवी तथा ॥ त्रियायुषं त्रिसंध्यं च धूलयेद्भसितेन यः ॥१७॥ स योगी सर्वतत्त्वज्ञो व्रतं पाशुपतं त्विदम् ॥ भवेन पाशमोक्षार्थं कथितं देवसत्तमाः ॥ १८ ॥ एवं पाशुपतं कृत्वा संपूज्य परमेश्वरम् ॥ लिंगे पुरा मया दृष्टे विष्णुना च महात्मना ॥ १९ ॥ पशवो नैव जायंते वर्षमात्रेण देवताः ॥ अस्माभिः सर्वकार्याणां देवमभ्यर्च्य यत्नतः ॥ २० ॥ बाह्ये चाभ्यंतरे चैव मन्ये कर्तव्यमीश्वरम् ॥ प्रतिज्ञा मम विष्णोश्च दिव्यैषा सुरसत्तमाः ॥२१॥ मुनीनां च न संदेहस्तस्मात्संपूजयेच्छिवम् ॥ सा हानिस्तन्महच्छिद्रं स मोहः सा च मूकता॥२२॥ यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिंतयेत् ॥ भवभक्तिपरा ये च भवप्रणतचेतसः ॥ २३ ॥ भवसंस्मरणोद्युक्ता न ते दुःखस्य भाजनम् ॥ भवनानि मनोज्ञानि दिव्यमाभरणं स्त्रियः ॥ २४ ॥ धनं वा तुष्टिपर्यंतं शिवपूजाविधेः फलम् ॥ ये वांछंति महाभोगान् राज्यं च त्रिदशालये ॥ तेऽर्चयंतु सदा कालं लिंगमूर्तिं महेश्वरम् ॥ २५ ॥ हत्वा भित्त्वा च भूतानि दग्ध्वा सर्वमिदं जगत् ॥ २६ ॥ यजेदेकं विरूपाक्षं न पापैः स प्रलिप्यते ॥ शैलं लिंगं मदीयं हि सर्वदेवनमस्कृतम् ॥ २७ ॥ इत्युक्त्वा पूर्वमभ्यर्च्य रुद्रं त्रिभुवनेश्वरम् ॥ तुष्टाव वाग्भिरिष्टाभिर्देवदेवं त्रियंबकम् ॥ २८ ॥ तदाप्रभृति शक्राद्याः पूजयामासुरीश्वरम् ॥ साक्षात्पाशुपतं कृत्वा भस्मोद्धूलितविग्रहाः ॥ २९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे ब्रह्मप्रोक्तलिंगार्चनविधिर्नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

शिवाचिंतनरहितक्षणादिदोषान्कथयति–सा हानिरिति ॥ २२ ॥ २३ ॥ शिवभक्त्यादिमाहात्म्यं कथयति–भव इत्यादिना ॥ २४ ॥ २५ ॥ २६ ॥ शैलं शिलामयमित्यर्थः ॥ २७ ॥ २८ ॥ तदाप्रभृति ब्रह्मोपदेशमारभ्येत्यर्थः ॥ २९ ॥ श्रीब्रह्मप्रोक्ता वै सम्यग्विधिना महेश ते सांब ॥ पाशुपतव्रतयुक्ता लिंगार्चा मे सदा भूयात् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां ब्रह्मप्रोक्तलिंगार्चनविधिर्नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

चतुःसप्ततिकेऽध्याये देवलिंगानि च पृथक् । लिंगभेदा निरूप्यंते लिंगसंस्थापनात्फलम् ॥ सूतः देवानां पृथग्लिंगानि कथयति–लिंगानीत्यादिना ॥१ ॥२॥ कांतिकं रंगमयं वा चंद्रकांतमयमित्यर्थः । आरकूटमयं पैत्तलम् ॥ ३ ॥ ४ ॥ ५ ॥ त्रैलोहिकं त्रिविधलोहमयम् ॥ ६॥ ७ ॥ लक्ष्मीवृक्षमयं बिल्ववृक्षमयमित्यर्थः ॥ ८ ॥ गंधलिंगं सुगंधद्रव्यालिंग

सूत उवाच ॥ लिंगानि कल्पयित्वैवं स्वाधिकारानुरूपतः ॥ विश्वकर्मा ददौ तेषां नियोगाद्ब्रह्मणः प्रभोः ॥१॥ इन्द्रनीलमयं लिंगं विष्णुना पूजितं सदा ॥ पद्मरागमयं शक्रो हैमं विश्रवसः सुतः ॥ २ ॥ विश्वेदेवास्तथा रौप्यं वसवः कांतिकं शुभम् ॥ आरकूटमयं वायुरश्विनौ पार्थिवं सदा ॥ ३ ॥ स्फाटिकं वरुणो राजा आदित्यास्ताम्रनिर्मितम् ॥ मौक्तिकं सोमराड् धीमांस्तथा लिंगमनुत्तमम् ॥ ४ ॥ अनंताद्या महानागाः प्रवालकमयं शुभम् ॥ दैत्या ह्ययोमयं लिंगं राक्षसाश्च महात्मनः ॥ ५ ॥ त्रैलोहिकं गुह्यकाश्च सर्वलोहमयं गणाः ॥ चामुंडा सैकतं साक्षान्मातरश्च द्विजोत्तमाः ॥ ६ ॥ दारुजं नैर्ऋतिर्भक्त्या यमो मारकतं शुभम् ॥ नीलाद्याश्च तथा रुद्राः शुद्धं भस्ममयं शुभम् ॥ ७ ॥ लक्ष्मीवृक्षमयं लक्ष्मीर्गुहो वै गोमयात्मकम् ॥ मुनयो मुनिशार्दूलाः कुशाग्रमयमुत्तमम् ॥ ८ ॥ वामाद्याः पुष्पलिंगं तु गंधलिंगं मनोन्मनी ॥ सरस्वती च रत्नेन कृतं रुद्रस्य वाम्भसा ॥ ९ ॥ दुर्गा हैमं महादेवं सवेदिकमनुत्तमम् ॥ उग्रा पिष्टमयं सर्वे मंत्रा ह्याज्यमयं शुभम् ॥ १० ॥ वेदाः सर्वे दधिमयं पिशाचाः सीसनिर्मितम् ॥ लेभिरे च यथायोग्यं प्रसादाद्ब्रह्मणः पदम् ॥ ११ ॥ बहुनात्र किमुक्तेन चराचरमिदं जगत् ॥ शिवलिंगं समभ्यर्च्य स्थितमत्र न संशयः ॥ १२ ॥ षड्विधं लिंगमित्याहुर्द्रव्याणां च प्रभेदतः ॥ तेषां भेदाश्चतुर्युक्तचत्वारिंशदिति स्मृताः॥१३॥ शैलजं प्रथमं प्रोक्तं तद्धि साक्षाच्चतुर्विधम् ॥ द्वितीयं रत्नजं तच्च सप्तधा मुनिसत्तमाः ॥१४ ॥ तृतीयं धातुजं लिंगमष्टधा परमेष्ठिनः ॥ तुरीयं दारुजं लिंगं तत्तु षोडशधोच्यते ॥ १५ ॥ मृन्मयं पंचमं लिंगं द्विधा भिन्नं द्विजोत्तमाः ॥ षष्ठं तु क्षणिकं लिंगं सप्तधा परिकीर्तितम् ॥ १६ ॥ श्रीप्रदं रत्नजं लिंगं शैलजं सर्वसिद्धिदम् ॥ धातुजं धनदं साक्षाद्दारुजं भोगसिद्धिदम् ॥ १७ ॥ मृन्मयं चैव विप्रेंद्राः सर्वसिद्धिकरं शुभम् ॥ शैलजं चोत्तमं प्रोक्तं मध्यमं चैव धातुजम् ॥ १८ ॥ बहुधा लिंगभेदाश्च नव चैव समासतः ॥ मूले ब्रह्मा तथा मध्ये विष्णुस्त्रिभुवनेश्वरः ॥ १९ ॥

मित्यर्थः ॥९॥१०॥ सर्वे विष्ण्वादयः ब्रह्मप्रसादाद्ब्रह्मणोक्तलिंगार्चनाद्यथायोग्यं पदं लेभिरे इत्यन्वयः॥११॥१२॥१३॥१४॥१५॥क्षणिकं रंगवल्ल्यादिनिर्मितम् ॥१६–१९॥

रुद्रोपरीति संधिरार्षः । त्रिमया ब्रह्मविष्णुरुद्रमया ॥ २० ॥ तया वेद्येत्यर्थः ॥ २१ ॥ भक्त्या आस्थाप्य संपूज्य शुभं फलं भवतीति शेषः । मृन्मयं क्षणिकमेव त्यक्त्वा सकल चंद्रकलादिचिह्नयुक्तं वपुः बाणलिंगादि स्थापयेत्सः सुरेंद्रो देवेंद्रः अंभोजगर्भो ब्रह्मा तदाद्यैः स्तूयमानो देवदुंदुभिनिस्वनैः सह क्रमात्स्वेन तेजसा भूरादिलोकान समाक्रम्य स्वायतासिना स्वाधीनखड्गेन ब्रह्मांडमुद्भिद्य निर्विशंकया निर्गच्छेदिति पूर्वस्थैरन्वयः ॥ २२ ॥ २३ ॥ २४ ॥२५॥ २६ ॥ लिंगस्थापकस्योर्ध्वगतिमुक्त्वा जीवतोपि माहात्म्यं कथयति–विधिनेत्यादिना ॥ २७ ॥ २८ ॥ २९. ॥ सर्वेषां योगिभिन्नमर्त्यानां विभोः शिवस्य सकलं सगुणं वपुरेव भावनायोग्यं निष्कलं निर्गुणं योगिनां चित्तवृत्तिनिरोधवता

रुद्रोपरि महादेवः प्रणवाख्यः सदाशिवः ॥ लिंगवेदी महादेवी त्रिगुणा त्रिमयांबिका ॥ २० ॥ तया च पूजयेद्यस्तु देवी देवश्च पूजितौ ॥ शैलजं रत्नजं वापि धातुजं वापि दारुजम् ॥ २१ ॥ मृन्मयं क्षणिकं वापि भक्त्या स्थाप्य फलं शुभम् ॥ सुरेंद्रांभोजगर्भाग्नियमांबुपधनेश्वरैः ॥ २२ ॥ सिद्धविद्याधराहीन्द्रैर्यक्षदानवकिन्नरैः ॥ स्तूयमानः सुपुण्यात्मा देवदुंदुभिनिःस्वनैः ॥ २३ ॥ भूर्भुवःस्वर्महर्लोकान्क्रमाद्वै जनतः परम् ॥ तपः सत्यं पराक्रम्य भासयन् स्वेन तेजसा ॥ २४ ॥ लिंगस्थापनसन्मार्गनिहितस्वायतासिना ॥ आशु ब्रह्मांडमुद्भिद्य निर्गच्छेन्निर्विशंकया ॥ २५ ॥ शैलजं रत्नजं वापि धातुजं वापि दारुजम् ॥ मृन्मयं क्षणिकं त्यक्त्वा स्थापयेत्सकलं वपुः ॥२६॥ विधिना चैव कृत्वा तु स्कंदोमासहितं शुभम् ॥ कुंदगोक्षीरसंकाशं लिंगं यः स्थापयेन्नरः ॥ २७ ॥ नृणां तनुं समास्थाय स्थितो रुद्रो न संशयः॥ दर्शनात्स्पर्शनात्तस्य लभंते निर्वृतिं नराः ॥ २८ ॥ तस्य पुण्यं मया वक्तुं सम्यग्युगशतैरपि ॥ शक्यते नैव विप्रेंद्रास्तस्माद्वै स्थापयेत्तथा ॥ २९ ॥ सर्वेषामेव मर्त्यानां विभोर्दिव्यं वपुः शुभम् ॥ सकलं भावनायोग्यं योगिनामेव निष्कलम् ॥ ३० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवलिंगभेदसंस्थापनादिवर्णनंनाम चतुःसप्ततितमोध्यायः ॥ ७४ ॥ ऋषय ऊचुः ॥ निष्कलो निर्मलो नित्यः सकलत्वं कथं गतः ॥ वक्तुमर्हसि चास्माकं यथा पूर्वं यथा श्रुतम् ॥ १ ॥

मेवेत्यन्वयः॥३०॥महेशलिंगपूजने तथैव सन्निवेशने । सदास्तु सक्तमानसं ममानिशं जगत्पते ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां शिवलिंगभेदसंस्थापनादिवर्णनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ पंचसप्ततिकेऽध्याये वास्तवो निर्गुणः शिवः । उमायुतो योगगम्यः षडध्वादौ निरूप्यते ॥ ऋषयः शौनकादयः सूतमपृच्छन् निष्कलेति । नित्योऽक्षरः निर्मलो मायाविकारशून्यः निष्कलो निर्गुणः शिवः सकलत्वं सगुणरूपत्वं कथं गतस्त्वयेति शेषः। पूर्वं यथा श्रुतं तथास्माकं वक्तुमर्हसीत्यन्वयः ॥ १ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ पापहेतुकमनृतादिवाचा तथा मनसापि क्वचिन्न कुर्वीतेत्यग्रिमेणान्वयः ॥ ३७ ॥ ३८ ॥ यातः यामः प्रहरो यस्य तद्यातयामान्नं गणान्नं बहुस्वामिकमन्नं समुदायान्नं बहुसमुदायार्थकृतमन्नमित्यर्थः ॥ ३९ ॥ ४० ॥ स्विन्नानां भर्जितानां बीजानां धान्यानां पुनर्जन्म फलप्रादुर्भावः न विद्यते तद्वद्ब्रह्मवादिनोऽपि ब्राह्मणान् राजप्रतिग्रहैर्दग्धान्विद्यादिति शेषः ॥ ४१ ॥ ४२ ॥ भोजनविधिं कथयति—अस्नात्वेत्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ उदकपाननियमान् कथयति—आस्ये

वर्णाश्रमविधानोक्तं धर्मं कुर्वीत यत्नतः ॥ ३३ ॥ यस्य यद्विहितं कर्म तत्कुर्वन्मत्प्रियः सदा ॥ संध्योपासनशीलः स्यात्सायं प्रातः प्रयत्नधीः ॥ ३४ ॥ उदयास्तमयात्पूर्वमारभ्य विधिना शुचिः ॥ कामान्मोहाद्भयाल्लोभात्संध्यां नातिक्रमेद्द्विजः ॥ ३५ ॥ संध्यातिक्रमणाद्विप्रो ब्राह्मण्यात्पतते यतः ॥ असत्यं न वदेत्किंचिन्न सत्यं च परित्यजेत् ॥ ३६ ॥ यत्सत्यं ब्रह्म इत्याहुरसत्यं ब्रह्मदूषणम् ॥ अनृतं परुषं शाठ्यं पैशुन्यं पापहेतुकम् ॥ ३७ ॥ परदारान्परद्रव्यं परहिंसां च सर्वदा ॥ क्वचिच्चापि न कुर्वीत वाचा च मनसा तथा ॥ ३८ ॥ शूद्रान्नं यातयामान्नं नैवेद्यं श्राद्धमेव च ॥ गणान्नं समुदायान्नं राजान्नं च विवर्जयेत् ॥ २९ ॥ अन्नशुद्धौ सत्त्वशुद्धिर्न मृदा न जलेन वै ॥ सत्त्वशुद्धौ भवेत्सिद्धिस्ततोऽन्नं परिशोधयेत् ॥ १४० ॥ राजप्रतिग्रहैर्दग्धान्ब्राह्मणान्ब्रह्मवादिनः ॥ स्विन्नानामपि बीजानां पुनर्जन्म न विद्यते ॥ ४१ ॥ राजप्रतिग्रहो घोरो बुद्ध्वा चादौ विषोपमः ॥ बुधेन परिहर्तव्यः श्वमांसं चापि वर्जयेत् ॥ ४२ ॥ अस्नात्वा न च भुंजीयादजपोऽग्निमपूज्य च ॥ पर्णपृष्ठे न भुञ्जीयाद्रात्रौ दीपं विना तथा ॥ ४३ ॥ भिन्नभांडे च रथ्यायां पतितानां च सन्निधौ ॥ शूद्रशेषं न भुंजीयात्सहान्नं शिशुकैरपि ॥ ४४ ॥ शुद्धान्नं स्निग्धमश्नीयात्संस्कृतं चाभिमंत्रितम् ॥ भोक्ता शिव इति स्मृत्वा मौनी चैकाग्रमानसः ॥ ४५ ॥ आस्येन न पिबेत्तोयं तिष्ठन्नंजलिनापि वा ॥ वामहस्तेन शय्यायां तथैवान्यकरेण वा ॥ ४६ ॥ विभीतकार्ककारंजस्नुहिच्छायां न चाश्रयेत् ॥ स्तंभदीपमनुष्याणामन्येषां प्राणिनां तथा ॥ ४७ ॥ एको न गच्छेदध्वानं बाहुभ्यां नोत्तरेन्नदीम् ॥ नावरोहेत कूपादिं नारोहेदुच्चपादपान् ॥ ४८ ॥ सूर्याग्निजलदेवानां गुरूणां विमुखः शुभे ॥ न कुर्यादिह कार्याणि जपकर्म शुभानि वा ॥ ४९ ॥ अग्नौ न तापयेत्पादौ हस्तं पद्भ्यां न संस्पृशेत् ॥ अग्नेर्नोच्छ्रयमासीत नाग्नौ किंचिन्मलं त्यजेत् ॥ १५० ॥

नेति ॥ ४६ ॥ वर्ज्यच्छायां कथयति—विभीतकेति । स्नुहिच्छायां सदुग्धद्रुमच्छायामित्यर्थः ॥ ४७ ॥ अन्यानपि बहुतिथनियमान्कथयति—एक इत्यादिना ॥ ४८ ॥ विमुखः प्रत्यङ्मुख इत्यर्थः ॥ ४९ ॥ अग्नेरुच्छ्रयमूर्ध्वासन इत्यर्थः ॥ १५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ मार्जारनिषेधः कस्तूरीमार्जाराद्यरण्यमार्जारपरो ज्ञेयः ॥ ५४ ॥ तन्मार्जारसहभोजिनान्नं स्फिग्वातं कटिवातं "स्त्रियां स्फिचौ कटीप्रोथौ" इत्यमरः

न जलं ताडयेत्पद्भ्यां नांभस्यंगमलं त्यजेत् ॥ मलं प्रक्षालयेत्तीरे प्रक्षाल्य स्नानमाचरेत् ॥ ५१ ॥ नखाग्रकेशनिर्धूतस्नानवस्त्रघटोदकम् ॥ अश्रीकरं मनुष्याणामशुद्धं संस्पृशेद्यदि ॥ ५२॥ अजाश्वानखरोष्ट्राणां मार्जनात्तुपरेणुकान् ॥ संस्पृशेद्यदि मूढात्मा श्रियं हंति हरेरपि ॥ ५३ ॥ मार्जारश्च गृहे यस्य सोप्यंत्यजसमो नरः ॥ भोजयेद्यस्तु विप्रेंद्रान्मार्जारान्संनिधौ यदि ॥ ५४ ॥ तच्चांडालसमं ज्ञेयं नात्र कार्या विचारणा ॥ स्फिग्वातं शूर्पवातं च वातं प्राणमुखानिलम् ॥ ५५ ॥ सुकृतानि हरंत्येते संस्पृष्टाः पुरुषस्य तु ॥ उष्णीषी कंचुकी नग्नो मुक्तकेशो मलावृतः ॥ ५६ ॥ अपवित्रकरोशुद्धः प्रलपन्न जपेत् क्वचित् ॥ क्रोधो मदः क्षुधा तंद्रा निष्ठीवनविजृंभणे ॥५७॥ श्वनीचदर्शनं निद्रा प्रलापास्ते जपद्विपः ॥ एतेषां संभवे वापि कुर्यात्सूर्यादिदर्शनम् ॥ ५८ ॥ आचम्य वा जपेच्छेषं कृत्वा वा प्राणसंयमम् ॥ सूर्योग्निश्चंद्रमाश्चैव ग्रहनक्षत्रतारकाः ॥ ५९ ॥ एते ज्योतींषि प्रोक्तानि विद्वद्भिर्ब्राह्मणैस्तथा ॥ प्रसार्य पादौ न जपेत्कुक्कुटासन एव च ॥ १६० ॥ अनासनः शयानो वा रथ्यायां शूद्रसन्निधौ ॥ रक्तभूम्यां च खट्वायां न जपेज्जापकस्तथा ॥ ६१ ॥ आसनस्थो जपेत्सम्यक् मंत्रार्थगतमानसः ॥ कौशेयं व्याघ्रचर्म वा चैलं तौलमथापि वा ॥ ६२ ॥ दारवं तालपर्णं वा आसनं परिकल्पयेत् ॥ त्रिसंध्यं तु गुरोः पूजा कर्तव्या हितामिच्छता ॥६३॥ यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ॥ यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ॥६४॥ शिवविद्यागुरोस्तस्माद्भक्त्या च सदृशं फलम् ॥ सर्वदेवमयो देवि सर्वशक्तिमयो हि सः ॥ ६५ ॥ सगुणो निर्गुणो वापि तस्याज्ञां शिरसा वहेत् ॥ श्रेयोर्थी यस्तु गुर्वाज्ञां मनसापि न लंघयेत् ॥६६॥ गुर्वाज्ञापालकः सम्यक् ज्ञानसंपत्तिमश्नुते ॥ गच्छंस्तिष्ठन्स्वपन् भुंजन्यद्यत्कर्म समाचरेत् ॥ ६७ ॥ समक्षं यदि तत्सर्वं कर्तव्यं गुर्वनुज्ञया ॥ गुरोर्देवसमक्षं वा न यथेष्टासनो भवेत् ॥ ६८ ॥ गुरुर्देवो यतः साक्षात्तद्गृहं देवमंदिरम् ॥ पापिनां च यथासंगात्तत्पापैः पतनं भवेत् ॥ ६९ ॥

॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ १६० ॥ ६१ ॥ व्याघ्रचर्म अस्यास्तीत्यर्शाद्यच् ॥ ६२ ॥ ६३ ॥ गुरुमाहात्म्यादि कथयति—यो गुरुरित्यादिना ॥ ६४–६९ ॥

॥ १७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ७५ ॥ ७६ ॥ ७७ ॥ निर्गुणस्य भावः नैर्गुण्यं तच्छतं भजनीति नैर्गुण्यशतभाक् ॥ ७८ ॥ ७९॥ १८० ॥ कुर्वन्नहितमिति शेषः ॥ ८१ ॥ गुरुमनुज्ञाप्य विज्ञाप्य नम्माद्विमुखः पार्श्वस्थः वदेदित्यन्वयः ॥ ८२ ॥ मंत्रविनियोगं कथयति–गुरुप्रियकर इत्यादिना ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ स्नाने

तद्वदाचार्यसंगेन तद्धर्मफलभाग्भवेत् ॥ यथैव वह्निसंपर्कान्मलं त्यजति कांचनम् ॥ १७० ॥ तथैव गुरुसंपर्कात्पापं त्यजति मानवः ॥ यथा वह्निसमीपस्थो घृतकुंभो विलीयते ॥ ७१ ॥ तथा पापं विलीयेत आचार्यस्य समीपतः ॥ यथा प्रज्वलितो वह्निर्विष्ठा काष्ठं च निर्दहेत् ॥ ७२ ॥ गुरुस्तुष्टो दहत्येवं पापं तन्मंत्रतेजसा ॥ ब्रह्मा हरिस्तथा रुद्रो देवाश्च मुनयस्तथा ॥ ७३ ॥ कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ कर्मणा मनसा वाचा गुरोः क्रोधं न कारयेत् ॥ ७४ ॥ तस्य क्रोधेन दह्यंते आयुःश्रीज्ञानसत्क्रियाः ॥ तत्क्रोधं ये करिष्यंति तेषां यज्ञाश्च निष्फलाः ॥ ७५ ॥ जपान्यनियमाश्चैव नात्र कार्या विचारणा ॥ गुरोर्विरुद्धं यद्वाक्यं न वदेत्सर्वयत्नतः ॥ ७६ ॥ वदेद्यदि महामोहाद्रौरवं नरकं व्रजेत् ॥ चित्तेनैव च वित्तेन तथा वाचा च सुव्रताः ॥ ७७ ॥ मिथ्या न कारयेद्देवि क्रियया च गुरोः सदा ॥ दुर्गुणे ख्यापिते तस्य नैर्गुण्यशतभाग्भवेत् ॥ ७८ ॥ गुणे तु ख्यापिते तस्य सार्वगुण्यफलं भवेत् ॥ गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा ॥ ७९ ॥ ॥ असमक्षं समक्षं वा गुरोः कार्यं समाचरेत् ॥ गुरोर्हितं प्रियं कुर्यान्मनोवाक्कायकर्मभिः ॥ १८० ॥ कुर्वन्पतत्यधो गत्वा तत्रैव परिवर्तते ॥ तस्मात्स सर्वदोपास्यो वन्दनीयश्च सर्वदा ॥ ८१ ॥ समीपस्थोप्यनुज्ञाप्य वदेत्तद्विमुखो गुरुम् ॥ एवमाचारवान् भक्तो नित्यं जपपरायणः ॥ ८२ ॥ गुरुप्रियकरो मंत्रं विनियोक्तुं ततोर्हति ॥ विनियोगं प्रवक्ष्यामि सिद्धमंत्रप्रयोजनम् ॥ ८३ ॥ दौर्बल्यं याति तन्मंत्रं विनियोगमजानतः ॥ यस्य येन वियुंजीत कार्येण तु विशेषतः ॥ ८४ ॥ विनियोगः स विज्ञेय ऐहिकामुष्मिकं फलम् ॥ विनियोगजमायुष्यमारोग्यं तनुनित्यता ॥८५॥ राज्यैश्वर्यं च विज्ञानं स्वर्गो निर्वाण एव च ॥ प्रोक्षणं चाभिषेकं च अघमर्षणमेव च ॥ ८६ ॥ स्नाने च संध्ययोश्चैव कुर्यादेकादशेन वै ॥ शुचिः पर्वतमारुह्य जपेल्लक्षमतंद्रितः ॥८७॥ महानद्यां द्विलक्षं तु दीर्घमायुरवाप्नुयात् ॥ दूर्वांकुरास्तिला वाणी गुडूची घुटिका तथा ॥ ८८ ॥ तेषां तु दशसाहस्रं होममायुष्यवर्धनम् ॥ अश्वत्थवृक्षमाश्रित्य जपेल्लक्षद्वयं सुधीः ॥ ८९ ॥

संध्ययोश्च प्रोक्षणादिकमेकादशेन तत्संख्यमंत्रजपेन कुर्यादिति पूर्वस्थैरन्वयः ॥ ८७ ॥ ८८ ॥ ८९ ॥

॥ १९० ॥ ९१ ॥ अर्कैरर्कसमिद्भिः ॥ ९२ ॥ अर्कसन्निधौ सूर्यसमीपतः ॥ ९३ ॥ एकादशेनाभिमंत्रितमेवान्नं भुंजीयादित्यन्वयः ॥९४॥ ९५॥९६॥ ९७ ॥ अष्टाविंशज्ज-

शनैश्चरदिने स्पृष्ट्वा दीर्घायुष्यं लभेन्नरः ॥ शनैश्चरादिनेऽश्वत्थं पाणिभ्यां संस्पृशेत्सुधीः ॥ १९० ॥ जपेदष्टोत्तरशतं सोपमृत्युहरो भवेत् ॥
आदित्याभिमुखो भूत्वा जपेल्लक्षमनन्यधीः ॥ ९१ ॥ अर्कैरष्टशतं नित्यं जुह्वन्व्याधेर्विमुच्यते ॥ समस्तव्याधिशांत्यर्थं पलाशसमिधैर्नरः
॥ ९२ ॥ हुत्वा दशसहस्रं तु निरोगी मनुजो भवेत् ॥ नित्यमष्टशतं जप्त्वा पिबेदंभोर्कसन्निधौ ॥ ९३ ॥ औदर्यैर्व्याधिभिः सर्वैर्मासेने
केन मुच्यते ॥ एकादशेन भुंजीयादन्नं चैवाभिमंत्रितम् ॥ ९४ ॥ भक्ष्यं चान्यत्तथा पेयं विषमप्यमृतं भवेत् ॥ जपेल्लक्षं तु पूर्वाह्ने हुत्वा
चाष्टशतेन वै ॥ ९५ ॥ सूर्यं नित्यमुपस्थाय सम्यगारोग्यमाप्नुयात् ॥ नदीतोयेन संपूर्णं घटं संस्पृश्य शोभनम् ॥ ९६॥ जप्त्वायुतं च
तत्स्नानाद्रोगाणां भेषजं भवेत् ॥ अष्टाविंशज्जपित्वान्नमश्नीयादन्वहं शुचिः ॥ ९७ ॥ हुत्वा च तावत्पालाशैरेवं वारोग्यमश्नुते ॥ चंद्रसूर्य
ग्रहे पूर्वमुपोष्य विधिना शुचिः ॥ ९८ ॥ यावद्ग्रहणमोक्षं तु तावन्नद्यां समाहितः ॥ जपेत्समुद्रगामिन्यां विमोक्षे ग्रहणस्य तु ॥ ९९ ॥
अष्टोत्तरसहस्रेण पिबेद्ब्राह्मीरसं द्विजाः ॥ ऐहिकां लभते मेधां सर्वशास्त्रधरां शुभाम् ॥२००॥ सारस्वती भवेद्देवी तस्य वागतिमानुषी ॥
ग्रहनक्षत्रपीडासु जपेद्भक्त्यायुतं नरः ॥१॥ हुत्वा चाष्टसहस्रं तु ग्रहपीडां व्यपोहति ॥ दुःस्वप्नदर्शने स्नात्वा जपेद्वै चायुतं नरः ॥ २ ॥ घृते
नाष्टशतं हुत्वा सद्यः शांतिर्भविष्यति ॥ चंद्रसूर्यग्रहे लिंगं समभ्यर्च्य यथाविधि ॥३॥ यत्किंचित्प्रार्थयेद्देवि जपेदयुतमादरात् ॥ संनिधा
वस्य देवस्य शुचिः संयतमानसः ॥ ४ ॥ सर्वान्कामानवाप्नोति पुरुषो नात्र संशयः ॥ गजानां तुरगाणां तु गोजातीनां विशेषतः ॥ ५ ॥
व्याध्यागमे शुचिर्भूत्वा जुहुयात्समिधाहुतिम् ॥ मासमभ्यर्च्य विधिनाऽयुतं भक्तिसमन्वितः ॥ ६ ॥ तेषामृद्धिश्च शांतिश्च भविष्यति न
संशयः ॥ उत्पाते शत्रुबाधायां जुहुयादयुतं शुचिः ॥ ७ ॥ पालाशसमिधैर्देवि तस्य शांतिर्भविष्यति ॥ आभिचारिकबाधायामेतद्देवि
समाचरेत् ॥ ८ ॥ प्रत्यग् भवति तच्छक्तिः शत्रोः पीडा भविष्यति ॥ विद्वेषणार्थं जुहुयाद्बिभीतसमिधाष्टकम् ॥ ९ ॥

अष्टोत्तरसहस्रेणाभिमंत्रितमिति शेषः । ब्राह्मीरसं पिबेदित्यन्वयः ॥२००॥१ ॥
पित्वा तावत्पालाशैः हुत्वान्नमश्नीयादेवं वा आरोग्यमश्नुत इति पूर्वस्यैवान्वयः ॥ ९८ ॥९ ९ ॥

अक्षरप्रातिलोम्येन मंत्राक्षरवैपरीत्यक्रमेणेत्यर्थः ॥ २१० ॥ प्रायश्चित्तविधिं कथयति—प्रायश्चित्तमित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥१४॥१५॥१६॥लक्षस्य अयुतं लक्षायुतं शतकोटिसंख्यामित्यर्थः ॥ १७ ॥ शेषाणां स्वल्पपानकानामित्यर्थः ॥ १८ ॥ पुरश्चरणजपफलं कथयति—आत्मबोधपरमित्यादिना । अनाकुलः स्वस्थचित्त इत्यर्थः ॥ १९ ॥

अक्षरप्रातिलोम्येन आर्द्रेण रुधिरेण वा ॥ विषेण रुधिराभ्यक्तो विद्वेषणकरं नृणाम् ॥ २१० ॥ प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशुद्धये ॥ पापशुद्धिर्यथा सम्यक् कर्तुमभ्युद्यतो नरः ॥ ११ ॥ पापशुद्धिर्यतः सम्यग् ज्ञानसंपत्तिहैतुकी ॥ पापशुद्धिं चेत्पुंसः क्रियाः सर्वाश्च निष्फलाः ॥ १२ ॥ ज्ञानं च हीयते तस्मात्कर्तव्यं पापशोधनम् ॥ विद्यालक्ष्मीविशुद्ध्यर्थं मां ध्यात्वांजलिना शुभे ॥ १३ ॥ शिवेनैका दशेनाद्भिरभिषिंचेत्समंततः ॥ अष्टोत्तरशतेनैव स्नायात्पापविशुद्धये ॥ १४ ॥ सर्वतीर्थफलं तच्च सर्वपापहरं शुभम् ॥ संध्योपासनविच्छेदे जपेदष्टशतं नरः ॥ १५ ॥ विड्वराहैश्च चांडालैर्दुर्जनैः कुक्कुटैरपि ॥ स्पृष्टमन्नं न भुंजीत भुक्त्वा चाष्टशतं जपेत् ॥ १६ ॥ ब्रह्महत्या विशुद्ध्यर्थं जपेल्लक्षायुतं नरः ॥ पातकानां तदर्धं स्यान्नात्र कार्या विचारणा ॥१७॥ उपपातकदुष्टानां तदर्धं परिकीर्तितम् ॥ शेषाणामपि पापानां जपेत्पंचसहस्रकम् ॥ १८ ॥ आत्मबोधपरं गुह्यं शिवबोधप्रकाशकम् ॥ शिवः स्यात्स जपन्मंत्रं पंचलक्षमनाकुलः ॥ १९ ॥ पंचवायुजयं भद्रे प्राप्नोति मनुजः सुखम् ॥ जपेच्च पंचलक्षं तु विगृहीतेंद्रियः शुचिः ॥ २२० ॥ पंचेंद्रियाणां विजयो भविष्यति वरानने ॥ ध्यानयुक्तो जपेद्यस्तु पंचलक्षमनाकुलः ॥ २१ ॥ विषयाणां च पंचानां जयं प्राप्नोति मानवः ॥ चतुर्थं पंचलक्षं तु यो जपेद्भक्तिसंयुतः ॥ २२ ॥ भूतानामिह पंचानां विजयं मनुजो लभेत् ॥ चतुर्लक्षं जपेद्यस्तु मनः संयम्य यत्नतः ॥ २३ ॥ सम्यग्विजयमाप्नोति करणानां वरानने ॥ पंचविंशतिलक्षाणां जपेन कमलानने ॥ २४ ॥ पंचविंशतितत्त्वानां विजयं मनुजो लभेत् ॥ मध्यरात्रेतिनिर्वाते जपेदयुतमादरात् ॥ २५ ॥ ब्रह्मसिद्धिमवाप्नोति व्रतेनानेन सुंदरि ॥ जपेल्लक्षमनालस्यो निर्वाते ध्वनिवर्जिते ॥ २६ ॥ मध्यरात्रे च शिवयोः पश्यत्येव न संशयः ॥ अंधकारविनाशश्च दीपस्येव प्रकाशनम् ॥ २७ ॥

॥ २२० ॥ २१ ॥ २२ ॥ २३ ॥ करणानां मनोबुद्ध्यहंकारचित्तरूपाणामित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ अनालस्यः ध्वनिवर्जिते निर्वाते वातशून्यस्थले मध्यरात्रे यः लक्षं जपेत्स शिवयोः शिवाशिवयोः स्वरूपमिति शेषः । पश्यति साक्षात्करोत्येवेति पूर्वस्थैरन्वयः । अन्यत्फलं कथयति—अंधकार इत्यादिना । अंधकारः अज्ञानमित्यर्थः ॥ २७ ॥

॥ २८ ॥ कोटिजपफलं कथयति–सबीजेति ॥ २९ ॥ फलश्रुतिं कथयति–इतीत्यादिना ॥ २३० ॥ शिवलोके कैलासे महीयते पूजां लभत इत्यर्थः ॥२३१॥ सर्वश्रेष्ठतमोयं
मंत्रः पंचाक्षरः शंभोः । विधिनाविधिना जपः स्याच्छिवसायुज्यदोस्माकम् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचाशीतितमोध्यायः ॥८५॥ षडशीतितमेऽध्याये
सर्वदुःखनिवारकम् । ध्यानं च ज्ञानमाहात्म्यं शिवप्रोक्तं निरूप्यते ॥ ऋषयो ध्यानयज्ञमपृच्छन्–जपादित्यादिना॥१॥ विश्वं कर्म यस्य स विश्वकर्मा तेन रुद्रेण कालकूटाख्यं

हृदयांतर्बहिर्वापि भविष्यति न संशयः ॥ सर्वसंपत्समृद्ध्यर्थं जपेदयुतमात्मवान् ॥ २८ ॥ सबीजसंपुटं मंत्रं शतलक्षं जपेच्छुचिः ॥ मत्सा युज्यमवाप्नोति भक्तिमान् किमतः परम् ॥२९॥ इति ते सर्वमाख्यातं पंचाक्षरविधिक्रमम्॥ यः पठेच्छृणुयाद्वापि स याति परमां गतिम्॥ ॥ २३० ॥ श्रावयेद्वा द्विजाञ्छुद्धान्पंचाक्षरविधिक्रमम् ॥ दैवे कर्मणि पित्र्ये वा शिवलोके महीयते ॥ २३१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे पंचाक्षरमाहात्म्यं नाम पंचाशीतितमोध्यायः ॥ ८५ ॥ ऋषय ऊचुः ॥ जपाच्छ्रेष्ठतमं प्राहुर्ब्राह्मणा दग्धकिल्बिषाः ॥ विरक्तानां प्रबुद्धानां ध्यानयज्ञं सुशोभनम् ॥ १ ॥ तस्माद्वदस्व सूताद्य ध्यानयज्ञमशेषतः ॥ विस्तरात्सर्वयत्नेन विरक्तानां महात्मनाम् ॥ २ ॥ तेषां तद्वचनं श्रुत्वा मुनीनां दीर्घसत्रिणाम् ॥ रुद्रेण कथितं प्राह गुहां प्राप्य महात्मनाम् ॥ ३ ॥ संहृत्य कालकूटाख्यं विषं वै विश्वकर्मणा ॥ सूत उवाच ॥ गुहां प्राप्य सुखासीनं भवान्या सह शंकरम् ॥ ४ ॥ मुनयः संशितात्मानः प्रणेमुस्तं गुहाश्रयम् ॥ अस्तुवंश्च ततः सर्वे नीलकंठमुमापतिम् ॥ ५ ॥ अत्युग्रं कालकूटाख्यं संहृतं भगवंस्त्वया ॥ अतः प्रतिष्ठितं सर्वं त्वया देव वृषध्वज ॥ ६ ॥ तेषां तद्वचनं श्रुत्वा भगवान्नीललोहितः ॥ प्रहसन्प्राह विश्वात्मा सनंदनपुरोगमान् ॥ ७ ॥ किमनेन द्विजश्रेष्ठा विषं वक्ष्ये सुदारुणम् ॥ संहरेत्तद्विषं यस्तु स समर्थो ह्यनेन किम् ॥ ८ ॥ न विषं कालकूटाख्यं संसारो विषमुच्यते ॥ तस्मात्सर्वप्रयत्नेन संहरेत सुदारुणम् ॥ ९ ॥ संसारो द्विविधः प्रोक्तः स्वाधिकारानुरूपतः ॥ पुंसां संमूढचित्तानामसंक्षीणः सुदारुणः ॥ १० ॥ ईषणारागदोषेण सर्गो ज्ञानेन सुव्रताः ॥ तद्वशादेव सर्वेषां धर्माधर्मौ न संशयः ॥ ११ ॥

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥
विषं संहृत्य गुहां मेरुगुहां प्राप्य महात्मनाम् ऋषीणां कथितं सूत इति शेषः ॥ २ ॥ तेषां शौनकादीनां प्राहेत्यग्रिमस्थेनान्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥
संसारो द्विविधः तामसराजसभेदेन द्विप्रकार इत्यर्थः । तामसं कथयति–पुंसामिति ॥ १० ॥ संसारमूलं कथयति–ईषणेति । ईषणा इच्छा रागो विषयप्रीतिरित्यर्थः॥ ११ ॥

पुण्यहेतुराजसमंसारं कथयति–असन्निकृष्टेति । असन्निकृष्टेऽप्रत्यक्षेऽर्थे स्वर्गादौ सतामास्तिकजीवानां श्रवणात्तद्धर्मप्रतिपादकं शास्त्रं संसारे बुद्धिमुत्पादयत्येवेत्यन्वयः ॥ १२ ॥ तस्माद्विषरूपत्वाद्दृष्टमैहिकमानुश्राविकं पारलौकिकमुभयात्मकं दुष्टमिति यः संत्यजेत्स विरक्तोऽभिधीयत इत्यन्वयः ॥ १३ ॥ श्रुतेः कर्मसु अभागमनैकदेशी ब्रह्मणः वेदस्य मूर्धानं मस्तकरूपम् ऋषीणामतींद्रियद्रष्टॄणां सारं कर्मणः निष्कामकर्मणः फलं यदध्यात्मशास्त्रं तच्छास्त्रमित्युच्यत इत्यन्वयः ॥ १४ ॥ नन्वेवं चेत् " अग्नीषोमीयं पशुमालभेत स्वर्गकामः " इत्यादिश्रुतीनां काम्यकर्मप्रवर्तनमनुचितमित्याशंक्य समाधत्ते–नन्विति । सर्वेषां कामः स्वभावो दृष्टः तेषां श्रुतिः प्रवर्तिका न कर्मणि अतद्विदः अन्यथा वदंतीति शेषः । तदुक्तं भागवत एकादशे " वेदोक्तमेव कुर्वाणो निःसंगार्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः॥" इति ॥१५॥ समर्थानां विरक्तानामित्यर्थः ॥१६॥

असन्निकृष्टे त्वर्थेऽपि शास्त्रं तच्छ्रवणात्सताम् ॥ बुद्धिमुत्पादयत्येव संसारे विदुषां द्विजाः॥ १२॥ तस्माद्दृष्टानुश्राविकं दुष्टमित्युभयात्मकम् ॥ संत्यजेत्सर्वयत्नेन विरक्तः सोऽभिधीयते ॥ १३ ॥ शास्त्रमित्युच्यतेऽभागं श्रुतेः कर्मसु तद्द्विजाः॥ मूर्धानं ब्रह्मणः सारमृषीणां कर्मणः फलम् ॥१४॥ ननु स्वभावः सर्वेषां कामो दृष्टो न चान्यथा ॥ श्रुतिः प्रवर्तिका तेषामिति कर्मण्यतद्विदः ॥ १५॥ निवृत्तिलक्षणो धर्मः समर्थाना मिहोच्यते ॥ तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम्॥१६॥ कला संशोषमायाति कर्मणान्यस्वभावतः॥ सकलस्त्रिविधो जीवो ज्ञानहीन स्त्वविद्यया ॥ १७ ॥ नारकी पापकृत्स्वर्गी पुण्यकृत्पुण्यगौरवात् ॥ व्यतिमिश्रेण वै जीवश्चतुर्धा संव्यवस्थितः ॥ १८ ॥ उद्भिज्जः स्वेदजश्चैव अंडजो वै जरायुजः॥ एवं व्यवस्थितो देही कर्मणाज्ञो ह्यनिर्वृतः ॥ १९ ॥ प्रजया कर्मणा मुक्तिर्धनेन च सतां न हि ॥ त्यागे नैकेन मुक्तिः स्यात्तदभावाद्भ्रमत्यसौ ॥२०॥ एवमज्ञानदोषेण नानाकर्मवशेन च ॥ षट्कौशिकं समुद्भूतं भजत्येष कलेवरम्॥२१॥ गर्भे दुःखान्यनेकानि योनिमार्गे च भूतले ॥ कौमारे यौवने चैव वार्धके मरणेऽपि वा ॥ २२ ॥ विचारतः सतां दुःखं स्त्रीसंसर्गादिभिर्द्विजाः ॥ दुःखेनैकेन वै दुःखं प्रशाम्यंतीह दुःखिनः॥२३॥ न जातु कामः कामानामुपभोगेन शाम्यति॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥२४॥

कर्मणा वेदोक्तनिष्कामेन कला जीवकला संशोषमायाति अविद्यया ज्ञानहीनास्त्रिविधोग्रिमोक्तात्रिप्रकारो जीवः अन्यस्वभावतः काम्यकर्मवशेन सकल इत्यन्वयः ॥ १७ ॥ पापकृन्नारकी पुण्यकृत्स्वर्गी तृतीयो व्यतिमिश्रेण पुण्यपापात्मककर्मणा चतुर्धा संव्यवस्थितोऽग्रिमोक्तोद्भिज्जादिदेहयुक्त इत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ षट्कौशिकं स्नाय्वादि षट्कोशयुक्तम् । तदुक्तम् शिवगीतायाम्–" पितृभ्यामशितादन्नात् षट्कोशं जायते वपुः । स्नायवोऽस्थीनि मज्जा च जायंते पितृतस्तथा । त्वङ्मांसं शोणितमिति मातृतश्च भवंति हि ॥ " इति ॥ २१ ॥ संसारस्य सर्वतो दुःखमयत्वं वर्णयति–गर्भ इत्यादिना ॥ २२ ॥ २३ ॥ २४ ॥

संयोगाद्विषयत्प्राप्त्येत्यर्थः ॥ २५ ॥ २६ ॥ क्षयो नाशः सातिशयोऽन्यश्रैष्ठ्यं ते आद्ये कारणे येषां तानि तैर्दुःखैस्तद्धेतुकानि दुःखानि भवंतीति शेषः ॥ २७ ॥ तानि पूर्वोक्तसंसारसंबंधीनीत्यर्थः । अष्टाष्टाधिकगुणं पार्थिवाद्यैश्वर्यमपि दुःखरूपं कथयति—तस्मादित्यादिना ॥ २८ ॥ २९ ॥ ३० ॥ पार्थिवमष्टगुणमाप्यं षोडशधेत्यादि यथा संख्यमन्वयः । गुणसंख्यानमत्र नवमाध्यायोक्तं ज्ञेयम् ॥३१॥ बौद्धमेव प्राकृतमित्यन्वयः ॥३२॥ गणेश्वराणां शिवगणस्वामिनां गौणं दुःखम् एवं विचारतः सर्वलोकेषु सर्वदा

तस्माद्विचारतो नास्ति संयोगादपि वै नृणाम् ॥ अर्थानामर्जनेप्येवं पालने च व्यये तथा ॥ २५ ॥ पैशाचे राक्षसे दुःखं याक्षे चैव विचारतः ॥ गांधर्वे च तथा चांद्रे सौम्यलोके द्विजोत्तमाः ॥ २६ ॥ प्राजापत्ये तथा ब्राह्मे प्राकृते पौरुषे तथा ॥ क्षयसातिशयाद्यैस्तु दुःखैर्दुःखानि सुव्रताः॥ २७ ॥ तानि भाग्यान्यशुद्धानि संत्यजेच्च धनानि च ॥ तस्मादष्टगुणं भोगं तथा षोडशधा स्थितम् ॥ २८ ॥ चतुर्विंशत्प्रकारेण संस्थितं चापि सुव्रताः ॥ द्वात्रिंशद्भेदमनघाश्चत्वारिंशद्गुणं पुनः ॥ २९ ॥ तथाष्टचत्वारिंशच्च षट्पंचाशत्प्रकारतः ॥ चतुःषष्टिविधं चैव दुःखमेव विवेकिनः॥ ३० ॥ पार्थिवं च तथाप्यं च तैजसं च विचारतः॥ वायव्यं च तथा व्योम मानसं च यथाक्रमम्॥ ३१॥ आभिमानिकमप्येवं बौद्धं प्राकृतमेव च ॥ दुःखमेव न संदेहो योगिनां ब्रह्मवादिनाम् ॥ ३२ ॥ गौणं गणेश्वराणां च दुःखमेव विचारतः ॥ आदौ मध्ये तथा चांते सर्वलोकेषु सर्वदा ॥ ३३ ॥ वर्तमानानि दुःखानि भविष्याणि यथातथम् ॥ दोषदुष्टेषु देशेषु दुःखानि विविधानि च ॥ ३४ ॥ न भावयंत्यतीतानि ह्यज्ञाने ज्ञानमानिनः ॥ क्षुद्व्याधेः परिहारार्थं न सुखायान्नमुच्यते ॥ ३५ ॥ यथेतरेषां रोगाणामौषधं न सुखाय तत् ॥ शीतोष्णवातवर्षाद्यैस्तत्तत्कालेषु देहिनाम् ॥ ३६ ॥ दुःखमेव न संदेहो न जानंति ह्यपंडिताः ॥ स्वर्गेप्येवं मुनिश्रेष्ठा ह्यविशुद्धक्षयादिभिः ॥ ३७ ॥ रोगैर्नानाविधैर्ग्रस्ता रागद्वेषभयादिभिः ॥ छिन्नमूलतरुर्यद्वद्वशः पतति क्षितौ ॥ ३८ ॥ पुण्यवृक्षक्षयात्तद्वत्पतंति दिवौकसः ॥ दुःखाभिलाषनिष्ठानां दुःखभोगादिसंपदाम् ॥ ३९ ॥ अस्मात्तु पततां दुःखं कष्टं स्वर्गादिवौकसाम् ॥ नरके दुःखमेवात्र नरकाणां निषेवणात् ॥ ४० ॥

दुःखानि यथातथं ज्ञेयानीति शेषमादायाग्रिमेणान्वयः ॥ ३३ ॥ ३४ ॥ अतीतानि अतिक्रांतदुःखानि अज्ञाने ज्ञानमानिनः न भावयंतीत्यन्वयः । अज्ञानं विवृणोति—क्षुद्व्याधेरित्यादिना ॥ ३५॥३६ ॥ विशेषेण शुद्धं विशुद्धं ज्ञानं न विशुद्धमविशुद्धं पुण्यं तस्य क्षयादिभिर्दुःखै रागद्वेषभयादिभिः रोगैश्च स्वर्गेप्येवं ग्रस्ता इत्यग्रिमेणान्वयः॥ ३७–४०॥

वर्णिनां ब्रह्मचारिणामित्यर्थः । विहितेत्ययं द्विपाच्छ्लोकः ॥ ४१ ॥ यतेर्मोहनाशे दृष्टांतं कथयति–यथेति । उच्छिन्नवासो मृगो हरिणः मृत्युभयस्य मृत्युभयसंबंधेन भीतो यथा निद्रां न लभेत एवं ध्यानपरो विचारशीलः महात्मा यतिः संसारभीतः निद्रां मोहं न लभेतेत्यन्वयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ज्ञानमाहात्म्यं कथयति–आश्रमै रित्यादिना ॥ ४६ ॥ ४७ ॥ ज्ञानसाधनं कथयति–तस्मादिति ॥ ४८ ॥ पञ्च मन्त्रादियोगाः अग्निमोक्ताः अर्था यस्य तत्पंचार्थं तादृशज्ञानसंपन्नः शिवतत्त्वे समाहितो

विहिताकरणाच्चैव वर्णिनां मुनिपुंगवाः ॥ ४१ ॥ यथा मृगो मृत्युभयस्य भीतो उच्छिन्नवासो न लभेत निद्राम् ॥ एवं यतिर्ध्यानपरो महात्मा संसारभीतो न लभेत निद्राम् ॥ ४२ ॥ कीटपक्षिमृगाणां च पशूनां गजवाजिनाम् ॥ दृष्टमेवासुखं तस्मात्त्यजतः सुखमुत्तमम् ॥ ४३ ॥ वैमानिकानामप्येवं दुःखं कल्पाधिकारिणाम् ॥ स्थानाभिमानिनां चैव मन्वादीनां च सुव्रताः ॥ ४४ ॥ देवानां चैव दैत्यानामन्योन्यविजिगीषया ॥ दुःखमेव नृपाणां च राक्षसानां जगत्त्रये ॥ ४५ ॥ श्रमार्थमाश्रमश्चापि वर्णानां परमार्थतः ॥ आश्रमैर्न च देवैश्च यज्ञैः सांख्यैर्व्रतैस्तथा ॥ ४६ ॥ उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि ॥ न लभंते तथात्मानं लभंते ज्ञानिनः स्वयम् ॥ ४७ ॥ तस्मात्सर्वप्रयत्नेन चरेत्पाशुपतव्रतम् ॥ भस्मशायी भवेन्नित्यं व्रते पाशुपते बुधः ॥ ४८ ॥ पंचार्थज्ञानसंपन्नः शिवतत्त्वे समाहितः ॥ कैवल्यकरणं योगविधिकर्मच्छिदं बुधः ॥४९॥ पंचार्थयोगसंपन्नो दुःखांतं व्रजते सुधीः ॥ परया विद्यया वेद्यं विदंत्यपरया न हि ॥५०॥ द्वे विद्ये वेदितव्ये हि परा चैवापरा तथा ॥ अपरा तत्र ऋग्वेदो यजुर्वेदो द्विजोत्तमाः ॥ ५१ ॥ सामवेदस्तथाऽथर्वो वेदः सर्वार्थसाधकः ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छंद एव च ॥ ५२ ॥ ज्योतिषं चापरा विद्या पराक्षरमिति स्थितम् ॥ तदद्दृश्यं तदग्राह्यमगोत्रं तदवर्णकम् ॥ ५३ ॥ तदचक्षुस्तदश्रोत्रं तदपाणि अपादकम् ॥ तदजातमभूतं च तदशब्दं द्विजोत्तमाः ॥ ५४ ॥ अस्पर्शं तदरूपं च रसगंधविवर्जितम् ॥ अव्ययं चाप्रतिष्ठं च तन्नित्यं सर्वगं विभुम् ॥ ५५ ॥ महांतं तद्बृहंतं च तदजं चिन्मयं द्विजाः ॥ अप्राणममनस्कं च तदस्निग्धमलोहितम् ॥ ५६ ॥ अप्रमेयं तदस्थूलमदीर्घं तदनुल्बणम् ॥ अह्रस्वं तदपारं च तदानंदं तदच्युतम् ॥ ५७ ॥

निश्चलो बुधः विधिकर्मच्छिदं दैवकर्मनाशकं कैवल्यकरणं कैवल्यमुक्तिसाधनं योगं लभत इति शेषः ॥ ४९ ॥ परया अध्यात्मविद्ययेत्यर्थः ॥ ५० ॥ अपरां विधिमुखेन वर्णयति–अपरेत्यादिना ॥ ५१ ॥ ५२ ॥ परां निषेधमुखेन वर्णयति–पराक्षरमित्यादिना ॥५३॥ अजातं प्रागभावाप्रतियोगि अभूतं ध्वंसाप्रतियोगि ॥५४॥५५॥५६॥५७॥

असंवृतमावरणशून्यं तत्पूर्वोक्तमात्मैवं परा विद्या अन्यथा न अन्यप्रकारेण वर्णितुमशक्येत्यर्थः । "यतो वाचो निवर्तंते" इति श्रुतेः ॥ ५८ ॥ परापरत्वमप्यविद्याकल्पित
मिति कथयति–परेत्यादिना ॥ ५९ ॥ ६० ॥ ६१ ॥ दहरोपासनां कथयति–अध इत्यादिना । अधोदृष्ट्या अधोमुखेन नाभ्यामुपरि वितस्त्यां यत्तिष्ठति तद्दृदयं हृत्कमलं
विश्वस्य जगतो महदायतनं विजानीयादित्यन्वयः । तदुक्तमधोनिष्ठ्योति नारायणीयश्रुतिभाष्ये–"मनस्तावद्धृदयपुंडरीके वर्तते 'चंद्रमा मनसो भूत्वा हृदयं प्राविशत्' इति
श्रुत्यंतरात्तेन मनसा स्वप्नवदिदं जगत्परिकल्पितम् 'मनोमलमिदं द्वैतं यत्किंचित्सचराचरे' इति संप्रदायविद्भिरुक्तत्वात्" इति ॥६२॥ पुंडरीकं वर्णयति–हृदयस्येत्यादिना॥६३॥

परापरेति कथिते नैवेह परमार्थतः ॥ अहमेव
अनपावृतमद्वैतं तदनंतमगोचरम् ॥ असंवृतं तदात्मैकं परा विद्या न चान्यथा ॥ ५८ ॥ मत्तो नान्यदितीक्षेत मनोवाक्पाणिभिस्तथा ॥ ६० ॥
जगत्सर्वं मय्येव सकलं जगत् ॥ ५९ ॥ मत्त उत्पद्यते तिष्ठन्मयि मय्येव लीयते ॥ अधोदृष्ट्या वितस्त्यां तु नाभ्यामुपरि
सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ॥ सर्वं ह्यात्मनि संपश्यन्नबाह्ये कुरुते मनः ॥ ६१ ॥
तिष्ठति ॥ हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ ६२ ॥ हृदयस्यास्य मध्ये तु पुंडरीकमवस्थितम् ॥ धर्मकंदसमुद्भूतं ज्ञाननालं
सुशोभनम् ॥ ६३ ॥ ऐश्वर्याष्टदलं श्वेतं परं वैराग्यकर्णिकम् ॥ छिद्राणि च दिशो यस्य प्राणाद्याश्च प्रतिष्ठिताः ॥ ६४ ॥ प्राणाद्यैश्चैव
संयुक्तः पश्यते बहुधा क्रमात् ॥ दशप्राणवहा नाड्यः प्रत्येकं मुनिपुंगवाः ॥ ६५ ॥ द्विसप्ततिसहस्राणि नाड्यः संपरिकीर्तिताः ॥ नेत्रस्थं
जाग्रतं विद्यात्कंठे स्वप्नं समादिशेत् ॥ ६६ ॥ सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम् ॥ जाग्रे ब्रह्मा च विष्णुश्च स्वप्ने चैव यथाक्र
मात् ॥ ६७ ॥ ईश्वरस्तु सुषुप्ते तु तुरीये च महेश्वरः ॥ वदंत्येवमथान्येपि समस्तकरणैः पुमान् ॥ ६८ ॥ वर्तमानस्तदा तस्य जाग्र
दित्यभिधीयते ॥ मनोबुद्धिरहंकारं चित्तं चेति चतुष्टयम् ॥ ६९ ॥ यदा व्यवस्थितस्त्वेतैः स्वप्न इत्यभिधीयते ॥ करणानि विलीनानि
यदा स्वात्मनि सुव्रताः ॥ ७० ॥ सुषुप्तः करणैर्भिन्नस्तुरीयः परिकीर्त्यते ॥ परस्तुरीयातीतोसौ शिवः परमकारणम् ॥ ७१ ॥

यस्य छिद्राणि पत्रांतराणि दिशस्तत्रेति शेषः । प्राणाद्याः प्राणादिवायवः प्रतिष्ठिता इत्यन्वयः ॥ ६४ ॥ प्राणाद्यैः संयुक्तः संयोगविशिष्टो जीवः क्रमाद्बहुधा बहुप्रकारं पश्य
तीत्यन्वयः ॥ ६५ ॥ नेत्रादिष्विंद्रियेषु तिष्ठतीति नेत्रस्थस्तं जीवं जाग्रतं जाग्रदवस्थापन्नं विद्यात् कण्ठे स्थितमिति शेषः । स्वप्नं स्वप्नावस्थापन्नं समादिशेदित्यन्वयः ॥ ६६ ॥
हृदयस्थं सुषुप्तं मूर्धनि स्थितं तुरीयं समादिशेदित्यनुषंगः । अवस्थाचतुष्टयदेवताः कथयति–जाग्र इत्यादिना ॥६७॥ अथ पूर्वोक्तप्रकारानंतरम् अन्ये एवं वक्ष्यमाणप्रकारेण
जाग्रदादि वदंतीत्यन्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

वर्णिनां ब्रह्मचारिणामित्यर्थः । विहितेत्ययं द्विपाच्छ्लोकः ॥ ४१ ॥ यतेर्मोहनाशे दृष्टांतं कथयति—यथेति । उच्छिन्नवासो मृगो हरिणः मृत्युभयस्य मृत्युभयसंबंधेन भीतो यथा निद्रां न लभेत एवं ध्यानपरो विचारशीलः महात्मा यतिः संसारभीतः निद्रां मोहं न लभेतेत्यन्वयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ज्ञानमाहात्म्यं कथयति—आश्रमै रित्यादिना ॥ ४६ ॥ ४७ ॥ ज्ञानसाधनं कथयति—तस्मादिति ॥ ४८ ॥ पञ्च मन्त्रादियोगाः अग्रिमोक्ताः अर्था यस्य तत्पंचार्थं तादृशज्ञानसंपन्नः शिवतत्त्वे समाहितो

विहिताकरणाच्चैव वर्णिनां मुनिपुंगवाः ॥ ४१ ॥ यथा मृगो मृत्युभयस्य भीतो उच्छिन्नवासो न लभेत निद्राम् ॥ एवं यतिर्ध्यानपरो महात्मा संसारभीतो न लभेत निद्राम् ॥ ४२ ॥ कीटपक्षिमृगाणां च पशूनां गजवाजिनाम् ॥ दृष्टमेवासुखं तस्मात्त्यजतः सुखमुत्तमम् ॥ ४३ ॥ वैमानिकानामप्येवं दुःखं कल्पाधिकारिणाम् ॥ स्थानाभिमानिनां चैव मन्वादीनां च सुव्रताः ॥ ४४ ॥ देवानां चैव दैत्यानामन्योन्यविजिगीषया ॥ दुःखमेव नृपाणां च राक्षसानां जगत्त्रये ॥ ४५ ॥ श्रमार्थमाश्रमश्चापि वर्णानां परमार्थतः ॥ आश्रमैर्न च देवैश्च यज्ञैः सांख्यैर्व्रतैस्तथा ॥ ४६ ॥ उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि ॥ न लभंते तथात्मानं लभंते ज्ञानिनः स्वयम् ॥ ४७ ॥ तस्मात्सर्वप्रयत्नेन चरेत्पाशुपतव्रतम् ॥ भस्मशायी भवेन्नित्यं व्रते पाशुपते बुधः ॥ ४८ ॥ पंचार्थज्ञानसंपन्नः शिवतत्त्वे समाहितः ॥ कैवल्यकरणं योगविधिकर्मच्छिदं बुधः ॥४९॥ पंचार्थयोगसंपन्नो दुःखांतं व्रजते सुधीः ॥ परया विद्यया वेद्यं विदंत्यपरया न हि ॥५०॥ द्वे विद्ये वेदितव्ये हि परा चैवापरा तथा ॥ अपरा तत्र ऋग्वेदो यजुर्वेदो द्विजोत्तमाः ॥ ५१ ॥ सामवेदस्तथाऽथर्वो वेदः सर्वार्थसाधकः ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छंद एव च ॥ ५२ ॥ ज्योतिषं चापरा विद्या पराक्षरमिति स्थितम् ॥ तददृश्यं तदग्राह्यमगोत्रं तदवर्णकम् ॥ ५३ ॥ तदचक्षुस्तदश्रोत्रं तदपाणि अपादकम् ॥ तदजातमभूतं च तदशब्दं द्विजोत्तमाः ॥ ५४ ॥ अस्पर्शं तदरूपं च रसगंधविवर्जितम् ॥ अव्ययं चाप्रतिष्ठं च तन्नित्यं सर्वगं विभुम् ॥ ५५ ॥ महांतं तद्बृहं तं च तदजं चिन्मयं द्विजाः ॥ अप्राणममनस्कं च तदस्निग्धमलोहितम् ॥ ५६ ॥ अप्रमेयं तदस्थूलमदीर्घं तदनुल्बणम् ॥ अह्रस्वं तदपारं च तदानंदं तदच्युतम् ॥ ५७ ॥

निश्चलो बुधः विधिकर्मच्छिदं दैवकर्मनाशकं कैवल्यकरणं कैवल्यमुक्तिसाधनं योगं लभत इति शेषः ॥ ४९ ॥ परया अध्यात्मविद्ययेत्यर्थः ॥ ५० ॥ अपरां विधिमुखेन वर्णयति—अपरेत्यादिना ॥ ५१ ॥ ५२ ॥ परां निषेधमुखेन वर्णयति—पराक्षरमित्यादिना ॥५३॥ अजातं प्रागभावाप्रतियोगि अभूतं ध्वंसाप्रतियोगि ॥५४॥५५॥५६॥५७॥

असंवृतमावरणशून्यं तत्पूर्वोक्तमात्मैव परा विद्या अन्यथा न अन्यप्रकारेण वर्णितुमशक्येत्यर्थः । "यतो वाचो निवर्तंते" इति श्रुतेः ॥ ५८ ॥ परापरत्वमप्यविद्याकल्पित मिति कथयति–परेत्यादिना ॥ ५९ ॥ ६० ॥ ६१ ॥ दहरोपासनां कथयति–अध इत्यादिना । अधोदृष्ट्या अधोमुखेन नाभ्यामुपरि वितस्त्यां यत्तिष्ठति तद्धृदयं हृत्कमलं विश्वस्य जगतो महदायतनं विजानीयादित्यन्वयः । तदुक्तमधोनिष्ठ्येति नारायणीयश्रुतिभाष्ये–"मनस्तावद्धृदयपुंडरीके वर्तते 'चंद्रमा मनसो भूत्वा हृदयं प्राविशत्' इति श्रुत्यंतरात्तेन मनसा स्वप्नवदिदं जगत्परिकल्पितम् 'मनोमलमिदं द्वैतं यत्किंचित्सचराचरे' इति संप्रदायविद्भिरुक्तत्वात्" इति ॥६२॥ पुंडरीकं वर्णयति–हृदयस्येत्यादिना॥६३॥

अनपावृतमद्वैतं तदनंतमगोचरम् ॥ असंवृतं तदात्मैकं परा विद्या न चान्यथा ॥ ५८ ॥ परापरेति कथिते नैवेह परमार्थतः ॥ अहमेव जगत्सर्वं मय्येव सकलं जगत् ॥ ५९ ॥ मत्त उत्पद्यते तिष्ठन्मयि मय्येव लीयते ॥ मत्तो नान्यदितीक्षेत मनोवाक्पाणिभिस्तथा ॥ ६० ॥ सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ॥ सर्वं ह्यात्मनि संपश्यन्नबाह्ये कुरुते मनः ॥ ६१ ॥ अधोदृष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति ॥ हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ ६२ ॥ हृदयस्यास्य मध्ये तु पुंडरीकमवस्थितम् ॥ धर्मकंदसमुद्भूतं ज्ञाननालं सुशोभनम् ॥ ६३ ॥ ऐश्वर्याष्टदलं श्वेतं परं वैराग्यकर्णिकम् ॥ छिद्राणि च दिशो यस्य प्राणाद्याश्च प्रतिष्ठिताः ॥ ६४ ॥ प्राणाद्यैश्चैव संयुक्तः पश्यते बहुधा क्रमात् ॥ दशप्राणवहा नाड्यः प्रत्येकं मुनिपुंगवाः ॥ ६५ ॥ द्विसप्ततिसहस्राणि नाड्यः संपरिकीर्तिताः ॥ नेत्रस्थं जाग्रतं विद्यात्कंठे स्वप्नं समादिशेत् ॥ ६६ ॥ सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम् ॥ जाग्रे ब्रह्मा च विष्णुश्च स्वप्ने चैव यथाक्रमात् ॥ ६७ ॥ ईश्वरस्तु सुषुप्ते तु तुरीये च महेश्वरः ॥ वदंत्येवमथान्येपि समस्तकरणैः पुमान् ॥ ६८ ॥ वर्तमानस्तदा तस्य जाग्रदित्यभिधीयते ॥ मनोबुद्धिरहंकारं चित्तं चेति चतुष्टयम् ॥ ६९ ॥ यदा व्यवस्थितस्त्वेतैः स्वप्न इत्यभिधीयते ॥ करणानि विलीनानि यदा स्वात्मनि सुव्रताः ॥ ७० ॥ सुषुप्तः करणैर्भिन्नस्तुरीयः परिकीर्त्यते ॥ परस्तुरीयातीतोसौ शिवः परमकारणम् ॥ ७१ ॥

यस्य छिद्राणि पत्रांतराणि दिशस्तत्रेति शेषः । प्राणाद्याः प्राणादिवायवः प्रतिष्ठिता इत्यन्वयः ॥ ६४ ॥ प्राणाद्यैः संयुक्तः संयोगविशिष्टो जीवः क्रमाद्बहुधा बहुप्रकारं पश्यतीत्यन्वयः ॥ ६५ ॥ नेत्रादिष्विंद्रियेषु तिष्ठतीति नेत्रस्थस्तं जीवं जाग्रतं जाग्रदवस्थापन्नं विद्यात् कण्ठे स्थितमिति शेषः । स्वप्नं स्वप्नावस्थापन्नं समादिशेदित्यन्वयः ॥ ६६ ॥ हृदयस्थं सुषुप्तं मूर्धनि स्थितं तुरीयं समादिशेदित्यनुषंगः । अवस्थाचतुष्टयदेवताः कथयति–जाग्र इत्यादिना ॥६७॥ अथ पूर्वोक्तप्रकारानंतरम् अन्ये एवं वक्ष्यमाणप्रकारेण जाग्रदादि वदंतीत्यन्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

जाग्रदादि आधिभौतिकादि च तत्सर्वमहमेवेति विजानता वेदितव्यमित्यग्रिमेणान्वयः ॥ ७२ ॥ चतुर्दशविधमध्यात्मं कथयति–बुद्धींद्रियाणीत्यादिना ॥ ७३ ॥ ७४ ॥ चतुर्दशविधमाधिभूतं कथयति–द्रष्टव्यमित्यादिना ॥ ७५ ॥ ७६ ॥ ७७ ॥ चतुर्दशविधमाधिदैविकं कथयति–आदित्य इत्यादिना ॥७८॥७९॥ चतुर्दशनाडीः कथयति–राज्ञीत्यादिना ॥ ८० ॥ ८१ ॥ चतुर्दशनाडीस्थवायून्कथयति–वायव इत्यादिना ॥ ८२ ॥ ८३ ॥ आत्मस्वरूपमाह–य इत्यादिना ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ सर्वे

जाग्रत्स्वप्नसुषुप्तिश्च तुरीयं चाधिभौतिकम् ॥ आध्यात्मिकं च विप्रेंद्राश्चाधिदैविकमुच्यते ॥ ७२ ॥ तत्सर्वमहमेवेति वेदितव्यं विजानता ॥ बुद्धींद्रियाणि विप्रेंद्रास्तथा कर्मेंद्रियाणि च ॥ ७३ ॥ मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ॥ अध्यात्मं पृथगेवेदं चतुर्दशविधं स्मृतम् ॥ ७४ ॥ द्रष्टव्यं चैव श्रोतव्यं घ्रातव्यं च यथाक्रमम् ॥ रसितव्यं मुनिश्रेष्ठाः स्पर्शितव्यं तथैव च ॥ ७५ ॥ मंतव्यं चैव बोद्धव्यमहंकर्तव्यमेव च ॥ तथा चेतयितव्यं च वक्तव्यं मुनिपुंगवाः ॥ ७६ ॥ आदातव्यं च गंतव्यं विसर्गायितमेव च ॥ आनंदितव्यमित्येते ह्यधिभूतमनुक्रमात् ॥ ७७ ॥ आदित्योपि दिशश्चैव पृथिवी वरुणस्तथा ॥ वायुश्चंद्रस्तथा ब्रह्मा रुद्रः क्षेत्रज्ञ एव च ॥ ७८ ॥ अग्निरिंद्रस्तथा विष्णुर्मित्रो देवः प्रजापतिः ॥ आधिदैविकमेवं हि चतुर्दशविधं क्रमात् ॥ ७९ ॥ राज्ञी सुदर्शना चैव जिता सौम्या यथाक्रमम् ॥ मोघा रुद्रामृता सत्या मध्यमा च द्विजोत्तमाः ॥ ८० ॥ नाडी राशिशुका चैव असुरा चैव कृत्तिका ॥ भास्वती नाडयश्चैताश्चतुर्दश निबंधनाः ॥ ८१ ॥ वायवो नाडिमध्यस्था वाहकाश्च चतुर्दश ॥ प्राणो व्यानस्त्वपानश्च उदानश्च समानकः ॥ ८२ ॥ वैरंभश्च तथा मुख्यो ह्यंतर्यामः प्रभंजनः ॥ कूर्मकश्च तथा श्येनः श्वेतः कृष्णस्तथानिलः ॥ ८३ ॥ नाग इत्येव कथिता वायवश्च चतुर्दश ॥ यश्चक्षुष्यथ द्रष्टव्ये तथादित्ये च सुव्रताः ॥ ८४ ॥ नाडयां प्राणे च विज्ञाने त्वानंदे च यथाक्रमम् ॥ हृद्याकाशे य एतस्मिन्सर्वस्मिन्नंतरे परः ॥ ८५ ॥ आत्मा एकश्च चरति तमुपासीत मां प्रभुम् ॥ अजरं तमनंतं च अशोकममृतं ध्रुवम् ॥ ८६ ॥ चतुर्दशविधेष्वेव संचरत्येक एव सः ॥ लीयंते तानि तत्रैव यदन्यं नास्ति वै द्विजाः ॥ ८७ ॥ एक एव हि सर्वज्ञः सर्वेशस्त्वेक एव सः ॥ एष सर्वाधिपो देवस्त्वंतर्यामी महाद्युतिः ॥ ८८ ॥ उपास्यमानः सर्वस्य सर्वसौख्यः सनातनः ॥ उपास्यति न चैवेह सर्वसौख्यं द्विजोत्तमाः ॥ ८९ ॥

सौख्यं यस्मादसौ सर्वसौख्यः इह देहे सर्वसौख्यं न उपास्यति । तदुक्तं प्रह्लादेन भागवते–"नैवात्मनः प्रभुरसौ निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मनः प्रतिमुखस्य यथा मुखश्रीः ॥ " इति ॥ ८९ ॥

॥ ९० ॥सर्वं जगदस्यात्मनोऽन्नं भक्ष्यं स्वयं सोऽन्नं भक्ष्यं न भवतीत्यन्वयः । स आत्मा स्वात्मना रक्षितं सर्वत्र अद्यात्प्राणिनां जीवानामन्नभूतं कुत्रचिन्नेत्याग्रिमस्थैरन्वयः । तदुक्तं भगवद्गीतायाम्–"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥" इति ॥ ९१ ॥ प्राणिनां ग्रंथिः प्राणापानग्रंथिरूप इत्यर्थः । प्रशास्ता नियंता नयनो ज्ञानसाधनः स विभागशः अन्नमयादिभेदेन पंचात्मा पंचकोशरूपश्चाहमित्यन्वयः ॥ ९२ ॥ पंचकोशरूपत्वं कथयति– अन्नमय इत्यादिना ॥ ९३ ॥ ॥ ९४ ॥ स पंचकोशरूपोऽहमेवं सर्वं जगत्सकलं सर्वं विचारतः तस्य जगतोभावात्परतंत्रमपि स्वतंत्रे मय्येव स्थितमित्यन्वयः ॥ ९५ ॥ तत्र विचारे एकत्वादिकमपि नास्ती

उपास्यमानो वेदैश्च शास्त्रैर्नानाविधैरपि ॥ न वेष वेदशास्त्राणि सर्वज्ञो यास्यति प्रभुः ॥९०॥ अस्यैवान्नमिदं सर्वं न सोन्नं भवति स्वयम्॥ स्वात्मना रक्षितं चाद्यादन्नभूतं न कुत्रचित् ॥ ९१ ॥ सर्वत्र प्राणिनामन्नं प्राणिनां ग्रंथिरस्म्यहम् ॥ प्रशास्ता नयनश्चैव पंचात्मा स विभागशः ॥ ९२ ॥ अन्नमयोसौ भूतात्मा चाद्यते ह्यन्नमुच्यते ॥ प्राणमयश्चेंद्रियात्मा संकल्पात्मा मनोमयः ॥ ९३ ॥ कालात्मा सोम एवेह विज्ञानमय उच्यते ॥ सदानंदमयो भूत्वा महेशः परमेश्वरः ॥ ९४ ॥ सोहमेवं जगत्सर्वं मय्येव सकलं स्थितम् ॥ परतंत्रं स्वतंत्रेपि तदभावाद्विचारतः ॥ ९५ ॥ एकत्वमपि नास्त्येव द्वैतं तत्र कुतस्त्वहो ॥ एवं नास्त्यथ मर्त्यं च कुतोऽमृतमजोद्भवः ॥ ९६ ॥ नांतःप्रज्ञो बहिःप्रज्ञो न चोभयगतस्तथा ॥ न प्रज्ञानघनस्त्वेवं न प्राज्ञो ज्ञानपूर्वकः ॥९७॥ विदितं नास्ति वेद्यं च निर्वाणं परमार्थतः॥ निर्वाणं चैव कैवल्यं निःश्रेयसमनामयम् ॥ ९८॥ अमृतं चाक्षरं ब्रह्म परमात्मा परात्परम् ॥ निर्विकल्पं निराभासं ज्ञानं पर्यायवाचकम् ॥९९॥ प्रसन्नं च यदेकाग्रं तदा ज्ञानमिति स्मृतम् ॥ अज्ञानमितरत्सर्वं नात्र कार्या विचारणा ॥१००॥ इत्थं प्रसन्नं विज्ञानं गुरुसंपर्कजं ध्रुवम् ॥ रागद्वेषानृतक्रोधं कामतृष्णादिभिः सदा ॥ १ ॥ अपरामृष्टमद्यैव विज्ञेयं मुक्तिदं त्विदम् ॥ अज्ञानमलपूर्वत्वात्पुरुषो मलिनः स्मृतः ॥ २ ॥

त्यन्वयः ॥ ९६ ॥ ज्ञानपूर्वको विचारपूर्वकः आत्मेति शेषः । अंतःप्रज्ञः स्वप्नसाक्षी बहिःप्रज्ञो जाग्रत्साक्षी उभयगतः पूर्वोक्तोभयसाक्षी न एवं विज्ञानघनस्तुरीयसाक्षी प्राज्ञः सुषुप्तिसाक्षी नेत्यन्वयः ॥ ९७॥ परमार्थतः विदितं वेद्यं निर्वाणं च नास्तीत्यन्वयः । परमात्मनः पर्यायवाचकद्वादशसंज्ञासमुदायं कथयति–निर्वाणमित्यादिना ॥९८ ॥ ९९ ॥ ज्ञानाज्ञानविवेकं कथयति–प्रसन्नमिति । एकमद्वितीयं ब्रह्माग्रे यस्य तदेकाग्रमंतःकरणं यदा प्रसन्नं समरसं वर्तमानं तदा ज्ञानमिति स्मृतम् इतरत्सर्वमज्ञानमित्यन्वयः ॥१००॥ इत्थं पूर्वोक्तप्रकारं प्रसन्नं विज्ञानं गुरुसंपर्कजं गुरुप्रसादजं ध्रुवं विद्यादिति शेषः । ज्ञानफलं कथयति–राग इत्यादिना ॥ १ ॥ २ ॥

तत्क्षयादज्ञानक्षयादित्यर्थः । "ज्ञानादेव हि कैवल्यम् " इति श्रुतेरनुवादमाह–ज्ञानमित्यादिना ॥३॥४॥५॥ ज्ञानिचिह्नं कथयति–कर्तव्यमिति । तदुक्तं पंचदश्यां–" आत्मानं चेद्विजानीयादहमस्मीति पूरुषः । किं जपन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ " इति ॥ ६ ॥ ७ ॥ त्यक्तक्रोधः वर्णाश्रमाभिमानी सन् योन्यत्र ज्ञानान्यसाधने रमते सः अज्ञानी मूढः अत्र संशयो नेत्यग्रिमेणान्वयः । द्विजोत्तमा इति सनकादिसंबोधनम् ॥ ८ ॥ ९ ॥ ११० ॥ तेषामज्ञानिनामित्यर्थः ॥ ११ ॥ शरीरे शरीराभिमाने सति क्लेशः

तत्क्षयाद्धि भवेन्मुक्तिर्नान्यथा जन्मकोटिभिः ॥ ज्ञानमेकं विना नास्ति पुण्यपापपरिक्षयः ॥ ३ ॥ ज्ञानमेवाभ्यसेत्तस्मान्मुक्त्यर्थं ब्रह्मवित्तमाः ॥ ज्ञानाभ्यासाद्धि वै पुंसां बुद्धिर्भवति निर्मला ॥ ४ ॥ तस्मात्सदाभ्यसेज्ज्ञानं तन्निष्ठस्तत्परायणः ॥ ज्ञानेनैकेन तृप्तस्य त्यक्तसंगस्य योगिनः ॥ ५ ॥ कर्तव्यं नास्ति विप्रेन्द्रा अस्ति चेत्तत्त्वविन्न च ॥ इह लोके परे चापि कर्तव्यं नास्ति तस्य वै ॥ ६ ॥ जीवन्मुक्तो यतस्तस्माद्ब्रह्मवित्परमार्थतः ॥ ज्ञानाभ्यासरतो नित्यं ज्ञानतत्त्वार्थवित्स्वयम् ॥ ७ ॥ कर्तव्याभ्यासमुत्सृज्य ज्ञानमेवाधिगच्छति ॥ वर्णाश्रमाभिमानी यस्त्यक्तक्रोधो द्विजोत्तमाः ॥ ८ ॥ अन्यत्र रमते मूढः सोऽज्ञानी नात्र संशयः ॥ संसारहेतुरज्ञानं संसारस्तनुसंग्रहः ॥ ९ ॥ मोक्षहेतुस्तथा ज्ञानं मुक्तः स्वात्मन्यवस्थितः ॥ अज्ञाने सति विप्रेंद्राः क्रोधाद्या नात्र संशयः ॥ ११० ॥ क्रोधो हर्षस्तथा लोभो मोहो दंभो द्विजोत्तमाः ॥ धर्माधर्मौ हि तेषां च तद्वशात्तनुसंग्रहः ॥११॥ शरीरे सति वै क्लेशः सोविद्यां संत्यजेद्बुधः ॥ अविद्यां विद्यया हित्वा स्थितस्यैव च योगिनः ॥ १२ ॥ क्रोधाद्या नाशमायांति धर्माधर्मौ च वै द्विजाः ॥ तत्क्षयाच्च शरीरेण न पुनः संप्रयुज्यते ॥ १३ ॥ स एव मुक्तः संसाराद्दुःखत्रयविवर्जितः ॥ एवं ज्ञानं विना नास्ति ध्यानं ध्यातुर्द्विजर्षभाः ॥ १४ ॥ ज्ञानं गुरोर्हि संपर्कान्न वाचा परमार्थतः ॥ चतुर्व्यूहमिति ज्ञात्वा ध्याता ध्यानं समभ्यसेत्॥१५॥ सहजागंतुकं पापमस्थिवागुद्भवं तथा॥ ज्ञानाग्निर्दहते क्षिप्रं शुष्केंधनमिवानलः॥१६॥

वै निश्चयेन स देहाभिमानी बुधः विद्याज्ञानं संत्यजेदित्यन्वयः । शरीरनैरंतर्ये शरीराभिमानो दुस्त्यज इति तदुन्मूलनक्रमं कथयति–अविद्यामित्यादिना ॥ १२ ॥ १३ ॥ दुःखत्रयमध्यात्माधिभौतिकाधिदैविकरूपमित्यर्थः । एवं पूर्वोक्तप्रकारं ज्ञानं विना ध्यानमीश्वरचिंतनं नास्ति न तिष्ठतीत्यर्थः ॥ १४ ॥ परमार्थतः ज्ञानं गुरोः संपर्कात् कृपया वाचा शब्देन नेत्यन्वयः । इति गुरुप्रसादहेतुना चतुर्व्यूहं तैजसविश्वप्राज्ञतुरीयरूपं ज्ञात्वा ध्यानं समभ्यसेदित्यन्वयः ॥ १५ ॥ १६ ॥

ज्ञानमाहात्म्यं कथयति–ज्ञानादित्यादिना ॥ १७ ॥ १८ ॥ ज्ञानं यथा पूर्वोक्तममूलपापनाशकं तथा ध्यानं तस्मात्कारणाद्ध्यानं समभ्यसेदित्यन्वयः । शिवध्यानमाहात्म्यमुक्तं कौर्मे–"पुराणपुरुषं शंभुं ध्यायन्मुच्येत बंधनात् । एकं ब्रह्म परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् ॥ स देवस्तु महादेवो नैवं विज्ञाय बाध्यते " इत्यादि । तथा च शिवरहस्ये– "ध्यायीतेशानमित्याद्याः श्रुतयो ध्यानकर्मणि । प्रवृत्तास्ता महादेवि ध्यानमीशे विमुक्तिदम् ॥ नास्य देहेस्ति रुधिरं न मांसं नास्थि किंचन ॥ प्रतिबिंबमिवाकाशे शक्रचापमिवांबरे ॥ ज्योतिर्मयतया सिद्धमिदं सदाशिवं वपुः" इत्यादि ॥ १९ ॥ षट्प्रकारादिभेदाः शिवरहस्यदशमांशादौ निरूपिता उपासकैर्ज्ञेयाः अत्र ग्रंथविस्तारान्न लिख्यंते

ज्ञानात्परतरं नास्ति सर्वपापविनाशनम् ॥ अभ्यसेच्च सदा ज्ञानं सर्वसंगविवर्जितः ॥ १७ ॥ ज्ञानिनः सर्वपापानि जीर्यंते नात्र संशयः ॥ क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि ॥ १८ ॥ ज्ञानं यथा तथा ध्यानं तस्माद्ध्यानं समभ्यसेत् ॥ ध्यानं निर्विषयं प्रोक्तमादौ सविषयं तथा ॥ १९ ॥ षट्प्रकारं समभ्यस्य चतुःषट्दशभिस्तथा ॥ तथा द्वादशधा चैव पुनः षोडशधा क्रमात् ॥ १२० ॥ द्विधाभ्यस्य च योगींद्रो मुच्यते नात्र संशयः ॥ शुद्धजांबूनदाकारं विधूमांगारसन्निभम् ॥ २१ ॥ पीतं रक्तं सितं विद्युत्कोटिकोटिसमप्रभम् ॥ अथवा ब्रह्मरंध्रस्थं चित्तं कृत्वा प्रयत्नतः ॥ २२ ॥ न सितं वासितं पीतं न स्मरेद्ब्रह्मविद्भवेत् ॥ अहिंसकः सत्यवादी अस्तेयी सर्वयत्नतः ॥२३॥ परिग्रहविनिर्मुक्तो ब्रह्मचारी दृढव्रतः ॥ संतुष्टः शौचसंपन्नः स्वाध्यायनिरतः सदा ॥ २४ ॥ मद्भक्तश्चाभ्यसेद्ध्यानं गुरुसंपर्कजं ध्रुवम् ॥ न बुध्यति तथा ध्याता स्थाप्य चित्तं द्विजोत्तमाः ॥ २५ ॥ न चाभिमन्यते योगी न पश्यति समंततः ॥ न घ्राति न शृणोत्येव लीनः स्वात्मनि यः स्वयम् ॥ २६ ॥ न च स्पर्शं विजानाति स वै समरसः स्मृतः ॥ पार्थिवे पटले ब्रह्मा वारितत्त्वे हरिः स्वयम् ॥ २७ ॥ वाह्नेये कालरुद्राख्यो वायुतत्त्वे महेश्वरः ॥ सुषिरे स शिवः साक्षात्क्रमादेवं विचिंतयेत् ॥ २८ ॥ क्षितौ शर्वः स्मृतो देवो ह्यपां भव इति स्मृतः ॥ रुद्र एव तथा वह्नौ उग्रो वायौ व्यवस्थितः ॥ २९ ॥

॥१२०॥ द्विधा सालंबनिरालंबभेदेनेत्यर्थः । सालंबे शिवाकारं कथयति–शुद्धमित्यादिना । परमशिवमूर्तिरुक्ता रहस्ये–"मुनीनां ज्ञानदात्री च सदैवोपनिषच्छ्रुता । कैवल्यश्रुतिबोध्या श्रीमूर्तिर्मम महेश्वरि ॥ उमासहाया त्र्यक्षा च नीलकंठा विमुक्तिदा" इति ॥ २१ ॥ निरालंबं कथयति–अथवेत्यादिना ॥ २२ ॥ ध्याननियमान्कथयति–अहिंसक इत्यादिना ॥ २३ ॥ २४ ॥ गुरुसंपर्कजं गुरुप्रसादजमित्यर्थः । ध्यानिस्थितिं कथयति–न बुध्यतीत्यादिना ॥ २५ ॥ २६ ॥ पंचतत्त्वदेवताध्यानं कथयति–पार्थिव इत्यादिना ॥ २७ ॥ सुषिरे गगन इत्यर्थः ॥ २८ ॥ अष्टमूर्तिदेवताः कथयति–क्षितावित्यादिना ॥ २९ ॥

सुषिरसंज्ञकं यत्नाकं गगनमित्यर्थः ॥ १३० ॥ शरीरस्थपार्थिवादिभागान् कथयति—काठिन्यमित्यादिना ॥३१॥ सुषिरं यत्तदाकाशमित्यग्रिमेणान्वयः ॥३२॥ शब्दजं विज्ञानं व्योमसंभवं व्योमेंद्रियभवमित्यर्थः । एवमग्रेपि बोध्यम् ॥ ३३ ॥ भास्करं दक्षिणे नेत्रे वामे सोमं हृदि विभुं पुरुषं चिंतयेदित्यग्रिमस्थैरन्वयः ॥३४॥३५॥३६॥ ततः अष्टमूर्ति धारणानंतरं व्योम्नश्चोर्ध्वे हंसाख्यं ब्रह्म व्योमाख्यो व्योममध्यस्थः अयं शिवश्चेति प्राथमिकः साधकः स्मरेदित्यन्वयः ॥ ३७ ॥ वस्तुतः जीवादितत्त्वभेदकल्पनं मायिक

भीमः सुषिरनाकेऽसौ भास्करे मंडले स्थितः ॥ ईशानः सोमबिंबे च महादेव इति स्मृतः ॥ १३० ॥ पुंसां पशुपतिर्देवश्चाष्टधाहं व्यवस्थितः ॥ काठिन्यं यत्तनौ सर्वं पार्थिवं परिगीयते ॥ ३१ ॥ आप्यं द्रवमिति प्रोक्तं वर्णाख्यो वह्निरुच्यते ॥ यत्संचरति तद्वायुः सुषिरं यद्द्विजोत्तमाः ॥ ३२ ॥ तदाकाशं च विज्ञानं शब्दजं व्योमसंभवम् ॥ तथैव विप्रा विज्ञानं स्पर्शाख्यं वायुसंभवम् ॥ ३३ ॥ रूपं वाह्नेयमित्युक्तमाप्यं रसमयं द्विजाः ॥ गंधाख्यं पार्थिवं भूयश्चिंतयेद्भास्करं क्रमात् ॥ ३४ ॥ नेत्रे च दक्षिणे वामे सोमं हृदि विभुं द्विजाः ॥ आजानु पृथिवीतत्त्वमानाभेर्वारिमंडलम् ॥ ३५ ॥ आकंठं वह्नितत्त्वं स्याल्ललाटांतं द्विजोत्तमाः ॥ वायव्यं वै ललाटाद्यं व्योमाख्यं वा शिखाग्रकम् ॥ ३६ ॥ हंसाख्यं च ततो ब्रह्म व्योम्नश्चोर्ध्वं ततः परम् ॥ व्योमाख्यो व्योममध्यस्थो ह्ययं प्राथमिकः स्मरेत् ॥ ३७ ॥ न जीवः प्रकृतिः सत्त्वं रजश्चाथ तमः पुनः ॥ महांस्तथाभिमानश्च तन्मात्राणींद्रियाणि च ॥ ३८ ॥ व्योमादीनि च भूतानि नैवेह परमार्थतः ॥ व्याप्य तिष्ठयतो विश्वं स्थाणुरित्यभिधीयते ॥ ३९ ॥ उदेति सूर्यो भीतश्च पवते वात एव च ॥ द्योतते चंद्रमा वह्निर्ज्वलत्यापो वहंति च ॥ १४० ॥ दधाति भूमिराकाशमवकाशं ददाति च ॥ तदाज्ञया ततं सर्वं तस्माद्वै चिंतयेद्द्विजाः ॥ ४१ ॥ तेनैवाधिष्ठितं तस्मादेतत्सर्वं द्विजोत्तमाः ॥ सर्वरूपमयः शर्व इति मत्वा स्मरेद्भवम् ॥ ४२ ॥ संसारविपतप्तानां ज्ञानध्यानामृतेन वै ॥ प्रतीकारः समाख्यातो नान्यथा द्विजसत्तमाः ॥ ४३ ॥ ज्ञानं धर्मोद्भवं साक्षाज्ज्ञानाद्वैराग्यसंभवः ॥ वैराग्यात्परमं ज्ञानं परमार्थप्रकाशकम् ॥ ४४ ॥ ज्ञानवैराग्ययुक्तस्य योगसिद्धिर्द्विजोत्तमाः ॥ योगसिद्ध्या विमुक्तिः स्यात्सत्त्वनिष्ठस्य नान्यथा ॥ ४५ ॥

मिति कथयति—न जीव इत्यादिना ॥ ३८ ॥ ३९ ॥ "भीषास्माद्वातः पवते" इत्यादिश्रुतिप्रतिपादितं शिवमाहात्म्यं कथयति—उदेतीत्यादिना ॥१४०॥ ४१॥ ४२ ॥ संसारविषतापप्रतीकारं कथयति—संसारेति । ज्ञानयुक्तं ध्यानं तदेवामृतमित्यर्थः॥४३॥सत्त्वनिष्ठस्य मुक्तिक्रमं कथयति—ज्ञानमित्यादिना । परमं ज्ञानं ध्यानयुक्तं ज्ञानमित्यर्थः॥४४॥४५॥

मव्ययं नाशशून्यं चित्रं सर्वाश्चर्यकरं यच्छिवाख्यं पदं तमोरूपा विद्या तमोविद्या तस्याः पदेन स्थानभूताज्ञानेन छन्नं तिरोहितमतः सत्त्वशक्तिं तद्विरोधिनीमित्यर्थः । समास्थाय शिवं समर्चयेदित्यन्वयः ॥ ४६ ॥ अज्ञानिनो मुक्तिक्रमं कथयति—य इत्यादिना ॥ ४७ ॥ ४८॥४९ ॥ पूर्वजन्मनि पुण्यभाक् अत एव ऋणत्रयं देवर्षिपितृसंबंधि तस्माद्विनि र्मुक्तो यज्ञाध्ययनपुत्रोत्पादनेनापकृतऋणो द्विजः जरायुक्तो भूत्वा श्रद्धया ज्ञानिनो गुरोः संपर्कात्प्रसादाद्वा सहवासात् ज्ञानविद्भवेदिति तृतीयेनान्वयः । तदुक्तं वासिष्ठे—"संतः सर्वात्मना सेव्या यद्यप्युपदिशंति न । यास्तु स्वैरकथास्तेषामुपदेशा भवंति ते॥" इति ॥ १५० ॥ अन्यथा व्युत्क्रमेण कृत्रिमवर्जितः गुरोः शुश्रूषां कृत्वा स्वर्गलोकमनुप्राप्य भोगान् भुक्त्वा भारतवर्षमासाद्य अनुक्रमाद्ब्रह्मविज्जायत इत्यग्रिमेणान्वयः ॥ ५१ ॥ ५२ ॥ अयं पूर्वोक्तो द्विविधमलपूर्णस्य अज्ञानिनः ज्ञानप्राप्तिक्रमस्तस्मादनेन मार्गेण

तमोविद्यापदच्छन्नं चित्रं यत्पदमव्ययम् ॥ सत्त्वशक्तिं समास्थाय शिवमभ्यर्चयेद्द्विजाः ॥ ४६ ॥ यः सत्त्वनिष्ठो मद्भक्तो मदर्चनपरायणः ॥
सर्वतो धर्मनिष्ठश्च सदोत्साही समाहितः ॥ ४७ ॥ सर्वद्वंद्वसहो धीरः सर्वभूतहिते रतः ॥ ऋजुस्वभावः सततं स्वस्थचित्तो मृदुः सदा
॥४८॥ अमानी बुद्धिमाञ्छांतस्त्यक्तस्पर्धो द्विजोत्तमाः ॥ सदा मुमुक्षुर्धर्मज्ञः स्वात्मलक्षणलक्षणः॥४९ ॥ ऋणत्रयविनिर्मुक्तः पूर्वजन्मनि
पुण्यभाक् ॥ जरायुक्तो द्विजो भूत्वा श्रद्धया च गुरोः क्रमात्॥१५०॥ अन्यथा वापि शुश्रूषां कृत्वा कृत्रिमवर्जितः ॥ स्वर्गलोकमनुप्राप्य
भुक्त्वा भोगाननुक्रमात् ॥ ५१ ॥ आसाद्य भारतं वर्षं ब्रह्मविज्जायते द्विजाः ॥ संपर्काज्ज्ञानमासाद्य ज्ञानिनो योगविद्भवेत् ॥५२॥ क्रमोयं
मलपूर्णस्य ज्ञानप्राप्तेर्द्विजोत्तमाः ॥ तस्मादनेन मार्गेण त्यक्तसंगो दृढव्रतः ॥५३॥ संसारकालकूटाख्यान्मुच्यते मुनिपुंगवाः ॥ एवं संक्षेपतः
प्रोक्तं मया युष्माकमच्युतम् ॥ ५४ ॥ ज्ञानस्यैवेह माहात्म्यं प्रसंगादिह शोभनम् ॥ एवं पाशुपतं योगं कथितं त्वीश्वरेण तु ॥ ५५ ॥ न
देयं यस्य कस्यापि शिवोक्तं मुनिपुंगवाः ॥ दातव्यं योगिने नित्यं भस्मनिष्ठाय सुप्रियम्॥५६॥ यः पठेच्छृणुयाद्वापि संसारशमनं नरः ॥
स याति ब्रह्मसायुज्यं नात्र कार्या विचारणा ॥ १५७॥ इति श्रीलिंगमहापुराणे पूर्वभागे संसारविषकथनं नाम षडशीतितमोध्यायः॥८६॥

संसारकालकूटाख्यान्मुच्यत इत्यग्रिमेणान्वयः ॥५३॥ प्रश्नोत्तरमुक्त्वोपसंहरति—एवमिति । एवं पूर्वोक्तप्रकारेणेह मया युष्माकमिह ध्याननिरूपणे ज्ञानस्यैव ज्ञानस्यापि माहात्म्यं प्रसंगात्प्रोक्तमित्यग्रिमस्थैरन्वयः ॥ ५४ ॥ एवं शिवोक्तं पाशुपतं योगं यस्य कस्याप्यपरीक्षिताय न देयं तु पुनर्भस्मनिष्ठाय योगिने तु देयमितीश्वरेण कथितमित्यग्रिमेणान्वयः ॥ ५५ ॥ ५६ ॥ अध्यायफलं कथयति—य इति ॥ १५७ ॥ यस्य ध्यानामृतं शश्वत्संसारविषभेषजम् । ध्यायाम्यहं तमेवेशं ज्ञानदं शिवया युतम् ॥ इति श्रीलिंग महापुराणे शिवतोषिण्यां टीकायां षडशीतितमोऽध्यायः ॥ ८६ ॥

सप्ताशीतितमेऽध्याये कुमाराद्या मुनीश्वराः । प्रसादाच्छिवयोर्मुक्ता माययेति निरूप्यते ॥ सूतः सनकादिमुनीनामग्रिमवृत्तं कथयति–निशम्येत्यादिना । कुमाराद्याः सनत्कुमारादि ऋषयः प्रसन्नं परमेश्वरं शिवम् औद्धत्येन विपरीतप्रश्ने रोषो भविष्यतीति वै भीताः संतः प्रणम्य प्रोचुरित्यन्वयः॥१॥ एवं पूर्वोक्तं "सोहमेवं जगत्सर्वं मय्येव सकलं स्थितम् । परतंत्रं स्वतंत्रेपि तदभावाद्द्विजाग्रतः॥एकत्वमपि नास्त्येव द्वैतं तत्र कुतस्त्वहो" इत्यादि चेन्महेश्वर त्वमनया देव्या विविधैर्भोगैः कथं क्रीडसे इहास्मिन्संशये वक्तुमुत्तरं दातुमर्हसीत्यन्वयः ॥२॥ ईशः प्रहस्य अंबिकां प्रेक्ष्य तान्प्राहेत्यनेनावयोः कृपां विना सनकादीनामप्यविद्यानिगमोऽशक्य इति सूच्यते ॥ ३ ॥ ४ ॥५॥ एवं पूर्वोक्तज्ञानाद्यभावं मयि यः

सूत उवाच ॥ निशम्य ते महाप्राज्ञाः कुमाराद्याः पिनाकिनम् ॥ प्रोचुः प्रणम्य वै भीताः प्रसन्नं परमेश्वरम् ॥ १ ॥ एवं चेदनया देव्या हैमवत्या महेश्वर ॥ क्रीडसे विविधैर्भोगैः कथं वक्तुमिहार्हसि ॥ २ ॥ सूत उवाच ॥ एवमुक्तः प्रहस्येशः पिनाकी नीललोहितः ॥ प्राह तामंबिकां प्रेक्ष्य प्रणिपत्य स्थितान् द्विजान् ॥ ३ ॥ बंधमोक्षौ न चैवेह मम स्वेच्छाशरीरिणः ॥ अकर्ताज्ञः पशुर्जीवो विभुर्भोक्ता ह्यणुः पुमान् ॥४॥ मायी च मायया बद्धः कर्मभिर्युज्यते तु सः॥ ज्ञानं ध्यानं च बंधश्च मोक्षो नास्त्यात्मनो द्विजाः॥ ५ ॥यदेवं मयि विद्वान् यस्तस्यापि न च सर्वतः ॥ एषा विद्या ह्यहं वेद्यः प्रज्ञैषा च श्रुतिः स्मृतिः ॥ ६ ॥ धृतिरेषा मया निष्ठा ज्ञानशक्तिः क्रिया तथा ॥ इच्छाख्या च तथा ह्याज्ञा द्वे विद्ये न च संशयः ॥७॥ न ह्येषा प्रकृतिर्जैवी विकृतिश्च विचारतः ॥ विकारो नैव मायैषा सदसद्व्यक्तिवर्जिता ॥८॥ पुरा ममाज्ञा मद्वक्त्रात्समुत्पन्ना सनातनी ॥ पंचवक्त्रा महाभागा जगतामभयप्रदा ॥ ९ ॥ तामाज्ञां संप्रविश्याहं चिंतयन् जगतां हितम् ॥ सप्तविंशत्प्रकारेण सर्वं व्याप्यानया शिवः ॥ १० ॥ तदाप्रभृति वै मोक्षप्रवृत्तिर्द्विजसत्तमाः ॥ सूत उवाच ॥ एवमुक्त्वा तदापश्यद्भवानीं परमेश्वरः ॥ ११ ॥ भवानी च तमालोक्य मायामहरदव्यया ॥ ते मायामलनिर्मुक्ता मुनयः प्रेक्ष्य पार्वतीम् ॥ १२ ॥ प्रीता बभूवुर्मुक्ताश्च तस्मादेषा परा गतिः ॥ उमाशंकरयोर्भेदो नास्त्येव परमार्थतः॥ १३ ॥

विद्वान् तस्यापि सर्वतः सर्वं नेत्यन्वयः । अहं वेद्यः एषा पार्वती विद्या प्रज्ञा एषा च एषैव श्रुतिः स्मृतिरित्यन्वयः ॥६॥ द्वे विद्ये परापररूपे इत्यर्थः ॥ ७ ॥ एषा उमा जैवी जीवसंबंधिनी प्रकृतिर्विकृतिः विकारश्च न विचारतः सदसद्व्यक्तिवर्जिता अनिर्वचनीयेत्यर्थः । एषा मायेत्यन्वयः ॥ ८॥ मायाप्रवृत्तिं कथयति–पुरेत्यादिना । सनातनी नित्या समुत्पन्ना प्रादुर्भूतेत्यर्थः ॥९॥ सप्तविंशत्प्रकारेण सप्तविंशतितत्त्वभेदेन अनया देव्या शिवः सर्वं व्याप्य स्थित इति शेषः ॥ १० ॥ तदाप्रभृति तत्कालमारभ्येत्यर्थः॥११ ॥ ॥ १२ ॥ उमाशंकरयोर्भेदं कथयति–उमेत्यादिना ॥ १३ ॥

विद्वान्परमेष्ठिनः शिवस्याज्ञया मायया असंगोऽस्पृष्टः स्यात्तदा क्षणादेव मुक्तिरन्यथा कर्मकोटिभिर्नेत्यग्रिमेणान्वयः ॥ १४ ॥ भूतविवृद्धः पुराणऋषिप्रोक्तः क्रमो मुक्तिक्रमः परमे
ष्ठिनः शिवस्य अविवक्षितः प्राधान्येन अनियामक इत्यर्थः ॥ १५ ॥ अनियमं प्रपंचयति—प्रसादेनेत्यादिना ॥१६॥१७॥ शिव एव सर्वकारणः सर्वरूपश्चेति कथयति—एष एवे
त्यादिना ॥१८॥१९॥२०॥२१॥ विश्वं भूतमिति याजुषश्रुतेरनुवादमाह—सर्व इत्यादिना ॥२२॥ एषा स्थितांबिका देवी रुद्राज्ञा अनया मुक्तिः इत्येवं प्रीतमानसाः खेचराः
सिद्धाः जजल्पुरित्यग्रिमेणान्वयः ॥२३॥ यदा तान् सर्वाननया स्वाज्ञारूपयांबया शिवः प्रसादादवलोक्य स्थित इति शेषः । तदा ते सिद्धाः प्रभोः सायुज्यं प्राप्तास्तिष्ठंतीत्यग्रि

यदा विद्वानसंगः स्यादाज्ञया परमेष्ठिनः ॥ १४ ॥ तदा मुक्तिः क्षणादेव नान्यथा कर्मकोटिभिः ॥ क्रमोऽविवक्षितो भूतविवृद्धः परमेष्ठिनः ॥ १५ ॥ प्रसादेन क्षणान्मुक्तिः प्रतिज्ञैषा न संशयः ॥ गर्भस्थो जायमानो वा बालो वा तरुणोपि वा ॥ १६ ॥ वृद्धो वा मुच्यते जंतुः प्रसादात्परमेष्ठिनः ॥ अंडजश्चोद्भिजो वापि स्वेदजो वापि मुच्यते ॥ १७ ॥ प्रसादादेव देवस्य नात्र कार्या विचारणा ॥ एष एव जगन्नाथो बंधमोक्षकरः शिवः ॥ १८ ॥ भूर्भुवःस्वर्महश्चैव जनः साक्षात्तपः स्वयम् ॥ सत्यलोकस्तथांडानां कोटिकोटिशतानि च ॥ १९ ॥ विग्रहं देवदेवस्य तथांडावरणाष्टकम् ॥ सप्तद्वीपेषु सर्वेषु पर्वतेषु वनेषु च ॥ २० ॥ समुद्रेषु च सर्वेषु वायुस्कंधेषु सर्वतः ॥ तथान्येषु च लोकेषु वसंति च चराचराः ॥ २१ ॥ सर्वे भवांशजा नूनं गतिस्तेषां स एव वै ॥ सर्वो रुद्रो नमस्तस्मै पुरुषाय महात्मने ॥ २२ ॥ विश्वं भूतं तथा जातं बहुधा रुद्र एव सः ॥ रुद्राज्ञैषा स्थिता देवी ह्यनया मुक्तिरंबिका ॥ २३ ॥ इत्येवं खेचराः सिद्धा जजल्पुः प्रीतमानसाः ॥ यदाऽवलोक्य तान् सर्वान्प्रसादादनयांबिका ॥२४॥ तदा तिष्ठंति सायुज्यं प्राप्तास्ते खेचराः प्रभोः ॥ २५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे मुनिमोहशमनं नाम सप्ताशीतितमोऽध्यायः॥ ८७ ॥ ऋषय ऊचुः॥ केन योगेन वै सूत गुणप्राप्तिः सतामिह ॥ अणिमादिगुणोपेता भवंत्येवेह योगिनः ॥ तत्सर्वं विस्तरात्सूत वक्तुमर्हसि सांप्रतम् ॥ १ ॥ सूत उवाच ॥ अत ऊर्ध्वं प्रवक्ष्यामि योगं परमदुर्लभम् ॥ पंचधा संस्मरेदादौ स्थाप्य चित्ते सनातनम् ॥ २ ॥

द्विधासौ रूपमास्थाय स्थित एव न संशयः ॥ 

मेणान्वयः ॥२४॥ खे गगने वा हार्दाकाशे चरंति संचरंति वा विचारयंति ते खेचरा इत्यर्थः ॥ २५ ॥ सनकादयोपि सिद्धाः कृपया यस्यैव मायया मुक्ताः । सोस्मान्
मुंचतु देवः स्वाज्ञारूपांबिकायुक्तः ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां सप्ताशीतितमोऽध्यायः ॥८७॥ अष्टाशीतितमेऽध्याये ह्यणिमाद्यष्टसिद्धयः ॥ त्रिगुणश्चापि
संसारः प्राणाग्नौ होम उच्यते ॥ ऋषयः शौनकादयोऽपृच्छन्—केनेत्यादिना । हे सूत सतां साधूनां गुणप्राप्तिर्मोक्षप्राप्तिः केन कीदृशेन योगेन तथेति शेषः । योगिनः इह अणि
मादिगुणोपेताः केन भवंति तत्सर्वं वक्तुमर्हसीत्यन्वयः । केनेत्ययं सार्धश्लोकः ॥१॥ सनातनं शिवं चित्ते स्थाप्य पंचधा सद्योजातादिपंचप्रकारेणादौ स्मरेदित्यन्वयः ॥ २ ॥

षड्विंशच्छक्तयस्तत्संख्याकतत्त्वरूपास्ताभिः संयुक्तम् अष्टधा मूलेऽष्टाश्रं ततस्तदुपरि षोडशधा षोडशाश्रं पुनरूर्ध्वं द्वादशधा द्वादशाश्रं तदासनं तथा मध्ये देव्या क्रीडमानया सहितं देवं क्रीडमानमुमापतिं च स्मरेदित्यग्रिमेणान्वयः ॥३॥४॥ अष्टशक्तिभिर्वामादिभिः । तदुक्तं रहस्ये—"वामा ज्येष्ठा तथा रौद्री काली विकारिणी तथा । बलपूर्वा विकरिणी बलप्रमथिनी तथा ॥ मनोन्मनी तथा चाष्टावेताः" इति । अष्टमूर्तिं वामदेवादिरूपमित्यर्थः । ताभिर्वामादिशक्तिभिरष्टविधा अष्टप्रकाराः पुनश्चतुःषष्टिविधा इत्यर्थः॥५॥ गुणाष्टकसमन्विताः अणिमादिगुणोपेता इत्यर्थः । अनुत्तमं ज्ञानं लब्ध्वा एवं पूर्वोक्तप्रकारं स्मरेच्चिंतयेदित्यर्थः ॥६ ॥ एवं पूर्वोक्तं पाशुपतं योगं सतामिति प्रश्नस्थस्यानुषंगः । मोक्षसिद्धिप्रदायकमित्यन्वयः । तस्य पाशुपतयोगविशिष्टयोगिनः अणिमादयः अन्यथा कर्मकोटिभिर्नेत्यन्वयः ॥ ७ ॥ तत्राणिमादिसिद्धिष्वित्यर्थः ॥८॥९ ॥ तदणिमादिसंबंधि ऐश्वर्य

कल्पयेच्चासनं पद्मं सोमसूर्याग्निसंयुतम् ॥ षड्विंशच्छक्तिसंयुक्तमष्टधा च द्विजोत्तमाः ॥ ३ ॥ ततः षोडशधा चैव पुनर्द्वादशधा द्विजाः ॥
स्मरेच्च तत्तथा मध्ये देव्या देवमुमापतिम् ॥४॥ अष्टशक्तिसमायुक्तमष्टमूर्तिमजं प्रभुम् ॥ ताभिश्चाष्टविधा रुद्राश्चतुःषष्टिविधाः पुनः॥५॥
शक्तयश्च तथा सर्वा गुणाष्टकसमन्विताः ॥ एवं स्मरेत्क्रमेणैव लब्ध्वा ज्ञानमनुत्तमम् ॥ ६ ॥ एवं पाशुपतं योगं मोक्षसिद्धिप्रदायकम् ॥
तस्याणिमादयो विप्रा नान्यथा कर्मकोटिभिः॥७॥ तत्राष्टगुणमैश्वर्यं योगिनां समुदाहृतम् ॥ तत्सर्वं क्रमयोगेन ह्युच्यमानं निबोधत ॥८॥
अणिमा लघिमा चैव महिमा प्राप्तिरेव च ॥ प्राकाम्यं चैव सर्वत्र ईशित्वं चैव सर्वतः ॥ ९ ॥ वशित्वमथ सर्वत्र यत्र कामावसायिता ॥
तच्चापि त्रिविधं ज्ञेयमैश्वर्यं सार्वकामिकम् ॥१०॥ सावद्यं निरवद्यं च सूक्ष्मं चैव प्रवर्तते ॥सावद्यं नाम यत्तत्र पंचभूतात्मकं स्मृतम् ॥११॥
इंद्रियाणि मनश्चैव अहंकारश्च यः स्मृतः ॥ तत्र सूक्ष्मप्रवृत्तिस्तु पंचभूतात्मिका पुनः ॥१२॥ इंद्रियाणि मनश्चित्तबुद्ध्यहंकारसंज्ञितम् ॥
तथा सर्वमयं चैव आत्मस्था ख्यातिरेव च ॥१३॥ संयोग एव त्रिविधः सूक्ष्मेष्वेव प्रवर्तते ॥ पुनरष्टगुणश्चापि सूक्ष्मेष्वेव विधीयते॥१४॥

मपि सार्वकामिकं त्रिविधं वक्ष्यमाणत्रिप्रकारं ज्ञेयमित्यन्वयः ॥ १० ॥ ११ ॥ इंद्रियाणि मनः यः स्मृतोहंकारश्चेदं निरवद्यमिति शेषः । तत्रात्मनि पंचभूतात्मिका पंचभूततन्मात्ररूपा सूक्ष्मप्रवृत्तिः पुनः सूक्ष्मं स्मृतमित्यनुषंगः ॥१२॥ इंद्रियाणि मनश्चित्तबुद्ध्यहंकारसंज्ञितं निरवद्यं सर्वमयं पंचभूतमयं सावद्यम् आत्मस्था ख्यातिः शब्दादिविषयप्रवृत्तिस्तद्रूपं सूक्ष्ममित्यर्थः । एष त्रिविधः पूर्वोक्तत्रिप्रकारः संयोगो भेदः सूक्ष्मेष्वणिमादिष्वेव प्रवर्तत इत्यग्रिमेणान्वयः ॥ १३ ॥ पुनः अष्ट तत्संख्यारूपः गुणो यस्य सोऽष्टगुणः संयोगो भेदः सूक्ष्मेष्वेव विधीयत इत्यन्वयः ॥ १४ ॥

तस्याष्टगुणभेदस्येत्यर्थः । अव्यक्तमस्पष्टं वा अव्यक्तं मायिकमणिमाद्यम् अणिमाद्यैश्वर्यं सर्वत्रैव त्रैलोक्ये प्रतिष्ठितं सर्वभूतेषु यथास्य नियमः स्मृतः प्रभुराह तथा रूपं प्रवक्ष्या मीत्यग्रिमस्थैरन्वयः ॥ १५ ॥ योगिनां सर्वभूतानां दुष्प्रापं यद्बलं समुदाहृतं तत्तस्य भवति इदमिति शेषः । प्रथममणिमारूपमित्यग्रिमेणान्वयः ॥ १६ ॥ लोके लंघनमंतारिक्ष गमनं प्लुवनं जले गमनं रूपं स्वेच्छास्वरूपमस्य सदा भवेत् सर्वलोकेषु सर्वलोकापेक्षया शीघ्रत्वं तु द्वितीयं लघिमारूपं पदं सिद्धिस्थानं स्मृतमित्यग्रिमेणान्वयः ॥१७॥ त्रैलोक्ये सर्वभूतानां महिम्ना माहात्म्येन वंदितं स्तुत्यं महित्वं पूज्यत्वं चास्मिँल्लोके तृतीयो योगः महिमासिद्धिरूपः उच्यत इत्यग्रिमेणान्वयः ॥ १८ ॥ प्राप्तिं निरूपयति–त्रैलोक्य

तस्य रूपं प्रवक्ष्यामि यथाह भगवान्प्रभुः ॥ त्रैलोक्ये सर्वभूतेषु यथास्य नियमः स्मृतः ॥ १५ ॥ अणिमाद्यं तथाव्यक्तं सर्वत्रैव प्रतिष्ठितम् ॥ त्रैलोक्ये सर्वभूतानां दुष्प्राप्यं समुदाहृतम् ॥ १६ ॥ तत्तस्य भवति प्राप्यं प्रथमं योगिनां बलम् ॥ लंघनं प्लवनं लोके रूपमस्य सदा भवेत् ॥ १७ ॥ शीघ्रत्वं सर्वभूतेषु द्वितीयं तु पदं स्मृतम् ॥ त्रैलोक्ये सर्वभूतानां महिम्ना चैव वंदितम् ॥ १८ ॥ महित्वं चापि लोकेस्मिंस्तृतीयो योग उच्यते ॥ त्रैलोक्ये सर्वभूतेषु यथेष्टगमनं स्मृतम् ॥ १९ ॥ प्राकामान् विषयान् भुंक्ते तथाप्रतिहतः क्वचित् ॥ त्रैलोक्ये सर्वभूतानां सुखदुःखं प्रवर्तते ॥२०॥ईशो भवाति सर्वत्र प्रविभागेन योगवित्॥ वश्यानि चास्य भूतानि त्रैलोक्ये सचराचरे॥२१॥ इच्छया तस्य रूपाणि भवंति न भवन्ति च ॥ यत्र कामावसायित्वं त्रैलोक्ये सचराचरे ॥ २२ ॥ शब्दः स्पर्शो रसो गंधो रूपं चैव मन स्तथा ॥ प्रवर्ततेऽस्य चेच्छातो न भवंति यथेच्छया ॥ २३ ॥ न जायते न म्रियते छिद्यते न च भिद्यते ॥ न दह्यते न मुह्येत लीयते न च लिप्यते ॥ २४ ॥ न क्षीयते न क्षरति खिद्यते न कदाचन ॥ क्रियते वा न सर्वत्र तथा विक्रीयते न च ॥ २५ ॥ अगंधरसरूपस्तु अस्पर्शः शब्दवर्जितः ॥ अवर्णो ह्यस्वरश्चैव असवर्णस्तु कर्हिचित् ॥ २६ ॥ स भुंक्ते विषयांश्चैव विषयैर्न च युज्यते ॥ अणुत्वात्तु परः सूक्ष्मः सूक्ष्मत्वादपवर्गिकः ॥ २७ ॥

इति । यथेष्टगमनं प्रापणामित्यर्थः ॥१९॥ प्राकाम्यं कथयाति–प्राकामानिति । ईशित्वं कथयाति–त्रैलोक्य इत्यादिना । त्रैलोक्ये मर्वभूतानां सुखदुःखं प्रवर्तते प्रवर्तयतीत्यर्थः ॥ २० ॥ योगवित्तु सर्वत्र प्रविभागेन अनेकदेहधारणेन ईशः भवाति । वशित्वं निरूपयाति वश्यानीत्यादिना ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ सूक्ष्मत्वश्रैष्ठ्यं कथयाति–अणुत्वादित्यादिना । अणुत्वादणुभावात्तु परा जीवः सूक्ष्मः अणीयानित्यर्थः । सूक्ष्मत्वादपवर्गोस्यास्तीति अपवर्गिकः । त्यागीत्यर्थः ॥ २७ ॥

अपवर्गात्त्यागाद्व्यापकः समष्टिरूपः " अपवर्गस्त्यागमोक्षयोः " इति विश्वः । व्यापकाद्व्यापकत्वात् पूर्षु देहेषु शेते इति पुरुषः स्मृतः कथित इत्यर्थः । पुरुषः सूक्ष्मभावात् स्वकीयसूक्ष्मरूपचिंतनात्परमे अणिमाद्यैश्वर्ये स्थितो भवतीति शेषः । तदुक्तं भागवते-"भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः । अणिमानमवाप्नोति तन्मात्रोपासको मम " इति ॥२८॥ अथ कृत्स्न ऐश्वर्यं सर्वतः सर्वस्माद्गुणोत्तरं सूक्ष्ममणिमैश्वर्यमुच्यत इत्यन्वयः । पाशुपतयोगफलं कथयति-ऐश्वर्यमित्यादिना । ततः पूर्वोक्तपाशुपतयोगात् अनुत्तमं योगमप्रतीघातमैश्वर्यं च प्राप्य अपवर्गं गच्छेत्तन्मोक्षाख्यं सूक्ष्मं परमं पदमित्यग्रिमेणान्वयः ॥ २९ ॥ एवं पूर्वोक्तप्रकारं पाशुपतं योगं स्वर्गापवर्गफलदं शिवसायुज्यकारणं

व्यापकस्त्वपवर्गाच्च व्यापकात्पुरुषः स्मृतः ॥ पुरुषः सूक्ष्मभावात्तु ऐश्वर्ये परमे स्थितः ॥ २८ ॥ गुणोत्तरमथैश्वर्यं सर्वतः सूक्ष्ममुच्यते ॥ ऐश्वर्यं चाप्रतीघातं प्राप्य योगमनुत्तमम् ॥२९॥ अपवर्गं ततो गच्छेत्सूक्ष्मं तत्परमं पदम् ॥ एवं पाशुपतं योगं ज्ञातव्यं मुनिपुंगवाः ॥ ३० ॥ स्वर्गापवर्गफलदं शिवसायुज्यकारणम् ॥ अथवा गतविज्ञानो रागात्कर्म समाचरेत् ॥ ३१ ॥ राजसं तामसं वापि भुक्त्वा तत्रैव मुच्यते ॥ तथा सुकृतकर्मा तु फलं स्वर्गे समश्नुते ॥ ३२ ॥ तस्मात्स्थानात्पुनः श्रेष्ठो मानुष्यमुपपद्यते ॥ तस्माद्ब्रह्म परं सौख्यं ब्रह्म शाश्वतमुत्तमम् ॥ ३३ ॥ ब्रह्म एव हि सेवेत ब्रह्मैव हि परं सुखम् ॥ परिश्रमो हि यज्ञानां महतार्थेन वर्तते ॥ ३४ ॥ भूयो मृत्युवशं याति तस्मान्मोक्षः परं सुखम् ॥ अथवा ध्यानसंयुक्तो ब्रह्मतत्त्वपरायणः ॥ ३५ ॥ न तु च्यावयितुं शक्यो मन्वंतरशतैरपि ॥ दृष्ट्वा तु पुरुषं दिव्यं विश्वाख्यं विश्वतोमुखम् ॥ ३६ ॥ विश्वपादशिरोग्रीवं विश्वेशं विश्वरूपिणम् ॥ विश्वगंधं विश्वमाल्यं विश्वांबरधरं प्रभुम् ॥ ३७ ॥ गोभिर्महीं संपतते पतत्रिणो नैवं भूयो जनयत्येवमेव ॥ कविं पुराणमनुशासितारं सूक्ष्माच्च सूक्ष्मं महतो महांतम् ॥ ३८ ॥ योगेन पश्येन्न च चक्षुषा पुनर्निरिंद्रियं पुरुषं रुक्मवर्णम् ॥ आलिंगिनं निर्गुणं चेतनं च नित्यं सदा सर्वगं सर्वसारम् ॥ ३९ ॥ पश्यंति युक्त्या ह्यचलप्रकाशं तद्भावितारस्तेजसा दीप्यमानम् ॥ अपाणिपादोदरपार्श्वजिह्वो ह्यतींद्रियो वापि सुसूक्ष्म एकः ॥ ४० ॥

ज्ञातव्यमित्यग्रिमस्थैरन्वयः ॥ ३० ॥ योगभ्रष्टगतिं कथयति-अथवेत्यादिना । गतविज्ञानस्त्यक्तात्मचिंतनः रागाद्विषयस्पृहयेत्यर्थः ॥ ३१ ॥ ३२ ॥ तस्मात् पूर्वोक्तकारणादित्यर्थः ॥ ३३ ॥ ३४ ॥ ज्ञानफलमुक्त्वा ध्यानफलं कथयति-अथवेत्यादिना ॥ ३५ ॥ ३६ ॥ ३७ ॥ पुरुषं वर्णयति-गोभिरित्यादिना । पतत्रिणः छंदोमयसुपर्णस्य गोभिरवयवभूतश्रुतिभिर्महीं प्रकृतिं संपतते क्षोभयति वा पतत्रिणः सूर्यस्य गोभिः किरणैर्महीं पृथ्वीं संपतते प्राप्नोति भूयः निरंतरमेव पूर्वसदृशमेव जनयति जगदुत्पादयति नैवं जनयति प्रलयकाले नोत्पादयतीत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ प्रकृतिं वर्णयति—अचेतनामिति ॥ ४२ ॥ ब्रह्म वर्णयति—सर्वत इति । पाणिरादानसाधनं पादौ गमनसाधनमेवमग्रे बोध्यम् ॥ ४३ ॥ परमात्मानं पुरुषं शिवं वर्णयति—युक्त इत्यादिना । योगेन समाधिना युक्तः ईशानं शिवं सर्वतः सर्वस्मात्सनातनं चिरंतनं सर्वभूतानां पुरुषं परमपुरुषमित्यर्थः । तमनिर्वाच्यं यः विद्वान् स न विमुह्यतीत्यन्वयः ॥ ४४ ॥ भूतानि पंचमहाभूतान्यात्मा देहो यस्य महान्पूज्यः आत्मा स्वभावो यस्य परमात्मानं तत्संज्ञं सर्वेषु सर्वदेशकालेष्वात्मानं सततं गम्यमानं तच्छिवाख्यं ब्रह्म वै निश्चयेन ध्याता चिंतको न मुह्यतीत्यन्वयः । "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु" इति विश्वः ॥ ४५ ॥ सदृष्टांतजीवस्वरूपं वर्णयति—पवन इति । सर्वमूर्तिषु विचरन् पवनो यथा अग्राह्यस्तथा सुदुर्ग्राह्यो जीवः पुरि देहे शेते तस्मात्पुरुष उच्यते इत्यन्वयः ॥ ४६ ॥ जीवस्य गर्भवासादिगतिं वर्णयति—अथेत्यादिना । अथ पुण्यफलयोगानंतरं

**पश्यत्यचक्षुः स शृणोत्यकर्णो न चास्त्यबुद्धं न च बुद्धिरस्ति ॥ स वेद सर्वं न च सर्ववेद्यं तमाहुरग्र्यं पुरुषं महांतम् ॥ ४१ ॥ अचेतनां सर्वगतां सूक्ष्मां प्रसवधर्मिणीम् ॥ प्रकृतिं सर्वभूतानां युक्ताः पश्यंति योगिनः ॥ ४२ ॥ सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमँल्लोके सर्वमावृत्य तिष्ठति ॥ ४३ ॥ युक्तो योगेन चेशानं सर्वतश्च सनातनम् ॥ पुरुषं सर्वभूतानां तं विद्वान्न विमुह्यति ॥ ४४ ॥ भूतात्मानं महात्मानं परमात्मानमव्ययम् ॥ सर्वात्मानं परं ब्रह्म तद्वै ध्याता न मुह्यति ॥४५ ॥ पवनो हि यथा ग्राह्यो विचरन् सर्वमूर्तिषु ॥ पुरि शेते सुदुर्ग्राह्यस्तस्मात्पुरुष उच्यते ॥ ४६ ॥ अथ चेल्लुप्तधर्मा तु सावशेषैः स्वकर्मभिः ॥ ततस्तु ब्रह्मगर्भे वै शुक्रशोणितसंयुते ॥ ४७ ॥ स्त्रीपुंसोः संप्रयोगे हि जायते हि ततः प्रभुः ॥ ततस्तु गर्भकालेन कललं नाम जायते ॥ ४८ ॥ कालेन कललं चापि बुद्बुदं संप्रजायते ॥ मृत्पिंडस्तु यथा चक्रे चक्रावर्तेन पीडितः ॥ ४९ ॥ हस्ताभ्यां क्रियमाणस्तु बिंबत्वमनुगच्छति ॥ एवमाध्यात्मिकैर्युक्तो वायुना संप्रपूरितः ॥ ५० ॥ यदि योनिं विमुंचामि तत्प्रपद्ये महेश्वरम् ॥ यावद्धि वैष्णवो वायुर्जातमात्रं न संस्पृशेत् ॥ ५१ ॥**

लुप्तो नष्टः धर्मो यस्य स लुप्तधर्मा । सावशेषैरर्धावशिष्टैः स्वकर्मभिः ब्रह्मगर्भे ब्राह्मणयोनौ जायत इत्यग्रिमेणान्वयः । तदुक्तं शिवपुराणे "केवलं चाशुभं कर्म नरकाय भवेदिह । शुभं स्वर्गाय जायेत उभाभ्यां मानुषं मतम् ॥" इति ॥ ४७ ॥ ४८ ॥ कालेन तत्तत्कालमानेन कललं बुद्बुदं चापि प्रजायते भवतीत्यर्थः । तदुक्तं शिवगीतायां—"शुक्रं रजः समायुक्तं प्रथमे मासि तद्द्रवम् । बुद्बुदं कललं तस्मात्ततः पेशी भवेदिदम् ॥" इति ॥ ४९ ॥ चक्रावर्तेन चक्रभ्रमणेन पीडितो हस्ताभ्यां क्रियमाणो मृत्पिंडो यथा बिंबत्वं घटाकारत्वं गच्छति एवमाध्यात्मिकैः पंचमहाभूतादिभिर्युक्तो जीवः वायुना संप्रपूरितः बिंबत्वं पुरुषाद्याकारत्वमनुगच्छतीति पूर्वस्यैरन्वयः ॥ ५० ॥ गर्भस्थचिंतनं कथयति यदीत्यादिना । तदुक्तं शिवगीतायां—"एवं स्मरन्पुरा प्राप्ता नानाजातीश्च यातनाः । मोक्षोपायमभिध्यायन्वर्ततेभ्यासतत्परः ॥" इति ॥ ५१ ॥

॥ ५२ ॥ शुक्रोत्पत्तिं कथयति—वायुरिति ॥ ५३ ॥ भागतः शुक्रशोणितभागाभ्यामर्धफलमर्धजातीफलसदृशदेहं कृत्वा प्राप्य ततस्तदनंतरं गर्भो निषिच्यते वर्धत इत्यर्थः ॥ ॥ ५४ ॥ ५५ ॥ ५६ ॥ नवमासान्नवमासावधि परिक्लिष्टः संवेष्टितस्याकुंचितस्य शिरसो मस्तकस्य धरः अपर्याप्तं प्रवेशनं वसतिस्थानं यस्य अत एव सर्वगात्रैः हस्तपादादिभि वेष्टित आवृत इत्यर्थः ॥ ५७ ॥ योनिच्छिद्रादवाङ्मुखः उत्पद्यत इति शेषः । ततो जन्मानंतरमित्यर्थः ॥ ५८ ॥ ५९ ॥ यथा संछिन्नाः प्रतापिता आपः संश्लेष्मं सबु द्बुदत्वमुपयांति तथा यातनास्थानगा जीवाः उपयांतीत्यन्वयः ॥ ६० ॥ इतरत्सुखमित्यर्थः ॥ ६१ ॥ सर्वस्नेहादिपाशं त्यक्त्वा सुकृतमेवाचरेदिति कथयति—एकेनैवेत्यादिना

तावत्कालं महादेवमर्चयामीति चिंतयेत् ॥ जायते मानुषस्तत्र यथारूपं यथावयः ॥ ५२ ॥ वायुः संभवते खात्तु वाताद्भवति वै जलम् ॥ जलात्संभवति प्राणः प्राणाच्छुक्रं विवर्धते ॥ ५३ ॥ रक्तभागास्त्रयस्त्रिंशद्रेतोभागाश्चतुर्दश ॥ भागतोर्धफलं कृत्वा ततो गर्भो निषिच्यते ॥ ५४ ॥ ततस्तु गर्भसंयुक्तः पंचभिर्वायुभिर्वृतः ॥ पितुः शरीरात्प्रत्यंगं रूपमस्योपजायते ॥ ५५ ॥ ततोस्य मातुराहारात्पीतलीढप्र वेशनात् ॥ नाभिदेशेन वै प्राणास्ते ह्याधारा हि देहिनाम् ॥ ५६ ॥ नवमासात्परिक्लिष्टः संवेष्टितशिरोधरः ॥ वेष्टितः सर्वगात्रैश्च अपर्याप्त प्रवेशनः ॥५७॥ नवमासोषितश्चापि योनिच्छिद्रादवाङ्मुखः ॥ ततः स्वकर्मभिः पापैर्निरयं संप्रपद्यते ॥५८॥ असिपत्रवनं चैव शाल्मलि च्छेदनं तथा ॥ ताडनं भक्षणं चैव पूयशोणितभक्षणम् ॥ ५९ ॥ यथा ह्यापस्तु संछिन्नाः संश्लेष्ममुपयांति वै ॥ तथा छिन्नाश्च भिन्नाश्च यातनास्थानमागताः ॥ ६० ॥ एवं जीवास्तु तैः पापैस्तप्यमानाः स्वयंकृतैः ॥ प्राप्नुयुः कर्मभिः शेषैर्दुःखं वा यदि वेतरत् ॥ ६१ ॥ एकेनैव तु गंतव्यं सर्वमुत्सृज्य वै जनम् ॥ एकेनैव तु भोक्तव्यं तस्मात्सुकृतमाचरेत् ॥ ६२ ॥ न ह्येनं प्रस्थितं कश्चिद्गच्छंतमनुगच्छति यदनेन कृतं कर्म तदेनमनुगच्छाति ॥६३॥ ते नित्यं यमविषयेषु संप्रवृत्ताः क्रोशंतः सततमनिष्टसंप्रयोगैः ॥ शुष्यंते परिगतवेदनाशरीरा बह्वीभिः सुभृशमनंतयातनाभिः ॥ ६४ ॥ कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ॥ तदभ्यासो हरत्येनं तस्मात्कल्याणमाचरेत् ॥ ॥ ६५ ॥ अनादिमान्प्रबंधः स्यात्पूर्वकर्मणि देहिनः ॥ संसारं तामसं घोरं षड्विधं प्रतिपद्यते ॥ ६६ ॥ मानुष्यात्पशुभावश्च पशुभावा न्मृगो भवेत् ॥ मृगत्वात्पक्षिभावश्च तस्माच्चैव सरीसृपः ॥ ६७ ॥

॥ ६२ ॥ ६३ ॥ प्रहर्षिणीवृत्तेन कथयाति—ते नित्यमिति । तदुक्तं श्रुतबोधे—"आद्यं चेत्रितयमथाष्टमं नवांत्यं द्वावंत्यौ गुरुविरतौ सुभाषिते स्यात् । विश्रामो भवति महेशनेत्र दिग्भिर्विज्ञेया ननु सुदति प्रहर्षिणी सा" इति॥६४॥६५॥ पूर्वकर्मणि देहिनः प्रबंधो निरंतरबंधः अनादिमान्प्रागभावाप्रतियोगीत्यर्थः। षड्विधमग्रिमोक्तषट्प्रकारम्॥६६॥६७॥

यावज्ज नो मनुष्यः उन्मिलते भवतीत्यर्थः ॥ ६८ ॥ तत्रैव स्थावरांतभाव एवेत्यर्थः । तामससंसारं कथयति—इत्येवमित्यादिना ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ चतुर्दशविधं चतुर्दशभुवनरूपमित्यर्थः ॥७४ ॥ संसारतरणमार्गं कथयति—नित्यमित्यादिना ॥ ७५ ॥ ७६ ॥ एषः शिवः सर्वभूतानां संभेदाद्विवृत्या पृथक्त्वविचारेण एष हि परं ज्योतिरात्मा अपां दुस्तरसंसारोदकानामयमापः एष प्रसिद्धोऽनुत्तमः शाश्वतः सेतुरित्यन्वयः ॥ ७७ ॥ तत्तस्मात्कारणादेनं पूर्वोक्तं सेतुमात्मानं विश्वतोमुखमग्निं सर्वभूतानां हृदिस्थं महेश्वरं शिवमुपासीतेत्ययं विधिलिङ् ॥ ७८ ॥ तथा पूर्वोक्तप्रकारेणांतः हृदये अष्टधा पृथिव्याद्यष्टप्रकारेण अष्टधा तदभिमानिभवाद्यष्टरूपेण च तथा पूर्वोक्तप्रकारेण

सरीसृपत्वाद्गच्छेद्वै स्थावरत्वं न संशयः ॥ स्थावरत्वे पुनः प्राप्ते यावदुन्मिलते जनः ॥ ६८ ॥ कुलालचक्रवद्भ्रांतस्तत्रैव परिवर्तते ॥ इत्येवं हि मनुष्यादिः संसारः स्थावरांतिकः ॥६९॥ विज्ञेयस्तामसो नाम तत्रैव परिवर्तते ॥ सात्त्विकश्चापि संसारो ब्रह्मादिः परिकीर्तितः ॥७०॥ पिशाचांतः स विज्ञेयः स्वर्गस्थानेषु देहिनाम् ॥ ब्राह्मे तु केवलं सत्त्वं स्थावरे केवलं तमः ॥ ७१ ॥ चतुर्दशानां स्थानानां मध्ये विष्टंभकं रजः ॥ मर्मसु च्छिद्यमानेषु वेदनार्तस्य देहिनः ॥ ७२ ॥ ततस्तत्परमं ब्रह्म कथं विप्रः स्मरिष्यति ॥ संसारः पूर्वधर्मस्य भावनाभिः प्रणोदितः ॥ ७३ ॥ मानुषं भजते नित्यं तस्माद्ध्यानं समाचरेत् ॥ चतुर्दशविधं ह्येतद्बुद्ध्वा संसारमंडलम् ॥ ७४ ॥ नित्यं समारभेद्धर्मं संसारभयपीडितः ॥ ततस्तरति संसारं क्रमेण परिवर्तितः ॥ ७५ ॥ तस्माच्च सततं युक्तो ध्यानतत्परयुंजकः ॥ तथा समारभेद्योगं यथा त्मानं स पश्यति ॥ ७६ ॥ एष आपः परं ज्योतिरेष सेतुरनुत्तमः ॥ विवृत्या ह्येष संभेदाद्भूतानां चैव शाश्वतः ॥ ७७ ॥ तदेनं सेतुमा त्मानमग्निं वै विश्वतोमुखम् ॥ हृदिस्थं सर्वभूतानामुपासीत महेश्वरम् ॥ ७८ ॥ तथांतः संस्थितं देवं स्वशक्त्या परिमंडितम् ॥ अष्टधा चाष्टधा चैव तथा चाष्टविधेन च ॥ ७९ ॥ सृष्ट्यर्थं संस्थितं वह्निं संक्षिप्य च हृदि स्थितम् ॥ ध्यात्वा यथावद्देवेशं रुद्रं भुवननायकम् ॥ ८० ॥ हुत्वा पंचाहुतीः सम्यक् तच्चिंतागतमानसः ॥ वैश्वानरं हृदिस्थं तु यथावदनुपूर्वशः ॥ ८१ ॥ आपः पूताः सकृत्प्राश्य तूष्णीं हुत्वा ह्युपाविशन् ॥ प्राणायेति ततस्तस्य प्रथमा ह्याहुतिः स्मृता ॥ ८२ ॥

अष्टविधेन वामदेवाद्यष्टरूपेण संस्थितं स्वशक्त्या उमया परिमंडितं शोभमानं भुवननायकं देवेशं रुद्रं ध्यात्वा संस्थितं ज्वलितं वह्निं सृष्ट्यर्थं सृष्टिनिर्वाहार्थं संक्षिप्य संकोच्य हृदि संस्थितं तच्चिंतागतमानसः पंचाहुतीर्हुत्वा शेषं कामतः भुंजीत इति षष्ठेनान्वयः ॥ ७९ ॥ ८० ॥ पूताः वस्त्रशोधिता आपः सकृत्प्राश्य तूष्णीं मौनेन उपाविशन् पीठे आसीनो हृदिस्थं वैश्वानरमग्निं यथावन्नारायणोपनिषद्युक्तेन अनुपूर्वशः अनुक्रमेण जुहुयादिति शेषमादायाग्रिमस्थैरन्वयः ॥८१ ॥ पंचाहुतीः कथयति—प्राणायेत्यादिना ॥८२॥

॥८३॥ भोजनोत्तरविधिं कथयति—अप इत्यादिना ॥८४॥ 'प्राणानां ग्रंथिरसि' इति याजुषश्रुतेरनुवादमाह—प्राणानामित्यादिना । प्राणानां प्राणापानादिवायूनां ग्रंथिर्विश्लेषाय ग्रथनहेतुरात्मासि रुद्रो हि आत्मा अहंकारदेवता त्वम् अंतको दुःखनाशकः शिव मम हृदि प्रविशेत्यर्थः । रुद्रो वै आत्मनो जीवस्य प्राणो जीवकः एवं स्वप्रवेशनेन स्वयमाप्याय येद्वर्धयेदित्यर्थः ॥८५॥ सामान्यभोजनविधिमुक्त्वा श्राद्धविधिं कथयति—प्राणे निविष्ट इत्यादिना ॥८६॥ ईश शिव मामिह हृदये आविश प्रविशेत्यर्थः। स्वयं ब्रह्मात्मने स्वाहा हविर्दानं करोमीत्यर्थः॥८७॥ क्षुधादिजनितचित्तविक्षेपशांतेरूर्ध्वं जीवस्य परमेश्वररूपत्वानुसंधानहेतुरंगुष्ठमात्र इति याजुषमंत्रानुवादं कथयति—पुरुषोसीत्यादिना । पुरे हृदयाकाशे अंगुष्ठप्रमाणतस्त्वं शेषे अतः पुरुषः अंगुष्ठं पादांगुष्ठं चकारान्मस्तकमाश्रितः आपादमस्तकव्यापीत्यर्थः । परमकारणम् विश्वकारणमीशोसि शिवोसीत्यर्थः॥८८॥ सर्वस्य जगतः प्रभुश्च उपाधिमंतरा सर्वस्वामीत्यर्थः । शाश्वतो नित्यः प्रीणातु प्रीतो भवत्वित्यर्थः । ननु सर्वजीवानां रुद्र एवोपास्योऽतः जीवप्रार्थनमयुक्तम् अतो जीवस्य रुद्राभेदमाह—

अपानाय द्वितीया च व्यानायेति तथा परा ॥ उदानाय चतुर्थी स्यात्समानायेति पंचमी ॥ ८३ ॥ स्वाहाकारैः पृथग् हुत्वा शेषं भुंजीत कामतः ॥ अपः पुनः सकृत्प्राश्य आचम्य हृदयं स्पृशेत् ॥ ८४ ॥ प्राणानां ग्रंथिरस्यात्मा रुद्रो ह्यात्मा विशांतकः ॥ रुद्रो वै ह्यात्मनः प्राण एवमाप्याययेत्स्वयम् ॥ ८५॥ प्राणे निविष्टो वै रुद्रस्तस्मात्प्राणमयः स्वयम् ॥ प्राणाय चैव रुद्राय जुहोत्यमृतमुत्तमम् ॥ ८६ ॥ शिवाविशेह मामीश स्वाहा ब्रह्मात्मने स्वयम् ॥ एवं पंचाहुतींश्चैव श्राद्धे कुर्वीत शासनात् ॥ ८७ ॥ पुरुषोसि पुरे शेषे त्वमंगुष्ठप्रमाणतः॥ आश्रितश्चैव चांगुष्ठमीशः परमकारणम् ॥ ८८ ॥ सर्वस्य जगतश्चैव प्रभुः प्रीणातु शाश्वतः ॥ त्वं देवानामसि ज्येष्ठो रुद्रस्त्वं च पुरो वृषा ॥ ८९ ॥ मृदुस्त्वमन्नमस्मभ्यमेतदस्तु हुतं तव ॥ इत्येवं कथितं सर्वं गुणप्राप्तिविशेषतः॥ ९० ॥ योगाचारः स्वयं तेन ब्रह्मणा कथितः पुरा ॥ एवं पाशुपतं ज्ञानं ज्ञातव्यं च प्रयत्नतः॥९१॥भस्मस्नायी भवेन्नित्यं भस्मलिप्तः सदा भवेत्॥यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ ९२ ॥ दैवे कर्माणि पित्र्ये वा स याति परमां गतिम् ॥ ९३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागेऽणिमाद्यष्टसिद्धित्रिगुणसंसार प्राप्तौ होमादिवर्णनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

वमिति । त्वं पुरो वृषा प्रथम इंद्रः रुद्रः अतः देवानां ब्रह्मादीनां ज्येष्ठः असीति शेषः॥८९॥ त्वमस्मभ्यं मृदुः शिवः अस्तु एतत्प्राशितमन्नं तव हुतं चास्त्वित्यन्वयः । प्रश्नोत्तरमुपसंहरति—एवमित्यादिना । गुणप्राप्तिविशेषतः अणिमादिगुणप्राप्तिविशेषानुरोधेन इत्येवं पूर्वोक्तप्रकारं सर्वं कथितं निवेदितमित्यर्थः॥९०॥ एवं तेन ब्रह्मणा कथितो योगाचारः पाशुपतं ज्ञानं च प्रयत्नतः ज्ञातव्यमित्यन्वयः। ९१॥ भस्ममाहात्म्यदाढर्चाय भस्मस्नानलेपननित्यविधिं कथयति—भस्मेति । अध्यायफलं कथयति—य इत्यादिना ॥९२॥ परमां श्रेष्ठामित्यर्थः ॥९३॥ पाशुपतं शिवयोगं योगाचार्यैर्युतं नित्यम् । अणिमादिसिद्धिहेतुं त्वत्पदं मे दिश क्षिप्रम् ॥ इति श्रीलिं०शिव०टीकायामष्टाशीतितमोऽध्यायः ॥८८॥

नवाशीतितमेध्याये सदाचारो हि योगिनाम् । द्रव्यशुद्धिस्तथा शौचं स्त्रीधर्मश्च निरूप्यते ॥ सूतः शौचाचारलक्षणं कथयति—अत इत्यादिना ॥ १ ॥ वेदानामर्थं सारभूत मत एव ब्रह्मवादिनां संचयं कोशभूतमित्यर्थः ॥ २ ॥ तत्र सदाचार इत्यर्थः ॥ ३ ॥ मुमुक्षुधर्मानादौ कथयति—मानावमानावित्यादिना ॥ ४ ॥ गुरोर्हिते युक्तोपि संवत्सरं तु संवत्सरमेव वसेदित्यन्वयः ॥ ५ ॥ ततः संवत्सरानंतरमनुत्तमं ज्ञानयोगमनुज्ञां च प्राप्य धर्मस्य स्वविहिताचारस्याविरोधेन इमां भारतखंडभूमिं चरेतेत्यन्वयः ॥ ६ ॥ चक्षुषा स्वदृष्ट्या पूतं कीटादिरहितमित्यर्थः। मनसा स्वांतःकरणेन पूतं शास्त्राद्यनिर्णयं पवित्रत्वेन भातं समाचरेद्विचारेणाचरेदित्यर्थः ॥७॥ मत्स्यगृह्यस्य मत्स्यग्राहकस्य षण्मासाभ्यंतरे

सूत उवाच ॥ अत ऊर्ध्वं प्रवक्ष्यामि शौचाचारस्य लक्षणम् ॥ यदनुष्ठाय शुद्धात्मा परेत्य गतिमाप्नुयात् ॥ १ ॥ ब्रह्मणा कथितं पूर्वं सर्वभूतहिताय वै ॥ संक्षेपात्सर्ववेदार्थं संचयं ब्रह्मवादिनाम् ॥२॥ उदयार्थं तु शौचानां मुनीनामुत्तमं पदम् ॥ यस्तत्राथाप्रमत्तः स्यात्स मुनिर्नावसीदति ॥ ३ ॥ मानावमानौ द्वावेतौ तावेवाहुर्विषामृते ॥ अवमानोऽमृतं तत्र सन्मानो विषमुच्यते ॥ ४ ॥ गुरोरपि हिते युक्तः स तु संवत्सरं वसेत् ॥ नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥ ५ ॥ प्राप्यानुज्ञां ततश्चैव ज्ञानयोगमनुत्तमम् ॥ अविरोधेन धर्मस्य चरेत पृथिवीमिमाम् ॥ ६ ॥ चक्षुःपूतं चरेन्मार्गं वस्त्रपूतं जलं पिबेत् ॥ सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ ७ ॥ मत्स्यगृह्यस्य यत्पापं षण्मासाभ्यंतरे भवेत् ॥ एकाहं तत्समं ज्ञेयमपूतं यज्जलं भवेत् ॥ ८ ॥ अपूतोदकपाने तु जपेच्च शतपंचकम् ॥ अघोरलक्षणं मंत्रं ततः शुद्धिमवाप्नुयात् ॥ ९ ॥ अथवा पूजयेच्छंभुं घृतस्नानादिविस्तरैः ॥ त्रिधा प्रदक्षिणीकृत्य शुद्ध्यते नात्र संशयः ॥ १० ॥ आतिथ्यश्राद्धयज्ञेषु न गच्छेद्योगवित्क्वचित् ॥ एवं ह्यहिंसको योगी भवेदिति विचारितम् ॥ ११ ॥ वह्नौ विधूमेऽत्यंगारे सर्वस्मिन्भुक्तवज्जने ॥ चरेत्तु मतिमान् भैक्ष्यं न तु तेष्वेव नित्यशः ॥ १२ ॥ अथैनमवमन्यंते परे परिभवंति च ॥ तथा युक्तं चरेद्भैक्ष्यं सतां धर्ममदूषयन् ॥ १३ ॥ भैक्ष्यं चरेद्वनस्थेषु यायावरगृहेषु च ॥ श्रेष्ठा तु प्रथमा हीयं वृत्तिरस्योपजायते ॥ १४ ॥

यत्पापं भवत्तत् एकाहं यस्य जलमपूतं वस्त्राशोधितं भवेत्तस्य समं तुल्यं ज्ञेयमित्यन्वयः ॥ ८ ॥ प्रमादेनापूतोदकपाने प्रायश्चित्तं कथयति—अपूतोदक इत्यादिना ॥ ९ ॥१०॥ आतिथ्ये सादरनिमंत्रणे वा अन्यादरेण कृतभोजनप्रस्तरे श्राद्धे पित्रुद्देशकार्ये यज्ञे सोमादियागे क्वचिद्धि योगवित् न गच्छेत् भैक्ष्यं न गृह्णीयादित्यर्थः। एवं पूर्वोक्ताचारेण योगी अहिंसको भवेदिति विचारितं निश्चितमित्यर्थः॥११॥ भिक्षाधर्मं कथयति—वह्नावित्यादिना । वह्नौ विधूमे गतधूमे अंगारमंगारभावमतिक्रांतोऽत्यंगारः शांत इत्यर्थः॥१२॥१३॥१४॥

शीलिषु मद्वृत्तेषु इनाः श्रेष्ठाः शीलीनास्तेष्वित्यर्थः ॥ १५ ॥ १६ ॥ भैक्ष्यं भिक्षाहृतं यवागूः शिथिलौदनः यावकं गोधूमान्नं कणाः अतिसूक्ष्मधान्यांशाः "कणातिसूक्ष्मे धान्यांशे कृष्णजीरकयोः कणः" इति विश्वः । पिण्याकं तिलचूर्णम् ॥ १७ ॥ ते पूर्वोक्ताः योगिनां सिद्धिवर्धनाः आहारा मया प्रोक्ता इत्येव एतावंत एवेत्यर्थः । तेषु पूर्वोक्ताऽऽहारेषु सिद्धेषु उपपन्नेषु भैक्ष्यं श्रेष्ठमिति स्मृतं कथितमित्यर्थः ॥ १८ ॥ भैक्ष्यश्रैष्ठ्यमतिशयेन प्रपंचयति–अब्बिंदुमित्यादिना ॥ १९ ॥ जरामरणगर्भेभ्यः नरकादिषु भीतस्य यतेः तत्पूर्वोक्तविधं भैक्ष्यं दाययते दायभागवदाचरति । अत्र दायशब्दात्प्रातिपदिकाद्धात्वर्थ इति णिच् ॥२० ॥ जीवक्षीणकाः कृच्छ्रादिना देहशोषका इत्यर्थः ॥२१॥

अत ऊर्ध्वं गृहस्थेषु शीलीनेषु चरेद्द्विजाः ॥ श्रद्दधानेषु दांतेषु श्रोत्रियेषु महात्मसु ॥ १५ ॥ अत ऊर्ध्वं पुनश्चापि अदुष्टापतितेषु च ॥ भैक्ष्यचर्या हि वर्णेषु जघन्या वृत्तिरुच्यते ॥ १६ ॥ भैक्ष्यं यवागूस्तक्रं वा पयो यावकमेव च ॥ फलमूलादि पक्वं वा कणपिण्याकसक्तवः ॥ १७ ॥ इत्येते ते मया प्रोक्ता योगिनां सिद्धिवर्द्धनाः ॥ आहारास्तेषु सिद्धेषु श्रेष्ठं भैक्ष्यमिति स्मृतम् ॥१८॥ अब्बिंदुं यः कुशाग्रेण मासिमासि समश्नुते ॥ न्यायतो यश्चरेद्भैक्ष्यं पूर्वोक्तात्स विशिष्यते ॥ १९ ॥ जरामरणगर्भेभ्यो भीतस्य नरकादिषु ॥ एवं दाययते तस्मात्तद्भैक्ष्यमिति संस्मृतम् ॥२०॥ दधिभक्षाः पयोभक्षा ये चान्ये जीवक्षीणकाः॥ सर्वे ते भैक्ष्यभक्षस्य कलां नार्हंति षोडशीम् ॥२१॥ भस्मशायी भवेन्नित्यं भिक्षाचारी जितेंद्रियः ॥ य इच्छेत्परमं स्थानं व्रतं पाशुपतं चरेत् ॥ २२ ॥ योगिनां चैव सर्वेषां श्रेष्ठं चांद्रायणं भवेत् ॥ एकं द्वे त्रीणि चत्वारि शक्तितो वा समाचरेत् ॥ २३ ॥ अस्तेयं ब्रह्मचर्यं च अलोभस्त्याग एव च ॥ व्रतानि पंच भिक्षूणामहिंसा परमा त्विह॥ २४ ॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ॥ नित्यं स्वाध्याय इत्येते नियमाः परिकीर्तिताः॥ २५ ॥ बीजयोनिगुणा वस्तुबंधः कर्मभिरेव च ॥ यथा द्विप इवारण्ये मनुष्याणां विधीयते ॥ २६ ॥ देवैस्तुल्याः सर्वयज्ञक्रियास्तु यज्ञाज्जाप्यं ज्ञानमाहुश्च जाप्यात् ॥ ज्ञानाद्ध्यानं संगरागादपेतं तस्मिन्प्राप्ते शाश्वतस्योपलंभः॥ २७ ॥

यः परमं स्थानमिच्छेत्सः नित्यं भस्मशायी भवेत् भिक्षाहारी जितेंद्रियः सन्पाशुपतं व्रतं चरेदित्यन्वयः ॥ २२ ॥ वा शक्तितः बहून्यपीत्यर्थः ॥२३॥२४॥२५॥ बीजं पिता योनिर्माता गुणाः स्वकीयस्वभावास्तैरिति शेषः। वस्तूनां धनादीनां बंधः कर्मभिः संचितक्रियमाणैरेव च बंधः मनुष्याणामरण्ये द्विप इव गजवद्दुर्ग्रहः विधीयते देवैः क्रियत इत्यर्थः । तदुक्तं शिवगीतायां–" दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम् । तथैव ज्ञानवान्विप्रो देवानां दुःखदो भवेत् ॥ त्रिदशास्तेन विघ्नंति प्रविष्टा विष्टपं नृणाम् " इति ॥ २६ ॥ मोक्षे ध्यानमेव सर्वश्रेष्ठमिति कथयति–देवैरिति । सर्वयज्ञक्रियाः देवैस्तुल्याः स्वर्गप्रापका इत्यर्थः ॥ २७ ॥

दमादयो मौनं च तथा अखिलेषु भूतेषु आर्जवं तथा अतींद्रियं ज्ञानपातमज्ञानमिदं विशुद्धबुद्धयः शिवमाहुरित्यन्वयः ॥ २८ ॥ समाहितः शांतचित्तः ब्रह्मपरः ब्रह्म...
अप्रमादी अनलसः शुचिः शौचयुक्तः तथा एकांतरतिः विविक्तसेवी महात्मा प्रसन्नचित्तश्च इमं पाशुपतं योगमवाप्नुयादेवं महर्षयः प्राहुरित्यनुषंगः ॥२९॥ अंकुशेन निवारितो
द्विप इति शेषः। अभिमतान्देशान्यथा प्राप्यते तथा शुद्धेन एतन्मार्गेण योगमार्गेणेत्यर्थः। दग्धं बीजं कर्म यस्य सः अकल्मषः मोक्षमिति शेषः। प्राप्यत इत्यन्वयः ॥३०॥
ब्रह्मोक्तं सदाचारं कथयन्फलमाह—सदाचारेति ॥ ३१ ॥ ३२ ॥ ३३ ॥ त्रिधान्यस्तेन त्रिवारकृतेनेत्यर्थः। ब्राह्मणो ब्रह्मप्रापकः गुरुर्वै पिता च वंद्योऽभिवाद्य इत्यर्थः॥३४॥

दमः शमः सत्यमकल्मषत्वं मौनं च भूतेष्वखिलेषु चार्जवम् ॥ अतींद्रियं ज्ञानमिदं तथा शिवं प्राहुस्तथा ज्ञानविशुद्धबुद्धयः ॥ २८ ॥
समाहिता ब्रह्मपरोऽप्रमादी शुचिस्तथैकांतरतिर्जितेंद्रियः॥ समाप्नुयाद्योगमिमं महात्मा महर्षयश्चैवमनिंदितामलाः ॥२९॥ प्राप्यतेऽभिमतान्
देशानंकुशेन निवारितः ॥ एतन्मार्गेण शुद्धेन दग्धबीजो ह्यकल्मषः ॥ ३० ॥ सदाचाररताः शांताः स्वधर्मपरिपालकाः ॥ सर्वाँल्लोकान्
विनिर्जित्य ब्रह्मलोकं व्रजंति ते ॥ ३१ ॥ पितामहेनोपदिष्टो धर्मः साक्षात्सनातनः ॥ सर्वलोकोपकारार्थं शृणुध्वं प्रवदामि वः ॥ ३२ ॥
गुरूपदेशयुक्तानां वृद्धानां क्रमवर्त्तिनाम् ॥ अभ्युत्थानादिकं सर्वं प्रणामं चैव कारयेत् ॥३३॥ अष्टांगप्रणिपातेनत्रिधा न्यस्तेन सुव्रताः ॥
त्रिःप्रदक्षिणयोगेन वंद्यो वै ब्राह्मणो गुरुः ॥ ३४ ॥ ज्येष्ठान्येपि च ते सर्वे वंदनीया विजानता ॥ आज्ञाभंगं न कुर्वीत यदीच्छेत्सिद्धिमुत्त
माम् ॥ ३५ ॥ धातुशून्यविलक्षेत्रक्षुद्रमंत्रोपजीवनम् ॥ विषग्रहविडंबादीन्वर्जयेत्सर्वयत्नतः ॥ ३६ ॥ कैतवं वित्तशाठ्यं च पैशुन्यं वर्ज
येत्सदा ॥ अतिहासमवष्टंभं लीलास्वेच्छाप्रवर्तनम् ॥ ३७ ॥ वर्जयेत्सर्वयत्नेन गुरूणामपि सन्निधौ ॥ तद्वाक्यप्रतिकूलं च अयुक्तं वै गुरो
र्वचः ॥ ३८ ॥ न वदेत्सर्वयत्नेन अनिष्टं न स्मरेत्सदा ॥ यतीनामासनं वस्त्रं दंडाद्यं पादुके तथा ॥ ३९ ॥ माल्यं च शयनस्थानं पात्रं
छायां च यत्नतः ॥ यज्ञोपकरणांगं च न स्पृशेद्वै पदेन च ॥ ४० ॥

अन्ये पितृव्यभ्रात्रादयोपि विजानता सुज्ञेन वंदनीया आज्ञाभंगं गुर्वाज्ञाभंगमित्यर्थः ॥ ३५ ॥ धातुः धातुवादः शून्यं नास्तिकवादः विलक्षेत्रमूषरभूमिः क्षुद्रमंत्राः भूतप्रेतादि
साधनमंत्रास्तैर्जीवनं वृत्तिकरणं विषग्रहो विषयुक्तसर्पादीनां मंत्रादिना ग्रहणं विडंबोऽन्यानुकरणं नदादिनिग्रगुणान्वर्जयेदित्यन्वयः ॥ ३६ ॥ अवष्टंभमसत्प्रारंभम् " अवष्टंभः
सुवर्णे च स्तंबप्रारंभयोरपि " इति विश्वः। लीलया स्वेच्छाप्रवर्तनं स्वेच्छाचारं वर्जयेत् गुरूणां सन्निधौ यत्नेनापि वर्जयेदित्यग्रिमेणान्वयः ॥ ३७ ॥ ३८ ॥ ३ ॥ यतीनामा
सनादि यज्ञोपकरणांगं च यत्नतः पदेन न स्पृशेदिति पूर्वस्यैरन्वयः ॥ ४० ॥

प्रमादतोऽनवधानेनेत्यर्थः ॥ ४१ ॥ ४२ ॥ देवद्रोहगुरुद्रोहाद्बुद्धिपूर्वकादित्यर्थः । तथैव कोटिमात्रमेव जपेदित्यनुषंगः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ब्रह्मविन्माहात्म्यं कथयति–य इत्यादिना ॥ ४७ ॥ ४८ ॥ ४९ ॥ ग्राह्यवर्ज्यजलं निरूपयति–उद्धृता इत्यादिना ॥ ५० ॥५१॥ वस्त्रशौचेनान्वितो युक्त इत्यर्थः ॥ ५२ ॥ ५३ ॥ वस्त्रादि शौचं कथयति–देवकार्योपयुक्तानामित्यादिना ॥५४॥ कौशेयं कृमिकोत्थं 'रेशमी' इति लोके प्रसिद्धम् । आविकमौर्णं तयो रूक्षैः परुषवायुभिः 'रूक्ष पारुष्ये' इति धात्वर्थ

देवद्रोहं गुरुद्रोहं न कुर्यात्सर्वयत्नतः ॥ कृत्वा प्रमादतो विप्राः प्रणवस्यायुतं जपेत् ॥ ४१ ॥ देवद्रोहगुरुद्रोहात्कोटिमात्रेण शुध्यति ॥ महापातकशुद्ध्यर्थं तथैव च यथाविधि ॥ ४२ ॥ पातकी च तदर्धेन शुध्यते वृत्तवान्यदि ॥ उपपातकिनः सर्वे तदर्धेनैव सुव्रताः ॥ ४३ ॥ संध्यालोपे कृते विप्रः त्रिरावृत्त्यैव शुद्ध्यति ॥ आह्निकच्छेदने जाते शतमेकमुदाहृतम् ॥ ४४ ॥ लंघने समयानां तु अभक्ष्यस्य च भक्षणे ॥ अवाच्यवाचनं चैव सहस्राच्छुद्धिरुच्यते ॥ ४५ ॥ काकोलूककपोतानां पक्षिणामपि घातने ॥ शतमष्टोत्तरं जप्त्वा मुच्यते नात्र संशयः ॥ ४६ ॥ यः पुनस्तत्त्ववेत्ता च ब्रह्मविद्ब्राह्मणोत्तमः ॥ स्मरणाच्छुद्धिमाप्नोति नात्र कार्या विचारणा ॥ ४७ ॥ नैवमात्मविदामस्ति प्रायश्चित्तानि चोदना ॥ विश्वस्यैव हि ते शुद्धा ब्रह्मविद्याविदो जनाः॥४८॥ योगध्यानैकनिष्ठाश्च निर्लेपाः कांचनं यथा ॥ शुद्धानां शोधनं नास्ति विशुद्धा ब्रह्मविद्यया ॥ ४९ ॥ उद्धृतानुष्णफेनाभिः पूताभिर्वस्त्रचक्षुषा ॥ अद्भिः समाचरेत्सर्वं वर्जयेत्कलुषोदकम् ॥५०॥ गंधवर्णरसैर्दुष्टमशुचिस्थानसंस्थितम् ॥ पंकाश्मदूषितं चैव सामुद्रं पल्वलोदकम् ॥ ५१ ॥ सशैवालं तथान्यैर्वा दोषैर्दुष्टं विवर्जयेत् ॥ वस्त्रशौचान्वितः कुर्यात्सर्वकार्याणि वै द्विजाः ॥ ५२ ॥ नमस्कारादिकं सर्वं गुरुशुश्रूषणादिकम् ॥ वस्त्रशौचविहीनात्मा ह्यशुचिर्नात्र संशयः ॥ ५३ ॥ देवकार्योपयुक्तानां प्रत्यहं शौचमिष्यते ॥ इतरेषां हि वस्त्राणां शौचं कार्यं मलागमे ॥ ५४ ॥ वर्जयेत्सर्वयत्नेन वासोऽन्यैर्विधृतं द्विजाः ॥ कौशेयाविकयो रूक्षैः क्षौमाणां गौरसर्षपैः ॥ ५५ ॥ श्रीफलैरंशुपट्टानां कुतपानामरिष्टकैः ॥ चर्मणां विदलानां च वेत्राणां वस्त्रवन्मतम् ॥ ५६ ॥

निर्देशात् । क्षौमं दुकूलं वा अतसीवस्त्रमित्यर्थः । "क्षौमं मदे दुकूले स्यादतसीवसनेपि च" इति विश्वः । तेषां गौरसर्षपैः शौचमिष्यत इत्यनुषंगः ॥ ५५ ॥ अंशुयुक्ताः स्वर्णकिरणयुक्ताः पट्टाः अंशुपट्टास्तेषां श्रीफलैः बिल्वफलैरित्यर्थः । कुतपानां कुशास्तरणानां वा छागकंबलानामित्यर्थः । "कुतपः स्यात्कुशे वाद्ये तपने छागकंबले" इति विश्वः । अरिष्टकैः तक्रसेचनैः "अरिष्टं सूतिकागारे तक्रे चिह्नशुभाशुभे" इति विश्वः । विदलानां शणवस्त्राणामित्यर्थः ॥ ५६ ॥

॥ ५७ ॥ त्रपु रंगं च सीसकं च तयोराम्लेन वै इत्यन्वयः ॥ ५८ ॥ तैजसवत्सौवर्णवदित्यर्थः ॥ ५९ ॥ ६० ॥ शुभेन पूतोदकेनेत्यर्थः ॥ ६१ ॥ तक्षणेन तनूकरणे
नेत्यर्थः ॥ ६२ ॥ संहतानां मीलितानामित्यर्थः ॥ ६३ ॥ अभुक्तराशिधान्यानां भोजनार्थमनुद्धृतराशिधान्यानामित्यर्थः ॥ ६४ ॥ मार्जनं जलसेचनमुन्मार्जनं गोमयलेपनं
तैर्वेश्म गृहमित्यर्थः । पुनःपाकेनाग्नौ दाहेन मृन्मयं मृत्तिकापात्रम् ॥ ६५ ॥ उल्लेखनं खननम् अंजनं गोमयलेपनं संमार्जनं मलापकरणम् ॥ ६६ ॥ ६७ ॥ प्रस्रवणे दोहने

वल्कलानां तु सर्वेषां छत्रचामरयोरपि ॥ चैलवच्छौचमाख्यातं ब्रह्मविद्भिर्मुनीश्वरैः ॥ ५७ ॥ भस्मना शुद्ध्यते कांस्यं क्षारेणायसमुच्यते ॥ ताम्रमम्लेन वै विप्रास्त्रपुसीसकयोरपि ॥ ५८ ॥ हैममद्भिः शुभं पात्रं रौप्यपात्रं द्विजोत्तमाः ॥ मण्यश्मशंखमुक्तानां शौचं तैजसवत्स्मृतम् ॥ ५९ ॥ अग्नेरपां च संयोगादत्यंतोपहतस्य च ॥ रसानामिह सर्वेषां शुद्धिरुत्प्लवनं स्मृतम् ॥ ६० ॥ तृणकाष्ठादिवस्तूनां शुभेनाभ्युक्षणं स्मृतम् ॥ उष्णेन वारिणा शुद्धिस्तथा स्रुक्स्रुवयोरपि ॥ ६१ ॥ तथैव यज्ञपात्राणां मुशलोलूखलस्य च ॥ शृंगास्थिदारुदंतानां तक्षणेनैव शोधनम् ॥६२॥ संहतानां महाभागा द्रव्याणां प्रोक्षणं स्मृतम् ॥ असंहतानां द्रव्याणां प्रत्येकं शौचमुच्यते॥६३॥ अभुक्तराशिधान्यानामेकदेशस्य दूषणे ॥ तावन्मात्रं समुद्धृत्य प्रोक्षयेद्वै कुशांभसा ॥६४॥ शाकमूलफलादीनां धान्यवच्छुद्धिरिष्यते ॥ मार्जनोन्मार्जनैर्वेश्म पुनःपाकेन मृन्मयम्॥६५॥ उल्लेखनेनांजनेन तथा संमार्जनेन च ॥ गोनिवासेन वै शुद्धा सेचनेन धरा स्मृता ॥६६॥ भूमिस्थमुदकं शुद्धं वैतृष्ण्यं यत्र गोर्व्रजेत् ॥ अव्याप्तं यदमेध्येन गंधवर्णरसान्वितम् ॥ ६७ ॥ वत्सः शुचिः प्रस्रवणे शकुनिः फलपातने ॥ स्वदारास्यं गृहस्थानां रतौ भार्याभिकांक्षया॥६८॥ हस्ताभ्यां क्षालितं वस्त्रं कारुणा च यथाविधि ॥ कुशांबुना सुसंप्रोक्ष्य गृह्णीयाद्धर्मवित्तमः॥६९॥ पण्यं प्रसारितं चैव वर्णाश्रमविभागशः ॥ शुचिराकरजं तेषां श्वा मृगग्रहणे शुचिः ॥ ७० ॥ छाया च विप्लुषो विप्रा मक्षिकाद्या द्विजोत्तमाः ॥ रजोभूर्वायुरग्निश्च मेध्यानि स्पर्शने सदा ॥ ७१ ॥ सुप्त्वा भुक्त्वा च वै विप्राः क्षुत्वा पीत्वा च वै तथा ॥ ष्ठीवित्वाध्ययनादौ च शुचिरप्याचमेत्पुनः ॥ ७२ ॥

इत्यर्थः॥६८॥ कारुणा रजकेन ॥६९॥ वर्णाश्रमविभागशः "प्रसारितमाकरजं पण्यं तेषां तत्तद्वर्णानां शुचि" श्वा श्वानः मृगग्रहे हरिणादि मारणे शुचिरित्यन्वयः ॥ ७० ॥
छाया अनिषिद्धच्छाया विप्लुषो वेदपठने निर्गतमुखबिंदवः "विप्लुषो ब्रह्मबिंदवः" इत्यमरः ॥ मक्षिकाद्या द्विजोत्तमाः अनिषिद्धपक्षिण इत्यर्थः ॥ ७१ ॥ ७२ ॥

॥७३॥७४॥यूपं चैत्ययूपं रजस्वलामार्तववतीं सूनिकां प्रसूतिकाम् अंत्यजो चांडालादिस्त्रियमपीत्यर्थः ॥७५॥ सूतिकाशौचं जननाशौचं शावाशौचं मृताशौचं तत्समन्वितोपि तासां स्वसंबंधिस्त्रीणां रजो न संस्पृशेद्रजस्वला न संस्पृशेदित्यर्थः । स्पृष्ट्वा स्नात्वैव स्नानादेव शुद्ध्यतीत्यन्वयः ॥७६ ॥ अशौचं कथयन्नादौ अपवादानादिशति—नैवेत्यादिना । नैष्ठिकानां नियमवतां मंडलीनां राजामात्यादीनामित्यर्थः ॥ ७७ ॥ ततः पूर्वोक्तेषु नृपाणां कार्यविरोधाधिराजकार्यविरोध एव न अन्यथा अन्यप्रकारे शौचं भवेत् वैखानसानां यायावराणां नैवाशौचं पतितानामसंभवादप्राप्त्या नाशौचमित्यन्वयः ॥ ७८ ॥ असंचयद्विजानां नित्यार्जितवृत्तीनां असंनिहितानामज्ञाताशौचानामित्यर्थः ॥७९॥यज्ञयाजीनाम्

पादौ स्पृशंति ये चापि पराचमनबिंदवः ॥ ते पार्थिवैः समा ज्ञेया न तैरप्रयतो भवेत् ॥ ७३ ॥ कृत्वा च मैथुनं स्पृष्ट्वा पतितं कुक्कुटादिकम् ॥ सूकरं चैव काकादि श्वानमुष्ट्रं खरं तथा ॥ ७४ ॥ यूपं चांडालकाद्यांश्च स्पृष्ट्वा स्नानेन शुध्यति ॥ रजस्वलां सूतिकां च न स्पृशेदंत्यजामपि ॥ ७५ ॥ सूतिकाशौचसंयुक्तः शावाशौचसमन्वितः ॥ संस्पृशेन्न रजस्तासां स्पृष्ट्वा स्नात्वैव शुध्यति ॥७६॥ नैवाशौचं यतीनां च वनस्थब्रह्मचारिणाम् ॥ नैष्ठिकानां नृपाणां च मंडलीनां च सुव्रताः ॥ ७७ ॥ ततः कार्यविरोधाद्धि नृपाणां नान्यथा भवेत् ॥ वैखानसानां विप्राणां पतितानामसंभवात् ॥ ७८ ॥ असंचयद्विजानां च स्नानमात्रेण नान्यथा ॥ तथा संनिहितानां च यज्ञार्थं दीक्षितस्य च ॥ ७९ ॥ एकाहाद्यज्ञयाजीनां शुद्धिरुक्ता स्वयंभुवा ॥ ततस्त्वधीतशाखानां चतुर्भिः सर्वदेहिनाम् ॥ ८० ॥ सूतकं प्रेतकं नास्ति त्र्यहादूर्ध्वममुत्र वै ॥ अर्वागेकादशाहांतं बांधवानां द्विजोत्तमाः ॥ ८१ ॥ स्नानमात्रेण वै शुद्धिर्मरणे समुपस्थिते ॥ तत ऋतुत्रयादर्वागेकाहः परिगीयते ॥ ८२ ॥ सप्तवर्षात्ततश्चार्वाक् त्रिरात्रं हि ततः परम् ॥ दशाहं ब्राह्मणानां वै प्रथमेऽहनि वा पितुः ॥ ८३ ॥

ऋत्विजां याजीनामत्रच्छंदोनुरोधेन दीर्घश्छांदसः । तदुक्तं—"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥" इति । ततस्तथा अधीतशाखानामेकाहाच्छुद्धिः कार्यविरोधाद्धीत्यस्यैतत्पर्यंतमनुषंगो ज्ञेयः । सर्वदेहिनामसगोत्राणां त्र्यहादूर्ध्वं सूतकं मृतकं नास्ति चतुर्भिस्तत्तच्चतुर्थदिनैः शुद्धिः स्वयंभुवा उक्तेत्यग्रिमस्थैरन्वयः ॥ ८० ॥ बांधवानामेकादशाहांतमेकादशदिनपर्यंतं मरणे समुपस्थिते अर्वागेव स्नानमात्रेण शुद्धिरित्यग्रिमेणान्वयः ॥ ८१ ॥ ततो जननदशाहोत्तरम् ऋतुत्रयादर्वाक् मरणे एकाहः परिगीयत इत्यन्वयः ॥ ८२ ॥ ततः षण्मासानंतरं सप्तवर्षादर्वाक् त्रिरात्रं ततः सप्तवर्षात्परं ब्राह्मणानां कृतोपनयनानां दशाहमित्यन्वयः ॥ ८३ ॥

सूतिकाशौचं जनानाशौचं पितुः मातुरपि दशाहमेव तदुत्तरं नास्तीत्यर्थः । प्रथमेहनि पितुर्वा विकल्पः । तदुक्तं निर्णयसिंधौ बृहन्मनुवचनं–"जीवाज्जातो यदि ततो मृतः सूतक एव तु । सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥" इति । तथा च नालच्छेदनात्प्राक् त्रिरात्रं पश्चाद्दशाहमिति व्यवस्थितविकल्पः । त्रिवर्षादर्वाक् बांधवानां स्नानेन शुद्धिः पितुः सदा त्रिरात्रमित्यनुषंगमादाय पूर्वस्यैरन्वयः ॥ ८४ ॥ स्त्रीषु तासु मृतास्वित्यर्थः । बांधवस्य अष्टाब्दादेकरात्रेण शुद्धिः ततोष्टवर्षानंतरं द्वादशाब्दादर्वाक् त्रिरात्रम् अत्र मरीचिवचनमुक्तं सिंधौ–"अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥" इति । अग्निपुराणे तु–"विवाहितापि चेत्कन्या म्रियते पितृवेश्मनि । तस्यास्त्रिरात्राच्छुद्ध्यंति बांधवा नात्र संशयः ॥" इति ॥८५॥ सप्तमे कूटस्थात्सप्तम इत्यर्थः ॥ ८६ ॥ ततः ऋतुत्रयादर्वाक् पक्षिणीति शेषः । पूर्वं

दशाहं सूतिकाशौचं मातुरप्येवमव्ययाः ॥ अर्वाक् त्रिवर्षात्स्नानेन बांधवानां पितुः सदा ॥ ८४ ॥ अष्टाब्दादेकरात्रेण शुद्धिः स्याद्बांधवस्य तु ॥ द्वादशाब्दात्ततश्चार्वाक् त्रिरात्रं स्त्रीषु सुव्रताः ॥ ८५ ॥ सपिंडता च पुरुषे सप्तमे विनिवर्तते ॥ अतिक्रांते दशाहे तु त्रिरात्रमशुचिर्भवेत् ॥ ८६ ॥ ततः सन्निहितो विप्रश्चार्वाक् पूर्वं तदेव वै ॥ संवत्सरे व्यतीते तु स्नानमात्रेण शुध्यति ॥ ८७ ॥ स्पृष्ट्वा प्रेतं त्रिरात्रेण धर्मार्थं स्नानमुच्यते ॥ दाहकानां च नेतॄणां स्नानमात्रमबांधवे ॥८८ ॥ अनुगम्य च वै स्नात्वा घृतं प्राश्य विशुध्यति ॥ आचार्यमरणे चैव त्रिरात्रं श्रोत्रिये मृते ॥ ८९ ॥ पक्षिणी मातुलानां च सोदराणां च वा द्विजाः ॥ भूपानां मंडलीनां च सद्यो नीराष्ट्रवासिनाम् ॥ ९० ॥ केवलं द्वादशाहेन क्षत्रियाणां द्विजोत्तमाः ॥ नाभिषिक्तस्य चाशौचं संप्रमादेषु वै रणे ॥ ९१ ॥ वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति ॥ इति संक्षेपतः प्रोक्ता द्रव्यशुद्धिरनुत्तमा ॥ ९२॥ अशौचं चानुपूर्व्येण यतीनां नैव विद्यते ॥ त्रेताप्रभृति नारीणां मासि मास्यार्तवं द्विजाः ॥ ९३ ॥ कृते सकृद्युगवशाज्जायंते वै सहैव तु ॥ प्रयांति च महाभागा भार्याभिः कुरवो यथा ॥ ९४ ॥

वत्सरात्प्राक् तदेव एकाहमेवेत्यर्थः । संवत्सरे व्यतीते तु सन्निहितः सपिंडः स्नानमात्रेण शुध्यतीत्यन्वयः । तदुक्तं देवलेन–"आत्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः । परमेकाहमावर्षादूर्ध्वं स्नातो विशुध्यति॥" इति ॥ ८७ ॥ ८८ ॥ ८९ ॥ मातुलानां मातृभ्रातॄणां पक्षिणी सोदराणामुपकारिणां वा त्रिरात्रमित्यर्थः । भूपानां राज्ञां सामंतानां मांडलिकानां नीराष्ट्रवासिनां देशांतरवासिनां सद्यः स्नानमात्रेणेत्यर्थः ॥ ९० ॥ ९१ ॥ द्रव्यशुद्ध्यशौचकथनमुपसंक्षिपति–इतीत्यादिना ॥ ९२ ॥ रजस्वलाधर्मादि कथयन् रजःप्रवृत्तिक्रमं कथयति–त्रेतेत्यादिना ॥ ९३ ॥ सहैव स्त्रीसहैवेत्यर्थः । कुरवः कुरुवर्षीयाः ॥ ९४ ॥

भा० ३। भारतसंज्ञे दक्षिणे वर्षे वर्णाश्रमव्यवस्था जंबूद्वीपे इतरेष्वष्टसु किंपुरुषादिषु तथा महावीते सुवीते च न । अथ शाकद्वीपादीनि पंच प्लक्षादीनि तेषु भारते यथा त... धर्मः प्रोक्त इत्यग्रिमेणान्वयः । तदुक्तं पूर्वषट्चत्वारिंशे—"प्लक्षद्वीपादिद्वीपेषु शाकद्वीपांतिकेषु वै । ज्ञेयः पंचसु धर्मो वै वर्णाश्रमविभागशः॥ " इति ॥ ९५ ॥ ९६ ॥ ॥ ९७ ॥ ९८ ॥ ९९ ॥ तस्मात्पूर्वोक्तानर्थकारणादित्यर्थः ॥ १०० ॥ तृतीयेऽह्नि तदर्धेन ब्रह्महत्यार्धपातकेन युक्तेति शेषः । अत एवान्यत्र " तृतीये रजकी प्रोक्ता " इत्युच्यते । चतुर्थेऽहानि स्नात्वा अर्धमासादर्धमासावधि संशुद्धेत्यग्रिमेणान्वयः ॥१०१॥ ततः पंचमदिनमारभ्य शुद्धिर्दैवपित्र्यकर्माधिकारो भविष्यतीन्वयः । एतदेवोक्तं " भर्तुः शुद्धा

वर्णाश्रमव्यवस्था च त्रेताप्रभृति सुव्रताः ॥ भारते दक्षिणे वर्षे व्यवस्था नेतरेष्वथ ॥९५॥ महावीते सुवीते च जंबूद्वीपे तथाष्टसु ॥ शाकद्वीपादिषु प्रोक्तो धर्मो वै भारते यथा ॥ ९६ ॥ रसोल्लासा कृते वृत्तिस्त्रेतायां गृहवृक्षजा ॥ सैवार्तवकृतादोषाद्रागद्वेषादिभिर्नृणाम् ॥ ९७॥ मैथुनात्कामतो विप्रास्तथैव परुषादिभिः ॥ यवाद्याः संप्रजायंते ग्राम्यारण्याश्चतुर्दश ॥ ९८ ॥ ओषध्यश्च रजोदोषाः स्त्रीणां रागादिभिर्नृणाम् ॥ अकालकृष्टा विध्वस्ताः पुनरुत्पादितास्तथा ॥ ९९ ॥ तस्मात्सर्वप्रयत्नेन न संभाष्या रजस्वला ॥ प्रथमेऽहनि चांडाली यथा वर्ज्या तथांगना ॥१००॥ द्वितीयेऽहानि विप्रा हि यथा वै ब्रह्मघातिनी ॥ तृतीयेऽह्नि तदर्धेन चतुर्थेऽहानि सुव्रता ॥ १ ॥ स्नात्वार्धमासात्संशुद्धा ततः शुद्धिर्भविष्यति ॥ आषोडशात्ततः स्त्रीणां मूत्रवर्च्छौचमिष्यते ॥ २ ॥ पंचरात्रं तथास्पृश्या रजसा वर्तते यदि ॥ सा विंशाद्दिवसादूर्ध्वं रजसा पूर्ववत्तथा ॥ ३ ॥ स्नाने शौचं तथा गानं रोदनं हसनं तथा ॥ यानमभ्यंजनं नारी द्यूतं चैवानुलेपनम् ॥ ४ ॥ दिवास्वप्नं विशेषेण तथा वै दंतधावनम् ॥ मैथुनं मानसं वापि वाचिकं देवतार्चनम् ॥ ५ ॥ वर्जयेत्सर्वयत्नेन नमस्कारं रजस्वला ॥ रजस्वलांगनास्पर्शसंभाषे च रजस्वला ॥ ६ ॥ संत्यागं चैव वस्त्राणां वर्जयेत्सर्वयत्नतः ॥ स्नात्वान्यपुरुषं नारी न स्पृशेत्तु रजस्वला ॥ ७ ॥

चतुर्थेऽह्नि दैवे पित्र्ये च पंचमे " इति । ततः पंचदिनानंतरमाषोडशात् षोडशदिनपर्यंतं रजोदोष इति शेषः । मूत्रवर्च्छौचमिष्यत इत्यन्वयः ॥ २ ॥ रजसा यदि वर्तते तदा पंचरात्रं पंचरात्रपर्यंतमस्पृश्या अगम्येत्यर्थः । तदुक्तमापस्तंबेन—"स्नानं रजस्वलायास्तु चतुर्थेऽहानि शस्यते । गम्या निवृत्ते रजसि नानिवृत्ते कथंचन ॥" इति । पूर्ववत्पूर्वोक्तवत् तथा अस्पृश्येत्यर्थः ॥ ३ ॥ रजस्वलाधर्मान्कथयति—स्नानमित्यादिना ॥४॥५॥ रजस्वला रजस्वलांगनास्पर्शसंभाषे अन्यरजस्वलास्पर्शालापे वस्त्राणां संत्यागं च सर्वयत्नतो वर्जयेदित्यग्रिमेणान्वयः ॥ ६ ॥ अन्यपुरुषं पतिभिन्नमित्यर्थः ॥ ७ ॥

ततश्चतुर्थदिने स्नानानंतरमित्यर्थः ॥ ८ ॥ चतुर्थ्यादिरात्रिगमनफलानि कथयति—चतुर्थ्यामित्यादिना ॥ ९ ॥ ११०॥ ११ ॥ १२ ॥ १३ ॥ सैव प्रसूयते सा कन्या वंध्या भवतीत्यर्थः । तदुक्तं सिंधौ—'सप्तम्यामप्रजा योषित्' इति ॥ १४ ॥ पूर्ववत्पंडितवदित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सदाचारप्रस्तावमुपसंहरति—इत्येव

ईक्षयेद्भास्करं देवं ब्रह्मकूर्चं ततः पिबेत् ॥ केवलं पंचगव्यं वा क्षीरं वा चात्मशुद्धये ॥ ८ ॥ चतुर्थ्यां स्त्री न गम्या तु गतोऽल्पायुः प्रसूयते ॥ विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम् ॥ ९ ॥ दारिद्र्यार्णवमग्नं च तनयं सा प्रसूयते ॥ कन्यार्थिनैव गंतव्या पंचम्यां विधिवत्पुनः ॥ ११० ॥ रक्ताधिक्याद्भवेन्नारी शुक्राधिक्ये भवेत्पुमान् ॥ समे नपुंसकं चैव पंचम्यां कन्यका भवेत् ॥ ११ ॥ षष्ठ्यां गम्या महाभागा सत्पुत्रजननी भवेत् ॥ पुत्रत्वं व्यंजयेत्तस्य जातपुत्रो महाद्युतिः ॥ १२ ॥ पुमिति नरकस्याख्या दुःखं च नरकं विदुः ॥ पुंसस्त्राणान्वितं पुत्रं तथाभूतं प्रसूयते ॥ १३ ॥ सप्तम्यां चैव कन्यार्थी गच्छेत्सैव प्रसूयते ॥ अष्टम्यां सर्वसंपन्नं तनयं संप्रसूयते ॥१४॥ नवम्यां दारिकार्थी दशम्यां पंडितो भवेत् ॥ एकादश्यां तथा नारीं जनयेत्सैव पूर्ववत् ॥ १५ ॥ द्वादश्यां धर्मतत्त्वज्ञं श्रौतस्मार्तप्रवर्तकम् ॥ त्रयोदश्यां जडां नारीं सर्वसंकरकारिणीम् ॥ १६ ॥ जनयत्यंगना यस्मान्न गच्छेत्सर्वयत्नतः ॥ चतुर्दश्यां यदा गच्छेत्सा पुत्रजननी भवेत् ॥ १७ ॥ पंचदश्यां च धर्मिष्ठां षोडश्यां ज्ञानपारगम् ॥ स्त्रीणां वै मैथुने काले वामपार्श्वे प्रभंजनः ॥१८॥ चरेद्यदि भवेन्नारी पुमांसं दक्षिणे लभेत् ॥ स्त्रीणां मैथुनकाले तु पापग्रहविवर्जिते ॥ १९ ॥ उक्तकाले शुचिर्भूत्वा शुद्धां गच्छेच्छुचिस्मिताम् ॥ इत्येवं संप्रसंगेन यतीनां धर्मसंग्रहे ॥ १२० ॥ सर्वेषामेव भूतानां सदाचारः प्रकीर्तितः ॥ यः पठेच्छृणुयाद्वापि सदाचारं शुचिर्नरः ॥ २१ ॥ श्रावयेद्वा यथान्यायं ब्राह्मणान् दग्धकिल्बिषान् ॥ ब्रह्मलोकमनुप्राप्य ब्रह्मणा सह मोदते ॥ १२२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सदाचारकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

मित्यादिना ॥ १२० ॥ फलं कथयति—य इत्यादिना ॥ २१ ॥ मोदते हर्षं प्राप्नोतीत्यर्थः ॥ १२२ ॥ शिवाचारविहीनांस्तु कलिजानपि वै द्विजान् । तवांति वादिनो ह्यस्मान् त्वमद्य म्नोद्धर प्रभो ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायामेकोननवतितमोऽध्यायः ॥ ८९ ॥

नवतिसंख्यकाध्याये यतीनां दोषनुत्तये । प्रायश्चित्तविधिः सम्यक् श्रीशिवोक्तो निरूप्यते ॥ सूतो यतिप्रायश्चित्तं कथयति–अत ऊर्ध्वमित्यादिना ॥ १ ॥ येन त्रिविधपातकेनेत्यर्थः ॥२॥एष यतिः कर्मणा विना तिष्ठतीति परा परेण नाकमित्यौपनिषदी श्रुतिः ॥ तत्तस्मात्कारणाद्विधारणमतिचलमायुष्यमेवं योगेन क्षणमपि प्रयोज्यमित्यन्वयः॥३॥ योगमाहात्म्यं कथयति–भवेदित्यादिना ॥ ४ ॥ ५ ॥ परं ब्रह्म अवरं मायाविलासं दृष्ट्वा विचार्य तत्तुरीयं शिवाख्यं परं पदं गच्छंति प्राप्नुवंतीत्यर्थः ॥ ६ ॥ प्रायश्चित्तानि कथयति–उपेत्येत्यादिना ॥ ७ ॥ सांतपनव्रतं सांतपनकृच्छ्रसंज्ञम् । एतल्लक्षणमुक्तं मिताक्षरायाम्–"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥ कृच्छ्रः सांतपनो नाम सर्वपापप्रणाशनः ॥ " इति । कृच्छ्रं प्राजापत्यं तल्लक्षणं मिताक्षरायां–" एकभक्तेन नक्तेन तथैवायाचितेन च ॥ उपवासेन चैवाथ पादकृच्छ्रः प्रकीर्तितः॥ यथाकथंचित्त्रिगुणः प्राजापत्योयमुच्यते " इति ॥८॥९॥ एष प्रसंगोऽनृतप्रसंग इत्यर्थः । कदाचिज्जाते प्रायश्चित्तमाह–अहोरात्रामिति ॥ १०॥ ११ ॥ स्तैन्यं हि एषा परा प्राणवधतुल्या हिंसा सृष्टा वै तथा कथितमित्यन्वयः ॥ १२ ॥ १३ ॥

सूत उवाच ॥ अत ऊर्ध्वं प्रवक्ष्यामि यतीनामिह निश्चितम् ॥ प्रायश्चित्तं शिवप्रोक्तं यतीनां पापशोधनम् ॥ १ ॥ पापं हि त्रिविधं ज्ञेयं वाङ्मनःकायसंभवम् ॥ सततं हि दिवा रात्रौ येनेदं वेष्टयते जगत् ॥ २ ॥ तत्कर्मणा विनाप्येष तिष्ठतीति परा श्रुतिः ॥ क्षणमेवं प्रयोज्यं तु आयुष्यं तु विधारणम् ॥ ३ ॥ भवेद्योगोऽप्रमत्तस्य योगो हि परमं बलम् ॥ न हि योगात्परं किंचिन्नराणां दृश्यते शुभम् ॥४ ॥ तस्माद्योगं प्रशंसंति धर्मयुक्ता मनीषिणः ॥ अविद्यां विद्यया जित्वा प्राप्यैश्वर्यमनुत्तमम् ॥ ५ ॥ दृष्ट्वापरावरं धीराः परं गच्छंति तत्पदम् ॥ व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ॥ ६ ॥ एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥ उपेत्य तु स्त्रियं कामात्प्रायश्चित्तं विनिर्दिशेत् ॥ ७ ॥ प्राणायामसमायुक्तं चरेत्सांतपनं व्रतम् ॥ ततश्चरति निर्देशात्कृच्छ्रं चांते समाहितः ॥ ८ ॥ पुनराश्रममागत्य चरेद्भिक्षुरतंद्रितः ॥ न धर्मयुक्तमनृतं हिनस्तीति मनीषिणः ॥ ९ ॥ तथापि न च कर्तव्यं प्रसंगो ह्येष दारुणः ॥ अहोरात्रोपवासश्च प्राणायामशतं तथा ॥१०॥ असद्वादो न कर्तव्यो यतिना धर्मलिप्सुना ॥ परमापद्गतेनापि न कार्यं स्तेयमप्युत ॥११॥ स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति श्रुतिः ॥ हिंसा ह्येषा परा सृष्टा स्तैन्यं वै कथितं तथा ॥ १२ ॥ यदेतद्द्रविणं नाम प्राणा ह्येते बहिश्चराः ॥ स तस्य हरते प्राणान्यो यस्य हरते धनम् ॥ १३ ॥

एवं हिंसारूपं स्तैन्यमित्यर्थः । चांद्रायणव्रतं चरेदित्यग्रिमेणान्वयः । चांद्रायणं द्विविधं यवमध्यं पिपीलिकामध्यं चोक्तं मिताक्षरायाम्—"एकैकं वर्द्धयेत्पिंडं शुक्ले कृष्णे च ह्रासयेत् । इंदुक्षये न भुंजीत एष चांद्रायणो विधिः ॥" इति । तथा च शुक्लारंभे यवमध्यं कृष्णारंभे पिपीलिकामध्यं ज्ञेयम् ॥ १४ ॥ १५ ॥ १६ ॥ कृच्छ्रातिकृच्छ्रं पयसा एकविंशति रात्रवर्तनरूपं तत्रैवोक्तम् ॥ १७ ॥ १८ ॥ धारणाः कृत्वेति शेषः । शुद्धात्मा प्राणायामेन विरजा जायत इत्यग्रिमेणान्वयः ॥ १९ ॥ एकान्नं प्रत्यहमेकस्वामिकान्नम् अश्नृतान्न मपक्कमित्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ समस्तभूतेषु सद्ब्रह्म समाहितं चिंतितं येन सः न पुनर्जायते गर्भवासं नानुभवतीत्यर्थः ॥ २४ ॥ प्लवं नृदेहं बहुपुण्यपुंजा

एवं कृत्वा सुदुष्टात्मा भिन्नवृत्तो व्रताच्युतः ॥ भूयो निर्वेदमापन्नश्चरेच्चांद्रायणं व्रतम् ॥ १४ ॥ विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ॥ ततः संवत्सरस्यांते भूयः प्रक्षीणकल्मषः ॥ पुनर्निर्वेदमापन्नश्चरेद्भिक्षुरतंद्रितः ॥ १५ ॥ अहिंसा सर्वभूतानां कर्मणा मनसा गिरा ॥ अकामा दपि हिंसेत यदि भिक्षुः पशून् कृमीन् ॥ १६ ॥ कृच्छ्रातिकृच्छ्रं कुर्वीत चांद्रायणमथापि वा ॥ स्कंदेदिंद्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यति र्यदि ॥ १७ ॥ तेन धारयितव्या वै प्राणायामास्तु षोडश ॥ दिवा स्कन्नस्य विप्रस्य प्रायश्चित्तं विधीयते ॥ १८ ॥ त्रिरात्रमुपवासाश्च प्राणायामशतं तथा ॥ रात्रौ स्कन्नः शुचिः स्नात्वा द्वादशैव तु धारणाः ॥ १९ ॥ प्राणायामेन शुद्धात्मा विरजा जायते द्विजाः ॥ एकान्नं मधु मांसं वा अश्नृतान्नं तथैव च ॥ २० ॥ अभोज्यानि यतीनां तु प्रत्यक्षलवणानि च ॥ एकैकातिक्रमात्तेषां प्रायश्चित्तं विधीयते ॥ २१ ॥ प्राजाप त्येन कृच्छ्रेण ततः पापात्प्रमुच्यते ॥ व्यतिक्रमाश्च ये केचिद्वाङ्मनःकायसंभवाः ॥ २२ ॥ सद्भिः सह विनिश्चित्य यद्ब्रूयुस्तत्समाचरेत् ॥ २३ ॥ चरेद्धि शुद्धः समलोष्ठकांचनः समस्तभूतेषु च सत्समाहितः ॥ स्थानं ध्रुवं शाश्वतमव्ययं तु परं हि गत्वा न पुनर्हि जायते ॥ २४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे यतिप्रायाश्चित्तं नाम नवतितमोऽध्यायः ॥ ९० ॥ सूत उवाच ॥ अत ऊर्ध्वं प्रवक्ष्यामि अरिष्टानि निबोधत ॥ येन ज्ञानविशेषेण मृत्युं पश्यंति योगिनः ॥ १ ॥ अरुंधतीं ध्रुवं चैव सोमच्छायां महापथम् ॥ यो न पश्येन्न जीवेत्स नरः संवत्सरात्परम् ॥ २ ॥

लब्ध्वा भवाब्धेस्तरणे सुकल्पम् । भजाम्यहं त्वां शिव कर्णधारं परं गतैर्हंसकुलैर्निदिष्टम् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां नवतितमोऽध्यायः ॥ ९० ॥ एकनवतिसंख्येस्मिन् मृतिचिह्नानि सर्वशः । योगः प्रणवमाहात्म्यं शिवोपास्त्यादि चोच्यते ॥ सूतो मरणचिह्नानि कथयति—अत इत्यादिना ॥ १ ॥ सोमच्छायां छाया पुरुषं महापथमाकाशगंगापथमित्यर्थः ॥ २ ॥

॥ ३ ॥ ४ ॥ पश्येदत्र स्वप्न इत्यस्यानुषंगः ॥ ५ ॥ प्रकृतेः स्वभावादित्यर्थः ॥ ६ ॥ पदं पदाकृतिः खंडं शकलाकृतिरित्यर्थः ॥ ७ ॥ निलीयेत्तिष्ठेत् क्रव्यादः खगः श्येन इत्यर्थः ॥ ८ ॥ चतुः पंच तत्संख्यमासानित्यर्थः ॥ ९ ॥ १० ॥ आत्मानं स्वप्रतिबिंबम् अशिरस्कं मस्तकरहितम् ॥ ११ ॥ शवगंधिरत्र मत्वर्थे इनिः ॥ १२ ॥ १३ ॥



अरश्मिवन्तमादित्यं रश्मिवंतं च पावकम् ॥ यः पश्यति न जीवेद्वै मासादेकादशात्परम् ॥ ३ ॥ वमेन्मूत्रं पुरीषं च सुवर्णं रजतं तथा ॥ प्रत्यक्षमथवा स्वप्ने दशमासान्न जीवति ॥ ४ ॥ रुक्मवर्णं द्रुमं पश्येद्गंधर्वनगराणि च ॥ पश्येत्प्रेतापिशाचांश्च नवमासान् स जीवति॥ ५ ॥ अकस्माच्च भवेत्स्थूलो ह्यकस्माच्च कृशो भवेत् ॥ प्रकृतेश्च निवर्तेत चाष्टौ मासांश्च जीवति ॥ ६ ॥ अग्रतः पृष्ठतो वापि खंडं यस्य पदं भवेत् ॥ पांसुके कर्दमे वापि सप्तमासान्स जीवति ॥७॥ काकः कपोतो गृध्रो वा निर्लीयेद्यस्य मूर्धनि । क्रव्यादो वा खगो यस्य षण्मासान्नातिवर्तते ॥ ८ ॥ गच्छेद्वायसपंक्तीभिः पांसुवर्षेण वा पुनः ॥ स्वच्छायां विकृतां पश्येच्चतुः पंच स जीवति ॥ ९ ॥ अनभ्रे विद्युतं पश्येद्दक्षिणां दिशमास्थिताम् ॥ उदके धनुरैंद्रं वा त्रीणि द्वौ वा स जीवति ॥ १० ॥ अप्सु वा यदि वादर्शे यो ह्यात्मानं न पश्यति ॥ अशिरस्कं तथा पश्येन्मासादूर्ध्वं न जीवति ॥ ११ ॥ शवगंधि भवेद्गात्रं वसागंधमथापि वा ॥ मृत्युर्ह्युपागतस्तस्य अर्धमासान्न जीवति ॥१२॥ यस्य वै स्नातमात्रस्य हृदयं परिशुष्यति ॥ धूमं वा मस्तकात्पश्येद्दशाहान्न स जीवति ॥ १३ ॥ संभिन्नो मारुतो यस्य मर्मस्थानानि कृंतति ॥ अद्भिः स्पृष्टो न हृष्येत तस्य मृत्युरुपस्थितः ॥ १४ ॥ ऋक्षवानरयुक्तेन रथेनाशां च दक्षिणाम् ॥ गायन्नृत्यन्व्रजत्स्वप्ने विद्यान्मृत्युरुपस्थितः ॥ १५ ॥ कृष्णांबरधरा श्यामा गायंती वाप्यथांगना ॥ यं नयेद्दक्षिणामाशां स्वप्ने सोपि न जीवति ॥ १६ ॥ छिद्रं वा स्वस्य कंठस्य स्वप्ने यो वीक्षते नरः ॥ नग्नं वा श्रमणं दृष्ट्वा विद्यान्मृत्युमुपस्थितम् ॥१७॥ आमस्तकतलाद्यस्तु निमज्जेत्पंकसागरे ॥ दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥ १८ ॥ भस्मांगारांश्च केशांश्च नदीं शुष्कां भुजंगमान् ॥ पश्येद्यो दशरात्रं तु न स जीवति तादृशः ॥ १९ ॥ कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ॥ पाषाणैस्ताड्यते स्वप्ने यः सद्यो न स जीवति ॥ २० ॥

॥ १४ ॥ १५ ॥ १६ ॥ श्रमणं क्षपणकमित्यर्थः ॥ १७ ॥ आमस्तकतलादापादमस्तकमित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥

प्रत्युषसि अहर्मुख इत्यर्थः। अभिमुखं प्रेत्य सन्मुखमागत्य ॥ २१ ॥ दंतहर्षो दंतकंपनमित्यर्थः ॥२२॥२३॥ दीपगंधं दीपनाशगंधमित्यर्थः । आत्मानं देहप्रतिबिंबम् ॥२४॥ ॥ २५ ॥ पद्माभासं पांडुरवर्णं गण्डे कपोले पिंडिकारक्ते खर्जूरीफलवद्रक्तवर्णे इत्यर्थः । " पिंडी स्यात्तगरेलाबूखर्जूरीभेदयोरपि " इति विश्वः ॥ २६ ॥ याम्यां दक्षिणस्यां स्वप्न इति शेषः । गच्छेदित्यन्वयः ॥ २७ ॥ २८ ॥ २९ ॥ अथ द्वे परमे अरिष्टे एकीभूतः प्राप्तः परं भवेन्मृत्युं प्राप्नुयादित्यर्थः । अरिष्टद्वयमाह–घोषमिति ॥३०॥३१ ॥

सूर्योदये प्रत्युषसि प्रत्यक्षं यस्य वै शिवाः ॥ क्रोशंत्यभिमुखं प्रेत्य स गतायुर्भवेन्नरः ॥ २१ ॥ यस्य वा स्नातमात्रस्य हृदयं पीड्यते भृशम् ॥ जायते दंतहर्षश्च तं गतायुषमादिशेत् ॥२२॥ भूयोभूयस्त्रसेद्यस्तु रात्रौ वा यदि वा दिवा ॥ दीपगंधं च नाघ्राति विद्यान्मृत्युमुपस्थितम् ॥ २३ ॥ रात्रौ चेंद्रधनुः पश्येद्दिवा नक्षत्रमंडलम् ॥ परनेत्रेषु चात्मानं न पश्येन्न स जीवति ॥ २४ ॥ नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः ॥ वक्रा च नासा भवति विज्ञेयो गतजीवितः ॥ २५ ॥ यस्य कृष्णा खरा जिह्वा पद्माभासं च वै मुखम् ॥ गंडे वा पिंडिकारक्ते तस्य मृत्युरुपस्थितः ॥ २६ ॥ मुक्तकेशो हसंश्चैव गायन्नृत्यंश्च यो नरः ॥ याम्यामभिमुखं गच्छेत्तदंतं तस्य जीवितम् ॥ २७ ॥ यस्य श्वेतघनाभासा श्वेतसर्षपसंनिभा ॥ श्वेता च मूर्तिर्ह्यसकृत्तस्य मृत्युरुपस्थितः ॥२८॥ उष्ट्रा वा रासभा वाभियुक्ताः स्वप्ने रथे शुभाः ॥ यस्य सोपि न जीवेत्तु दक्षिणाभिमुखो गतः॥ २९ ॥ द्वे वाथ परमेऽरिष्टे एकीभूतः परं भवेत् ॥ घोषं न शृणुयात्कर्णे ज्योतिर्नेत्रे न पश्यति ॥ ३० ॥ श्वभ्रे यो निपतेत्स्वप्ने द्वारं चापि पिधीयते ॥ न चोत्तिष्ठति यः श्वभ्रात्तदंतं तस्य जीवितम् ॥ ३१ ॥ ऊर्ध्वा च दृष्टिर्न च संप्रतिष्ठा रक्ता पुनः संपरिवर्तमाना ॥ मुखस्य शोषः सुषिरा च नाभिरत्युष्णमूत्रो विषमस्थ एव ॥ ३२ ॥ दिवा वा यदि वा रात्रौ प्रत्यक्षं यो निहन्यते ॥ हंतारं न च पश्येच्च स गतायुर्न जीवति ॥ ३३ ॥ अग्निप्रवेशं कुरुते स्वप्नांते यस्तु मानवः ॥ स्मृतिं नोपलभेच्चापि तदंतं तस्य जीवितम्॥३४॥यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः॥कृष्णं रक्तमपि स्वप्ने तस्य मृत्युरुपस्थितः॥३५॥ अरिष्टे सूचिते देहे तस्मिन्काल उपस्थिते ॥ त्यक्त्वा खेदं विषादं च उपेक्षेद्बुद्धिमान्नरः ॥३६॥ प्राचीं वा यदि वोदीचीं दिशं निष्क्रम्य वै शुचिः ॥ समेऽतिस्थावरे देशे विविक्ते जंतुवर्जिते ॥ ३७ ॥

सुषिरा सच्छिद्रेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ शुक्लं प्रावरणं कृष्णं रक्तमपि पश्यतीत्यन्वयः॥३५॥ अरिष्टदर्शने योग्यादिकृत्यं क्रमशः कथयति–अरिष्टदर्शन इत्यादिना । खेदं दैन्यं विषादमालस्यं त्यक्त्वा बुद्धिमान्नरः उपेक्षेत्संसारादि त्यजेदित्यर्थः ॥ ३६ ॥ अतिस्थावरे अनंतरिक्ष इत्यर्थः ॥ ३७ ॥

आचांतः कृताचमनः स्वस्तिकेन तत्संज्ञकासनेन ॥ ३८ ॥ ३९ ॥ प्रागुदक्प्रवणे प्रागुदगायते "प्रवणः क्रमनिम्नोर्व्यामायने च चतुष्पथे" इति विश्वः ॥४० ॥ शुक्लं सात्विकमित्यर्थः । धारणास्थानान्यष्टौ क्रमशः कथयति–घ्राण इत्यादिना ॥ ४१ ॥ तत्रात्मस्थाने वक्षसि हृदये कालकर्माणि समूहेषु लिंगशरीरेषु विज्ञायालोक्येत्यर्थः ॥ ४२ ॥ योगधारणं द्वादशाध्यात्मं तत्संज्ञकमित्येवमुच्यत इत्यन्वयः । शतमर्धशतं तत्संख्यमित्यर्थः ॥ ४३ ॥ ततोर्ध्वगतवायुना ॥ ४४ ॥ तथा पूर्वोक्तप्रकारेण ओंकारमयो योगी अक्षरे ब्रह्मणि अक्षरी भवेत् ब्रह्मसायुज्यं प्राप्नुयादित्यर्थः । ओंकारप्राप्तेः प्रणवज्ञानस्य लक्षणं स्वरूपं प्रवक्ष्यामीत्यन्वयः ॥ ४५ ॥ एषः प्रणवस्त्रिमात्रः अकारोकारमानुस्वार

उदङ्मुखः प्राङ्मुखो वा स्वस्थश्चाचांत एव च ॥ स्वस्तिकेनोपविष्टस्तु नमस्कृत्वा महेश्वरम् ॥ ३८ ॥ समकायशिरोग्रीवो धारयन्नावलोकयेत् ॥ यथा दीपो निवातस्थो नेंगते सोपमा स्मृता ॥ ३९ ॥ प्रागुदक्प्रवणे देशे तथा युंजीत शास्त्रवित् ॥ कामं वितर्कं प्रीतिं च सुखदुःखे उभे तथा ॥ ४० ॥ निगृह्य मनसा सर्वं शुक्लं ध्यानमनुस्मरेत् ॥ घ्राणे च रसने नित्यं चक्षुषी स्पर्शने तथा ॥ ४१ ॥ श्रोत्रे मनसि बुद्धौ च तत्र वक्षसि धारयेत् ॥ कालकर्माणि विज्ञाय समूहेष्वेव नित्यशः ॥ ४२ ॥ द्वादशाध्यात्ममित्येवं योगधारणमुच्यते ॥ शतमर्धशतं वापि धारणां मूर्ध्नि धारयेत् ॥ ४३ ॥ खिन्नस्य धारणायोगाद्वायुरूर्ध्वं प्रवर्तते ॥ ततश्चापूरयेद्देहमोंकारेण समन्वितः ॥ ४४ ॥ तथोंकारमयो योगी अक्षरे त्वक्षरी भवेत् ॥ अत ऊर्ध्वं प्रवक्ष्यामि ओंकारप्राप्तिलक्षणम् ॥ ४५ ॥ एष त्रिमात्रो विज्ञेयो व्यंजनं चात्र चेश्वरः ॥ प्रथमा विद्युती मात्रा द्वितीया तामसी स्मृता ॥ ४६ ॥ तृतीयां निर्गुणां चैव मात्रामक्षरगामिनीम् ॥ गांधारी चैव विज्ञेया गांधारस्वरसंभवा ॥ ४७ ॥ पिपीलिकागतिस्पर्शा प्रयुक्ता मूर्ध्नि लक्ष्यते ॥ यथा प्रयुक्त ओंकारः प्रतिनिर्याति मूर्धनि ॥ ४८ ॥ तथोंकारमयो योगी त्वक्षरो त्वक्षरी भवेत् ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्मलक्षणमुच्यते ॥ ४९ ॥

मकाररूपत्रिमात्रारूपः यद्यप्यनुस्वारस्याच्त्वादेकमात्रकत्वेपि अयोगवाहानामस्योपरि शर्षु चेत्युक्तत्वादर्धमात्रकत्वाक्षतेः अत्र प्रणवे व्यंजनं च व्यंजनसहितमकार ईश्वरः शिव इत्यर्थः । विद्युती तडिद्वर्णा राजसीत्यर्थः । तामसी कृष्णवर्णा ॥ ४६ ॥ तृतीयां मकाररूपां निर्गतौ गुणौ रजस्तमोरूपौ यस्यास्तां निर्गुणां सत्त्वगुणरूपामित्यर्थः । अक्षरगामिनीं च मात्रामनुस्वाररूपां निर्गुणां त्रिगुणशून्यां विद्यादिति शेषः । तृतीयामात्रास्वारादि कथयति–गांधारीत्यादिना ॥ ४७ ॥ पिपीलिकागतिवत्स्पर्शो यस्याः सा सूक्ष्मगतिरित्यर्थः ॥ ४८ ॥ लक्ष्यते तल्लक्षणं प्राप्यं ब्रह्म आत्मा मनः शरो बाणस्तस्य प्रापणे प्रणवो धनुः धनुष्यवदसाधारणं कारणमुच्यत इत्यन्वयः ॥ ४९ ॥

उक्तलक्ष्यवेधकं कथयति—अप्रमत्तेनेति। शरवत्तन्मयस्तदेकाग्रो भवेत्तेनेति शेषः। अप्रमत्तेन निरलसेन वेद्धव्यं वेधितुं शक्यमित्यर्थः। प्रणवस्य सर्वरूपत्वमाह—ओमितीत्यादिना। गुहायां बुद्धावित्यर्थः ॥ ५० ॥ ५१ ॥ परमार्थतः व्यंजनोत्तरवर्तिनादरूपार्धमात्रयेत्यर्थः। तत्प्रयुक्तः प्रणवप्रेरितो योगी तस्य ब्रह्मणः सायुज्यमाप्नुयादित्यन्वयः ॥ ५२ ॥ प्रणवत्रिमात्राः क्रमशः कथयति—अकार इति। अकारः अक्षरस्तत्संज्ञकवर्णरूपः उकारः सहितस्तत्संधिकार्यं गुणं प्राप्तः मकारश्चासौ सहितः सानुस्वारो मकारसहितः इति पूर्वोक्तत्रिमात्रः ओंकारः संज्ञितः स्मृत इत्यन्वयः ॥ ५३ ॥ ५४ ॥ त्रिविष्टपं स्वर्ग इत्यर्थः ॥ ५५ ॥ मात्रापादः मात्रापादरूपो रुद्रलोकः शिवपदममात्रं मात्रातीतमित्यर्थः।

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ओमित्येकाक्षरं ह्येतद्गुहायां निहितं पदम् ॥५०॥ ओमित्येतत्त्रयो लोकास्त्रयो वेदास्त्रयोऽग्नयः ॥ विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च ॥ ५१ ॥ मात्रा चार्धं च तिस्रस्तु विज्ञेयाः परमार्थतः ॥ तत्प्रयुक्तस्तु यो योगी तस्य सालोक्यमाप्नुयात् ॥ ५२ ॥ अकारो ह्यक्षरो ज्ञेय उकारः सहितः स्मृतः ॥ मकारसहितोंकारस्त्रिमात्र इति संज्ञितः ॥ ५३ ॥ अकारस्त्वेष भूर्लोक उकारो भुव उच्यते ॥ सव्यंजनो मकारस्तु स्वर्लोक इति गीयते ॥ ५४ ॥ ओंकारस्तु त्रयो लोकाः शिरस्तस्य त्रिविष्टपम् ॥ भुवनांगं च तत्सर्वं ब्राह्मं तत्पदमुच्यते ॥ ५५ ॥ मात्रापादो रुद्रलोको ह्यमात्रं तु शिवं पदम् ॥ एवं ज्ञानविशेषेण तत्पदं समुपास्यते ॥ ५६ ॥ तस्माद्ध्यानरतिर्नित्यममात्रं हि तदक्षरम् ॥ उपास्यं हि प्रयत्नेन शाश्वतं सुखमिच्छता ॥ ५७ ॥ ह्रस्वा तु प्रथमा मात्रा ततो दीर्घा त्वनंतरम् ॥ ततः प्लुतवती चैव तृतीया चोपदिश्यते ॥ ५८ ॥ एतास्तु मात्रा विज्ञेया यथावदनुपूर्वशः ॥ यावदेव तु शक्यंते धार्यंते तावदेव हि ॥ ५९ ॥ इंद्रियाणि मनो बुद्धिं ध्यायन्नात्मनि यः सदा ॥ अर्धं तन्मात्रमपि चेच्छृणु यत्फलमाप्नुयात् ॥६०॥ मासेमासेऽश्वमेधेन यो यजेत शतं समाः ॥ तेन यत्प्राप्यते पुण्यं मात्रया तदवाप्नुयात् ॥ ६१ ॥ न तथा तपसोग्रेण न यज्ञैर्भूरिदक्षिणैः ॥ यत्फलं प्राप्यते सम्यङ्मात्रया तदवाप्नुयात् ॥ ६२ ॥ तत्र चैषा तु या मात्रा प्लुता नामोपदिश्यते ॥ एषा एव भवेत्कार्या गृहस्थानां तु योगिनाम् ॥ ६३ ॥ एषा चैव विशेषेण ऐश्वर्ये ह्यष्टलक्षणे ॥ अणिमाद्ये तु विज्ञया तस्माद्युंजीत तां द्विजाः ॥ ६४ ॥

एवं पूर्वोक्तप्रकारेण ज्ञानविशेषेण तत्तुरीयं पदं समुपास्यते उपासनविषयं भवतीत्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ यावच्छक्यं ते तावन्मनीषिभिरिति शेषः। धार्यंते इत्यन्वयः ॥ ५९ ॥ इंद्रियाणि मनोबुद्धिमपि अर्धं तन्मात्रं मकारार्धमात्रारूपं य आत्मनि सदा ध्यायंश्चेत्स यत्फलमाप्नुयात् तच्छृणु इत्यन्वयः ॥ ६० ॥ फलं कथयति—मासेमास इत्यादिना ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

“ वृक्षाग्रच्युतपादो यः स तदैव पतत्यधः ॥ तद्वत् ज्ञानवतो मुक्तिर्जायते निश्चिता खलु ” इति शिवगीतोक्तत्वात्तथा ‘ ज्ञानादेव हि कैवल्यम् ’ इति श्रुत्या योगोपि ज्ञानसाधनमतो ज्ञानमाहात्म्यं कथयति—एवमित्यादिना । एवं पूर्वोक्तप्रकारेण योगसंपन्नो य आत्मानं विद्यते जानाति स सर्वं विंदते प्राप्नोतीत्यर्थः ॥ ६५ ॥ पाशुपतैः पशुपतिप्रोक्तैरित्यर्थः ॥ ६६ ॥ योगयुक्तं ज्ञानं योगज्ञानं तस्मादवाप्नोतीत्यन्वयः ॥ ६७ ॥ अभूतो लिंगदेहशून्यः शाश्वतं पदं शिवपदं याति प्राप्नोतीत्यर्थः ॥ ६८ ॥ योगिकृत्यमुक्त्वा उपासकस्याप्यरिष्टदर्शनानंतरं कृत्यं कथयति—यथेत्यादिना ॥ ६९ ॥ ७० ॥ तस्माद्रुद्रनमस्कारस्यैव सर्वश्रैष्ठ्याद्योगी प्रत्यहं रुद्रावियुक्तः त्रिप्रवणं कायवाङ्मनोभिर्नम्रं

एवं हि योगसंयुक्तः शुचिर्दांतो जितेंद्रियः ॥ आत्मानं विद्यते यस्तु स सर्वं विंदते द्विजाः ॥ ६५ ॥ तस्मात्पाशुपतैर्योगैरात्मानं चिंतयेद्बुधः ॥ आत्मानं जानते ये तु शुचयस्ते न संशयः ॥ ६६ ॥ ऋचो यजूंषि सामानि वेदोपनिषदस्तथा ॥ योगज्ञानादवाप्नोति ब्राह्मणोऽध्यात्मचिंतकः ॥ ६७ ॥ सर्वदेवमयो भूत्वा अभूतः स तु जायते ॥ योनिसंक्रमणं त्यक्त्वा याति वै शाश्वतं पदम् ॥ ६८ ॥ यथा वृक्षात् फलं पक्वं पवनेन समीरितम् ॥ नमस्कारेण रुद्रस्य तथा पापं प्रणश्यति ॥ ६९ ॥ यत्र रुद्रनमस्कारः सर्वकर्मफलो ध्रुवः ॥ अन्यदेवनमस्कारान्न तत्फलमवाप्नुयात् ॥ ७० ॥ तस्मात्त्रिःप्रवणं योगी उपासीत महेश्वरम् ॥ दशविस्तारकं ब्रह्म तथा च ब्रह्मविस्तरैः ॥ ७१ ॥ एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् ॥ स याति शिवसायुज्यं समुद्धृत्य कुलत्रयम् ॥ ७२ ॥ अथवारिष्टमालोक्य मरणे समुपस्थिते ॥ अविमुक्तेश्वरं गत्वा वाराणस्यां तु शोधनम् ॥ ७३ ॥ येन केनापि वा देहं संत्यजेन्मुच्यते नरः ॥ श्रीपर्वते वा विप्रेंद्राः संत्यजेत्स्वतनुं नरः ॥ ७४ ॥ स याति शिवसायुज्यं नात्र कार्या विचारणा ॥ अविमुक्तं परं क्षेत्रं जंतूनां मुक्तिदं सदा ॥ ७५ ॥ सेवेत सततं धीमान् विशेषान्मरणांतिके ॥ ७६ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे अरिष्टकथनं नाम एकनवतितमोऽध्यायः ॥ ९१ ॥

यथा स्यात्तथा महेश्वरं शिवं ब्रह्म दशविस्तारकं दशेंद्रियविस्तृतिकारकं तथा तेन प्रकारेण ब्रह्मविस्तरैर्दशेंद्रियैश्च वा ब्रह्मभेदैः दशविस्तारकं चित्तिस्रुगित्यादिदशहोतृविस्तारकं तथा ब्रह्मविस्तरैर्दशहोत्रादिविधानैश्च उपासीतेत्यन्वयः । दशहोतृविधानं ब्राह्मणगीतायामश्वमेधपर्वणि विस्तरेणोक्तम् ॥ ७१ ॥ फलं निरूपयति—एवमिति ॥ ७२ ॥ योगोपासनाऽसमर्थस्यापि मुक्त्युपायं कथयति—अथवेत्यादिना ॥७३॥७४॥७५॥ मरणान्तिके मरणकाल इत्यर्थः ॥ ७६ ॥ योगज्ञानोपासा वाराणस्याश्च सेवनं सांब । मोचकमेतदंते [illegible] विशेषेण वै तथा ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायामेकनवतितमोऽध्यायः ॥ ९१ ॥

द्विनवतितमेऽध्याये वाराणस्यास्तु चाद्भुतः ॥ महिमा स्थानसहितपूजादिविधिरुच्यते ॥ ऋषयो वाराणसीमाहात्म्यमपृच्छन्नेवमित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ हैम
वत्या हिमवत्पुत्र्येत्यर्थः ॥ ५ ॥ अविमुक्तेश्वरं विश्वेश्वरेति ख्यातमित्यर्थः ॥ ६ ॥ ज्ञानान्मुक्तिर्मुख्या तत्कारणं च पाशुपतो योग इति तं प्रशंसति–वाराणसीत्यादिना । वारा
णस्यादिस्थानेषु यः यतिः संन्यासी भवेत्सोऽन्यजन्मनीति शेषः । पाशुपते योगे दिनमेकं यतिर्भवेदित्याग्रिमेणान्वयः ॥ ७ ॥ तस्मात्पूर्वोक्तकारणात्सर्वं परित्यज्य पाशुपतं व्रतं
चरेत् देवोद्याने शिवोद्याने वसेदित्याग्रिमेणान्वयः ॥ ८ ॥ उद्यानं कथयति–शर्व इत्यादिना । विमानं कामगप्रासादमित्यर्थः ॥ ९ ॥ तदा देवो मोदमानः परमेश्वरः शिवः

ऋषय ऊचुः ॥ एवं वाराणसी पुण्या यदि सूत महामते ॥ वक्तुमर्हसि चास्माकं तत्प्रभावं हि सांप्रतम् ॥ १ ॥ क्षेत्रस्यास्य च माहात्म्य मविमुक्तस्य शोभनम् ॥ विस्तरेण यथान्यायं श्रोतुं कौतूहलं हि नः ॥ २ ॥ सूत उवाच ॥ वक्ष्ये संक्षेपतः सम्यक् वाराणस्याः सुशोभ नम् ॥ अविमुक्तस्य माहात्म्यं यथाह भगवान् भवः ॥ ३ ॥ विस्तरेण मया वक्तुं ब्रह्मणा च महात्मना ॥ शक्यते नैव विप्रेंद्रा वर्षकोटि शतैरपि ॥ ४ ॥ देवः पुरा कृतोद्वाहः शंकरो नीललोहितः ॥ हिमवच्छिखराद्देव्या हैमवत्या गणेश्वरैः ॥५॥ वाराणसीमनुप्राप्य दर्शयामास शंकरः ॥ अविमुक्तेश्वरं लिंगं वासं तत्र चकार सः ॥ ६ ॥ वाराणसीकुरुक्षेत्रश्रीपर्वतमहालये ॥ तुंगेश्वरे च केदारे तत्स्थाने यो यतिर्भवेत् ॥ ७ ॥ योगे पाशुपते सम्यक् दिनमेकं यतिर्भवेत् ॥ तस्मात्सर्वं परित्यज्य चरेत्पाशुपतं व्रतम् ॥ ८ ॥ देवोद्याने वसेत्तत्र शर्वोद्यानमनु त्तमम् ॥ मनसा निर्ममे रुद्रो विमानं च सुशोभनम् ॥ ९ ॥ दर्शयामास च तदा देवोद्यानमनुत्तमम् ॥ हैमवत्याः स्वयं देवः सनंदी परमे श्वरः ॥ १० ॥ क्षेत्रस्यास्य च माहात्म्यमविमुक्तस्य शंकरः ॥ उक्तवान्परमेशानः पार्वत्याः प्रीतये भवः ॥ ११ ॥ प्रफुल्लनानाविधगुल्म शोभितं लताप्रतानादिमनोहरं बहिः ॥ विरूढपुष्पैः परितः प्रियंगुभिः सुपुष्पितैः कंटकितैश्च केतकैः ॥ १२ ॥ तमालगुल्मैर्निचितं सुगं धिभिर्निकामपुष्पैर्बकुलैश्च सर्वतः ॥ अशोकपुन्नागशतैः सुपुष्पितैर्द्विरेफमालाकुलपुष्पसंचयैः ॥ १३ ॥

अनुत्तमं देवोद्यानमानंदकाननं सनंदी शैलादिसहितः हैमवत्याः पार्वत्याः स्वयं दर्शयामासेत्यन्वयः ॥ १० ॥ ११ ॥ उद्यानं जगत्यादिछंदैर्वर्णयति–प्रफुल्लेत्यादिना । गुल्मैरप्र
कांडद्रुमैः "अप्रकांडे स्तंबगुल्मौ" इत्यमरः । लताप्रतानादिभिर्लताशाखाभिरित्यर्थः । प्रियंगुभिः फलिनीलताभिरित्यर्थः 'प्रियंगुः फलिनी फली' इत्यमरः ॥१२॥ तमालगुल्मैः
तमालस्तंबैरित्यर्थः ॥ १३ ॥

प्रमत्तदात्यूहैः कोकिलसंज्ञैरित्यर्थः ॥ १४ ॥ केकारुतैर्मयूरकूजितैरित्यर्थः ॥ १५ ॥ सहकारवृक्षैराम्रवृक्षैः ॥ १६ ॥ हारितकुलैस्तन्नामकपक्षिसमुदायैः 'हारितः पक्षिभेदे स्यात्' इति विश्वः ॥ १७ ॥ गंधकदंबकैर्मृगैः कस्तूरीमृगसमुदायैः मृगेंद्रनादाकुलमत्तमानसैरत एव क्वचित्क्वचिद्विलूनदर्भांकुरपुष्पसंचयामिति पूर्वस्थेनान्वयः ॥ १८ ॥ पंचदशाक्षरपादेन मालिनीवृत्तेन वर्णयति–विटपनिचयमिति ॥ १९ ॥ २० ॥ चतुर्दशाक्षरपादेन वसंततिलकावृत्तेन पारावतेति द्वाभ्यां वर्णयति–त्रिदशानां दिव्यकुलानि येषु तानि

क्वचित्प्रफुल्लाम्बुजरेणुभूषितैर्विहंगमैश्चानुकलप्रणादिभिः ॥ विनादितं सारसचक्रवाकैः प्रमत्तदात्यूहवरैश्च सर्वतः ॥१४॥ क्वचिच्च केकारुतनादितं शुभं क्वचिच्च कारंडवनादनादितम् ॥ क्वचिच्च मत्तालिकुलाकुलीकृतं मदाकुलाभिर्भ्रमरांगनादिभिः ॥ १५ ॥ निषेवितं चारुसुगंधिपुष्पकैः क्वचित्सुपुष्पैः सहकारवृक्षैः ॥ लतोपगूढैस्तिलकैश्च गूढं प्रगीतविद्याधरसिद्धचारणम् ॥ १६ ॥ प्रवृत्तनृत्ताप्सरोगणं प्रहृष्टनानाविधपक्षिसेवितम् ॥ प्रनृत्तहारीतकुलोपनादितं मृगेंद्रनादाकुलमत्तमानसैः ॥ १७ ॥ क्वचित्क्वचिद्गंधकदंबकैर्मृगैर्विलूनदर्भांकुरपुष्पसंचयम् ॥ प्रफुल्लनानाविधचारुपंकजैः सरस्तडागैरुपशोभितं क्वचित् ॥ १८ ॥ विटपनिचयलीनं नीलकंठाभिरामं मदमुदितविहंगं प्रातनादाभिरामम् ॥ कुसुमिततरुशाखालीनमत्तद्विरेफं नवकिसलयशोभाशोभितं प्रांशुशाखम् ॥ १९ ॥ क्वचिच्च दंतक्षतचारुवीरुधं क्वचिल्लतालिंगितचारुवृक्षकम् ॥ क्वचिद्विलासालसगामिनीभिर्निषेवितं किंपुरुषांगनाभिः ॥ २० ॥ पारावतध्वनिविकूजितचारुशृंगैरभ्रंकषैः सितमनोहरचारुरूपैः ॥ आकीर्णपुष्पनिकरप्रविभक्तहंसैर्विभ्राजितं त्रिदशदिव्यकुलैरनेकैः ॥ २१ ॥ फुल्लोत्पलांबुजवितानसहस्रयुक्तं तोयाशयैः समनुशोभितदेवमार्गम् ॥ मार्गांतराकलितपुष्पविचित्रपंक्तिसंबद्धगुल्मविटपैर्विविधैरुपेतम् ॥ २२ ॥ तुंगाग्रैर्नीलपुष्पैस्तबकभरनतप्रांशुशाखैरशोकैर्दोलाप्रांतांतलीनश्रुतिसुखजनकैर्भासितांतं मनोज्ञैः ॥ रात्रौ चंद्रस्य भासा कुसुमिततिलकैरेकतां संप्रयातं छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदूर्वांकुराग्रम् ॥ २३ ॥

त्रिदशदिव्यकुलानि तैरनेकैः पारावतध्वनिविकूजितचारुशृंगैर्विभ्राजितमित्यन्वयः । अभ्रंकषादीनि शृंगविशेषणानि ॥ २१ ॥ २२ ॥ एकविंशाक्षरपादेन स्रग्धरावृत्तेन द्वाभ्यां वर्णयति–तुंगाग्रैरित्यादिना । मनोज्ञैरशोकैर्भासितांतमित्यन्वयः । तुंगाग्रादीन्यशोकविशेषणानि ॥ २३ ॥

॥२४॥ त्रयोदशाक्षरपादेन प्रहर्षिणीवृत्तेन द्वाभ्यां वर्णयति—सारंगैरित्यादिना । हृष्टाभिः किन्नरांगनाभिः क्वचिद्वीणाभिः वल्लकीभिः सह मधुरगीतनृत्तेन कंठः सन्निधानं यस्मिन् तन्मधुरगीतनृत्तकंठं " कंठो गले सन्निधाने ध्वनौ मदनपादपे " इति विश्वः ॥ २५ ॥ २६ ॥ २७ ॥ वातेनापि ईरितं दर्शितं वा तत्स्पृष्टमपि तनुभृतां देहधारिणामपवर्गदात् मोक्षप्रदमित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ एकादशाक्षरपादेन भ्रमरविलसितवृत्तेन वर्णयति—पुन्नागेष्विति ॥ ३१ ॥ सकलभुवनभर्ता लोकनाथः शिवः तुहिनशिखरपुत्र्या

हंसानां पक्षवातप्रचलितकमलस्वच्छविस्तीर्णतोयं तोयानां तीरजातप्रचकितकदलीचाटुनृत्यन्मयूरम् ॥ मायूरैः पक्षचंद्रैः क्वचिदवनिगते रंजितक्ष्माप्रदेशं देशेदेशे विलीनप्रमुदितविलसन्मत्तहारीतवृंदम् ॥ २४॥ सारंगैः क्वचिदुपशोभितप्रदेशं प्रच्छन्नं कुसुमचयैः क्वचिद्विचित्रैः॥ हृष्टाभिः क्वचिदपि किन्नरांगनाभिर्वीणाभिः समधुरगीतनृत्तकंठम् ॥२५॥ संसृष्टैः क्वचिदुपलिप्तकीर्णपुष्पैरावासैः परिवृतपादपं मुनीनाम् ॥ आमूलात्फलनिचितैः क्वचिद्विशालैरुत्तुंगैः पनसमहीरुहैरुपेतम् ॥ २६॥ फुल्लातिमुक्तकलताग्रहनीतसिद्धसिद्धांगनाकनकनूपुररावरम्यम् ॥ रम्यं प्रियंगुतरुमंजरिसक्तभृंगं भृंगावलीकवलिताम्रकदंबपुष्पम् ॥ २७ ॥ पुष्पोत्करानिलविघूर्णितवारिरम्यं रम्यद्विरेफविनिपातितमंजुगुल्मम् ॥ गुल्मांतरप्रसभभ्रांतमृगीसमूहं वातेरितं तनुभृतामपवर्गदातृ ॥ २८ ॥ चंद्रांशुजालशबलैस्तिलकैर्मनोज्ञैः सिंदूरकुंकुमकुसुंभनिभैरशोकैः ॥ चामीकरद्युतिसमैरथ कर्णिकारैः पुष्पोत्करैरुपचितं सुविशालशाखैः ॥ २९ ॥ क्वचिदंजनचूर्णाभैः क्वचिद्विद्रुमसन्निभैः ॥ क्वचित्कांचनसंकाशैः पुष्पैराचितभूतलम् ॥ ३० ॥ पुन्नागेषु द्विजशतविरुतं रक्ताशोकस्तबकभरनतम् ॥ रम्योपांतक्लमहरभवनं फुल्लाब्जेषु भ्रमरविलसितम् ॥ ३१ ॥ सकलभुवनभर्ता लोकनाथस्तदानीं तुहिनशिखरपुत्र्या सार्धमिष्टैर्गणेशैः ॥ विविधतरुविशालं मत्तहृष्टान्नपुष्टैरुपवनमतिरम्यं दर्शयामास देव्याः ॥ ३२ ॥ पुष्पैर्वन्यैः शुभशुभतमैः कल्पितैर्दिव्यभूषैर्देवीं दिव्यामुपवनगतां भूषयामास शर्वः ॥ सा चाप्येनं तुहिनगिरिसुता शंकरं देवदेवं पुष्पैर्दिव्यैः शुभतरतमैर्भूषयामास भक्त्या ॥ ३३ ॥ संपूज्य पूज्यं त्रिदशेश्वराणां संप्रेक्ष्य चोद्यानमतीव रम्यम् ॥ गणेश्वरैर्नंदिमुखैश्च सार्धमुवाच देवं प्रणिपत्य देवी ॥३४ ॥

मत्तहृष्टान्नपुष्टैरिष्टैर्गणेशैः सार्द्धमतिरम्यमुपवनं देव्या दर्शयामासेत्यन्वयः ॥ ३२ ॥ सप्तदशाक्षरपादेन मंदाक्रांतावृत्तेन वनक्रीडां वर्णयति—पुष्पैरिति॥ ३३ ॥ एकादशाक्षरपादेन इंद्रवज्रावृत्तेन वर्णयति—संपूज्येति । अतीव रम्यमुद्यानं प्रेक्ष्य त्रिदशेश्वराणां पूज्यं देवं गणेश्वरैर्नंदिमुखैश्च सार्धं संपूज्य प्रणिपत्य च देव्युवाचेत्यन्वयः ॥ ३४ ॥

गौरीहरसंवादेन वाराणसीमाहात्म्यं वर्णयति—उद्यानमित्यादिना ॥३५॥ ३६ ॥ वदनांभोजमाघ्राय हसन् गिरिजां प्राहेत्यनेनात्यादरः सूच्यते ॥ ३७ ॥ ३८ ॥ नानालिंगधराः अनेकचिह्नधारका इत्यर्थः ' लिंगं चिह्नेऽनुमानेपि ' इति विश्वः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ कामं स्वच्छंदमित्यर्थः ॥ ४३ ॥ ४४ ॥ अविमुक्तसंज्ञाकारणं कथयति—

श्रीदेव्युवाच ॥ उद्यानं दर्शितं देव प्रभया परया युतम् ॥ क्षेत्रस्य च गुणान्सर्वान्पुनर्मे वक्तुमर्हसि ॥ ३५ ॥ अस्य क्षेत्रस्य माहात्म्यमविमुक्तस्य सर्वथा ॥ वक्तुमर्हसि देवेश देवदेव वृषध्वज ॥ ३६ ॥ सूत उवाच ॥ देव्यास्तद्वचनं श्रुत्वा देवदेवो वरप्रभुः ॥ आघ्राय वदनांभोजं तदाह गिरिजां हसन् ॥ ३७ ॥ श्रीभगवानुवाच ॥ इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम ॥ सर्वेषामेव जंतूनां हेतुर्मोक्षस्य सर्वदा ॥ ३८ ॥ अस्मिन्सिद्धाः सदा देवि मदीयं व्रतमास्थिताः ॥ नानालिंगधरा नित्यं मम लोकाभिकांक्षिणः ॥ ३९ ॥ अभ्यस्यंति परं योगं युक्तात्मानो जितेंद्रियाः ॥ नानावृक्षसमाकीर्णे नानाविहगशोभिते ॥४०॥ कमलोत्पलपुष्पाढ्यैः सरोभिः समलंकृते ॥ अप्सरोगणगंधर्वैः सदा संसेविते शुभे ॥ ४१ ॥ रोचते मे सदा वासो येन कार्येण तच्छृणु ॥ मन्मना मम भक्तश्च मयि नित्यार्पितक्रियः ॥ ४२ ॥ यथा मोक्षमवाप्नोति अन्यत्र न तथा क्वचित् ॥ कामं ह्यत्र मृतो देवि जंतुर्मोक्षाय कल्पते ॥४३॥ एतन्मम पुरं दिव्यं गुह्याद्गुह्यतमं महत् ॥ ब्रह्मादयो विजानंति ये च सिद्धा मुमुक्षवः ॥ ४४ ॥ अतः परमिदं क्षेत्रं परा चेयं गतिर्मम ॥ विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन ॥ ४५ ॥ मम क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥ नैमिषे च कुरुक्षेत्रे गंगाद्वारे च पुष्करे ॥४६॥ स्नानात्संसेवनाद्वापि न मोक्षः प्राप्यते यतः ॥ इह संप्राप्यते येन तत एतद्विशिष्यते ॥४७॥ प्रयागे वा भवेन्मोक्ष इह वा मत्परिग्रहात् ॥ प्रयागादपि तीर्थाग्र्यादविमुक्तमिदं शुभम्॥४८॥ धर्मस्योपनिषत्सत्यं मोक्षस्योपनिषच्छमः ॥ क्षेत्रतीर्थोपनिषदं न विदुर्बुधसत्तमाः ॥ ४९॥ कामं भुंजन्स्वपन् क्रीडन् कुर्वन् हि विविधाः क्रियाः ॥ अविमुक्ते त्यजेत्प्राणान् जंतुर्मोक्षाय कल्पते ॥ ५० ॥



विमुक्तमित्यादिना ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ तीर्थक्षेत्रोपनिषदमिमामिति शेषः । बुधसत्तमाः ऋषयोपि न विदुरित्यन्वयः ॥ ४९ ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ संवर्तेरतसंज्ञक ऋषिः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ क्षेत्रमाहात्म्य

कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम् ॥ न तु शक्रसहस्रत्वं स्वर्गे काशीपुरीं विना ॥५१॥ तस्मात्संसेवनीयं हि अविमुक्तं हि मुक्तये ॥ जैगीषव्यः परां सिद्धिं गतो यत्र महातपाः ॥ ५२ ॥ अस्य क्षेत्रस्य माहात्म्याद्भक्त्या च मम भावितः ॥ जैगीषव्यगुहा श्रेष्ठा योगिनां स्थानमिष्यते ॥ ५३ ॥ ध्यायंतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् ॥ कैवल्यं परमं याति देवानामपि दुर्लभम् ॥५४ ॥ अव्यक्तलिंगै र्मुनिभिः सर्वसिद्धांतवेदिभिः ॥ इह संप्राप्यते मोक्षो दुर्लभोऽन्यत्र कर्हिचित् ॥ ५५ ॥ तेभ्यश्चाहं प्रवक्ष्यामि योगैश्वर्यमनुत्तमम् ॥ आत्मन श्चैव सायुज्यमीप्सितं स्थानमेव च ॥ ५६ ॥ कुबेरोत्र मम क्षेत्रे मयि सर्वार्पितक्रियः ॥ क्षेत्रसंसेवनादेव गणेशत्वमवाप ह ॥ ५७ ॥ संवर्तो भविता यश्च सोपि भक्तो ममैव तु ॥ इहैवाराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम् ॥ ५८ ॥ पराशरसुतो योगी ऋषिर्व्यासो महातपाः ॥ मम भक्तो भविष्यश्च वेदसंस्थाप्रवर्तकः ॥ ५९ ॥ रंस्यते सोपि पद्माक्षि क्षेत्रेऽस्मिन्मुनिपुंगवः ॥ ब्रह्मा देवर्षिभिः सार्द्धं विष्णुर्वापि दिवा करः ॥ ६० ॥ देवराजस्तथा शक्रो येपि चान्ये दिवौकसः ॥ उपासते महात्मानः सर्वे मामिह सुव्रते ॥ ६१ ॥ अन्येपि योगिनो दिव्या श्छन्नरूपा महात्मनः ॥ अनन्यमनसो भूत्वा मामिहोपासते सदा ॥ ६२ ॥ विषयासक्तचित्तोपि त्यक्तधर्मरतिर्नरः ॥ इह क्षेत्रे मृतः सोपि संसारे न पुनर्भवेत् ॥ ६३ ॥ ये पुनर्निर्ममा धीराः सत्त्वस्था विजितेंद्रियाः ॥ व्रतिनश्च निरारंभाः सर्वे ते मयि भाविताः ॥ ६४ ॥ देवदेवं समासाद्य धीमंतः संगवर्जिताः ॥ गता इह परं मोक्षं प्रसादान्मम सुव्रते ॥ ६५ ॥ जन्मांतरसहस्रेषु यं न योगी समाप्नुयात् ॥ तमिहैव परं मोक्षं प्रसादान्मम सुव्रते ॥ ६६ ॥ गोप्रेक्षकमिदं क्षेत्रं ब्रह्मणा स्थापितं पुरा ॥ कैलासभवनं चात्र पश्य दिव्यं वरानने ॥ ६७ ॥ गोप्रेक्षक मथागम्य दृष्ट्वामामत्र मानवः ॥ न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥ ६८ ॥ कपिलाह्रदमित्येवं तथा वै ब्रह्मणा कृतम् ॥ गवांस्त न्यजतोयेन तीर्थं पुण्यतमं महत् ॥ ६९ ॥

मुक्त्वा स्थानमाहात्म्यं कथयति—गोप्रेक्षकमित्यादिना । अत्र ब्रह्मणा पुरा कैलासभवनं तत्संज्ञकालयं स्थापितमिदं गोप्रेक्षकं क्षेत्रं पश्येत्यन्वयः ॥ ६७ ॥ ६८ ॥ ६९ ॥

॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥७६॥७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ज्येष्ठस्थानं वर्णयति—उत्पल इत्यादिना । यौ दैत्यौ ब्रह्मणा पुरा स्त्रीवध्यौ कृताविति शेषः । अतः दर्पितौ त्वयैव रणे सावज्ञं कंदुकेनात्र निहताविन्यग्रिमेणान्वयः ॥ ८१ ॥ तस्य त्वत्कंदुकस्येदं देहमास्थितं स्थापितमित्यर्थः । तदुक्तं काशीखंडे "ततः परिणतिं



अत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः ॥ सान्निध्यं कृतवान् देवि सदाहं दृश्यते त्वया ॥ ७० ॥ भद्रतोयं च पश्येह ब्रह्मणा च कृतं ह्रदम् ॥ सर्वैर्देवैरहं देवि अस्मिन्देशे प्रसादितः ॥ ७१ ॥ गच्छोपशममीशोति उपशांतः शिवस्तथा ॥ अत्राहं ब्रह्मणानीय स्थापितः परमेष्ठिना ॥ ७२ ॥ ब्रह्मणा चापि संगृह्य विष्णुना स्थापितः पुनः ॥ ब्रह्मणापि ततो विष्णुः प्रोक्तः संविग्नचेतसा ॥ ७३ ॥ मयानीतमिदं लिंगं कस्मात्स्थापितवानसि ॥ तमुवाच पुनर्विष्णुर्ब्रह्माणं कुपिताननम् ॥ ७४ ॥ रुद्रे देवे ममात्यंतं परा भक्तिर्महत्तरा ॥ मयैव स्थापितं लिंगं तव नाम्ना भविष्यति ॥ ७५ ॥ हिरण्यगर्भ इत्येवं ततोत्राहं समास्थितः ॥ दृष्ट्वैनमपि देवेशं मम लोकं व्रजेन्नरः ॥ ७६ ॥ ततः पुनरपि ब्रह्मा मम लिंगमिदं शुभम् ॥ स्थापयामास विधिवद्भक्त्या परमया युतः ॥ ७७ ॥ स्वर्लीनेश्वर इत्येवमत्राहं स्वयमागतः ॥ प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ॥ ७८ ॥ अनन्या सा गतिस्तस्य योगिनां चैव या स्मृता ॥ अस्मिन्नपि मया देशे दैत्यो दैवतकंटकः ॥ ७९ ॥ व्याघ्ररूपं समास्थाय निहतो दर्पितो बली ॥ व्याघ्रेश्वर इति ख्यातो नित्यमत्राहमास्थितः ॥ ८० ॥ न पुनर्दुर्गतिं याति दृष्ट्वैनं व्याघ्रमीश्वरम् ॥ उत्पलो विदलश्चैव यौ दैत्यौ ब्रह्मणा पुरा ॥ ८१ ॥ स्त्रीवध्यौ दर्पितौ दृष्ट्वा त्वयैव निहतौ रणे ॥ सावज्ञं कंदुकेनात्र तस्येदं देहमास्थितम् ॥ ८२ ॥ आदावत्राहमागम्य प्रस्थितो गणपैः सह ॥ ज्येष्ठस्थानमिदं तस्मादेतन्मे पुण्यदर्शनम् ॥ ८३ ॥ देवैः समंतादेतानि लिंगानि स्थापितान्यतः ॥ दृष्ट्वापि नियतो मर्त्यो देहभेदे गणो भवेत् ॥ ८४ ॥ पित्रा ते शैलराजेन पुरा हिमवता स्वयम् ॥ मम प्रियहितं स्थानं ज्ञात्वा लिंगं प्रतिष्ठितम् ॥ ८५ ॥ शैलेश्वरमिति ख्यातं दृश्यतामिह चादरात् ॥ दृष्ट्वैतन्मनुजो देवि न दुर्गतिमतो व्रजेत् ॥ ८६ ॥ नद्येषा वरुणा देवि पुण्या पापप्रमोचनी ॥ क्षेत्रमेतदलंकृत्य जाह्नव्या सह संगता ॥ ८७ ॥

यातो लिंगरूपेण कंदुकः " इति ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥

॥ ८८ ॥ ८९ ॥ अग्रं श्रेष्ठस्थानमित्यर्थः ॥ ९० ॥ सुरासुरैः ख्यातः प्रकथितः ॥९१॥ जन्मप्राति जन्मलेशेपीत्यर्थः ॥ ९२ ॥ ९३ ॥ ९४ ॥ वंधशंकितः अतिसावधानः ॥ ९५ ॥ ९६ ॥ एनं जंबुकेश्वरम् ॥ ९७ ॥ ९८ ॥ चतुर्दिक्षु चतुःक्रोशमत एव योजनं प्रकीर्तितं क्षेत्रमेतन्मृत्युकालेऽमृतप्रदं विद्धीत्यग्रिमेणान्वयः ॥ ९९ ॥ १०० ॥

स्थापितं ब्रह्मणा चापि संगमे लिंगमुत्तमम् ॥ संगमेश्वरमित्येवं ख्यातं जगति दृश्यताम् ॥ ८८ ॥ संगमे देवनद्या हि यः स्नात्वा मनुजः शुचिः ॥ अर्चयेत्संगमेशानं तस्य जन्मभयं कुतः ॥ ८९ ॥ इदं मन्ये महाक्षेत्रं निवासो योगिनां परम् ॥ क्षेत्रमध्ये च यत्राहं स्वयं भूत्वाऽग्रमास्थितः ॥ ९० ॥ मध्यमेश्वरमित्येवं ख्यातः सर्वसुरासुरैः ॥ सिद्धानां स्थानमेतद्धि मदीयव्रतधारिणाम् ॥ ९१ ॥ योगिनां मोक्षलिप्सूनां ज्ञानयोगरतात्मनाम् ॥ दृष्ट्वैनं मध्यमेशानं जन्मप्राप्ति न शोचति ॥ ९२ ॥ स्थापितं लिंगमेतत्तु शुक्रेण भृगुसूनुना ॥ नाम्ना शुक्रेश्वरं नाम सर्वसिद्धामरार्चितम् ॥ ९३ ॥ दृष्ट्वैनं नियतः सद्यो मुच्यते सर्वकिल्बिषैः ॥ मृतश्च न पुनर्जंतुः संसारी तु भवेन्नरः ॥ ९४ ॥ पुरा जंबुकरूपेण असुरो देवकंटकः ॥ ब्रह्मणो हि वरं लब्ध्वा गोमायुर्बंधशंकितः ॥ ९५ ॥ निहतो हिमवत्पुत्रि जंबुकेशस्ततो ह्यहम् ॥ अद्यापि जगति ख्यातं सुरासुरनमस्कृतम् ॥ ९६ ॥ दृष्ट्वैनमपि देवेशं सर्वान्कामानवाप्नुयात् ॥ ग्रहैः शुक्रपुरोगैश्च एतानि स्थापितानि ह ॥ ९७ ॥ पश्य पुण्यानि लिंगानि सर्वकामप्रदानि तु ॥ एवमेतानि पुण्यानि मन्निवासानि पार्वति ॥ ९८ ॥ कथितानि मम क्षेत्रे गुह्यं चान्यदिदं शृणु ॥ चतुःक्रोशं चतुर्दिक्षु क्षेत्रमेतत्प्रकीर्तितम् ॥ ९९ ॥ योजनं विद्धि चार्वंगि मृत्युकालेऽमृतप्रदम् ॥ महालयगिरिस्थं मां केदारे च व्यवस्थितम् ॥ १०० ॥ गणत्वं लभते दृष्ट्वा ह्यस्मिन्मोक्षो ह्यवाप्यते ॥ गाणपत्यं लभेद्यस्माद्यतः सा मुक्तिरुत्तमा ॥ १ ॥ ततो महालयात्तस्मात्केदारान्मध्यमादपि ॥ स्मृतं पुण्यतमं क्षेत्रमविमुक्तं वरानने ॥ २ ॥ केदारं मध्यमं क्षेत्रस्थानं चैव महालयम् ॥ मम पुण्यानि भूर्लोके तेभ्यः श्रेष्ठतमं त्विदम् ॥ ३ ॥ यतः सृष्टास्त्विमे लोकास्ततः क्षेत्रमिदं शुभम् ॥ कदाचिन्न मया मुक्तमविमुक्तं ततोऽभवत् ॥ ४ ॥

॥ १ ॥ २ ॥ ३ ॥ यतः अस्मिन्नुपविश्येत्यर्थः । भवत् । सत्कारेण नामजातमात्राधीष्टे लिङ् ॥ ४ ॥

॥ ९ ॥ स्थानमहिमानमुपसंहरति–शैलेशमित्यादिना ॥ ६ ॥ ७ ॥ एवं पूर्वोक्तप्रकारं क्षेत्रादिमहिमानमुक्त्वेत्यर्थः ॥ ८ ॥ ज्वलितो देदीप्यमानः ॥ ९ ॥ ११०॥ बहवोऽसंख्य सिद्धाः एत्य महेश्वरं शतशः नमश्चक्रुः पुनर्योगेशं कृत्स्नशः निरीक्ष्य ध्यानयोगं ध्यानपरमात्मानं मन आस्थाय ईश्वरे शिवे लीयमाना इव तस्थुरित्यग्रिमेणान्वयः ॥ ११ ॥ ॥ १२ ॥ तेषामनुग्रहार्थमिति शेषः। परमां मूर्तिं बिभ्रत्प्रभुः पुरुषो विराड्रूपः कृत्स्नं जगदिहैकस्थं कर्तुमंन इव प्रलयकालसदृशास्थितो बभूवेति पूर्वस्यैरन्वयः ॥ १३ ॥ जग



अविमुक्तेश्वरं लिंगं मम दृष्ट्वेह मानवः ॥ सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥ ५ ॥ शैलेशं संगमेशं च स्वर्लीनं मध्यमेश्वरम् ॥ हिरण्यगर्भमीशानं गोप्रेक्षं वृषभध्वजम् ॥ ६ ॥ उपशांतं शिवं चैव ज्येष्ठस्थाननिवासिनम् ॥ शुक्रेश्वरं च विख्यातं व्याघ्रेशं जंबुकेश्वरम् ॥ ७ ॥ दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे ॥ सूत उवाच ॥ एवमुक्त्वा महादेवो दिशः सर्वा व्यलोकयत् ॥ ८ ॥ विलोक्य संस्थिते पश्चाद्देवदेवे महेश्वरे ॥ अकस्मादभवत्सर्वः स देशोऽज्वलितो यथा ॥ ९ ॥ ततः पाशुपताः सिद्धा भस्माभ्यंगासितप्रभाः ॥ माहेश्वरा महात्मानस्तथा वै नियतव्रताः ॥ १० ॥ बहवः शतशोभ्येत्य नमश्चक्रुर्महेश्वरम् ॥ पुनर्निरीक्ष्य योगेशं ध्यानयोगं च कृत्स्नशः ॥ ११ ॥ तस्थुरात्मानमास्थाय लीयमाना इवेश्वरे ॥ स्थितानां स तदा तेषां देवदेव उमापतिः ॥ १२ ॥ स बिभ्रत्परमां मूर्तिं बभूव पुरुषः प्रभुः ॥ कृत्स्नं जगदिहैकस्थं कर्तुमंत इव स्थितः ॥ १३ ॥ तस्य तां परमां मूर्तिमास्थितस्य जगत्प्रभोः ॥ न शशाक पुनर्द्रष्टुं हृष्टरोमा गिरींद्रजा ॥ १४ ॥ ततस्त्वदृष्टमाकारं बुध्वा सा प्रकृतिस्थितम् ॥ प्रकृतेर्मूर्तिमास्थाय योगेन परमेश्वरी ॥ १५ ॥ तं शशाक पुनर्द्रष्टुं हरस्य च महात्मनः ॥ ततस्ते लयमाधाय योगिनः पुरुषस्य तु ॥ १६ ॥ विविशुर्हृदयं सर्वे दग्धसंसारबीजिनः ॥ पंचाक्षरस्य वै बीजं संस्मरंतः सुशोभनम् ॥ १७ ॥ सर्वपापहरं दिव्यं पुरा चैव प्रकाशितम् ॥ नीललोहितमूर्तिस्थं पुनश्चक्रे वपुः शुभम् ॥ १८ ॥ तं दृष्ट्वा शैलजा प्राह हृष्टसर्वतनूरुहा ॥ स्तुवती चरणौ नत्वा क इमे भगवन्निति ॥ १९ ॥

त्प्रभोः परमां मूर्तिमास्थितस्य तस्य तां गिरींद्रजा पुनर्द्रष्टुं न शशाकेत्यन्वयः ॥ १४ ॥ परमेश्वरी योगेन प्रकृतेः रूपमास्थाय तं पुरुषरूपं शिवं पुनर्द्रष्टुं शशाकेत्यग्रिमेणान्वयः ॥ १५ ॥ ततस्ते योगिनो हरस्य लयं लक्ष्यमाधाय दग्धसंसारबीजिनः दग्धलिंगदेहाः पुरुषस्य सर्वे हृदयं विविशुरित्यग्रिमेणान्वयः ॥ १६ ॥ १७ ॥ पुरा पंचाशीत्यध्याये प्रकाशितं तमित्यादिदर्शितमित्यर्थः। पुनः शिव इति शेषः। नीललोहितमूर्तिस्थं शुभं सौम्यं वपुश्चक्रे इत्यन्वयः ॥ १८ ॥ इमे त्वच्छरीरं प्रविष्टा इत्यर्थः ॥ १९ ॥

॥ १२० ॥ भामिनि दक्षक्रोधेन त्यक्तदेहाइत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तां भागीरथीं सर्वतोऽभ्येत्य ये भजंते तान्वरानने शृणिवत्यन्वयः ॥ २७॥

तामुवाच सुरश्रेष्ठस्तदा देवीं गिरींद्रजाम् ॥ श्रीभगवानुवाच ॥ मदीयं व्रतमाश्रित्य भक्तिमद्भिर्द्विजोत्तमैः ॥१२० ॥ यैर्यैर्योगा इहाभ्यस्ता स्तेषामेकेन जन्मना ॥ क्षेत्रस्यास्य प्रभावेन भक्त्या च मम भामिनि ॥ २१ ॥ अनुग्रहो मया ह्येवं क्रियते मूर्तितः स्वयम् ॥ तस्मा देतन्महत्क्षेत्रं ब्रह्माद्यैः सेवितं तथा ॥ २२ ॥ श्रुतिमद्भिश्च विप्रेंद्रैः संसिद्धैश्च तपस्विभिः ॥ प्रतिमासं तथाष्टम्यां प्रतिमासं चतुर्दशीम् ॥ २३ ॥ उभयोः पक्षयोर्देवि वाराणस्यामुपास्यते ॥ शशिभानूपरागे च कार्तिक्यां च विशेषतः ॥२४ ॥ सर्वपर्वसु पुण्येषु विषुवेष्वयनेषु च ॥ पृथिव्यां सर्वतीर्थानि वाराणस्यां तु जाह्नवीम् ॥ २५ ॥ उत्तरप्रवहां पुण्यां मम मौलिविनिःसृताम् ॥ पितुस्ते गिरिराजस्य शुभां हिमवतः सुताम् ॥ २६ ॥ पुण्यस्थानास्थितां पुण्यां पुण्यदिक्प्रवहां सदा ॥ भजंते सर्वतोऽभ्येत्य ये ताञ्छृणु वरानने ॥ २७ ॥ संनिहत्य कुरुक्षेत्रं सार्धं तीर्थशतैस्तथा ॥ पुष्करं निमिषं चैव प्रयागं च पृथूदकम् ॥२८॥ द्रुमक्षेत्रं कुरुक्षेत्रं नैमिषं तीर्थसंयुतम् ॥ क्षेत्राणि सर्वतो देवि देवता ऋषयस्तथा ॥ २९ ॥ संध्या च ऋतवश्चैव सर्वा नद्यः सरांसि च ॥ समुद्राः सप्त चैवात्र देवतीर्थानि कृत्स्नशः ॥ १३० ॥ भागीरथीं समेष्यंति सर्वपर्वसु सुव्रते ॥ अविमुक्तेश्वरं दृष्ट्वा दृष्ट्वा चैव त्रिविष्टपम् ॥ ३१ ॥ कालभैरवमासाद्य धूतपापानि सर्वशः ॥ भवंति हि सुरेशानि सर्वपर्वसु पर्वसु ॥ ३२ ॥ पृथिव्यां यानि पुण्यानि महांत्यायतनानि च ॥ प्रविशंति सदाभ्येत्य पुण्यं पर्वसुपर्वसु ॥ अविमुक्तं क्षेत्रवरं महापापनिबर्हणम् ॥ ३३ ॥ केदारे चैव यल्लिंगं यच्च लिंगं महालये ॥ ३४॥ मध्यमेश्वरसंज्ञं च तथा पाशुपतेश्वरम् ॥ शंकुकर्णेश्वरं चैव गोकर्णौ च तथा ह्युभौ ॥३५॥ द्रुमचंडेश्वरं नाम भद्रेश्वरमनुत्तमम् ॥ स्थानेश्वरं तथैकाग्रं कालेश्वरमजेश्वरम् ॥३६॥ भैरवेश्वरमीशानं तथोंकारकसंज्ञितम् ॥ अमरेशं महाकालं ज्योतिषं भस्मगात्रकम् ॥३७॥ यानि चान्यानि पुण्यानि स्थानानि मम भूतले ॥ अष्टषष्टिसमाख्यानि रूढान्यन्यानि कृत्स्नशः ॥ ३८ ॥ तानि सर्वाण्यशेषाणि वाराणस्यां विशंति माम् ॥ सर्वपर्वसु पुण्येषु गुह्यं चैतदुदाहृतम् ॥ ३९ ॥

कुरुक्षेत्रादयः संनिहत्य एकीभूय भागीरथीं सर्वपर्वसु समेष्यंतीति चतुर्थेनान्वयः ॥ २८ ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३॥ ३४ ॥ ३५ ॥३६॥ ३७ ॥ ३८॥३९॥

तेन सर्वतीर्थक्षेत्रनिवासेनेह काश्यां मृतो जंतुः दिव्यामृतं पदं लभत इत्यन्वयः । मृतिफलमुक्त्वा गंगास्नानविश्वेशदर्शनफलं कथयति—स्नानस्येत्यादिना । मया दृष्टेन मद्दर्शनेनेत्यर्थः ॥ १४० ॥ शतसहस्रशः इष्टैः सर्वयज्ञफलैस्तुल्यं समफलं सद्य एव समाप्नोतीत्यन्वयः ॥ ४१ ॥ सर्वायतनमुख्यानि तेभ्य इति शेषः । मयोदितं मदुक्तं वाराणसीक्षेत्रं परात्परतरमिति देवि बुध्यस्वेत्यन्वयः ॥ ४२ ॥ अविमुक्तसंज्ञायाः अन्यार्थं कथयति—अविशब्देनेति ॥ ४३ ॥ इत्युक्त्वा पूर्वोक्तप्रकारं माहात्म्यं कथयित्वेत्यर्थः ॥ ४४ ॥

तेनेह लभते जंतुर्मृतो दिव्यामृतं पदम् ॥ स्नानस्य चैव गंगायां दृष्टेन च मया शुभे ॥ १४० ॥ सर्वयज्ञफलैस्तुल्यमिष्टैः शतसहस्रशः ॥ सद्य एव समाप्नोति किं ततः परमाद्भुतम् ॥ ४१ ॥ सर्वायतनमुख्यानि दिवि भूमौ गिरिष्वपि ॥ परात्परतरं देवि बुध्यस्वेति मयोदितम् ॥ ४२ ॥ अविशब्देन पापस्तु वेदोक्तः कथ्यते द्विजैः ॥ तेन मुक्तं मया जुष्टमविमुक्तमतोच्यते ॥ ४३ ॥ इत्युक्त्वा भगवान् रुद्रः सर्वलोकमहेश्वरः ॥ सुदृष्टं कुरु देवेशि अविमुक्तं गृहं मम ॥ ४४ ॥ इत्युक्त्वा भगवान्देवस्तया सार्धमुमापतिः ॥ दर्शयामास भगवान् श्रीपर्वतमनुत्तमम् ॥ ४५ ॥अविमुक्तेश्वरे नित्यमवसच्च सदा तया ॥ सर्वगत्वाच्च सर्वत्वात्सर्वात्मा सदसन्मयः ॥ ४६ ॥ श्रीपर्वतमनुप्राप्य देव्या देवेश्वरो हरः ॥ क्षेत्राणि दर्शयामास सर्वभूतपतिर्भवः ॥४७॥ कुण्डिप्रभे च परमं दिव्यं वैश्रवणेश्वरम् ॥ आशालिंगं च देवेशं दिव्यं यच्च बिलेश्वरम् ॥४८ ॥ रामेश्वरं च परमं विष्णुना यत्प्रतिष्ठितम् ॥ दक्षिणद्वारपार्श्वे तु कुंडलेश्वरमीश्वरम् ॥४९॥ पूर्वद्वारसमीपस्थं त्रिपुरांतकमुत्तमम् ॥ विवृद्धं गिरिणा सार्धं देवदेवनमस्कृतम् ॥ ५० ॥ मध्यमेश्वरमित्युक्तं त्रिषु लोकेषु विश्रुतम् ॥ अमरेश्वरं च वरदं देवैः पूर्वं प्रतिष्ठितम् ॥ ५१ ॥ गोचर्मेश्वरमीशानं तथेंद्रेश्वरमद्भुतम् ॥ कर्मेश्वरं च विपुलं कार्यार्थं ब्रह्मणा कृतम् ॥ ५२ ॥ श्रीमत्सिद्धवटं चैव सदावासो ममाव्यये ॥ अजेन निर्मितं दिव्यं साक्षादजबिलं शुभम् ॥ ५३ ॥ तत्रैव पादुके दिव्ये मदीये च बिलेश्वरे ॥ तत्र शृंगाटकाकारं शृंगाटाचलमध्यमे ॥ ५४ ॥ शृंगाटकेश्वरं नाम श्रीदेव्या तु प्रतिष्ठितम् ॥ मल्लिकार्जुनकं चैव मम वासमिदं शुभम् ॥ ५५ ॥

तया देव्या सार्धमिति पूर्वोक्तमुक्त्वा श्रीपर्वतं दर्शयामासेत्यन्वयः ॥ ४५ ॥ ४६ ॥ ४७ ॥ देव्याः दर्शितान्यन्यानि क्षेत्राणि क्रमशः कथयति—कुंडिप्रभमित्यादिना ॥ ४८ ॥ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ शृंगाटाचलमध्यमे मध्यशृंगे शृंगाटकाकारं त्रिकोणं शृंगाटकेश्वरं नाम श्रीदेव्या लक्ष्म्या प्रतिष्ठितमित्यग्रिमेणान्वयः ॥५४–५५॥

पर्याये युगादिपरिवर्त इत्यर्थः । वैशाखं स्कंदस्थापितमित्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ इति पूर्वोक्तप्रकारमुक्त्वा तद्गृहे रुद्र इति शेषः । अतिष्ठत् इति हेतोरलंगृहं स्मृतमित्यन्वयः ॥ १६० ॥ ६१ ॥ नंदाद्यैस्तत्प्रभृतिगणैः ॥ ६२ ॥ ६३ ॥ तत्कायोपरि पर्वतरूपदेह इत्यर्थः ॥ ६४ ॥ ब्रह्मपुरस्तान्मुनिभिः ब्रह्मादिऋषिभिः सह मया

रजेश्वरं च पर्याये रजसा सुप्रतिष्ठितम् ॥ गजेश्वरं च वैशाखं कपोतेश्वरमव्ययम् ॥ ५६ ॥ कोटीश्वरं महातीर्थं रुद्रकोटिगणैः पुरा ॥ सेवितं देवि पश्याद्य सर्वस्मादधिकं शुभम् ॥ ५७॥ द्विदेवकुलसंज्ञं च ब्रह्मणा दक्षिणे शुभम् ॥ उत्तरे स्थापितं चैव विष्णुना चैव शैलजम् ॥ ५८ ॥ महाप्रमाणलिंगं च मया पूर्वं प्रतिष्ठितम् ॥ पश्चिमे पर्वते पश्य ब्रह्मेश्वरमलेश्वरम् ॥ ५९ ॥ अलंकृतं त्वया ब्रह्मन् पुरस्तान्मुनिभिः सह ॥ इत्युक्त्वा तद्गृहे तिष्ठदलंगृहमिति स्मृतम् ॥ १६० ॥ तत्रापि तीर्थं तीर्थज्ञे व्योमलिंगं च पश्य मे ॥ कर्दमेश्वरमेतद्धि स्कंदेनैव प्रतिष्ठितम् ॥ ६१ ॥ गोमंडलेश्वरं चैव नंदाद्यैः सुप्रतिष्ठितम् ॥ देवैः सर्वैस्तु शक्राद्यैः स्थापितानि वरानने ॥ ६२ ॥ श्रीमद्देव हृदप्रांते स्थानानीमानि पश्य मे ॥ तथा हारपुरे देवि तव हारं निपातितं ॥ ६३ ॥ त्वया हिताय जगतां हारकुंडमिदं कृतम् ॥ शिवरुद्रपुरे चैव तत्कायोपरि सुव्रते ॥ ६४ ॥ तत्र पित्रा सुशैलेन स्थापितं त्वचलेश्वरम् ॥ अलंकृतं मया ब्रह्मपुरस्तान्मुनिभिः सह ॥ ६५ ॥ चंडिकेश्वरकं देवि चंडिकेशा तवात्मजा ॥ चंडिकानिर्मितं स्थानमंबिकातीर्थमुत्तमम् ॥ ६६ ॥ रुचिकेश्वरकं चैव धारेषा कपिला शुभा॥ एतेषु देवि स्थानेषु तीर्थेषु विविधेषु च ॥ ६७ ॥ पूजयन्मां सदा भक्त्या मया सार्धं हि मोदते ॥ श्रीशैले संत्यजेद्देहं ब्राह्मणो दग्धकिल्विषः ॥ ६८ ॥ मुच्यते नात्र संदेहो ह्यविमुक्ते यथा शुभम् ॥ महास्नानं च यः कुर्याद्घृतेन विधिनैव तु ॥६९॥ स याति मम सायुज्यं स्थानेष्वेतेषु सुव्रते ॥ स्नानं पलशतं ज्ञेयमभ्यंगं पंचविंशति ॥ १७० ॥ पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितम् ॥ स्नाप्य लिंगं मदीयं तु गव्येनैव घृतेन च ॥ ७१ ॥ विशोध्य सर्वद्रव्यैस्तु वारिभिरभिषिंचति ॥ संमार्ज्य शतयज्ञानां स्नानेन प्रयुतं तथा ॥ ७२ ॥ पूजया शतसाहस्रमनंतं गीतवादिनाम् ॥ महास्नाने प्रसक्ते तु स्नानमष्टगुणं स्मृतम् ॥ ७३ ॥

अलंकृतं शोभितमित्यर्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ पलं कर्षचतुष्टयरूपम् ॥७०॥ मदीयं लिंगं गव्येनैव घृतेन स्नाप्य सर्वद्रव्यैः शर्करादिभिरभिषिंचति स मम सायुज्यं यातीत्यनुषंगमादायाग्रिमेणान्वयः ॥ ७१ ॥ संमार्ज्य लिंगशोधनेन शतयज्ञानां फलमिति शेषः । स्नानेन प्रयुतं लक्षयज्ञफलं लभत इति शेषः ॥ ७२ ॥ ७३ ॥

शतसाहस्रं लक्षयज्ञफलं गीतेन वदंति स्तुवंति तच्छीलाः गीतवादिनस्तेषामनंतमसंख्ययज्ञफलं भवतीति शेषः । महास्नाने पूर्वोक्तद्विसहस्रपलवृतस्नाने प्रसक्ते कृते तु गंधतोयेन वा केवलेन जलेनैव भक्तितः अष्टगुणं द्विसहस्रपलाष्टगुणितेन यथा स्यात्तथा स्नानं तत्सर्वं महास्नानीयशर्कराद्यनुलेपनं पंचविंशतपलेन वै स्मृतमित्यग्रिमेणान्वयः॥७४॥ शमीपुष्पं बिल्वपत्रं च पत्रादि सर्वं पंकजं कमलम् अन्यानि तत्तत्कालोद्भवपुष्पाणि च विधिना शास्त्रोक्तमार्गेण समर्पयेदिति शेषः । बिल्वपत्रं न संत्यजेद्दलाभे पूर्वसमर्पितमपि प्रोक्ष्य गृह्णीयादित्यर्थः ॥ ७५ ॥ महादेवं चतुर्द्रोणैर्वाष्टद्रोणैस्तत्परिमिततंडुलादिधान्यैरर्चयेदिति शेषः । अष्टद्रोणैर्वा दशद्रोणैस्तत्परिमिततंडुलादिभिर्नैवेद्यं कुर्यादिति शेषः । द्रोणः

जलेन केवलेनैव गंधतोयेन भक्तितः ॥ अनुलेपनं तु तत्सर्वं पंचविंशत्पलेन वै ॥ ७४ ॥ शमीपुष्पं च विधिना बिल्वपत्रं च पंकजम् ॥ अन्यान्यपि च पुष्पाणि बिल्वपत्रं न संत्यजेत् ॥७५॥ चतुर्द्रोणैर्महादेवमष्टद्रोणैरथापि वा ॥ दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा ॥७६॥ शतद्रोणसमं पुण्यमाढकेपि विधीयते ॥ वित्तहीनस्य विप्रस्य नात्र कार्या विचारणा ॥ ७७ ॥ भेरीमृदंगमुरजतिमिरापटहादिभिः ॥ वादित्रैर्विविधैश्चान्यैर्निनादैर्विविधैरपि ॥७८॥ जागरं कारयेद्यस्तु प्रार्थयेच्च यथाक्रमम् ॥ स भृत्यपुत्रदारैश्च तथा संबंधिबान्धवैः ॥७९॥ सार्धं प्रदक्षिणं कृत्वा प्रार्थयेल्लिंगमुत्तमम् ॥ द्रव्यहीनं क्रियाहीनं श्रद्धाहीनं सुरेश्वर ॥ ८० ॥ कृतं वा न कृतं वापि क्षंतुमर्हसि शंकर ॥ इत्युक्त्वा वै जपेद्रुद्रं त्वरितं शांतिमेव च ॥८१॥ जपित्वैवं महाबीजं तथा पंचाक्षरस्य वै ॥ स एवं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ॥ ८२ ॥ तत्फलं समवाप्नोति वाराणस्यां यथा मृतः॥ तथैव मम सायुज्यं लभते नात्र संशयः ॥ ८३ ॥ मत्प्रियार्थमिदं कार्यं मद्भक्तैर्विधिपूर्वकम् ॥ ये न कुर्वंति ते भक्ता न भवंति न संशयः ॥ ८४ ॥ सूत उवाच ॥ निशम्य वचनं देवी गत्वा वाराणसीं पुरीम् ॥ अविमुक्तेश्वरं लिंगं पयसा च घृतेन च ॥ ८५ ॥ अर्चयामास देवेशं रुद्रं भुवननायकम् ॥ अविमुक्ते च तपसा मंदरस्य महात्मनः ॥ ८६ ॥ कल्पयामास वै क्षेत्रं मंदरे चारुकंदरे ॥ तत्रांधकं महादैत्यं हिरण्याक्षसुतं प्रभुः ॥ ८७ ॥ अनुगृह्य गणत्वं च प्रापयामास लीलया ॥ एतद्वः कथितं सर्वं कथासर्वस्वमादरात् ॥ ८८ ॥

षोडशप्रस्थरूपो ज्ञेयः ॥७६॥ अशक्तपक्षं कथयति–शतद्रोणेति । आढके चतुःप्रस्थमित इत्यर्थः ॥७७॥ ७८॥ जागरप्रदक्षिणाप्रार्थनादिविधिं कथयति–जागरमित्यादिना ॥ ॥ ७९॥१८०॥८१॥ पूजादिकारिणः फलं कथयति–स एवमित्यादिना ॥ ८२ ॥ ८३ ॥ पूजादिविधेरावश्यत्वं कथयति–मत्प्रियार्थमिति ॥ ८४ ॥ सूतः शिवसंवादमुक्त्वाग्रिमवृत्तं कथयति–निशम्येत्यादिना ॥ ८५ ॥ अविमुक्ते काश्यां मंदरस्य तत्संज्ञकपर्वतस्येत्यर्थः ॥ ८६ ॥ ८७ ॥ ८८ ॥

अध्यायफलं कथयति–य इत्यादिना ॥८९॥ स मानवः सर्वयज्ञस्य फलं प्राप्नोतीत्येवेत्यन्वयः ॥१९०॥ काश्यां स्नात्वान्वहं वै सुरतटिनिजले ध्वस्तपापौघसंघो विश्वेशं देवमीड्यं
त्वदुदितविधिना पूजयित्वा च भक्त्या ॥ छित्वाहं मोहजालं बहुयुगविततं शंकरे न्यस्तचित्तो भूयासं शैवयोगे यतिरिति कृपया सांब याचे विनम्रः ॥ इति श्रीलिंगमहापुराणे
शिवतोषिण्यां टीकायां द्विनवतितमोऽध्यायः ॥ ९२ ॥ त्रिनवतितमेऽध्याये ऽंधकस्यामरगणिगः ॥ निग्रहो वरलाभश्च गाणपत्यं प्रकीर्त्यते ॥ ऋषयोंऽधकवृत्तमपृच्छन्–अंधक

यः पठेच्छृणुयाद्वापि क्षेत्रमाहात्म्यमुत्तमम् ॥ सर्वक्षेत्रेषु यत्पुण्यं तत्सर्वं सहसा लभेत् ॥८९ ॥ श्रावयेद्वा द्विजान्सर्वान् कृतशौचान् जितें-
द्रियान् ॥ स एव सर्वयज्ञस्य फलं प्राप्नोति मानवः ॥ १९० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे वाराणसीश्रीशैलमाहात्म्यकथनं नाम
द्विनवतितमोऽध्यायः ॥ ९२ ॥ ऋषय ऊचुः ॥ अंधको नाम दैत्येंद्रो मंदरे चारुकंदरे ॥ दमितस्तु कथं लेभे गाणपत्यं महेश्वरात् ॥१॥
वक्तुमर्हसि चास्माकं यथावृत्तं यथाश्रुतम् ॥ सूत उवाच ॥ अंधकानुग्रहं चैव मंदरे शोषणं तथा ॥ २ ॥ वरलाभमशेषं च प्रवक्ष्यामि
समासतः ॥ हिरण्याक्षस्य तनयो हिरण्यनयनोपमः ॥ ३ ॥ पुरांधक इति ख्यातस्तपसा लब्धविक्रमः ॥ प्रसादाद्ब्रह्मणः साक्षादवध्य-
त्वमवाप्य च ॥ ४ ॥ त्रैलोक्यमखिलं भुक्त्वा जित्वा चेंद्रपुरं पुरा ॥ लीलया चाप्रयत्नेन त्रासयामास वासवम् ॥ ५ ॥ बाधितास्ताडिता
बद्धाः पातितास्तेन ते सुराः ॥ विविशुर्मंदरं भीता नारायणपुरोगमाः ॥ ६ ॥ एवं संपीड्य वै देवानंधकोपि महासुरः ॥ यदृच्छया गिरिं
प्राप्तो मंदरं चारुकंदरम् ॥ ७ ॥ ततस्ते समस्ताः सुरेंद्राः समाख्याः सुरेशं महेशं पुरेत्याहुरेवम् ॥ द्रुतं चाल्पवीर्यप्रभिन्नांगभिन्ना वयं
दैत्यराजस्य शस्त्रैर्निकृत्ताः ॥ ८ ॥ इतीदमखिलं श्रुत्वा दैत्यागममनौपमम् ॥ गणेश्वरैश्च भगवानंधकाभिमुखं ययौ॥ ९ ॥ तत्रेंद्रपद्मोद्भव
विष्णुमुख्याः सुरेश्वरा विप्रवराश्च सर्वे ॥ जयेति वाचा भगवंतमूचुः किरीटबद्धांजलयः समंतात् ॥ १० ॥ अथाशेषासुरांस्तस्य कोटि
कोटिशतैस्ततः ॥ भस्मीकृत्य महादेवो निर्बिभेदांधकं तदा ॥ ११ ॥

इत्यादिना । अंधकस्तत्संज्ञो नाम प्रसिद्ध इत्यर्थः ॥ १ ॥ २ ॥ हिरण्यनयनोपमः पितृसदृशः ॥३॥४॥५॥ नारायणपुरोगमाः विष्णुपुरस्सरा इत्यर्थः ॥६॥७॥८॥९॥१०॥
अथ जयशब्दश्रवणानंतरं महादेवः कोटिकोटिशतैरसंख्यैर्गणैः सह तस्यांधकस्याशेषासुरान् ततः शूलेन भस्मीकृत्य तदा तस्मिन्नेव काले अंधकं निर्बिभेदेत्यन्वयः ॥ ११ ॥

शूलिना शिवेन शूलेन प्रोतमत एव दग्धकल्मषकंचुकमंधकं दृष्ट्वा पितामहो ब्रह्मा ईशं प्रणम्य ननादेत्यन्वयः ॥ १२ ॥ तन्नादश्रवणाद्ब्रह्मनादश्रवणादित्यर्थः ॥ १३ ॥ ॥ १४ ॥ १५ ॥ जन्मांतरे पूर्वजन्मनीत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ एवं पूर्वोक्तशिवमाहात्म्यम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ हे ईश प्रसीद ते वरो देय श्चेत्त्वयि भक्तिरस्त्विति शेषः ॥ २४ ॥ २५ ॥ अवरोप्य शूलादुत्तार्येत्यर्थः ॥ २६ ॥ युद्धाय खलु यं प्राप्तो ह्यंधकस्तवनादिभोः । गाणपत्यं परं प्राप घृणाब्धितमुपा

शूलेन शूलिना प्रोतं दग्धकल्मषकंचुकम् ॥ दृष्ट्वांधकं ननादेशं प्रणम्य स पितामहः ॥ १२ ॥ तन्नादश्रवणान्नेदुर्देवा देवं प्रणम्य तम् ॥ ननृतुर्मुनयः सर्वे मुमुदुर्गणपुंगवाः ॥ १३ ॥ ससृजुः पुष्पवर्षाणि देवाः शंभोस्तदोपरि ॥ त्रैलोक्यमखिलं हर्षान्ननंद च ननाद च ॥१४॥ दग्धोग्निना च शूलेन प्रोतः प्रेत इवांधकः ॥ सात्त्विकं भावमास्थाय चिंतयामास चेतसा ॥ १५ ॥ जन्मांतरेपि देवेन दग्धो यस्माच्छिवेन वै ॥ आराधितो मया शंभुः पुरा साक्षान्महेश्वरः ॥ १६ ॥ तस्मादेतन्मया लब्धमन्यथा नोपपद्यते ॥ यः स्मरेन्मनसा रुद्रं प्राणांते सकृदेव वा ॥ १७ ॥ स याति शिवसायुज्यं किं पुनर्बहुशः स्मरन् ॥ ब्रह्मा च भगवान्विष्णुः सर्वे देवाः सवासवाः ॥ १८ ॥ शरणं प्राप्य तिष्ठंति तमेव शरणं व्रजेत् ॥ एवं संचिंत्य तुष्टात्मा सोंधकश्चांधकार्दनम् ॥ १९ ॥ सगणं शिवमीशानमस्तुवत्पुण्यगौरवात् ॥ प्रार्थितस्तेन भगवान् परमार्तिहरो हरः॥२०॥हिरण्यनेत्रतनयं शूलाग्रस्थं सुरेश्वरः ॥ प्रोवाच दानवं प्रेक्ष्य घृणया नीललोहितः ॥ २१ ॥ तुष्टोस्मि वत्स भद्रं ते कामं किं करवाणि ते ॥ वरान्वरय दैत्येंद्र वरदोहं तवांधक ॥२२॥ श्रुत्वा वाक्यं तदा शंभोर्हिरण्यनयनात्मजः ॥ हर्षगद्गदया वाचा प्रोवाचेदं महेश्वरम् ॥ २३ ॥ भगवन्देवदेवेश भक्तार्तिहर शंकर ॥ त्वयि भक्तिः प्रसीदेश यदि देयो वरश्च मे ॥ २४ ॥ श्रुत्वा भवोपि वचनमंधकस्य महात्मनः ॥ प्रददौ दुर्लभां श्रद्धां दैत्येंद्राय महाद्युतिः ॥ २५ ॥ गाणपत्यं च दैत्याय प्रददौ चावरोप्य तम् ॥ प्रणेमुस्तं सुरेंद्राद्या गाणपत्ये प्रतिष्ठितम् ॥ २६ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे अंधकगाणपत्यात्मको नाम त्रिनवतितमोध्यायः ॥ ९३ ॥ ऋषय ऊचुः ॥ कथमस्य पिता दैत्यो हिरण्याक्षः सुदारुणः ॥ विष्णुना सूदितो विष्णुर्वाराहत्वं कथं गतः ॥ १ ॥

स्महे ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिनवतितमोऽध्यायः ॥ ९३ ॥ चतुर्नवतिसंख्याके हिरण्याक्षवधस्तथा ॥ धरोद्धारो वराहस्य प्रोक्तो दंष्ट्राग्रहश्च वै ॥ ऋषयो हिरण्याक्षवधादिवृत्तमपृच्छन्—कथमित्यादिना ॥ १ ॥

॥ २ ॥ ३ ॥ धरणीं रसातलं नीत्वा वंदीं कारागृहगतां चक्रे इत्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ लिंगोद्भवे ब्रह्मणा विवादशमनार्थं लिंगप्रादुर्भावकाले यथा बभूव तथा यज्ञवराहो भूत्वा दैत्यैश्च सार्धं हिरण्याक्षं दंष्ट्राग्रकोट्या हत्वा प्रभुरसौ विष्णुः रेजे इत्यग्रिमेणान्वयः ॥ ८ ॥ ९ ॥ ततो धरोद्धारानंतरमित्यर्थः ॥ १० ॥ ११ ॥ नारायणायेत्ययं सार्धः श्लोकः ॥ १२ ॥ अष्टमूर्तिः पृथिव्यादिरूपः अनंतवेदितः सर्वज्ञ इत्यर्थः ॥ १३ ॥ १४ ॥ अग्रदंष्ट्रे दंष्ट्राग्रभागे धराधरैः दिग्गजशेषादिभिः चंद्र

तस्य शृंगं महेशस्य भूषणत्वं कथं गतम् ॥ एतत्सर्वं विशेषेण सूत वक्तुमिहार्हसि ॥ २ ॥ सूत उवाच ॥ हिरण्यकशिपोर्भ्राता हिरण्याक्ष इति स्मृतः ॥ पुरांधकासुरेशस्य पिता कालांतकोपमः ॥ ३ ॥ देवाञ्जित्वाथ दैत्येंद्रो बद्धा च धरणीमिमाम् ॥ नीत्वा रसातलं चक्रे बंदीमिन्दीवरप्रभाम् ॥४॥ ततः सब्रह्मका देवाः परिम्लानमुखश्रियः॥बाधितास्ताडिता बद्धा हिरण्याक्षेण तेन वै॥५॥बलिना दैत्यमुख्येन क्रूरेण सुदुरात्मना ॥ प्रणम्य शिरसा विष्णुं दैत्यकोटिविमर्दनम् ॥ ६ ॥ सर्वे विज्ञापयामासुर्धरणीबंधनं हरेः ॥ श्रुत्वैतद्भगवान् विष्णु र्धरणीबंधनं हरिः ॥ ७ ॥ भूत्वा यज्ञवराहोसौ यथा लिंगोद्भवे तथा ॥ दैत्यैश्च सार्धं दैत्येंद्रं हिरण्याक्षं महाबलम् ॥ ८ ॥ दंष्ट्राग्रकोट्या हत्वैनं रेजे दैत्यान्तकृत्प्रभुः ॥ कल्पादिषु यथापूर्वं प्रविश्य च रसातलम् ॥ ९ ॥ आनीय वसुधां देवीमंकस्थामकरोद्धरिः ॥ ततस्तुष्टाव देवेशं देवदेवः पितामहः ॥ १० ॥ शक्राद्यैः सहितो भूत्वा हर्षगद्गदया गिरा ॥ शाश्वताय वराहाय दंष्ट्रिणे दंडिने नमः ॥ ११ ॥ नाराय णाय सर्वाय ब्रह्मणे परमात्मने ॥ कर्त्रे धर्त्रे धरायास्तु हर्त्रे देवारिणां स्वयम् ॥ कर्त्रे नेत्रे सुरेंद्राणां शास्त्रे च सकलस्य च ॥ १२ ॥ त्वम ष्टमूर्तिस्त्वमनंतमूर्तिस्त्वमादिदेवस्त्वमनंतवेदितः ॥ त्वया कृतं सर्वमिदं प्रसीद सुरेश लोकेश वराह विष्णो ॥ १३ ॥ तथैकदंष्ट्राग्रमुखाग्र कोटिभागैकभागार्धतमेन विष्णो ॥ हताः क्षणात्कामददैत्यमुख्याः स्वदंष्ट्रकोट्या सह पुत्रभृत्यैः ॥ १४ ॥ त्वयोद्धृता देव धरा धरेश धराधराकार धृताग्रदंष्ट्रे ॥ धराधरैः सर्वजनैः समुद्रैः सुरासुरैः सेवितचंद्रवक्त्र ॥ १५ ॥ त्वयैव देवेश विभो कृतश्च जयः सुराणामसुरेश्व णाम् ॥ अहो प्रदत्तस्तु वरः प्रसीद वाग्देवतावारिजसंभवाय ॥ १६ ॥ तव रोम्णि सकलामरेश्वरा नयनद्वये शशिरवी पदद्वये ॥ निहिता रसातलगता वसुंधरा तव पृष्ठतः सकलतारकादयः ॥ १७ ॥ जगतां हिताय भवता वसुंधरा भगवन् रसातलपुटंगता तदा ॥ अवलो द्धृता च भगवंस्तवैव सकलं त्वयैव हि धृतं जगद्गुरो ॥ १८ ॥

वक्त्र आह्लादकसुखेत्यर्थः ॥ १५ ॥ वाग्देवतावारिजसंभवाय सरस्वतीयुक्तब्रह्मणे वरस्त्वदुक्तं सत्यं भविष्यतीतिरूपः दत्तः समर्पित इत्यर्थः ॥ १६ ॥ शिशुमाररूपं वर्णयति तव रोम्णीति । पदद्वये निहिता रसातलगता वसुंधरेत्यन्वयः ॥ १७ ॥ १८ ॥

वाक्पतिर्ब्रह्मा ॥ १९ ॥ २० ॥ उद्धृतासि वराहेणेति याजुषश्रुत्यनुवादमाह—अनेनैवेत्यादिना ॥ २१ ॥ २२ ॥ २३ ॥ इति पूर्वोक्तप्रकारमुक्ता स्तुतेत्यर्थः । वराहदंष्ट्राभिन्नायां वराहदंष्ट्रोत्खातायां धरायां तदधिकरणकायामित्यर्थः । मृत्तिकां अनेन यथाधिकारं वैदिकपौराणमंत्रेणेत्यर्थः । यो अविभ्रत्स पापात्प्रमुच्यते इत्यग्रिमेणान्वयः ॥२४॥ क्रमाद्भुवि आयुष्मान् बलवान्धन्यः पुत्रपौत्रसमन्वितः सन् कर्मांते प्रारब्धकर्मणि क्षीणे दिवं प्राप्य सुरैर्मोदत इत्यग्रिमेणान्वयः ॥ २५ ॥ अथानंतरं देवे विष्णौ वाराहं रूपं

इति वाक्पतिर्बहुविधैस्तवार्चनैः प्रणिपत्य विष्णुममरैः प्रजापतिः ॥ विविधान्वरान्हरिमुखाल्लब्धवान् हरिनाभिवारिजदेहभृत्स्वयम् ॥ १९ ॥ अथ तामुद्धृतां तेन धरां देवा मुनीश्वराः ॥ मूर्ध्न्यारोप्य नमश्चक्रुश्चक्रिणः सन्निधौ तदा ॥ २० ॥ अनेनैव वराहेण चोद्धृतासि वरप्रदे ॥ कृष्णेनाक्लिष्टकार्येण शतहस्तेन विष्णुना ॥ २१ ॥ धरणि त्वं महाभागे भूमिस्त्वं धेनुरव्यये ॥ लोकानां धारिणी त्वं हि मृत्तिके हर पातकम् ॥ २२ ॥ मनसा कर्मणा वाचा वरदे वारिजेक्षणे ॥ त्वया हतेन पापेन जीवामस्त्वत्प्रसादतः ॥ २३ ॥ इत्युक्ता सा तदा देवी धरा देवैरथाब्रवीत् ॥ वराहदंष्ट्राभिन्नायां धरायां मृत्तिकां द्विजाः ॥ २४ ॥ मंत्रेणानेन योऽबिभ्रत् मूर्ध्नि पापात्प्रमुच्यते ॥ आयुष्मान्बलवान्धन्यः पुत्रपौत्रसमन्वितः ॥ २५ ॥ क्रमाद्भुवि दिवं प्राप्य कर्मांते मोदते सुरैः ॥ अथ देवे गते त्यक्त्वा वराहे क्षीरसागरम् ॥ २६ ॥ वाराहरूपमनघं चचाल च धरा पुनः ॥ तस्य दंष्ट्राभराक्रांता देवदेवस्य धीमतः ॥ २७ ॥ यदृच्छया भवः पश्यन् जगाम जगदीश्वरः ॥ दंष्ट्रां जग्राह दृष्ट्वा तां भूषणार्थमथात्मनः ॥ २८ ॥ दधार च महादेवः कूर्चांते वै महोरसि ॥ देवाश्च तुष्टुवुः सेंद्रा देवदेवस्य वैभवम् ॥ २९ ॥ धरा प्रतिष्ठिता ह्येवं देवदेवेन लीलया ॥ भूतानां संप्लवे चापि विष्णोश्चैव कलेवरम् ॥ ३० ॥ ब्रह्मणश्च तथान्येषां देवानामपि लीलया ॥ विभुरंगविभागेन भूषितो न यदि प्रभुः ॥ ३१ ॥

त्यक्त्वा क्षीरसागरं गते सति देवदेवस्य तस्य त्यक्तवराहवपुषः दंष्ट्राभराक्रांता धरा पुनश्चचालेत्यग्रिमेणान्वयः ॥ २६ ॥ २७ ॥ अथ भवो रुद्रो जगदीश्वरः यदृच्छया भुवनकौतुकमिति शेषः । पश्यन् जगाम विचचार तां वाराहीं दंष्ट्रां दृष्ट्वात्मनो भूषणार्थं जग्राह कूर्चांते श्मश्रुकेशसमीपे महोरसि दधारेत्यग्रिमेणान्वयः ॥ २८ ॥ देवदेवेन शिवेन लीलया एवं दंष्ट्राधारणेन धरा प्रतिष्ठिता निश्चला कृता अतः देवदेवस्य वैभवं सेंद्रा देवाश्च तुष्टुवुरित्यग्रिमस्यैरन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥

भूतानां संप्लवे महाप्रलये विष्णोर्ब्रह्मणस्तथान्येषां देवानामपि कलेवरं दृष्ट्वेति शेषः। लीलया भक्तवात्सल्येन विभुर्व्यापकः प्रभुः शिवः अंगविभागेन अंगावयवेन भूषितो
यदि न तर्हि विप्राणां मुक्तिः कथं कथमपि न स्यादित्यर्थः । तस्माद्भक्तवात्सल्यान्महेश्वरः दंष्ट्री वराहदंष्ट्राविशिष्ट इति पूर्वस्थैरन्वयः ॥ ३२ ॥ भक्त्यत्यक्तान्देहान् दृष्ट्वा
कारुण्यसंयुतो रुद्रः । तद्गात्ररचितभूषः परमदयालुः सदा पायात् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां चतुर्नवतितमोऽध्यायः ॥९४॥ पंचनवतिसंख्याके हिरण्य
कशिपोर्वधः । नृसिंहेन च तच्छांतिः शारभाद्वर्ण्यते हरात् ॥ ऋषयो नृसिंहचरितमपृच्छन्–नृसिंहेनेति । तस्याग्रजो ज्येष्ठभ्राता हत इति पूर्वं श्रुतं तेन नृसिंहेन हिरण्यकशिपुः

कथं विमुक्तिर्विप्राणां तस्माद्दंष्ट्री महेश्वरः ॥ ३२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे वराहप्रादुर्भावो नाम चतुर्नवतितमोध्यायः ॥ ९४ ॥
ऋषय ऊचुः ॥ नृसिंहेन हतः पूर्वं हिरण्याक्षाग्रजः श्रुतम् ॥ कथं निषूदितस्तेन हिरण्यकशिपुर्वद ॥ १ ॥ सूत उवाच ॥ हिरण्यक
शिपोः पुत्रः प्रह्लाद इति विश्रुतः ॥ धर्मज्ञः सत्यसंपन्नस्तपस्वी चाभवत्सुधीः ॥ २ ॥ जन्मप्रभृति देवेशं पूजयामास चाव्ययम् ॥ सर्वज्ञं
सर्वगं विष्णुं सर्वदेवभवोद्भवम् ॥ ३ ॥ तमादिपुरुषं भक्त्या परब्रह्मस्वरूपिणम् ॥ ब्रह्मणोधिपतिं सृष्टिस्थितिसंहारकारणम् ॥ ४ ॥ सोपि
विष्णोस्तथाभूतं दृष्ट्वा पुत्रं समाहितम् ॥ नमो नारायणायेति गोविंदेति मुहुर्मुहुः ॥ ५ ॥ स्तुवंतं प्राह देवारिः प्रदहन्निव पापधीः ॥ न
मां जानासि दुर्बुद्धे सर्वदैत्यामरेश्वरम् ॥ ६ ॥ प्रह्लाद वीरदुष्पुत्र द्विजदेवार्तिकारणम् ॥ को विष्णुः पद्मजो वापि शक्रश्च वरुणोथ
वा ॥ ७ ॥ वायुः सोमस्तथेशानः पावको मम यः समः ॥ मामेवार्चय भक्त्या च स्वल्पं नारायणं सदा ॥ ८ ॥ प्रह्लाद जीविते वांछा
तवैषा शृणु चास्ति चेत् ॥ श्रुत्वापि तस्य वचनं हिरण्यकशिपोः सुधीः ॥ ९ ॥ प्रह्लादः पूजयामास नमो नारायणेति च ॥ नमो नारा
यणायेति सर्वदैत्यकुमारकान् ॥ १० ॥

कथं निषूदितो वदेत्यन्वयः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ स हिरण्यकशिपुः समाहितं शांतं पुत्रं विष्णोस्तथाभूतं भक्तितत्परं दृष्ट्वा नमो नारायणायेति गोविंदायेति मुहुर्मुहुः
स्तुवंतं प्रदहन्निव प्राहेत्यग्रिमेणान्वयः ॥ ५ ॥ वीराणां दुष्पुत्रो वीरदुष्पुत्र इत्यनेन वस्तुतः सत्पुत्र इति सूच्यते तत्संबुद्धौ हे वीरदुष्पुत्र प्रह्लाद दुर्बुद्धे द्विजदेवार्तिकारणं सर्व
दैत्यामरेश्वरं मां न जानासीत्यग्रिमस्थैरन्वयः ॥ ६ ॥ ७ ॥ स्वल्पं नारायणं सदा त्यक्त्वेति शेषः । मामेवार्चयेत्यन्वयः ॥ ८ ॥ प्रह्लाद एषा पूर्वोक्ता मदाज्ञा तव जीविते वांछा
अस्ति चेच्छृण्वित्यन्वयः ॥ ९ ॥ सर्वदैत्यकुमारांस्तां नारदोपदिष्टां ब्रह्मविद्यामध्यापयामासेत्यग्रिमेणान्वयः । नारदोपदेशकथा भागवतसप्तमस्कंधे विस्तरेणोक्ता ॥ १० ॥

शक्रादिभिरप्यलंघ्यामात्मन आज्ञां पुत्रेण स्वयं लंघितां दृष्ट्वा हिरण्यो दानवान् प्राहेत्यग्रिमेणान्वयः ॥ ११ ॥ एतं प्रह्लादं दुष्पुत्रमत एव वध्यं नानाविधैरनेकोपायैर्हंतुमर्हथेत्यन्वयः ॥ १२ ॥ देवदेवस्य विष्णोर्भृत्यमत एवाव्ययं नाशशून्यमित्यर्थः ॥१३॥ अथानंतरं तदा तस्मिन्काले दैत्यराजतनयं प्रह्लादं प्रति असुरैस्तन्नानाविधोपाय प्रतिकृतं प्रभोर्विष्णोस्तेजसा तत्र प्रह्लादे निष्फलं बभूवेत्यन्वयः । एतद्विस्तरो विष्णुपुराणे प्रथमांशे अतीवोक्तः ॥१४॥ हिरण्यकशिपोः हिरण्यकशिपुमित्यर्थः ॥ १५ ॥ १६ ॥ पीड

अध्यापयामास च तां ब्रह्मविद्यां सुशोभनाम् ॥ दुर्लंघ्यां चात्मनो दृष्ट्वा शक्रादिभिरपि स्वयम् ॥११॥ पुत्रेण लंघितामाज्ञां हिरण्यः प्राह दानवान् ॥ एतं नानाविधैर्वध्यं दुष्पुत्रं हंतुमर्हथ ॥ १२ ॥ एवमुक्तास्तदा तेन दैत्येन सुदुरात्मना ॥ निजघ्नुर्देवदेवस्य भृत्यं प्रह्लादमव्ययम् ॥१३॥ तत्र तत्प्रतिकृतं तदा सुरैर्दैत्यराजतनयं द्विजोत्तमाः ॥ क्षीरवारिनिधिशायिनः प्रभोर्निष्फलं त्वथ बभूव तेजसा ॥१४॥ तदार्थ गर्वभिन्नस्य हिरण्यकशिपोः प्रभुः ॥ तत्रैवाविरभूद्धंतुं नृसिंहाकृतिमास्थितः ॥ १५ ॥ जघान च सुतं प्रेक्ष्य पितरं दानवाधमम् ॥ बिभेद तत्क्षणादेव करजैर्निशितैः शतैः॥ १६ ॥ ततो निहत्य तं दैत्यं सबांधवमघापहः ॥ पीडयामास दैत्येन्द्रं युगांताग्निरिवापरः॥१७॥ नादैस्तस्य नृसिंहस्य घोरैर्वित्रासितं जगत् ॥ आब्रह्मभुवनाद्विप्राः प्रचचाल च सुव्रताः ॥ १८ ॥ दृष्ट्वा सुरासुरमहोरगसिद्धसाध्यास्तस्मिन् क्षणे हरिविरिंचिमुखा नृसिंहम् ॥ धैर्यं बलं च समवाप्य ययुर्विसृज्य आदिङ्मुखांतमसुरक्षणतत्पराश्च ॥ १९ ॥ ततस्तैर्गतैः सैष देवो नृसिंहः सहस्राकृतिः सर्वपात्सर्वबाहुः ॥ सहस्रेक्षणः सोमसूर्याग्निनेत्रस्तदा संस्थितः सर्वमावृत्य मायी ॥ २० ॥ तं तुष्टुवुः सुरश्रेष्ठा लोकालोकाचले स्थिताः ॥ सब्रह्मकाः ससाध्याश्च सयमाः समरुद्गणाः ॥ २१ ॥ परात्परतरं ब्रह्म तत्त्वात्तत्त्वतमं भवान् ॥ ज्योतिषां तु परं ज्योतिः परमात्मा जगन्मयः ॥२२॥ स्थूलं सूक्ष्मं सुसूक्ष्मं च शब्दब्रह्ममयः शुभः ॥ वागतीतो निरालंबो निर्द्वंद्वो निरुपप्लवः ॥ २३ ॥

यामास पेषयामासेत्यर्थः ॥ १७ ॥ १८ ॥ तस्मिन्क्षणे जगत्कंपकाले हरिविरिंचिमुखाः इंद्रब्रह्मपुरोगाः धैर्यं बलं च समवाप्य कथंचिदास्थाय नृसिंहं विसृज्य असुरक्षणतत्पराः प्राणपरीप्सवः आदिङ्मुखांतं ययुरित्यन्वयः ॥ १९ ॥ सर्वं विश्वमावृत्य व्याप्येत्यर्थः ॥ २० ॥ लोकालोकाचले मर्यादापर्वते सब्रह्मका स्थितास्तुष्टुवुरित्यन्वयः ॥ २१ ॥ स्तुतिं कथयति—परात्परतरमित्यादिना ॥ २२ ॥ २३ ॥

॥ २४ ॥ २५ ॥ द्विजशापच्छलेन भृगुशापमिषेणेत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ आत्मनः योनिं सिंहरूपामित्यर्थः । नृसिंहस्तवफलं कथयति–य इत्यादिना ॥३०॥
तदंतरे स्तवेनापि क्रोधाशमनावसरे सब्रह्मकाः शिवं संप्राप्य ध्यात्वा मृगरूपिणः नृसिंहस्य सर्वं विज्ञाप्य तुष्टुवुरित्यग्रिमेणान्वयः ॥ ३१ ॥ ब्रह्मादयः परमेश्वरं परमशिवं संस्तूय
ततः परमकारणं मंदरस्थं महादेवं तूर्णं शरणं जग्मुरित्यग्रिमेणान्वयः ॥ ३२ ॥ ३३ ॥ ब्रह्मा देवताभिः सह भीतभीतः भूमौ दंडवत् प्रणम्य सगद्गदं परमेश्वरं तुष्टावेत्यन्वयः ।

यज्ञभुग्यज्ञमूर्तिस्त्वं यज्ञिनां फलदः प्रभुः ॥ भवान्मत्स्याकृतिः कौर्ममास्थाय जगति स्थितः ॥ २४ ॥ वाराहीं चैव तां सैंहीमास्थायेह
व्यवस्थितः ॥ देवानां देवरक्षार्थं निहत्य दितिजेश्वरम् ॥ २५ ॥ द्विजशापच्छलेनैवमवतीर्णोसि लीलया ॥ न दृष्टं यत्त्वदन्यं हि भवान्सर्वं
चराचरम् ॥ २६ ॥ भवान्विष्णुर्भवान् रुद्रो भवानेव पितामहः ॥ भवानादिर्भवानंतो भवानेव वयं विभो ॥ २७ ॥ भवानेव जगत्सर्वं प्रला
पेन किमीश्वर ॥ मायया बहुधा संस्थमद्वितीयमयं प्रभो ॥२८॥ स्तोष्यामस्त्वां कथं भासि देवदेव मृगाधिप ॥ स्तुतोपि विविधैःस्तुत्यै
र्भावैर्नानाविधैः प्रभुः ॥ २९ ॥ न जगाम द्विजाः शांतिं मानयन्योनिमात्मनः ॥ यो नृसिंहस्तवं भक्त्या पठेद्वार्थं विचारयेत् ॥ ३० ॥
श्रावयेद्वा द्विजान्सर्वान् विष्णुलोके महीयते ॥ तदंतरे शिवं देवाः सेंद्राः सब्रह्मकाः प्रभुम् ॥ ३१ ॥ संप्राप्य तुष्टुवुः सर्वं विज्ञाप्य मृग
रूपिणः ॥ ततो ब्रह्मादयस्तूर्णं संस्तूय परमेश्वरम् ॥ ३२ ॥ आत्मत्राणाय शरणं जग्मुः परमकारणम् ॥ मंदरस्थं महादेवं क्रीडमानं सहो
मया॥ ३३॥सेवितं गणगंधर्वैः सिद्धैरप्सरसां गणैः ॥ देवताभिः सह ब्रह्मा भीतभीतः सगद्गदम्॥ प्रणम्य दंडवद्भूमौ तुष्टाव परमेश्वरम्॥३४॥
ब्रह्मोवाच ॥ नमस्ते कालकालाय नमस्ते रुद्र मन्यवे ॥ नमःशिवाय रुद्राय शंकराय शिवाय ते ॥ ३५ ॥ उग्रोसि सर्वभूतानां नियंतासि
शिवोसि नः ॥ नमः शिवाय शर्वाय शंकरायार्तिहारिणे ॥ ३६ ॥ मयस्कराय विश्वाय विष्णवे ब्रह्मणे नमः॥ अंतकाय नमस्तुभ्यमुमायाः
पतये नमः ॥ ३७ ॥ हिरण्यबाहवे साक्षाद्धिरण्यपतये नमः ॥ शर्वाय सर्वरूपाय पुरुपाय नमोनमः ॥ ३८ ॥

सेवितमयं सार्धश्लोकः ॥ ३४ ॥ स्तवं कथयति–नम इत्यादिना । कालस्यांतकस्यापि कालोऽतकस्तस्मै नम इत्यन्वयः। हे रुद्र ते मन्यवे क्रोधाय नमः शिवाय तत्संज्ञकाय
शिवाय मोक्षरूपायेत्यर्थः । " शिवं मोक्षे सुखे भद्रे " इति विश्वः ॥३५॥ सर्वभूतानामुग्रो भयंकरोऽसीत्यतः नियंतासि नः भक्तानामस्माकं शिवोसि सुखरूपोसि ते नमः शिवाय
भद्ररूपायेत्यर्थः । शं कल्याणं करे यस्मादसौ शंकरः॥३६॥ मयस्कराय सुखकरायेत्यर्थः॥३७॥ साक्षाद्धिरण्यबाहवे हिरण्मयबाहवे इत्यर्थः । शृणाति जगद्धिनस्तीति शर्वः ॥३८॥

महतो महत्तत्वस्य कारणाय उत्पादकायेत्यर्थः ॥ ३९ ॥ रुद्राय नीलरुद्राय कद्रुद्राय तत्संज्ञकमंत्ररूपायेत्यर्थः ॥४०॥ मीढुष्टमाय सर्ववर्षकायेत्यर्थः ॥४१॥ ताराय प्रणवरूपाय शोभनस्तारो यस्मादसौ सुतारः॥४२॥ हरिकेशो हरिद्वर्णकेशः विल्ववृक्षरूप इत्यर्थः ॥४३॥ मन्यवे क्रतुरूपायेत्यर्थः " मन्युर्दैन्ये क्रतौ क्रुधि " इत्यमरः । रुद्रं तत्संज्ञकाध्यायं रूपयति तच्छीलः रुद्ररूपी ॥४४॥ दंडमुंडीश्वरस्तत्संज्ञकसप्तमाध्यायोक्तावताररूपः ॥४५॥४६॥ अग्रे भूत्वा वधाय दर्शनमात्रेण वधकर्त्रे इत्यर्थः । दूरे दूरदेशेपि वधो यस्मादसौ दूरेवधः ॥ ४७ ॥ दैत्यानां नित्यं कर्मभेदिने गजाननरूपेण कर्मनाशकाय । इयं कथा अग्रेऽस्मिन्नेवोक्ता ॥४८॥ सद्याय सद्यमंत्ररूपाय सत् ब्रह्म याति प्रापयति तत्सद्यं

सदसद्व्यक्तिहीनाय महतः कारणाय ते ॥ नित्याय विश्वरूपाय जायमानाय ते नमः ॥३९॥ जाताय बहुधा लोके प्रभूताय नमोनमः ॥ रुद्राय नीलरुद्राय कद्रुद्राय प्रचेतसे ॥४०॥ कालाय कालरूपाय नमः कालांगहारिणे ॥ मीढुष्टमाय देवाय शितिकंठाय ते नमः॥४१॥ महीयसे नमस्तुभ्यं हंत्रे देवारिणां सदा ॥ ताराय च सुताराय तारणाय नमोनमः ॥ ४२ ॥ हरिकेशाय देवाय शंभवे परमात्मने ॥ देवानां शंभवे तुभ्यं भूतानां शंभवे नमः ॥ ४३ ॥ शंभवे हैमवत्याश्च मन्यवे रुद्ररूपिणे ॥ कपर्दिने नमस्तुभ्यं कालकंठाय ते नमः ॥ ४४ ॥ हिरण्याय महेशाय श्रीकंठाय नमोनमः ॥ भस्मदिग्धशरीराय दंडमुंडीश्वराय च ॥४५॥ नमो ह्रस्वाय दीर्घाय वामनाय नमोनमः ॥ नम उग्रत्रिशूलाय उग्राय च नमोनमः ॥ ४६ ॥ भीमाय भीमरूपाय भीमकर्मरताय ते ॥ अग्रेवधाय वै भूत्वा नमो दूरेवधाय च ॥ ४७ ॥ धन्विने शूलिने तुभ्यं गदिने हलिने नमः ॥ चक्रिणे वर्मिणे नित्यं दैत्यानां कर्मभेदिने ॥ ४८ ॥ सद्याय सद्यरूपाय सद्योजाताय ते नमः॥ वामाय वामरूपाय वामनेत्राय ते नमः ॥ ४९ ॥ अघोररूपाय विकटाय विकटशरीराय ते नमः ॥ पुरुषरूपाय पुरुषैकतत्पुरुषाय वै नमः ॥ ५० ॥ पुरुषार्थप्रदानाय पतये परमेष्ठिने ॥ ईशानाय नमस्तुभ्यमीश्वराय नमोनमः ॥ ५१ ॥

रूपं यस्य स सद्यरूपः सद्योजातस्तत्संज्ञकावताररूपः वामाय तत्संज्ञकमंत्ररूपाय वामरूपाय सुंदररूपायेत्यर्थः ॥ ४९ ॥ विषमवृत्तेन स्तौति—अघोररूपायेति । अघोररूपाय तत्संज्ञकमंत्ररूपाय पुरुषेषु एकतत्पुरुषः पुरुषैकतत्पुरुषः उत्तमपुरुषरूप इत्यर्थः । तदुक्तं भगवद्गीतायाम् " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः " इति ॥ ५० ॥ ईशानाय तत्संज्ञकमंत्ररूपाय ॥ ५१ ॥

साक्षाच्छिवाय सगुणशिवरूपायेत्यर्थः । नमस्क्रियापूर्वस्तवानंतरं देवाः स्वकार्यं निवेदयंति—सर्वविष्णुरित्यादिना । सर्वः सर्वरूपश्चासौ विष्णुश्च सर्वविष्णुः ॥ ५२ ॥ करजैर्नखैः ॥ ५३ ॥ ५४॥ कालकूटं तत्संज्ञकविषमप्यत्ति भक्षयति तत्कालकूटादि वपुषा शरीरेण शरणागतान्नस्त्राहीत्यन्वयः ॥ ५५ ॥ हे विश्वेश ते वृत्तं शुक्रं शुद्धं तु वयं केवलं क्रीडा वै अस्माकं प्रलयोदयौ तवोन्मेषनिमेषाभ्यां भवन इति शेषः ॥ ५६ ॥ विनाशस्तव निमेषरूपः प्रलयः त्वयि उन्मीलयेत्कथं प्रादुर्भवेदतः ब्रह्मन् शिव ते नास्तीत्यन्वयः॥५७॥ त्वं सर्वलोकहिताय एनं नृसिंहरूपं तत्त्वं संहर्तुमिच्छसीति विद्म इति शेषः । अनेन प्रभुसंमता हि प्रार्थना क्षिप्रं सिद्ध्यतीति सूच्यते । तथा पूर्वोक्तप्रकारमित्यर्थः॥५८॥५९॥

ब्रह्मणे ब्रह्मरूपाय नमः साक्षाच्छिवाय ते ॥ सर्वविष्णुर्नृसिंहस्य रूपमास्थाय विश्वकृत्॥५२॥हिरण्यकशिपुं हत्वा करजैर्निशितैः स्वयम्॥ दैत्येंद्रैर्बहुभिः सार्धं हितार्थं जगतां प्रभुः ॥ ५३ ॥ सैंहीं समानयन्योनिं बाधते निखिलं जगत् ॥ यत्कृत्यमत्र देवेश तत्कुरुष्व भवानिह ॥ ५४ ॥ उग्रोसि सर्वदुष्टानां नियंतासि शिवोसि नः ॥ कालकूटादिवपुषा त्राहि नः शरणागतान् ॥ ५५ ॥ शुक्रं तु वृत्तं विश्वेश क्रीडा वै केवलं वयम् ॥ तवोन्मेषनिमेषाभ्यामस्माकं प्रलयोदयौ ॥ ५६ ॥ उन्मीलयेत्त्वयि ब्रह्मन्विनाशोस्ति न ते शिव ॥ संतप्तास्मो वयं देव हरिणामिततेजसा॥५७॥सर्वलोकहितायैनं तत्त्वं संहर्तुमिच्छसि॥सूत उवाच॥विज्ञापितस्तथा देवः प्रहसन्प्राह तान् सुरान्॥५८॥ अभयं च ददौ तेषां हनिष्यामीति तं प्रभुः ॥ सोपि शक्रः सुरैः सार्धं प्रणिपत्य यथागतम् ॥ ५९ ॥ जगाम भगवान् ब्रह्मा तथान्ये च सुरोत्तमाः ॥ अथोत्थाय महादेवः शारभं रूपमास्थितः ॥ ६० ॥ ययौ प्रांते नृसिंहस्य गर्वितस्य मृगाशिनः ॥ अपहृत्य तदा प्राणान् शरभः सुरपूजितः ॥ ६१ ॥ सिंहात्ततो नरो भूत्वा जगाम च यथाक्रमम् ॥ एवं स्तुतस्तदा देवैर्जगाम स यथाक्रमम् ॥ ६२ ॥ यः पठेच्छृणुयाद्वापि संस्तवं शार्वमुत्तमम् ॥ रुद्रलोकमनुप्राप्य रुद्रेण सह मोदते ॥ ६३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे नारसिंहे पंचनवतितमोऽध्यायः ॥ ९५ ॥

अथ देवगमनानंतरं शारभं शरभपक्ष्याकारं रूपं स्वरूपमित्यर्थः ॥ ६० ॥ मृगाशिनः असुरभक्षकस्य नृसिंहस्य प्रांते समीपे ययौ प्रापेत्यर्थः । तदा तस्मिन्नेव काले प्राणान्नृसिंहासूनपहृत्य सः रुद्रः शरभः सुरपूजितः एवं पूर्वोक्तप्रकारं तदा देवैः स्तुतो यथाक्रमं जगामेत्यग्रिमेणान्वयः॥६१॥ततः शरभगमनानंतरं विष्णुरिति शेषः । सिंहात्तदाकाररूपान्नरो मानुषरूपो भूत्वा यथागतं जगामेत्यन्वयः ॥ ६२ ॥ अध्यायफलं कथयति—य इति ॥ ६३ ॥ वित्रासितं सर्वजगद्विलोक्य देवैः स्तुतः शारभरूपयुक्तः । हत्वा नृसिंहं विरराज यो वै स नोस्तु रुद्रोरिजये सदैव ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचनवतितमोऽध्यायः ॥ ९५ ॥

षण्णवतितमेऽध्याये नृसिंहेन समागमः । वीरभद्रस्य संवादस्तज्जयश्चैव वर्ण्यते ॥ ऋषयः शरभनृसिंहचरितं विस्तरेणापृच्छन्—कथमित्यादिना ॥ १ ॥ तेन नृसिंहेन एवं पूर्वोक्तप्रकारमभ्यर्थितः प्रार्थित इत्यर्थः ॥ २ ॥ ॥ आत्मनो भैरवं रूपं वीरभद्रं तदर्थं नृसिंहसंहारार्थं स्मृतवानित्यग्रिमस्थैरन्वयः ॥ ३ ॥ पुरा पूर्वभागे गणानामग्रतो हसन् सद्य आजगामेत्यन्वयः ॥४॥ गणान्वर्णयति—साट्टहासैरित्यादिना ॥५॥ ब्रह्माद्यैर्ब्रह्मादिदेवैः कंदुकैरिव क्रीडद्भिर्विहरद्भिरित्यर्थः ॥६ ॥ वीरभद्रस्वरूपं वर्णयति—कल्पांत इत्यादिना ।

ऋषय ऊचुः ॥ कथं देवो महादेवो विश्वसंहारकारकः ॥ शरभाख्यं महाघोरं विकृतं रूपमास्थितः ॥ १ ॥ किंकिं धैर्यं कृतं तेन ब्रूहि सर्वमशेषतः ॥ सूत उवाच ॥ एवमभ्यर्थितो देवैर्मतिं चक्रे कृपालयः ॥ २ ॥ यत्तेजस्तु नृसिंहाख्यं संहर्तुं परमेश्वरः ॥ तदर्थं स्मृतवान् रुद्रो वीरभद्रं महाबलम् ॥ ३ ॥ आत्मनो भैरवं रूपं महाप्रलयकारकम् ॥ आजगाम पुरा सद्यो गणानामग्रतो हसन् ॥ ४ ॥ साट्टहासैर्गणवरैरुत्पतद्भिरितस्ततः ॥ नृसिंहरूपैरत्युग्रैः कोटिभिः परिवारितः ॥५॥ तावद्भिरभितो वीरैर्नृत्यद्भिश्च मुदान्वितैः॥क्रीडद्भिश्च महाधीरैर्ब्रह्माद्यैः कंदुकैरिव ॥ ६ ॥ अदृष्टपूर्वैरन्यैश्च वेष्टितो वीरवंदितः ॥ कल्पांतज्वलनज्वालो विलसल्लोचनत्रयः ॥ ७ ॥ आत्तशस्त्रो जटाजूटे ज्वलद्बालेन्दुमंडितः ॥ बालेंदुद्वितयाकारतीक्ष्णदंष्ट्रांकुरद्वयः ॥८॥ आखंडलधनुःखंडसंनिभभ्रूलतायुतः ॥ महाप्रचंडहुंकारबधिरीकृतदिङ्मुखः॥९॥ नीलमेघांजनाकारभीषणश्मश्रुरद्भुतः ॥ वादखंडमखंडाभ्यां भ्रामयंस्त्रिशिखं मुहुः ॥ १० ॥ वीरभद्रोपि भगवान् वीरशक्तिविजृंभितः ॥ स्वयं विज्ञापयामास किमत्र स्मृतिकारणम् ॥ ११ ॥ आज्ञापय जगत्स्वामिन् प्रसादः क्रियतां मयि ॥ श्रीभगवानुवाच ॥ अकाले भयमुत्पन्नं देवानामपि भैरव ॥ १२ ॥ ज्वलितः स नृसिंहाग्निः शमयैनं दुरासदम् ॥ सांत्वयन् बोधयादौ तं तेन किं नोपशाम्यति॥१३॥ ततो मत्परमं भावं भैरवं संप्रदर्शय ॥ सूक्ष्मं सूक्ष्मेण संहृत्य स्थूलं स्थूलेन तेजसा ॥ १४ ॥ वक्त्रमानय कृत्तिं च वीरभद्र ममाज्ञया ॥ इत्यादिष्टो गणाध्यक्षः प्रशांतवपुरास्थितः ॥ १५ ॥ जगाम रंहसा तत्र यत्रास्ते नरकेसरी ॥ ततस्तं बोधयामास वीरभद्रो हरो हरिम् १६

कल्पांतज्वलनः प्रलयवह्निस्तद्वज्ज्वाला कांतिर्यस्य ॥ ७ ॥ बालेंदु द्वितयाकारमतिशुभ्रं तीक्ष्णं दंष्ट्रांकुरद्वयं यस्य ॥ ८ ॥ आखंडलधनुरिंद्रधनुरित्यर्थः ॥ ९ ॥ अखंडाभ्यामपराजितबाहुभ्यां वादखंडं विवादशमकं त्रिशिखं त्रिशूलं मुहुर्भ्रामयन् स्वयं वीरभद्रः विज्ञापयामासेत्यग्रिमेणान्वयः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ वक्त्रं मुखं कृत्तिं त्वचं ममाज्ञया आनयेत्यन्वयः । इति पूर्वोक्तप्रकारमित्यर्थः ॥ १५ ॥ १६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ हरिरूपेण सिंहरूपेणेत्यर्थः ॥ २० ॥ २१ ॥ शिवः परायणं परमस्थानं यस्य ॥ २२ ॥ २३ ॥ २४ ॥ ततो वीरभद्रवाक्यश्रवणानंतरं हरिर्नृसिंहः कोपं प्रज्वालयत् प्रदीप्तं चकार । अत्रागमशास्त्रस्यानित्यत्वादडागमाभावः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ देवतापरमार्थज्ञा ममैव परममत्यंतसामर्थ्यं विदुर्जानंती

उवाच वाक्यमीशानः पितापुत्रमिवौरसम् ॥ श्रीवीरभद्र उवाच ॥ जगत्सुखाय भगवन्नवतीर्णोसि माधव ॥ १७ ॥ स्थित्यर्थेन च युक्तोसि परेण परमेष्ठिना ॥ जंतुचक्रं भगवता रक्षितं मत्स्यरूपिणा ॥ १८ ॥ पुच्छेनैव समाबध्य भ्रमन्नेकार्णवे पुरा ॥ बिभर्षि कूर्मरूपेण वाराहेणोद्धृता मही ॥ १९ ॥ अनेन हरिरूपेण हिरण्यकशिपुर्हतः ॥ वामनेन बलिर्बद्धस्त्वया विक्रमता पुनः ॥ २० ॥ त्वमेव सर्वभूतानां प्रभावः प्रभुरव्ययः ॥ यदायदा हि लोकस्य दुःखं किंचित्प्रजायते ॥ २१ ॥ तदातदावतीर्णस्त्वं करिष्यसि निरामयम् ॥ नाधिकस्त्वत्समोप्यस्ति हरे शिवपरायण ॥ २२ ॥ त्वया धर्माश्च वेदाश्च शुभे मार्गे प्रतिष्ठिताः ॥ यदर्थमवतारोयं निहतः सोपि केशव ॥ २३ ॥ अत्यंतघोरं भगवन्नरसिंह वपुस्तव ॥ उपसंहर विश्वात्मंस्त्वमेव मम सन्निधौ ॥ २४ ॥ सूत उवाच ॥ इत्युक्तो वीरभद्रेण नृसिंहः शांतया गिरा ॥ ततोधिकं महाघोरं कोपं प्रज्वालयद्धरिः ॥ २५ ॥ श्रीनृसिंह उवाच ॥ आगतोसि यतस्तत्र गच्छ त्वं मा हितं वद ॥ इदानीं संहरिष्यामि जगदेतच्चराचरम् ॥ २६ ॥ संहर्तुर्न हि संहारः स्वतो वा परतोपि वा ॥ शासितं मम सर्वत्र शास्ता कोपि न विद्यते ॥ २७ ॥ मत्प्रसादेन सकलं समर्यादं प्रवर्तते ॥ अहं हि सर्वशक्तीनां प्रवर्तकनिवर्त्तकः ॥ २८ ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥ तत्तद्विद्धि गणाध्यक्ष मम तेजोविजृंभितम् ॥ २९ ॥ देवतापरमार्थज्ञा ममैव परमं विदुः ॥ मदंशाः शक्तिसंपन्ना ब्रह्मशक्रादयः सुराः ॥ ३० ॥ मन्नाभिपंकजाज्जातः पुरा ब्रह्मा चतुर्मुखः ॥ तल्ललाटसमुत्पन्नो भगवान्वृषभध्वजः ॥ ३१ ॥ रजसाधिष्ठितः स्रष्टा रुद्रस्तामस उच्यते ॥ अहं नियंता सर्वस्य मत्परं नास्ति दैवतम् ॥ ३२ ॥ विश्वाधिकः स्वतंत्रश्च कर्ता हर्ताखिलेश्वरः ॥ इदं तु मत्परं तेजः कः पुनः श्रोतुमिच्छति ॥ ३३ ॥ अतो मां शरणं प्राप्य गच्छ त्वं विगतज्वरः ॥ अवेहि परमं भावमिदं भूतमहेश्वरः ॥ ३४ ॥

त्यर्थः ॥ ३० ॥ भगवान् षड्गुणैश्वर्यो वृषभध्वजो रुद्रः ॥ ३१ ॥ ३२ ॥ इदं नृसिंहाख्यं मत्परं तेजः कः पुनः श्रोतुमपीच्छाति न कोपीत्यर्थः ॥ ३३ ॥ अतः पूर्वोक्तकारणाद्भूतमहेश्वरस्त्वं मां शरणं प्राप्य विगतज्वरो गच्छ इदं वक्ष्यमाणं परमं भावं कर्तव्यमवेहीत्यन्वयः ॥ ३४ ॥

॥ ३५ ॥ इदं पूर्वोक्तप्रकारं साहंकारं सगर्वमित्यर्थः ॥ ३६ ॥ विश्वेशं रुद्रं पिनाकिनं पिनाकधनुर्विशिष्टं संहर्तारं जगत्संहारकारकं न जानासि किं विस्मृतः किमित्यर्थः । त्वयि त्वन्निमित्तको विनाशः संहारः केवलः असद्वादो विवादश्च भवतीति शेषः ॥ ३७ ॥ येन केनापि तवान्योन्यावतागाणि मत्स्यादीनि सांप्रतं कानि शेषाणि कान्यपि न संतीत्यर्थः । भवानिति शेषः कथाशेषः भविष्यतीत्यन्वयः ॥ ३८ ॥ ईदृशीं क्रूरामवस्थां गतस्त्वमेतद्वक्ष्यमाणं दोषं पश्येत्यन्वयः । क्षणात्संक्षयं नाशमेष्यसि गच्छसीत्यर्थः ॥ ३९ ॥ मम पौत्रो रुद्र इति पूर्वं नृसिंहोक्तस्योत्तरं कथयति–प्रकृतिस्त्वमित्यादिना । प्रकृतिः स्त्रीरूपस्त्वं रुद्रः पुमान् पुरुषस्त्वद्वर्त्ततेत्यर्थः ॥ ४० ॥ पितामहः पूर्वं जगत्सि

कालोस्म्यहं कालविनाशहेतुर्लोकान् समाहर्त्तुमहं प्रवृत्तः ॥ मृत्योर्मृत्युं विद्धि मां वीरभद्र जीवंत्येते मत्प्रसादेन देवाः॥३५॥सूत उवाच ॥ साहंकारमिदं श्रुत्वा हरेरमितविक्रमः ॥ विहस्योवाच सावज्ञं ततो विस्फुरिताधरः ॥ ३६ ॥ श्रीवीरभद्र उवाच ॥ किं न जानासि विश्वेशं संहर्तारं पिनाकिनम् ॥ असद्वादो विवादश्च विनाशस्त्वयि केवलः ॥ ३७ ॥ तवान्योन्यावताराणि कानि शेषाणि सांप्रतम् ॥ कृतानि येन केनापि कथाशेषो भविष्यति ॥ ३८ ॥ दोषं त्वं पश्य एतत्त्वमवस्थामीदृशीं गतः ॥ तेन संहारदक्षेण क्षणात्संक्षयमेष्यसि ॥ ३९ ॥ प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि वीर्यं समाहितम् ॥ त्वन्नाभिपंकजाज्जातः पंचवक्त्रः पितामहः ॥ ४० ॥ सृष्ट्यर्थेन जगत्पूर्वं शंकरं नीललोहितम् ॥ ललाटे चिंतयामास तपस्युग्रे व्यवस्थितः ॥ ४१ ॥ तल्ललाटादभूच्छंभोः सृष्ट्यर्थं तन्न दूषणम् ॥ अंशोहं देवदेवस्य महाभैरवरूपिणः ॥ ४२ ॥ त्वत्संहारे नियुक्तोस्मि विनयेन बलेन च ॥ एवं रक्षो विदार्यैव त्वं शक्तिकलया युतः ॥ ४३ ॥ अहंकारावलेपेन गर्जसि त्वमतंद्रितः ॥ उपकारो ह्यसाधूनामपकाराय केवलम् ॥ ४४ ॥ यदि सिंह महेशानं स्वपुनर्भूत मन्यसे ॥ न त्वं स्रष्टा न संहर्ता न स्वतंत्रो हि कुत्रचित् ॥ ४५ ॥ कुलालचक्रवच्छक्त्या प्रेरितोसि पिनाकिना ॥ अद्यापि तव निक्षिप्तं कपालं कूर्मरूपिणः ॥ ४६ ॥

सृक्षुरिति शेषः । सृष्ट्यर्थेन सृष्टिकारणेन उग्रे तपसि व्यवस्थितः सन् शंकरं ललाटे चिंतयामास तल्ललाटात्सृष्ट्यर्थम् अभूत्प्रादुर्बभूव तन्न शंभोर्दूषणमित्यग्रिमेणान्वयः ॥४१॥४२॥ महाभैरवरूपिणो रुद्रस्याहमंशस्त्वत्संहारे विनयेन बलेन च नियुक्त इत्यग्रिमेणान्वयः ॥४३॥४४॥ महेशानं रुद्रं स्वपुनर्भूतं स्वपौत्रमित्यर्थः । अनुस्वारलोपश्छांदसः ॥ ४५ ॥ कूर्मरूपिणस्तव कपालं हरहारलतामध्ये निक्षिप्तं स्थापितं हे मुग्ध कस्मान्न बुध्यसे न वेत्सीत्यग्रिमेणान्वयः ॥ ४६ ॥

तदंशेन शिवांशेन तारकारिणा रुद्रेण ते वाराहविग्रहः साक्रोशं दंष्ट्रोत्पातनपीडितः अद्य विस्मृतं किमित्यग्रिमस्थैरन्वयः ॥ ४७ ॥ विष्वक्सेनच्छलाद्विष्वक्सेनरूपेण भवान्यस्य
रुद्रस्य शूलाग्रे दग्धोसीत्यन्वयः॥४८॥ तव पुत्रस्य ब्रह्मणः तमेनाभिसंधं पंचमं शिरश्छिन्नमद्यापि वर्तत इति शेषः। तस्य रुद्रस्य तत् पूर्वोक्तं बलं तदंशं ब्रह्मांशभूतं किमित्य
ग्रिमेणान्वयः ॥ ४९ ॥ दधीचेन तत्संज्ञकऋषिणा शिरसि कंडूयमाने सति त्वं संग्रामे समरुद्रणो जितस्त्वया कथं विस्मृतमित्यग्रिमेणान्वयः ॥ ५० ॥ अन्यावतारचरित
विस्मरणमास्तां तथापि हस्तगतवस्तुविस्मरणमनुचितमित्यभिवदति । चक्रपाणे यस्य विक्रमतस्तव प्रियं चक्रं कुतः प्राप्तं केन कृतमुत्पादितं तदपि त्वया विस्मृतमित्यग्रिमेणा
न्वयः ॥५१॥ रुद्रस्तामस इति तदुक्तं प्रतिवदति—ते मया इत्यादिना । ते तव सकला लोकाः मया भैरवेण गृहीताः संहृतास्तदानीमिति शेषः । त्वं निद्रापरवशः शेषे स्वपिषि

हरहारलतामध्ये मुग्ध कस्मान्न बुध्यसे ॥ विस्मृतं किं तदंशेन दंष्ट्रोत्पातनपीडितः ॥ ४७ ॥ वाराहविग्रहस्तेऽद्य साक्रोशं तारकारिणा ॥
दग्धोसि यस्य शूलाग्रे विष्वक्सेनच्छलाद्भवान् ॥ ४८ ॥ दक्षयज्ञे शिरश्छिन्नं मया ते यज्ञरूपिणः ॥ अद्यापि तव पुत्रस्य ब्रह्मणः पंचमं
शिरः ॥ ४९ ॥ छिन्नं तमेनाभिसंधं तदंशं तस्य तद्बलम् ॥ निर्जितस्त्वं दधीचेन संग्रामे समरुद्रणः ॥ ५० ॥ कंडूयमाने शिरसि कथं
तद्विस्मृतं त्वया ॥ चक्रं विक्रमतो यस्य चक्रपाणे तव प्रियम् ॥ ५१ ॥ कुतः प्राप्तं कृतं केन त्वया तदपि विस्मृतम् ॥ ते मया सकला
लोका गृहीतास्त्वं पयोनिधौ ॥ ५२ ॥ निद्रापरवशः शेषे स कथं सात्त्विको भवान् ॥ त्वदादिस्तंबपर्यंतं रुद्रशक्तिविजृंभितम् ॥ ५३ ॥
शक्तिमानभितस्त्वं च ह्यनलस्त्वं च मोहितः ॥ तत्तेजसोपि माहात्म्यं युवां द्रष्टुं न हि क्षमौ ॥ ५४ ॥ स्थूला ये हि प्रपश्यंति तद्विष्णोः
परमं पदम् ॥ द्यावापृथिव्या इंद्राग्नियमस्य वरुणस्य च ॥ ५५ ॥

स भवान् सात्त्विकः पालकमूर्तिः कथमित्यग्रिमेणान्वयः ॥ ५२ ॥ त्वदादिविष्ण्वादि स्तंबपर्यंतं तृणांतं रुद्रशक्त्या विजृंभितं विलसितमित्यर्थः ॥ ५३ ॥ मोहितस्त्वमनलोग्निश्च
अभितः शक्तिमान् रुद्रशक्त्या सामर्थ्ययुक्तः तत्तेजसो रुद्रतेजसः माहात्म्यं द्रष्टुं युवामग्नाविष्णू न हि क्षमावित्यन्वयः । एतदेवोक्तमहोवल्कमकभाष्ये
" समानप्रीतिसंयुक्तावग्नाविष्णू शिवार्चकौ ॥ वां महेशप्रसादेन द्युम्नैर्वाजभिराजतम् " इति ॥ ५४ ॥ ये स्थूलाः स्थूलदृष्टयो द्वैतवादिनस्तद्विष्णोः पदं परमं
प्रपश्यंतीत्यन्वयः । द्यावापृथिव्याः अदित्याः वामनरूपेण इंद्रस्य जयंतरूपेण अग्नेः कार्तिकेयरूपेण यमस्य धर्मराजस्य नारायणरूपेण वरुणस्य भृगुरूपेण " भृगुर्वै वारुणिः "
इति श्रुतेः । ' महर्षीणां भृगुरहम् ' इति गीतोक्तेश्च । शशांकस्य चंद्रस्य ध्वांतोदरे कलंकितोदरे बुधरूपेण जनित्वा उत्पद्य त्वं परमेश्वरोसि किमित्यग्रिमेणान्वयः ॥ ५५ ॥

महेश्वरः कालः महाकालः कालकालोतः उग्रस्य शिवस्य कलया अंशेन त्वं मृत्योरंतकस्य मृत्युः भविष्यसीत्यग्रिमेणान्वयः ॥ ५६ ॥ भविष्यच्छरभरूपमहिमानं वर्णयति—स्थिरधन्वेत्यादिना । स्थिरधन्वा मेरुधनुष्यः नास्ति वीरो यस्मादसौ अवीरः वीरो विक्रांत इत्यर्थः ॥ ५७ ॥ भीमो भयंकरोत एव ज्वरं तत्संज्ञकरोगमुपहस्ता उपहासकरः मृगाकारः पक्षी मृगपक्षी हिरण्मयः सुवर्णवर्णः अशेषजगतः शास्ता त्वं न चतुर्मुखश्च नैवेत्यन्वयः ॥ ५८ ॥ इत्थं पूर्वोक्तप्रकारं सर्वं समालोक्य आत्मानं नृसिंहरूपमात्मना संहर नोचेन्महाभैरवरूपिणः स्थाणोः रुद्रस्य क्रोधस्य वज्राशनिरिव मृत्युस्त्वेवं शरभरूपः पतिष्यतीत्यग्रिमेणान्वयः ॥ ५९ ॥ ६० ॥ शरभप्रादुर्भावं कथयति—अत्रांतर इत्यादिना । अत्रांतरे नृसिंहग्रहणावसर इत्यर्थः ॥ ६१ ॥ ६२ ॥ अनौपम्यमुपमारहितमित्यर्थः ॥ ६३ ॥ ततः सकलतेजोलयान्महा

ध्वांतोदरे शशांकस्य जनित्वा परमेश्वरः ॥कालोसि त्वं महाकालः कालकालो महेश्वरः ॥५६॥ अतस्त्वमुग्रकलया मृत्योर्मृत्युर्भविष्यासि ॥ स्थिरधन्वा क्षयो वीरो वीरो विश्वाधिकः प्रभुः ॥ ५७ ॥ उपहस्ता ज्वरं भीमो मृगपक्षिहिरण्मयः ॥ शास्ताशेषस्य जगतो न त्वं नैव चतुर्मुखः ॥ ५८ ॥ इत्थं सर्वं समालोक्य संहरात्मानमात्मना ॥ नो चेदिदानीं क्रोधस्य महाभैरवरूपिणः ॥ ५९ ॥ वज्राशनिरिवं स्थाणोस्त्वेवं मृत्युः पतिष्याति ॥ सूत उवाच ॥ इत्युक्तो वीरभद्रेण नृसिंहः क्रोधविह्वलः ॥६०॥ ननाद तनुवेगेन तं गृहीतुं प्रचक्रमे ॥ अत्रांतरे महाघोरं विपक्षभयकारणम् ॥ ६१ ॥ गगनव्यापि दुर्धर्षं शैवतेजःसमुद्भवम् ॥ वीरभद्रस्य तद्रूपं तत्क्षणादेव दृश्यते ॥ ६२ ॥ न ताद्धिरण्मयं सौम्यं न सौरं नाग्निसंभवम् ॥ न तडिच्चंद्रसदृशमनौपम्यं महेश्वरम् ॥ ६३ ॥ तदा तेजांसि सर्वाणि तस्मिन् लीनानि शांकरे ॥ ततोव्यक्तो महातेजा व्यक्ते संभवतस्ततः ॥६४॥ रुद्रसाधारणं चैव चिह्नितं विकृताकृति ॥ ततः संहाररूपेण सुव्यक्तः परमेश्वरः ॥६५॥ पश्यतां सर्वदेवानां जयशब्दादिमंगलैः ॥ सहस्रबाहुर्जटिलश्चंद्रार्धकृतशेखरः ॥ ६६ ॥ स मृगार्धशरीरेण पक्षाभ्यां चंचुना द्विजाः ॥ अतितीक्ष्णमहादंष्ट्रो वज्रतुल्यनखायुधः ॥ ६७ ॥

तेजाः अव्यक्तोऽस्पष्टस्ततस्तदनंतरं व्यक्ते शरभनृसिंहयोः स्पष्टरूपे संभवतः बभूवतुरित्यर्थः ॥ ६४ ॥ शरभरूपं सामान्यतो वर्णयाति—रुद्र इति । विकृताकृति भयंकरं रुद्रसाधारणं चैव रुद्रतुल्यमित्यर्थः । चिह्नितं संजाताचिह्नमभवादिति शेषः । ततस्तास्मिन् काले परमेश्वरो रुद्रः संहाररूपेण प्रलयकालिकरूपेण सुव्यक्तः प्रकटः पश्यतां सर्वदेवानां जयशब्दादिमंगलैर्युक्त इति शेषमादायाग्रिमेणान्वयः ॥ ६५ ॥ रौद्रशारभरूपं समग्रं वर्णयाति—सहस्रबाहुरित्यादिना ॥ ६६ ॥ मृगार्धशरीरेण पक्षाभ्यां चंचुना युक्त इति शेषः । द्विजा इति ऋषिसंबोधनम् ॥ ६७ ॥

कंठे कालः कृष्णवर्णः ॥ ६८ ॥ सममेककालं कुपिनाश्च ते वृत्ताग्नयः प्रलयाग्नयः कुपितवृत्ताग्नयस्तद्वद्व्यावृत्तं परिवर्तितं नयनत्रयं येन सः ॥ ६९ ॥ हरिर्नृसिंहस्तस्य शरभस्य दर्शनाद्विनष्टबलविक्रमः सहस्रांशोः सूर्यस्याधः और्म्यं प्राकाश्यं खद्योतविभ्रमं बिभ्रदहश्यत इति शेषः । " ऊर्मिस्तरंगपीडायां वेगभंगप्रकाशयोः " इति विश्वः ॥ ७० ॥ अथ हरः नाभिपादम् अभ्युदारयन् पक्षाभ्यां विभ्रम्य पुच्छेन पादौ बाहुभ्यां बाहुमंडलमावध्य उरसि भिंदन्सन् बाहुभ्यां हरिं जग्राहेत्यग्रिमेणान्वयः॥७१॥ ततो भगवान् शरभः उरगं यथा विहगो गरुडस्तथा सहसैव उड्डीयोड्डीय उत्क्षिप्योत्क्षिप्य निपात्य च भयात्पक्षाघातविमोहितं विष्णुं संगृह्य देवैर्महर्षिभिः सह गगनं जगामेति द्वितीयतृतीयस्थैरन्वयः ॥ ७२ ॥ ७३ ॥ हरिं नृसिंहं हरं तं वृषभं श्रेष्ठं विश्वेशानमीश्वरं तं शरभं सुराः अनुयांति सर्वे तत्रस्था नमोवाक्येन तुष्टुवुरित्यग्रिमेणा

**कंठे कालो महाबाहुश्चतुष्पाद्वह्निसंभवः ॥ युगांतोद्यतजीमूतभीमगंभीरनिःस्वनः ॥ ६८ ॥ समं कुपितवृत्ताग्निव्यावृत्तनयनत्रयः ॥ स्पष्टदंष्ट्राधरोष्ठश्च हुंकारेण युतो हरः ॥ ६९ ॥ हरिस्तद्दर्शनादेव विनष्टबलविक्रमः ॥ बिभ्रदौर्म्यं सहस्रांशोरधः खद्योतविभ्रमम् ॥ ७० ॥ अथ विभ्रम्य पक्षाभ्यां नाभिपादेभ्युदारयन् ॥ पादावाबध्य पुच्छेन बाहुभ्यां बाहुमंडलम् ॥ ७१ ॥ भिन्दन्नुरसि बाहुभ्यां निजग्राह हरो हरिम् ॥ ततो जगाम गगनं देवैः सह महर्षिभिः ॥ ७२ ॥ सहसैव भयाद्विष्णुं विहगश्च यथोरगम् ॥ उत्क्षिप्योत्क्षिप्य संगृह्य निपात्य च निपात्य च ॥ ७३ ॥ उड्डीयोड्डीय भगवान् पक्षाघातविमोहितम् ॥ हरिं हरन्तं वृषभं विश्वेशानं तमीश्वरम् ॥ ७४ ॥ अनुयांति सुराः सर्वे नमोवाक्येन तुष्टुवुः ॥ नीयमानः परवशो दीनवक्त्रः कृतांजलिः ॥ ७५ ॥ तुष्टाव परमेशानं हरिस्तं ललिताक्षरैः ॥ श्रीनृसिंह उवाच ॥ नमो रुद्राय शर्वाय महाग्रासाय विष्णवे ॥ ७६ ॥**

न्वयः ॥ ७४ ॥ हरिर्नीयमानः परवशोतः दीनवक्त्रः कृतांजलिः सन् परमेशानं तं शरभं ललितानि मनोहराण्यक्षराणि येषु तैर्नामभिस्तुष्टावेत्यग्रिमेणान्वयः ॥ ७५ ॥ श्रीनृसिंहोऽष्टाशतनामभिः स्तौति—नमो रुद्रायेत्यादिना । श्रीरुद्राध्यायस्थनमःपूर्वकचतुर्थ्यंतनामवन्निर्देशादत्र तत्समफलत्वं बोध्यम् । नामावल्या स्तवने तथा पुष्पादिसमर्पणे नमःशब्दांतपाठ एव शिष्टानुमतो ग्राह्यः । ॐ रुद्राय नमः १ रुत्प्रणवरूपः शब्दस्तेन अंतकाले काश्यामुपदेशेन राति स्वात्मरूपतां ददातीति रुद्रः । एतदेवोक्तमहोबलरुद्रभाष्ये " अथवा परमात्मानं रुत्या प्रणवरूपया । प्रतिपादयतीत्येवं रुद्रशब्दं प्रचक्ष्महे ॥ " इति । शर्वाय २ शृणाति जगद्धिनस्तीति शर्वः । महाग्रासाय ३ महान् जगद्रूपः ग्रासः कवलो यस्य स महाग्रासः । विष्णवे ४ वेवेष्टीति विष्णुः जगद्व्यापक इत्यर्थः ॥ ७६ ॥

उग्राय ५ उच्यति क्रुधा संबध्यत इति उग्रः ' उच समवाये ' इत्यस्यौणादिकमुग्र इति रूपम् । तदुक्तमहोबलेन " अभक्तनाशनोद्भूतक्रोधवानुग्र उच्यते" इति । भीमाय ६ बिभेति सर्वं जगदस्मादिति भीमः "भीषास्माद्वातः पवते" इति श्रुतेः। क्रोधाय ७ क्रुध्यति असत्कारिणं प्रति कोपविशिष्टो भवतीति क्रोधः । मन्यवे ८ मन्युरवबोधरूपो वा क्रतुरूपः 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः । भवाय ९ भवति सर्वमस्मादिति भवः । शर्वाय १० शरः हिंसकानपि वाति उत्तमगतिं गमयतीति शर्वः 'शृ–हिंसायाम्' अस्माद्विच 'वा–गतिगंधनयोः' अस्मादातोनुपसर्ग इति कः। शंकराय ११ शं कल्याणं करोतीति शंकरः कल्याणहेतुरित्यर्थः। अकृञोहेत्विति टः। शिवाय १२ शिवः कल्याण रूपस्तदुक्तमहोबलेन " शिवो निष्कल्मषो यद्वा सच्चिदानंदलक्षणः । यद्वा निर्धर्मिको यद्वा कल्याणात्मेति मन्महे " इति ॥ ७७ ॥ कालकालाय नमः १३ कालस्य मृत्योरपि कालो मृत्युरित्यर्थः । कालाय १४ कालः समयरूपः । महाकालाय १५ महानपरिमितः कालो यस्य स महाकालः । मृत्यवे १६ मारयतीति मृत्युः सर्वेषां प्राणहारकः । वीराय १७ वीरयति स्वभक्तान् रामादीन्विक्रमयतीति वीरः । वीरभद्राय १८ वीराणां भद्रं जयप्राप्तिरूपं कल्याणं यस्मादसौ वीरभद्रः । क्षयद्वीराय १९ क्षयति तत्क्षयद्वीरं पापं यस्मादसौ क्षयद्वीरः । वीरशब्दस्य पापवाचित्वं रुद्रभाष्ये श्रीविद्यारण्यैरुक्तम् । शूलिने २० शूली तत्संज्ञकायुधवान् ॥७८॥ महादेवाय २१ महांश्चासौ देवश्च महादेवः ।

**नम उग्राय भीमाय नमः क्रोधाय मन्यवे ॥ नमो भवाय शर्वाय शंकराय शिवाय ते ॥७७॥ कालकालाय कालाय महाकालाय मृत्यवे ॥**
**वीराय वीरभद्राय क्षयद्वीराय शूलिने ॥७८॥ महादेवाय महते पशूनां पतये नमः ॥ एकाय नीलकंठाय श्रीकण्ठाय पिनाकिने ॥ ७९ ॥**
**नमोनंताय सूक्ष्माय नमस्ते मृत्युमन्यवे ॥ पराय परमेशाय परात्परतराय ते ॥ ८० ॥**

सर्वदेवेषु पूज्यतम इत्यर्थः । महते २२ महानपरिच्छिन्नपरिमाणः सर्वव्यापक इत्यर्थः । पशूनां पतये २३ पशूनां ब्रह्मादीनां पतिः पालकः 'पतिः समास एव ' इति निषेधस्य षष्ठीयुक्तश्छंदसि वेत्यपवादादत्राप्रवृत्तिः। एकाय २४ एकोऽद्वितीय इत्यर्थः । " एकं सद्विप्रा बहुधा वदंति" इति श्रुतेः । नीलकंठाय २५ नीलः कृष्णवर्णः कण्ठो यस्य स नीलकंठः । श्रीकण्ठाय २६ श्रीः कण्ठे सन्निधाने यस्य स श्रीकण्ठः ' कण्ठो गले सन्निधाने ' इति विश्वः । पिनाकिने २७ पिनाकस्तत्संज्ञकं धनुर्यस्यास्तीति पिनाकी ॥७९॥ अनंताय २८ नास्त्यंतः पारो यस्य सोऽनंतः । सूक्ष्माय २९ सूक्ष्मो योगिभिरप्यदृश्यः । मृत्युमन्यवे ३० मृत्युर्मन्युः क्रोधो यस्य स मृत्युमन्युः अत एव " नमस्ते रुद्र मन्यवे" इति श्रुतौ प्रथमतो मन्योर्नमस्कारोभिहितः । पराय ३१ पृणाति पालयतीति परः सर्वपालक इत्यर्थः । परमेशाय ३२ परा चासौ मा च परमा मोक्षश्रीस्तस्या ईशः स्वामीत्यर्थः । परात्परतराय ३३ परात्परतरः सर्वश्रेष्ठो जीवरूपः । तदुक्तं भगवद्गीतायाम् " इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः" इति ॥ ८० ॥

परात्पराय ३४ पराज्जीवादपि परः उत्तमपुरुषरूपः । तदुक्तं भगवद्गीतायाम् " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः " इति । विश्वाय ३५ विश्वस्तत्संज्ञः अत एव सर्वनामसंज्ञा न । विश्वमूर्त्तये ३६ विश्वं जगन्मूर्तिर्यस्य स विश्वमूर्तिः । तथा च श्रुतिः " विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु " इति । विष्णुकलत्राय ३७ विष्णुः कलत्रं स्त्री यस्य स विष्णुकलत्रः । तदुक्तं कौर्मे दारुवनप्रवेशे " योऽनंतः पुरुषो योनि र्लोकानामव्ययो हरिः । स्त्रीवेषं विष्णुरास्थाय सोनुगच्छति शूलिनम् " इति । विष्णुक्षेत्राय ३८ विष्णुः क्षेत्रं बीजनिर्वापस्थानं यस्य स विष्णुक्षेत्रः। तदुक्तं पूर्वमस्मिन् " प्रकृति स्त्वं पुमान् रुद्रस्त्वयि वीर्यं समाहितम् । त्वन्नाभिपंकजाज्जातः पंचवक्त्रः पितामहः ॥ " इति । भानवे ३९ भासयतीति भानुः " यस्य भासा सर्वमिदं विभाति " इति श्रुतेः ॥ ८१ ॥ कैवर्ताय ४० कैवर्त्तः संसारसमुद्रतारकः । किराताय ४१ किरातोर्जुनप्रमादावसरे भिल्लरूपः । इयं कथा भारतादौ विस्तृता । महाव्याधाय ४२ । विध्यति मृगरूपिणं ब्रह्माणं बाणेनेति व्याधः। महान्पूज्यश्चासौ व्याधश्च महाव्याधः। श्याद्व्यधास्विति णः । शाश्वते ४३ शश्वन्निरंतरं भवतीति शश्वन्निरंतरं विद्यमान इत्यर्थः । अत्र शाश्वतशब्दाणिणजंतात्क्विप् । भैरवाय ४४ भीर्भयंकरः रवः शब्दो यस्य स स्वार्थे अण् भैरवः । शरण्याय ४५ शरणेषु शरणागतेषु साधुः शरण्यः । महाभैरवरूपिणे ४६

परात्पराय विश्वाय नमस्ते विश्वमूर्त्तये ॥ नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे ॥ ८१ ॥ कैवर्ताय किराताय महाव्याधाय शाश्वते ॥ भैरवाय शरण्याय महाभैरवरूपिणे ॥ ८२ ॥ नमो नृसिंहसंहर्त्रे कामकालपुरारये ॥ महापाशौघसंहर्त्रे विष्णुमायांतकारिणे ॥ ८३ ॥ त्र्यंबकाय त्र्यक्षराय शिपिविष्टाय मीढुषे ॥ मृत्युंजयाय शर्वाय सर्वज्ञाय मखारये ॥ ८४ ॥

महाभैरवं कालभैरवं रूपयति प्रशंसति तच्छीलो महाभैरवरूपी॥८२॥ नृसिंहसंहर्त्रे ४७ नृसिंहस्य तत्संज्ञकावतारस्य संहर्त्ता नाशक इत्यर्थः । कामकालपुरारये ४८ कामो मदनः कालो यमः पुराणि त्रिपुराणि तेषामरिर्नाशक इत्यर्थः । महापाशौघसंहर्त्रे ४९ महांतश्च ते पाशाः चतुर्विंशतितत्त्वरूपास्तेषामोघो निरंतरं प्रवाहस्तस्य संहर्ता विनाशक इत्यर्थः । विष्णुमायांतकारिणे ५० विष्णुमायांतं करोतिं तच्छीलः विष्णुमायांतकारी ॥ ८३॥ त्र्यंबकाय ५१ त्रीण्यंबकानि नयनानि यस्य स त्र्यंबकः ' अंबकं नयनं दृष्टिः' इति हलायुधः । त्र्यक्षराय ५२ त्रिषु भूतभविष्यद्वर्त्तमानकालेष्वक्षरो नाशशून्यः । शिपिविष्टाय ५३ शिपिषु पशुष्वपि विशतीति शिपिविष्टः । अत्रोक्तमहोबलरुद्रभाष्ये " यज्ञरूपः शिपिर्विष्णुः पशवः शिपयः स्मृताः । तदंतर्यामिरूपेण प्रविष्टः प्राणिषु प्रभुः " इति । मीढुषे ५४ मीढुषे भक्तकामाभिवर्षकायेत्यर्थः । मृत्युंजयाय ५५ मृत्युं जयतीति मृत्युंजयः । इयं कथा अत्रैव पूर्वमुक्ता संज्ञायां भृतृवृजीति खच् । शर्वाय ५६ शृणात्यखिलशब्दजातं युगपज्जानातीति शर्वः धातूनामनेकार्थत्वात् । सर्वज्ञाय ५७ सर्वं वस्तुमात्रं जानातीति सर्वज्ञः । मखारये ५८ मखस्य दक्षयज्ञस्यारिः शत्रुरित्यर्थः ॥ ८४ ॥

मखेशाय ५९ मखानामग्निष्टोमादीनामीशः प्रभुरित्यर्थः । वरेण्याय ६० वरयितुं योग्यो वरेण्यः । वह्निरूपिणे ६१ वह्निं रूपयति प्रशंसति तच्छीलः वह्निरूपी । महाघ्राणाय ६२ जिघ्रति गंधमुपादत्त इति घ्राणः। महान् पूज्यो घ्राणो वायुर्यस्मादसौ महाघ्राणः । जिह्वाय ६३ लिहति सर्वमास्वादयतीति जिह्वः 'लिह आस्वादने' इत्यस्य जिह्वेत्यौणादिकं रूप मुक्तममरव्याख्यायाम् । प्राणापानप्रवर्तिने ६४ प्राणापानौ तत्संज्ञकौ वायू प्रवर्त्तयति तच्छीलः प्राणापानप्रवर्ती ॥ ८५ ॥ त्रिगुणाय ६५ त्रयो गुणाः सत्त्वादयो यस्मादसौ त्रिगुणः। त्रिशूलाय ६६ त्रयाणां सत्त्वादीनां शूलो योगो यस्मादसौ त्रिशूलः " शूलं प्रहरणे मृत्यौ केतके रोगयोगयोः " इति विश्वः । गुणातीताय ६७ गुणेभ्यः अतीतो गुणातीतः निर्गुण इत्यर्थः। योगिने ६८ योगः समाधिरस्ति यस्य स योगी । संसाराय ६९ सम्यक् सातत्येन सरति गच्छतीति संसारः जगत्प्रवाहरूपः । प्रवाहाय ७० प्रकर्षेण वाहयति कर्मफलं प्रापयतीति प्रवाहः । महायंत्रप्रवर्तिने ७१ महायंत्रं जगदुत्पत्तिस्थितिलयचक्रं प्रवर्त्तयति तच्छीलः महायंत्रप्रवर्ती ॥ ८६ ॥ चंद्राग्निसूर्याय ७२ चंद्राग्निसूर्याणां समाहारस्तद्रूपः। मुक्तिवैचित्र्यहेतवे ७३ मुक्तीनां सालोक्यादीनां वैचित्र्यस्य अनेकरूपत्वस्य हेतुः कारणम् । वरदाय ७४ वरान् भक्ताभिलषितार्थान् ददातीति वरदः।

**मखेशाय वरेण्याय नमस्ते वह्निरूपिणे ॥ महाघ्राणाय जिह्वाय प्राणापानप्रवर्त्तिने ॥८५॥ त्रिगुणाय त्रिशूलाय गुणातीताय योगिने॥ संसाराय प्रवाहाय महायंत्रप्रवर्तिने ॥ ८६ ॥ नमश्चंद्राग्निसूर्याय मुक्तिवैचित्र्यहेतवे ॥ वरदायावताराय सर्वकारणहेतवे ॥ ८७ ॥ कपालिने करालाय पतये पुण्यकीर्त्तये ॥ अमोघायाग्निनेत्राय लकुलीशाय शंभवे ॥ ८८ ॥ भिषक्तमाय मुंडाय दंडिने योगरूपिणे ॥ मेघवाहाय देवाय पार्वतीपतये नमः ॥ ८९ ॥**

अवताराय ७५ अवतारयति दांभिकानधः पातयतीत्यवतारः । सर्वकारणहेतवे ७६ सर्वकारणं हेतुरिच्छा यस्य स सर्वकारणहेतुः ॥ ८७ ॥ कपालिने ७७ कपालं कूर्मकपालं यस्यास्तीति कपाली । इयं कथा अस्मिन्नेवोक्ता । करालाय ७८ करे अलः शेषसर्पो यस्य स करालः । शेषकंकणत्वमस्मिन्नेवाग्रे उक्तम् । पतये ७९ पतिरित्याख्यातः पतिः सर्वरक्षक इत्यर्थः ' पतिः समास एव ' इति घिसंज्ञानिषेधस्तु भर्तृवाचकस्यैवेत्यत्र घिसंज्ञा बोध्या । पुण्यकीर्तये ८० पुण्याः कीर्तयो यशांसि यस्य स पुण्यकीर्तिः ' कीर्तिः प्रसादयशसोः' इति विश्वः। अमोघाय ८१ अमोघः। कथंचित् स्मृतोप्यनिष्फल इत्यर्थः । अग्निनेत्राय ८२ अग्निः नेत्रे यस्य सोग्निनेत्रः । लकुलीशाय ८३ लकुलीशस्तत्संज्ञक कायावताररूपः। शंभवे ८४ शं सुखं भवत्यस्मादिति शंभुः ॥८८॥ भिषक्तमाय ८५ भिषक्तमो भवरोगनिवारकः ' भिषक्तमं त्वा भिषजां शृणोमि ' इति श्रुतेः। मुंडाय दंडिने ८६ मुंडाय मुंडितशिरसे दंडिने दंडविशिष्टाय दुर्वासोरूपायेत्यर्थः । योगरूपिणे ८७ योगं चित्तवृत्तिनिरोधं रूपयति प्रशंसति तच्छीलः योगरूपी । मेघवाहाय ८८ मेघस्तद्रूपो विष्णुः वाहो वाहनं यस्य स मेघवाहः। इयं कथाऽस्मिन्नेव पूर्वमुक्ता। देवाय ८९ दीव्यत इति देवः क्रीडमान इत्यर्थः। पार्वतीपतये ९० पार्वत्याः हैमवत्याः पतिर्भर्तेत्यर्थः ॥८९॥

अव्यक्ताय ९१ अव्यक्तोऽस्पष्ट इत्यर्थः। विशोकाय ९२ विगतः शोको यस्मादसौ विशोकः । स्थिराय ९३ स्थिरोऽचंचल इत्यर्थः । स्थिरधन्विने ९४ स्थिरमन्यैरचालनीयं धन्वमस्यास्तीति स्थिरधन्वी मेरुधनुरित्यर्थः। स्थाणवे ९५ तिष्ठंत्यस्मिन्निति स्थाणुः जगदाधारभूतः। कृत्तिवासाय ९६ कृत्तौ व्याघ्रांबरे वासो यस्य स कृत्तिवासः। पंचार्थहेतवे ९७ पंचार्थानां शब्दादीनां हेतुः कारणम् ॥ ९० ॥ वरदाय ९८ वरानावरकमायाविलासान् द्यति खंडयतीति वरदः । एकपादाय ९९ एकः पादश्चरणः अर्धनारीरूपत्वाद्यस्य स एकपादः समासांतविधेरनित्यत्वात् । यद्वा पद्यते ज्ञानिभिः प्राप्यत इति पादः एकश्चासौ पादश्चैकपादः । चंद्रार्धमौलिने १०० चंद्रार्धयुक्तः मौलिर्मुकुटोस्यास्तीति चंद्रार्धमौली व्रीह्यादित्वादिनिः। अध्वरराजाय १०१ अध्वरस्य राजेत्यध्वरराजः " आ वो राजानमध्वरस्य रुद्रम् " इति श्रुतेः । वयसां पतये २ वयसां पक्षिणां पतिः शरभरूपः ॥९१ ॥ योगीश्वराय ३ योगिनामीश्वरो योगीश्वरः योगप्रवर्तक इत्यर्थः । नित्याय ४ नित्यो ध्वंसाप्रतियोगीत्यर्थः । सत्याय ५ सत्योवितथरूपः " सत्यं ज्ञानमनंतं ब्रह्म " इति

अव्यक्ताय विशोकाय स्थिराय स्थिरधन्विने ॥ स्थाणवे कृत्तिवासाय नमः पंचार्थहेतवे ॥९०॥ वरदायैकपादाय नमश्चंद्रार्धमौलिने ॥ नमस्तेऽध्वरराजाय वयसां पतये नमः ॥ ९१ ॥ योगीश्वराय नित्याय सत्याय परमेष्ठिने ॥ सर्वात्मने नमस्तुभ्यं नमः सर्वेश्वराय ते ॥ ९२ ॥ एकद्वित्रिचतुःपंचकृत्वस्तेऽस्तु नमोनमः ॥ दशकृत्वस्तु साहस्रकृत्वस्ते च नमोनमः ॥ ९३ ॥ नमोपारिमितं कृत्वानंतकृत्वो नमोनमः ॥ नमोनमो नमो भूयः पुनर्भूयो नमोनमः ॥ ९४ ॥ सूत उवाच ॥ नाम्नामष्टशतेनैवं स्तुत्वामृतमयेन तु ॥ पुनस्तु प्रार्थयामास नृसिंहः शरभेश्वरम् ॥ ९५ ॥ यदायदा ममाज्ञानमत्यहंकारदूषितम् ॥ तदातदापनेतव्यं त्वयैव परमेश्वर ॥ ९६ ॥ एवं विज्ञापयन्प्रीतः शंकरं नरकेसरी ॥ नन्वशक्तो भवान् विष्णो जीवितांतं पराजितः ॥ ९७ ॥

श्रुतेः । परमेष्ठिने ६ परमे षड्गुणैश्वर्ये तिष्ठतीति परमेस्थः स्थः किदिति औणादिक इनिः स्थास्थिन् स्थूनामिति षत्वं तत्पुरुषे प्रकृत्याल्यलुक् परमेष्ठी । सर्वात्मने ७ सर्वेषामात्मा सर्वात्मा सर्वान्तर्यामीत्यर्थः । सर्वेश्वराय १०८ सर्वेषामीश्वरः स्वामी " ईश्वरः सर्वभूतानाम् " इति श्रुतेः ॥ ९२ ॥ नामाष्टशतकं समाप्तम् । ते पूर्वोक्तनामकाय एकद्वित्रिचतुःपंचकृत्वः एकादिपंचवारं नमः दशकृत्वः नमः सहस्रकृत्वश्च नमोस्त्वित्यन्वयः ॥ ९३ ॥ ९४ ॥ सूतोग्रिमवृत्तं कथयति–नाम्नामित्यादिना । अष्टशतेन अष्टाधिकशतेनेत्यर्थः । अमृतमयेन संसाररोगस्यामृतरूपेण स्तुत्वैव पुनः प्रार्थयामासेत्यग्रिमेणान्वयः ॥ ९५ ॥ ९६ ॥ एवं पूर्वोक्तप्रकारं शंकरं विज्ञापयन्नरकेसरी प्रीतः सात्त्विकांतःकरणः बभूवेति शेषः । ततो नृसिंहप्रार्थनानंतरं विष्णो त्वमशक्तोतः जीवितांतं पराजितो ननु वीरभद्र आहेति शेषः ॥ ९७ ॥

वीरभद्रस्ततः क्षणात्सर्वस्य विष्णोर्विग्रहं देहं तस्य वक्त्रशेषमात्रमंते यस्य स तद्वक्त्रशेषमात्रांतस्तं मंगं सर्पमाणं शुक्तिभिरस्थिभिः शित्यमतिशुभ्रं कृतत्वचमित्यर्थः। तदा तस्मिन् काले कृत्वा अतिष्ठादीति शेषमादायाग्रिमस्थैरन्वयः ॥ ९८ ॥ अथानंतरं ब्रह्मादयो ब्रह्मप्रमुखाः देवाः वीरभद्र त्वया दृशा अवलोकनेन पर्जन्येन पादपा इव जीविताः स्म इत्यग्रिमेणान्वयः ॥ ९९ ॥ " भीषास्माद्वातः पवते " इति याजुषश्रुत्यनुवादेन स्तुवंति–यस्येत्यादिना ॥ १०० ॥ ननु भीषास्मेत्यादिश्रुतिः परमेश्वरविषया तया मत्स्तवोऽनुपपन्न इति चेदाहुः–यदेत्यादिना । यदनिर्वाच्यं परं व्योम चिदाकाशं कलातीतं निष्कलं सदाशिवं भवं रुद्रं भगवन्षड्गुणैश्वर्यविशिष्ट वीरभद्र त्वां ब्रह्मवादिनो वदंतीत्यग्रिमेणान्वयः ॥ १॥ धातुको जगद्धारकस्तस्य भावो धातुत्वं तस्य वेदने वयं के एवासमर्था इत्यर्थः। परमेश्वरस्त्वं अस्माकमिति शेषः । रूपलावण्यवर्णने परमं धाम नेति विद्धीत्यन्वयः॥२॥

तद्वक्त्रशेषमात्रांतं कृत्वा सर्वस्य विग्रहम् ॥ शुक्तिशित्यं तदा मंगं वीरभद्रः क्षणात्ततः ॥ ९८ ॥ देवा ऊचुः ॥ अथ ब्रह्मादयः सर्वे वीरभद्र त्वया दृशा ॥ जीविताः स्मो वयं देवाः पर्जन्येनेव पादपाः ॥ ९९ ॥ यस्य भीषा दहत्यग्निरुदेति च रविः स्वयम् ॥ वातो वाति च सोसि त्वं मृत्युर्धावति पंचमः ॥ १०० ॥ यदव्यक्तं परं व्योम कलातीतं सदाशिवम् ॥ भगवंस्त्वामेव भवं वदंति ब्रह्मवादिनः ॥ १ ॥ के वयमेव धातुक्ये वेदने परमेश्वरः ॥ न विद्धि परमं धाम रूपलावण्यवर्णने ॥ २ ॥ उपसर्गेषु सर्वेषु त्रायस्वास्मान् गणाधिप ॥ एकादशात्मन् भगवान्वर्तते रूपवान् हरः ॥३॥ ईदृशान् तेऽवताराणि दृष्ट्वा शिव बहूंस्तमः ॥ कदाचित्संदिहेन्नास्मांस्त्वचिन्तास्तमया तथा॥४॥ गुंजागिरिवरतटामितरूपाणि सर्वशः ॥ अभ्यसंहर गम्यं ते न नीतव्यं परापरा ॥५॥ द्वे तनू तव रुद्रस्य वेदज्ञा ब्राह्मणा विदुः ॥ घोराप्यन्या शिवाप्यन्या ते प्रत्येकमनेकधा ॥ ६ ॥ इहास्मान्पाहि भगवन्नित्याहतमहाबलः ॥ भवता हि जगत्सर्वं व्याप्तं स्वेनैव तेजसा ॥ ७ ॥

एकादशात्मन्नेकादशरुद्ररूप भवानिति शेषः । भगवान् षड्गुणैश्वर्यविशिष्टो हरः रूपवान्विग्रहविशिष्टः वर्तत इत्यन्वयः ॥३ ॥ ईदृशान्बहूंस्तेऽवताराणि अवतारचरितानि दृष्ट्वा अस्मांस्तमः कदाचिन्न संदिहेत्संदेहं कुर्यात्तथा त्वच्चिंतास्तमया प्रनष्टा न स्यादिति शेषमादायान्वयः ॥ ४ ॥ सर्वशः सर्वाणि गुंजायुक्तो गिरिवरो गुंजागिरिवरस्तस्य तटवदमितानि रूपाणि अभि आसमंतात्संहर ते गम्यं प्रवेशयोग्यं जगदिदानीमिति शेषः । न नीतव्यं न नाशितव्यमित्यन्वयः ॥५॥ "तस्यैते तनुवौ घोरान्याशिवान्या " इति श्रुत्यनुवादेन स्तुवंति–द्वे तनू इति ॥ ६ ॥ ७ ॥

॥ ८ ॥ ब्रह्मा च इंद्रो विष्णुश्चैताः द्वितीयार्थे प्रथमा । सुरासुरान् सिंह इत्युपचेतसं भ्रांतांतःकरणं हरिं नृसिंहं च यतस्तनो निगृह्य तनुमष्टधा सूर्यादिरूपेण विभज्य सकलं विभर्षीत्यग्रिमेणान्वयः ॥ ९ ॥ अतः सकलधारणपोषकत्वादित्यर्थः ॥ ११० ॥ देवो वीरभद्रः विष्णोरात्यंतिकशिवाभेदं कथयति–यथेत्यादिना ॥ ११ ॥ एषः नृसिंहात्मा उभयाकारदेहः जगत्संहारं करोति तज्जगत्संहारं कारं तेन रूपेण प्रवृत्तः प्रकटः नरकेसरी नृसिंहः मद्भक्तिकांक्षिभिर्याजनीयः अवश्यं पूजनीयः तस्मै नृसिंहाय नमोस्त्विति शेषमा दायाग्रिमेणान्वयः ॥ १२ ॥ १३ ॥ एतावत्पूर्वोक्तमुक्त्वा वीरभद्रः सर्वभूतानां मध्ये अंतरधीयत अदर्शनं कृतवानित्यपश्यन्नित्यन्वयः ॥ १४ ॥ तदाप्रभृति तत्कालमारभ्य

ब्रह्मविष्ण्वींद्रचंद्रादि वयं च प्रमुखाः सुराः॥ सुरासुराः संप्रसूतास्त्वत्तः सर्वे महेश्वर॥८॥ ब्रह्मा च इंद्रो विष्णुश्च यमाद्या न सुरासुरान् ॥ ततो निगृह्य च हरिं सिंह इत्युपचेतसम्॥९॥यतो विभर्षि सकलं विभज्य तनुमष्टधा॥अतोस्मान्पाहि भगवन्सुरान्दानैरभीप्सितैः॥११०॥ उवाच तान् सुरान्देवो महर्षींश्च पुरातनान् ॥ यथा जले जलं क्षिप्तं क्षीरं क्षीरे घृतं घृते ॥ ११ ॥ एक एव तदा विष्णुः शिवलीनो न चान्यथा ॥ एष एव नृसिंहात्मा सदर्पश्च महाबलः॥ १२ ॥ जगत्संहारकारेण प्रवृत्तो नरकेसरी ॥ याजनीयो नमस्तस्मै मद्भक्तिसिद्धिकांक्षिभिः ॥ १३ ॥ एतावदुक्त्वा भगवान्वीरभद्रो महाबलः ॥ अपश्यन् सर्वभूतानां तत्रैवांतरधीयत ॥ १४ ॥ नृसिंहकृत्तिवसनस्तदाप्रभृति शंकरः ॥ वक्त्रं तन्मुण्डमालायां नायकत्वेन कल्पितम्॥१५॥ततो देवा निरातंकाः कीर्तयंतः कथामिमाम् ॥ विस्मयोत्फुल्लनयना जग्मुः सर्वे यथागतम् ॥ १६ ॥ य इदं परमाख्यानं पुण्यं वेदैः समन्वितम् ॥ पठित्वा शृणुते चैव सर्वदुःखविनाशनम् ॥ १७ ॥ धन्यं यशस्यमायुष्यमारोग्यं पुष्टिवर्धनम् ॥ सर्वविघ्नप्रशमनं सर्वव्याधिविनाशनम् ॥ १८ ॥ अपमृत्युप्रशमनं महाशांतिकरं शुभम् ॥ अरिचक्रप्रशमनं सर्वाधिप्रविनाशनम् ॥ १९ ॥ ततो दुःस्वप्नशमनं सर्वभूतनिवारणम् ॥ विषग्रहक्षयकरं पुत्रपौत्रादिवर्धनम्॥१२०॥ योगसिद्धिप्रदं सम्यक् शिवज्ञानप्रकाशकम् ॥ शेषलोकस्य सोपानं वांछितार्थैकसाधनम् ॥ २१ ॥

नृसिंहकृत्तिर्वसनमाच्छादनं यस्य स नृसिंहकृत्तिवसनः शंकरो रुद्रः अभवदिति शेषः । तद्वक्त्रं नृसिंहमुखं रुंडमालायां नायकत्वेन हारमध्यमणित्वेन कल्पितं कृतमित्यर्थः । "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" इति विश्वः ॥ १५ ॥ ततः शरभांतर्धानानंतरमित्यर्थः ॥ १६ ॥ आख्यानफलं कथयति–य इदमित्यादिना ॥ १७ ॥ आरोग्यं आरोग्यकरमित्यर्थः ॥ १८ ॥ १९ ॥ १२० ॥ शिष्यत इति शेषः । शाश्वतः शिवलोक इत्यर्थः ॥ २१ ॥

विष्णोर्माया निजस्वरूपाज्ञानरूपा तस्या निरसनं निवर्तकमित्यर्थः ॥२२॥ चिरेषु स्थिरप्रज्ञेषु उद्यमितेषु उत्सुकेषु भक्तेषु प्रकाशितव्यं तैर्भक्तैरेव पाठितव्यं चेत्यन्वयः ॥२३॥ ॥ २४ ॥ चोरव्याघ्राहिसिंहांतकृतः शरभस्य चरितमिति शेषः । राजभयेषु अन्योत्पातादिष्वत्र भूलोके पठेदिति तृतीयेनान्वयः ॥ २५ ॥ २६ ॥ अतः सर्वोपद्रवनाशकत्वा-दुल्कापातादिषु तत्र विद्वान् शिवभक्तः पठेदित्यन्वयः । सर्वस्तवफलं कथयति—य इत्यादिना ॥ २७ ॥ अनुचरो गण इत्यर्थः ॥ १२८ ॥ नृसिंहविजयः सांब वीरभद्रकृतो

विष्णुमायानिरसनं देवतापरमार्थदम् ॥ वांछासिद्धिप्रदं चैव ऋद्धिप्रज्ञादिसाधनम्॥२२॥ इदं तु शरभाकारं परं रूपं पिनाकिनः॥ प्रकाशितव्यं भक्तेषु चिरेषूद्यमितेषु च॥२३॥ तैरेव पठितव्यं च श्रोतव्यं च शिवात्मभिः ॥शिवोत्सवेषु सर्वेषु चतुर्दश्यष्टमीषु च॥२४॥पठेत्प्रतिष्ठाकालेषु शिवसन्निधिकारणम् ॥ चोरव्याघ्राहिसिंहांतकृतो राजभयेषु च ॥ २५ ॥ अन्यान्योत्पातभूकंपदवाग्निपांसुवृष्टिषु ॥ उल्कापाते महावाते विना वृष्ट्यातिवृष्टिषु ॥ २६ ॥ अतस्तत्र पठेद्विद्वाञ्छिवभक्तो दृढव्रतः ॥ यः पठेच्छृणुयाद्वापि स्तवं सर्वमनुत्तमम् ॥ २७ ॥ स रुद्रत्वं समासाद्य रुद्रस्यानुचरो भवेत् ॥ १२८ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शरभप्रादुर्भावो नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

ऋषय ऊचुः ॥ जलंधरं जटामौलिः पुरा जंभारिविक्रमम् ॥ कथं जघान भगवान् भगनेत्रहरो हरः ॥ १ ॥ वक्तुमर्हसि चास्माकं रोमहर्षण सुव्रत ॥ सूत उवाच ॥ जलंधर इति ख्यातो जलमंडलसंभवः ॥ २ ॥ आसीदंतकसंकाशस्तपसा लब्धविक्रमः ॥ तेन देवाः सगंधर्वाः सयक्षोरगराक्षसाः ॥ ३ ॥ निर्जिताः समरे सर्वे ब्रह्मा च भगवानजः ॥ जित्वैव देवसंघातं ब्रह्माणं वै जलंधरः ॥ ४ ॥ जगाम देवदेवेशं विष्णुं विश्वहरं गुरुम् ॥ तयोः समभवद्युद्धं दिवारात्रमविश्रमम् ॥ ५ ॥ जलंधरेशयोस्तेन निर्जितो मधुसूदनः ॥ जलंधरोपि तं जित्वा देवदेवं जनार्दनम् ॥ ६ ॥ प्रोवाचेदं दितेः पुत्रान् न्यायधीर्जेतुमीश्वरम् ॥ सर्वे जिता मया युद्धे शंकरो ह्यजितो रणे ॥ ७ ॥ तं जित्वा सर्वमीशानं गणपैर्नंदिना क्षणात् ॥ अहमेव भवत्वं च ब्रह्मत्वं वैष्णवं तथा ॥ ८ ॥

मया । शताष्टनामभिर्युक्तो व्याख्यातोस्तु जयाय नः ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षण्णवतितमोऽध्यायः ॥ ९६ ॥ सप्तनवतिसंख्याके रुद्रकृतसुदर्शनात् । जलंधरस्य तद्भिन्नावध्यस्य वध उच्यते ॥ ऋषयो जलंधरवधमपृच्छन्—जलंधरमित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ १० ॥ ११ ॥ अन्यैस्तद्भिन्नैरित्यर्थः ॥ १२ ॥ असुरेशान असुरस्वामिन्नित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ चंद्रांशुसन्निभैरतिशुभ्रैरथवातिशीतलैरित्यर्थः । अयं सार्धश्लोकः ॥ १६ ॥ भगवान् शिवः अनेनोत्पद्यमानसुदर्शनेन जगत्त्रयं सुराश्च अमरा अपि हताः हिंसिताः स्युरिति शेषः । इति स्मृत्वा अनेनाप्रतिहतत्वं सूच्यते अर्णवां

वासवत्वं च युष्माकं दास्ये दानवपुंगवाः ॥ जलंधरवचः श्रुत्वा सर्वे ते दानवाधमाः ॥ ९ ॥ जगर्जुरुच्चैः पापिष्ठा मृत्युदर्शनतत्पराः ॥ दैत्यैरेतैस्तथान्यैश्च रथनागतुरंगमैः ॥१०॥ सन्नद्धैः सह सन्नह्य शर्वं प्रति ययौ बली ॥ भवोपि दृष्ट्वा दैत्येंद्रं मेरुकूटमिव स्थितम् ॥ ११॥ अवध्यत्वमपि श्रुत्वा तथान्यैर्भगनेत्रहा ॥ ब्रह्मणो वचनं रक्षन् रक्षको जगतां प्रभुः ॥ १२ ॥ सांबः सनंदी सगणः प्रोवाच प्रहसन्निव ॥ किं कृत्यमसुरेशान युद्धेनानेन सांप्रतम् ॥१३॥ मद्बाणैर्भिन्नसर्वांगो मर्तुमभ्युद्यते मुदा ॥ जलंधरोपि तद्वाक्यं श्रुत्वा श्रोत्रविदारणम् ॥ १४ ॥ सुरेश्वरमुवाचेदं सुरेतरबलेश्वरः ॥ वाक्येनालं महाबाहो देवदेव वृषध्वज ॥ १५ ॥ चंद्रांशुसन्निभैः शस्त्रैर्हर योद्धुमिहागतः ॥ निशम्यास्य वचः शूली पादांगुष्ठेन लीलया ॥ महांभसि चकाराशु रथांगं रौद्रमायुधम् ॥ १६ ॥ कृत्वार्णवांभसि सितं भगवान् रथांगं स्मृत्वा जगत्त्रयमनेन हताः सुराश्च ॥ दक्षांधकांतकपुरत्रययज्ञहर्ता लोकत्रयांतककरः प्रहसंस्तदाह ॥ १७ ॥ पादेन निर्मितं दैत्य जलंधर महार्णवे ॥ बलवान् यदि चोद्धर्तुं तिष्ठ योद्धुं न चान्यथा॥१८॥ तस्य तद्वचनं श्रुत्वा क्रोधेनादीप्तलोचनः॥ प्रदहन्निव नेत्राभ्यां प्राहालोक्य जगत्त्रयम् ॥ १९ ॥ जलंधर उवाच ॥ गदामुद्धृत्य हत्वा च नंदिनं त्वां च शंकर ॥ हत्वा लोकान्सुरैः सार्धं डुंडुभान् गरुडो यथा ॥ २० ॥ हंतुं चराचरं सर्वं समर्थोहं सवासवम् ॥ को महेश्वर मद्बाणैरच्छेद्यो भुवनत्रये ॥ २१ ॥ बालभावे च भगवान् तपसैव विनिर्जितः ॥ ब्रह्मा बली यौवने वै मुनयः सुरपुंगवैः ॥ २२ ॥ दग्धं क्षणेन सकलं त्रैलोक्यं सचराचरम् ॥ तपसा किं त्वया रुद्र निर्जितो भगवानपि ॥ २३ ॥

भसि समुद्रजले सितं शुभ्रं रथांगं चक्रं कृत्वा तदा प्रहसन्नाहेत्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ डुंडुभान्निर्विषसर्पानित्यर्थः ॥ २० ॥ २१ ॥ भगवान् विष्णुः सुरपुंगवैः सह मुनयः ब्रह्मा च यौवने विनिर्जित इत्यन्वयः ॥ २२ ॥ रुद्र त्वया भगवान् विष्णुरपि तपसा निर्जितः किं न निर्जित इत्यर्थः ॥ २३ ॥

पक्षिपतेर्गरुडस्य ॥ २४ ॥ गणेश्वर शंकर दिवि भूमौ च प्रतिरथमिति शेषः । न लब्ध्वा मम बाहवः समस्तान् पर्वतान् प्राप्य घर्षिता आसन्निति शेषः ॥ २५ ॥ घर्षितो मंदरगाद्रिरापतत् पपातेत्यर्थः ॥ २६ ॥ दिवौकसां वज्रः मम नारीणां भृत्यैर्बद्ध इत्यन्वयः ॥ २७ ॥ वडवायाः सामुद्रवाडवाग्नेरित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ एवं पूर्वोक्तप्रकारं सगर्वमुक्तो महादेवः नेत्राग्निभागैककलार्धार्धेन चाकुलं तदा तस्मिन्नेव काले तस्य जलंधरस्य रथं प्रादहदित्यन्वयः ॥ ३२ ॥ त्रिपुररिपोः रुद्रस्य निरी

इंद्राग्नियमवित्तेशवायुवारीश्वरादयः ॥ न सेहिरे यथा नागा गंधं पक्षिपतेरिव ॥ २४ ॥ न लब्ध्वा दिवि भूमौ च बाहवो मम शंकर ॥ समस्तान्पर्वतान्प्राप्य घर्षिताश्च गणेश्वर ॥ २५ ॥ गिरींद्रो मंदरः श्रीमान्नीलो मेरुः सुशोभनः ॥ घर्षितो बाहुदंडेन कंडूनोदार्थमापतत् ॥ २६ ॥ गंगा निरुद्धा बाहुभ्यां लीलार्थं हिमवद्गिरौ ॥ नारीणां मम भृत्यैश्च वज्रो बद्धो दिवौकसाम् ॥ २७ ॥ वडवाया मुखं भग्नं गृहीत्वा वै करेण तु ॥ तत्क्षणादेव सकलं चैकार्णवमभूदिदम् ॥२८॥ ऐरावतादयो नागाः क्षिप्ताः सिंधुजलोपरि ॥ सरथो भगवानिंद्रः क्षिप्तश्च शतयोजनम् ॥ २९ ॥ गरुडोपि मया बद्धो नागपाशेन विष्णुना ॥ उर्वश्याद्या मया नीता नार्यः कारागृहांतरम् ॥ ३० ॥ कथंचिल्लब्धवान् शक्रः शचीमेकां प्रणम्य माम् ॥ मां न जानासि दैत्येंद्रं जलंधरमुमापते ॥३१॥ सूत उवाच ॥ एवमुक्तो महादेवः प्रादहद्वै रथं तदा ॥ तस्य नेत्राग्निभागैककलार्धार्धेन चाकुलम् ॥३२॥ दैत्यानामतुलबलैर्हयैश्च नागैर्दैत्येंद्रास्त्रिपुररिपोर्निरीक्षणेन ॥ नागाद्वैशसमनुसंवृतश्च नागैर्देवेशं वचनमुवाच चाल्पबुद्धिः ॥ ३३ ॥ किं कार्यं मम युधि देवदैत्यसंघैर्हंतुं यत्सकलमिदं क्षणात्समर्थः ॥ यत्तस्माद्भयमिह नास्ति योद्धुमीश वांछैषा विपुलतरा न संशयोत्र ॥ ३४ ॥ तस्मात्त्वं मम मदनारिदक्षशत्रो यज्ञारे त्रिपुररिपो ममैव वीरैः ॥ भूतेंद्रैर्हरिवदनेन देवसंघैर्योद्धुं ते बलमिह चास्ति चेद्धि तिष्ठ ॥३५॥ इत्युक्त्वाथ महादेवं महादेवारिनंदनः ॥ न चचाल न सस्मार निहतान्बांधवान् युधि ॥ ३६ ॥ दुर्मदेनाविनीतात्मा दोर्भ्यामास्फोट्य दोर्बलात् ॥ सुदर्शनाख्यं यच्चक्रं तेन हंतुं समुद्यतः ॥ ३७ ॥

क्षणेन दैत्यानामतुलबलैर्हयैश्च नागैः सह दैत्येंद्राः क्षणेन दग्धा इति शेषः । नागैर्गजैरनुसंवृतोल्पबुद्धिर्जलंधरो वैशसं नागाच्च परं देवेशं वचनमुवाचेत्यन्वयः ॥ ३३ ॥ ३४ ॥ भूतेन्द्रैर्गणाधिपैर्हरिवदनेन नंदिना देवसंघैर्मम वीरैरेव योद्धव्यमिति शेषः । ते बलमस्ति चेदिह योद्धुं तिष्ठेत्यन्वयः ॥ ३५ ॥ ३६ ॥ दोर्भ्यामास्फोट्य बाहुशब्दं कृत्वेत्यर्थः । हंतुं समुद्यतः तद्रुद्रनिर्मितं सुदर्शनाख्यं चक्रं कृच्छ्रेणापि स्कंधे दोर्बलात्स्थापयामास वै दुर्धरेण तेन रथांगेन द्विधाभूतश्च वै इत्यग्रिमेणान्वयः ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ महारौरवं तत्संज्ञकनरकमित्यर्थः ॥ ४१ ॥ अध्यायफलं कथयति-य इत्यादिना ॥ ४२ ॥ गाणपत्यं शिवगणस्वामित्वमित्यर्थः ॥ ४३ ॥ सुदर्शनाख्यरथांगाद्भमि रचिताज्जलंधरं दैत्यम् । हत्वा देवः मांवे। जयशब्दैः संस्तुतोस्तु नो भूत्यै ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां सप्तनवतितमोऽध्यायः ॥९७ ॥

दुर्धरेण रथांगेन कृच्छ्रेणापि द्विजोत्तमाः ॥ स्थापयामास वै स्कंधे द्विधाभूतश्च तेन वै ॥ ३८ ॥ कुलिशेन यथा छिन्नो द्विधा गिरिवरो द्विजाः ॥ पपात दैत्यो बलवानंजनाद्रिरिवापरः ॥ ३९ ॥ तस्य रक्तेन रौद्रेण संपूर्णमभवत्क्षणात् ॥ तद्रक्तमखिलं रुद्रनियोगान्मांसमेव च ॥४०॥ महारौरवमासाद्य रक्तकुंडमभूद्द्विजाः ॥ जलंधरं हतं दृष्ट्वा देवगंधर्वपार्षदाः ॥ ४१ ॥ सिंहनादं महत्कृत्वा साधु देवेति चाब्रुवन् ॥ यः पठेच्छृणुयाद्वापि जलंधरविमर्दनम् ॥ ४२ ॥ श्रावयेद्वा यथान्यायं गाणपत्यमवाप्नुयात् ॥ ४३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे जलंधरवधो नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ ऋषय ऊचुः ॥ कथं देवेन वै सूत देवदेवान्महेश्वरात् ॥ सुदर्शनाख्यं वै लब्धं वक्तुमर्हसि विष्णुना ॥ १ ॥ सूत उवाच ॥ देवानामसुरेंद्राणामभवच्च सुदारुणः ॥ सर्वेषामेव भूतानां विनाशकरणो महान् ॥ २ ॥ ते देवाः शक्तिमुशलैः सायकैर्नतपर्वभिः ॥ प्रभिद्यमानाः कुंतैश्च दुद्रुवुर्भयविह्वलाः ॥ ३ ॥ पराजितास्तदा देवा देवदेवेश्वरं हरिम् ॥ प्रणेमुस्तं सुरेशानं शोकसंविग्नमानसाः॥४॥ तान् समीक्ष्याथ भगवान् देवदेवेश्वरो हरिः ॥ प्रणिपत्य स्थितान्देवानिदं वचनमब्रवीत् ॥ ५ ॥ वत्साः किमिति वै देवाश्च्युतालंकारविक्रमाः ॥ समागताः ससंतापा वक्तुमर्हथ सुव्रताः ॥ ६ ॥ तस्य तद्वचनं श्रुत्वा तथाभूताः सुरोत्तमाः ॥ प्रणम्याहुर्यथावृत्तं देवदेवाय विष्णवे ॥ ७ ॥ भगवन्देवदेवेश विष्णो जिष्णो जनार्दन ॥ दानवैः पीडिताः सर्वे वयं शरणमागताः ॥ ८ ॥ त्वमेव देवदेवेश गतिर्नः पुरुषोत्तम ॥ त्वमेव परमात्मा हि त्वं पिता जगतामपि ॥ ९ ॥

अष्टनवतिसंख्याके सहस्रैर्नामभिः स्तवात् । स्वनेत्रार्पणतो विष्णोश्चक्रलाभश्च शंकरात् ॥ ऋषयो विष्णोश्चक्रलाभवृत्तमपृच्छन्-कथमिति ॥ १ ॥ देवानामसुरेंद्राणामभवच्च सुदारुणः भयंकरः संग्राम इति शेषः । अभवदित्यन्वयः॥२-५॥ अलंकाराः भूषणानि विक्रमाश्चालंकारविक्रमाः च्युताः गलिताः अलंकारविक्रमा येषां ते च्युतालंकारविक्रमाः ॥६-९॥

॥१०॥११॥ वार्षिकैः पार्जन्यैरित्यर्थः॥१२ ॥१३॥ दधीचेन तत्संज्ञकऋषिणेत्यर्थः । दंडं ब्रह्मदण्डं शार्ङ्गं तत्संज्ञं तवायुधं च दैत्यैः प्रसादतः ब्रह्मप्रसादाल्लब्धमित्यन्वयः ॥ १४-१९ ॥ सुरश्रेष्ठं शिवमित्यर्थः ॥ २० ॥ २१ ॥ रौद्रेण रुद्रसूक्तेनेत्यर्थः ॥ २२ ॥ २३ ॥ देवं शिवं भवाद्येन नाम्नां सहस्रेण यथाक्रमं क्रममनतिक्रम्येत्यर्थः ।

त्वमेव भर्ता हर्ता च भोक्ता दाता जनार्दन ॥ हंतुमर्हसि तस्मात्त्वं दानवान्दानवार्दन ॥ दैत्याश्च वैष्णवैर्ब्राह्मै रौद्रैर्याम्यैः सुदारुणैः ॥ कौबेरैश्चैव सौम्यैश्च नैर्ऋत्यैर्वारुणैर्दृढैः ॥ ११ ॥ वायव्यैश्च तथाग्नेयैरैशानैर्वार्षिकैः शुभैः ॥ सौरै रौद्रैस्तथा भीमैः कंपनैर्जृंभणैर्दृढैः ॥ १२ ॥ अवध्या वरलाभात्ते सर्वे वारिजलोचन ॥ सूर्यमंडलसंभूतं त्वदीयं चक्रमुद्यतम् ॥ १३ ॥ कुंठितं हि दधीचेन च्यावनेन जगद्गुरो ॥ दंडं शार्ङ्गं तवास्त्रं च लब्धं दैत्यैः प्रसादतः ॥ १४ ॥ पुरा जलंधरं हंतुं निर्मितं त्रिपुरारिणा ॥ रथांगं सुशितं घोरं तेन तान् हंतुमर्हसि॥ १५॥ तस्मात्तेन निहंतव्या नान्यैः शस्त्रशतैरपि॥ ततो निशम्य तेषां वै वचनं वारिजेक्षणः॥१६॥ वाचस्पतिमुखानाह स हरिश्चक्रभृत् स्वयम् ॥ श्रीविष्णुरुवाच ॥ भोभो देवा महादेवं सर्वैर्देवैः सनातनैः ॥१७॥ संप्राप्य सांप्रतं सर्वं करिष्यामि दिवौकसाम्॥ देवा जलंधरं हंतुं निर्मितं हि पुरारिणा॥लब्ध्वा रथांगं तेनैव निहत्य च महासुरान् ॥ सर्वान्धुन्धुमुखान्दैत्यानष्टषष्टिशतान् सुरान्॥१९॥सबांधवान्क्षणादेव युष्मान् संतारयाम्यहम् ॥ सूत उवाच ॥ एवमुक्त्वा सुरश्रेष्ठान् सुरश्रेष्ठमनुस्मरन्॥२०॥ सुरश्रेष्ठस्तदा श्रेष्ठं पूजयामास शंकरम् ॥ लिंगं स्थाप्य यथान्यायं हिमवच्छिखरे शुभे ॥ २१ ॥ मेरुपर्वतसंकाशं निर्मितं विश्वकर्मणा ॥ त्वरिताख्येन रुद्रेण रौद्रेण च जनार्दनः ॥ २२ ॥ स्नाप्य संपूज्य गंधाद्यैर्ज्वालाकारं मनोरमम् ॥ तुष्टाव च तदा रुद्रं संपूज्याग्नौ प्रणम्य च ॥ २३ ॥ देवं नाम्नां सहस्रेण भवाद्येन यथाक्रमम् ॥ पूजयामास च शिवं प्रणवाद्यं नमोंतकम् ॥ २४ ॥ देवं नाम्नां सहस्रेण भवाद्येन महेश्वरम् ॥ प्रतिनाम सपद्मेन पूजयामास शंकरम् ॥ २५ ॥

प्रणवादिनमोंतकं यथा स्यात्तथा पूजयामासेत्यन्वयः । अत एव सर्वसहस्रनामादिनामावलीषु प्रणवादिनमोंतपाठ एव शिष्टैरेतदतिदेशादादृीयते नन्वतिदेशे हि प्रकृतिवद्विकृतिर्भवतीतिवच्छ्रौतं प्रमाणमपेक्षितमिति चेत् "तस्माद्यच्छ्रेयान्करोति तत्पापीयान्करोति" इति श्रुतिप्रमाणं ज्ञेयम् ॥ २४ ॥ २५ ॥

॥ २६॥ विष्णुनैतत्सहस्रनामभिः पूजाहोमस्तुतिकरणादेष्वस्य मुख्यत्वं ज्ञेयम् । नाम्नां सहस्रं कथयति–भव इत्यादिना । अस्य सहस्रनाम्नः श्रीशंकरो देवता विष्णुर्ऋषिरनुष्टुप् छंदः पूजादौ विनियोगो ज्ञेयः । अत्र केषांचिन्नाम्नां समानानुपूर्विकत्वेप्यर्थभेदान्न पौनरुक्त्यं ब्रह्म यथाऽनंतमपारं तद्वदेव शाब्दब्रह्म । तदुक्तं भागवतैकादशस्कंधे " शाब्द ब्रह्म सुदुर्बोधं मनोवाचामगोचरम् । अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत् ॥ " इति । तथा च यावदर्थज्ञानलेखनेऽशक्येऽतः प्रसिद्धार्थप्रदर्शनेन नामानि व्याख्यायंते । अत्र नमोंतविधेरुक्तत्वात्तद्योगे नमः स्वस्तीत्यनेन विहितचतुर्थ्यंतरूपाणि अविदुषामपि स्फुटप्रतिपत्त्यर्थं प्रदर्श्यंते । अत्र विष्ण्वादिवाचकसर्वशब्दैः सर्वांतर्यामी शिव एव प्रतिपाद्यते । तथा च श्रुतिः " यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् " इति । एतदेवोक्तमादित्य पुराणे " स एवात्मा समस्तानां जंतूनां मनुजाधिप ॥ चैतन्यरूपो भगवान् महादेवः सहोमया ॥ एकोपि बहुधा भाति लीलया केवलः शिवः ॥ ब्रह्मविष्ण्वादिरूपेण देवदेवो महेश्वरः ॥ " इति । अत्र सहस्रसंख्यानुरोधेन कचित्संयुक्तविशेष्यविशेषणभावाः नामसु प्रदर्श्यंते १ ॐ भवाय शिवाय नमः भवंति जगत्सर्गोदयो यस्मादसौ भवस्तस्मै

**अग्नौ च नामभिर्देवं भवाद्यैः समिदादिभिः ॥ स्वाहांतैर्विधिवद्धुत्वा प्रत्येकमयुतं प्रभुम् ॥२६॥ तुष्टाव च पुनः शंभुं भवाद्यैर्भवमीश्वरम् ॥ श्रीविष्णुरुवाच ॥ भवः शिवो हरो रुद्रः पुरुषः पद्मलोचनः ॥ २७ ॥ अर्थितव्यः सदाचारः सर्वशंभुर्महेश्वरः ॥ ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् ॥ २८ ॥**

शिवाय सच्चिदानंदरूपतुर्यायेत्यर्थः " शिवमद्वैतं तुरीयं मन्यंते " इति श्रुतेः । अत्रोक्तमहोबलरुद्रभाष्ये " वस्तुतः शिवशब्दार्थो ब्रह्माद्यैरपि तत्त्वतः ॥ नैव ज्ञातस्तदर्थांतः स यो ज्ञातुं न शक्यते ॥ परं तु शिवशब्दार्थः शिवः सर्वोत्तमोत्तमः ॥ जानाति तत्त्वतो यस्मात्स स्वतस्तत्त्ववित्तमः ॥ " इति । २ हराय रुद्राय नमः हरति जगत्संहारं करोतीति हरस्तस्मै रुज्जन्ममरणादिदुःखं द्रावयतीति रुद्र इत्यर्थः । ३ पुरुषाय पुरुषो विष्णुरूपः 'सहस्रशीर्षा पुरुषः' इति श्रुतेः ४ पद्मलोचनाय पद्मानि लोचयति विकासयतीति पद्मलोचनः सूर्यरूपः ॥ २७ ॥ ५ अर्थितव्याय अर्थितुं सर्वारंभादौ प्रार्थितुं योग्योर्थितव्यो गजाननरूप इत्यर्थः । ६ सदाचाराय सदा सर्वकालम् आ अनुलक्षण चारः संचरणं यस्य स सदाचारः प्रधानप्रकृतिशिवारूप इत्यर्थः । ७ सर्वशंभुमहेश्वराय सर्वं शं भवति येभ्यस्ते सर्वशंभवो रुद्रास्तेषां महेश्वरः पूज्यः स्वामीत्यर्थः । ८ ईश्वराय ईश्वरः सकलविभवैराढ्य इत्यर्थः ' ईश्वरो विभवैराढ्यः ' इति विश्वः । ९ स्थाणवे स्थाणुर्गमनागमनशून्यः " वृक्ष इव स्तब्धो दिवि तिष्ठति " इति श्रुतेः १० ईशानाय ईशानः सकलविद्याप्रभुः " ईशानः सर्वविद्यानाम् " इति श्रुतेः ११ सहस्राक्षाय सहस्रपदे अपरिमितनयनचरण इत्यर्थः " सहस्राक्षः सहस्रपात् " इति श्रुतेः ॥ २८ ॥

१२ वरीयसे । अतिशयेनोरुः वरीयान् अतिमहानित्यर्थः । उरुशब्दादतिशयेर्थे 'द्विवचनविभज्येतीयसुनि प्रियस्थिरेत्यादिना' वरित्यादेशः । १३ वरदाय वंद्याय । वरान् भक्ताभिलषितार्थान् ददातीति वरदस्तस्मै अत एव वंद्योभिवाद्य इत्यर्थः । १४ शंकराय । शं कल्याणं करोति तच्छीलः शंकरः कृञो हेत्विति टः । १५ परमेश्वराय । परा मा येषां ते परमाः विष्णवादयस्तेषामीश्वरः स्वामीत्यर्थः । १६ गंगाधराय । गंगायाः भागीरथ्याः धरो धारक इत्यर्थः पचाद्यच् । १७ शूलधराय । शूलस्य तत्संज्ञकायुधस्य धरः शूलधर इत्यर्थः । १८ परार्थैकप्रयोजनाय । परार्थः स्वभक्तार्थ एव एकं प्रयोजनं यस्य स परार्थैकप्रयोजनः ॥ २९ ॥ १९ सर्वज्ञाय । सर्वं वस्तुजातं जानाति युगपत्पश्यतीति सर्वज्ञः । २० सर्वदेवादिगिरिधन्वने । सर्वदेवादिर्विष्णुस्तद्रूपो गिरिर्मेरुः धनुर्यस्य स सर्वदेवादिगिरिधन्वा धनुषश्चेति समासांतोऽनङ् ' मेरुः शिखरिणामहम्' इति भगवद्गीतोक्तेः । २१ जटाधराय । जटानां लम्बकचानां धरो जटाधरः । २२ चंद्रापीडाय । चंद्रः आपीडः शिखाक्षिप्तं कुसुमं यस्य स चंद्रापीडः "यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ" इत्यमरः । २३ चंद्रमौलये । चंद्रः मौलौ मुकुटे यस्य स चंद्रमौलिः । २४ विदुषे । वेत्तीति विद्वान्सर्वज्ञ इत्यर्थः । २५ विश्वामरेश्वराय । विश्वे सर्वे च

**वरीयान् वरदो वंद्यः शंकरः परमेश्वरः ॥ गंगाधरः शूलधरः परार्थैकप्रयोजनः ॥ २९ ॥ सर्वज्ञः सर्वदेवादिगिरिधन्वा जटाधरः ॥ चंद्रापीडश्चंद्रमौलिर्विद्वान्विश्वामरेश्वरः ॥ ३० ॥ वेदांतसारसंदोहः कपाली नीललोहितः ॥ ध्यानाधारोपरिच्छेद्यो गौरीभर्ता गणेश्वरः ॥ ३१ ॥ अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ॥ ३२ ॥**

ते अमराश्च विश्वामराः तेषामीश्वरः स्वामीत्यर्थः ॥ ३० ॥ २६ वेदांतसारसंदोहाय । वेदांतसारस्य संदोहः प्रपूरणं यस्मात्स वेदांतसारसंदोहः । २७ कपालिने नीललोहिताय । कपालं कूर्मकपालं यस्यास्तीति कपाली तस्मै नीललोहिताय रुद्ररूपायेत्यर्थः । २८ ध्यानाधाराय । ध्यानं प्रत्ययैकतानता तस्याधारोऽधिकरणमित्यर्थः । तदुक्तं योगसूत्रे "तत्र प्रत्ययैकतानता ध्यानम्" इति । २९ अपरिच्छेद्याय । अपरिच्छेद्यो व्यापकत्वाद्देशकालपरिच्छेदानर्ह इत्यर्थः । ३० गौरीभर्त्रे । गौर्याः पार्वत्याः भर्ता पतिरित्यर्थः ३१ गणेश्वराय । गणस्य पंचविंशतितत्त्वगणस्य ईश्वरः स्वामीत्यर्थः ॥ ३१॥ ३२ अष्टमूर्तिर्विश्वमूर्तये । अष्टावर्कादयो मूर्तयो यस्य सोष्टमूर्तिरत एव विश्वं तद्रूपं जगन्मूर्तिस्तनुर्यस्य सोष्टमूर्तिर्विश्वमूर्तिः । ३३ त्रिवर्गाय । त्रिवर्गो धर्मकामार्थरूपः । ३४ स्वर्गसाधनाय स्वर्गः साध्यतेनेनेति स्वर्गसाधनः क्रतुरूप इत्यर्थः ।३५ ज्ञानगम्याय ज्ञानादेव गम्यः प्राप्यो ज्ञानगम्यः कैवल्यरूपः "ज्ञानादेव तु कैवल्यम्" इतिश्रुतेः ।३६ दृढप्रज्ञाय । दृढा अचंचला प्रज्ञा बुद्धिर्यस्मादसौ दृढप्रज्ञः । ३७ देवदेवाय । देवानिंद्रादीन्देवयति क्रीडयतीति देवदेवः । ३८ त्रिलोचनाय । त्रीणि लोचनानि यस्य स त्रिलोचनः ॥ ३२ ॥

३९ वामदेवाय वामदेवस्तत्संज्ञकः " वामदेवाय नमः " इति श्रुतेः । ४० महादेवाय । महान्पूज्यश्चासौ देवश्च महादेवः । ४१ पांडवे । पांडुः शुभ्रवर्णः । ४२ परिदृढाय परितः सर्वतः दृढः बलवानित्यर्थः । ४३ अदृढाय अः विष्णुर्दृढः बलवान् यस्मादसावदृढः । ४४ विश्वरूपाय विश्वस्मिन् रूप्यते प्रशस्यत इति विश्वरूपः । ४५ विरूपाक्षाय । विविधानि रूपाणि येषां तानि सोमसूर्याग्निरूपाण्यक्षीणि यस्य स विरूपाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । ४६ वागीशाय वाचामीशो वागीशः ४७ शुचये शुचिः शुद्ध इत्यर्थः । ४८ अंतराय अंतरः सर्वावधिरूपः " अंतरम् आत्मांतर्धिविनात्मीयबहिर्मध्यावधिष्वपि " इति विश्वः ॥ ३३ ॥ ४९ सर्वप्रणयसंवादिने सर्वप्रणयान् सकलनीतिशास्त्राणि संवदति तच्छीलः सर्वप्रणयसंवादी । ५० वृषांकाय वृषो नंदीकेश्वरः अंकश्चिह्नं यस्य स वृषांकः । ५१ वृषवाहनाय वृषो नन्दीकेश्वरः वाहनं यस्य स वृषवाहनः । ५२ ईशाय पिनाकिने ईशः सकलनियंता तस्मै पिनाकिने पिनाकसंज्ञकधनुर्विशिष्टायेत्यर्थः । ५३ खट्वांगिने खट्वांगं तत्संज्ञकायुधमस्ति यस्य स खट्वांगी । ५४ चित्रवेषाय चित्रो विचित्रो वेषो यस्य स चित्रवेषः । ५५ चिरंतनाय चिरं चिरकालं तनोति जगद्विस्तारयतीति यद्वा चिरंभवः चिरंतनः ॥ ३४ ॥ ५६ तमोहराय । तमसः अज्ञानस्य हरो नाशक

**वामदेवो महादेवः पांडुः परिदृढो दृढः ॥ विश्वरूपो विरूपाक्षो वागीशः शुचिरंतरः ॥ ३३ ॥ सर्वप्रणयसंवादी वृषांको वृषवाहनः ॥ ईशः पिनाकी खट्वांगी चित्रवेषश्चिरंतनः॥३४॥तमोहरो महायोगी गोप्ता ब्रह्मांगहृज्जटी ॥ कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ॥३५॥ उन्मत्तवेषश्चक्षुष्यो दुर्वासाः स्मरशासनः ॥ दृढायुधः स्कंदगुरुः परमेष्ठी परायणः ॥ ३६ ॥**

इत्यर्थः । ५७ महायोगिने गोप्त्रे । महांश्चासौ योगी च महायोगी तस्मै अत एव गोप्त्रे रक्षणशीलायेत्यर्थः। ५८ ब्रह्मांगहृज्जटिने ब्रह्मांगं ब्रह्ममस्तकं हरतीति ब्रह्मांगहृत्स चासौ जटी च ब्रह्मांगहृज्जटी । ५९ कालकालाय कालस्य यमस्यापि कालो मृत्युरित्यर्थः । ६० कृत्तिवाससे । कृत्तिर्नृसिंहचर्म वासो वसनं यस्य स कृत्तिवासाः । ६१ सुभगाय । सुष्ठु भगं षड्गुणैश्वर्यं विष्ण्वादीनां यस्मादसौ सुभगः । ६२ प्रणवात्मकाय । प्रणवात्मकः ॐकारस्वरूप इत्यर्थः ॥ ३५ ॥ ६३ उन्मत्तवेषाय । उन्मत्तवद्वेषो यस्य स उन्मत्तवेषः अवधूतदत्तात्रेयस्वरूपः । ६४ चक्षुष्याय । चक्षुषि भवश्चक्षुष्यः अत्रिनयनोत्पन्नसोमरूपः । ६५ दुर्वाससे दुर्वासास्तत्संज्ञकऋषिरूप इत्यर्थः । ६६ स्मरशासनाय स्मरं मदनं शास्तीति स्मरशासनः । ६७ दृढायुधाय स्कंदगुरवे । दृढमायुधं यस्य स दृढायुधस्तस्मै अत एव स्कंदस्य देवसेनापतेर्गुरुरुपदेशक इत्यर्थः । ६८ परमेष्ठिने परायणाय । परमेष्ठी ब्रह्मरूपस्तस्मै अत एव परं सत्यलोकाख्यमयनं स्थानं यस्य स परायणः ॥ ३६ ॥

६९ अनादिमध्यनिधनाय । नास्ति आदिमध्यनिधनं यस्य स अनादिमध्यनिधनः । ७० गिरिशाय गिरिबांधवाय । गिरौ हिमालये शेते इति गिरिशस्तस्मै गिरौ डः छंदसीति डः गिरिबांधवो गिरिजामातेत्यर्थः । ७१ कुबेरबंधवे श्रीकंठाय । कुबेरः बंधुर्मित्रं यस्य स कुबेरबंधुस्तस्मै अत एव श्रीः कंठे समीपे यस्य स श्रीकंठः । ७२ लोकवर्णोत्तमोत्तमाय । लोकवर्णोत्तमस्य ब्राह्मणस्य उत्तमः पूज्य इत्यर्थः ॥ ३७ ॥ ७३ सामान्यदेवाय । सामान्याः मध्यमाः देवाः यस्मादसौ सामान्यदेवो देवश्रेष्ठ इत्यर्थः । ७४ कोदंडिने । कोदंडं धनुर्यस्यास्तीति कोदंडी । ७५ नीलकंठाय । नीलः कृष्णवर्णः कंठो यस्य स नीलकंठः ' नमो नीलग्रीवाय ' इति श्रुतेः । ७६ परश्वधिने परश्वधः परशुर्यस्यास्तीति परश्वधी । ७७ विशालाक्षाय । विशालानि विस्तृतान्यक्षीणि यस्य स विशालाक्षः । ७८ मृगव्याधाय । मृगं मृगरूपधारिणं ब्रह्माणं विध्यतीति मृगव्याधः । ७९ सुरेशाय । सुराणां देवानामीशः सुरेशः । ८० सूर्यतापनाय । सूर्यस्तापनो यस्मादसौ सूर्यतापनः ॥ ३८ ॥ ८१ धर्मकर्माक्षमाय धर्मयुक्तं कर्म धर्मकर्म तत् अक्षममप्राप्यं यस्य स धर्मकर्माक्षमः ' न कर्मणा ' इति श्रुतेः । ८२ क्षेत्राय भगवते । क्षेत्रं बीजनिर्वापस्थानं तस्मै भगवते विष्णुरूपायेत्यर्थः । ८३ भगनेत्रभिदे उग्राय । भगस्य

अनादिमध्यनिधनो गिरिशो गिरिबांधवः ॥ कुबेरबंधुः श्रीकंठो लोकवर्णोत्तमोत्तमः ॥ ३७ ॥ सामान्यदेवः कोदंडी नीलकंठः परश्वधी ॥ विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ॥ ३८ ॥ धर्मकर्माक्षमः क्षेत्रं भगवान् भगनेत्रभित् ॥ उग्रः पशुपतिस्तार्क्ष्यप्रियभक्तः प्रियंवदः ॥ ३९ ॥ दाता दयाकरो दक्षः कपर्दी कामशासनः ॥ श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ॥ ४० ॥

तत्संज्ञकादित्यस्य नेत्रं भिनत्ति दक्षयज्ञे भिन्नं करोतीति भगनेत्रभित्तस्मै अत एव उग्रः क्रूररूप इत्यर्थः । ८४ पशुपतये । पशूनां ब्रह्मादिजीवानां पतिः पालक इत्यर्थः । ८५ तार्क्ष्यप्रियभक्ताय । तार्क्ष्यो गरुडः प्रियो यस्य स तार्क्ष्यप्रियो विष्णुर्भक्तो यस्य स तार्क्ष्यप्रियभक्तः । ८६ प्रियंवदाय प्रियं स्वरहस्यमपि वदतीति प्रियंवदः प्रियवशेति खच् अरुर्द्विषेतिमुम् ॥ ३९ ॥ ८७ दांतोदयाकराय । दांतानां जितेंद्रियाणामुदयो ज्ञानोदयस्तस्याकरः खनीभूतः। ८८ दक्षाय । दक्षः पटुरित्यर्थः 'दक्षः पटौ हरवृषे' इति विश्वः। ८९ कपर्दिने कपर्दो जटाजूटोऽस्ति यस्य स कपर्दी । ९० कामशासनाय । कामं प्रकामं शासनं यस्य स कामशासनः स्वतंत्र इत्यर्थः। ९१ श्मशाननिलयाय सूक्ष्माय । श्मशानं सुषुम्नानाडी निलयः स्थानं यस्य तस्मै अत एव सूक्ष्मः सूक्ष्मरूप इत्यर्थः । सुषुम्नायाः श्मशानसंज्ञा हठदीपिकायामुक्ता । ९२ श्मशानस्थाय । श्मशाने काश्यां तिष्ठतीति श्मशानस्थः । ९३ महेश्वराय । महान्सर्वातिशयितश्चासौ ईश्वरश्च महेश्वरः ॥ ४० ॥

९४ । लोककर्त्रे । लोकानां भूरादीनां कर्ता उत्पादक इत्यर्थः । ९५ भूतपतये । भूतानां गगनादीनां पतिः स्वामीत्यर्थः । ९६ महाकर्त्रे महानपरिच्छिन्नश्चासौ कर्ता च महाकर्ता सकलोत्पादक इत्यर्थः ९७ महौषधिने महौषधं तारकज्ञानं यस्यास्तीति महौषधी ९८ उत्तराय उत् ऊर्ध्वं संसारात्तारयतीति उत्तरः तृधातोरंतर्भावितण्यर्थात् ऋदृदोरप् ९९ गोपतये गवां छंदोधेनूनां पतिः पालक इत्यर्थः १०० गोप्त्रे गोपायतीति गोप्ता सकलरक्षक इत्यर्थः ॥ प्रथमशतकं समाप्तम् ॥१ ज्ञानगम्याय ज्ञानमात्मज्ञानं गम्यं प्राप्यं यस्मादसौ ज्ञानगम्यः २ पुरातनाय पुराभवः पुरातनः पूर्वकालेपि विद्यमान इत्यर्थः ॥ ४१ ॥ ३ नीतये नीतिः सन्मार्गरूपः ४ सुनीतये शोभना नीतिर्यस्मादसौ सुनीतिः ५ शुद्धात्मने शुद्धः आत्मा अंतःकरणं यस्मादसौ शुद्धात्मा ६ सोमसोमरताय उमया सहितः सोमः सोमश्चंद्रः रतो यस्मिन्नसौ सोमरतः सोमश्चासौ सोमरतश्च सोमसोमरतः ७ सुखिने सुखी नित्यसुखविशिष्टः ८ सोमपाय सोमं सोमवल्लीरसं सर्वयज्ञेषु हूयमानं पिबतीति सोमपः ९ अमृतपाय अमृतं सुधां पिबतीत्यमृतपः आतोनुपसर्गे क इति कः १० सोमाय सोमो यज्ञीयसोमवल्लीरूपः । तथा च श्रुतिः "तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्यभ्यहरत्" इति । ११ महानीतये महती पूज्या नीतिर्यस्मादसौ महानीतिः

**लोककर्ता भूतपतिर्महाकर्ता महौषधी ॥ उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥ ४१ ॥ नीतिः सुनीतिः शुद्धात्मा सोमसोमरतः सुखी ॥ सोमपोऽमृतपः सोमो महानीतिर्महामतिः ॥ ४२ ॥ अजातशत्रुरालोकः संभाव्यो हव्यवाहनः ॥ लोककारो वेदकारः सूत्रकारः सनातनः ॥ ४३ ॥ महर्षिः कपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ॥ पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सदा ॥ ४४ ॥**

१२ महामतये महती पूज्या मतिर्यस्मादसौ महामतिः ॥४२॥ १३ अजातशत्रवे अजातोऽनुत्पन्नः शत्रुर्यस्य सोऽजातशत्रुः सर्वत्र सम इत्यर्थः १४ आलोकाय आलोकः प्रकाशरूप इत्यर्थः १५ संभाव्याय संभावयितुं सत्कर्तुं योग्यः संभाव्यः १६ हव्यवाहनाय हव्यं वहति तत्तद्देवान्प्रापयतीति हव्यवाहनो वह्निरूपः १७ लोककाराय लोकांश्चतुर्दशभुवनानि करोतीति लोककारः १८ वेदकाराय वेदानृगादीन् करोतीति वेदकारः १९ सूत्रकाराय सूत्राणि ब्रह्मसूत्रादीनि करोतीति सूत्रकारः २० सनातनाय तत्संज्ञकऋषिरूपायेत्यर्थः ॥ ४३ ॥ २१ महर्षये कपिलाचार्याय महर्षिः पूज्यऋषिरूपस्तस्मै अत एव कपिलस्तत्संज्ञकश्चासौ आचार्यः सांख्यगुरुस्तद्रूपः २२ विश्वदीप्तये विश्वस्य जगतः दीप्तिः प्रकाशो यस्मादसौ विश्वदीप्तिः २३ त्रिलोचनाय त्रिषु स्वर्गमृत्युपातालेषु लोचनानि यस्य स त्रिलोचनः त्रैलोक्यप्रेक्षक इत्यर्थः २४ पिनाकपाणिभूदेवाय पिनाकं तत्संज्ञकधनुः पाणौ यस्य स पिनाकपाणिश्चासौ भूदेवश्च तत्संज्ञकलोके क्रीडमान इत्यर्थः २५ स्वस्तिदाय स्वस्ति कल्याणं ददातीति स्वस्तिदः २६ सदा स्वस्तिकृते सदा सर्वकालं स्वस्ति मंगलं करोतीति स्वस्तिकृत् ॥ ४४ ॥

२७ त्रिधाम्ने त्रीणि ब्रह्मविष्णुरुद्ररूपाणि धामानि तेजांसि यस्मादसौ त्रिधामा २८ सौभगाय सौभं तत्संज्ञकयानं गमयति शाल्वराज्ञे प्रापयतीति सौभगः । इयं कथा भागवते विस्तृता " अन्यत्रापि दृश्यते " इति डः २९ शर्वसर्वज्ञाय शृणंति पातकिजनान् हिंसंति ते शर्वाः रौद्रगणाः पचाद्यच् सर्वज्ञाः यस्य स शर्वसर्वज्ञः ३० सर्वगोचराय सर्वे गोचरं प्रत्यक्षं यस्य स सर्वगोचरः ३१ ब्रह्मधृग्विश्वसृक्स्वर्गाय ब्रह्म वेदं धृष्णुवंति ते ब्रह्मधृषो ब्रह्मवादिनस्तेषां विश्वसृक् स्वर्गो ब्रह्मलोको यस्मादसौ ब्रह्मधृग्विश्वसृक्स्वर्गः । ३२ कर्णिकाराय । कर्णिकारस्तत्संज्ञकवृक्षरूपो वा उत्पलरूपः । ' कर्णिकारो द्रुमोत्पले ' इति विश्वः। ३३ प्रियाय । प्रिय आत्मरूपत्वात्सर्वप्रेष्ठ इत्यर्थः । ३४ कवये । कविरादिकविवाल्मीकिरूपः। ' कविः काव्यकरे शूरे कविर्वाल्मीकिशुक्रयोः ' इति विश्वः ॥४५॥ ३५ शाखाय विशाखाय । शाखाय तत्संज्ञाय विशाखाय स्कंदरूपायेत्यर्थः । ३६ गोशाखाय । गवां वेदवाणीनां शाखाः ऋगादिसंज्ञकभेदाः यस्मादसौ गोशाखः । ३७ शिवाय । शिवो मोक्षसुखरूपः ' शिवं मोक्षे सुखे भद्रे ' इति विश्वः । ३८ नैकाय । नास्ति एकोऽद्वितीयो यस्मादसौ नैकः । ३९ क्रतवे । क्रतुरग्निष्टोमादिरूपः । ४० समाय । समः सर्वेषां तुल्य इत्यर्थः । ४१ गंगाप्लुवोदकाय । गंगा भागिरथी प्लुवत्तारकमुदकं यस्याः सा प्लुवोदका यस्मादसौ गंगाप्लुवोदकः । ४२ भावाय । भावयते स्वभक्तेभ्यो मोक्षं प्रापयतीति भावः । ४३ सकलाय । कलया चंद्रकलया सहितः सकलः नित्यं चंद्रकलायुक्त इत्यर्थः । ४४ स्थपतिस्थिराय । स्थपतिः मायाकंचुकी चासौ स्थिरश्च स्थपतिस्थिरः ' स्थपतिः कंचुकिन्यपि ' इति विश्वः ॥ ४६ ॥ ४५ विजितात्मने । विजितः स्वाधीनः आत्मा मनो यस्मात्स विजितात्मा । ४६ विधेयात्मने । विधेयो विधिप्रतिपाद्यः आत्मा स्वरूपं यस्य स विधेयात्मा ' न चक्षुषा पश्यति कश्चनैनम् ' इति श्रुतेः। ४७ भूतवाहनसारथये । भूतानां जीवानां वाहनः कर्मफलप्रापकः भूतवाहनो ब्रह्मा सारथिर्यस्य स भूतवाहनसारथिः ।४८ सगणाय । गणैः प्रमथादिभिः सहितः सगणः । ४९ गणकार्याय । गणैः पंचविंशतितत्त्वगणैः कार्यं ब्रह्मांडं यस्य स गणकार्यः ।५० सुकीर्तये । सुष्ठु शोभना कीर्तिर्भक्तानां यस्मात्स सुकीर्तिः । ५१ छिन्नसंशयाय । छिन्नाः नष्टाः भक्तानां संशयाः यस्मादसौ छिन्नसंशयः ॥ ४७ ॥ ५२ कामदेवाय । कामो मदनः देवो जगद्विजिगीषुर्यस्मादसौ कामदेवः। ५३ कामपालाय । कामं मदनं पालयतीति कामपालः । ५४ भस्मोद्धूलितविग्रहाय । भस्मना उद्धूलितः धूसरः विग्रहो यस्य स भस्मोद्धूलितविग्रहः । ५५ भस्मप्रियाय । भस्म प्रियं यस्य स भस्मप्रियः । ५६ भस्मशायिने । भस्मनि शेते तच्छीलः भस्मशायी।५७ कामिने कांताय। कामी कामविशिष्टोऽत एव कांतः सुंदर इत्यर्थः। ५८ कृतागमाय। कृतः आगमः वेदो येन स कृतागमः ॥४८॥

**त्रिधामा सौभगः शर्वः सर्वज्ञः सर्वगोचरः ॥ ब्रह्मधृग्विश्वसृक्स्वर्गः कर्णिकारः प्रियः कविः ॥ ४५ ॥ शाखो विशाखो गोशाखः शिवो नैकः क्रतुः समः ॥ गंगाप्लुवोदको भावः सकलस्थपतिस्थिरः ॥४६ ॥ विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ सगणो गणकार्यश्च सुकीर्तिश्छिन्नसंशयः ॥ ४७ ॥ कामदेवः कामपालो भस्मोद्धूलितविग्रहः ॥ भस्मप्रियो भस्मशायी कामी कांतः कृतागमः ॥ ४८ ॥**

५९ समायुक्ताय । समायुक्तो नित्यप्रकृतियुक्तः वा मया लक्ष्म्या सहितः समो विष्णुः तेन आयुक्तः सर्वतो युक्त इत्यर्थः। ६० निवृत्तात्मने । निवृत्तः आत्मा मनो यस्मादसौ निवृत्तात्मा 'अप्राप्य मनसा सह' इति श्रुतेः । ६१ धर्मयुक्ताय । धर्मेण युक्तो नित्यसंगत इत्यर्थः। ६२ सदाशिवाय । सदा सर्वकालं शिवं कल्याणं यस्मात्स सदाशिवः। ६३ चतुर्मुखाय चतुर्बाहवे । चत्वारि मुखानि यस्य स चतुर्मुखस्तस्मै चत्वारो बाहवो यस्य स चतुर्बाहुर्ब्रह्मरूप इत्यर्थः । ६४ दुरावासाय । दुःखेनातिक्लेशेन आवास्यते योगिभिः समाधौ चित्ते स्थाप्यत इति दुरावासः । ६५ दुरासदाय । दुःखेनासत्तुं समीपं प्राप्तुमशक्यो दुरासदः ॥ ४९ ॥ ६६ दुर्गमाय दुर्लभाय । दुःखेन गम्यते ज्ञायत इति दुर्गमः तस्मै अत एव दुःखेनातिप्रयासेन लभ्यो दुर्लभः । ६७ दुर्गाय । दुःखेन गंतुमशक्यः दुर्गः । ६८ सर्वायुधविशारदाय । सर्वायुधेषु सर्वप्रहरणेषु विशारदाः निपुणाः जामदग्न्यादयो यस्मादसौ सर्वायुधविशारदः । ६९ अध्यात्मयोगनिलयाय । आत्मानमेव अधिकृत्येत्यध्यात्मा स चासौ योगः असंप्रज्ञातसमाधिः निलयं स्थानं यस्य सः अध्यात्मयोगनिलयः । ७० सुतंतवे । सुष्ठु तंतुः संततिर्यस्मादिति सुतंतुः । ७१ तंतुवर्धनाय । तंतुमविच्छिन्नसंततिं वर्धयतीति तंतुवर्धनः ॥ ५० ॥ ७२ शुभांगाय । शुभान्यंगानि

**समायुक्तो निवृत्तात्मा धर्मयुक्तः सदाशिवः ॥ चतुर्मुखश्चतुर्बाहुर्दुरावासो दुरासदः ॥ ४९ ॥ दुर्गमो दुर्लभो दुर्गः सर्वायुधविशारदः ॥ अध्यात्मयोगनिलयः सुतंतुस्तंतुवर्धनः ॥ ५० ॥ शुभांगो लोकसारंगो जगदीशोऽमृताशनः ॥ भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ॥ ५१ ॥ हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ महाह्रदो महागर्भः सिद्धवृंदारवंदितः ॥ ५२ ॥**

शरीराणि यस्मादसौ शुभांगः । ७३ लोकसारंगाय । लोकानां सारंगो लोकसारंगः भ्रमरवद्भक्तिरसग्राहक इत्यर्थः । यद्वा लोकाः सारंगाः पशुपक्षिवत्क्रीडनकाः यस्य स लोकसारंगः । ७४ जगदीशाय । जगतामीशो नियंतेत्यर्थः । ७५ अमृताशनाय । अमृतं यज्ञशेषमशनं यस्य सोऽमृताशनः 'अमृतं यज्ञशेषे स्यात्' इति विश्वः । ७६ भस्मशुद्धिकराय । भस्मना शुद्धिर्भस्मशुद्धिस्तस्याः कर उत्पादक इत्यर्थः । ७७ मेरवे । मेरुः कनकाद्रिरूपः । ७८ ओजस्विने शुद्धविग्रहाय । ओजः स्वात्मबलं न त्वन्नादिबलं यस्यास्तीति ओजस्वी अस्मायामेधाति विनिः । अत एव शुद्धः विग्रहो यस्य स शुद्धविग्रहः॥५१॥ ७९ हिरण्यरेतसे हिरण्यं रेतो यस्य स हिरण्यरेताः । ८० तरणये मरीचये तरति संसारं भक्ता अनेनेति तरणिस्तस्मै मरीचये सूर्यरूपायेत्यर्थः। ८१ महिमालयाय महिम्नस्तत्संज्ञकसिद्धेरालयः स्थानभूतः। ८२ महाह्रदाय महानक्षोभ्यः ह्रदो योगिनां ज्ञानसमुद्रो यस्मादसौ महाह्रदः । ८३ महागर्भाय महान्महत्तत्त्वं गर्भो यस्य स महागर्भः । ८४ सिद्धवृंदारवंदिताय सिद्धाः सिद्धगणाः वृंदाराः देवाश्च तैर्वंदितः स्तुत इत्यर्थः ॥ ५२ ॥

८५ व्याघ्रचर्मधराय व्याघ्रचर्मणः धरो धारकः । ८६ व्यालिने व्यालाः वासुक्यादिसर्पा भूषणभूता यस्य संति स व्याली । ८७ महाभूताय महान् विराट् भूतः उत्पन्नो यस्मादसौ महाभूतः 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः ८८ महानिधये महांतोऽक्षयाः निधयः शंखादयो यस्मादसौ महानिधिः ८९ अमृतांगाय अमृतं मृतिशून्यमंगं यस्मादसावमृतांगः ९० अमृतवत्सुवर्णवद्वपुः शरीरं यस्य सोऽमृतवपुः 'अमृतं वै हिरण्यम्' इति श्रुतेः । ९१ पंचयज्ञाय पंच देवयज्ञादयो नित्ययागा यस्य स पंचयज्ञः । ९२ प्रभंजनाय प्रकर्षेण भंजयति स्वभक्तमायावरणं नाशयनीति प्रभंजनः ॥ ५३ ॥ ९३ पंचविंशतितत्त्वज्ञाय पंचविंशनितत्त्वानि ज्ञापयति स्वभक्तेभ्यः बोधयतीति पंचविंशतितत्त्वज्ञः । 'अंतर्भावितण्यर्थात् ज्ञाधातोरगतोनुपसर्ग इति कः' । ९४ पारिजाताय पारिजातस्तत्संज्ञककल्पद्रुमरूपः । ९५ परावराय परं ब्रह्म अवरं जगदुभयरूपः । ९६ सुलभाय सुखेन लब्धुं भक्तजनैः प्राप्तुं शक्यः सुलभः । ९७ सुव्रताय शूराय सुष्ठु व्रतं नियमाचरणं यस्य स सुव्रतस्तस्मै शूराय सूर्यरूपायेत्यर्थः । 'शूरश्चारे भटे सूर्ये' इति विश्वः ९८ वाङ्मयैकनिधये वाङ्मयस्य शब्दशास्त्रस्यैकोऽद्वितीयः निधिः स्थानभूतः । तदुक्तं शिक्षायां "येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः" इति । निधये ९९ नितरां धीयते योगिभिश्चित्ते स्थाप्यत इति निधिः 'उपसर्गे घोः किः' इति किः॥५४॥ २०० वर्णाश्रमगुरवे वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां

**व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ॥ अमृतांगोऽमृतवपुः पंचयज्ञः प्रभंजनः ॥ ५३ ॥ पंचविंशतितत्त्वज्ञः पारिजातः परावरः ॥ सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ॥ ५४ ॥ वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ॥ आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः ॥ ५५ ॥ प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ॥ ५६ ॥**

गुरुर्जनक इत्यर्थः ॥ इति द्वितीयशतकं समाप्तम् ॥ १ वर्णिने वर्णी ब्रह्मचारिरूपः 'वर्णी स्याल्लेखके चित्रकारे च ब्रह्मचारिणि' इति विश्वः । २ शत्रुजिच्छत्रुतापनाय । शत्रून्स्वभक्तशत्रून् जयतीति शत्रुजित्स चासौ शत्रुतापनः शत्रुसंतापकर इत्यर्थः । ३ आश्रमाय । आश्रमो आश्रमसदृशः जन्ममरणायासनिवर्तकत्वात्सकलविश्रांतिस्थानभूत इत्यर्थः । ४ क्षपणाय । क्षपयतीति क्षपणः स्वभक्तपापक्षयकारक इत्यर्थः ५ क्षामाय क्षामः कृशरूपः ६ ज्ञानवते ज्ञानवान्नित्यज्ञानयुक्तः ७ अचलाचलाय अचलाः स्थिराः अचलाः पर्वताः यस्मादसौ अचलाचलः ॥ ५५ ॥ ८ प्रमाणभूताय प्रमाणानि प्रत्यक्षादीनि भूतान्युत्पन्नानि यस्मादसौ प्रमाणभूतः । ९ दुर्ज्ञेयाय दुःखेनातिप्रयासेन ज्ञातुं योग्यो दुर्ज्ञेयः । १० सुपर्णाय सुष्ठु सौवर्णं पर्णं पक्षौ यस्य स सुपर्णः गरुडरूपः । ११ वायुवाहनाय वायवः वाहने रथे सोपानभूताः यस्य स वायुवाहनः । १२ धनुर्धराय धनुर्वेदाय धनुषः धरो धारकस्तस्मै धनुषः वेदो यस्मात्स धनुर्वेदः । १३ गुणराशये गुणानां षोडशाध्यायोक्तयोगादिगुणानां राशयः संघाः यस्मात्स गुणराशिः । १४ गुणाकराय गुणानां योगादीनामाकरः खनीभूत इत्यर्थः ॥ ५६ ॥

१५ अनंतदृष्टये अनंताः असंख्याः दृष्टयो यस्य सोऽनंतदृष्टिः । १६ आनंदाय आनंद आनंदरूपः " आनंदं ब्रह्म " इति श्रुतेः । १७ दंडाय दमयित्रे दंडो दंडरूपः तस्मै अत एव दमयिता सकलदुष्टदमकारक इत्यर्थः । 'दंडो दमयतामस्मि' इति भगवद्गीतोक्तेः । १८ दमाय दम इंद्रियनिग्रहस्तद्रूपः । १९ अभिवाद्याय अभिवाद्यः सर्वस्तुत्य इत्यर्थः । २० महाचार्याय महांत आचार्याः गुरवो यस्मात्स महाचार्यः । २१ विश्वकर्मणे विश्वं जगत्कर्म यस्य स विश्वकर्मा । २२ विशारदाय । विशिष्टा शारदा सरस्वती यस्मात्स विशारदः ॥ ५७ ॥ २३ वीतरागाय वीतः गतः रागो विषयप्रीतिर्भक्तानां यस्मात्स वीतरागः । २४ विनीतात्मने विनीतो नम्रः आत्मा स्वभावो यस्मात्स विनीतात्मा । २५ तपस्विने तपोस्ति यास्मिन् स तपस्वी । २६ भूतभावनाय भूतानि भावयति उत्पादयतीति भूतभावनः। २७ उन्मत्तवेषाय प्रच्छन्नाय उन्मत्तवद्वेषो यस्य स उन्मत्तवेषस्तस्मै अत एव प्रच्छन्नः गूढरूपः । २८ जितकामाय जितः कामो मदनो येन स जितकामः । २९ अजितप्रियाय अजितो विष्णुः प्रियो यस्य सोऽजितप्रियः ॥ ५८ ॥ ३०कल्याणप्रकृतये कल्याणी प्रकृतिर्यस्य स कल्याणप्रकृतिः । ३१ कल्पाय कल्पः सर्वप्रथमः ' कल्पः स्यात्प्रथमे न्याये शास्त्रब्राह्मादिने विधौ ' इति विश्वः । ३२ सर्वलोक

अनंतदृष्टिरानंदो दंडो दमयिता दमः ॥ अभिवाद्यो महाचार्यो विश्वकर्मा विशारदः ॥५८॥ वीतरागो विनीतात्मा तपस्वी भूतभावनः॥
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ॥ ५८ ॥ कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ॥ तपस्वी तारको धीमान् प्रधान
प्रभुरव्ययः ॥ ५९ ॥ लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ॥ वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ॥ ६० ॥

प्रजापतये । सर्वलोकेषु चतुर्दशभुवनेषु प्रजास्तासां पतिः पालक इत्यर्थः । ३३ तपस्विने तारकाय । तप एव स्वं यस्यास्तीति तपस्वी तस्मै अत एव तारको भवसमुद्रो तारक इत्यर्थः । ३४ धीमते । धीर्धारणावती बुद्धिर्नित्यमस्येति धीमान् । ३५ प्रधानप्रभवे । प्रधानस्य प्रकृतेः प्रभुः स्वामीत्यर्थः । ३६ अव्ययाय । न व्येतीत्यव्ययः नाशशून्य इत्यर्थः ॥ ५९ ॥ ३७ लोकपालाय । लोकान्पालयतीति लोकपालः । ३८ अंतर्हितात्मने । अंतर्हितो मायातिरोहितः आत्मा स्वरूपं यस्य सोंतर्हितात्मा । ३९ कल्पादये । कल्पस्य शास्त्रस्य आदिः कारणं । तदुक्तं शारीरके " शास्त्रयोनित्वात् " इति । ४० कमलेक्षणाय । कमला श्रीः ईक्षणाद्यस्य स कमलेक्षणः । ४१ वेदशास्त्रार्थतत्त्वज्ञाय । वेदाश्च शास्त्राणि च वेदशास्त्राणि तेषामर्थतत्त्वज्ञास्तत्त्ववेत्तारो मुनयो यस्मात्स वेदशास्त्रार्थतत्त्वज्ञः । ४२ नियमाय । नितरां यमस्तत्संज्ञकप्रथमं योगांगं यस्मात्स नियमः । ४३ नियमाश्रयाय । नियमादींद्रियनिग्रहादाश्रयो यस्य स नियमाश्रयः ॥ ६० ॥

ग्रहाणामपि तद्रूपत्वात्तद्वाचकषण्णामानि कथयति– ४४ चंद्राय । चंदयति आह्लादयतीति चंद्रः तत्संज्ञकग्रहरूपः । ४५ सूर्याय । सुवति जगत्प्रेरयतीति सूर्यस्तद्रूपः । ४६ शनये । शनिस्तत्संज्ञकग्रहरूपः । ४७ केतवे । केतुर्धूमकेतुरूपः । ४८ विरामाय । विशेषेण रम्यतेऽनेनेति विरामः अतिसुंदरबुधरूप इत्यर्थः । ४९ विद्रुमच्छवये । विद्रुमवत् प्रवालवच्छविः कांतिर्यस्येति विद्रुमच्छविः भौमरूपः गुरुशुक्रनामान्यग्रे वक्ष्यंते । ५० भक्तिगम्याय । भक्त्या परमप्रीत्या गम्यः प्राप्तुं योग्य इत्यर्थः । ५१ परंब्रह्ममृगबाणार्पणाय । परंब्रह्मरूपो यो मृगः अन्वेष्यस्तस्मिन् बाणस्य मनोरूपस्य अर्पणं यस्मात्स परंब्रह्ममृगबाणार्पणः । तदुक्तमेकत्रवनौ " प्रणवो धनुः शरो ह्यात्मा ब्रह्म लक्षणमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् " इति । ५२ अनघाय । नास्ति अघं पापं यस्मात्सोऽनघः । तदुक्तं भागवते " यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति तत् " इति ॥६०॥ ५३ अद्रिराजालयाय । अद्रिराजेषु मेर्वादिषु आलयानि यस्य सोऽद्रिराजालयः । ५४ कांताय । कः ब्रह्मा अंते सारथिभूतः समीपे यस्य स कांतः । ५५ परमात्मने । परमः सर्वोत्कृष्टश्चासावात्मा च परमात्मा सर्वव्यापकत्वात्सर्वत्र विद्यमान इत्यर्थः । तदुक्तं ' यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ' इति । ५६ जगद्गुरवे जगतां गुरुर्हितोपदेशक इत्यर्थः । ५७ सर्वकर्माचलाय । सर्वकर्म पूजादिकमचलमक्षयं यस्मात्स सर्वकर्माचलः । ५८ त्वष्ट्रे । त्वक्षति सूर्यमपि तनूकरोतीति त्वष्टा विश्वकर्म

**चंद्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ॥ भक्तिगम्यः परंब्रह्ममृगबाणार्पणोऽनघः ॥ ६१ ॥ अद्रिराजालयः कांतः परमात्मा जगद्गुरुः ॥ सर्वकर्माचलस्त्वष्टा मंगल्यो मंगलावृतः ॥ ६२ ॥ महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ॥ अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ॥ ६३ ॥ संवत्सरकरो मंत्रः प्रत्ययः सर्वदर्शनः ॥ अजः सर्वेश्वरः स्निग्धो महारेता महाबलः ॥ ६४ ॥**

रूपः । ५९ मंगल्याय मंगलावृताय । मंगलाय हितो मंगल्यस्तस्मै अत एव मंगलेन आवृतो वृत इत्यर्थः ॥ ६२ ॥ ६० महातपसे । महत्सर्वातिशयितं तपो यस्य स महातपाः । ६१ दीर्घतपसे । दीर्घमजरामरत्वाद्बहुकालं तपो यस्य स दीर्घतपाः । ६२ स्थविष्ठाय । अतिशयेन स्थूलः स्थविष्ठः स्थूलदूरेत्यादिना साधुः । ६३ स्थविराय । स्थविरो वृद्धरूपः । ६४ ध्रुवाय । ध्रुवोऽचंचल इत्यर्थः । ६५ अह्ने । अहर्दिवसरूपः । ६६ संवत्सराय । संवत्सरस्तत्संज्ञकालरूपः । ६७ व्याप्तये । व्याप्तिः सर्वहेतुसमानाधिकरणाभावाप्रतियोगिरूपः सर्वत्र विद्यमान इत्यर्थः । ६८ प्रमाणाय । प्रमाणं मर्यादारूपः ' प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु ' इति विश्वः । ६९ परमाय । परा मुक्तिरूपा मा लक्ष्मीर्यस्य स परमः । ७० तपसे । तपो ऋतादिरूपः ' ऋतं तपः सत्यं तपः ' इति श्रुतेः ॥ ६३ ॥ ७१ संवत्सरकराय । संवत्सराणां प्रभवादीनां करः उत्पादक इत्यर्थः । ७२ मंत्राय प्रत्ययाय । मंत्रो गुप्तसंभाषणीयस्तस्मै प्रत्ययाय अनुभवरूपायेत्यर्थः । ७३ सर्वदर्शनाय । सर्वं दृश्यते यस्मिन्नसौ सर्वदर्शनः । ७४ अजाय । न जायत इत्यजः नित्यसिद्ध इत्यर्थः । ७५ सर्वेश्वराय । सर्वेषामीश्वरः सर्वेश्वरः । ७६ स्निग्धाय । स्निग्धो भक्तस्नेहयुक्तः । ७७ महारेतसे महाबलाय । महदस्कन्नत्वात्पूज्यं रेतो यस्य स महारेतास्तस्मै ' ऊर्ध्वरेतं विरूपाक्षम् ' इति श्रुतेः । अत एव महदतिशयितं बलं यस्य स महाबलः ॥ ६४ ॥

७८ योगिने । योगी नित्ययोगविशिष्टः । ७९ योग्याय । योगाय प्रभवतीति योग्यः । ८० महारेतसे । महत्सुवर्णरूपत्वात्पूज्यं रेतो यस्य स महारेताः । ८१ सिद्धाय । सिद्धो नित्यनिष्पन्नरूपः । ८२ सर्वादये । सर्वस्य आदिः प्रारंभो यस्मात्स सर्वादिः । ८३ अग्निदाय । अग्निं ज्ञानाग्निं ददातीत्यग्निदः । तदुक्तं भगवद्गीतायां "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति । ८४ वसवे । वसतीति वसुः सर्वभूतावास इत्यर्थः । ८५ वसुमनसे वसु प्रशस्तं मनो यस्मात्स वसुमनाः ८६ सत्यसर्वपापहराय । सत्यश्चासौ सर्वपापहरश्च सत्यसर्वपापहरः । ८७ हराय । ह अद्भुतं गतिं ददातीति हरः ॥ ६५ ॥ ८८ अमृताय शाश्वताय । अमृतो मोक्षरूपस्तस्मै अत एव शाश्वतो नित्यः । ८९ शांताय । शांतो निस्पृहत्वात्सुखरूपः ९० बाणहस्ताय प्रतापवते बाणस्त्रिपुरांतकशरः हस्ते यस्य स बाणहस्तस्तस्मै अत एव प्रतापवान् शौर्यविशिष्टः । ९१ कमंडलुधराय । कमंडलोः करकस्य धरो धारक इत्यर्थः । ९२ धन्विने । धन्वी पिनाकधन्वविशिष्टः ।९३ वेदांगाय । वेदरूपाण्यंगानि यस्य स वेदांगः 'तस्य यजुरेव शिरः' इति श्रुतेः । ९४ वेदविदे । वेदानां वित् ज्ञानं यस्मात्स वेदवित् । " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति श्रुतेः । ९५ मुनये । मननशीलो मुनिर्यतिरूपः "मुनिर्यतींगुदीबुद्धपिप्पलागस्तिकिंशुके" इति विश्वः ॥ ६६ ॥ ९६ भ्राजिष्णवे । भ्राजति दीप्यते तच्छीलः भ्राजिष्णुः । ९७ भोजनाय भोक्त्रे ।

**योगी योग्यो महारेताः सिद्धः सर्वादिरग्निदः ॥ वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ॥ ६५ ॥ अमृतः शाश्वतः शांतो बाणहस्तः प्रतापवान् ॥ कमंडलुधरो धन्वी वेदांगो वेदविन्मुनिः ॥ ६६ ॥ भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः ॥ अतींद्रियो महामायः सर्वावासश्चतुष्पथः ॥ कालयोगी महानादो महोत्साहो महाबलः ॥ महाबुद्धिर्महावीर्यो भूतचारी पुरंदरः ॥ ६८ ॥**

भुज्यते तद्भोजनम् अन्नं तद्रूपस्तस्मै भोक्त्रे अभ्यवहारकर्त्रे इत्यर्थः। ९८ लोकनेत्रे । लोकानां नेता नियंतेत्यर्थः । ९९ दुराधराय । दुःखेनापि आधर्तुं स्वांके स्थापयितुमशक्यो दुराधरः । ३०० अतीन्द्रियाय इंद्रियाणि अतिक्रांतोऽतींद्रियः इंद्रियागोचर इत्यर्थः ॥ इति तृतीयशतकं समाप्तम् ॥ १ महामायाय । महती दुस्तरा माया यस्य स महामायः । २ सर्वावासाय । सर्वस्य विश्वस्यावासः स्थानभूतः सर्वावासः । ३ चतुष्पथाय । चत्वारः पंथानो धर्मादयो यस्मात्स चतुष्पथः ॥ ६७ ॥ ४ कालयोगिने कालं मृत्युं स्वकार्ये योजयति तच्छीलः कालयोगी संपृच्छतेति विदुषः 'मृत्युर्धावति पंचमः' इति श्रुतेः । ५ महानादाय । महान्पूज्यः नादः अनाहतध्वनिर्यस्मात्स महानादः। ६ महोत्साहाय । महान् पूज्यः उत्साहो यस्य स महोत्साहः । ७ महाबलाय । ' महत् बलं यस्मात्स महाबलः । ८ महाबुद्धये । महती पूज्या बुद्धिर्यस्मात्स महाबुद्धिः । ९ महावीर्याय । महद्वीर्यं यस्मात्स महावीर्यः । १० भूतचारिणे । भूतेषु सर्वप्राणिषु चरति तच्छीलो भूतचारी । ११ पुरंदराय । पुराणि त्रिपुराणि दारयतीति पुरंदरः 'वाचंयमपुरंदरौ च ' इति निपातनात्पूःशब्दस्यामंतत्वम् ॥ ६८ ॥

१२ निशाचराय। निशायां कालरात्र्यां चरति क्रीडत इति निशाचरः। इयं कथा योगवासिष्ठादौ विस्तृता। १३ प्रेतचारिमहाशक्तये। प्रेतेन शववाहनेन चरति तच्छीला प्रेतचारिणी सा चासौ महाशक्तिश्च प्रेतचारिमहाशक्तिः चामुण्डारूप इत्यर्थः। 'पुंवत्कर्मधारयः' इति पुंवत्। तदुक्तं सप्तशत्यां 'चामुंडा शववाहना' इति। १४ महाद्युतये। महती सर्वातिशयिना द्युतिर्दीप्तिर्यस्य स महाद्युतिः। तदुक्तं ब्रह्मोत्तरखंडे 'सूर्यकोटिप्रतीकाशम्' इति। १५ अनिर्देश्यवपुषे। अनिर्देश्यं वक्तुमप्यनर्हं वपुर्यस्य सोनिर्देश्यवपुः तदुक्तं महिम्नि 'अतीतः पंथानं तव च महिमा वाङ्मनसयोः' इति। १६ श्रीमते। श्रीमान्नित्यश्रीयुक्तः। १७ सर्वहार्यमिताय। सर्वं हरति तच्छीलः सर्वहारी महाकालस्ते नाप्यमितोऽपरिमित इत्यर्थः। १८ गतये। गतिः सन्मार्गरूपः 'गतिर्मार्गे दशायां च ज्ञाने यात्राभ्युपाययोः' इति विश्वः॥ ६९॥ १९ बहुश्रुताय। बहु श्रुतं शास्त्रं यस्मात्स बहुश्रुतः। २० बहुमयाय। बहु अपारं मयः सुखं यस्मात्स बहुमयः। २१ नियतात्मने। नियतानां नियतमनसामात्मा। सततं गम्यमान इत्यर्थः। २२ भवोद्भवाय। भवस्य संसारस्योद्भवः प्रादुर्भावो यस्मात्स भवोद्भवः। २३ ओजस्तेजोद्युतिकराय। ओजो बलं तेजः शौर्यं द्युतिर्दीप्तिस्तासां कर ओजस्तेजोद्युतिकरः। नर्तकाय २४ नर्तयतीति नर्तकः जगत्सूत्रधार इत्यर्थः। नृतिधातोः ष्वुन्। २५ सर्वकामकाय। सर्वो विश्वरूपः कामोभिलाषो यस्य स सर्वकामकः 'सोकामयत' इति श्रुतेः। 'कामः स्मरेभिलाषे

**निशाचरः प्रेतचारिमहाशक्तिर्महाद्युतिः॥ अनिर्देश्यवपुः श्रीमान् सर्वहार्यमितो गतिः॥६९॥ बहुश्रुतो बहुमयो नियतात्मा भवोद्भवः॥ ओजस्तेजो द्युतिकरो नर्तकः सर्वकामकः॥ ७०॥ नृत्याप्रियो नृत्यनृत्यः प्रकाशात्मा प्रतापनः॥ बुद्धस्पष्टाक्षरो मंत्रः सन्मानः सारसंप्लवः॥ ७१॥ युगादिकृद्युगावर्तो गंभीरो वृषवाहनः॥ इष्टो विशिष्टः शिष्टेष्टः शरभः शरभो धनुः॥ ७२॥**

च' इति विश्वः॥ ७०॥ २६ नृत्याप्रियाय। नृत्यं नर्तनं प्रियं यस्य स नृत्यप्रियः। नृत्यनृत्याय २७ नृत्यं नृत्यान्नर्तनायस्य स नृत्यनृत्यः। नृत्यप्रवर्तक इत्यर्थः। २८ प्रकाशात्मने प्रतापनाय। प्रकाशः प्रदीप्तः आत्मा देहो यस्य स प्रकाशात्मा तस्मै अतएव प्रतापनो निदाघेन संतापकारकसूर्यरूपः। २९ बुद्धस्पष्टाक्षराय। स्पष्टं स्वतः प्रकाशं च तदक्षरं च स्पष्टाक्षरं ब्रह्म बुद्धं ज्ञातं स्पष्टाक्षरं सनकादिभिर्यस्मात्स बुद्धस्पष्टाक्षरः। ३० मंत्राय। मननात्त्रायत इति मंत्रः गायत्र्यादिरूप इत्यर्थः। ३१ सन्मानाय। सतां मानः प्रमाणभूत इत्यर्थः। ३२ सारसंप्लवाय। सम्यक् प्लवः संप्लवः सारो वरश्चासौ संप्लवश्च सारसंप्लवः दुष्पारभवांबुधिपोतरूप इत्यर्थः। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः॥७१॥ ३३ युगादिकृद्युगावर्ताय। युगादेर्युगादिकालस्य कृत्कर्ता चासौ युगानि कृतादीन्यावर्तत इति युगावर्तः ३४ गंभीराय। गंभीरोऽतलस्पर्शो विष्णुनाप्यदृष्टतल इत्यर्थः। ३५ वृषवाहनाय वृषो धर्मः वाहनं यस्य स वृषवाहनः "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। ३६ इष्टाय। इष्टः परमानंदात्मत्वेन सर्वप्रिय इत्यर्थः 'आत्मनः कामाय सर्वं परिकल्प्यते' इति श्रुतेः। ३७ विशिष्टाय शिष्टेष्टाय। विशिष्टः सर्वश्रेष्ठोऽत एव शिष्टानां विदुषामिष्टः प्रियो वा शिष्टैरिष्टः पूजितः। ३८ शरभाय। शरभस्तत्संज्ञकपक्षिरूपः। ३९ शरभाय धनुषे। शरं भजतीति शरभस्तस्मै अत एव धनुषे धनूरूपायेत्यर्थः॥ ७२॥

४० अपां निधये । अपां गंगोदकानां निधीयंत्यास्मिन्निति निधिः स्थानभूतः उपसर्गे घोः किरिति किः। ४१ अधिष्ठानविजयाय । आधिष्ठानस्य लिंगशरीरस्य विजयो नाशो यस्मात्सोधिष्ठानविजयः। ४२ जयकालविदे । जयकालस्य वित् ज्ञानं यस्मात्स जयकालवित् । ४३ प्रतिष्ठिताय । प्रतिष्ठा जगत्स्थितिः संजाता यस्य स प्रतिष्ठितः। ४४ प्रमाणज्ञाय । प्रमाणं ब्रह्मांडादिपरिमाणं जानातीति प्रमाणज्ञः। ४५ हिरण्यकवचाय। हिरण्यस्य कवचं यस्य स हिरण्यकवचो हिरण्यगर्भरूपः । ४६ हरये हराति स्मृतिमात्रेण पातकमपनयतीनि हरिः ॥७३॥४७॥ विरोचनाय । विशेषेण सर्वातिशयेन रोचत इति विरोचनः। ४८ सुरगणाय । सुराः देवाः गणाः पार्षदाः यस्य स सुरगणः । ४९ विद्येशाय विबुधाश्रयाय । विद्यायाः ईशः नियंता तस्मै अत एव विबुधानां ज्ञानिनामाश्रयो विबुधाश्रयः । ५० बालरूपाय । बालवद्रूपं स्वरूपं यस्य स बालरूपः । इयं कथा भारते द्रोणपर्वणि "पुराणि दग्धवंतं तं देवी याता प्रवीक्षितुम्" " बालमंकगतं कृत्वा स्वयं पंचशिखं पुनः " इत्यादिना । ५१ बलोन्माथिने । बलान्यसुरसैन्यान्युन्मंथति तच्छीलो बलोन्माथी । ५२ विवर्ताय । विशेषेण वर्तयति जगद्भ्रमं करोतीति विवर्तः । ५३ गहनाय गुरवे । गहनः स्वतो दुर्बोधस्तस्मै गुरवे हितोपदेशकरूपायेत्यर्थः ॥७४॥ ५४ करणाय । जगदुत्पत्तौ प्रकृष्टतमं कारणं करणं मनस्तद्रूपः । ५५ कारणाय । कारणो निमित्तकारणबुद्धिरूपः । ५६ कर्त्रे । करोतीति कर्ता सकलोत्पादकाहंकाररूपः । ५७ सर्वबंधविमोचनाय । विमुच्यते अनेनेति विमोचनः । सर्वबंधेभ्यो विमोचनः परमात्मरूपः । ५८ विद्वत्तमाय वीतभयाय । विद्वत्सु श्रेष्ठो विद्वत्तमस्तस्मै अत एव वीतं भयं यस्मात्स वीतभयः । ५९ विश्वभर्त्रे विश्वं बिभर्ति तच्छीलो विश्वभर्ता विश्वपोषक इत्यर्थः । ताच्छील्ये तृन् । ६० निशाकराय । निशां प्रलयरूपां रात्रिं करोति तच्छीलो निशाकरः ॥ ७५ ॥ ६१ व्यवसायाय । विशेषेण अवसायस्तत्त्वनिश्चयो यस्मात्स व्यवसायः । ६२ व्यवस्थानाय । विशेषेणावस्थानं पुनरावृत्तिशून्यं यस्मात्स व्यवस्थानः । ६३ स्थानदाय । स्थानानि इंद्रादिपदानि ददातीति स्थानदः । ६४ जगदादिजाय । जगतामादिजो महान्यस्मात्स जगदादिजः । ६५ दुन्दुभाय दुंदुभिर्यस्यास्तीति दुंदुभो नरेंद्ररूपः "नराणां च नरेंद्रोहम्" इति भगवद्गीतोक्तेः । ६६ ललिताय । ललितः सर्वसुंदररूपः । ६७ विश्वस्मै । विश्वो जगद्रूप इत्यर्थः । ६८ भवात्मात्मनिसंस्थिताय । भवात्मनां पांचभौतिकदेहानामात्मनि जीवे संस्थितोंतर्यामिरूपेण विद्यमानः ॥ ७६ ॥

**अपां निधिरधिष्ठानं विजयो जयकालवित् ॥ प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ॥ ७३ ॥ विरोचनः सुरगणो विद्येशो विबुधाश्रयः ॥ बालरूपो बलोन्माथी विवर्तो गहनो गुरुः ॥ ७४ ॥ करणं कारणं कर्ता सर्वबंधविमोचनः ॥ विद्वत्तमो वीतभयो विश्वभर्ता निशाकरः ॥ ७५ ॥ व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ॥ दुंदुभो ललितो विश्वो भवात्मात्मनि संस्थितः ॥ ७६ ॥**

६९ वीरेश्वराय वीरभद्राय । वीराणां शूराणामीश्वरो वीरेश्वरस्तस्मै वीरभद्राय तत्संज्ञकगणेश्वररूपायेत्यर्थः । ७० वीरघ्ने । वीरान् हंतीति वीरहा । ७१ वीरभृद्विराजे वीरान्बिभर्ति ते वीरभृतस्तेषां विराट् सार्वभौम इत्यर्थः । ७२ वीरचूडामणये । वीराणां चूडामणिः शिरोरत्नभूतः "चूडामणिः शिरोरत्नम्" इत्यमरः । ७३ वेत्रे । वेत्ता सर्वज्ञ इत्यर्थः । ७४ तीव्रनादाय । तीव्रोऽतिशयितः नादो यस्य स तीव्रनादः । ७५ नदीधराय । नदीनां धरो नदीधरः सागररूपः ॥ ७७ ॥ ७६ आज्ञाधाराय । आज्ञा धारा अविच्छिन्ना यस्य स आज्ञाधारः । ७७ त्रिशूलिने । त्रिशूलमस्यास्तीति त्रिशूली । ७८ शिपिविष्टाय । शिपयो रश्मयस्तेषु प्रविष्टः । तदुक्तं विष्णुसहस्रनामभाष्ये "शिपयो रश्मयो मताः । तत्र प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते" इति । ७९ शिवालयाय । शिवायाः पार्वत्याः आलयः स्थानभूतः । ८० वालखिल्याय । वालखिल्य स्तत्संज्ञकऋषिरूपः । ८१ महाचापाय महद्विदेहराजपूज्यं चापं धनुर्यस्य स महाचापः। ८२ तिग्मांशवे तिग्मास्तीक्ष्णाः अंशवः किरणाः यस्य स तिग्मांशुः सूर्यरूपः। ८३ निधये अव्ययाय । निधिः पद्मादिरूपस्तस्मै अत एवाव्ययाय नाशशून्यायेत्यर्थः ॥ ७८ ॥ ८४ अभिरामाय । अभि सर्वतः रमंते योगिनो यस्मिन्नित्यभिरामः । ८५ सुशरणाय । शोभनश्चासौ शरणो रक्षिता च सुशरणः सर्वभयनिवारक इत्यर्थः । ८६ सुब्रह्मण्याय । 'तपो वेदाश्च सत्यं च ज्ञानं च ब्रह्मसंज्ञितम्' तेभ्यः सुतरां हितः सुब्रह्मण्यः।

**वीरेश्वरो वीरभद्रो वीरहा वीरभृद्विराट् ॥ वीरचूडामणिर्वेत्ता तीव्रनादो नदीधरः ॥ ७७ ॥ आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ॥ वालखिल्यो महाचापस्तिग्मांशुर्निधिरव्ययः ॥ ७८ ॥ अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ॥ मघवान्कौशिको गोमान् विश्रामः सर्वशासनः ॥ ७९ ॥ ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ॥ अमोघदंडी मध्यस्थो हिरण्यो ब्रह्मवर्चसी ॥ ८० ॥**

८७ सुधापतये । सुधायाः अमृतस्य पतिः स्वामीत्यर्थः । ८८ मघवते कौशिकाय । मघवते शक्ररूपायात एव कौशिकस्तत्संज्ञः "अहिल्यायैजारकौशिकब्राह्मणे" इति श्रुतेः । 'कौशिको गुग्गुलशक्रयोः' इति विश्वः । ८९ गोमते । गौर्विश्वरूपास्ति यस्य स गोमान् । इयं कथा अस्मिन्नेव ईशानकल्पवृत्तांते उक्ता।९० विश्रामाय । विगतं श्रामं जन्ममरणादिश्रमसमूहो यस्मात्स विश्रामः तस्य समूह इत्यण् । ९१ सर्वशासनाय । सर्वस्मिन् शासनं यस्य स सर्वशासनः ॥ ७९ ॥ ९२ ललाटाक्षाय । ललाटे आक्षि नेत्रं यस्य स ललाटाक्षः । ९३ विश्वदेहाय । विश्वं जगद्देहो यस्य स विश्वदेहः । ९४ साराय । सारः प्रलयेपि विद्यमानत्वान्मुख्यस्थिरांशरूपः । ९५ संसारचक्रभृते संसारचक्रमखिलप्रपंचगणं बिभर्ति पुष्णातीति संसारचक्रभृत् 'चक्रो गणे चक्रवाके' इति विश्वः । ९६ अमोघदंडिने । अमोघदंडोऽस्ति यस्य सोऽमोघदंडी । ९७ मध्यस्थाय मध्ये न्याये तिष्ठतीति मध्यस्थः सर्वसमत्वादुदासीन इत्यर्थः 'मध्यं न्यायेऽवकाशे च' इति विश्वः । ९८ हिरण्याय । हिरण्यः स्वर्णरूपः 'हिरण्यं तेजसि स्वर्णे' इति विश्वः ।९९ ब्रह्मवर्चसिने । ब्रह्मवर्चस्तपोदीप्तिर्यस्यास्तीति ब्रह्मवर्चसी ॥ ८० ॥

४०० परमार्थाय परमो मोक्षरूपः अर्थो यस्मात्स परमार्थः ॥ इति चतुर्थशतकं समाप्तम् । १ परमयसे । परं दुःखातीतं च तन्मयः सुखं परमयः आत्यंतिकसुखरूप इत्यर्थः । २ शंवराय । शं कल्याणं वरं यस्मात्स वबयोरभेदाच्छंवरो वा जलरूपः 'शंवरं जलम्' इत्यमरः । ३ व्याघ्रकाय । व्याघ्रस्य तत्संज्ञकदैत्यस्य कः शमनो नाशक इत्यर्थः 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च' इति विश्वः । ४ अनलाय अनलोऽग्निरूपः । ५ रुचये । रुचिर्दीप्तिरूपः । ६ वररुचये । वरा श्रेष्ठा रुचिर्दीप्तिर्यस्य वा यस्मात्स वररुचिः । ७ वंद्याय । वंद्यः सर्वेषां स्तवार्ह इत्यर्थः । ८ वाचस्पतये वाचो विद्यायाः पतिर्वाचस्पतिः । 'ईशानः सर्वविद्यानाम्' इति श्रुतेः । ९ अहर्पतये । अह्नो दिवसस्य पतिः अहर्पतिः अहरादीनामिति रेफः ॥ ८१ ॥ १० रवये विरोचनाय रवये सूर्यरूपायात एव विशेषेण रोचयति ब्रह्मांडं दीपयतीति विरोचनः । ११ स्कंधाय । स्कंधः समूहरूपः 'स्कंधो बाहुमूलसमूहयोः' इति विश्वः । १२ शास्त्रे वैवस्वताय शास्तीति शास्ता तस्मै वैवस्वताय यमरूपायेत्यर्थः 'यमः संयमतामहम्' इति भगवद्गीतोक्तेः । १३ अजनाय । नास्ति जनः प्रादुर्भावो यस्य सोऽजनः 'जनी प्रादुर्भावे' अस्माड्डः । १४ युक्तये । युक्तिर्योजनं समाधिरूपः 'युक्तिर्न्याये च योजने' इति विश्वः । १५ उन्नतकीर्तये । उन्नता अत्युच्चा कीर्तिर्यस्मात्स उन्नतकीर्तिः १६ । शांतरागाय । शांतानां त्यक्तैषणानां रागः प्रीतिर्यस्य वा यस्मिन्स शांतरागः । १७ पराजयाय । पराजयति

**परमार्थः परमयः शंवरो व्याघ्रकोऽनलः ॥ रुचिर्वररुचिर्वंद्यो वाचस्पतिरहर्पतिः ॥ ८१ ॥ रविर्विरोचनः स्कंधः शास्ता वैवस्वतो जनः ॥ युक्तिरुन्नतकीर्तिश्च शांतरागः पराजयः ॥ ८२ ॥ कैलासपतिकामारिः सविता रविलोचनः ॥ विद्वत्तमो वीतभयो विश्वहर्ता निवारितः ॥ ॥ ८३ ॥ नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ॥ दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ॥ ८४ ॥**

सर्वानभिभवतीति पराजयः ॥ ८२ ॥ १८ कैलासपतिकामारये । कैलासस्य तत्संज्ञकपर्वतस्य पतिश्चासौ कामारिश्च मदननाशक इत्यर्थः । १९ सवित्रे । सूतेऽसौ सविता जगत्प्रसूतिरित्यर्थः । २० रविलोचनाय । रविः सूर्यः लोचनं यस्य स रविलोचनः । २१ विद्वत्तमाय । ताम्यतीति तमः विदुषां तमः कांक्षक इत्यर्थः । २२ वीतभयाय । वीतं व्याप्तं भयं यस्य स वीतभयः वी गतिव्याप्तीत्यादिधात्वर्थनिर्देशात् । २३ विश्वहर्त्रे अनिवारिताय । विश्वं हरति संहरतीति विश्वहर्ता तस्मै अनिवारितः केनाप्यवारित इत्यर्थः ॥ ८३ ॥ २४ नित्याय । नित्योऽव्यय इत्यर्थः । २५ नियतकल्याणाय । नियतमखंडितं कल्याणं यस्मात्स नियतकल्याणः । २६ पुण्यश्रवणकीर्तनाय । पुण्ये श्रवण कीर्तने यस्य स पुण्यश्रवणकीर्तनः । २७ दूरश्रवसे । दूरे दूरदेशेऽपि श्रवः श्रवणं यस्मात्स दूरश्रवाः । २८ विश्वसहाय । विश्वं सहति आमर्षतीति विश्वसहः । २९ ध्येयाय । ध्यातुं चिंतितुं योग्यो ध्येयः । ३० दुःस्वप्ननाशनाय । दुःस्वप्नानि नाशयति स्मृतिमात्रेण निष्फलानि करोतीति दुःस्वप्ननाशनः ॥ ८४ ॥

३१ उत्तारकाय । उत्तारयति स्वभक्तान् भयसमुद्रपारं नयतीत्युत्तारकः । ३२ दुष्कृतिघ्ने । दुष्कृतीन् पातकिजनान् हंतीति दुष्कृतिहा । ३३ दुर्धर्षाय । दुःखेनापि धर्षितु मशक्यो दुर्धर्षः । ३४ दुःसहाय । दुःखेनापि असुरादिभिरसह्यो दुःसहः । ३५ अभयाय । नास्ति भयं यस्मात्सोऽभयः । ३६ अनादये नास्ति आदिर्यस्य सोनादिः । ३७ भुवे भूः पृथिवीरूपः । ३८ भुवोलक्ष्म्यै । भुवः पृथिव्याः लक्ष्मीः शोभारूपः । ३९ किरीटित्रिदशाधिपाय । किरीटोस्यास्तीति किरीटी स चासौ त्रिदशाधिपश्च किरीटित्रिदशाधिपः मुख्यदेवस्वामीत्यर्थः ॥ ८५ ॥ ४० विश्वगोप्त्रे । विश्वस्य जगतो गोप्ता रक्षक इत्यर्थः । ४१ विश्वभर्त्रे विश्वस्य जगतो भर्ता पोषकः । ४२ सुधीराय । सुतरां धीरो निर्भयः सुधीरः । ४३ रुचिरांगदाय रुचिराणि रमणीयान्यंगदानि बाहुभूषणानि यस्य स रुचिरांगदः । ४४ जननाय । जनयति जगत्प्रादुर्भावं करोतीति जननः नंद्यादित्वाल्ल्युः । ४५ जनजन्मादये । जनानां जन्मादि सर्गादि यस्मात्स जनजन्मादिः "यतो वा इमानि भूतानि जायंते " इति श्रुतेः । ४६ प्रीतिमते । प्रीतिमानित्यप्रीतियुक्तः । ४७ नीतिमते । नीतिमानित्यनीतियुक्तः । ४८ नयाय । नयो न्यायरूपः ' नयो नीतौ द्यूतभेदे न्याये पितरि च स्मृतः ' इति विश्वः ॥ ८६ ॥ ४९ विशिष्टाय विशेषेण शिष्टः प्रलयकालेपि विद्यमान इत्यर्थः । ५० काश्यपाय । कश्यपस्य तत्संज्ञकऋषेरपत्यं पुमान् काश्यपः । ५१ भानवे । भातीति भानुः सूर्यरूपः । ५२ भीमाय ।

**उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोऽभयः ॥ अनादिर्भूर्भुवोलक्ष्मीः किरीटित्रिदशाधिपः ॥८५॥ विश्वगोप्ता विश्वभर्ता सुधीरो रुचिरांगदः॥ जननो जनजन्मादिः प्रीतिमान्नीतिमान्नयः ॥ ८६ ॥ विशिष्टः काश्यपो भानुर्भीमो भीमपराक्रमः ॥ प्रणवः सप्तधाचारो महाकायो महाधनुः ॥ ८७ ॥ जन्माधिपो महादेवः सकलागमपारगः ॥ तत्त्वातत्त्वविवेकात्मा विभूष्णुर्भूतिभूषणः ॥ ८८ ॥**

बिभेत्यस्मादिति भीमः । ५३ भीमपराक्रमाय । भीमो भयंकरः पराक्रमो यस्मात्स भीमपराक्रमः । ५४ प्रणवाय । प्रणामयतीति प्रणवः ओंकाररूपः । तदुक्तं शिवाथर्वशिरसि "अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एवर्चो यजूंषि सामान्यथर्वांगिरसश्च यज्ञे ब्रह्म ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः " इति । ५५ सप्तधाचाराय । सप्तधा आवहादिसप्तवायुप्रकारेण चारः गमनं यस्मिन् स सप्तधाचारः । ५६ महाकायाय महाधनुषे । महानपरिमितः कायः शरीरं यस्य स महाकायोत एव महदपरिमितं धनुर्यस्य स महाधनुः ॥ ८७ ॥ ५७ जन्माधिपाय । जन्मनः उत्पत्तेरधिपो जन्माधिपः ५८ महादेवाय । महांतः पूज्याः देवा यस्मात्स महादेवः । ५९ सकलागमपारगाय सकलागमानां सर्ववेदानां पारगोन्तवेत्ता सकलागमपारगः । ६० तत्त्वातत्त्वविवेकात्मने । तत्त्वातत्त्वविवेकाज्ञानविचारः आत्मा स्वरूपं यस्य स तत्त्वातत्त्वविवेकात्मा । ६१ विभूष्णवे । विशेषेण भवति सर्वत्र विद्यमानस्तच्छीलो विभूष्णुः चाद्भुव इति ताच्छील्ये ग्स्नुः । ६२ भूतिभूषणाय भूतिरणिमाद्यैश्वर्यं भूषणं यस्य स भूतिभूषणः " विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा " इत्यमरः ॥ ८८ ॥

६३ ऋषये ऋषिरतींद्रियदर्शकः 'रुद्रो महर्षिः' इति श्रुतेः । ६४ ब्राह्मणविज्जिष्णवे ब्राह्मणानां वित् ज्ञानं जिष्णुर्जयशीलं यस्माद्वा यस्य स ब्राह्मणविज्जिष्णुः । ६५ जन्ममृत्युजरातिगाय । जन्ममृत्युजराः अतिगच्छतीति जन्ममृत्युजरातिगः । ६६ यज्ञाय यज्ञपतये । यज्ञोऽग्निष्टोमादिरूपस्तस्मै यज्ञपतये यज्ञस्वामिन इत्यर्थः । ६७ यज्वने । यजतीति यज्वा सकलयजमानरूपः । ६८ यज्ञांताय । यज्ञानामंतः समाप्तिर्यस्मात्स यज्ञांतः । ६९ अमोघविक्रमाय । अमोघोऽनिष्फलः विक्रमो यस्य सोऽमोघविक्रमः ॥ ८९ ॥ ७० महेंद्राय । महांश्चासौ इंद्रः परमेश्वरश्च महेंद्रः । ७१ दुर्भराय दुःखेनापि भर्तुं चित्ते धारयितुमशक्यो दुर्भरः ७२ सेनिने । सेना प्रमथादिसैन्यं यस्यास्तीति सेनी व्रीह्यादित्वादिनिः । ७३ यज्ञांगाय यज्ञवाहनाय यज्ञाः अंगानि यस्य स यज्ञांगस्तस्मै यज्ञः वाहनं प्रापको यस्य स यज्ञवाहनः । ७४ पंचब्रह्मसमुत्पत्तये । पंचब्रह्मणां सद्योजातादीनां समुत्पत्तिर्यस्मात्स पंचब्रह्मसमुत्पत्तिः ७५ विश्वेशाय विश्वस्येशो नियंतेत्यर्थः ७६ विमलोदयाय । विमलो निष्कलंकः उदयो यस्मात्स विमलोदयः ॥ ७९ ॥ ७७ आत्मयोनये । आत्मैव योनिः कारणं यस्य स आत्मयोनिः निष्कारण इत्यर्थः । ७८ अनाद्यंताय । न स्त आद्यंतौ यस्य सः अनाद्यंतः । ७९ षड्विंशत्सप्तलोकधृषे ।

ऋषिर्ब्राह्मणविज्जिष्णुर्जन्ममृत्युजरातिगः ॥ यज्ञो यज्ञपतिर्यज्वा यज्ञांतोऽमोघविक्रमः ॥ ८९ ॥ महेंद्रो दुर्भरः सेनी यज्ञांगो यज्ञवाहनः ॥ पंचब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ॥ ९० ॥ आत्मयोनिरनाद्यंतो षड्विंशत्सप्तलोकधृक् ॥ गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ॥ ९१ ॥ शिशुर्गिरिरतः सम्राट्सुषेणः सुरशत्रुहा ॥ अमोघोरिष्टमथनो मुकुंदो विगतज्वरः ॥ ९२ ॥

षड्विंशतत्संख्यतत्त्वानि सप्तलोकांश्च धृष्णोतीति षड्विंशत्सप्तलोकधृक् । ८० गायत्रीवल्लभाय । गायत्र्याः वल्लभः प्रिय इत्यर्थः । ८१ प्रांशवे । प्रकृष्टाः अंशवः सुषुम्नादयः किरणाः यस्य स प्रांशुः । ८२ विश्वावासाय । विश्वमावसति अभिव्याप्य तिष्ठतीति विश्वावासः । ८३ प्रभाकराय प्रभां प्रकृष्टदीप्तिं करोति तच्छीलः प्रभाकरः ॥ ९१ ॥ ८४शिशवे । शिशुर्बालरूपः इयं कथा पार्वतीस्वयंवरे अस्मिन्नेवाग्रे उक्ता । ८५ गिरिरताय । गिरिषु मंदरादिषु रतः प्रीतियुक्त इत्यर्थः । ८६ सम्राट्सुषेणाय सम्राजः सुषेणाः शोभनसेनायुक्ताः यस्मात्स सम्राट्सुषेणः सुषामादिषु चेति षत्वम् ८७ सुरशत्रुघ्ने । सुरशत्रून्पूर्वदेवादीन् हंतीति सुरशत्रुहा । ८८ अमोघाय । न मोघो व्यर्थसंकल्पो यस्य सोऽमोघः सत्यसंकल्प इत्यर्थः । ८९ अरिष्टमथनाय । अरिष्टानि स्वभक्तसंकटानि मंथति विलोडयतीत्यरिष्टमथनः । ९० मुकुंदाय । मुकुंदो मुक्तिदः पृषोदरादित्वात्साधुरिति विष्णुसहस्रनामभाष्ये उक्तम् । ९१ विगतज्वराय । विगतः प्रनष्टः ज्वरः संसारतापो यस्मात्स विगतज्वरः ॥ ९२ ॥

९२ स्वयंज्योतिषे। स्वयमात्मनैव ज्योतिः प्रकाशक इत्यर्थः। ९३ अनुज्योतिषे। अनु अनुलक्ष्येन ज्योतींषि नक्षत्रादीनि यस्य सोऽनुज्योतिः। ९४ आत्मज्योतिषे। आत्मा देहः ज्योतिश्चैतन्यरूपो यस्य स आत्मज्योतिः। ९५ अचंचलाय। न चंचलोऽचंचलः कूटस्थ इत्यर्थः। ९६ पिंगलाय। पिंगलः कडारः कपिलः कडारवर्णः 'कडारः कपिलः पिंगपिशंगौ कद्रुपिंगलौ' इत्यमरः। 'सितपीतहरिद्रक्तः कडारस्तृणवह्निवत्' इति शब्दार्णवः। ९७ कपिलश्मश्रुणे। कपिलानि तद्वर्णानि श्मश्रूणि मुखकेशाः यस्य स कपिलश्मश्रुः। ९८ शास्त्रनेत्रत्रयीतनवे। त्रयी वेदत्रयी तनुः शरीरं यस्य स त्रयीतनुः शास्त्रे न्यायव्याकरणे नेत्रे लोचनभूते यस्य स शास्त्रनेत्रश्चासौ त्रयीतनुश्च शास्त्रनेत्रत्रयीतनुः। तदुक्तं 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति। वस्तुतः शास्त्रे पूर्वोत्तरमीमांसारूपे इत्यर्थः ॥९३॥ ९९ ज्ञानस्कंधाय। ज्ञानस्य स्कंधः समूहरूपो ज्ञानस्कंधः। ५०० महाज्ञानिने। महदपरिच्छिन्नं ज्ञानं यस्यास्तीति महाज्ञानी ॥ इति पंचमं शतकं समाप्तम् ॥ १ निरुत्पत्तये निर्गता उत्पत्तिर्यस्य स निरुत्पत्तिः उत्पत्तिशून्य इत्यर्थः। २ उपप्लवाय। उपप्लवो राहुरूपः 'उपप्लवः सैंहिकेयः' इति विश्वः। ३ भगाय। भगः षड्गुणैश्वर्यरूपः। ४ विवस्वते आदित्याय। विवसो रश्मयः संति यस्य स विवस्वान् तस्मै आदित्याय अदितिपुत्ररूपायेत्यर्थः। ५ योगाचार्याय। योगानां युक्तीनामाचार्यो गुरुः योगाचार्यः शुक्ररूपः "योगः पूर्वार्थसंप्राप्तौ संगतिज्ञानयुक्तिषु"

**स्वयंज्योतिरनुज्योतिरात्मज्योतिरचंचलः ॥ पिंगलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः ॥९३॥ ज्ञानस्कंधो महाज्ञानी निरुत्पत्तिरुपप्लवः॥ भगो विवस्वानादित्यो योगाचार्यो बृहस्पतिः ॥ ९४ ॥ उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ॥ नक्षत्रमाली राकेशः साधिष्ठानः षडाश्रयः ॥ ९५ ॥ पवित्रपाणिः पापारिर्मणिपूरो मनोगतिः ॥ हृत्पुंडरीकमासीनः शुक्लः शांतो वृषाकपिः ॥ ९६ ॥**

इति विश्वः। ६ बृहस्पतये। बृहस्पतिः सुराचार्यरूपः ॥ ९४ ॥ ७ उदारकीर्तये। उदारा श्रोतॄणां सर्वार्थदा कीर्तिर्यस्य स उदारकीर्तिः। ८ उद्योगिने। उत्सर्वोत्कृष्टः योगो यस्यास्तीति उद्योगी। ९ सद्योगिने। सद्ब्रह्म योजयति तच्छीलः सद्योगी संपृचोति घिनुण्। १० सदसन्मयाय। सद्ब्रह्म असन्मायिकं जगदुभयावयवः सदसन्मयः। ११ नक्षत्रमालिने राकेशाय। नक्षत्रैर्मालते शोभते तच्छीलो नक्षत्रमाली तस्मै राकेशाय चंद्ररूपायेत्यर्थः। १२ साधिष्ठानाय। अधिष्ठानेन प्रकृत्या सहितः साधिष्ठानः। १३ षडाश्रयाय षण्णां कामादीनामाश्रयः षडाश्रयः ॥ ९५ ॥ १४ पवित्रपाणये। पवित्राः पाणयो यस्य स पवित्रपाणिः। १५ पापारये। पापानामरिर्नाशक इत्यर्थः। १६ मणिपूराय। मणीनां पूरः प्रवाहो यस्मात्स मणिपूरः। १७ मनोगतये। मनस एव गतिर्गमनं यस्मिन्स मनोगतिरन्येंद्रियाग्राह्य इत्यर्थः। १८ हृत्पुंडरीकमासीनाय। हृत्पुंडरीकं स्वभक्तहृत्कमलमासीनः स्थित इत्यर्थः। १९ शुक्लाय। शुक्लः श्वेतवर्णः। २० शांताय वृषाकपये। शांत उपशमयुक्तस्तस्मै अत एव वर्षति कामान्सेचतीति वृषो धर्मस्तं न कंपयति न चालयतीति वृषाकपिः 'कपि किंचिच्चलने' अस्मादिहकंप्योर्नलोपश्चेत्यौणादिक इः ॥९६ ॥

२१ विष्णवे । वेवेष्टि जगद्व्याप्नोतीति विष्णुः । २२ ग्रहपतये । ग्रहाणां सोमादिग्रहाणां पतिः स्वामीत्यर्थः । २३ कृष्णाय । कृषति पापं विलिखतीति कृष्णस्तत्संज्ञकावतार रूपः । २४ समर्थाय । सम्यक् संपूर्णः अर्थो यस्य वा यस्मात्स समर्थः । २५ अर्थनाशनाय । अर्थो याच्ञा नश्यत्यनेनेत्यर्थनाशनः । २६ अधर्मशत्रवे । अधर्मस्य शत्रु र्नाशक इत्यर्थः। २७ अक्षय्याय न क्षय्योऽक्षय्यः क्षयाशक्य इत्यर्थः। २८ पुरुहूताय पुरुष्टुताय । पुरु प्रचुरं हूतं यज्ञेष्वाह्वानं यस्य स पुरुहूतस्तस्मै पुरु बहुलं स्तुतं वेदेषु स्तवनं यस्य स पुरुष्टुतः इंद्ररूप इत्यर्थः ॥ ९७ ॥ २९ ब्रह्मगर्भाय । ब्रह्मा गर्भो यस्य स ब्रह्मगर्भः। ३० बृहद्गर्भाय । बृहद्ब्रह्मांडरूपः गर्भो यस्य स बृहद्गर्भः । ३१ धर्म धेनवे । धर्मः धेनुः नवप्रसूतगोसदृशो यस्मात्स धर्मधेनुः " धेनुः स्यान्नवसूतिका " इत्यमरः । ३२ धनागमाय। धनस्य आगमस्तृप्तिपर्यंतं प्राप्तिर्यस्मात्स धनागमः। तदुक्तं 'धनं चातृप्तिपर्यंतं शिवपूजाविधेः फलम्' इति । ३३ जगद्धितैषिसुगताय । जगद्धितमिच्छंति ते जगद्धितैषिणस्तेषां सुखसुखेन गतं गमनं यस्मिन् स जगद्धितैषिसुगतः । ३४ कुमाराय । कुमारयति जगद्रूपेण क्रीडत इति कुमारः। ३५ कुशलागमाय । कुशलस्य कल्याणस्यागमः प्राप्तिर्यस्मात्स कुशलागमः॥९८॥ ३६ हिरण्यवर्णाय। हिरण्यवत्

**विष्णुर्ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ॥ अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ॥ ९७ ॥ ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ॥ जगद्धि तैषिसुगतः कुमारः कुशलागमः॥९८॥ हिरण्यवर्णो ज्योतिष्मान्नानाभूतधरो ध्वनिः॥ अरोगो नियमाध्यक्षो विश्वामित्रो द्विजोत्तमः॥९९॥ बृहज्ज्योतिः सुधामा च महाज्योतिरनुत्तमः ॥ मातामहो मातरिश्वा नभस्वान्नागहारधृक् ॥ १०० ॥**

सुवर्णवद्वर्णो यस्य स हिरण्यवर्णः। ३७ ज्योतिष्मते ज्योतिष्मान्नित्यकांतियुक्त इत्यर्थः । ३८ नानाभूतधराय । नानाभूतानामनंतजीवानां धरो धारक इत्यर्थः । ३९ ध्वनये । ध्वनिरनाहतध्वनिरूपः। ४० अरोगाय । नास्ति रोगो यस्मात्सोऽरोगः । ४१ नियमाध्यक्षाय । नियमानामध्यक्षः प्रभुरित्यर्थः। ४२ विश्वामित्राय द्विजोत्तमाय । विश्वामित्रस्त त्संज्ञस्तस्मै द्विजोत्तमाय ब्राह्मणश्रेष्ठायेत्यर्थः ॥ ९९ ॥ ४३ बृहज्ज्योतिषे बृहत्सूर्यरूपं ज्योतिर्यस्मात्स बृहज्ज्योतिः। ४४ सुधाम्ने सुष्ठु धाम तेजो यस्य स सुधामा । ४५ महा ज्योतिषे । महदपरिच्छिन्नं ज्योतिस्तेजोरूपः । ४६ अनुत्तमाय । नास्ति उत्तमो यस्मात्सोऽनुत्तमः। ४७ मातामहाय । मातुः जगज्जनन्याः मायायाः पिता जनको मातामहः । ४८ मातरिश्वने। मातरि अंतरिक्षे श्वयति वर्धते इति मातरिश्वा वायुरूपः 'मातरीति सप्तमीप्रतिरूपकमव्यय' ममरव्याख्यायामुक्तम् । ४९ नभस्वते । नभोंतरिक्षमपि यस्मिन्नस्तीति नभस्वान् । ५० नागहारधृषे । नागहारं धृष्णोति प्रगल्भं करोतीति नागहारधृक् नागहारस्य निर्भयधारक इत्यर्थः ॥ १०० ॥

५१ पुलस्त्याय । पुलस्त्यस्तत्संज्ञकऋषिरूपः। ५२ पुलहाय । पुलहस्तदृषिरूपः । ५३ अगस्त्याय । अगस्त्योगस्त्यमुनिरूपः । ५४ जातूकर्ण्याय । जातूकर्ण्यस्तत्संज्ञकमुनिरूपः। ५५ पराशराय । पराशरस्तत्संज्ञकऋषिरूपः। ५६ निरावरणधर्मज्ञाय । निर्गतमावरणं यस्मात्तादृशधर्मं मोक्षधर्मं जानातीति निरावरणधर्मज्ञः । ५७ विरिंचाय । विशेषेण रचयतीति विरिंचो ब्रह्मरूपः पृषोदरादित्वात्साधुरित्यमरव्याख्यायामुक्तम् । ५८ विष्टरश्रवसे । विष्टरे अश्वत्थवृक्षे श्रूयत इति विष्टरश्रवाः "वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः " इति त्रिकांडशेषः। श्रधानागैणादिक असुन् विष्णुरूप इत्यर्थः ॥१०१॥ ५९ आत्मभुवे । आत्मनि मनस्येव भवतीत्यात्मभूः प्रद्युम्नरूपः ' शंबरारिर्मनसिजः ' इत्यमरः। ६० अनिरुद्धाय । न निरुद्धोऽनिरुद्धः बाणासुरान्मोचितः। इयं कथा भागवते विस्तृता । ६१ अत्रिज्ञानमूर्तये । अत्रिश्चासौ ज्ञानमूर्तिश्चात्रिज्ञानमूर्तिः । ६२ महायशसे । महत्सर्वपूज्यं यशो यस्य स महायशाः। ६३ लोकचूडामणये । लोकेषु चूडामणिः शिरोरत्नरूपः। ६४ वीराय । वीरोऽपराजित इत्यर्थः । ६५ चंडसत्यपराक्रमाय । चंडस्तत्संज्ञकगणः सत्यपराक्रमो यस्मात्स चंडसत्यपराक्रमः ॥ २ ॥ ६६ व्यालकल्पाय व्यालानां सर्पाणां कल्पः प्रथमो वासुकिरूपः ' सर्पाणामस्मि वासुकिः ' इति भगवद्गीतोक्तेः । ६७ महाकल्पाय । महान्पूज्यः कल्पो न्यायो यस्मात्स महाकल्पः । ६८ महावृक्षाय । महान् वृक्षः संसारपिप्पलो यस्मात्स महावृक्षः । तदुक्तं भगवद्गीतायाम् "ऊर्ध्व

**पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ निरावरणधर्मज्ञो विरिंचो विष्टरश्रवाः ॥ १ ॥ आत्मभूरनिरुद्धोत्रिज्ञानमूर्तिर्महायशाः ॥ लोकचूडामणिर्वीरः चंडसत्यपराक्रमः ॥ २ ॥ व्यालकल्पो महाकल्पो महावृक्षः कलाधरः ॥ अलंकरिष्णुस्त्वचलो रोचिष्णुर्विक्रमोत्तमः ॥ ३ ॥ आशुशब्दपतिर्वेगी प्लवनः शिखिसारथिः ॥ असंसृष्टोऽतिथिः शक्रः प्रमाथी पापनाशनः ॥ ४ ॥**

मूलमधः शाखमश्वत्थं प्राहुरव्ययम् " इति । ६९ कलाधराय । कलायाश्चंद्रकलायाः धरः कलाधरः । ७० अलंकरिष्णवे । अलं पर्याप्तं सर्वं स्वभक्तेभ्यः करोति तच्छीलोऽलंकरिष्णुः अलंकृञ्तेतीष्णुच् । ७१ अचलाय । न चलोऽचलः हिमालयरूपः ' स्थावराणां हिमालयः " इति भगवद्गीतोक्तेः । ७२ रोचिष्णवे । रुचं दीप्तिं साधु करोतीति रोचिष्णुः आकेस्तच्छीलतद्धर्मतत्साधुकारिष्वित्युक्तत्वात् । ७३ विक्रमोत्तमाय । विक्रमः उत्तमः सर्वश्रेष्ठो यस्य स विक्रमोत्तमः ॥ ३ ॥ ७४ आशुशब्दपतये । आशु सत्वरं शब्दपतयः शब्दस्वामिनो यस्मात्स आशुशब्दपतिः " आशु व्रीहौ च सत्वरे " इति विश्वः । ७५ वेगिने । वेगः स्वभक्तकार्यकरणत्वरास्ति यस्य स वेगी । ७६ प्लवनाय । प्लवंते संसारसागरं तरंत्यनेनेति प्लवनः। ७७ शिखिसारथये । शिखिनः वह्नेः सारथिः सहायः शिखिसारथिः । वायुरूप इत्यर्थः । ७८ असंसृष्टाय । न संसृष्टोऽसंसृष्टः मायासंपृक्त इत्यर्थः । ७९ अतिथये । नास्ति तिथिः संकेतागमादिनं यस्य सोतिथिस्तत्स्वरूपः । तदुक्तं मार्कंडेये " अज्ञातकुलनामानं तत्काले समुपस्थितम् । शोभनाशोभनाकारं तं मन्येत प्रजापतिम् " इति । अस्मिंस्त्वेकोनत्रिंशे 'देयं सर्वं शिवायार्ये शिव एवातिथिः स्वयम् ' इति । ८० शक्राय प्रमाथिने । शक्नोतीति शक्रस्तस्मै प्रमथनशीलोऽसुरसैन्यविलोडनशीलः प्रमाथी इंद्ररूप इत्यर्थः ८१ पापनाशनाय । पापं नश्यत्यनेनेति पापनाशनः ॥ ४ ॥

८२ वसुश्रवसे । वसु मधुरं श्रवः श्रवणं यस्य स वसुश्रवाः 'वसु स्मृतं स्यान्मधुरेऽन्यवच्च' इति विश्वः । ८३ कव्यवाहाय । कव्यं श्राद्धीयं हविर्वहति प्रापयतीति कव्यवाहस्तत्संज्ञक वह्निरूपः ८४ प्रतमाय । प्रकृष्टं तमं तपो यस्य स प्रतमः ८५ विश्वभोजनाय । विश्वं भोजनं यस्य स विश्वभोजनः । ८६ जर्याय । जरितुं योग्यो जर्यः । अन्नरूप इत्यर्थः। ८७ जराधिशमनाय । जरा वार्धक्यमाधिर्मानसी पीडा ते शमयति नाशयतीति जराधिशमनः । ८८ लोहिताय । लोहितो रक्तवर्ण इत्यर्थः । ८९ तनूनपाते । तनूं स्वशरीरमपि न स्पाति स्वभक्तेभ्यः प्रयच्छतीति तनूनपात् 'न भ्राण् न पान्न वेद' इति निपातनान्नञः प्रकृतिभावः ॥ ५ ॥ ९० पृषदश्वाय । पृषतामंबुकणानाम् अश्वः इवाश्वसदृशवाहकः पृषदश्वः वायुरूप इत्यर्थः । ९१ नभसे । नहति जगद्बध्नातीति नभोंतरिक्षरूपः 'णह बंधने' अस्मान्नहेर्दिवि भश्चेत्यसुन् ।९२ योनये। योनिर्जगदाकररूपः 'योनिः स्यादाकरे भगे ' इति विश्वः । ९३ सुप्रतीकाय । सु प्रतीकाः अवयवाः यस्य स सुप्रतीकः 'प्रतीकोऽवयवे प्रोक्तः' इति विश्वः । ९४ तमिस्रघ्ने । तमिस्रमज्ञानं हंतीति तमिस्रहा । ९५ निदाघाय तपनाय । नितरां दह्यतेऽत्रेति निदाघस्तस्मै तपनो ग्रीष्मर्तुरूप इत्यर्थः । अत्र न्यंक्वादित्वात्कुत्वम् । ९६ मेघाय पक्षाय । मेहते सेचतीति मेघस्तस्मै पक्षाय पवनपक्षभवायेत्यर्थः । तदुक्तमस्मिन् चतुःपंचाशते 'काष्ठा वाहाश्च वैरिञ्च्याः पक्षाश्चैव पृथग्विधाः ' इत्यादिना । ९७ परपुरंजयाय । परपुराणि स्वभक्तशत्रुपुराणि जयतीति

**वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥ जर्यो जराधिशमनो लोहितश्च तनूनपात् ॥ ५ ॥ पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा॥ निदाघस्तपनो मेघः पक्षः परपुरंजयः ॥ ६ ॥ मुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ वसंतो माधवो ग्रीष्मो नभस्यो बीजवाहनः ॥ ७ ॥ अंगिरामुनिरात्रेयो विमलो विश्ववाहनः ॥ पावनः पुरुजिच्छक्रस्त्रिविद्यो नरवाहनः ॥ ८ ॥**

परपुरंजयः अत्र संज्ञायां भृतॄवृजीति खच् ॥ ६ ॥ ९८ मुखानिलाय । मुखे अनिलो वायुर्यस्मात्स मुखानिलः यत्सत्तया सर्वमुखेषु प्राणवायुसंचार इत्यर्थः । ९९ सुनिष्पन्नाय सु शोभनं निष्पन्नं यस्मात्स सुनिष्पन्नः सर्वशोभनजनक इत्यर्थः । ६०० सुरभये । सु रभंते हृष्यंति यस्मिन्नसौ सुरभिः 'रभ राभस्ये ' इन् औणादिकः ॥ इति षष्ठशतकं समाप्तम् ॥ १ शिशिरात्मकाय । शिशिरस्तत्संज्ञकऋतुरात्मा स्वरूपं यस्य स शिशिरात्मकः । २ वसंताय माधवाय । वसंतस्तत्संज्ञकऋतुरूपस्तस्मै मधु मकरंदोस्त्यस्मिन्निति माधवः । ३ ग्रीष्माय । ग्रसतीति ग्रीष्मः सर्वरसशोषकतत्संज्ञकऋतुरूपः । ४ नभस्याय नमः । नभसि श्रावणे भवतीति नभस्यो वर्षाऋतुरूपः । ५ बीजवाहनाय । बीजानि धान्यानि वहति प्रापयतीति बीजवाहनः शरद्धेमंतऋतुरूप इत्यर्थः ॥ ७ ॥ ६ अंगिरसे । अंगिरास्तत्संज्ञकमुनिरूपः । ७ मुनये आत्रेयाय । मुनये मननशीलाय तस्मै आत्रेयाय अत्रिऋषिपुत्ररूपायेत्यर्थः । ८ विमलाय । विगतः मलो यस्मात्स विमलः शुद्ध इत्यर्थः । ९ विश्ववाहनाय । विश्वं जगद्वहति नैरंतर्येण प्राप्नोति यस्मिन्निति विश्ववाहनः । १० पावनाय । पावयतीति पावनः सकलपातकनाशक इत्यर्थः । ११ पुरुजिते । पुरून्बहूनपि जयतीति पुरुजित् । १२ शक्राय । शक्नोतीति शक्रः सर्वं कर्तुमकर्तुं समर्थ इत्यर्थः । १३ त्रिविद्याय । त्रिगुणा विद्या प्रकृतिर्यस्य स त्रिविद्यः । १४ नरवाहनाय । नरः वाहने यस्य स नरवाहनः कुबेररूपः ॥ ८ ॥

१५ मनोबुद्धये। मनसा बुद्धिर्मनोबुद्धिः मनःसंयुक्तबुद्धिरूप इत्यर्थः । १६ अहंकाराय । अहम् अहमिति प्रत्ययं करोतीति अहंकारः अहमिति विभक्तिप्रतिरूपकमव्ययममर व्याख्यायामुक्तम् । १७ क्षेत्रज्ञाय । क्षेत्रं लिंगशरीरं जानातीति क्षेत्रज्ञो जीवरूपः । १८ क्षेत्रपालकाय । क्षेत्राणि सिद्धस्थानानि पालयतीति क्षेत्रपालकः ' क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः '' इति विश्वः । १९ तेजोनिधये । तेजांसि नितरां धीयंते यस्मिन्निति तेजोनिधिः । २० ज्ञाननिधये । ज्ञानानां निधिः स्थानभूतः । २१ विपाकाय विशेषेण पाको यस्मात्स विपाकः सकलकर्मफलप्रद इत्यर्थः । २२ विघ्नकारकाय । विघ्नान्यसुरसत्कर्मविघ्नानि करोतीति विघ्नकारकः गणेशरूपः ॥ ९ ॥ २३ अधराय । नास्ति धरो यस्य सोऽधरः सर्वाधार इत्यर्थः । २४ अनुत्तराय । नास्ति उत्तरो यस्मात्सोऽनुत्तरः सर्वोपरिवर्तमानः । २५ ज्ञेयाय । ज्ञातुं सुकृतिभिर्वेत्तुं योग्यो ज्ञेयः । २६ ज्येष्ठाय । ज्येष्ठः सर्वेभ्यो वयोधिकः । २७ निःश्रेयसालयाय । नितरां श्रेयो निःश्रेयसं मोक्षस्तस्यालयः स्थानरूप इत्यर्थः । २८ शैलाय । शिलायां भवः शैलः नार्मदादि लिंगरूपः । २९ नगाय । नगः श्रीशैलादिपर्वतरूपः । तदुक्तं ' श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते ' इति । ३० तनवे । तनुरत्यंतसूक्ष्मरूपो योगिनामप्यदृश्यः । ३१ दोहाय । दोग्धि सर्वं प्रपूरयतीति दोहः । ३२ दानवारये । दानवानां दनुजानामरिर्नाशकर इत्यर्थः । ३३ अरिंदमाय । अरीन् स्वभक्तशत्रून् दमयतीत्यरिंदमः संज्ञाया

**मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ॥ तेजोनिधिर्ज्ञाननिधिर्विपाको विघ्नकारकः ॥ ९ ॥ अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥**
**शैलो नगस्तनुर्दोहो दानवारिररिंदमः ॥ ११०॥ चारुधीर्जनकश्चारुविशल्यो लोकशल्यकृत् ॥ चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥११॥**
**आम्नायोथ समाम्नायस्तीर्थदेवशिवालयः ॥ बहुरूपो महारूपः सर्वरूपश्चराचरः ॥ १२ ॥**

मिति दमः खट्ट ॥ ११० ॥ ३४ चारुधियेजनकाय । चार्वी सूक्ष्मा धीर्बुद्धिर्यस्य स चारुधीस्तस्मै जनकाय विदेहनृपरूपायेत्यर्थः । ३५ चारुविशल्याय । चारवः सूक्ष्मे धियो विशल्याः विगतदुःखा यस्मात्स चारुविशल्यः । ३६ लोकशल्यकृते । लोकयंति ते लोकाः पृथक्दृष्टयस्तेषां शल्यं दुःखं करोतीति लोकशल्यकृत् । ३७ चतुर्वेदाय । चत्वार ऋगादयः वेदाः यस्मात्स चतुर्वेदः । तदुक्तं 'यस्य निश्वसितं वेदाः ' इति । ३८ चतुर्भावाय चत्वारो भावाः धर्मादयो यस्मात्स चतुर्भावः । ३९. चतुराय चतुरप्रियाय । चतुरः कुशलस्तस्मै अत एव चतुराः प्रियाः यस्य स चतुरप्रियः ॥ ११ ॥ ४० आम्नायाय । आम्नायो वेदरूपः । ४१ समाम्नाय । समस्तुल्यः आम्नायो वेदो येन स समाम्नायायः वेदस्यापि प्रमाणभूतः । यद्वा सर्वप्रमाणत्वेन सम्यगाम्नायो वेदो यस्मात्स समाम्नायः । ४२ तीर्थदेवशिवालयाय । तीर्थान्यवतारऋषिजुष्टांभांसि तेषु दीव्यंति मोदंति ते तीर्थदेवास्तेषां शिवस्य कल्याणस्यालयः स्थानभूतः । ४३ बहुरूपाय । बहून्यसंख्यानि रूपाणि यस्य स बहुरूपः । ४४ महारूपाय । महांति पूज्यानि रूपाणि यस्य स महारूपः । ४५ सर्वरूपाय । सर्वं विश्वं रूपं यस्य स सर्वरूपः । ४६ चराचराय । चरा अस्थिरा लक्ष्मीरचरा स्थिरा यस्मिन्स चराचरः ॥ १२ ॥

४७ न्यायनिर्वाहकाय । न्यायस्य सत्पक्षस्य निर्वाहको न्यायनिर्वाहकः।४८ न्यायाय । न्यायो नीतिरूपः। ४९ न्यायगम्यायं । न्यायेन नीत्या गम्यते ज्ञायत इति न्यायगम्यः। ५० निरंजनाय । निर्गतमंजनं मायातिमिरं यस्मात्स निरंजनः । ५१ सहस्रमूर्ध्ने । सहस्रसंख्या मूर्धानः शीर्षाणि यस्य स सहस्रमूर्धा । ५२ देवेंद्राय । देवानामिंद्रः परमेश्वर इत्यर्थः। ५३ सर्वशस्त्रप्रभंजनाय । सर्वशस्त्राणि प्रकर्षेण भंजयति नाशयतीति सर्वशस्त्रप्रभंजनः॥१३॥ ५४ मुंडाय । मुंडो व्रतलुंचितकेशरूपः । ५५ विरूपाय । विशिष्टं सर्वश्रेष्ठं रूपं यस्य स विरूपः। ५६ विकृताय । विशिष्टं कृतं कर्म यस्य स विकृतः। ५७ दंडिने दंडः कालदंडोस्ति यस्य स दंडी । ५८ दांताय। दांतो जितेंद्रिय इत्यर्थः । ५९ गुणोत्तमाय गुणा उत्तमा यस्मात्स गुणोत्तमः। ६० पिंगलाक्षाय । पिंगलानि पिंगवर्णान्यक्षीणि यस्य स पिंगलाक्षः । ६१ हर्यक्षाय । हरेर्विष्णोरक्षि नेत्रं समर्पितं यस्मिन्स हर्यक्षः। ६२ नीलग्रीवाय । नीला नीलवर्णा ग्रीवा यस्य स नीलग्रीवः । ६३ निरामयाय । निर्गता आमयाः सर्वरोगाः यस्मात्स निरामयः 'भिषक्तमं त्वा भिषजां शृणोमि' इति श्रुतेः ॥ १४ ॥ ६४ सहस्रबाहवे सर्वेशाय । सहस्रसंख्याः बाहवो यस्य स सहस्रबाहुस्तस्मै सर्वेषां निखिलजीवानामीशो नियंतेत्यर्थः । ६५ शरण्याय । शरणेषु साधुः शरण्यः । ६६ सर्वलोकभृते । सर्वलोकान् भूरादीन्बिभर्ति धारयतीति सर्वलोकभृत् । ६७ पद्मासनाय । पद्मं हृत्कमलमासनं यस्य स पद्मासनः । ६८ परंज्योतिषे । परं सर्वो

न्यायनिर्वाहको न्यायो न्यायगम्यो निरंजनः ॥ सहस्रमूर्धा देवेंद्रः सर्वशस्त्रप्रभंजनः ॥१३॥ मुंडो विरूपो विकृतो दंडी दांतो गुणोत्तमः ॥

पिंगलाक्षोथ हर्यक्षो नीलग्रीवो निरामयः ॥१४॥ सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकभृत् ॥ पद्मासनः परंज्योतिः परावरपरंफलः ॥१५॥

पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ॥ परावरज्ञो बीजेशः सुमुखः सुमहास्वनः ॥ १६ ॥ देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥

देवासुरमहामात्रो देवासुरमहाश्रयः ॥ १७ ॥

त्कृष्टं ज्योतिः तेजो यस्य स परंज्योतिः । ६९ परावरपरंफलाय अवरम् ऐहिकं परं पारलौकिकं च परावरम् । अभ्यर्हितत्वात्परशब्दस्य पूर्वनिपातस्तस्मात्परं मोक्षाख्यं परं फलं यस्मात्स परावरपरंफलः॥१५॥ ७० पद्मगर्भाय । पद्मं भुवनकोशाख्यं गर्भो वीर्यजं यस्य स पद्मगर्भः। ७१ महागर्भाय । महान्पूज्यः गर्भः विराड्रूपो यस्य स महागर्भः । ७२ विश्वगर्भाय । विश्वं जगद्गर्भो यस्य स विश्वगर्भः।७३ विचक्षणाय । विशेषेण चष्टे वेत्तीति विचक्षणः। तदुक्तम् 'मूकं करोति वाचालम्' इति । ७४परावरज्ञाय । परावरं भविष्यद्वर्तमानं जानातीति परावरज्ञः । ७५ बीजेशाय । बीजं संसारकारणभूतोहंकारस्तस्येशो नियंतेत्यर्थः । ७६ । सुमुखाय सुमहास्वनाय । सुष्ठु मुखं यस्य स सुमुखो गजाननरूपस्तस्मै सुशोभनो महास्वनो यस्य स सुमहास्वनः ॥१६॥ ७७ देवासुरगुरवे देवाय देवासुरैः हि श्रेष्ठत्वेन देवेष्वपि विश्रुतावतस्तद्धेतुकनामानि क्रमशः कानिचिदाह—देवासुरेत्यादिना । देवाः इंद्रादयः असुराः हिरण्यकशिप्वादयस्तेषां गुरुर्हितोपदेशकस्तस्मै देवाय क्रीडमानायेत्यर्थः। ७८ देवासुरनमस्कृताय । देवासुरैरपि नमस्कृतो देवासुरनमस्कृतः । ७९ देवासुरमहामात्राय । देवासुररूपौ मत्तगजसदृशदुर्दांतौ । तेषां महामात्रो नियंतेत्यर्थः । ८० देवासुरमहाश्रयाय । देवासुराणां महानाश्रयो यस्य स देवासुरमहाश्रयः ॥ १७ ॥

८१ देवादिदेवाय । देवानामादयः कारणाः देवादयो देवाः ब्रह्मविष्णुमहेश्वराः यस्मात्स देवादिदेवः । ८२ देवर्षिदेवासुरवरप्रदाय । देवानां ऋषिरतींद्रियदर्शकश्चासौ देवासुराणां वरानभिलषितार्थान् प्रकर्षेण ददातीति देवर्षिदेवासुरवरप्रदः। ८३ देवासुरेश्वराय । देवासुराः ईश्वराः यस्मात्स देवासुरेश्वरः। ८४ दिव्याय। दिवि भवो दिव्यः निर्विकार इत्यर्थः । ८५ देवासुरमहेश्वराय । देवासुराणां महेश्वरः पूज्यः स्वामीत्यर्थः ॥ १८ ॥ ८६ सर्वदेवमयाय । सर्वदेवमयः सर्वदेवावयव इत्यर्थः। ८७ अचिंत्याय । अस्य विष्णोरपि चिंत्यः अचिंत्यः। ८८ देवतात्मने । देवताः गौर्यादयः आत्मा स्वरूपं यस्य स देवतात्मा । ८९ आत्मसंभवाय । आत्मनां जीवानां संभवो यस्मात्स आत्मसंभवः । ९० ईड्याय । ईडितुं स्तोतुं योग्य ईड्यः सर्वस्तुत्य इत्यर्थः। ९१ अनीशाय । न ईशो यस्य सोऽनीशः। ९२ सुरव्याघ्राय । सुरेषु व्याघ्र इव सुरव्याघ्रः । ९३ देवसिंहाय । देवेषु सिंह इव देवसिंहः। ९४ दिवाकराय । दिवा दिवसं करोतीति दिवाकरः दिवाविभेति कृत्रः टः ॥ १९ ॥ ९५ विबुधाग्रवरश्रेष्ठाय । विबुधाग्र इंद्रस्तस्माद्वराः प्रजापतयस्तेभ्योऽपि श्रेष्ठो विबुधाग्रवरश्रेष्ठः । ९६ सर्वदेवोत्तमोत्तमाय । सर्वदेवेषूत्तमाः ब्रह्मादयस्तेष्वप्युत्तमः सर्वदेवोत्तमोत्तमः। ९७ शिवज्ञानरताय । शिवास्तद्रूपा ज्ञानरता यस्मात्स शिवज्ञानरतः। ९८ श्रीमते । श्रीस्त्रिवर्गसंपत्तिर्नित्यं यस्मिन्स श्रीमान् 'श्रीर्लक्ष्म्यां त्रिवर्गसंपत्तौ' इति विश्वः। ९९ शिखिश्रीपर्वतप्रियाय । शिखा चूडास्ति यस्य स शिखी शिखिने स्कंद

**देवादिदेवो देवर्षिदेवासुरवरप्रदः ॥ देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ॥ १८ ॥ सर्वदेवमयोऽचिंत्यो देवतात्मात्मसंभवः ॥ ईड्योऽनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ॥ १९ ॥ विबुधाग्रवरश्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः ॥ १२० ॥ जयस्तंभो विशिष्टंभो नरसिंहनिपातनः ॥ ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ॥ २१ ॥ नंदी नंदीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ लिंगाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगावहः ॥ २२ ॥**

कुमारार्थं श्रीपर्वतः प्रियो यस्य स शिखिश्रीपर्वतप्रियः । इयं कथा ज्योतिर्लिंगवर्णने शिवपुराणे उक्ता 'शिखा शिखायां चूडायाम्' इति विश्वः ॥१२०॥ ७०० जयस्तंभाय । जयस्य स्तंभ आधारभूत इत्यर्थः ॥ इति सप्तमं शतकं समाप्तम् ॥ १ विशिष्टंभाय । विशिष्टं सर्वोत्कृष्टमंभः गंगोदकं यस्मिन्स विशिष्टंभः । शकंध्वादित्वात्पररूपम् । २ नरसिंहनिपातनाय । नरसिंहं तत्संज्ञकावतारं निपातयति शरभरूपेण नाशयतीति नरसिंहनिपातनः। ३ ब्रह्मचारिणे । ब्रह्मणि चरति तच्छीलो ब्रह्मचारी । ४ लोकचारिणे । लोकेषु भूरादिषु चरति तच्छीलो लोकचारी । ५ धर्मचारिणे । धर्मं चरति तच्छीलो धर्मचारी । ६ धनाधिपाय । धनानामधिपः सकलधनस्वामीत्यर्थः ॥ २१ ॥ ७ नंदिने । नंदी शैलादिरूपः। ८ नंदीश्वराय । नंदिनः ईश्वरो नंदीश्वरः। ९ नग्नाय । नग्नो दिगंबररूपः। १० नग्नव्रतधराय । नग्नाः विगतवाससोऽवधूताः व्रतधराः यस्य स नग्नव्रतधरः । ११ शुचये । शुचिरनुपहतः। 'शुचिः शुद्धेनुपहते' इति विश्वः। १२ लिंगाध्यक्षाय । लिंगे बाणादिर्लिंगरूपे अध्यक्षं प्रत्यक्षं यस्य स लिंगाध्यक्षः । १३ सुराध्यक्षाय । सुराणां देवानामध्यक्षः प्रभुरित्यर्थः। १४ युगाध्यक्षाय । युगानां कृतादीनामध्यक्षः प्रभुरित्यर्थः । १५ युगावहाय । युगानां कृतादीनामावहस्तत्तत्काले प्रापक इत्यर्थः ॥२२॥

१६ स्ववशाय । स्वस्यैव वशः स्ववशः इतरानधीन इत्यर्थः । १७ सवशाय । वशेन इंद्रियनिग्रहेण सहितः सवशः । १८ स्वर्गस्वराय । स्वर्गे तत्संज्ञकलोके स्वरो नासासमीरणो यस्य स स्वर्गस्वरः । 'स्वरो नासासमीरणे' इति विश्वः । १९ स्वरमयस्वनाय । स्वरमयः षड्जादिसमस्वरावयवः स्वनः शब्दो यस्मात्स स्वरमयस्वनः । तदुक्तं छंदःसूत्रे 'स्वराः षड्जऋषभगांधारमध्यमपंचमधैवतनिषादाः' इति । २० बीजाध्यक्षाय । बीजस्य शुक्रस्याध्यक्षः प्रभुरित्यर्थः । २१ बीजकर्त्रे । बीजं शुक्रं करोत्युत्पादयतीति बीजकर्ता । २२ धनकृद्धर्मवर्धनाय । धनं करोतीति धनकृत्स चासौ धर्मवर्धनश्च धनकृद्धर्मवर्धनः ॥ २३ ॥ २३ दंभाय । दंभो भक्तपरीक्षार्थं कैतवरूपः 'दंभस्तु कैतवे कल्के' इति विश्वः । २४ अदंभाय । नास्ति दंभं कैतवं यस्मिन्सोऽदंभः । २५ महादंभाय । महत्पूज्यं दंभं कैतवमपि यस्य स महादंभः । २६ सर्वभूतमहेश्वराय । सर्वभूतानां महेश्वरः सर्वभूतमहेश्वरः । २७ श्मशाननिलयाय । श्मशानः सकलशवाधिष्ठानो महाप्रलयस्तस्यापि नितरां लयो नाशो यस्मात्स श्मशाननिलयः । २८ तिष्याय । तिष्यः पृथिवीरूपः 'तिष्यः पुष्ये कलौ धात्र्याम्' इति विश्वः । २९ सेतवे । सेतुर्भवांबुधौ मार्गरूपः । ३० अप्रतिमाकृतये । अप्रतिमा उपमाशून्या आकृतिः स्वरूपं यस्य सोऽप्रतिमाकृतिः ॥ २४ ॥

**स्ववशः सवशः स्वर्गः स्वरः स्वरमयस्वनः ॥ बीजाध्यक्षो बीजकर्ता धनकृद्धर्मवर्धनः ॥ २३ ॥ दंभोऽदंभो महादंभः सर्वभूतमहेश्वरः ॥ श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ॥ २४ ॥ लोकोत्तरस्फुटालोकस्त्र्यंबको नागभूषणः ॥ अंधकारिर्मखद्वेषी विष्णुकंधरपातनः ॥ २५ ॥ वीतदोषोऽक्षयगुणो दक्षारिः पूषदंतहृत् ॥ धूर्जटिः खंडपरशुः सकलो निष्कलोऽनघः ॥ २६ ॥**

३१ लोकोत्तरस्फुटालोकाय । लोक्यत इति लोकस्तस्मादुत्तरोऽचक्षुर्ग्राह्यः स्फुटो विकसमानः आलोक आत्मप्रकाशो यस्य स लोकोत्तरस्फुटालोकः । ३२ त्र्यंबकाय । त्रीण्यंबकानि नेत्राणि यस्य स त्र्यंबकः । ३३ नागभूषणाय । नागाः शेषादयः भूषणानि यस्य स नागभूषणः । ३४ अंधकारये । अंधकस्य तत्संज्ञकहिरण्याक्षपुत्रदैत्यस्यारिर्नाशक इत्यर्थः । ३५ मखद्वेषिणे । मखद्वेषो दक्षयज्ञद्वेषोऽस्ति यस्य स मखद्वेषी । ३६ विष्णुकंधरपातनाय । विष्णोः कंधरां ग्रीवां पातयतीति विष्णुकंधरपातनः ॥ २५ ॥ ३७ वीतदोषाय । वीताः गताः दोषा वैषम्यनैर्घृण्यादयो यस्मात्स वीतदोषः । ३८ अक्षयगुणाय । अक्षयाः नाशशून्याः गुणाः योगादिषोडशाध्यायोक्तद्वात्रिंशद्गुणाः यस्मिन्सोऽक्षयगुणः । ३९ दक्षारये । दक्षस्य दक्षप्रजापतेररिः शत्रुरित्यर्थः । पूषदंतहृते । ४० पूषदंतान् हरतीति पूषदंतहृत् । ४१ धूर्जटये । धूः सर्वश्रेष्ठा जटिः केशसंघातो यस्य स धूर्जटिः 'जट-संघाते' तस्मात्सर्वधातुभ्य औणादिक इच् । ४२ खंडपरशवे । खंडयतीति खंडः सर्वच्छेदकः परशुर्यस्य स खंडपरशुः । ४३ सकलाय । कलया चंद्रकलया सहितः सकलः । ४४ निष्कलाय । निष्कलः शुद्ध इत्यर्थः । ४५ अनघाय । नास्त्यघं पातकं यस्मिन्सोऽनघः ॥ २६ ॥

४६ आधाराय। आ सर्वमभिव्याप्य धारो धरणं यस्य स आधारः ।४७ सकलाधाराय सकला आधारा यस्मात्स सकलाधारः। ४८ पांडुराभाय। पांडुरा श्वेता आभा कांतिर्यस्य स पांडुराभः । ४९ मृडाय । मृडयति सर्वान् सुखयतीति मृडः । ५० नटाय । नटश्चित्ररूपः । ५१ पूर्णाय । पूर्ण ऐश्वर्यादिसकलशक्तिसंपन्न इत्यर्थः । ५२ पूरयित्रे । पूरयतीति पूरयिता स्वभक्ताभिलाषपूरकः ५३ पुण्याय । पुण्यः स्मृतिमात्रेण कल्मषनाशकः। ५४ सुकुमाराय। सु शोभनः कुमारः स्कंदो यस्य स सुकुमारः। ५५ सुलोचनाय। सुष्ठु लोचनानि नेत्राणि यस्य स सुलोचनः ॥ २७ ॥ ५६ सामगेयाय । सामभिर्गेयो गातुं योग्य इत्यर्थः । ५७ प्रियकराय । प्रियं करोति तच्छीलः प्रियकरः । ५८ पुण्यकीर्तये । पुण्या पापनाशिका कीर्तिर्यस्य स पुण्यकीर्तिः । ५९ अनामयाय । नामभिः शब्दैर्याति प्राप्नोतीति नामयः न नामयोऽनामयः शक्त्या शब्दाप्रतिपाद्यः 'यतो वाचो निवर्तंते' इति श्रुतेः । अत्र सुपीति योगविभागात्कः । ६० मनोजवाय । मनसः अजवो यस्मिन् स मनोजवः ' अप्राप्य मनसा सह' इति श्रुतेः । ६१ तीर्थकराय । तीर्थानि पुष्करादीनि करोतीति तीर्थकरस्तीर्थहेतुरित्यर्थः । ६२ जटिलाय । जटिलो जटाविशिष्टः । ६३ जीवितेश्वराय । जीवितस्यायुष्यस्य ईश्वरः स्वामीत्यर्थः ॥ २८ ॥

**आधारः सकलाधारः पांडुराभो मृडो नटः ॥ पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ॥२७॥ सामगेयः प्रियकरः पुण्यकीर्तिरनामयः॥ मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ॥ २८ ॥ जीवितांतकरो नित्यो वसुरेता वसुप्रियः ॥ सद्गतिः सत्कृतिः सक्तः कालकंठः कलाधरः ॥ २९ ॥ मानी मान्यो महाकालः सद्भूतिः सत्परायणः ॥ चंद्रसंजीवनः शास्ता लोकगूढोमराधिपः ॥ १३० ॥**

६४ जीवितांतकराय । जीवितस्यांतकरो नाशहेतुः । ६५ नित्याय । नितरां त्यजति भवबंधं दूरीकरोतीति नित्यः त्यजधातोरन्यत्रापि दृश्यत इति डः । ६६ वसुरेतसे । वसु सुवर्ण रेतो यस्य स वसुरेताः । ६७ वसुप्रियाय । वसुर्धनाधिपः प्रियो यस्य स वसुप्रियः । 'वसुमयूखाग्निधनाधिपेषु' इति विश्वः । ६८ सद्गतये । सती अव्यभिचारिणी गतिर्यस्मात्स सद्गतिः । ६९ सत्कृतये । सती प्रशस्ता कृतिर्यस्य स सत्कृतिः । ७० सक्ताय । भक्तोदिकासंसक्तः । ७१ कालकंठाय । कालो महाकालः कंठे समीपे यस्य स कालकंठः । ७२ कलाधराय । कलानां चतुःषष्टिकलानां धरो धारक इत्यर्थः ॥ २९ ॥ ७३ मानिने । मानोऽस्यास्तीति मानी नित्यसन्मानविशिष्टः । ७४ मान्याय । मानयितुं स्वकल्याणार्थमत्यंतसत्कारं कर्तुं योग्यो मान्यः। तदुक्तं भागवते प्रह्लादेन "नैवात्मनः प्रभुरसौ निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मनः प्रतिमुखस्य यथा मुखश्रीः ॥" इति ।७५ महाकालाय । महानपरिमितः कालो यस्य स महाकालः । ७६ सद्भूतये सती प्रशस्ता भूतिर्यस्मात्स सद्भूतिः । ७७ सत्परायणाय । सतां परायणः परमस्थानरूपः। ७८ चंद्रसंजीवनाय । चन्द्रस्य संजीवनः क्षयरोगनिवारक इत्यर्थः । ७९ शास्त्रे लोकगूढाय । शास्ता सकलानुशासकस्तस्मै लोकानां जनानां गूढोऽप्रत्यक्ष इत्यर्थः । ८० अमराधिपाय । अमराणां देवानामधिपः स्वामीत्यर्थः ॥ १३० ॥

८१ लोकबंधवे । लोकानां जीवानां बंधुरिव भ्रातृसदृशो लोकबंधुः । ८२ लोकनाथाय । लोकानां चतुर्दशभुवनानां नाथ ईश्वरः । ८३ कृतज्ञाय कृतिभूषणाय । कृतं सत्कर्म जानातीति कृतज्ञस्तस्मै अत एव कृतिः स्वभक्तयत्नः भूष्यतेऽनेनेति कृतिभूषणः । ८४ अनपाय्यक्षराय । नास्त्यपायो नाशो येषां तान्यनपायीनि अक्षराणि यस्य सोऽनपाय्यक्षरः वेदरूप इत्यर्थः । ८५ कांताय कस्य शमनस्याप्यंतो नाशो यस्मात्स कांतः ' को ब्रह्मात्मानिलार्केषु शमने च ' इति विश्वः । ८६ सर्वशास्त्रभृतांवराय सर्वशास्त्राणि बिभ्रति पोषयंति ते सर्वशास्त्रभृतस्तेषां मध्ये वरः श्रेष्ठ इत्यर्थः ॥ ३१ ॥ ८७ तेजोमयाय द्युतिधराय तेजोमयस्तेजःप्रचुरस्तस्मै अत एव द्युतेः कांतेः धरो धारक इत्यर्थः । ८८ लोकमायाय । लोकाः माया यस्य स लोकमायः। ८९ अग्रण्ये । अग्रं सर्वश्रेष्ठस्थानं नयति स्वभक्तेभ्यःप्रापयतीत्यग्रणीः । ९० अणवे । अणुः परमसूक्ष्मरूपः। ९१ शुचिस्मिताय । शुचि शुद्धं स्मितं हास्यं यस्य स शुचिस्मितः । ९२ प्रसन्नात्मने । प्रसन्नः आत्मा स्वभावो यस्य स प्रसन्नात्मा ।९३ दुर्जयाय दुःखेनापि जेतुमशक्यो दुर्जयः । ९४ दुरतिक्रमाय । दुःखेनापि क्रमितुमशक्यो दुरतिक्रमः॥ ३२ ॥ ९५ ज्योतिर्मयाय । ज्योतिर्मयो ज्योतिर्लिंगरूपः । ९६ निराकाराय । निर्गतः आकारो यस्मात्स निराकारः

लोकबंधुर्लोकनाथः कृतज्ञः कृतिभूषणः ॥ अनपाय्यक्षरः कांतः सर्वशास्त्रभृतां वरः ॥ ३१ ॥ तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ॥ शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ॥ ३२ ॥ ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ॥ तुंबवीणी महाकायो विशोकः शोकनाशनः ॥ ३३ ॥ त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धी रथाक्षजः ॥ अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशांपतिः ॥ ३४ ॥

निर्गुणरूपः । ९७ जगन्नाथाय जगतां निखिलविश्वानां नाथो जगन्नाथः । ९८ जलेश्वराय । जलानां सकलोदकानामीश्वरो जलेश्वरः । ९९ तुम्बवीणिने । तुंबफलद्वययुक्ता वीणास्ति यस्य स तुंबवीणी अत एव सा लोके रुद्रवीणेत्युच्यते ।८०० महाकायाय महान्पूज्यः कायो मूर्तिर्यस्य स महाकायः ' कायः कदैवते मूर्तौ " इति विश्वः ॥ इति अष्टमं शतकं समाप्तम् ॥ १ विशोकाय । विगतः शोको यस्मात्स विशोकः । २ शोकनाशनाय । शोकं भक्तशोकं नाशयतीति शोकनाशनः ॥ ३३ ॥ ३ त्रिलोकात्मने । त्रिलोकाः त्रैलोक्यमात्मा देहो यस्य स त्रिलोकात्मा ४ त्रिलोकेशाय । त्रिलोकानामीशस्त्रिलोकेशः । ५ शुद्धाय । शुद्धो निष्कल्मष इत्यर्थः । ६ शुद्धये । शुद्धिः शौचरूपः । ७ रथाक्षजाय । रथाक्षं सुदर्शनचक्रं जनयतीति रथाक्षजः ' अक्षः कर्षे तुषे चक्रे ' इति विश्वः । ८ अव्यक्तलक्षणाय । अव्यक्तान्यस्पष्टानि लक्षणानि यस्य सोऽव्यक्तलक्षणः । ९ अव्यक्ताय । अः विष्णुर्व्यक्तो यस्मात्सोऽव्यक्तः । १० विशांपत्ये । विशां सकलप्रजानां पतिः पालक इत्यर्थः ॥ ३४ ॥

११ वरशीलाय । वरं सर्वश्रेष्ठं शीलं सद्वृत्तं यस्मात्स वरशीलः । १२ वरतुलाय । वरं सर्वश्रेष्ठं तुलमुन्मानं यस्य स वरतुलः । १३ मानाय । मानः सकलप्रमाणभूतः । १४ मानधनाय मयाय । मानेन सन्मानेन धनं यस्मात्स मानधनस्तस्मै अत एव मयः सुखरूपः । १५ ब्रह्मणे । ब्रह्मा पितामहरूप इत्यर्थः । १६ विष्णवे प्रजापालाय । विष्णु व्यापकस्तस्मै प्रजाः पालयतीति प्रजापालो रक्षकमूर्तिरित्यर्थः । १७ हंसाय । हंति अज्ञानं नाशयतीति हंसः परमात्मरूपः 'हंसो विहंगभेदे स्यादर्के विष्णौ हयांतरे । योगि मंत्रादिभेदेषु परमात्मनि मत्सरे'' इति विश्वः । 'भवेद्वर्णागमाद्धंसः' इत्युक्तः । १८ हंसगतये । हंसानां योगिनां गतिर्यस्मिन् स हंसगतिः । १९ यमाय यमस्तत्संज्ञकप्रथम योगांगरूपः । तथा च पातंजलसूत्रम् 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति ॥ ३५ ॥ २० वेधसे विशेषेण दधातीति वेधाः सकलाधारभूतः विधात्रो वेधादेशोऽसि प्रत्यय औणादिकोऽमरव्याख्यायामुक्तः । २१ धात्रे । दधाति जगत्पुष्णातीति धाता । २२ विधात्रे । विशेषेण दधाति ब्रह्मांडं पुष्णातीति विधाता । २३ अत्रे हर्त्रे । अत्ति जगद्भक्षयतीत्यत्ता तस्मै अत एव हरति जगत्संहारं करोतीति हर्ता । २४ चतुर्मुखाय चत्वारि मुखानि यस्य स चतुर्मुखो ब्रह्मरूपः। २५ कैलासशिखरावासिने । कैलास शिखरे आवसति तच्छीलः कैलासशिखरावासी । २६ सर्वावासिने । सर्वत्रावसति तच्छीलः सर्वावासी । २७ सतां गतये । सतां साधूनां गतिः मार्गरूपः ॥ ३६ ॥ २८ हिर

**वरशीलो वरतुलो मानो मानधनो मयः ॥ ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्यमः ॥ ३५ ॥ वेधा धाता विधाता च अत्ता हर्ता चतुर्मुखः ॥ कैलासशिखरावासी सर्वावासी सतां गतिः ॥ ३६ ॥ हिरण्यगर्भो हरिणः पुरुषः पूर्वजः पिता ॥ भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ॥ ३७ ॥ संयोगी योगविद्ब्रह्मा ब्रह्मण्यो ब्राह्मणप्रियः ॥ देवप्रियो देवनाथो देवज्ञो देवचिंतकः ॥ ३८ ॥**

ण्यगर्भाय हिरण्यं गर्भः वीर्यजं यस्य स हिरण्यगर्भः । २९. हरिणाय । हरिणः पांडुरवर्णः 'हरिणः पांडुरः पांडुः' इत्यमरः । ३० पुरुषाय पुरुषस्तत्संज्ञकस्तदुक्तमुपरिभागे "पुरुषं शंकरं प्राहुर्गौरीं च प्रकृतिं द्विजाः" इति । ३१ पूर्वजाय पित्रे पूर्वं सकलादौ जायते प्रादुर्भवतीति पूर्वजस्तस्मै पित्रे सकलजनकायेत्यर्थः । ३२ भूतालयाय । भूतं भूतसंज्ञकवनमालयः स्थानं यस्य स भूतालयः । इयं कथा पूर्वमुक्ता । ३३ भूतपतये । भूतानां गगनादीनां पतिः पालक इत्यर्थः । ३४ भूतिदाय । भूतिमैश्वर्यं ददातीति भूतिदः । ३५ भुवनेश्वराय । भुवनानामीश्वराः स्वामिनो यस्मात्स भुवनेश्वरः ॥ ३७ ॥ ३६ संयोगिने । सम्यक् योजयति तच्छीलः संयोगी यथायथं कर्मफलप्रापकः । ३७ योगविद्ब्रह्मणे । योगवित्सकलोपायज्ञः ब्रह्मा यस्मात्स योगविद्ब्रह्मा । ३८ ब्रह्मण्याय । ब्रह्मणे तपसे हितो ब्रह्मण्यः । ३९ ब्राह्मणप्रियाय । ब्राह्मणाः प्रियाः यस्य स ब्राह्मणप्रियः । ४० देवप्रियाय । देवाः प्रिया यस्य स देवप्रियः । ४१ देवनाथाय । देवानां नाथः स्वामीत्यर्थः । ४२ देवज्ञाय । देवाः ज्ञाः ज्ञानिनो यस्मात्स देवज्ञः 'ज्ञा अवबोधने' अस्मादिगुपधेति कः । ४३ देवचिंतकाय देवा अपि चिंतका यस्य स देवचिंतकः ॥ ३८ ॥

४४ विषमाक्षाय । विषमाणि त्रीण्यक्षीणि यस्य स विषमाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् समासांतः । ४५ कलाध्यक्षाय । कलानां चतुःषष्टिकलानामध्यक्षः प्रभुरित्यर्थः । ४६ वृषांकाय । वृषो धर्म एव अंकः भूषणं यस्य स वृषांकः ' अंकश्चित्रयुद्धे च भूषणे ' इति विश्वः । ४७ वृषवर्धनाय । वृषो धर्मः वर्धत्यनेनेति वृषवर्धनः । ४८ निर्मदाय निरहंकाराय । निर्गतः मदो यस्मात्स निर्मदस्तस्मै अत एव निर्गतः अहंकारो यस्मात्स निरहंकारः । ४९ निर्मोहाय । निर्गतः मोहो वैचित्यं यस्मात्स निर्मोहः। ५० निरुपद्रवाय । निर्गतः उपद्रवो यस्मात्स निरुपद्रवः ॥ ३९ ॥ ५१ दर्पघ्ने । दर्पमुत्सेकं सर्वेषां हंतीति दर्पहा । ५२ दर्पिताय । दर्पो हर्षः संजातो यस्य स दर्पितो नित्युतुष्ट इत्यर्थः । ५३ दृप्ताय दृप्तः स्वात्मामृतास्वादेन नित्यहर्षित इत्यर्थः । ५४ सर्वर्तुपरिवर्तकाय । सर्वर्तून् वसंतादीन्परिवर्तयति भ्रामयतीति सर्वर्तुपरिवर्तकः । ५५ सप्तजिह्वाय । सप्त तत्संख्याका जिह्वाः यस्य स सप्तजिह्वः ' सप्त ते अग्ने समिधः सप्तजिह्वाः ' इति श्रुतेः । ५६ सहस्रार्चिषे । सहस्रसंख्याताः अर्चिषो दीप्तयो यस्य स सहस्रार्चिः । ५७ स्निग्धाय । स्निग्धो दयार्द्र इत्यर्थः । ५८ प्रकृतिदक्षिणाय । प्रकृत्या स्वभावेन दक्षिणः सरलः प्रकृतिदक्षिणः ' दक्षिणः सरलोपि च ' इति त्रिकांडशेषः ॥ १४० ॥

**विषमाक्षः कलाध्यक्षो वृषांको वृषवर्धनः ॥ निर्मदो निरहंकारो निर्मोहो निरुपद्रवः ॥ ३९ ॥ दर्पहा दर्पितो दृप्तः सर्वर्तुपरिवर्तकः ॥ सप्तजिह्वः सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ॥४०॥ भूतभव्यभवन्नाथः प्रभवो भ्रांतिनाशनः ॥ अर्थोनर्थो महाकोशः परकार्यैकपंडितः ॥४१॥ निष्कंटकः कृतानंदो निर्व्याजो व्याजमर्दनः ॥ सत्त्ववान् सात्त्विकः सत्यकीर्तिस्तंभकृतागमः ॥ ४२ ॥**

५९ भूतभव्यभवन्नाथाय । भूतं पूर्वोत्पन्नं भव्यं भविष्यद्भवद्वर्तमानं च तेषां नाथः स्वामीत्यर्थः । ६० प्रभवाय । प्रकर्षेण भवः संसारो यस्मात्स प्रभवः । ६१ भ्रांतिनाशनाय । भ्रांतिं देहादावात्मबुद्धिं नाशयतीति भ्रांतिनाशनः । ६२ अर्थाय अर्थ्यत इत्यर्थः सर्वप्रार्थ्य इत्यर्थः। ६३ अनर्थाय । नास्त्यर्थः प्रयोजनं यस्य सोऽनर्थः आप्तकाम इत्यर्थः । ६४ महाकोशाय । महानपरिमितः कोशो धनं यस्मात्स महाकोशः । ६५ परकार्यैकपंडिताय । परं च तत्कार्यं च परकार्यं मोक्षाख्यं तस्मिन्नेकोऽद्वितीयः पंडितः परकार्यैकपंडितः ॥ ४१ ॥ ६६ निष्कंटकाय । निर्गताः कण्टकाः कामादिशत्रवो यस्मात्स निष्कंटकः ' कण्टकः क्षुद्रशत्रौ च ' इति विश्वः । ६७ कृतानंदाय । कृतोऽच्छिन्नः आनंदो यस्मात्स कृतानंदः ' कृतं तु वेष्टितेऽच्छिन्ने ' इति विश्वः । ६८ निर्व्याजाय निर्गतं व्याजं कपटं यस्मात्स निर्व्याजः । ६९ व्याजमर्दनाय । व्याजं मिषं मर्दयतीति व्याजमर्दनः । ७० सत्त्ववते । सत्त्वं शौर्यवीर्यादिकं नित्यं यस्मिन्स सत्त्ववान् । ७१ सात्त्विकाय । सात्त्विकः सत्त्वगुणप्रधानः । ७२ सत्यकीर्तिस्तंभकृतागमाय । सत्यकीर्तिस्तंभकृतः आगमो वेदो येन स सत्यकीर्तिस्तंभकृतागमः ॥ ४२ ॥

७३ अकंपिताय । न कंपितोऽकंपितः निश्चल इत्यर्थः । ७४ गुणग्राहिणे । गुणान्स्वभक्तगुणान् गृह्णाति तच्छीलो गुणग्राही । ७५ नैकात्मने नैककर्मकृते । न एकः आत्मा स्वरूपं यस्य स नैकात्मा सकलजीवरूपस्तस्मै अत एव नैककर्माणि सर्वकर्माणि करोतीति नैककर्मकृत् । अत्र नशब्देन सुप्सुपेति समासः । ७६ सुप्रीताय । सु शोभनं प्रीतं प्रसादो यस्य स सुप्रीतः । तदुक्तं सीमंतिन्या ब्रह्मोत्तरखंडे " तुष्टे च पार्वतीनाथे किमसाध्यं शरीरिणाम् " इति । ७७ सुमुखाय सुष्ठु मुखं संसारनिःसरणं यस्मात्स सुमुखः 'मुखं निःसरणे वक्त्रे' इति विश्वः । ७८ सूक्ष्माय । सूक्ष्मः सर्वगतः ' सर्वगतं सुसूक्ष्मम् ' इति श्रुतेः । ७९ सुकराय । सुष्ठु वरदत्वेन शोभनः करो हस्तो यस्य स सुकरः । ८० दक्षिणाय । दक्षिणः सव्यमार्गरूपः ' दक्षिणः सरलावामपरच्छंदानुवर्तिषु ' इति विश्वः । ८१ अनलाय । नास्त्यलो भूषणं यस्य सोऽनलः स्वयमेव भूषणभूत इत्यर्थः ॥ ४३ ॥ ८२ स्कंधाय । स्कंधस्तत्त्वप्रकांडरूपः ' स्कंधः प्रकांडे ' इति विश्वः । ८३ स्कंधधराय । स्कंधानां तत्त्वप्रकांडानां धरो धारक इत्यर्थः । ८४ धुर्याय । धुरं समस्त भूतजन्मादिलक्षणां वहतीति धुर्यः । ८५ प्रकटाय । प्रकटः सूर्यादिरूपेण सर्वप्रत्यक्ष इत्यर्थः । ' उतैनं गोपा अदृशन्नदृशन्नुदहार्य ' इति श्रुतेः । ८६ प्रीतिवर्धनाय । प्रीतिर परमहिमत्वाद्भक्तप्रेम वर्धतेऽस्मिन्निति प्रीतिवर्धनः । ८७ अपराजिताय । न पराजितोऽपराजितः पराभवशून्यः । ८८ सर्वसहाय । सर्वं वस्तुजातं सहतीति सर्वसहः । ८९ विद

**अकंपितो गुणग्राही नैकात्मा नैककर्मकृत् ॥ सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणोऽनलः ॥ ४३ ॥ स्कंधः स्कंधधरो धुर्यः प्रकटः प्रीति वर्धनः ॥ अपराजितः सर्वसहो विदग्धः सर्ववाहनः ॥ ४४ ॥ अधृतः स्वधृतः साध्यः पूर्तमूर्तिर्यशोधरः ॥ वराहशृंगधृग्वायुर्बलवानेकना यकः ॥ ४५ ॥ श्रुतिप्रकाशः श्रुतिमानेकबंधुरनेकधृक् ॥ श्रीवल्लभशिवारंभः शांतभद्रः समंजसः ॥ ४६ ॥**

ग्धाय । विशिष्टं निर्मूलं दग्धं यस्मात्स विदग्धः । तदुक्तं गीतायां " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनः " इति । ९० सर्ववाहनाय । सर्वं वाह्यते प्राप्यतेऽनेनेति सर्व वाहनः ॥ ४४ ॥ ९१ अधृताय । न धृतोऽधृतः अनन्याधार इत्यर्थः । ९२ स्वधृताय । स्वेनात्मनैव धृतः स्वधृतः ' स्वं ज्ञातावात्मधनयोः ' इति विश्वः । ९३ साध्याय । साधितुं योग्यः साध्यः । ९४ पूर्तमूर्तये पूर्तं वापीकूपादिकरणं मूर्तिः स्वरूपं यस्य स पूर्तमूर्तिः । ९५ यशोधराय । यशसः धरो यशोधरः । ९६ वराहशृंगधृषे । वराहशृंगं यज्ञवराहदंष्ट्रां धृष्णोतीति वराहशृंगधृक् । ९७ वायवे वाति गच्छतीति वायुस्तद्रूपः । ९८ बलवते बलं सामर्थ्यं नित्यं विद्यते यस्य स बलवान् । ९९ एकनायकाय । एकोऽद्वि तीयो नायकः श्रेष्ठ इत्यर्थः । 'नायको नेतरि श्रेष्ठे' इति विश्वः ॥ ४५ ॥ ९०० ॥ श्रुतिप्रकाशाय । श्रुतिभिः प्रकाशो यस्य स श्रुतिप्रकाशः 'औपनिषदं पुरुषं पृच्छामि' इति श्रुतेः ॥ इति नवमं शतकं समाप्तम् ॥ १ श्रुतिमते । श्रुतिर्वेदोऽस्ति नित्यं यस्य स श्रुतिमान् । २ एकबंधवे । एकोऽद्वितीयो बंधुरेकबंधुः प्रत्युपकारानपेक्षोपकारीत्यर्थः । ३ अने कधृषे । अनेकानसंख्यस्वभक्तान्धृष्णोति प्रगल्भान्करोतीत्यनेकधृक् 'ञिधृषा प्रागल्भ्ये' अस्मात्क्विप् । ४ श्रीवल्लभशिवारंभाय । श्रीवल्लभस्य विष्णोः शिवारंभः कल्याणप्रारंभो यस्मात्स श्रीवल्लभशिवारंभः । ५ शांतभद्राय । शांतानां भद्रं यस्मात्स शांतभद्रः । ६ समंजसाय । सम्यगनक्ति यथार्थं जानातीति समंजसः ॥ ४६ ॥

७ भूशयाय । भूः भूमिः शयः शय्या यस्य स भूशयः 'शयः शय्याहिपाणिषु' इति विश्वः । ८ भूतिकृद्भूतये । भूतिकृतां सकलैश्वर्यप्रदानामपि भूतिरैश्वर्यं यस्मात्स भूतिकृद्भूतिः । ९ भूषणाय । भूष्यते सकलमलंक्रियतेऽनेनेति भूषणः । १० भूतवाहनाय । भूतानि वाहनानि यस्य स भूतवाहनः । ११ अकायाय । नास्ति कायः शरीरं यस्य सोऽकायः । १२ भक्तकायस्थाय । भक्तकायेषु स्वभक्तहृत्कमलेषु तिष्ठतीति भक्तकायस्थः । १३ कालज्ञानिने । कालज्ञानं नित्यमस्यास्तीति कालज्ञानी । १४ कलावपुषे । कलावत्तरीवद्वपुर्यस्य स कलावपुः चिंतनमात्रेण संसारार्णवतारक इत्यर्थः । 'कला च रजसि स्त्रीणां तरीकपटयोः' इति विश्वः ॥ ४७ ॥ १५ सत्यव्रतमहात्यागिने । त्यागोऽस्ति यस्य स त्यागी महांश्चासौ त्यागी च महात्यागी सत्यव्रतानामदांभिकानां महात्यागी सत्यव्रतमहात्यागी । १६ निष्ठाशांतिपरायणाय । निष्ठा मरणपर्यंतं शांतिर्निष्ठाशांतिः परायणं परमस्थानं यस्य स निष्ठाशांतिपरायणः । १७ परार्थवृत्तये । परार्था मोक्षार्था वृत्तिर्विवरणं यस्य स परार्थवृत्तिः 'वृत्तिर्विवरणे जीव्ये' इति विश्वः । १८ वरदाय । वरनावरकमायाविलासान्द्यति खंडयतीति वरदः । १९ विविक्ताय । विविक्तो जडविश्वात्पृथक्स्थित इत्यर्थः । २० श्रुतिसागराय । श्रुतीनां सागरः समुद्रवदपारः ॥ ४८ ॥ २१ अनिर्विण्णाय । न निर्विण्णोऽनिर्विण्णः जगत्सर्गादौ निरुद्यत इत्यर्थः । २२ गुणग्राहिणे । गुणैः सर्वप्रदत्वादिभिः गृह्णाति भक्तचेतांस्याकर्षति तच्छीलो गुणग्राही । २३

**भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ॥ अकायो भक्तकायस्थः कालज्ञानी कलावपुः ॥४७॥ सत्यव्रतमहात्यागी निष्ठाशांतिपरायणः ॥ परार्थवृत्तिर्वरदो विविक्तः श्रुतिसागरः ॥ ४८ ॥ अनिर्विण्णो गुणग्राही कलंकांकः कलंकहा ॥ स्वभावरुद्रो मध्यस्थः शत्रुघ्नो मध्यनाशकः ॥ ४९ ॥ शिखंडी कवची शूली चंडी मुंडी च कुंडली ॥ मेखली कवची खड्गी मायी संसारसारथिः ॥ १५० ॥**

कलंकांकाय । कलंकः अंकश्चिह्नं यस्य स कलंकांकश्चंद्ररूपः। २४ कलंकघ्ने । कलंकमपवादं हंतीति कलंकहा 'कलंकोऽङ्केऽपवादे च' इति विश्वः । २५ स्वभावरुद्राय । रोदयतीति रुत् अज्ञानं द्रावयतीति रुद्रः स्वभावः रुद्रो यस्य स स्वभावरुद्रः । २६ मध्यस्थाय । मध्ये ब्रह्मविष्णुमध्यभागे तिष्ठतीति मध्यस्थः । २७ शत्रुघ्नाय । शत्रूनंधकादीनपि हंति परमगतिं प्रापयतीति शत्रुघ्नः । २८ मध्यनाशकाय मध्येन मध्यभवरुद्रेण नाशयति जगत्संहारं करोतीति मध्यनाशकः ॥ ४९ ॥ २९ शिखंडिने । शिखंडश्चूडोऽस्ति यस्य स शिखंडी 'शिखंडो बर्हचूडयोः' इति विश्वः । ३० कवचिने । कवचं सुवर्णतनुत्रमस्यास्तीति कवची । ३१ शूलिने । शूलं तत्संज्ञकायुधमस्यास्तीति शूली । ३२ चंडिने चंडस्तत्संज्ञकगणोऽस्ति यस्य स चंडी । ३३ मुंडिने । मुंडो मूर्धमुंडितगणोऽस्ति यस्य स मुंडी । ३४ कुंडलिने कुंडले सर्पकुंडले स्तः यस्य स कुंडली । तदुक्तं शिवगीतायाम् कंबलाश्वतरौ शंभोः कर्णकुंडलतां गतौ इति । ३५ मेखलिने । मेखला कटिसूत्रं यस्यास्तीति मेखली । ३६ कवचिने । कवचः पटहोऽस्ति यस्य स कवची 'कवचो गर्दभांडे स्यात्सन्नाहे पटहेऽपि च' इति विश्वः । ३७ खड्गिने । खड्गश्चंद्रहाससंज्ञोऽस्ति यस्य स खड्गी । ३८ मायिने संसारसारथये । मायाऽस्ति यस्य स मायी तस्मै अत एव संसारस्य सारथिः सहाय इत्यर्थः ॥ १५० ॥

३९ अमृत्यवे सर्वदृशे । नास्ति मृत्युर्यस्य सोऽमृत्युस्तस्मै अत एव सर्वं पश्यतीति सर्वदृक् । ४० सिंहाय हिनस्तीति सिंहः पृषोदरादित्वात्साधुः । ४१ तेजोराशये महामणये । तेजसां राशिस्तेजोराशिस्तस्मै महान् पूज्यो यो मणिः कौस्तुभादिस्तद्रूपः । ४२ असंख्येयाय । संख्यातुं योग्यः संख्येयो न संख्येयोऽसंख्येयोऽपार इत्यर्थः । ४३ अप्रमेयात्मने । अप्रमेयः प्रमातुमशक्य आत्मा देहो यस्य सोऽप्रमेयात्मा । ४४ वीर्यवते । वीर्यं प्रभावोऽस्ति नित्यं यस्य स वीर्यवान् । ४५ कार्यकोविदाय । कार्येषु सकलकार्येषु कोविदो निपुण इत्यर्थः ॥५१॥ ४६ वेद्याय । वेत्तुं मुमुक्षुभिर्ज्ञातुं योग्यो वेद्यः । ४७ वेदार्थविद्गोप्त्रे । वेदार्थविदां गोप्ता रक्षक इत्यर्थः । ४८ सर्वाचारः सर्वः आचारो यस्मात् स सर्वाचारः ४९ मुनीश्वराय । मुनीनामीश्वरो मुनीश्वरः ५० अनुत्तमाय नौतीति नुत् अतिशयेन नुदिति नुत्तमः नास्ति नुत्तमो वा अः विष्णुः नुत्तमो यस्य सोऽनुत्तमः । ५१ दुराधर्षाय । दुःखेनापि आधर्षितुमशक्यो दुराधर्षः । ५२ मधुराय । मधु क्षौद्रं राति ददातीति मधुरः । 'मधुक्षौद्रे जले क्षीरे मद्यपुष्परसे मधु' इति विश्वः । ५३ प्रियदर्शनाय । प्रियः सर्वश्रेष्ठ आत्मा दृश्यतेऽनेनेति प्रियदर्शनः ॥ ५२ ॥ ५४ सुरेशाय । सुरा ईशा यस्मात्स सुरेशः 'भीषोदेति सूर्यः' इति श्रुतेः । ५५ शरणाय शरणं सकलरक्षितेत्यर्थः ।

**अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ॥ असंख्येयोऽप्रमेयात्मा वीर्यवान् कार्यकोविदः ॥५१॥ वेद्यो वेदार्थविद्गोप्ता सर्वाचारो मुनीश्वरः ॥**
**अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ॥५२॥ सुरेशः शरणं सर्वः शब्दब्रह्मसतांगतिः ॥ कालभक्षः कलंकारिः कंकणीकृतवासुकिः ॥५३॥**
**महेष्वासो महीभर्ता निष्कलंको विशृंखलः ॥ द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ॥ ५४ ॥**

५६ सर्वस्मै । सर्वो विश्वरूप इत्यर्थः । ५७ शब्दब्रह्म सतांगतये । शब्दरूपं ब्रह्म शब्दब्रह्म शब्दब्रह्माणि सन्ति ते शब्दब्रह्मसंतस्तेषां गतिर्मार्गरूपः । ५८ कालभक्षाय । कालेन कालरूपेण भक्षतीति कालभक्षः । ५९ कलंकारये । कलंकस्य चित्तादिमलस्यारिर्नाशकः । ६० कंकणीकृतवासुकये । न कंकणमकंकणम् अकंकणं कङ्कणं यथा स्यात्तथा कृतः कंकणीकृतः वासुकिस्तत्संज्ञकसर्पराजो येन स कंकणीकृतवासुकिः ॥५३॥ ६१ महेष्वासाय । महान्तावक्षयौ इष्वासौ इषुधी यस्य स महेष्वासः । ६२ महीभर्त्रे । मह्याः जगत्या अपि भर्त्ता धारक इत्यर्थः । ६३ निष्कलंकाय । निर्गतः कलंकोऽविद्यामलो यस्मात्स निष्कलंकः 'कलंकोऽङ्केऽपवादे च कालायसमलेऽपि च' इति विश्वः । ६४ विशृंखलाय । विशिष्टा शृंखला मायाबंधो यस्मात्स विशृंखलः 'शृंखला पुंस्कटीवस्त्रे बंधेऽपि निगडेऽपि च' इति विश्वः । ६५ द्युमणये तरणये । दिवः मणिः रत्नरूपो द्युमणिस्तस्मै तरणये सूर्यरूपायेत्यर्थः । 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । ६६ धन्याय । धन्यः कृतकृत्य इत्यर्थः । ६७ सिद्धिदाय । सिद्धीरणिमादीर्ददातीति सिद्धिदः । ६८ सिद्धिसाधनाय । सिद्धीनां साधनः यस्मात्स सिद्धिसाधनः ॥ ५४ ॥

६९ निवृत्ताय । नितरां वृत्तं प्रसववंधो यस्मात्स निवृत्तः ' वृत्तं प्रसववंधे स्यात् ' इति विश्वः । ७० संवृताय । संवृतोऽच्छादिकयाऽविद्यया वेष्टित इत्यर्थः । ७१ शिल्पाय । शिल्पमनेकब्रह्मांडकौशलमस्यास्तीति शिल्पः । ७२ व्यूढोरस्काय । व्यूढं विस्तीर्णमुरो यस्य स व्यूढोरस्कः । ७३ महाभुजाय । महांतः दीर्घाः भुजा यस्य स महाभुजः । ७४ एकज्योतिषे । एकमद्वितीयं ज्योतिश्चिद्रूपं यस्य स एकज्योतिः । ७५ निरातंकाय । निर्गता आतंका रोगा यस्मात्स निरातंकः । ७६ नराय नारायणप्रियाय । नरस्तत्संज्ञकधर्मपुत्ररूपस्तस्मै नारायणस्य तत्संज्ञकज्येष्ठभ्रातुः प्रियो नारायणप्रियः ॥ ५५ ॥ ७७ निर्लेपाय । निर्गतः लेपः कर्मसंबंधो यस्य स निर्लेपः । ७८ निष्प्रपंचात्मने । निर्गतः प्रपंचः पंचभूतसमुदायो यस्मात्स निष्प्रपंचः आत्मा देहो यस्य स निष्प्रपंचात्मा । ७९ निर्व्यग्राय । निर्गता व्यग्राः कर्माक्षिप्तांतःकरणाः यस्मात्स निर्व्यग्रः । ८० व्यग्रनाशनाय । व्यग्रान्काम्यकर्मासक्तांतःकरणान्नाशयति मृत्युना मारयतीति व्यग्रनाशनः । ८१ स्तव्यस्तवप्रियाय । स्तोतुं योग्यास्तव्याः ज्ञानिनस्तेषां स्तवः प्रियो यस्य स स्तव्यस्तवप्रियः । ८२ स्तोत्रे व्यासमूर्तये । स्तौतीति स्तोता तस्मै व्यासाः वेदविभाजकऋषयो मूर्तयः स्वरूपाणि यस्य स व्यासमूर्तिः ।

**निवृत्तः संवृतः शिल्पो व्यूढोरस्को महाभुजः ॥ एकज्योतिर्निरातंको नरो नारायणप्रियः ॥ ५५ ॥ निर्लेपो निष्प्रपंचात्मा निर्व्यग्रो व्यग्रनाशनः ॥ स्तव्यस्तवप्रियः स्तोता व्यासमूर्तिरनाकुलः ॥ ५६ ॥ निरवद्यपदोपायो विद्याराशिरविक्रमः ॥ प्रशांतबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुंदरः ॥ ५७ ॥ धैर्याग्र्यधुर्यो धात्रीशः शाकल्यः शर्वरीपतिः ॥ परमार्थगुरुर्दृष्टिर्गुरुराश्रितवत्सलः ॥ ५८ ॥**

८३ अनाकुलाय । न आकुलः कामादिशत्रुव्यासोऽनाकुलः ॥ ५५ ॥ ८४ निरवद्यपदोपायाय निरवद्यपदस्य मोक्षस्योपायः साधनरूपो निरवद्यपदोपायः । ८५ विद्याराशये । विद्यानां सर्वविद्यानां राशिः समुदायो यस्मात्स विद्याराशिः । ८६ अविक्रमाय । नास्ति विक्रमो यस्मिन्सोऽविक्रमः प्रमादरयिकगम्य इत्यर्थः । ८७ प्रशांतबुद्धये अक्षुद्राय । प्रकर्षेण शांता बुद्धिर्यस्य स प्रशांतबुद्धिस्तस्मै अत एवाक्षुद्रो वैषम्यरहितः । ८८ क्षुद्रघ्ने । क्षुद्रान् विषमबुद्धीन् हंति नाशयतीति क्षुद्रहा । ८९ नित्यसुंदराय । नित्यं सर्वकालं सुंदरो नित्यसुंदरः ॥ ५७ ॥ ९० धैर्याग्र्यधुर्याय धैर्यमग्र्यं श्रेष्ठं येषां ते धैर्याग्र्यास्तेषु धुर्यः प्रथम इत्यर्थः । ९१ धात्रीशाय । दधातीति धात्री पृथ्वी तस्याः ईशः स्वामीत्यर्थः । ९२ शाकल्याय शाकल्यस्तत्संज्ञकऋषिरूपः । ९३ शर्वरीपतये । शर्वरीणां रात्रीणां पतिः शर्वरीपतिः । ९४ परमार्थगुरवे दृष्टये । परमार्थस्य मोक्षस्य गुरुरुपदेशकर्त्वद्रूपः तस्मै अत एव दृष्टिश्चक्षूरूपः । तदुक्तम् ' वेदैः पश्यंति वाडवाः ' इति । ९५ गुरवे गृणाति सर्वेषां हितमुपदिशतीति गुरुः । ९६ आश्रितवत्सलाय । आश्रितेषु स्वभक्तेषु वत्सलोऽत्यंतकरुण इत्यर्थः ॥ ५८ ॥

९७ रसाय । रसो ब्रह्मरसरूपः 'रसो वै सः' इति श्रुतेः । ९८ रसज्ञाय । रसस्य ब्रह्मरसस्य ज्ञा वेत्तारः भक्तजना यस्मात्स रसज्ञः । ९९ सर्वज्ञाय । सर्वस्य निखिल ब्रह्मांडस्य ज्ञा वेत्तारो योगिनो यस्मात्स सर्वज्ञः । १००० सर्वसत्त्वावलंबनाय नमः । सर्वसत्वानां निखिलप्राणिनामवलंबन आश्रयभूत इत्यर्थः । इति दशमं शतकं समाप्तम् ॥ सूतः सहस्रनामोक्त्वाग्रिमवृत्तं कथयति–एवमित्यादिना । एवं पूर्वोक्तानुपूर्व्येत्यर्थः ॥ ५९ ॥ हरेः परीक्षार्थं विष्णुभावं परीक्षितुमित्यर्थः । महेश्वरः पूजा कमलेषु मध्ये एकं कमलं गोपयामास स्वमायया विष्ण्वज्ञातं चकारेत्यग्रिमेणान्वयः ॥ १६० ॥ ६१ ॥ ज्ञात्वा स्वस्मिन् भ्रांत्यभावाद्धरचेष्टितं बुद्ध्वेत्यर्थः । तेन सर्वं सत्त्वा

रसो रसज्ञः सर्वज्ञः सर्वसत्त्वावलंबनः ॥ सूत उवाच ॥ एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् ॥ ५९ ॥ स्नापयामास च विभुः पूजयामास पंकजैः ॥ परीक्षार्थं हरेः पूजाकमलेषु महेश्वरः ॥ १६० ॥ गोपयामास कमलं तदेकं भुवनेश्वरः ॥ हृतपुष्पो हरिस्तत्र किमिदं त्वभ्यचिंतयत् ॥ ६१ ॥ ज्ञात्वा स्वनेत्रमुद्धृत्य सर्वसत्त्वावलंबनम् ॥ पूजयामास भावेन नाम्ना तेन जगद्गुरुम् ॥ ६२ ॥ ततस्तत्र विभु दृष्ट्वा तथाभूतं हरो हरिम् ॥ तस्मादवततराशु मंडलात्पावकस्य च ॥ ६३ ॥ कोटिभास्करसंकाशं जटामुकुटमंडितम् ॥ ज्वालामाला वृतं दिव्यं तीक्ष्णदंष्ट्रं भयंकरम् ॥ ६४ ॥ शूलटंकगदाचक्रकुंतपाशधरं हरम् ॥ वरदाभयहस्तं च दीपिचर्मोत्तरीयकम् ॥ ६५ ॥ इत्थंभूतं तदा दृष्ट्वा भवं भस्मविभूषितम् ॥ हृष्टो नमश्चकाराशु देवदेवं जनार्दनः ॥ ६६ ॥ दुद्रुवुस्तं परिक्रम्य सेंद्रा देवास्त्रिलोचनम् ॥ चचाल ब्रह्मभुवनं चकंपे च वसुंधरा ॥ ६७ ॥ ददाह तेजस्तच्छंभोः प्रांतं वै शतयोजनम् ॥ अधस्ताच्चोर्ध्वतश्चैव हाहेत्यकृत भूतले ॥ ६८ ॥ तदा प्राह महादेवः प्रहसन्निव शंकरः ॥ संप्रेक्ष्य प्रणयाद्विष्णुं कृतांजलिपुटं स्थितम् ॥ ६९ ॥ ज्ञातं मयेदमधुना देवकार्यं जनार्दन ॥ सुदर्शनाख्यं चक्रं च ददामि तव शोभनम् ॥ ॥७० ॥ यद्रूपं भवता दृष्टं सर्वलोकभयंकरम् ॥ हिताय तव यत्नेन तव भावाय सुव्रत ॥७१॥ शांतं रणाजिरे विष्णो देवानां दुःखसाधनम् ॥ शांतस्य चास्त्रं शांतः स्याच्छांतेनास्त्रेण किं फलम् ॥ ७२ ॥

वलंबनरूपेण ॥ ६२ ॥ तथाभूतं समर्पितनेत्रमित्यर्थः । तस्माल्लिंगात्पावकस्य च मंडलादाशु अवततारेत्यन्वयः ॥ ६३ ॥ शिवरूपं रौद्रं वर्णयति–कोटिभास्करेत्यादिना ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ १७० ॥ अत्युग्ररूपप्रदर्शनहेतुं कथयति–यद्रूपमित्यादिना ॥ १७१ ॥ शांतं सौम्यरूपं रणाजिरे देवानां दुःखसाधनं शांतस्यास्त्रं च शांतः स्यात्तेन शांतेनास्त्रेण किं फलं किमपि नेत्यर्थः ॥ ७२ ॥

शांतस्य तपस्विनं प्रति समरे शांतिरेवास्त्रं योद्धुः संप्रहारकर्तुः शांत्या परस्य बलवृद्धिदः बलच्छेदः स्यादिति शेषः ॥ ७३ ॥ अशान्तैर्देवैः सह देवारिसूदन यद्योः रूपं मदीय मव्ययं भावय वै तथा च आयुधेन किं कार्यं किमपि नेत्यर्थः ॥ ७४ ॥ अक्षमास्थानानि कथयति—क्षमेत्यादिना ॥ ७५ ॥ चक्रं वारिभवसुदर्शनाख्यम् ॥ ७६ ॥ नेत्रं लोचनमित्यर्थः ॥ ७७ ॥ ७८ ॥ ७९ ॥ १८० ॥ नास्ति न मंतीत्यर्थः ॥ ८१ ॥ स्वस्मिन् श्रद्धादानात्तथा च 'यो यच्छ्रद्धः स एव सः' इति भगवद्गीतोक्तनियमाद्च्युते

शांतस्य समरे चास्त्रं शांतिरिव तपस्विनम् ॥ योद्धुः शांत्या बलच्छेदः परस्य बलवृद्धिदः ॥७३॥ देवैरशांतैर्यद्रूपं मदीयं भावयाव्ययम् ॥ किमायुधेन कार्यं वै योद्धुं देवारिसूदन ॥ ७४ ॥ क्षमा युधि न कार्यं वै योद्धुं देवारिसूदन ॥ अनागते व्यतीते च दौर्बल्ये स्वजनोत्करे ॥ ७५ ॥ अकालिके त्वधर्मे च अनर्थे वारिसूदन ॥ एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ॥ ७६ ॥ नेत्रं च नेता जगतां प्रभुर्वै पद्मसन्निभम् ॥ तदाप्रभृति तं प्राहुः पद्माक्षमिति सुव्रतम् ॥ ७७ ॥ दृष्ट्वैनं नयनं चक्रं विष्णवे नीललोहितः ॥ पस्पर्श च कराभ्यां वै सुशुभाभ्यामुवाच ह ॥ ७८ ॥ वरदोहं वरश्रेष्ठ वरान्वरय चेप्सितान् ॥ भक्त्या वशीकृतो नूनं त्वयाहं पुरुषोत्तम ॥ ७९ ॥ इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम् ॥ त्वयि भक्तिर्महादेव प्रसीद वरमुत्तमम् ॥ १८० ॥ नान्यमिच्छामि भक्तानामार्तयो नास्ति यत्प्रभो ॥ तच्छ्रुत्वा वचनं तस्य दयावान् सुतरां भवः ॥८१॥ पस्पर्श च ददौ तस्मै श्रद्धां शीतांशुभूषणः ॥ प्राह चैवं महादेवः परमात्मानमच्युतम्॥८२॥ मयि भक्तश्च वंद्यश्च पूज्यश्चैव सुरासुरैः ॥ भविष्यसि न संदेहो मत्प्रसादात्सुरोत्तम ॥ ८३ ॥ यदा सती दक्षपुत्री विनिंद्यैव सुलोचना ॥ मातरं पितरं दक्षं भविष्यति सुरेश्वरी ॥ ८४ ॥ दिव्या हैमवती विष्णो तदा त्वमपि सुव्रत ॥ भगिनीं तव कल्याणीं देवीं हैमवतीमुमाम् ॥८५ ॥ नियोगाद्ब्रह्मणः साध्वीं प्रदास्यसि ममैव ताम् ॥ मत्संबंधी च लोकानां मध्ये पूज्यो भविष्यसि ॥ ८६ ॥ मां दिव्येन च भावेन तदाप्रभृति शंकरम् ॥ द्रक्ष्यसे च प्रसन्नेन मित्रभूतमिवात्मना ॥ ८७ ॥ इत्युक्त्वांतर्दधे रुद्रो भगवान्नीललोहितः ॥ जनार्दनोपि भगवान् देवानामपि सन्निधौ ॥ ८८ ॥ अयाचत महादेवं ब्रह्माणं मुनिभिः समम् ॥ मया प्रोक्तं स्तवं दिव्यं पद्मयोने सुशोभनम् ॥ ८९ ॥

परमात्मेति विशेषणसंगतिः एवं वक्ष्यमाणमित्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ हैमवती हिमवत्पुत्रीत्यर्थः ॥ ८५ ॥ ८६ ॥ तदाप्रभृति पार्वतीप्रदानानंतरमित्यर्थः ॥ ८७ ॥ ॥ ८८ ॥ मुनिभिः । समं महादेवं ब्रह्माणमयाचेत्यनेनैतत्सहस्रनामस्तवादेर्वक्ष्यमाणफलं सर्वसंमतमिति बोध्यते ॥ ८९ ॥

॥ १९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ जगद्गुरुमेनं शिवं प्रणिपत्य ब्रह्मविष्णू जग्मतुरित्यन्वयः । तस्मात्पूर्वोक्तकारणादनघो निष्पापः पूजाधिकारी नाम्नां सहस्रेण पूजयेत्पूजा सामग्र्यभावे यो नाम्नां साहस्रं जपन् स च परमां गतिं मोक्षं यातीत्यग्रिमेणान्वयः । द्विजा इति ऋषिसंबोधनम् ॥९४॥१९५॥ अमोघास्त्रं लब्धुं सकलविबुधानां हि ऋषभो हरिः सांबं दिव्यैरभिमननमैनामदशभिः । शनैरस्तौद्भक्त्या तदिदमखिलं शंकरमुदे सहस्रं व्याख्यातं भवतु विबुधानां प्रियकरम् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टनवतितमोऽध्यायः ॥ ९८ ॥ नवनवतिसंख्याके महादेव्यास्तु संभवः । वामांगाद्दक्षपुत्रीत्वं पार्वतीत्वं च वर्ण्यते ॥ ऋषयः पूर्वोपदर्शितं देवी

यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ प्रतिनाम्नि हिरण्यस्य दत्तस्य फलमाप्नुयात् ॥ १९० ॥ अश्वमेधसहस्रेण फलं भवति तस्य वै ॥ घृताद्यैः स्नापयेद्रुद्रं स्थाल्या वै कलशैः शुभैः ॥ ९१ ॥ नाम्नां सहस्रेणानेन श्रद्धया शिवमीश्वरम् ॥ सोपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः ॥ ९२ ॥ पूज्यो भवति रुद्रस्य प्रीतिर्भवति तस्य वै ॥ तथास्त्विति तथा प्राह पद्मयोनेर्जनार्दनम् ॥ ९३ ॥ जग्मतुः प्रणिपत्यैनं देवदेवं जगद्गुरुम् ॥ तस्मान्नाम्नां सहस्रेण पूजयेदनघो द्विजाः ॥ ९४ ॥ जपेन्नाम्नां सहस्रं च स याति परमां गतिम् ॥ १९५॥ इति श्रीलिंगमहापुराणे पूर्वभागे सहस्रनामभिः पूजनाद्विष्णुचक्रलाभो नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ऋषय ऊचुः ॥ संभवः सूचितो देव्यास्त्वया सूत महामते ॥ सविस्तरं वदस्वाद्य सतीत्वे च यथातथम् ॥ १ ॥ मेनाजत्वं महादेव्या दक्षयज्ञविमर्दनम् ॥ विष्णुना च कथं दत्ता देव देवाय शंभवे ॥ २ ॥ कल्याणं वा कथं तस्य वक्तुमर्हसि सांप्रतम् ॥ तेषां तद्वचनं श्रुत्वा सूतः पौराणिकोत्तमः ॥३॥ संभवं च महादेव्याः प्राह तेषां महात्मनाम् ॥ सूत उवाच ॥ ब्रह्मणा कथितं पूर्वं दंडिने तत्सुविस्तरम् ॥ ४ ॥ युष्माभिर्वै कुमाराय तेन व्यासाय धीमते ॥ तस्मादहमुपश्रुत्य प्रवदामि सुविस्तरम् ॥ ५ ॥ वचनाद्वो महाभागाः प्रणम्योमां तथा भवम् ॥ सा भगाख्या जगद्धात्री लिंगमूर्तेस्त्रिवेदिका ॥ ६ ॥ लिंगस्तु भगवान्द्वाभ्यां जगत्सृष्टिर्द्विजोत्तमाः ॥ लिंगमूर्तिः शिवो ज्योतिस्तमसश्चोपरि स्थितः ॥ ७ ॥

संभवाद्यपृच्छन्—संभव इत्यादिना ॥ १ ॥२॥ तस्य विष्णोरित्यर्थः ॥ ३ ॥४॥ युष्माभिः पृष्टमिति शेषः । तत्पूर्वं ब्रह्मणा दंडिने कुमाराय सनत्कुमाराय तेन व्यासाय कथितं तस्माद्व्यासादहमुपश्रुत्य सुविस्तरं प्रवदामीति पूर्वस्थैरन्वयः ॥ ५ ॥ सा महादेवी भगाख्या भगसंज्ञा लिंगमूर्तेर्लिंगरूपस्य शिवस्य त्रिगुणा वेदिका त्रिवेदिका प्रकृतिरूपेत्यर्थः ॥ ॥ ६ ॥ लिंगः लिंगरूपो भगवान्नित्यं भगयुक्तः द्वाभ्यां लिंगभगाभ्यामेव जगत्सृष्टिरित्यन्वयः । लिंगमूर्तिः शिवो ज्योतिः स्वतः प्रकाशरूपस्तमसो मायातिमिरस्योपरि स्थितो नित्यं विद्यमान इत्यर्थः । तथा च श्रुतिः "आदित्यवर्णं तमसस्तु पारे" इति ॥ ७ ॥

लिंगवेद्युभयोर्नित्यं समायोगादर्धनारीश्वरोर्धस्त्रीपुमान् रूपः सृष्ट्यादौ मायाशबलब्रह्मरूपः साकारोऽभवदित्यन्वयः । " यो ब्रह्माणं विदधाति पूर्वं यो देवानां प्रथमं पुरस्तात् " इति श्रुत्यनुवादमाह—ब्रह्माणमित्यादिना ॥८॥९॥१०॥११॥ विभजस्व स्त्रीपुंरूपं पृथक्कुर्वित्यर्थः । पूर्वोक्तब्रह्मप्रार्थनादात्मनः स्वलीलाविग्रहस्य समां तुल्यां पत्नीं देवीं वामांगात् ससर्जेत्यन्वयः ॥ १२॥ अस्यात्मरूपस्य पुंसः शिवस्य शुभा पुरातनी श्रद्धा पत्नी । तथा च श्रुतिः " तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इति । ततो ब्रह्मप्रार्थनानंतरं विभोः शिवस्याज्ञया सैव श्रद्धैव देवी दक्षपुत्री बभूव इत्यन्वयः । एतदेवोक्तमादित्यपुराणे " मम सृष्टिविवृद्ध्यर्थमंशेनैकेन शाश्वते । मम पुत्रस्य दक्षस्य पुत्रीभव सुरेश्वीर ॥ एकां शक्तिं भ्रुवोर्मध्यात्ससर्जातिमसमप्रभाम् । आदाय शिरसा शंभोराज्ञां सा परमेश्वरी । अभवद्दक्षदुहिता स्वेच्छया ब्रह्मरूपिणी ॥" इति ॥ १३ ॥ तदा दक्षपुत्रीत्व

लिंगवेदिसमायोगादर्धनारीश्वरोभवत् ॥ ब्रह्माणं विदधे देवमग्रे पुत्रं चतुर्मुखम् ॥ ८ ॥ प्राहिणोति स्म तस्यैवं ज्ञानं ज्ञानमयो हरः ॥ विश्वाधिकोसौ भगवानर्धनारीश्वरो विभुः ॥ ९ ॥ हिरण्यगर्भं तं देवो जायमानमपश्यत ॥ सोपि रुद्रं महादेवं ब्रह्मापश्यत शंकरम् ॥ १० ॥ तं दृष्ट्वा संस्थितं देवमर्धनारीश्वरं प्रभुम् ॥ तुष्टाव वाग्भिरिष्टाभिर्वरदं वारिजोद्भवः ॥ ११ ॥ विभजस्वेति विश्वेशं विश्वात्मानमजो विभुः ॥ ससर्ज देवीं वामांगात्पत्नीं चैवात्मनः समाम् ॥ १२ ॥ श्रद्धा ह्यस्य शुभा पत्नी ततः पुंसः पुरातनी ॥ सैवाज्ञया विभोर्देवी दक्षपुत्री बभूव ह ॥ १३ ॥ सतीसंज्ञा तदा सा वै रुद्रमेवाश्रिता पतिम् ॥ दक्षं विनिंद्य कालेन देवी मैना ह्यभूत्पुनः ॥ १४ ॥ नारदस्यैव दक्षोपि शापादेवं विनिंद्य च ॥ अवज्ञादुर्मदो दक्षो देवदेवमुमापतिम् ॥ १५ ॥ अनादृत्य कृतिं ज्ञात्वा सती दक्षेण तत्क्षणात् ॥ भस्मीकृत्वात्मनो देहं योगमार्गेण सा पुनः ॥ १६ ॥ बभूव पार्वती देवी तपसा च गिरेः प्रभोः ॥ ज्ञात्वैतद्भगवान् भर्गो ददाह रुषितः प्रभुः ॥ १७ ॥ दक्षस्य विपुलं यज्ञं च्यावनेर्वचनादपि ॥ च्यवनस्य सुतो धीमान् दधीचि इति विश्रुतः ॥ १८ ॥

समये इत्यर्थः । मैना मेनापुत्रीत्यर्थः ॥१४॥ दक्षप्रजापतेः शिवनिंदाहेतुमाह—नारदस्येति । अवज्ञया यज्ञनिमंत्रणावसरे अप्रत्युत्थानेन दुष्टः मदो यस्य सोवज्ञादुर्मदो दक्षः देवदेवमुमापतिमेवम् । ' अयं हि लोकपालानां यशोघ्नः ' इत्यादिभागवताद्युक्तप्रकारं विनिंद्यायजदिति शेषः ॥ १५ ॥ अनादृत्य शिवानादरपूर्विकां दक्षेण कृतिं दक्षकर्तृकयत्नं ज्ञात्वा तत्क्षणाद्योगमार्गेणात्मनो देहं भस्मीकृत्य गिरेर्हिमाचलस्य तपसा पुनः पार्वती बभूवेत्यग्रिमेणान्वयः । तदुक्तं भागवतचतुर्थस्कंधे " अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभो । अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥" इति ॥ १६ ॥ एतत्सतीदेहत्यागं ज्ञात्वा रुषितः संजातरोषो भर्गः च्यावनेर्वचनादपि दक्षस्य विपुलं यज्ञं ददाहेत्यग्रिमेणान्वयः ॥ १७ ॥ १८ ॥

॥ १९ ॥ दधीचशापं कथयति–च्यवनस्येति । रुद्रस्य क्रोधजेन वह्निना हविषा शंकरस्य मायया सुराः विनाशो वै निश्चयेनेत्यर्थः ॥ २० ॥ या शिवं तमसः पारे स्थितं श्रद्धात्मनाश्रिता । सती हैमवती देवी साशिवा शिवदास्तु मे ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां नवनवतितमोध्यायः ॥ ९९ ॥ लैंगे शततमाध्याये दक्षयज्ञविनाशनम् । संधानं च महादेवाद्वर्ण्यते परमाद्भुतम् ॥ ऋषयो दक्षयज्ञवृत्तमपृच्छन्–विजित्येति । दधीचवचनात्तच्छापात्परमेश्वरः शिवः विष्णुना सार्धं सर्वान्विजित्य कथं

विजित्य विष्णुं समरे प्रसादात् त्र्यंबकस्य च ॥ विष्णुना लोकपालांश्च शशाप च मुनीश्वरः ॥ १९ ॥ रुद्रस्य क्रोधजेनैव वह्निना हविषा सुराः ॥ विनाशो वै क्षणादेव मायया शंकरस्य वै ॥२०॥ इति श्रीलिंगमहापुराणे पूर्वभागे देवीसंभवो नाम नवनवतितमोऽध्यायः॥९९॥ ऋषय ऊचुः ॥ विजित्य विष्णुना सार्धं भगवान्परमेश्वरः ॥ सर्वान्दधीचवचनात्कथं भेजे महेश्वरः ॥ १ ॥ सूत उवाच ॥ दक्षयज्ञे सुविपुले देवान् विष्णुपुरोगमान् ॥ ददाह भगवान् रुद्रः सर्वान्मुनिगणानपि ॥ २ ॥ भद्रो नाम गणस्तेन प्रेषितः परमेष्ठिना ॥ विप्रयोगेन देव्या वै दुःसहेनैव सुव्रताः ॥ ३ ॥ सोसृजद्वीरभद्रश्च गणेशान्रोमजाञ्छुभान् ॥ गणेश्वरैः समारुह्य रथं भद्रः प्रतापवान् ॥ ४ ॥ गंतुं चक्रे मतिं यस्य सारथिर्भगवानजः ॥ गणेश्वराश्च ते सर्वे विविधायुधपाणयः ॥५॥ विमानैर्विश्वतो भद्रैस्तमन्वयुरथो सुराः ॥ हिमवच्छिखरे रम्ये हेमशृंगे सुशोभने ॥ ६ ॥ यज्ञवाटस्तथा तस्य गंगाद्वारसमीपतः ॥ तद्देशे चैव विख्यातं शुभं कनखलं द्विजाः ॥ ७ ॥ दग्धुं वै प्रेषितश्चासौ भगवान् परमेष्ठिना ॥ तदोत्पातो बभूवाथ लोकानां भयशंसनः ॥ ८ ॥ पर्वताश्च व्यशीर्यंत प्रचकंपे वसुंधरा ॥ मरुतश्चाप्यघूर्णंत चुक्षुभे मकरालयः ॥ ९ ॥ अग्नयो नैव दीप्यंति न च दीप्यति भास्करः ॥ ग्रहाश्च न प्रकाश्यंते न देवा न च दानवाः ॥ १० ॥ ततः क्षणात् प्रविश्यैव यज्ञवाटं महात्मनः ॥ रोमजैः सहितो भद्रः कालाग्निरिव चापरः ॥ ११ ॥

केन प्रकारेण भेजे यज्ञं सिषेव इत्यर्थः ॥ १ ॥ सूतः पूर्वं दक्षयज्ञनाशं संक्षेपत उक्त्वा विस्तरेण कथयति–दक्ष यज्ञ इत्यादिना ॥ २ ॥ भद्रो वीरभद्रसंज्ञः देव्याः सत्याः विप्रयोगेण विरहेणेत्यर्थः ॥ ३ ॥ रोमजान् स्वलोमभवानित्यर्थः ॥ ४ ॥ सारथिः रथयंता अजो ब्रह्मेत्यर्थः ॥ ५ ॥ तं वीरभद्रं असुराः देवशत्रुत्वात् बाणादयोन्वयुरित्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

[illegible] ॥ १२ ॥ १३ ॥ १४ ॥ शक्रस्योद्यच्छतो वज्रं प्रेरयत इत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ ईशानं तत्संज्ञकदिक्पालम् ॥ २० ॥
[illegible] आदित्याभिरूपान् त्रयो वसुरुद्रादित्यास्त्रिशतं त्रिसहस्रं च तद्भेदा बोध्याः ॥ २१ ॥ अर्थमिंद्राग्नीषोमरूपम् ॥ २२ ॥ विष्णुयुद्धं कथयति—अथेत्यादिना

उवाच भद्रो भगवान् दक्षं चामिततेजसम् ॥ संपर्कादेव दक्षाद्यमुनीन्देवान् पिनाकिना ॥ १२ ॥ दग्धुं संप्रेषितश्चाहं भवंतं समुनीश्वरैः ॥ इत्युक्त्वा यज्ञशालां तां ददाह गणपुंगवः ॥ १३ ॥ गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ॥ प्रस्तोत्रा सह होत्रा च दग्धं चैव गणेश्वरैः ॥ १४ ॥ गृहीत्वा गणपाः सर्वान् गंगास्रोतसि चिक्षिपुः ॥ वीरभद्रो महातेजाः शक्रस्योद्यच्छतः करम् ॥१५॥ व्यष्टंभयददीनात्मा तथान्येषां दिवौकसाम् ॥ भगस्य नेत्रे चोत्पाट्य करजाग्रेण लीलया ॥१६॥ निहत्य मुष्टिना दंतान् पूष्णश्चैवं न्यपातयत् ॥ तथा चंद्रमसं देवं पादांगुष्ठेन लीलया ॥ १७ ॥ घर्षयामास भगवान् वीरभद्रः प्रतापवान् ॥ चिच्छेद च शिरस्तस्य शक्रस्य भगवान्प्रभोः ॥१८॥ वह्नेर्हस्तद्वयं छित्वा जिह्वामुत्पाट्य लीलया ॥ जघान मूर्ध्नि पादेन वीरभद्रो महाबलः ॥ १९ ॥ यमस्य दंडं भगवान् प्रचिच्छेद स्वयं प्रभुः ॥ जघान देवमीशानं त्रिशूलेन महाबलम् ॥२०॥ त्रयस्त्रिंशत्सुरानेवं विनिहत्याप्रयत्नतः ॥ त्रयश्च त्रिशतं तेषां त्रिसाहस्रं च लीलया ॥२१॥ त्रयं चैव सुरेंद्राणां जघान च मुनीश्वरान् ॥ अन्यांश्च देवान्देवोसौ सर्वान्युद्धाय संस्थितान् ॥ २२ ॥ जघान भगवान्रुद्रः खड्गमुष्ट्यादिसायकैः ॥ अथ विष्णुर्महातेजाश्चक्रमुद्यम्य मूर्च्छितः ॥ २३ ॥ युयोध भगवांस्तेन रुद्रेण सह माधवः ॥ तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ॥ २४ ॥ विष्णोर्योगबलात्तस्य दिव्यदेहाः सुदारुणाः ॥ २५ ॥ शंखचक्रगदाहस्ता असंख्याताश्च जज्ञिरे ॥ तान्सर्वानपि देवोसौ नारायणसमप्रभान् ॥ २६ ॥ निहत्य गदया विष्णुं ताडयामास मूर्धनि ॥ ततश्चोरसि तं देवं लीलयैव रणाजिरे ॥ २७ ॥ पपात च तदा भूमौ विसंज्ञः पुरुषोत्तमः ॥ पुनरुत्थाय तं हंतुं चक्रमुद्यम्य स प्रभुः ॥२८॥ क्रोधरक्तेक्षणः श्रीमानतिष्ठत्पुरुषर्षभः ॥ तस्य चक्रं च यद्रौद्रं कालादित्यसमप्रभम् ॥ २९ ॥ व्यष्टंभयददीनात्मा करस्थं न चचाल सः ॥ अतिष्ठत्स्तंभितस्तेन शृंगवानिव निश्चलः ॥३०॥ त्रिभिश्च धर्षितं शार्ङ्गं त्रिधाभूतं प्रभोस्तदा ॥ शार्ङ्गकोटिप्रसंगाद्वै चिच्छेद च शिरः प्रभोः ॥ ३१ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ शार्ङ्गं तत्संज्ञकधनुः प्रभोर्विष्णोरित्यर्थः ॥ ३१ ॥

पिनाकिना वीरभद्रेण प्राणजेन वायुना निश्वासेनेत्यर्थः ॥ ३२ ॥ तत्तद्यज्ञायतनम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तस्य दक्षप्रजापतेः ॥३७॥३८॥ प्रेतस्थाने श्मशाने यथा भवः क्षेत्रपालसदृश इत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ यज्ञसंधानं कथयति–देवोपीत्यादिना ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ध्वस्तवक्त्रस्य दक्षस्य शिरसा सवनाय

छिन्नं च निपपातासु शिरस्तस्य रसातले ॥ वायुना प्रेरितं चैव प्राणजेन पिनाकिना ॥ ३२ ॥ प्रविवेश तदा चैव तदीयाहवनीयकम् ॥ तत्प्रविध्वस्तकलशं भग्नयूपं सतोरणम् ॥ ३३ ॥ प्रदीपितमहाशालं दृष्ट्वा यज्ञोपि दुद्रुवे ॥ ते तदा मृगरूपेण धावंतं गगनं प्रति ॥३४॥ वीरभद्रः समाधाय विशिरस्कमथाकरोत् ॥ ततः प्रजापतिं धर्मं कश्यपं च जगद्गुरुम् ॥ ३५ ॥ अरिष्टनेमिनं वीरो बहुपुत्रं मुनीश्वरम् ॥ मुनिमंगिरसं चैव कृष्णाश्वं च महाबलः ॥३६॥ जघान मूर्ध्नि पादेन दक्षं चैव यशस्विनम् ॥ चिच्छेद च शिरस्तस्य ददाहाग्नौ द्विजोत्तमाः ॥ ३७॥ सरस्वत्याश्च नासाग्रं देवमातुस्तथैव च ॥ निकृत्य करजाग्रेण वीरभद्रः प्रतापवान् ॥३८॥ तस्थौ श्रिया वृतो मध्ये प्रेतस्थाने यथा भवः ॥ एतस्मिन्नेव काले तु भगवान्पद्मसंभवः ॥ ३९ ॥ भद्रमाह महातेजाः प्रार्थयन्प्रणतः प्रभुः ॥ अलं क्रोधेन वै भद्र नष्टाश्चैव दिवौकसः ॥ ४० ॥ प्रसीद क्षम्यतां सर्वं रोमजैः सह सुव्रत ॥ सोपि भद्रः प्रभावेण ब्रह्मणः परमेष्ठिनः ॥ ४१ ॥ शमं जगाम शनकैः शांतस्तस्थौ तदाज्ञया ॥ देवोपि तत्र भगवानंतरिक्षे वृषध्वजः ॥ ४२ ॥ सगणः सर्वदः शर्वः सर्वलोकमहेश्वरः ॥ प्रार्थितश्चैव देवेन ब्रह्मणा भगवान् भवः ॥ ४३ ॥ हतानां च तदा तेषां प्रददौ पूर्ववत्तनुम् ॥ इंद्रस्य च शिरस्तस्य विष्णोश्चैव महात्मनः ॥ ४४ ॥ दक्षस्य च मुनीन्द्रस्य तथान्येषां महेश्वरः॥ वागीश्याश्चैव नासाग्रं देवमातुस्तथैव च॥४५॥नष्टानां जीवितं चैव वराणि विविधानि च ॥ दक्षस्य ध्वस्त वक्त्रस्य शिरसा भगवान्प्रभुः ॥४६॥ कल्पयामास वै वक्त्रं लीलया च महान् भवः ॥ दक्षोपि लब्धसंज्ञश्च समुत्थाय कृतांजलिः ॥४७॥ तुष्टाव देवदेवेशं शंकरं वृषभध्वजम् ॥ स्तुतस्तेन महातेजाः प्रदाय विविधान्वरान् ॥ ४८ ॥ गाणपत्यं ददौ तस्मै दक्षायाक्लिष्टकर्मणे ॥ देवाश्च सर्वे देवेशं तष्टुवुः परमेश्वरम् ॥४९॥ नारायणश्च भगवान् तुष्टाव च कृतांजलिः ॥ ब्रह्मा च मुनयः सर्वे पृथक्पृथगजोद्भवम्॥५०॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ गान्वयः । न त्वशक्यत्वादित्यर्थः । तदुक्तं भागवते “ संदधुः कस्य कायेन सवनीयपशोः शिरः ” इति ॥ ४६–५० ॥

[illegible] ॥ १२ ॥ १३ ॥ १४

भवः शिवापि अंतरधीयत [illegible] ॥ ५१ ॥ यो वीरभद्रेण गणेन शंभुर्जिग्ये समस्तान् खलु दक्षयज्ञे । ब्रह्मार्थितस्तं कृपया युजोज यज्ञं स सांबोऽवतु सर्वदा माम् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां दक्षयज्ञविध्वंसनो नाम शततमोऽध्यायः ॥ १०० ॥ एकाधिकशताध्याये पार्वत्याः संभवस्तपः । तद्योगयुक्तकामस्य दाहो रुद्राक्ष वर्ण्यते ॥ ऋषयः पार्वतीसंभवादिवृत्तमपृच्छन्—कथमिति ॥ १ ॥ सा सती देवी स्वेच्छया तपसा मेना हिमालयाराधनेन च मेनातनु

तुष्टुवुर्देवदेवेशं नीलकंठं वृषध्वजम् ॥ तान्देवाननुगृह्यैव भवोप्यंतरधीयत ॥५१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवकृद्दक्षयज्ञविध्वंसनो नाम शततमोऽध्यायः ॥ १०० ॥ ऋषय ऊचुः ॥ कथं हिमवतः पुत्री बभूवांबा सती शुभा ॥ कथं वा देवदेवेशमवाप पतिमीश्वरम् ॥ १ ॥ सूत उवाच ॥ सा मेनातनुमाश्रित्य स्वेच्छयैव वरांगना ॥ तदा हैमवती जज्ञे तपसा च द्विजोत्तमाः ॥२॥ जातकर्मादिकाः सर्वाश्चकार च गिरीश्वरः ॥ द्वादशे च तदा वर्षे पूर्णे हैमवती शुभा ॥ ३ ॥ तपस्तेपे तया सार्धमनुजा च शुभानना ॥ अन्या च देवी ह्यनुजा सर्वलोकनमस्कृता ॥ ४ ॥ ऋषयश्च तदा सर्वे सर्वलोकमहेश्वरीम् ॥ तुष्टुवुस्तपसा देवीं समावृत्य समंततः ॥५॥ ज्येष्ठा ह्यपर्णा ह्यनुजा चैकपर्णा शुभानना ॥ तृतीया च वरारोहा तथा चैवैकपाटला ॥ ६ ॥ तपसा च महादेव्याः पार्वत्याः परमेश्वरः ॥ वशीकृतो महादेवः सर्वभूतपतिर्भवः ॥ ७ ॥ एतस्मिन्नेव काले तु तारको नाम दानवः ॥ तारात्मजो महातेजा बभूव दितिनंदनः ॥ ८ ॥ तस्य पुत्रास्त्रयश्चापि तारकाक्षो महासुरः ॥ विद्युन्माली च भगवान् कमलाक्षश्च वीर्यवान् ॥ ९ ॥ पितामहस्तथा चैषां तारो नाम महाबलः ॥ तपसा लब्धवीर्यश्च प्रसादाद्ब्रह्मणः प्रभोः ॥ १० ॥ सोपि तारो महातेजास्त्रैलोक्यं सचराचरम् ॥ विजित्य समरे पूर्वं विष्णुं च जितवानसौ ॥ ११ ॥ तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ॥ दिव्यं वर्षसहस्रं तु दिवारात्रमविश्रमम् ॥ १२ ॥ सरथं विष्णुमादाय चिक्षेप शतयोजनम् ॥ तारेण विजितः संख्ये दुद्राव गरुडध्वजः ॥ १३ ॥

माश्रित्य हैमवती जज्ञे प्रादुर्बभूवेत्यर्थः । तदुक्तं कौर्मे " लब्ध्वा च पुत्रीं शर्वाणीं तपस्तप्त्वा सुदुश्चरम् ॥ सभार्यः शरणं यातः पार्वतीं परमेश्वरीम् " इत्यादिबहुविस्तरस्तत्र ज्ञेयः ॥ २ ॥ ३ ॥ ४ ॥ देवीं पार्वतीं तपसा तपोहेतुना तुष्टुवुरित्यन्वयः ॥ ५ ॥ भगिनीत्रयनामानि कथयति—ज्येष्ठेति ॥ ६ ॥ ७ ॥ एतस्मिन्नेव काले सतीदेहत्यागावसर इत्यर्थः ॥ ८ ॥ ९ ॥ ब्रह्मणः प्रसादाद्रुद्रपुत्रान्यावध्यत्वरूपादियं कथा भारतादौ विस्तृता ॥ १० ॥ ११ ॥ तयोर्विष्णुतारयोरित्यर्थः ॥ १२ ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ अमरप्रभुरिन्द्रः आंगिरसं बृहस्पतिं देवानामपि सन्निधौ संनिपत्य शरणं प्राप्य उवाचेत्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ कुशध्वजं ब्रह्माणमित्यर्थः ॥ २३ ॥ २४ ॥ तारकवधोपायं कथयति–विनिंद्येत्यादिना । दक्षनिंदाप्रकार उक्तो भागवते “ यत्पादपद्मं महतां मनोलिभिर्निषेवितं ब्रह्मरसास

तारो वराञ्छतगुणं लब्ध्वा शतगुणं बलम् ॥ पितामहाज्जगत्सर्वमवाप दितिनंदनः ॥ १४ ॥ देवेंद्रप्रमुखाञ्जित्वा देवान्देवेश्वरेश्वरः ॥ वारयामास तैर्देवान्सर्वलोकेषु मायया ॥१५॥ देवताश्च सहेंद्रेण तारकाद्भयपीडिताः॥ न शांतिं लेभिरे शूराः शरणं वा भयार्दिताः ॥१६॥ तदामरपतिः श्रीमान् सन्निपत्यामरप्रभुः ॥ उवाचांगिरसं देवो देवानामपि सन्निधौ ॥ १७ ॥ भगवंस्तारको नाम तारजो दानवोत्तमः ॥ तेन सन्निहता युद्धे वत्सा गोपतिना यथा॥१८॥भयात्तस्मान्महाभाग बृहद्युद्धे बृहस्पते ॥ अनिकेता भ्रमंत्येते शकुंता इव पंजरे ॥१९॥ अस्माकं यान्यमोघानि आयुधान्यंगिरोवर ॥ तानि मोघानि जायंते प्रभावादमरद्विषः ॥ २० ॥ दशवर्षसहस्राणि द्विगुणानि बृहस्पते ॥ विष्णुना योधितो युद्धे तेनापि न च सूदितः ॥ २१ ॥ यस्तेनानिर्जितो युद्धे विष्णुना प्रभविष्णुना ॥ कथमस्मद्विधस्तस्य स्थास्यते समरेऽग्रतः ॥ २२ ॥ एवमुक्तस्तु शक्रेण जीवः सार्धं सुराधिपैः ॥ सहस्राक्षेण च विभुं संप्राप्याह कुशध्वजम् ॥ २३ ॥ सोपि तस्य मुखाच्छ्रुत्वा प्रणयात्प्रणतार्तिहा ॥ देवैरशेषैः सेंद्रैस्तु जीवमाह पितामहः ॥ २४ ॥ जाने वार्तिं सुरेंद्राणां तथापि शृणु सांप्रतम् ॥ विनिंद्य दक्षं या देवी सती रुद्रांगसंभवा ॥ २५ ॥ उमा हैमवती जज्ञे सर्वलोकनमस्कृता ॥ तस्याश्चैवेह रूपेण यूयं देवाः सुरोत्तमाः ॥ २६ ॥ विभोर्यतध्वमाक्रष्टुं रुद्रस्यास्य मनो महत् ॥ तयोर्योगेन संभूतः स्कंदः शक्तिधरः प्रभुः ॥ २७ ॥ षडास्यो द्वादशभुजः सेनानीः पावकिः प्रभुः ॥ स्वाहेयः कार्तिकेयश्च गांगेयः शरधामजः ॥२८॥ देवः शाखो विशाखश्च नैगमेशश्च वीर्यवान् ॥ सेनापतिः कुमाराख्यः सर्वलोकनमस्कृतः ॥ २९ ॥ लीलयैव महासेनः प्रबलं तारकासुरम् ॥ बालोपि विनिहत्यैको देवान् संतारयिष्यति ॥ ३० ॥ एवमुक्तस्तदा तेन ब्रह्मणा परमेष्ठिना ॥ बृहस्पतिस्तथा सेंद्रैर्देवैर्देवं प्रणम्य तम् ॥ ३१ ॥

वार्थिभिः ॥ लोकस्य यद्वर्षति चाशिषोर्थिनस्तस्मै भवान् द्रुह्यति विश्वबंधवे ॥ अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकंठगर्हितः ॥ जग्धस्य मोहाद्धि विशुद्धिरंधसो जुगुप्सितस्योद्धरणं प्रचक्षते ” इत्यादि ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

स्मरं मदनमित्यर्थः । देवदेवस्य गुरोरित्यर्थः ॥ ३५ ॥ जीवं गुरुं जगज्जीवयनीति जगज्जीवो जगदुत्पादक इत्यर्थः ॥ ३३ ॥ तं कामं सुरपूजितो गुरुराहेत्यन्वयः ॥ ३४ ॥ गुरुवाक्यसमकालमेवौत्सुक्यात्संभावनापूर्वं शक्रवचनं कथयति—नमाहेति ॥ ३२ ॥ ३६ ॥ ३७ ॥ देवदेवाश्रमं शिवाश्रममित्यर्थः ॥ ३८ ॥ देवं शिवं योक्तुं पार्वत्या संगतं कर्तुं मनो यस्य स योक्तुमना अभवदित्यन्वयः ॥ ३९ ॥ ततस्तास्मिन्काल इत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ मदनमनंगं लब्ध्वा जगामेत्यन्वयः

मेरोः शिखरमासाद्य स्मरं सस्मार सुव्रतः ॥ स्मरणाद्देवदेवस्य स्मरोपि सह भार्यया ॥३२॥ रत्या समं समागम्य नमस्कृत्य कृतांजलिः॥ सशक्रमाह तं जीवं जगज्जीवो द्विजोत्तमाः ॥३३॥ स्मृतो यद्भवता जीव संप्राप्तोहं तवांतिकम् ॥ ब्रूहि यन्मे विधातव्यं तमाह सुरपूजितः ॥ ३४॥ तमाह भगवाञ्छक्रः संभाव्य मकरध्वजम् ॥ शंकरेणांबिकामद्य संयोजय यथासुखम् ॥ ३५ ॥ तया स रमते येन भगवान् वृषभध्वजः ॥ तेन मार्गेण मार्गस्व पत्न्या रत्याऽनया सह ॥ ३६ ॥ सोपि तुष्टो महादेवः प्रदास्यति शुभां गतिम् ॥ विप्रयुक्तस्तया पूर्वं लब्ध्वा तां गिरिजामुमाम् ॥ ३७ ॥ एवमुक्तो नमस्कृत्य देवदेवं शचीपतिम् ॥ देवदेवाश्रमं गंतुं मतिं चक्रे तया सह ॥ ३८ ॥ गत्वा तदाश्रमं शंभोः सह रत्या महाबलः ॥ वसंतेन सहायेन देवं योक्तुमनाभवत् ॥ ३९ ॥ ततः संप्रेक्ष्य मदनं हसन् देवस्त्रियंबकः ॥ नयनेन तृतीयेन सावज्ञं तमवैक्षत ॥ ४० ॥ ततोस्य नेत्रजो वह्निर्मदनं पार्श्वतः स्थितम् ॥ अदहत्तत्क्षणादेव ललाप करुणं रतिः ॥ ४१ ॥ रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः ॥ कृपया परया प्राह कामपत्नीं निरीक्ष्य च ॥ ४२ ॥ अमूर्त्तोपि ध्रुवं भद्रे कार्यं सर्वं पतिस्तव ॥ रतिकाले ध्रुवं भद्रे करिष्यति न संशयः ॥ ४३ ॥ यदा विष्णुश्च भविता वासुदेवो महायशाः ॥ शापाद्भृगोर्महातेजाः सर्वलोकहिताय वै ॥ ४४ ॥ तदा तस्य सुतो यश्च स पतिस्ते भविष्यति ॥ सा प्रणम्य तदा रुद्रं कामपत्नी शुचिस्मिता ॥ ४५ ॥ जगाम मदनं लब्ध्वा वसंतेन समन्विता ॥ ४६ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे मदनदाहोनामैकाधिकशततमोध्यायः ॥ १०१ ॥ सूत उवाच ॥ तपसा च महादेव्याः पार्वत्या वृषभध्वजः ॥ प्रीतश्च भगवाञ्छर्वो वचनाद्ब्रह्मणस्तदा ॥ १ ॥

॥ ४६ ॥ सर्वजयिनमपि कामं देवसहायं सुदुर्जयं चान्यैः । जिग्ये तृतीयदृष्ट्या जयतु स देवं सर्वेश्वरः सांबः ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायामेकाधिकशततमोध्यायः ॥ १०१ ॥ वर्ण्यते द्विशताध्याये तपस्तुष्टाच्च शंकरात् ॥ देव्याः प्रसादो देवानां निग्रहादि स्वयंवरे ॥ सूतो देव्युद्वाहवृत्तं पूर्वं संक्षेपतो वर्णयति तपसा चेति द्वाभ्याम् ॥ १ ॥

॥ २ ॥ विस्तरमाह—जगामेत्यादिना ॥ ३ ॥ जगतोरणीं निमित्तकारणभूताम् ॥ ४ ॥ ५ ॥ देवदेवस्य शिवस्य वयं ब्रह्मादयः किंकरा वदंति तच्छीलाः किंकरवादिनः इत्यर्थः ॥ ६ ॥ अंबिके त्वं येन सृष्टासि यस्त्वया विना न वर्त्तते स शिवः स्वयमेव वरयिष्यति तव भर्त्ता च भविष्यत्यत्र संदेहो नेत्यग्रिमेणान्वयः ॥ ७ ॥ इति पूर्वोक्तप्रकारमुक्त्वा पार्वतीं संप्रेक्ष्य मुहुर्नमस्कृत्य पितामहे गते सति महेश्वरः शिवः अनुग्रहं कर्त्तुं द्विजरूपेणाश्रमं जगामेत्यग्रिमेणान्वयः ॥ ८ ॥ ९ ॥ प्रतिभाद्यैरत्यंतदीप्त्यादिभिः प्रभुं शिवं ज्ञात्वा ननामेत्यन्वयः ॥ १० ॥ ११ ॥ तदा तस्मिन्काले देवीमनुगृह्य भूधरस्य हिमालयस्य कुलधर्माश्रयं कुलपरिगृहीतमार्गं रक्षन् प्रहसन्निवोवाचेत्यनेन वस्तुतो

हिताय चाश्रमाणां च क्रीडार्थं भगवान्भवः ॥ तदा हैमवतीं देवीमुपयेमे यथाविधि ॥ २ ॥ जगाम स स्वयं ब्रह्मा मरीच्याद्यैर्महर्षिभिः ॥ तपोवनं महादेव्याः पार्वत्याः पद्मसंभवः ॥३॥ प्रदक्षिणीकृत्य च तां देवीं स जगतोरणीम् ॥ किमर्थं तपसा लोकान्संतापयसि शैलजे॥४॥ त्वया सृष्टं जगत्सर्वं मातस्त्वं मा विनाशय ॥ त्वं हि संधारये लोकानिमान्सर्वान्स्वतेजसा ॥ ५ ॥ सर्वदेवेश्वरः श्रीमान्सर्वलोकपतिर्भवः ॥ यस्य वै देवदेवस्य वयं किंकरवादिनः ॥ ६ ॥ स एवं परमेशानः स्वयं च वरयिष्यति ॥ वरदे येन सृष्टासि न विना यस्त्वयांबिके ॥७॥ वर्त्तते नात्र संदेहस्तव भर्त्ता भविष्यति ॥ इत्युक्त्वा तां नमस्कृत्य मुहुः संप्रेक्ष्य पार्वतीम्॥ ८ ॥ गते पितामहे देवो भगवान् परमेश्वरः॥ जगामानुग्रहं कर्त्तुं द्विजरूपेण चाश्रमम् ॥ ९ ॥ सा च दृष्ट्वा महादेवं द्विजरूपेण संस्थितम् ॥ प्रतिभाद्यैः प्रभुं ज्ञात्वा ननाम वृषभध्वजम् ॥ १० ॥ संपूज्य वरदं देवं ब्राह्मणच्छद्मनागतम् ॥ तुष्टाव परमेशानं पार्वती परमेश्वरम् ॥११॥अनुगृह्य तदा देवीमुवाच प्रहसन्निव॥ कुलधर्माश्रयं रक्षन् भूधरस्य महात्मनः ॥ १२ ॥ क्रीडार्थं च सतां मध्ये सर्वदेवपतिर्भवः ॥ स्वयंवरे महादेवि तव दिव्यसुशोभने॥१३॥ आस्थाय रूपं यत्सौम्यं समेष्येहं सह त्वया ॥ इत्युक्त्वा तां समालोक्य देवो दिव्येन चक्षुषा ॥ १४॥ जगामेष्टं तदा दिव्यं स्वपुरं प्रययौ च सा ॥ दृष्ट्वा हृष्टस्तदा देवीं मेनया तुहिनाचलः॥१५॥ आलिंग्याघ्राय संपूज्य पुत्रीं साक्षात्तपस्विनीम् ॥ दुहितुर्देवदेवेन न जानन्नभिमंत्रितम् ॥ १६ ॥ स्वयंवरं तदा देव्याः सर्वलोकेष्ववघोषयत् ॥ अथ ब्रह्मा च भगवान् विष्णुः साक्षाज्जनार्दनः ॥ १७॥

विरहकातरत्वं सूचितम् । तदुक्तं शिवपुराणे “अद्यप्रभृति ते दासस्तपोभिः प्रेमनिर्भरैः । क्रीतोस्मि तव सौंदर्यात्क्षणमेकं युगायते” इति ॥ १२ ॥१३॥ दिव्येन चक्षुषा तां समालोक्येत्यनेनानुग्रहे दिव्यरूपप्रादुर्भावः सूचितः ॥ १४ ॥ १५ ॥ दुहितुर्देवदेवेन शिवेनाभिमंत्रितं संकेतितं न जानन् हिमालयो देव्याः स्वयंवरं सर्वलोकेष्ववघोषयत् प्रख्यापयामासेत्यग्रिमेणान्वयः ॥ १६ ॥ सर्वदेवाद्यागमं कथयति—अथेत्यादिना ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ देवीं वर्णयति—अथेत्यादिना ॥ २३ ॥ २४ ॥ २५ ॥ देव्याः मुख्यसखीं वर्णयति—मालिनीत्यादिना ॥ २६ ॥ २७ ॥ शिवचेष्टितं

शक्रश्च भगवान् वह्निर्भास्करो भग एव च ॥ त्वष्टार्यमा विवस्वांश्च यमो वरुण एव च ॥ १८ ॥ वायुः सोमस्तथेशानो रुद्राश्च मुनयस्तथा ॥ अश्विनौ द्वादशादित्या गंधर्वा गरुडस्तथा ॥ १९ ॥ यक्षाः सिद्धास्तथा साध्या दैत्याः किंपुरुषोरगाः ॥ समुद्राश्च नदा वेदा मंत्राः स्तोत्रादयः क्षणाः॥ २० ॥ नागाश्च पर्वताः सर्वे यज्ञाः सूर्यादयो ग्रहाः ॥ त्रयस्त्रिंशच्च देवानां त्रयश्च त्रिशतं तथा ॥ २१ ॥ त्रयश्च त्रिसहस्रं च तथान्ये बहवः सुराः ॥ जग्मुर्गिरींद्रपुत्र्यास्तु स्वयंवरमनुत्तमम् ॥ २२ ॥ अथ शैलसुता देवी हैममारुह्य शोभनम् ॥ विमानं सर्वतोभद्रं सर्वरत्नैरलंकृतम् ॥ २३ ॥ अप्सरोभिः प्रनृत्ताभिः सर्वाभरणभूषितैः ॥ गंधर्वसिद्धैर्विविधैः किन्नरैश्च सुशोभनैः॥२४ ॥ वंदिभिः स्तूयमाना च स्थिता शैलसुता तदा ॥ सितातपत्रं रत्नांशुमिश्रितं चावहत्तथा ॥ २५ ॥ मालिनी गिरिपुत्र्यास्तु संध्यापूर्णेन्दुमंडलम् ॥ चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्च संवृता ॥ २६ ॥ मालां गृह्य जया तस्थौ सुरद्रुमसमुद्भवाम् ॥ विजया व्यजनं गृह्य स्थिता देव्याः समीपगा ॥ २७ ॥ मालां प्रगृह्य देव्यां तु स्थितायां देवसंसदि ॥ शिशुर्भूत्वा महादेवः क्रीडार्थं वृषभध्वजः ॥ २८ ॥ उत्संगतलसंसुप्तो बभूव भगवान्भवः ॥ अथ दृष्ट्वा शिशुं देवास्तस्या उत्संगवर्तिनम् ॥ २९ ॥ कोयमत्रेति संमंत्र्य चुक्षुभुश्च समागताः ॥ वज्रमाहारयत्तस्य बाहुमुद्यम्य वृत्रहा ॥ ३० ॥ स बाहुरुद्यमस्तस्य तथैव समुपस्थितः ॥ स्तंभितः शिशुरूपेण देवदेवेन लीलया ॥ ३१ ॥ वज्रं क्षेप्तुं न शशाक बाहुं चालयितुं तथा ॥ वह्निः शक्तिं तथा क्षेप्तुं न शशाक तथा स्थितः ॥ ३२ ॥ यमोपि दंडं खड्गं च निर्ऋतिर्मुनिपुंगवाः ॥ वरुणो नागपाशं च ध्वजयष्टिं समीरणः ॥३३॥ सोमो गदां धनेशश्च दंडं दंडभृतां वरः ॥ ईशानश्च तथा शूलं तीव्रमुद्यम्य संस्थितः ॥ ३४ ॥ रुद्राश्च शूलमादित्या मुशलं वसवस्तथा ॥ मुद्गरं स्तंभिताः सर्वे देवेनाशु दिवौकसः ॥ ३५ ॥ स्तंभिता देवदेवेन तथान्ये च दिवौकसः ॥ शिरः प्रकंपयन्विष्णुश्चक्रमुद्यम्य संस्थितः॥ ३६॥ तस्यापि शिरसो बालः स्थिरत्वं प्रचकार ह ॥ चक्रं क्षेप्तुं न शशाक बाहुं चालयितुं न च ॥ ३७॥ पूषा दंतान्दशन्दंतैर्बालमैक्षत मोहितः ॥ तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शंभुना ॥ ३८ ॥

कथयति—शिशुरित्यादिना ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

॥ ३९ ॥ परमसंविग्नो ब्रह्मा ध्यानमास्थाय उमोत्संगे आस्थितं नमु ईशानं सर्वनियंतारं शंकरं देवं बुबुधे इत्यन्वयः ॥ ४० ॥ ४१ ॥ पुराणैः प्राचीनैः सामसंगीतैः साम गायनैरित्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ सर्वा देवताः शंकरं न बुध्यतातो यूयं मूढास्थ अविवेकेन वर्त्तमाना इत्यर्थः ॥ ४९ ॥ ५० ॥ ५१ ॥

बलं तेजश्च योगं च तथैवास्तंभयद्विभुः ॥ अथ तेषु स्थितेष्वेव मन्युमत्सु सुरेष्वपि ॥ ३९ ॥ ब्रह्मा परमसंविग्नो ध्यानमास्थाय शंकरम् ॥ बुबुधे देवमीशानमुमोत्संगे तमास्थितम् ॥ ४० ॥ स बुद्ध्वा देवमीशानं शीघ्रमुत्थाय विस्मितः ॥ ववंदे चरणौ शंभोरस्तुवच्च पितामहः ॥ ४१ ॥ पुराणैः सामसंगीतैः पुण्याख्यैर्गुह्यनामभिः ॥ स्रष्टा त्वं सर्वलोकानां प्रकृतेश्च प्रवर्त्तकः ॥ ४२ ॥ बुद्धिस्त्वं सर्वलोकानामहंकारस्त्वमीश्वरः ॥ भूतानामिंद्रियाणां च त्वमेवेश प्रवर्त्तकः ॥ ४३ ॥ तवाहं दक्षिणाद्धस्तात्सृष्टः पूर्वं पुरातनः ॥ वामहस्तान्महाबाहो देवो नारायणः प्रभुः ॥ ४४ ॥ इयं च प्रकृतिर्देवी सदा ते सृष्टिकारण ॥ पत्नीरूपं समास्थाय जगत्कारणमागता ॥ ४५ ॥ नमस्तुभ्यं महादेव महादेव्यै नमोनमः ॥ प्रसादात्तव देवेश नियोगाच्च मया प्रजाः ॥ ४६ ॥ देवाद्यास्तु इमाः सृष्टा मूढास्त्वद्योगमोहिताः ॥ कुरु प्रसादमेतेषां यथापूर्वं भवंत्विमे ॥ ४७ ॥ सूत उवाच ॥ विज्ञाप्यैवं तदा ब्रह्मा देवदेवं महेश्वरम् ॥ संस्तंभितांस्तदा तेन भगवानाह पद्मजः ॥ ४८ ॥ मूढास्थ देवताः सर्वा नैव बुध्यत शंकरम् ॥ देवदेवमिहायांतं सर्वदेवनमस्कृतम् ॥ ४९ ॥ गच्छध्वं शरणं शीघ्रं देवाः शक्रपुरोगमाः ॥ सनारायणकाः सर्वे मुनिभिः शंकरं प्रभुम् ॥५०॥ सार्धं मयैव देवेशं परमात्मानमीश्वरम् ॥ अनया हैमवत्या च प्रकृत्या सह सत्तमम् ॥ ५१ ॥ तत्र ते स्तंभितास्तेन तथैव सुरसत्तमाः ॥ प्रणेमुर्मनसा सर्वे सनारायणकाः प्रभुम् ॥ ५२ ॥ अथ तेषां प्रसन्नो भूद्देवदेवस्त्रियंबकः॥ यथापूर्वं चकाराशु वचनाद्ब्रह्मणः प्रभुः॥५३॥तत एवं प्रसन्ने तु सर्वदेवनिवारणम् ॥ वपुश्चकार देवेशो दिव्यं परममद्भुतम् ॥ ५४ ॥ तेजसा तस्य देवास्ते सेंद्रचंद्रदिवाकराः ॥ सब्रह्मकाःससाध्याश्च सनारायणकास्तथा ॥५५॥ सयमाश्च सरुद्राश्च चक्षुरप्राथयन्विभुम् ॥ तेभ्यश्च परमं चक्षुः सर्वदृष्टौ च शक्तिमत् ॥ ५६ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ सर्वदेवनिवारणं सर्वदेवैरपि द्रष्टुमशक्यमित्यर्थः ॥ ५४ ॥ तस्य शिवस्य तेजसा प्रतिहतदृष्ट्य इति शेषः । ते पूर्वोक्तसर्वे देवाः विभुं सर्वव्यापकं शिवं चक्षुर्दिव्यदृष्टिमप्रार्थयन्प्रार्थितवंत इत्यग्रिमेणान्वयः ॥ ५५ ॥ ५६ ॥

अंबायाः जगज्जनन्याः प्रकृतेः पतिः पालक इत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ सर्वे शैलादिप्रमुखाः गणपाः मुमुदुर्हर्षव्यग्रा बभूवुरित्यर्थः । दृष्ट्वा देवी त्रिदिवौकसां समक्षं तस्य शिवस्य पादयोर्दिव्यां सुगंधिनीं मालां स्थापयामासेत्यग्रिमेणान्वयः ॥ ६१ ॥ ६२ ॥ तया पार्वत्या अर्चितं मालासमर्पणेन पूजितं शिवं साधुसाध्विति संप्रोच्य तत्रैव तस्मिन्नेव काले देव्या सह भूतलाश्रितैः शिरोभिः । सर्वे देवा नमश्चक्रुरिति पूर्वस्यैवान्वयः ॥ ६३ ॥ यो देवीं रुचिरां स्वयंवरमहोत्साहे विमानास्थितां भेजे बालवपुस्त

ददावंबापतिः शर्वो भवान्याश्च चलस्य च ॥ लब्ध्वा चक्षुस्तदा देवा इंद्रविष्णुपुरोगमाः ॥५७॥ सब्रह्मकाः सशक्राश्च तमपश्यन्महेश्वरम् ॥ ब्रह्माद्या नेमिरे तूर्णं भवानी च गिरीश्वरः ॥ ५८ ॥ मुनयश्च महादेवं गणेशाः शिवसंमताः ॥ ससर्जुः पुष्पवृष्टिं च खेचराः सिद्धचारणाः ॥ ५९ ॥ देवदुंदुभयो नेदुस्तुष्टुवुर्मुनयः प्रभुम् ॥ जगुर्गंधर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ ६० ॥ मुमुदुर्गणपाः सर्वे मुमोदांबा च पार्वती ॥ तस्य देवी तदा दृष्ट्वा समक्षं त्रिदिवौकसाम् ॥ ६१ ॥ पादयोः स्थापयामास मालां दिव्यां सुगंधिनीम् ॥ साधुसाध्विति संप्रोच्य तया तत्रैव चार्चितम् ॥ ६२ ॥ सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः ॥ सर्वे सब्रह्मका देवाः सयक्षोरगराक्षसाः ॥ ६३ ॥

इति श्रीलिंगमहापुराणे पूर्वभागे उमास्वयंवरो नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ सूत उवाच ॥ अथ ब्रह्मा महादेवमभिवंद्य कृतांजलिः ॥ उद्वाहः क्रियतां देव इत्युवाच महेश्वरम् ॥ १ ॥ तस्य तद्वचनं श्रुत्वा ब्रह्मणः परमेष्ठिनः ॥ यथेष्टमिति लोकेशं प्राह भूतपतिः प्रभुः ॥ २ ॥ उद्वाहार्थं महेशस्य तत्क्षणादेव सुव्रताः ॥ ब्रह्मणा कल्पितं दिव्यं पुरं रत्नमयं शुभम् ॥ ३ ॥ अथादितिर्दितिः साक्षाद्दनुः कद्रुः सुकालिका ॥ पुलोमा सुरसा चैव सिंहिका विनता तथा ॥ ४ ॥ सिद्धिर्माया क्रिया दुर्गा देवी साक्षात्सुधा स्वधा ॥ सावित्री वेदमाता च रजनी दक्षिणा द्युतिः ॥५॥ स्वाहा स्वधा मतिर्बुद्धिर्ऋद्धिर्वृद्धिः सरस्वती ॥ राका कुहूः सिनीवाली देवी अनुमती तथा ॥ ६ ॥ धरणी धारणी चेला शची नारायणी तथा ॥ एताश्चान्याश्च देवानां मातरः पत्नयस्तथा ॥ ७ ॥

दंकनिलयो दृष्ट्वैव सर्वामगात् । संस्तभ्य द्रुहिणेन संस्तुतपदो गौर्या वृतः सादरं प्रत्यक्षो भगवान् स्मरार्चितपदः कुर्यात्सदा मंगलम् ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां द्व्यधिकशततमोध्यायः ॥ १०२ ॥ लैंगेऽस्मिंस्त्रिशताध्याये महाघोषसमन्वितः । विवाहः शिवयोः सम्यक् पुत्रोत्पत्तिश्च वर्ण्यते ॥ सूतः शिवविवाहं कथयति—अथेत्यादिना ॥ १ ॥ २ ॥ सुव्रता इति शौनकादिसंबोधनम् ॥ ३ ॥ विवाहोत्सवे स्त्रीणां प्राधान्यात्तदागमं प्रथमतः कथयति—अथेत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

॥ ८ ॥ ९ ॥ प्रतिहाराः द्वारपाला इत्यर्थः । अप्सरसः कोटिस्तत्संख्या इत्यर्थः ॥१०॥११॥१२ ॥ सगणगणेश्वरागमं कथयति–अभ्ययुरित्यादिना । शंखवर्णाश्च शुभ्रादिवर्णा इत्यर्थः ॥१३॥१४॥१५॥१६॥ पिप्पलस्तत्संज्ञकः सहस्रेण कोटिसहस्रेणेत्यर्थः ॥१७॥१८॥१९॥२०॥२१॥२२॥२३॥ देवा रुद्रा इत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥

उद्वाहः शंकरस्येति जग्मुः सर्वा मुदान्विताः ॥ उरगा गरुडा यक्षा गंधर्वाः किन्नरा गणाः ॥ ८ ॥ सागरा गिरयो मेघा मासाः संवत्सरास्तथा ॥ वेदा मंत्रास्तथा यज्ञाः स्तोमा धर्माश्च सर्वशः ॥ ९ ॥ हुंकारः प्रणवश्चैव प्रतिहाराः सहस्रशः ॥ कोटिरप्सरसो दिव्यास्तासां च परिचारिकाः ॥ १० ॥ याश्च सर्वेषु द्वीपेषु देवलोकेषु निम्नगाः ॥ ताश्च स्त्रीविग्रहाः सर्वाः संजग्मुर्हृष्टमानसाः ॥ ११ ॥ गणपाश्च महाभागाः सर्वलोकनमस्कृताः ॥ उद्वाहः शंकरस्येति तत्राजग्मुर्मुदान्विताः ॥ १२ ॥ अभ्ययुः शंखवर्णाश्च गणकोट्या गणेश्वराः ॥ दशभिः केकराक्षश्च विद्युतोष्टाभिरेव च ॥ १३ ॥ चतुःषष्ट्या विशाखाश्च नवभिः पारयात्रिकः ॥ षड्भिः सर्वांतकः श्रीमान् तथैव विकृताननः ॥ १४ ॥ ज्वालाकेशो द्वादशभिः कोटिभिर्गणपुंगवः ॥ सप्तभिः समदः श्रीमान्दुंदुभोष्टाभिरेव च ॥ १५ ॥ पंचभिश्च कपालीशः षड्भिः संदारकः शुभः ॥ कोटिकोटिभिरेवेह गंडकः कुंभकस्तथा ॥ १६ ॥ विष्टंभोष्टाभिरेवेह गणपः सर्वसत्तमः ॥ पिप्पलश्च सहस्रेण सन्नादश्च तथा द्विजाः ॥ १७ ॥ आवेष्टनस्तथाष्टाभिः सप्तभिश्चंद्रतापनः ॥ महाकेशः सहस्रेण कोटीनां गणपो वृतः ॥ १८ ॥ कुंडी द्वादशभिर्वीरस्तथा पर्वतकः शुभः ॥ कालश्च कालकश्चैव महाकालः शतेन वै ॥ १९ ॥ अग्निकः शतकोट्या वै कोट्याग्निमुख एव च ॥ आदित्यमूर्धा कोट्या च तथा चैव धनावहः ॥ २० ॥ सन्नामश्च शतेनैव कुमुदः कोटिभिस्तथा ॥ अमोघः कोकिलश्चैव कोटिकोट्या सुमंत्रकः ॥ २१ ॥ काकपादोऽपरः षष्ट्या षष्ट्या संतानकः प्रभुः ॥ महाबलश्च नवभिर्मधुपिंगश्च पिंगलः ॥ २२ ॥ नीलो नवत्या देवेशः पूर्णभद्रस्तथैव च ॥ कोटीनां चैव सप्तत्या चतुर्वक्त्रो महाबलः ॥ २३ ॥ कोटिकोटिसहस्राणां शतैर्विंशतिभिर्वृताः ॥ तत्राजग्मुस्तथा देवास्ते सर्वे शंकरं भवम् ॥ २४ ॥ भूतकोटिसहस्रेण प्रमथः कोटिभिस्त्रिभिः ॥ वीरभद्रश्चतुःषष्ट्या रोमजाश्चैव कोटिभिः ॥ २५ ॥ करणश्चैव विंशत्या नवत्या केवलः शुभः ॥ पंचाक्षः शतमन्युश्च मेघमन्युस्तथैव च ॥ २६ ॥

तालकेत्वादयः सहस्रपाच्च चतुःषष्ट्या तत्संख्यकोटिभिरभ्ययुरित्यनुषंगमादाय चतुर्थेनान्वयः ॥२७–३५॥ देवैर्गीता स्तुता इत्यर्थः ॥ ३६ ॥ ३७ ॥ पुरं ब्रह्मनिर्मितरत्नमयम् ॥ ३८ ॥ ३९ ॥ मन्मूर्तिर्मदंशस्तुहिनाचलो यज्ञार्थं शिवसंगतिकरणार्थमेव हि सृष्ट उत्पादित इत्यर्थः ॥ ४० ॥ एषा देवी परमेष्ठिनः शिवस्य मायया हैमवती हिमवत्पुत्री जज्ञेऽतः जगतां तव ममापि धात्री जननी श्रौतस्मार्तप्रवृत्त्यर्थमुद्वाहार्थमिहागतोसौ रुद्रो धाता जनकश्चेति पूर्वस्थैरन्वयः ॥ ४१ ॥ यतो यस्मात्कारणाद्भवो रुद्रः क्ष्मावह्निखेंदु

काष्ठकूटश्चतुःषष्ट्या सुकेशो वृषभस्तथा ॥ विरूपाक्षश्च भगवान् चतुःषष्ट्या सनातनः ॥ २७ ॥ तालुकेतुः षडास्यश्च पंचास्यश्च सनातनः ॥ संवर्तकस्तथा चैत्रो लकुलीशः स्वयं प्रभुः ॥ २८ ॥ लोकांतकश्च दीप्तास्यो तथा दैत्यांतकः प्रभुः ॥ मृत्युहृत्कालहा कालो मृत्युंजयकरस्तथा ॥ २९ ॥ विषादो विषदश्चैव विद्युतः कांतकः प्रभुः ॥ देवो भृंगी रिटिः श्रीमान् देवदेवप्रियस्तथा ॥ ३० ॥ अशनि र्भासकश्चैव चतुःषष्ट्या सहस्रपात् ॥ एते चान्ये च गणपा असंख्याता महाबलाः ॥ ३१ ॥ सर्वे सहस्रहस्ताश्च जटामुकुटधारिणः ॥ चंद्ररेखावतंसाश्च नीलकंठास्त्रिलोचनाः ॥ ३२ ॥ हारकुंडलकेयूरमुकुटाद्यैरलंकृताः ॥ ब्रह्मेंद्रविष्णुसंकाशा अणिमादिगुणैर्वृताः ॥ ३३ ॥ सूर्यकोटिप्रतीकाशास्तत्राजग्मुर्गणेश्वराः ॥ पातालचारिणश्चैव सर्वलोकनिवासिनः ॥ ३४ ॥ तुंबरुर्नारदो हाहा हूहूश्चैव तु सामगाः ॥ रत्नान्यादाय वाद्यांश्च तत्राजग्मुस्तदा पुरम् ॥ ३५ ॥ ऋषयः कृत्स्नशस्तत्र देवगीतास्तपोधनाः ॥ पुण्यान्वैवाहिकान्मंत्रानजपुर्हृष्टमानसाः ॥ ३६ ॥ तत एवं प्रवृत्ते तु सर्वतश्च समागमे ॥ गिरिजां तामलंकृत्य स्वयमेव शुचिस्मिताम् ॥ ३७ ॥ पुरं प्रवेशयामास स्वयमादाय केशवः ॥ सदस्याह च देवेशं नारायणमजो हरिम् ॥ ३८ ॥ भवानग्रे समुत्पन्नो भवान्या सह दैवतैः ॥ वामांगादस्य रुद्रस्य दक्षिणांगादहं प्रभो ॥ ३९ ॥ मन्मूर्तिस्तुहिनाद्रीशो यज्ञार्थं सृष्ट एव हि ॥ एषा हैमवती जज्ञे मायया परमेष्ठिनः ॥ ४० ॥ श्रौतस्मार्तप्रवृत्त्यर्थमुद्वाहार्थ मिहागतः ॥ अतोसौ जगतां धात्री धाता तव ममापि च ॥ ४१ ॥ अस्य देवस्य रुद्रस्य मूर्तिभिर्विहितं जगत् ॥ क्ष्मावह्निखेंदुसूर्यात्म पवनात्मा यतो भवः ॥ ४२ ॥ तथापि तस्मै दातव्या वचनाच्च गिरेर्मम ॥ एषा ह्यजा शुक्लकृष्णा लोहिता प्रकृतिर्भवान् ॥ ४३ ॥

सूर्यात्मपवनाः आत्मानो देहाः यस्य स क्ष्मावह्निखेंदुसूर्यात्मपवनात्मा तनोस्य देवस्य रुद्रस्य मूर्तिभिर्जगत् विहितमुत्पन्नमित्यर्थः ॥४२॥ शुक्लकृष्णा लोहिता अजा मायेत्यर्थः । भवान् त्वं प्रकृतिः प्रकृतिरूपस्तथा तव प्रकृतिरूपत्वात् शिवेन नित्यं योगोपि एषा पार्वती मम गिरेश्च वचनात्तस्मै रुद्राय दातव्या दातुं योग्येत्यर्थः ॥ ४३ ॥

शैलराजेन हिमालयेन तवाप्ययं वक्ष्यमाणः संबंधोपि श्रेयः श्रेष्ठ इत्यर्थः । पाद्मे तत्संज्ञे कल्पे तव नाभ्यंबुजादहं समुद्भूत इत्यन्वयः ॥ ४४ ॥ ४५ ॥ ततः सर्वसंमतब्रह्म वाक्यादित्यर्थः ॥ ४६ ॥ ४७ ॥ त्वदीया अर्धांगरूपत्वान्नित्यत्वसंबंधिनी एषा विवाहार्थं विवाहविधिसिद्ध्यर्थं मेनायां जाता मेनजा मम अनुजा कनिष्ठभगिनीरूपा इत्युक्त्वा

श्रेयोपि शैलराजेन संबंधोऽयं तवापि च॥ तव पाद्मे समुद्भूतः कल्पे नाभ्यंबुजादहम्॥४४॥ मदंशस्यास्य शैलस्य ममापि च गुरुर्भवान् ॥ सूत उवाच ॥ बाढमित्यजमाहासौ देवदेवो जनार्दनः ॥ ४५ ॥ देवाश्च मुनयः सर्वे देवदेवश्च शंकरः ॥ ततश्चोत्थाय विद्वान्सः पद्मनाभः प्रणम्य ताम्॥४६॥ पादौ प्रक्षाल्य देवस्य कराभ्यां कमलेक्षणः ॥ अभ्युक्षदात्मनो मूर्ध्नि ब्रह्मणश्च गिरेस्तथा ॥४७॥ त्वदीयैषा विवाहार्थं मेनजा ह्यनुजा मम ॥ इत्युक्त्वा सोदकं दत्वा देवीं देवेश्वराय ताम् ॥४८॥ स्वात्मानमपि देवाय सोदकं प्रददौ हरिः॥ अथ सर्वे मुनिश्रेष्ठाः सर्ववेदार्थपारगाः ॥४९॥ ऊचुर्दाता गृहीता च फलं द्रव्यं विचारतः॥ एष देवो हरो नूनं मायया हि ततो जगत्॥५०॥इत्युक्त्वा तं प्रणेमुश्च प्रीतिकंटकितत्वचः ॥ ससृजुः पुष्पवर्षाणि खेचराः सिद्धचारणाः॥५१॥ देवदुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः॥वेदाश्च मूर्तिमंतस्ते प्रणेमुस्तं महेश्वरम् ॥ ५२ ॥ ब्रह्मणा मुनिभिः सार्धं देवदेवमुमापतिम् ॥ देवोपि देवीमालोक्य सलज्जां हिमशैलजाम् ॥ ५३ ॥ न तृप्यत्यनवद्यांगी सा च देवं वृषध्वजम् ॥ वरदोस्मीति तं प्राह हरिं सोप्याह शंकरम् ॥ ५४ ॥ त्वयि भक्तिः प्रसीदेति ब्रह्माख्यां च ददौ तु सः ॥ ततस्तु पुनरेवाह ब्रह्मा विज्ञापयन्प्रभुम् ॥ ५५ ॥ हविर्जुहोमि वह्नौ तु उपाध्यायपदे स्थितः ॥ ददासि मम यद्याज्ञां कर्तव्यो ह्यकृतो विधिः ॥ ५६ ॥ तमाह शंकरो देवं देवदेवो जगत्पतिः ॥ यद्यदिष्टं सुरश्रेष्ठ तत्कुरुष्व यथेप्सितम् ॥ ५७ ॥ कर्तास्मि वचनं सर्वं देवदेव पितामह ॥ ततः प्रणम्य हृष्टात्मा ब्रह्मा लोकपितामहः ॥ ५८ ॥

हरिः देवेश्वराय देवाय शिवाय तामुमां देवीं सोदकं दत्वा स्वात्मानमपि सोदकं प्रददावित्यग्रिमेणान्वयः ॥ ४८ ॥ मुनिप्रार्थनादिविवाहोत्सवं कथयाति–अथेत्यादिना ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ब्रह्माख्यां ब्रह्मसंज्ञामत एव ब्रह्मत्वेन विष्णोर्विष्णुपुराणादौ वर्णनं संगतम् । लोकवल्लीलाकैवल्यमिति प्रदर्शयितुं भगवता शिवेन विध्यंगीकाराद्विवाहहोमादिविधेरप्यावश्यकत्वाद्ब्रह्मा विज्ञापयति–ततस्त्वित्यादिना ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

॥ ५९ ॥ एतै वैंवाहिकैः श्रोतैर्मं त्रैर्यथोक्तविधिना हुत्वा विष्णुना आनीतान् लाजानपि यथाक्रमं हुत्वा विवाहहोमस्य वरकर्तृकत्वाद्धोमयित्वेत्यर्थः ॥६०॥ विप्रान्विविधैर्वै रैरनेकगोदानैरित्यर्थः ॥ ६१ ॥ ६२ ॥ शिवयोर्मधुपर्कपूजां कथयति—तत इत्यादिना ॥ ६३ ॥ ६४ ॥ भृग्वाद्या मुनयः सूर्याद्या ग्रहाश्च तं शिवमक्षतैस्तिलतंडुलैः समभ्यर्च्य तुष्टुवुरि

हस्तं देवस्य देव्याश्च युयोज परमं प्रभुः ॥ ज्वलनश्च स्वयं तत्र कृतांजलिरुपस्थितः ॥ ५९ ॥ श्रौतैरेतैर्महामंत्रैर्मूर्तिमद्भिरुपस्थितैः ॥ यथोक्तविधिना हुत्वा लाजानपि यथाक्रमम् ॥ ६० ॥ आनीतान्विष्णुना विप्रान्संपूज्य विविधैर्वरैः ॥ त्रिश्च तं ज्वलनं देवं कारयित्वा प्रदक्षिणम् ॥ ६१ ॥ मुक्त्वा हस्तसमायोगं सहितैः सर्वदैवतैः ॥ सुरैश्च मानवैः सर्वैः प्रहृष्टेनांतरात्मना ॥ ६२ ॥ ननाम भगवान्ब्रह्मा देवदेवमुमापतिम् ॥ ततः पाद्यं तयोर्दत्वा शंभोराचमनं तथा ॥ ६३ ॥ मधुपर्कं तथा गां च प्रणम्य च पुनः शिवम् ॥ अतिष्ठद्भगवान्ब्रह्मा देवैरिन्द्रपुरोगमैः ॥ ६४ ॥ भृग्वाद्या मुनयः सर्वे चाक्षतैस्तिलतंडुलैः ॥ सूर्यादयः समभ्यर्च्य तुष्टुवुर्वृषभध्वजम् ॥ ६५ ॥ शिवः समाप्य देवोक्तं वह्निमारोप्य चात्मनि ॥ तया समागतो रुद्रः सर्वलोकहिताय वै ॥ ६६ ॥ यः पठेच्छृणुयाद्वापि भवोद्वाहं शुचिस्मितः ॥ श्रावयेद्वा द्विजाञ्छुद्धान्वेदवेदांगपारगान् ॥६७॥ स लब्ध्वा गाणपत्यं च भवेन सह मोदते ॥ यत्रायं कीर्त्यते विप्रैस्तावदास्ते तदा भवः ॥६८॥ तस्मात्संपूज्य विधिवत्कीर्तयेन्नान्यथा द्विजाः ॥ उद्वाहे च द्विजेंद्राणां क्षत्रियाणां द्विजोत्तमाः ॥ ६९ ॥ कीर्तनीयमिदं सर्वं भवोद्वाहमनुत्तमम् ॥ कृतोद्वाहस्तदा देव्या हैमवत्या वृषध्वजः ॥ ७० ॥ सगणो नंदिना सार्धं सर्वदेवगणैर्वृतः ॥ पुरीं वाराणसीं दिव्यामाजगाम महाद्युतिः ॥ ७१ ॥ अविमुक्ते सुखासीनं प्रणम्य वृषभध्वजम् ॥ अपृच्छत्क्षेत्रमाहात्म्यं भवानी हर्षितानना ॥ ७२ ॥ अथाहार्धेन्दुतिलकः क्षेत्रमाहात्म्यमुत्तमम् ॥ अविमुक्तस्य माहात्म्यं विस्तराच्छक्यते नहि ॥ ७३ ॥ वक्तुं मया सुरेशानि ऋषिसंघाभिपूजितम् ॥ किं मया वर्ण्यते देवि ह्यविमुक्तफलोदयः ॥७४ ॥ पापिनां यत्र मुक्तिः स्यान्मृतानामेकजन्मना ॥ अन्यत्र तु कृतं पापं वाराणस्यां व्यपोहति॥७५॥ वाराणस्यां कृतं पापं पैशाच्यनरकावहम् ॥ कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम् ॥ ७६ ॥

त्यन्वयः ॥ ६५ ॥ ६६ ॥ विवाहमुक्त्वा श्रवणश्रावणफलं सविधानं कथयति—य इत्यादिना ॥ ६७ ॥ ६८ ॥ ६९ ॥ विवाहोत्तरवृत्तं कथयति—कृतोद्वाह इत्यादिना॥७०॥ ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ वाराणस्यां कृतं पापं पैशाचनरकावहं न तु पुनर्जन्मप्रापकमित्यर्थः ॥ ७६ ॥

मुख्यस्थानानि कथयति—यत्रेत्यादिना ॥ ७७ ॥ ७८ ॥ सहेतु गजाननोत्पत्तिं कथयति—तत्रैवेत्यादिना ॥ ७९ ॥ ८० ॥ प्रसादाद्वेदव्यासकृपयेत्यर्थः ॥ ८१ ॥ गार्हस्थ्यं धन्यतमं लोके प्रथयन्नुमां महादेवः । उपयेमे विधिनेशो गणेशजनकः स मे तुष्यात् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामुमाविवाहो नाम त्र्यधिक- शततमोऽध्यायः ॥ १०३ ॥ चतुःशततमेऽध्याये सर्वदेवकृतस्तवः ॥ शंभोर्विघ्नेशसृष्ट्यर्थं प्रोच्यते गतिदायकः ॥ ऋषयो गजाननोत्पत्तिप्रकारमपृच्छन्—कथमिति ॥ १ ॥ एतस्मिन्नंतरे शिवोमाविहारविरामकाल इत्यर्थः । दैत्यानां धर्मविघ्नं कर्तुं देवाः समेत्य अभवन् आसन्नित्यर्थः॥२॥देवविचारं कथयति—असुरा इत्यादिना । असुरादयः अविघ्नं

न तु शक्रसहस्रत्वं स्वर्गे काशीपुरीं विना ॥ यत्र त्रिविष्टपो देवो यत्र विश्वेश्वरो विभुः॥७७॥ ओंकारेशः कृत्तिवासा मृतानां न पुनर्भवः ॥ उक्त्वा क्षेत्रस्य माहात्म्यं संक्षेपाच्छशिशेखरः ॥ ७८ ॥ दर्शयामास चोद्यानं परित्यज्य गणेश्वरान् ॥ तत्रैव भगवान् जातो गजवक्त्रो विनायकः ॥ ७९ ॥ दैत्यानां विघ्नरूपार्थमविघ्नाय दिवौकसाम् ॥ एतद्वः कथितं सर्वं कथासर्वस्वमुत्तमम् ॥ ८० ॥ यथाश्रुतं मया सर्वं प्रसादाद्वः सुशोभनम् ॥ ८१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे पार्वतीविवाहवर्णनं नाम त्र्यधिकशततमोऽध्यायः ॥ १०३॥ ऋषय ऊचुः ॥ कथं विनायको जातो गजवक्त्रो गणेश्वरः ॥ कथंप्रभावस्तस्यैवं सूत वक्तुमिहार्हसि ॥ १ ॥ सूत उवाच ॥ एतस्मिन्नंतरे देवाः सेंद्रोपेंद्राः समेत्य ते ॥ धर्मविघ्नं तदा कर्तुं दैत्यानामभवन्द्विजाः ॥ २ ॥ असुरा यातुधानाश्च राक्षसाः क्रूरकर्मिणः ॥ तामसाश्च तथा चान्ये राजसाश्च तथा भुवि ॥ ३ ॥ अविघ्नं यज्ञदानाद्यैः समभ्यर्च्य महेश्वरम् ॥ ब्रह्माणं च हरिं विप्रा लब्धेप्सितवरा यतः ॥ ४ ॥ ततोऽस्माकं सुरश्रेष्ठाः सदा विजयसंभवः ॥ तेषां ततस्तु विघ्नार्थमविघ्नाय दिवौकसाम् ॥ ५ ॥ पुत्रार्थं चैव नारीणां नराणां कर्मसिद्धये ॥ विघ्नेशं शंकरं स्रष्टुं गणपं स्तोतुमर्हथ ॥ ६ ॥ इत्युक्त्वान्योन्यमनघं तुष्टुवुः शिवमीश्वरम् ॥ नमः सर्वात्मने तुभ्यं सर्वज्ञाय पिनाकिने ॥ ७ ॥ अनघाय विरिंचाय देव्याः कार्यार्थदायिने ॥ अकायायार्थकायाय हरेः कायापहारिणे ॥ ८ ॥

यथा स्यात्तथा यज्ञदानाद्यैः महेश्वरादीन् समभ्यर्च्य लब्धा ईप्सितवराः यैस्ते लब्धेप्सितवराः यतस्ततोऽस्माकं सदा अविजयस्य पराभवस्य संभव इति तृतीयेनान्वयः॥३–५॥ ततः पूर्वोक्तकारणात्तेषामसुरादीनां विघ्नाद्यर्थं विघ्नेशं गणपं स्रष्टुं शंकरं स्तोतुमर्हथेत्यग्रिमेणान्वयः ॥ ६ ॥ स्तुतिं कथयति—नम इत्यादिना । सर्वमात्मा देहो यस्य स सर्वात्मा तस्मै तुभ्यं नम इत्यस्य सर्वत्रान्वयः ॥ ७ ॥ विशेषेण रचयति ब्रह्मांडान्युत्पादयतीति विरिंचस्तस्मै देव्याः हैमवत्याः कार्यार्थं स्वात्मप्राप्तिरूपतपःफलं ददाति तच्छीलः कार्यार्थदायी नास्ति कायो वस्तुतः स्वरूपं यस्य सोऽकायः अर्थाय प्रयोजनार्थं कायो विग्रहो यस्य सोर्थकायः हरेर्विष्णोरपि कायमपहरति तच्छीलः कायापहारी ॥ ८ ॥

कायांतःस्थं देहस्थं यदमृताधारमंडलं तस्मिन्नवस्थितो विद्यमान इत्यर्थः । कृतादिभेदाः कालाः यस्मात्स कृतादिभेदकालः । कालः वेगो यस्य स कालवेगः ॥ ९ ॥ धर्मादीनां यमादिदिक्पालानामष्टपदान्यष्टस्थानानि यस्मात्स धर्माद्यष्टपदः काली महाकाली विशुद्धदेहा गौरदेहा यस्मात्स कालीविशुद्धदेहः । इयं कथा पद्मपुराणे विस्तृता । कालिकायाः चंडिकायाः कारण उत्पादक इत्यर्थः ॥ १० ॥ मुखमिव प्रधानत्वात् मुख्यः वाह्यते कर्मफलं प्राप्यतेऽनेनेति वाहनः वरः सर्वश्रेष्ठ इत्यर्थः ॥ ११ ॥ शृणाति जगद्धिनस्तीति शर्वः ॥ १२ ॥ हेमवत्सुवर्णवच्छुक्लः शुद्ध इत्यर्थः । पीतश्चासौ शुक्लश्च पीतशुक्लः अर्धनारीरूपत्वादुभयवर्णः सुराणां रक्षार्थं कृष्णवर्त्मने वह्निरूपायेत्यर्थः ॥ १३ ॥ पंचमस्तुरीयातीतः महापंचयज्ञाः देवयज्ञादयः संति येषां ते महापंचयज्ञिनस्तेषां फलं ददातीति फलदः पंचास्यश्चासौ फणिहारश्च पंचास्यफणिहारः यद्वा पंचास्यफणिः हारो यस्य स पंचास्यफणिहारः पंचाक्षरमयः पंचाक्षरमंत्रप्रचुर इत्यर्थः ॥ १४ ॥ पंचधा पंचप्रकारेण पंचकैवल्यदेवैः रुद्रादिभिरर्चिता पूजिता मूर्तिर्यस्य सोर्चितमूर्तिः पंचाक्षरेण

**कायांतस्थांमृताधारमंडलावस्थिताय ते ॥ कृतादिभेदकालाय कालवेगाय ते नमः ॥ ९ ॥ कालाग्निरुद्ररूपाय धर्माद्यष्टपदाय च ॥ कालीविशुद्धदेहाय कालिकाकारणाय ते ॥ १० ॥ कालकंठाय मुख्याय वाहनाय वराय ते ॥ अंबिकापतये तुभ्यं हिरण्यपतये नमः ॥ ११ ॥ हिरण्यरेतसे चैव नमः शर्वाय शूलिने ॥ कपालदंडपाशासिचर्मांकुशधराय च ॥१२॥ पतये हैमवत्याश्च हेमशुक्लाय ते नमः ॥ पीतशुक्लाय रक्षार्थं सुराणां कृष्णवर्त्मने ॥ १३ ॥ पंचमाय महापंचयज्ञिनां फलदाय च ॥ पंचास्यफणिहाराय पंचाक्षरमयाय ते ॥ १४ ॥ पंचधा पंचकैवल्यदेवैरर्चितमूर्तये ॥ पंचाक्षरदृशे तुभ्यं परात्परतराय ते ॥ १५ ॥ षोडशस्वरवज्रांगवक्त्रायाक्षयरूपिणे ॥ कादिपंचकहस्ताय चादिहस्ताय ते नमः ॥ १६ ॥ टादिपादाय रुद्राय तादिपादाय ते नमः ॥ पादिमेंढ्राय यद्यंगधातुसप्तकधारिणे ॥ १७ ॥**

तत्संज्ञकमंत्रेण पश्यति इति पंचाक्षरदृक् । यद्वा पंच च ते अक्षराश्च पंचाक्षराः पंचायतनदेवाः दृशो यस्य स पंचाक्षरदृक् परादिंद्रियादिसमुदायात्परौ जीवेशौ तयोः श्रेष्ठः परात्परतर इत्यर्थः ॥ १५ ॥ देवाः वर्णात्मकस्वरूपं वर्णयंति—षोडशेत्यादिना । वज्रवदातिदीप्ताभेद्यान्यंगानि येषां ते वज्रांगाः षोडश तत्संख्याकाश्च स्वरा अकाराद्याः षोडशस्वराश्च ते वज्रांगाः वक्त्रं मुखं यस्य स षोडशस्वरवज्रांगवक्त्रस्तस्मै । तदुक्तं सप्तदशेऽध्याये—"अकारस्तस्य मूर्धा तु ललाटं दीर्घ उच्यते ॥ इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ॥ उकारो दक्षिणं श्रोत्रमूकारो वाम उच्यते ॥ ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ॥ वामं कपोलं ॠकारो लृलॄ नासापुटे उभौ ॥ एकार ओष्ठ ऊर्ध्वश्च ऐकारस्त्वधरो विभोः ॥ ओकारश्च तथौकारो दंतपंक्तिद्वयं क्रमात् ॥ अमश्च तालुनी तस्य देवदेवस्य धीमतः" ॥ इति ॥ १६ ॥ यद्यकारः अंगसंबंधिधातुसप्तकं तद्धरति तच्छीलो यद्यंगधातुसप्तकधारी ॥ १७ ॥

सकारः अंते येषा ते सांताः शषसवर्णाः आत्मरूपं यस्यास्तीति सांतात्मरूपी क्षत् क्षकारः अंतः प्रलयरूपः क्रोधोस्ति यस्य स क्षदंतक्रोधी लवरेफहळरूपाः पंच अंगानि हृदयादीनि यस्य स लवरेफहळांगस्तस्मै निर्गतान्यंगानि सर्वशरीराणि यस्मात्स निरंग इत्यर्थः॥१८॥ सर्वेषां भूतानां हृदि निःस्वनमनाहतध्वनिं करोति तच्छीलः निःस्वनकारी भ्रुवोरंते मध्य इत्यर्थः । अत्यंतश्चासौ भानुरत्यन्तभानुः सर्वप्रकाशकः ॥ १९ ॥ परमात्मस्वमात्मज्ञानं रूपयाति प्रशंसतीति परमात्मस्वरूपी तीर्थं संसारतरणोपायः पादो यस्य स तीर्थपादः । "तीर्थं शास्त्राध्वरे क्षेत्रोपायोपाध्यायमंत्रिषु" इति विश्वः ॥ २० ॥ सारस्तीर्थफलभूतः तस्मात्फलादपि परस्तदधीश इत्यर्थः ॥ २१ ॥ त्रिविधं ब्रह्मविष्णु

शांतात्मरूपिणे साक्षात्क्षदंतक्रोधिने नमः ॥ लवरेफहळांगाय निरंगाय च ते नमः ॥ १८ ॥ सर्वेषामेव भूतानां हृदि निःस्वमकारिणे ॥ भ्रुवोरंते सदा सद्भिर्दृष्टायात्यंतभानवे ॥१९॥ भानुसोमाग्निनेत्राय परमात्मस्वरूपिणे ॥ गुणत्रयोपरिस्थाय तीर्थपादाय ते नमः ॥ २०॥ तीर्थतत्त्वाय साराय तस्मादपि पराय ते ॥ ऋग्यजुःसामवेदाय ओंकाराय नमोनमः ॥२१॥ ओंकारे त्रिविधं रूपमास्थायोपरिवासिने ॥ पीताय कृष्णवर्णाय रक्तायात्यंततेजसे ॥ २२ ॥ स्थानपंचकसंस्थाय पंचधांडबहिः क्रमात् ॥ ब्रह्मणे विष्णवे तुभ्यं कुमाराय नमोनमः ॥२३॥ अंबायाः परमेशाय सर्वोपरिचाराय ते ॥ मूलसूक्ष्मस्वरूपाय स्थूलसूक्ष्माय ते नमः ॥२४ ॥ सर्वसंकल्पशून्याय सर्वस्माद्रक्षिताय ते ॥ आदिमध्यांतशून्याय चित्संस्थाय नमोनमः ॥ २५ ॥ यमाग्निवायुरुद्रांबुसोमशक्रनिशाचरैः॥ दिङ्मुखेदिङ्मुखे नित्यं सगणैः पूजिताय ते॥२६॥ सर्वेषु सर्वदा सर्वमार्गे संपूजिताय ते ॥ रुद्राय रुद्रनीलाय कद्रुद्राय प्रचेतसे ॥ महेश्वराय धीराय नमः साक्षाच्छिवाय ते ॥ २७ ॥ अथ शृणु भगवन् स्तवच्छलेन कथितमजेंद्रमुखैः सुरासुरेशैः ॥ मखमदनयमाग्निदक्षयज्ञक्षपणविचित्रविचेष्टितं क्षमस्व॥ २८ ॥

द्रात्मकमित्यर्थः । उपरि प्रणवांननादे वसति तुरीयरूपेण तिष्ठति तच्छील उपरिवासी ॥ २२ ॥ अंडस्य ब्रह्मांडस्य वहिः क्रमादावरणरूपेण पंचधा पंचप्रकारेण स्थानपंचके जलादौ संतिष्ठतीति स्थानपंचकसंस्थः ॥ २३ ॥ मूलं सर्वकारणं सूक्ष्मस्वरूपं यस्य स मूलसूक्ष्मस्वरूपः ॥ २४ ॥ सर्वस्माद्विश्वस्माद्रक्षितो गुप्त इत्यर्थः ॥ २५ ॥ अंबु वरुणः सोमश्चंद्रोप्युत्तरादिक्पालस्तैत्तिरीयतर्पणे उक्तः ॥ २६ ॥ २७ ॥ स्तवांते प्रार्थयंति–अथेति । भगवन् शंभो तव विचित्रविचेष्टितमजेन्द्रमुखैः सुरासुरेशैः छलेन स्तुतिमिषेण कथितं क्षमस्वेत्यनेन अस्माकमपि साकल्येनाज्ञानात् स्तवासमर्थत्वं सूचितम् ॥ २८ ॥

सूतः स्तवफलं कथयति—य इति । परमां गतिं मुक्तिमित्यर्थः ॥ २९ ॥ ब्रह्मादिभिर्देवैस्त्वत्स्तुतविघ्नेशकांक्षिभिः शंभो ॥ कथितः स्तवराजोयं त्वत्सेवायामविघ्नदः स्यान्मे ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ पंचाधिकशताध्याये गजाननसमुद्भवः ॥ विघ्नेशस्य वरप्राप्तिः शंकराच्च निरूप्यते ॥ सूतो गजाननोत्पत्तिं कथयति—यदेत्यादिना । यदास्थिता इत्यादिपद्यानि प्रमाणीसंज्ञानि । तदुक्तं छंदसि 'लानिप्रमाणी' इति ॥ १ ॥ निरीक्षणं दिव्यचक्षुरित्यर्थः ॥ २ ॥३॥ महेश्वरप्रसादानंतरं सुरेप्सितं बृहस्पतिर्निवेदयति—वरार्थमित्यादिना । पतिं पालकं शिवं निरीक्ष्य निर्भयो वाक्पतिर्गुरुः प्रणम्य ईश इमे सुराः वरार्थे ते गृहं गताः

सूत उवाच ॥ यः पठेत्तु स्तवं भक्त्या शक्राग्निप्रमुखैः सुरैः ॥ कीर्तितं श्रावयेद्विद्वान् स याति परमां गतिम् ॥ २९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे देवस्तुतिर्नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ सूत उवाच ॥ यदा स्थिताः सुरेश्वराः प्रणम्य चैवमीश्वरम् ॥ तदांबिकापतिर्भवः पिनाकधृङ् महेश्वरः ॥ १ ॥ ददौ निरीक्षणं क्षणाद्भवः स तान्सुरोत्तमान् ॥ प्रणेमुरादराद्धरं सुरा मुदार्द्रलोचनाः॥२॥ भवः सुधामृतोपमैर्निरीक्षणैर्निरीक्षणात् ॥ तदाह भद्रमस्तु वः सुरेश्वरान् महेश्वरः॥३॥वरार्थमीश वीक्ष्यते सुरा गृहं गतास्त्विमे ॥ प्रणम्य चाह वाक्पतिः पतिं निरीक्ष्य निर्भयः ॥ ४॥ सुरेतरादिभिः सदा ह्यविघ्नमर्थितो भवान् ॥ समस्तकर्मसिद्धये सुरापकारकारिभिः ॥५॥ ततः प्रसीदताद्भवान् सुविघ्नकर्मकारणम् ॥ सुरापकारकारिणामिहैष एव नो वरः ॥ ६॥ ततस्तदा निशम्य वै पिनाकधृक् सुरेश्वरः ॥ गणेश्वरं सुरेश्वरं वपुर्दधार सः शिवः ॥७॥ गणेश्वराश्च तुष्टुवुः सुरेश्वरा महेश्वरम् ॥ समस्तलोकसंभवं भवार्तिहारिणं शुभम् ॥ ८॥ इभाननाश्रितं वरं त्रिशूलपाशधारिणम् ॥ समस्तलोकसंभवं गजाननं तदांबिका॥९॥ ददुः पुष्पवर्षं हि सिद्धा मुनींद्रास्तथा खेचरा देवसंघास्तदानीम् ॥ तदा तुष्टुवुश्चैकदंतं सुरेशाः प्रणेमुर्गणेशं महेशं वितंद्राः ॥ १० ॥ तदा तयोर्विनिर्गतः सुभैरवः समूर्त्तिमान् ॥ स्थितो ननर्त्त बालकः समस्तमंगलालयः ॥ ११ ॥

प्राप्ताः इत्यर्थः ॥ ४ ॥ सुरापकारकारिभिः सुरेतरादिभिर्दैत्यादिभिः समस्तकर्मसिद्धये भवानविघ्नमर्थितः सदा प्रसीदतीति शेषः ॥ ५ ॥ ततः पूर्वोक्तकारणात्सुरापकारकारिणां दैत्यादीनां सुतरां विघ्नकर्मकारिणं सुविघ्नकर्मकारणं यथा स्यात्तथा भवान्प्रसीदतात् इह नः एष एव वरोस्त्विति शेषः ॥ ६ ॥ ततो गुरुप्रार्थनात्स शिवो निशम्य सुरेप्सितं श्रुत्वा सुरेश्वरं गणेश्वरं वपुर्दधार उमागर्भे स्वीकृतवानित्यर्थः ॥ ७ ॥ भवार्तिहारिणं शुभं गजाननरूपिणं महेश्वरं गणेश्वराः शैलादिमुखाः सुरेश्वरा ब्रह्मादयस्तुष्टुवुरित्यन्वयः ॥ ८ ॥ अंबिका तदा वरं शिवम् इभाननेन गजाननेन गजाननरूपेणाश्रितं त्रिशूलपाशधारिणं गजाननं सुषुवे इति शेषः ॥९॥ जन्मोत्सवं कथयति—ददुरिति ॥१० ॥११॥

तदा तस्मिन्नेव काले तयोः शिवयोर्विनिर्गत उत्पन्नः स बालको मूर्तिमान् सुभैरवः शिव इव स्थितो गजाननः तातमंबिकामभिवंद्य समस्तमंगलालयो ननर्त इत्यग्रिमेणान्वयः ॥ १२ ॥ कृत्यान्कर्त्तव्यान् जातकर्मादिसुतसंस्कारान्भवः स्वयं चकार कृतवानित्यर्थः ॥ १३ ॥१४ ॥ गजाननाय शिववरान् कथयति—तवावतारेत्यादिना ॥ १५ ॥ १६ ॥ ॥ १७ ॥ वर्णाच्च्युतानां पतितानामित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ मां नारायणं ब्रह्माणं वापि यजंति पूजयंति वा यज्ञैरग्निष्टोमादिभिर्यजंति तैरपि विप्रैरग्रे प्रथमं

विचित्रवस्त्रभूषणैरलंकृतो गजाननो महेश्वरस्य पुत्रकोऽभिवंद्य तातमंबिकाम् ॥ १२ ॥ जातमात्रं सुतं दृष्ट्वा चकार भगवान्भवः ॥ गजाननाय कृत्यांस्तु सर्वान्सर्वेश्वरः स्वयम् ॥ १३॥ आदाय च कराभ्यां च सुसुखाभ्यां भवः स्वयम् ॥ आलिंग्याघ्राय मूर्धानं महादेवो जगद्गुरुः ॥ १४ ॥ तवावतारो दैत्यानां विनाशाय ममात्मज ॥ देवानामुपकारार्थं द्विजानां ब्रह्मवादिनाम् ॥ १५ ॥ यज्ञश्च दक्षिणाहीनः कृतो येन महीतले ॥ तस्य धर्मस्य विघ्नं च कुरु स्वर्गपथे स्थितः ॥१६॥ अध्यापनं चाध्ययनं व्याख्यानं कर्म एव च । योऽन्यायतः करोत्यस्मिन् तस्य प्राणान्सदा हर ॥ १७ ॥ वर्णाच्च्युतानां नारीणां नराणां नरपुंगव ॥ स्वधर्मरहितानां च प्राणानपहर प्रभो ॥१८॥ याः स्त्रियस्त्वां सदा कालं पुरुषाश्च विनायक ॥ यजंति तासां तेषां च त्वत्साम्यं दातुमर्हसि॥१९॥ त्वं भक्तान् सर्वयत्नेन रक्ष बालगणेश्वर ॥ यौवनस्थांश्च वृद्धांश्च इहामुत्र च पूजितः ॥ २० ॥ जगत्त्रयेऽत्र सर्वत्र त्वं हि विघ्नगणेश्वरः॥ संपूज्यो वंदनीयश्च भविष्यसि न संशयः ॥ २१ ॥ मां च नारायणं वापि ब्रह्माणमपि पुत्रक ॥ यजंति यज्ञैर्वा विप्रैरग्रे पूज्यो भविष्यसि ॥२२॥ त्वामनभ्यर्च्य कल्याणं श्रौतं स्मार्तं च लौकिकम् ॥ कुरुते तस्य कल्याणमकल्याणं भविष्याति ॥ २३ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैव गजानन ॥ संपूज्य सर्वसिद्ध्यर्थं भक्ष्यभोज्यादिभिः शुभैः ॥ २४ ॥ त्वां गंधपुष्पधूपाद्यैरनभ्यर्च्य जगत्त्रये ॥ देवैरपि तथान्यैश्च लब्धव्यं नास्ति कुत्रचित् ॥ २५ ॥ अभ्यर्चयंति ये लोका मानवास्तु विनायकम् ॥ ते चार्चनीयाः शक्राद्यैर्भविष्यंति न संशयः ॥२६॥ अजं हरिं च मां वापि शक्रमन्यान्सुरानपि ॥ विघ्नैर्बाधयसि त्वां चेन्नार्चयंति फलार्थिनः ॥ २७ ॥ ससर्ज च तदा विघ्नगणं गणपतिः प्रभुः ॥ गणैः सार्धं नमस्कृत्वाप्यतिष्ठत्तस्य चाग्रतः ॥२८॥ तदा प्रभृति लोकेऽस्मिन्पूजयंति गणेश्वरम् ॥ दैत्यानां धर्मविघ्नं च चकारासौ गणेश्वरः ॥ २९ ॥

पूज्यो भविष्यसीत्यनेन विघ्ननिवारकत्वं कथितम् ॥ २२ ॥ अपूजने विघ्नोत्पादकत्वं कथयति—त्वामनभ्यर्च्येति ॥ २३ ॥ सर्वपूज्यत्वं कथयति—ब्राह्मणैरित्यादिना ॥ २४ ॥ ॥ २५ ॥ पूजाफलं कथयति—अभ्यर्चयंतीति ॥ २६ ॥ अजादीनपि फलार्थिनः त्वां नार्चयंति तान् विघ्नैर्बाधयमीत्यनेन विघ्नविषये प्रतिहताज्ञत्वमुक्तम् ॥ २७ ॥ तदा वर लाभकाल इत्यर्थः । नमस्कृत्वेत्यत्र ल्यबभाव आर्षः ॥ २८ ॥ तदाप्रभृति शिववरदानमारभ्येत्यर्थः ॥ २९ ॥

सूत अध्यायफलं कथयति—एतदिति ॥ ३० ॥ पुत्रेण लोकान् जयतीति वेदं स्वस्मिन्यथार्थं भगवांश्चिकीर्षुः ॥ सर्वाग्रपूज्यं हि सुतं विधाय रराज सांवस्तमहं प्रपन्नः ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ षष्ठाधिकशताध्याये नृत्यारंभप्रसंगतः ॥ काल्याः समुद्भवश्चैव क्षेत्रपालस्य कीर्त्यते ॥ ऋषयः शंभोर्नृत्यकारणमपृच्छन्—नृत्येति । शंभोः शिवस्य किमर्थं वा कथं वा केन रूपेण नृत्यारंभः यथातथमस्माकं वक्तुमर्हसीत्यन्वयः ॥१॥ दारुकस्तत्संज्ञः असुरेषु दैत्येषु

एतद्वः कथितं सर्वं स्कंदाग्रजसमुद्भवम् ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा सुखीभवेत् ॥ ३० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे विनायकोत्पत्तिर्नाम पंचाधिकशततमोऽध्यायः ॥१०५॥ ऋषय ऊचुः ॥ नृत्यारंभः कथं शंभोः किमर्थं वा यथातथम् ॥ वक्तुमर्हसि चास्माकं श्रुतः स्कंदाग्रजोद्भवः ॥ १ ॥ सूत उवाच ॥ दारुकोऽसुरसंभूतस्तपसा लब्धविक्रमः ॥ सूदयामास कालाग्निरिव देवान्द्विजोत्तमान् ॥२॥ दारुकेण तदा देवास्ताडिताः पीडिता भृशम् ॥ ब्रह्माणं च तथेशानं कुमारं विष्णुमेव च ॥३॥ यममिंद्रमनुप्राप्य स्त्रीवध्य इति चासुरः ॥ स्त्रीरूपधारिभिः स्तुत्यैर्ब्रह्माद्यैर्युधि संस्थितैः ॥४ ॥ बाधितास्तेन ते सर्वे ब्रह्माणं प्राप्य वै द्विजाः ॥ विज्ञाप्य तस्मै तत्सर्वं तेन सार्धमुमापतिम् ॥ ५ ॥ संप्राप्य तुष्टुवुः सर्वे पितामहपुरोगमाः ॥ ब्रह्मा प्राप्य च देवेशं प्रणम्य बहुधानतः ॥ ६ ॥ दारुणो भगवन्दारुः पूर्वं तेन विनिर्जिताः ॥ निहत्य दारुकं दैत्यं स्त्रीवध्यं त्रातुमर्हसि ॥ ७ ॥ विज्ञप्तिं ब्रह्मणः श्रुत्वा भगवान् भगनेत्रहा ॥ देवीमुवाच देवेशो गिरिजां प्रहसन्निव ॥ ८ ॥ भवतीं प्रार्थयाम्यद्य हिताय जगतां शुभे ॥ वधार्थं दारुकस्यास्य स्त्रीवध्यस्य वरानने ॥ ९ ॥ अथ सा तस्य वचनं निशम्य जगतोरणिः ॥ विवेश देहे देवस्य देवेशी जन्मतत्परा ॥ १० ॥ एकेनांशेन देवेशं प्रविष्टा देवसत्तमम् ॥ न विवेद तदा ब्रह्मा देवाश्चेंद्रपुरोगमाः ॥ ११ ॥ गिरिजां पूर्ववच्छंभोर्दृष्ट्वा पार्श्वस्थितां शुभाम् ॥ मायया मोहितस्तस्याः सर्वज्ञोपि चतुर्मुखः ॥ १२॥ सा प्रविष्टा तनुं तस्य देवदेवस्य पार्वती ॥ कंठस्थेन विषेणास्य तनुं चक्रे तदात्मनः ॥ १३ ॥ तां च ज्ञात्वा तथाभूतां तृतीयेनेक्षणेन वै ॥ ससर्ज कालीं कामारिः कालकंठीं कपर्दिनीम् ॥ १४ ॥

संभूतोऽसुरसंभूत इत्यर्थः ॥ २ ॥ तदा तस्मिन्काले दारुकेण ब्रह्मादीननुप्राप्य देवास्ताडिताः अत एव भृशं पीडिता आसन्निति शेषः ॥ ३ ॥ स्त्रीवध्य इति हेतोः ब्रह्माद्यैरयमतद्गुणसंविज्ञानो बहुव्रीहिः । स्तुत्यैर्ब्रह्मान्यदेवैः स्त्रीवेषधारिभिर्युधि असुरः दारुकः अयुध्यत इति शेषः ॥ ४ ॥ ते स्त्रीरूपधारिणोपीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९॥ ॥१०॥११॥ एकेनांशेन स्वकीयषोडशभागेनेत्यर्थः ॥१२॥१३॥ तां पार्वतीं तथाभूतां विषभूतामित्यर्थः । तृतीयेनेक्षणेन भालस्थवह्निरूपेणेत्यर्थः ॥ १४ ॥

कालिम्ना विषेण कालः कृष्णवर्णः कंठो यस्याः सा कालिमकालकंठी ॥ १५ ॥ गरेण विषेणालंकृतः कालः कृष्णः कंठो यस्याः सा गरालंकृतकालकंठी ॥१६॥ तथैव शिव सदृशमेवेत्यर्थः । कंठे करालं विषं निशितं तीक्ष्णं त्रिशूलं करे हस्ते करालं खड्गं विभूषणानि सर्पहारकुंडलादीनीत्यर्थः ॥ १७ ॥ सार्धं काल्या सह दिव्यांबरा देव्यः सिद्धेंद्राश्च सिद्धाश्च सिद्धेंद्रसिद्धाः तथा पुनः पिशाचाश्च जज्ञिरे बभूवुरित्यर्थः ॥ १८ ॥ १९ ॥ तस्याः काल्याः संरंभातिप्रसंगाद्वेगातिशयादित्यर्थः ॥२०॥ भवः शिवोपि मायया बालरूपेण तस्याः काल्याः क्रोधाग्निं पातुं श्मशाने काश्यां रुरोदेत्यन्वयः ॥ २१ ॥ २२ ॥ स्तनजेन सार्द्धं दुग्धेन सहास्याः काल्याः कोपं पपौ अनेन पीतकोपत्वेनेत्यर्थः ॥ २३॥

जाता यदा कालिमकालकंठी जाता तदानीं विपुला जयश्रीः ॥ देवेतराणामजयस्त्वसिद्ध्या तुष्टिर्भवान्याः परमेश्वरस्य ॥ १५ ॥ जातां तदानीं सुरसिद्धसंघा दृष्ट्वा भयाद्दुद्रुवुरग्निकल्पाम् ॥ कालीं गरालंकृतकालकंठीमुपेंद्रपद्मोद्भवशक्रमुख्याः ॥ १६ ॥ तथैव-जातं नयनं ललाटे सितांशुलेखा च शिरस्युदग्रा ॥ कंठे करालं निशितं त्रिशूलं करे करालं च विभूषणानि॥ १७ ॥ सार्धं दिव्यांबरा देव्याः सर्वाभरणभूषिताः ॥ सिद्धेंद्रसिद्धाश्च तथा पिशाचा जज्ञिरे पुनः॥१८॥ आज्ञया दारुकं तस्याः पार्वत्याः परमेश्वरी ॥ दानवं सूदयामास सूदयन्तं सुराधिपान् ॥ १९ ॥ संरंभातिप्रसंगाद्वै तस्याः सर्वमिदं जगत् ॥ क्रोधाग्निना च विप्रेंद्राः संबभूव तदातुरम् ॥ २० ॥ भवोपि बालरूपेण श्मशाने प्रेतसंकुले ॥ रुरोद मायया तस्याः क्रोधाग्निं पातुमीश्वरः ॥ २१ ॥ तं दृष्ट्वा बालमीशानं मायया तस्य मोहिता ॥ उत्थाप्याघ्राय वक्षोजं स्तनं सा प्रददौ द्विजाः ॥२२॥ स्तनजेन तदा सार्धं कोपमस्याः पपौ पुनः ॥ क्रोधेनानेन वै बालः क्षेत्राणां रक्षकोऽभवत् ॥२३॥ मूर्तयोऽष्टौ च तस्यापि क्षेत्रपालस्य धीमतः॥एवं वै तेन बालेन कृता सा क्रोधमूर्च्छिता॥२४॥ कृतमस्याः प्रसादार्थं देवदेवेन तांडवम् ॥ संध्यायां सर्वभूतेन्द्रैः प्रेतैः प्रीतेन शूलिना ॥२५॥ पीत्वा नृत्तामृतं शंभोराकंठं परमेश्वरी ॥ ननर्त सा च योगिन्यः प्रेतस्थाने यथासुखम् ॥ २६ ॥ तत्र सब्रह्मका देवाः सेंद्रोपेंद्राः समंततः॥ प्रणेमुस्तुष्टुवुः कालीं पुनर्देवीं च पार्वतीम् ॥२७॥ एवं संक्षेपतः प्रोक्तं तांडवं शूलिनः प्रभोः॥ योगानंदेन च विभोस्तांडवं चेति चापरे ॥२८॥ इति श्रीलिंग॰पूर्व॰ शिवतांडवकथनं नाम षडधिकशततमोऽध्यायः॥ १०६ ॥

क्षेत्रपालस्य भैरवस्याप्यष्टौ मूर्त्तयः अभवन्निति शेषः । तास्तु काश्यां प्रसिद्धाः एवं पूर्वोक्तप्रकारेण तेन बालेन सा काली क्रोधः मूर्च्छितो नष्टसंज्ञो यस्याः सा क्रोधमूर्च्छिता कृतेत्यन्वयः ॥ २४ ॥ ऋषिपृष्टं नृत्यारंभं सकारणं कथयति–कृतमिति ॥२५॥२६॥२७॥ अपरे सनकादयः योगानंदेनापि विभोः शिवस्य तांडवमाहुरिति शेषः॥ २८ ॥ यो दारुकासुरविमर्दितसर्वदेवैः संप्रार्थितः पशुपतिर्हिमराजपुत्रीम् ॥ संप्रार्थ्य वह्निनयनाऽजनयन्सुगणां कालीं जयं ब्रुद्वहत्स जये ममास्तु ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां शिवतांडवकथनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

सप्ताधिकशताध्याये भक्त्या प्रीतान्महेश्वरात् ॥ प्रसाद उपमन्यो वै शाश्वतः समुदीर्यते ॥ ऋषय उपमन्युवृत्तमपृच्छन्–पुरेति ॥ १ ॥ एवं पूर्वोक्तप्रकारेण कालीमुपालभ्य उत्पाद्येत्यर्थः ॥ २ ॥ कुमार इव स्कंदसदृश इत्यर्थः ॥ ३ ॥ ईर्ष्यया भागिनेयमत्सरेण ॥ ४ ॥ मातर्मातरियमादराद्विरुक्तिः अहं नमामि गव्यमतिस्वादु क्षीरं नाल्पमुष्णं

ऋषय ऊचुः ॥ पुरोपमन्युना सूत गाणपत्यं महेश्वरात् ॥ क्षीरार्णवः कथं लब्धो वक्तुमर्हसि सांप्रतम् ॥ १ ॥ सूत उवाच ॥ एवं कालीमुपालभ्य गते देवे त्रियंबके ॥ उपमन्युः समभ्यर्च्य तपसा लब्धवान्फलम् ॥ २ ॥ उपमन्युरिति ख्यातो मुनिश्च द्विजसत्तमाः ॥ कुमार इव तेजस्वी क्रीडमानो यदृच्छया ॥ ३ ॥ कदाचित्क्षीरमल्पं च पीतवान्मातुलाश्रमे ॥ ईर्ष्यया मातुलसुतो ह्यपिबत क्षीरमुत्तमम् ॥ ४ ॥ पीत्वा स्थितं यथाकामं दृष्ट्वा प्रोवाच मातरम् ॥ मातर्मातर्महाभागे मम देहि तपस्विनि ॥ ५ ॥ गव्यं क्षीरमतिस्वादु नाल्पमुष्णं नमाम्यहम् ॥ सूत उवाच ॥ उपलालितैवं पुत्रेण पुत्रमालिंग्य सादरम् ॥ ६ ॥ दुःखिता विललापार्ता स्मृत्वा नैर्धन्यमात्मनः ॥ स्मृत्वास्मृत्वा पुनः क्षीरमुपमन्युरपि द्विजाः ॥ देहिदेहीति तामाह रोदमानो महाद्युतिः ॥७॥ उंछवृत्त्यार्जितान्बीजान्स्वयं पिष्ट्वा च सा तदा ॥ बीजपिष्टं तदालोड्य तोयेन कलभाषिणी ॥ ८ ॥ एह्येहि मम पुत्रेति सामपूर्वं ततः सुतम् ॥ आलिंग्यादाय दुःखार्ता प्रददौ कृत्रिमं पयः ॥ ९ ॥ पीत्वा च कृत्रिमं क्षीरं मात्रा दत्तं द्विजोत्तमः ॥ नैतत्क्षीरमिति प्राह मातरं चातिविह्वलः ॥ १० ॥ दुःखिता सा तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि ॥ संमार्ज्य नेत्रे पुत्रस्य कराभ्यां कमलायते ॥ ११ ॥ तटिनी रत्नपूर्णास्ते स्वर्गपातालगोचराः ॥ भाग्यहीना न पश्यंति भक्तिहीनाश्च ये शिवे ॥ १२ ॥ राज्यं स्वर्गं च मोक्षं च भोजनं क्षीरसंभवम् ॥ न लभंते प्रियाण्येषां नो तुष्यति सदा भवः ॥ १३ ॥ भवप्रसादजं सर्वं नान्यदेवप्रसादजम् ॥ अन्यदेवेषु निरता दुःखार्त्ता विभ्रमंति च ॥ १४ ॥ क्षीरं तत्र कुतोऽस्माकं महादेवो न पूजितः ॥ पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुत ॥१५॥ तदेव लभ्यं नान्यत्तु विष्णुमुद्दिश्य वा प्रभुम् ॥ निशम्य वचनं मातुरुपमन्युर्महाद्युतिः ॥१६॥ बालोपि मातरं प्राह प्रणिपत्य तपस्विनीम् ॥ त्यज शोकं महाभागे महादेवोस्ति चेत्क्वचित् ॥ १७ ॥

मम देहीत्यग्रिमस्थैरन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ये शिवे भक्तिहीना अत एव भाग्यहीनास्ते रत्नपूर्णाः स्वर्गपातालगोचराः तटिनीर्नदीरपि न पश्यंतीत्यन्वयः ॥ १२ ॥ येषां सदा भवः शिवो नो तुष्यति ते राज्यादिकं प्रियाणि च न लभंते न प्राप्नुवंतीत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

क्षीरादं दुग्धसमुद्रमित्यर्थः ॥ १८ ॥ तं तप उद्युक्तं सुतं पुत्रं माता सुनगं शुभं कल्याणं यस्मात्तत्सुशुभं शिवाराधनं सुतरामत्यंतं कुर्वित्याहेत्यन्वयः ॥ १९ ॥ विधूपितं तप्त मित्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ क्षीरार्थमयं सार्धश्लोकः ॥ २४ ॥ शिवगमनं द्रुतविलंबितेन कथयाति—अथेति । तदुक्तं छंदसि 'द्रुतविलंबितं न्भौभ्रौ' इति तदुपव र्णितं कालिदासेन "अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा ॥ विरतिजं च तथैव विचक्षणे द्रुतविलंबितमित्युपदिश्यते " इति ॥ २५ ॥ तदागमनकाले

चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥ सूत उवाच ॥ तां प्रणम्यैवमुक्त्वा स तपः कर्तुं प्रचक्रमे ॥ १८ ॥ तमाह माता सुशुभं कुर्वीति सुतरां सुतम् ॥ अनुज्ञातस्तया तत्र तपस्तेपे सुदुस्तरम् ॥ १९ ॥ हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥ तपसा तस्य विप्रस्य विधूपितमभूज्जगत् ॥ २० ॥ प्रणम्याहुस्तु तत्सर्वं हरये देवसत्तमाः ॥ श्रुत्वा तेषां तदा वाक्यं भगवान्पुरुषोत्तमः ॥ २१ ॥ किमिदं त्विति संचिंत्य ज्ञात्वा तत्कारणं च सः ॥ जगाम मंदरं तूर्णं महेश्वरदिदृक्षया ॥ २२ ॥ दृष्ट्वा देवं प्रणम्यैवं प्रोवाचेदं कृतांजलिः ॥ भगवन् ब्राह्मणः कश्चिदुपमन्युरितिश्रुतः ॥ २३ ॥ क्षीरार्थमदहत्सर्वं तपसा तं निवारय ॥ एतस्मिन्नंतरे देवः पिनाकी परमेश्वरः ॥ शक्ररूपं समास्थाय गंतुं चक्रे मतिं तदा ॥ २४ ॥ अथ जगाम मुनेस्तु तपोवनं गजवरेण सितेन सदाशिवः ॥ सह सुरासुरसिद्धमहोरगैरमरराजतनुं स्वयमास्थितः ॥ २५ ॥ सहैव चारुह्य तदा द्विपं तं प्रगृह्य वालव्यजनं विवस्वान् ॥ वामेन शच्या सहितं सुरेन्द्रं करेण चान्येन सितात पत्रम् ॥ २६ ॥ रराज भगवान् सोमः शक्ररूपी सदाशिवः ॥ सितातपत्रेण यथा चंद्रबिंबेन मंदरः ॥ २७ ॥ आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः ॥ जगामानुग्रहं कर्तुमुपमन्योस्तदाश्रमम् ॥ २८ ॥ तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम् ॥ प्रणम्य शिरसा प्राह मुनि र्मुनिवराः स्वयम् ॥ २९ ॥ पावितश्चाश्रमश्चायं मम देवेश्वरः स्वयम् ॥ प्राप्तः शक्रो जगन्नाथो भगवान्भानुना प्रभुः ॥ ३० ॥ एवमुक्त्वा स्थितं वीक्ष्य कृतांजलिपुटं द्विजम् ॥ प्राह गंभीरया वाचा शक्ररूपधरो हरः ॥ ३१ ॥ तुष्टोस्मि ते वरं ब्रूहि तपसानेन सुव्रत ॥ ददामि चेप्सितान्सर्वान्धौम्याग्रज महामते ॥ ३२ ॥ एवमुक्तस्तदा तेन शक्रेण मुनिसत्तमः ॥ वरयामि शिवे भक्तिमित्युवाच कृतांजलिः ॥ ३३ ॥

शच्या सहितं सुरेंद्रं तं शिवं सहैव विवस्वान्सूर्यः द्विपं हस्तिनमारुह्य वामेन वालव्यजनमन्येन करेण सितातपत्रं प्रगृह्य सिषेवे इति शेषः ॥ २६ ॥ २७ ॥ २८ ॥ मुनिवरा इति शौनकादिसंबोधनम् ॥ २९ ॥ ३० ॥ ३१ ॥ धौम्याग्रज धौम्यज्येष्ठभ्रातरित्यर्थः ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ देवदेवस्य रुद्रस्य निर्गुणत्वमल्पत्वं त्वयैव कथितम् इत्येनन सर्वपूज्यस्याल्पत्वं वदत एव मौर्ख्यं सूचितम् ॥ ३९ ॥ नव मौर्ख्य मास्तां तथापि महन्निंदाश्रोतुर्मम पातकमनुमीयत इति कथयति—बहुनात्रेति ॥ ४० ॥ वीरशैवधर्मफले कथयति—श्रुत्वेत्यादिना ॥ ४१ ॥ ४२ ॥ उपमन्युः स्वकर्तव्यं कथयति—आस्तामित्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ भस्माधारात् भस्माश्रयादित्यर्थः ॥ ४६ ॥४७॥ एवं व्यवसिते स्वदेहं दग्धुं निश्चित इत्यर्थः । सौम्येन सोमधारणायोगेन

ततो निशम्य वचनं मुनेः कुपितवत्प्रभुः ॥ प्राह सव्यग्रमीशानः शक्ररूपधरः स्वयम् ॥ ३४ ॥ मां न जानासि देवर्षे देवराजानमीश्वरम् ॥ त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम्॥ ३५॥ मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा ॥ ददामि सर्वं भद्रं ते त्यज रुद्रं च निर्गुणम् ॥३६॥ ततः शक्रस्य वचनं श्रुत्वा श्रोत्रविदारणम् ॥ उपमन्युरिदं प्राह जपन्पंचाक्षरं शुभम् ॥३७॥ मन्ये शक्रस्य रूपेण नूनमत्रागतः स्वयम् ॥ कर्तुं दैत्याधमः कश्चिद्धर्मविघ्नं च नान्यथा ॥ ३८ ॥ त्वयैव कथितं सर्वं भवनिंदारतेन वै ॥ प्रसंगादेवदेवस्य निर्गुणत्वं महात्मनः॥३९॥ बहुनात्र किमुक्तेन मयाद्यानुमितं महत् ॥ भवांतरकृतं पापं श्रुता निंदा भवस्य तु ॥४०॥ श्रुत्वा निंदां भवस्याथ तत्क्षणादेव संत्यजेत्॥ स्वदेहं तं निहत्याशु शिवलोकं स गच्छति ॥४१॥ यो वाचोत्पाटयेज्जिह्वां शिवनिंदारतस्य तु ॥ त्रिः सप्तकुलमुद्धृत्य शिवलोकं स गच्छति ॥ ४२ ॥ आस्तां तावन्ममेच्छायाः क्षीरं प्रति सुराधमम् ॥ निहत्य त्वां शिवास्त्रेण त्यजाम्येतत्कलेवरम् ॥ ४३ ॥ पुरा मात्रा तु कथितं तत्थ्यमेव न संशयः ॥ पूर्वजन्मनि चास्माभिरपूजित इति प्रभुः ॥ ४४ ॥ एवमुक्त्वा तु तं देवमुपमन्युरभीतवत् ॥ शक्रं चक्रे मतिं हंतु मथर्वास्त्रेण मंत्रवित् ॥ ४५ ॥ भस्माधारान्महातेजा भस्ममुष्टिं प्रगृह्य च ॥ अथर्वास्त्रं ततस्तस्मै ससर्ज च ननाद च ॥४६॥ दग्धुं स्वदेहमाग्नेयीं ध्यात्वा वै धारणां तदा ॥ अतिष्ठच्च महातेजाः शुष्केंधनमिवाव्ययः ॥ ४७ ॥ एवं व्यवसिते विप्रे भगवान्भगनेत्रहा ॥ वारयामास सौम्येन धारणां तस्य योगिनः॥४८॥ अथर्वास्त्रं तदा तस्य संहृतं चंद्रिकेण तु ॥ कालाग्निसदृशं चेदं नियोगान्नंदिनस्तथा ॥४९ ॥ स्वरूपमेव भगवानास्थाय परमेश्वरः ॥ दर्शयामास विप्राय बालेंदुकृतशेखरम् ॥ ५० ॥

तस्योपमन्योर्धारणामाग्नेयीं भगवान्वारयामासेत्यन्वयः ॥ ४८ ॥ तदा कालाग्निसदृशमथर्वास्त्रं नंदिनः शैलादेर्नियोगाच्चंद्रिकेण तत्संज्ञकगणेन संहृतमित्यन्वयः ॥४९॥ प्रसादं कथयति—स्वरूपमित्यादिना ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ शिवप्रसादोत्तरं गौरीप्रसादमाह—देवीति ॥ ६० ॥ ६१ ॥ विरजेषु सात्विकेष्वेव ईक्षणं दृष्टिर्यस्य तम् ॥ ६२ ॥ ६३ ॥ ईप्सितं प्रार्थितमित्यर्थः ॥ ६४ ॥ नादत्तमुपतिष्ठति ह्येष विधिर्वै न हि स्वभक्तेषु ॥ उपमन्योरिति हेतोः क्षीरोदादीन् ददद्धरः पायात् ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ अष्टाधिकशताध्याये श्रीकृष्णस्योपमन्युतः ॥ शैवदीक्षादिकथितं दानं चोपस्क

क्षीरधारासहस्रं च क्षीरोदार्णवमेव च ॥ दध्यादेरर्णवं चैव घृतोदार्णवमेव च ॥ ५१ ॥ फलार्णवं च बालस्य भक्ष्यभोज्यार्णवं तथा ॥ अपूपगिरयश्चैव तथातिष्ठन् समंततः ॥ ५२ ॥ उपमन्युमुवाच सस्मितो भगवान्बंधुजनैः समावृतम् ॥ गिरिजामवलोक्य सस्मितां सघृणं प्रेक्ष्य तु तं तदा घृणी ॥ ५३ ॥ भुंक्ष्व भोगान्यथाकामं बांधवैः पश्य वत्स मे ॥ उपमन्यो महाभाग तवांबैषा हि पार्वती ॥ ५४ ॥ मया पुत्री कृतोस्यद्य दत्तः क्षीरोदधिस्तथा ॥ मधुनश्चार्णवश्चैव दध्नश्चार्णव एव च ॥ ५५ ॥ आज्योदनार्णवश्चैव फललेह्यार्णवस्तथा ॥ अपूपगिरयश्चैव भक्ष्यभोज्यार्णवः पुनः ॥ ५६ ॥ पिता तव महादेवः पिता वै जगतां मुने ॥ माता तव महाभागा जगन्माता न संशयः॥ ५७ ॥ अमरत्वं मया दत्तं गाणपत्यं च शाश्वतम् ॥ वरान्वरय दास्यामि नात्र कार्या विचारणा ॥ ५८ ॥ एवमुक्त्वा महादेवः कराभ्यामुपगृह्य तम् ॥ आघ्राय मूर्धनि विभुर्ददौ देव्यास्तदा भवः ॥ ५९ ॥ देवी तनयमालोक्य ददौ तस्मै गिरीन्द्रजा ॥ योगैश्वर्यं तदा तुष्टा ब्रह्मविद्यां द्विजोत्तमाः ॥ ६० ॥ सोपि लब्ध्वा वरं तस्याः कुमारत्वं च सर्वदा ॥ तुष्टाव च महादेवं हर्षगद्गदया गिरा ॥ ६१ ॥ वरयामास च तदा वरेण्यं विरजेक्षणम् ॥ कृतांजलिपुटो भूत्वा प्रणिपत्य पुनःपुनः ॥ ६२ ॥ प्रसीद देवदेवेश त्वयि चाव्यभिचारिणी ॥ श्रद्धा चैव महादेव सान्निध्यं चैव सर्वदा ॥ ६३ ॥ एवमुक्तस्तदा तेन प्रहसन्निव शंकरः ॥ दत्वेप्सितं हि विप्राय तत्रैवांतरधीयत ॥ ६४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे उपमन्युचरितं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ऋषय ऊचुः ॥ दृष्टोऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्मणा ॥ धौम्याग्रजस्ततो लब्धं दिव्यं पाशुपतं व्रतम् ॥१॥ कथं लब्धं तदा ज्ञानं तस्मात्कृष्णेन धीमता ॥ वक्तुमर्हसि तां सूत कथां पातकनाशिनीम्॥२॥

रस्य वै ॥ ऋषय उपमन्योः श्रीकृष्णोपदेशकथामपृच्छन्—दृष्ट इत्यादिना । असौ शिवयोः पुत्रीकृत उपमन्युः कृष्णेन दृष्टस्ततो दिव्यं पाशुपतं व्रतं लब्धमित्यन्वयः॥ १ ॥ धीमता कृष्णेन तदा व्रतलाभकाल एव तस्मादुपमन्युसकाशात् ज्ञानं कथं केन प्रकारेण लब्धं तां संक्षेपोक्तां कथां सूत वक्तुमर्हसीत्यन्वयः ॥ २ ॥

वासुदेवः स्वेच्छया अवतीर्णो न तु अन्यजीववत्कर्मादिहेतुनेत्यर्थः । तथाप्यन्यजीवोपदेशार्थं मानुष्यं निन्दयन्नेव देहशुद्धिं चकारेत्यन्वयः ॥ ३ ॥ पुत्रार्थं च शिवदर्शनपूर्वक पुत्रप्राप्त्यर्थमित्यर्थः ॥ ४ ॥ कृष्णस्यापि गुर्वभिनयं कथयति–नम इति ॥ ५ ॥ उपमन्युप्रभावं कथयति–तस्येति ॥६॥ पाशुपतव्रतदानप्रकारं कथयति–भस्मनेति ॥ ७ ॥ पाशुपतं पशुपतिप्रोक्तं दिव्यं ज्ञानमद्वैतज्ञानमित्यर्थः ॥ ८ ॥ सांबं पार्वतीसहितं सगणं नंद्यादिगणयुक्तं महेश्वरं शिवमव्यग्रं तपसा एकवर्षांते कृष्णो दृष्ट्वा आत्मनः पुत्रं सांबाख्यं लब्धवानित्यन्वयः ॥९॥ तदाप्रभृति उपमन्यूपदेशमारभ्येत्यर्थः । संशितव्रताः अतिशुद्धव्रताः पाशुपताः शैवाः सर्वे मुनयो मार्कंडेयादयः सर्वदा कृष्णं संवृत्य तस्थुरित्यन्वयः

सूत उवाच ॥ स्वेच्छया ह्यवतीर्णोऽपि वासुदेवः सनातनः ॥ निंदयन्नेव मानुष्यं देहशुद्धिं चकार सः ॥ ३ ॥ पुत्रार्थं भगवांस्तत्र तपस्तप्तुं जगाम च ॥ आश्रमं चोपमन्योर्वै दृष्टवांस्तत्र तं मुनिम् ॥४॥ नमश्चकार तं दृष्ट्वा धौम्याग्रजमहो द्विजाः ॥ बहुमानेन वै कृष्णस्त्रिः कृत्वा वै प्रदक्षिणम् ॥५॥ तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ॥ नष्टमेव मलं सर्वं कायजं कर्म्मजं तथा ॥६॥ भस्मनोद्धूलनं कृत्वा उपमन्युर्महाद्युतिः ॥ तमग्निरिति विप्रेंद्रा वायुरित्यादिभिः क्रमात् ॥ ७ ॥ दिव्यं पाशुपतं ज्ञानं प्रददौ प्रीतमानसः ॥ मुनेः प्रसादान्मान्योऽसौ कृष्णः पाशुपते द्विजाः ॥ ८ ॥ तपसा त्वेकवर्षान्ते दृष्ट्वा देवं महेश्वरम् ॥ सांबं सगणमव्यग्रं लब्धवान्पुत्रमात्मनः ॥ ९ ॥ तदाप्रभृति तं कृष्णं मुनयः संशितव्रताः ॥ दिव्याः पाशुपताः सर्वे तस्थुः संवृत्य सर्वदा ॥ १० ॥ अन्यं च कथयिष्यामि मुक्त्यर्थं प्राणिनां सदा ॥ सौवर्णीं मेखलां कृत्वा आधारं दंडधारणम् ॥ ११ ॥ सौवर्णं पिंडिकं चापि व्यजनं दंडमेव च ॥ नरैः स्त्रियाथ वा कार्यं मषीभाजनलेखनीम् ॥ १२ ॥ क्षुराकर्त्तरिका चापि अथ पात्रमथापि वा ॥ पाशुपताय दातव्यं भस्मोद्धूलितविग्रहैः ॥ १३ ॥ सौवर्णं राजतं वापि ताम्रं वाथ निवेदयेत् ॥ आत्मवित्तानुसारेण योगिनं पूजयेद्बुधः ॥ १४ ॥

॥ १० ॥ अन्य पृष्टान्यद्दीक्षोपस्करदानरूपव्रतं प्राणिनां सदा मुक्त्यर्थं कथयिष्यामीत्यन्वयः । सौवर्णीं सुवर्णमयीं मेखलां परिनालिकाम् आधारं मेखलाधारं धार्यतेऽनेनेति धारणं दंडवद्धारणं जलनिवारकबहिर्भाग इत्यर्थः । पिंडिकं लिंगं व्यजनं वालव्यजनं दंडं दीक्षादंडं मषीभाजनेन मषिकापात्रेण युक्ता लेखनी मषीभाजनलेखनी तां क्षुरया सहिता कर्तारका क्षुरकर्तारका अथ पात्रमुदकपात्रमपि सौवर्णं कृत्वा भस्मोद्धूलितविग्रहैः नरैर्वाथ स्त्रिया पाशुपताय दातव्यमिति तृतीयेणान्वयः ॥ ११ ॥ १२ ॥ १३ ॥ शक्ताशक्तपक्षमाह–सौवर्णमिति ॥ १४ ॥

ते पूर्वोक्तदानकारिणः ॥ १९ ॥ दानफलं कथयति—तस्मादिति ॥ १६ ॥ योगिनां संप्रदानेन शिवः क्षिप्रं प्रसीदतीत्यतो यदि मोक्षमिच्छेत्तेन भव्यं राज्यादि सर्वस्वं वापि दातव्यमिति पूर्वस्थैरन्वयः ॥१७॥ सर्वश्रेष्ठसाधनं कथयति—अध्रुवेणेति ।अध्रुवेणानित्येन शरीरेण भव्यं प्रशस्तं पाशुपतं पशुपतिप्रोक्तव्रतं प्रयत्नतः सर्वप्रयासेन साध्यमित्यर्थः ॥ १८ ॥ एतदुपमन्यूपदेशकृष्णचरितमित्यर्थः ॥ १९ ॥ यस्य प्रसादादुपमन्युबालः कृष्णस्य वंद्यो ह्यभवन्मुनींद्रः ॥ स एव भक्तार्तिहरः शिवो मे प्रसीदतामाश्रितकाम

ते सर्वे पापनिर्मुक्ताः समस्तकुलसंयुताः ॥ यांति रुद्रपदं दिव्यं नात्र कार्या विचारणा ॥ १९ ॥ तस्मादनेन दानेन गृहस्थो मुच्यते भवात् ॥ योगिनां संप्रदानेन शिवः क्षिप्रं प्रसीदति ॥ १६ ॥ राज्यं पुत्रं धनं भव्यमश्वं यानमथापि वा ॥ सर्वस्वं वापि दातव्यं यदीच्छेन्मोक्षमुत्तमम् ॥ १७ ॥ अध्रुवेण शरीरेण ध्रुवं साध्यं प्रयत्नतः ॥ भव्यं पाशुपतं नित्यं संसारार्णवतारकम् ॥ १८ ॥ एतद्वः कथितं सर्वं संक्षेपान्न च संशयः ॥ यः पठेच्छृणुयाद्वापि विष्णुलोकं स गच्छति ॥ १९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागेऽष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥ समाप्तश्चायं पूर्वभागः ॥ श्रीशंकरार्पणमस्तु ॥

धेनुः ॥ लैंगस्य पूर्वभागोऽयं मया विश्वेशतुष्टये ॥ व्याख्यातः सज्जनानां च मुदे भूयान्निरंतरम् ॥ नातः कृत्यतमं मन्ये मनुजानां सतामिह ॥ जगत्तातस्य सांबस्य श्रद्धया भजनं विना ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टाधिकशततमोऽध्यायः समाप्तः ॥ १०८ ॥ श्रीमत्पार्वतीशंकरं नमामि ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन गंगाविष्णुना स्वकीये "लक्ष्मीवेंकटेश्वर" (स्टीम) यंत्रालयेऽङ्कयित्वा प्रकाशितम् ॥ संवत् १९८१, शके १८४६.

पुस्तक मिलनेका ठिकाना–

गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस.
कल्याण–मुंबई.

खेमराज श्रीकृष्णदास, "श्रीवेंकटेश्वर" स्टीम प्रेस.
खेतवाडी–मुंबई.

श्रीगणेशाय नमः ॥ कैमोत्तरेस्मिन्प्रथमे सांबस्यातिप्रियात्मनः ॥ विष्णोर्गानात्तु परमा प्रीतिश्चेति कथोच्यते ॥ विष्णोः परमाशिववल्लभत्वादृषयः स केन तुष्यती त्यपृच्छन्—कृष्ण इति ॥१॥२॥ पुराणश्चिरंजीवित्वादतिप्राचीनोत एव पुराणार्थेषु विशारदोतिनिपुण इत्यर्थः ॥३॥ नारायणानां नारायणनिर्मितानामित्यर्थः ॥ ४॥५॥६॥ ॥ ७ ॥ एवं पाद्मकल्पवृत्तं समाश्रित्य यस्माद्ब्रह्मा ततः सर्वं मुच्यत इत्यन्वयः । यन्नागायणात्यंतप्रियं मया दृष्टं विदितं तत्रेति शेषः । एकमाद्वितीयं धर्मं प्रवक्ष्यामित्यन्वयः

श्रीगणेशाय नमः॥ ऋषय ऊचुः ॥ कृष्णस्तुष्यति केनेह सर्वदेवेश्वरेश्वरः ॥ वक्तुमर्हसि चास्माकं सूत सर्वार्थविद्वान्॥ १॥ सूत उवाच ॥ पुरा पृष्टो महातेजा मार्कंडेयो महामुनिः ॥ अंबरीषेण विप्रेंद्रास्तद्वदामि यथातथम् ॥ २ ॥ अंबरीष उवाच ॥ मुने समस्तधर्माणां पारग स्त्वं महामते ॥ मार्कंडेय पुराणोऽसि पुराणार्थविशारदः ॥ ३ ॥ नारायणानां दिव्यानां धर्माणां श्रेष्ठमुत्तमम् ॥ तत्किं ब्रूहि महाप्राज्ञ भक्तानामिह सुव्रत ॥ ४ ॥ सूत उवाच ॥ तस्य तद्वचनं श्रुत्वा समुत्थाय कृतांजलिः ॥ स्मरन्नारायणं देवं कृष्णमच्युतमव्ययम् ॥ ५ ॥ मार्कंडेय उवाच ॥ शृणु भूप यथान्यायं पुण्यं नारायणात्मकम् ॥ स्मरणं पूजनं चैव प्रणामो भक्तिपूर्वकम् ॥ ६ ॥ प्रत्येकमश्वमेधस्य यज्ञस्य सममुच्यते ॥ य एकः पुरुषः श्रेष्ठः परमात्मा जनार्दनः ॥ ७॥ यस्माद्ब्रह्मा ततः सर्वं समाश्रित्यैव मुच्यते ॥ धर्ममेकं प्रवक्ष्यामि यद्दृष्टं विदितं मया ॥ ८ ॥ पुरा त्रेतायुगे कश्चित् कौशिको नाम वै द्विजः ॥ वासुदेवपरो नित्यं सामगानरतः सदा ॥ ९ ॥ भोजनासन शय्यासु सदा तद्गतमानसः ॥ उदारचरितं विष्णोर्गायमानः पुनः पुनः ॥ १० ॥ विष्णोः स्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ॥ अगायत हरिं तत्र तालवर्णलयान्वितम् ॥ ११ ॥ मूर्च्छनास्वरयोगेन श्रुतिभेदेन भेदितम् ॥ भक्तियोगं समापन्नो भिक्षामात्रं हि तत्र वै ॥१२॥ तत्रैनं गायमानं च दृष्ट्वा कश्चिद्द्विजस्तदा ॥ पद्माख्य इति विख्यातस्तस्मै चान्नं ददौ तदा ॥१३ ॥ सकुटुंबो महातेजा ह्युष्णमन्नं हि तत्र वै ॥ कौशिको हि तदा हृष्टो गायन्नास्ते हरिं प्रभुम् ॥ १४ ॥

॥ ८ ॥ ९ ॥ १० ॥ तालवर्णलयेन तौर्यत्रिकसाम्येनेत्यर्थः " लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च " इति विश्वः ॥११॥ श्रुतिभेदेन बृहद्रथंतरादिनेत्यर्थः । तत्र विष्णुमंदिरे भिक्षामात्रं केवलभिक्षान्नं भुंजान इति शेषः ॥ १२ ॥ १३ ॥ सकुटुंबः कौशिकस्तत्र वै विष्णुमंदिर एव ह्युष्णमन्नं भुक्त्वा हरिं गायन् हृष्ट आस्ते उपविशतीत्यर्थः ॥१४॥

कन्या अपराजितासंज्ञा कोरफडेति प्रसिद्धा वल्ली अजमोदा "वल्ली स्यादजमोदायाम्" इति विश्वः । द्रुह्यति जिघांसति तच्छीलो द्रोही निंबवृक्षः द्रुहधातोः संपृचेति घिनुण् जटी जटामांसीसंज्ञा ॥४८॥४९॥५०॥ यस्य निंबे तत्संज्ञकवृक्षे काकगृहं गृहे वा आरामे वा दंडिनी दंडविशिष्टा मुंडिनी नरमस्तकविशिष्टेत्यर्थः। तद्गृहामिति शेषः। त्व सभार्यः समाविशेत्याग्रिमेणान्वयः ॥५१॥५२॥ काली चामुंडासंज्ञा प्रेतरूपा प्रेतसदृशी शाकिनी डाकिनी भयंकरेत्यर्थः ॥५३॥ क्षेत्रपालो भैरवः भिक्षुबिंबं परिव्राजकप्रतिमां क्षपणकं बिंबं

मल्लिका वा गृहे येषां सभार्यस्त्वं समाविश ॥ कन्या च यत्र वै वल्ली द्रोही वा च जटी गृहे ॥ ४८ ॥ बहुला कदली यत्र सभार्यस्त्वं समाविश ॥ तालं तमालं भल्लातं तितिडीखंडमेव च ॥ ४९ ॥ कदंबः खादिरं वापि सभार्यस्त्वं समाविश ॥ न्यग्रोधं वा गृहे येषामश्वत्थं चूतमेव वा ॥ ५० ॥ उदुंबरं वा पनसं सभार्यस्त्वं समाविश ॥ यस्य काकगृहं निंबे आरामे वा गृहेपि वा ॥ ५१ ॥ दंडिनी मुंडिनी वापि सभार्यस्त्वं समाविश ॥ एका दासी गृहे यत्र त्रिगवं पंचमाहिषम् ॥ ५२ ॥ षडश्वं सप्तमातंगं सभार्यस्त्वं समाविश ॥ यस्य काली गृहे देवी प्रेतरूपा च डाकिनी ॥ ५३ ॥ क्षेत्रपालोथवा यत्र सभार्यस्त्वं समाविश ॥ भिक्षुबिंबं च वै यस्य गृहे क्षपणकं तथा ॥ ५४ ॥ बौद्धं वा बिंबमासाद्य तत्र पूर्णं समाविश ॥ शयनासनकालेषु भोजनाटनवृत्तिषु ॥ ५५ ॥ येषां वदति नो वाणी नामानि च हरेः सदा ॥ तद्गृहं ते समाख्यातं सभार्यस्य निवेशितुम् ॥ ५६ ॥ पाषंडाचारनिरताः श्रौतस्मार्तबहिष्कृताः ॥ विष्णुभक्तिविनिर्मुक्ता महादेवविनिंदकाः ॥ ५७ ॥ नास्तिकाश्च शठा यत्र सभार्यस्त्वं समाविश ॥ सर्वस्मादधिकत्वं ये न वदंति पिनाकिनः ॥ ५८ ॥ साधारणं स्मरंत्येनं सभार्यस्त्वं समाविश ॥ ब्रह्मा च भगवान्विष्णुः शक्रः सर्वसुरेश्वरः ॥ ५९ ॥ रुद्रप्रसादजाश्चेति न वदंति दुरात्मकाः ॥ ब्रह्मा च भगवान्विष्णुः शक्रश्च सम एव च ॥ ६० ॥ वदंति मूढाः खद्योतं भानुं वा मूढचेतसः ॥ तेषां गृहे तथा क्षेत्र आवासे वा सदाऽनया ॥ ६१ ॥ विश भुंक्ष्व गृहं तेषां अपि पूर्णमनन्यधीः ॥ येऽश्नंति केवलं मूढाः पक्वमन्नं विचेतसः ॥ ६२ ॥

दिगंबरसिद्धांतानुयायिनग्नप्रतिमां बौद्धं बिंबं बुद्धसंज्ञकविष्ण्ववतारप्रतिमाम् आसाद्य प्राप्य तत्र तस्मिन्गृहे पूर्णं यथेच्छं समाविशेत्याग्रिमेणान्वयः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ॥ ५७ ॥ पिनाकिनो रुद्रस्य सर्वस्माद्विश्वस्मादित्यर्थः ॥ ५८ ॥ एनं शिवमित्यर्थः । अयथार्थवादिनामपि गृहप्रवेशं कथयति–ब्रह्मा चेत्यादिना ॥ ५९ ॥ ६०॥६१॥६२॥

॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ अयोग्यानपूज्यानित्यर्थः ॥ ६७ ॥ ६८ ॥६९॥ ७० ॥ रजस्वलां चांडालीं कन्यां वा गोगृहे गोष्ठे स्त्रियं वा गच्छेत्तेषां पूर्वोक्तदोष कारिणां गृहं समाविशेत्यन्वयः ॥ ७१ ॥ ७२ ॥ शृंगैः कृत्रिमपुंश्चिह्नैरित्यर्थः । " शृंगं प्रभुत्वे शिखरे चिह्ने क्रीडांबुयंत्रके " इति विश्वः । दिव्यौषधैरनंगरंगादिग्रंथोक्तौषधैः क्षुद्रैरितरैर्वा शेफो लिंगमालिप्य स्त्रियमित्यनुषंगः । गच्छति अस्मात्पूर्वोक्तकारणाद्भगद्रावं करोति तद्गृहमित्यनुषंगः । समाविशेत्यग्रिमेणान्वयः ॥ ७३ ॥ ७४ ॥ ७५ ॥

स्नानमंगलहीनाश्च तेषां त्वं गृहमाविश॥ या नारी शौचविभ्रष्टा देहसंस्कारवर्जिता ॥६३॥ सर्वभक्षरता नित्यं तस्याः स्थाने समाविश ॥ मलिनास्याः स्वयं मर्त्या मलिनांबरधारिणः॥६४॥मलदंता गृहस्थाश्च गृहे तेषां समाविश ॥ पादशौचविनिर्मुक्ताः संध्याकाले च शायिनः ॥ ६५ ॥ संध्यायामश्नुते ये वै गृहं तेषां समाविश ॥ अत्याशनरता मर्त्या अतिपानरता नराः ॥ ६६ ॥ द्यूतवादक्रियामूढाः गृहे तेषां समाविश ॥ ब्रह्मस्वहारिणो ये चायोग्यांश्चैव यजंति वा ॥ ६७ ॥ शूद्रान्नभोजिनो वापि गृहं तेषां समाविश ॥ मद्यपानरताः पापा मांस भक्षणतत्पराः ॥६८॥ परदाररता मर्त्या गृहं तेषां समाविश ॥ पर्वण्यनर्चाभिरता मैथुने वा दिवा रताः॥ ६९ ॥संध्यायां मैथुनं येषां गृहे तेषां समाविश ॥ पृष्ठतो मैथुनं येषां श्वानवन्मृगवच्च वा ॥७०॥ जले वा मैथुनं कुर्यात्सभार्यस्त्वं समाविश॥ रजस्वलां स्त्रियं गच्छेच्चांडालीं वा नराधमः ॥ ७१ ॥ कन्यां वा गोगृहे वापि गृहं तेषां समाविश ॥ बहुना किं प्रलापेन नित्यकर्मबहिष्कृताः ॥ ७२ ॥ रुद्रभक्तिविहीना ये गृहं तेषां समाविश ॥ शृंगैर्दिव्यौषधैः क्षुद्रैः शेफ आलिप्य गच्छति ॥७३॥ भगद्रावं करोत्यस्मात्सभार्यस्त्वं समाविश ॥सूत उवाच ॥ इत्युक्त्वा स मुनिः श्रीमान्निर्माज्र्य नयने तदा ॥ ७४ ॥ ब्रह्मर्षिर्ब्रह्मसंकाशस्तत्रैवांतर्द्धिमातनोत् ॥ दुःसहश्च तथोक्तानि स्थानानि च समी यिवान् ॥ ७५ ॥ विशेषाद्देवदेवस्य विष्णोर्निंदारतात्मनाम् ॥ सभार्यो मुनिशार्दूलः सैषा ज्येष्ठा इति स्मृता ॥ ७६ ॥ दुःसहस्तामुवाचेदं तडागाश्रममंतरे ॥ आस्व त्वमत्र चाहं वै प्रवेक्ष्यामि रसातलम् ॥७७॥ आवयोः स्थानमालोक्य निवासार्थं ततः पुनः॥ आगमिष्यामि ते पार्श्वमित्युक्त्वा तमुवाच सा ॥ ७८ ॥ किमश्नामि महाभाग को मे दास्यति वै बलिम् ॥ इत्युक्तस्तां मुनिः प्राह याः स्त्रियस्त्वां यजंति वै ॥ ७९ ॥

देवदेवस्य शिवस्य विष्णोश्च निंदारतात्मनां विशेषात्तथोक्तानि मार्कंडेयोक्तानीत्यर्थः । स्थानानि सभार्यो मुनिशार्दूलो दुःसहः समीयिवानिति पूर्वस्थैरन्वयः ॥७६॥ तां ज्येष्ठां दुःसहः तडागो जलाश्रयः आश्रमा निवासाश्च तडागाश्रमम् अंतरे मध्येऽत्र अश्वत्थद्रुमे त्वमास्व अहं रसातलं प्रवेक्ष्यामीदं वाक्यमुवाचेत्यन्वयः ॥ ७७ ॥ ७८ ॥ ७९ ॥

॥ ८० ॥ ८१ ॥ तया ज्येष्ठया प्रसंगादन्योद्देशगमनेन लक्ष्म्या सह देवदेवेशो विष्णुर्दृष्टः सालक्ष्मीः जनार्दनमाहेत्यन्वयः ॥ ८२ ॥ ८३ ॥ ८४ ॥ मांवविद्वेषिणस्तु मम न भक्ता अतस्तद्धनाद्यलक्ष्म्यै निर्दिशति—ये रुद्रमित्यादिना ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ तामलक्ष्मीमिति पूर्वोक्तप्रकारमुक्त्वा अलक्ष्मीक्षयसिद्धये लक्ष्म्या सह जनार्दनः रुद्रं शिवं जजापेत्यग्रिमेणान्वयः ॥ ८९ ॥ तस्मादलक्ष्मीपरिहारार्थं तस्यै ज्येष्ठायै एव नित्यं प्रदेयं बलिं दद्यादितिशेषः ॥ ९० ॥ ९१ ॥ अध्यायफलमाह—य इति ॥९२॥

बलिभिः पुष्पधूपैश्च न तासां च गृहं विश॥इत्युक्त्वा त्वाविशत्तत्र पातालं बिलयोगतः॥८०॥अद्यापि च विनिर्मग्नो मुनिः स जलसंस्तरे॥ ग्रामपर्वतबाह्येषु नित्यमास्तेऽशुभा पुनः ॥ ८१॥ प्रसंगादेवदेवेशो विष्णुस्त्रिभुवनेश्वरः ॥ लक्ष्म्या दृष्टस्तया लक्ष्मीः सा तमाह जनार्दनम् ॥ ८२ ॥ भर्ता गतो महाबाहो बिलं त्यक्त्वा स मां प्रभो ॥ अनाथाहं जगन्नाथ वृत्तिं देहि नमोस्तु ते ॥ ८३ ॥ सूत उवाच ॥ इत्युक्तो भगवान्विष्णुः प्रहस्याह जनार्दनः ॥ ज्येष्ठामलक्ष्मीं देवेशो माधवो मधुसूदनः ॥ ८४ ॥ श्रीविष्णुरुवाच ॥ ये रुद्रमनघं शर्वं शंकरं नीललोहितम् ॥ अंबां हैमवतीं वापि जनित्रीं जगतामपि ॥ ८५ ॥ मद्भक्तान्निंदयंत्यत्र तेषां वित्तं तवैव हि ॥ येपि चैव महादेवं विनिंद्यैव यजंति माम् ॥ ८६ ॥ मूढा ह्यभाग्या मद्भक्ता अपि तेषां धनं तव ॥ यस्याज्ञया ह्यहं ब्रह्मा प्रसादाद्वर्तते सदा ॥ ८७ ॥ ये यजंति विनिंद्यैव मम विद्वेषकारकाः ॥ मद्भक्ता नैव ते भक्ता इव वर्तंति दुर्मदाः ॥ ८८ ॥ तेषां गृहं धनं क्षेत्रमिष्टापूर्तं तवैव हि ॥ सूत उवाच ॥ इत्युक्त्वा तां परित्यज्य लक्ष्म्याऽलक्ष्मीं जनार्दनः ॥ ८९ ॥ जजाप भगवान्रुद्रमलक्ष्मीक्षयसिद्धये ॥ तस्मात्प्रदेयस्तस्यै च बलिर्नित्यं मुनीश्वराः ॥ ९० ॥ विष्णुभक्तैर्न संदेहः सर्वयत्नेन सर्वदा ॥ अंगनाभिः सदा पूज्या बलिभिर्विविधैर्द्विजाः ॥ ९१ ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ अलक्ष्मीवृत्तमनघो लक्ष्मीवाँल्लभते गतिम् ॥ ९२ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे अलक्ष्मीवृत्तं नाम षष्ठोऽध्यायः ॥६॥ ऋषय ऊचुः ॥ किंजपान्मुच्यते जंतुः सर्वलोकभयादिभिः॥ सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥१॥ अलक्ष्मीं वाथ संत्यज्य गमिष्यति जपेन वै ॥ लक्ष्मीवासो भवेन्मर्त्यः सूत वक्तुमिहार्हसि ॥ २ ॥ सूत उवाच ॥ पुरा पितामहेनोक्तं वसिष्ठाय महात्मने ॥ वक्ष्ये संक्षेपतः सर्वं सर्वलोकहिताय वै ॥ ३ ॥

अलक्ष्मीनाशकं शश्वद्विश्वस्मादधिकं हरम् ॥ लक्ष्मीनाथेनापि जप्तं सांबमेव जपाम्यहम् ॥इति श्रीलिंगम० शिवतोषिण्यां टीकायां षष्ठोऽध्यायः ॥ ६ ॥ सप्तमे श्रीमहाविष्णोरष्टाक्षरमनोस्तथा । द्वादशाक्षरमंत्रस्य महिमा चोच्यतेऽद्भुतः ॥ ऋषयः सर्वभयविमोचनादिफलं जाप्यमपृच्छन्—किमित्यादिना ॥ १ ॥ २ ॥ सर्वलोकहिताय वै वक्ष्ये इत्यनेन भवंतस्तु कृतार्था इति सूचितम् ॥ ३ ॥

॥४॥ सर्वपापहरमपि शुद्धं स्वतः निर्मलमित्यर्थः । ब्रह्मवादिनां वेदविदां मोक्षदमित्यनेनान्येषां मोक्षानधिकारः सूचितः । साक्षान्मोक्षाधिकारिणं कथयति—मनसेत्यादिना । यः विद्वान्सन् मनसा कर्मणा वाचा पुण्यकर्मकृत् पुरुषोत्तमं प्रणम्य नित्यं प्रत्यहं नारायणं तत्संज्ञकमंत्रं जपेदेवं स्वापादौ नारायणं स्मरेदिति शेषः। एवं भोज्यादि स्पृशन्नमोनारायणायेति चाभिमंत्र्य भुंक्ते स परमां गतिं मोक्षं यातीत्यष्टमेनान्वयः॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ न्यूनाधिकारिणोऽपि सकामस्य फलमाह—सर्वेति । सतां गतिं सन्मार्गमित्यर्थः । अन्यच्च फलमाह—अलक्ष्मीश्चेत्यादिना ॥ ९॥ १० ॥ सर्वशास्त्राण्यालोड्य परिशील्य पुनः पुनः विचार्य मननं कृत्वा सदा नारायणो ध्येयः। इदमेकं सुनिष्पन्नामित्यग्रिमेणा

शृण्वंतु वचनं सर्वे प्रणिपत्य जनार्दनम् ॥ देवदेवमजं विष्णुं कृष्णमच्युतमव्ययम् ॥ ४ ॥ सर्वपापहरं शुद्धं मोक्षदं ब्रह्मवादिनम् ॥ मनसा कर्मणा वाचा यो विद्वान्पुण्यकर्मकृत् ॥ ५ ॥ नारायणं जपेन्नित्यं प्रणम्य पुरुषोत्तमम् ॥ स्वपन्नारायणं देवं गच्छन्नारायणं तथा ॥ ६ ॥ भुंजन्नारायणं विप्रास्तिष्ठञ्जाग्रत्सनातनम् ॥ उन्मिषन्निमिषन्वापि नमो नारायणेति वै ॥ ७ ॥ भोज्यं पेयं च लेह्यं च नमो नारायणेति च ॥ अभिमंत्र्य स्पृशन्भुंक्ते स याति परमां गतिम् ॥ ८॥ सर्वपापविनिर्मुक्तः प्राप्नोति च सतां गतिम् ॥ अलक्ष्मीश्च मया प्रोक्ता पत्नी या दुःसहस्य च ॥ ९ ॥ नारायणपदं श्रुत्वा गच्छत्येव न संशयः ॥ या लक्ष्मीर्देवदेवस्य हरेः कृष्णस्य वल्लभा ॥ १० ॥ गृहे क्षेत्रे तथावासे तनौ वसति सुव्रताः ॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥११॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ॥ १२ ॥ नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥ तस्मात्सर्वेषु कालेषु नमो नारायणेति च ॥ १३ ॥ जपेत्स याति विप्रेंद्रा विष्णुलोकं सबांधवः ॥ अन्यच्च देवदेवस्य शृण्वंतु मुनिसत्तमाः ॥ १४ ॥ मंत्रो मया पुराभ्यस्तः सर्ववेदार्थसाधकः ॥ द्वादशाक्षरसंयुक्तो द्वादशात्मा पुरातनः ॥ १५ ॥ तस्यैवेह च माहात्म्यं संक्षेपात्प्रवदामि वः ॥ कश्चिद्द्विजो महाप्राज्ञस्तपस्तप्त्वा कथंचन ॥ १६ ॥ पुत्रमेकं तयोत्पाद्य संस्कारैश्च यथाक्रमम् ॥ योजयित्वा यथाकालं कृतोपनयनं पुनः ॥ १७ ॥ अध्यापयामास तदा स च नोवाच किंचन ॥ न जिह्वा स्पंदते तस्य दुःखितोऽभूद्द्विजोत्तमः ॥ १८ ॥

न्वयः ॥ ११ ॥ तस्य नारायणमंत्रजापिन इत्यर्थः ॥ १२ ॥ तस्मात्सर्वार्थसाधकत्वात्सर्वेषु कालेषु नमो नारायणायेति यो जपेत्स सबांधवो विष्णुलोकं यातीत्यग्रिमेणान्वयः। विप्रेंद्रा इति शौनकादिसंबोधनम् ॥ १३ ॥ देवदेवस्य विष्णोरन्यज्जपमाहात्म्यं च मुनिसत्तमाः शृण्वंतु इत्यन्वयः ॥ १४ ॥ १५ ॥ तस्य द्वादशाक्षरमंत्रस्येत्यर्थः । इतिहासं प्रस्तौति—कश्चिदित्यादिना ॥ १६ ॥ १७ ॥ तस्य पुत्रस्य जिह्वा न स्पंदते नान्यवर्णान्प्रसवतीत्यर्थः ॥ १८ ॥

वासुदेवोति द्वादशाक्षरमंत्रैकदेशं वा समग्रमंत्रमित्यर्थः । अन्यामन्यभार्यामित्यर्थः ॥ १९ ॥ ऐतरेयसापत्नभ्रातर इति शेषः । तथैव कृतोपनयना इत्यर्थः । विधिपूर्वकं वेदानधीत्य सर्वसंमताः मान्याः अत एव संपन्नाः संपत्तियुक्ता बभूवुरित्यन्वयः ॥ २० ॥ पुत्राः सपत्नीपुत्रा इत्यर्थः ॥ २१ ॥ मातरं स्वजननीं मोदयंति हर्षं प्रापयंतीत्यर्थः । मंदभाग्यायाः मम त्वं निर्गता आकृतिर्यत्नो यस्मात्स निराकृतिः पुत्रो जात इत्यन्वयः ॥२२॥ अत्रास्मिञ्जन्मनीत्यर्थः ॥२३॥ तस्मिन्नैतरेये याते प्राप्ते सति द्विजानाम् ऋत्विजां मंत्राः न प्रतिपेदिरे नावगता बभूवुरित्यर्थः ॥ २४ ॥ ततस्तस्मिन् काले वासुदेवोति कीर्तनादैतरेयस्य वाणी मंत्रमयी वाक् समुद्भूता प्रादुर्भूतेत्यर्थः । ते यज्ञस्था विप्राः प्रणिपत्य

वासुदेवेति नियतमैतरेयो वदत्यसौ ॥ पिता तस्य तथा चान्यां परिणीय यथाविधि ॥ १९ ॥ पुत्रानुत्पादयामास तथैव विधिपूर्वकम् ॥ वेदानधीत्य संपन्ना बभूवुः सर्वसंमताः ॥ २० ॥ ऐतरेयस्य सा माता दुःखिता शोकमूर्च्छिता ॥ उवाच पुत्राः संपन्ना वेदवेदांगपारगाः ॥ २१ ॥ ब्राह्मणैः पूज्यमाना वै मोदयंति च मातरम् ॥ मम त्वं भाग्यहीनायाः पुत्रो जातो निराकृतिः ॥ २२ ॥ ममात्र निधनं श्रेयो न कथंचन जीवितम् ॥ इत्युक्तः स च निर्गम्य यज्ञवाटं जगाम वै ॥ २३ ॥ तस्मिन्याते द्विजानां तु न मंत्राः प्रतिपेदिरे ॥ ऐतरेये स्थिते तत्र ब्राह्मणा मोहितास्तदा ॥ २४ ॥ ततो वाणी समुद्भूता वासुदेवेति कीर्तनात् ॥ ऐतरेयस्य ते विप्राः प्रणिपत्य यथातथम् ॥ २५ ॥ पूजां चक्रुस्ततो यज्ञं स्वयमेव समागतम् ॥ ततः समाप्य तं यज्ञमैतरेयो धनादिभिः ॥ २६॥ सर्ववेदान्सदस्याह स षडंगान् समाहिताः ॥ तुष्टुवुश्च तथा विप्रा ब्रह्माद्याश्च तथा द्विजाः ॥ २७ ॥ ससर्जुः पुष्पवर्षाणि खेचराः सिद्धचारणाः ॥ एवं समाप्य वै यज्ञमैतरेयो द्विजोत्तमः ॥ २८ ॥ मातरं पूजयित्वा तु विष्णोः स्थानं जगाम ह ॥ एतद्वै कथितं सर्वं द्वादशाक्षरवैभवम् ॥ २९ ॥ पठतां शृण्वतां नित्यं महापातकनाशनम् ॥ जपेद्यः पुरुषो नित्यं द्वादशाक्षरमव्ययम् ॥३०॥ स याति दिव्यमतुलं विष्णोस्तत्परमं पदम् ॥ अपि पापसमाचारो द्वादशाक्षरतत्परः ॥ ३१ ॥ प्राप्नोति परमं स्थानं नात्र कार्या विचारणा ॥ किं पुनर्ये स्वधर्मस्था वासुदेवपरायणाः ॥ ३२ ॥

ऐतरेयस्य यथातथं यथाविधि पूजां चक्रुरित्यग्रिमेणान्वयः ॥ २५ ॥ धनादिभिरर्चित इति शेषः । ऐतरेयः षडंगान्सर्ववेदान् सदस्याहेत्यग्रिमेणान्वयः ॥ २६ ॥ तथा विप्रा ऋत्विग्भिन्नाः ब्रह्माद्या द्विजाः ब्रह्मप्रभृति ऋत्विजश्च तथा समाहितास्तुष्टुवुरित्यन्वयः ॥ २७ ॥ २८ ॥ इतिहासफलं कथयति—एतदित्यादिना ॥ २९ ॥ द्वादशाक्षरजपफलं कथयति—जपेदित्यादिना ॥ ३० ॥ ३१ ॥ ३२ ॥

दिव्यं स्थानं विष्णुलोकमित्यर्थः ॥ ३३ ॥ अतिशैवश्रीविष्णोरतितोषौ सर्वदाविमौ मंत्रौ ॥ अष्टद्वादशवर्णौ स्यातां मम मोक्षदौ मित्रे ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे विष्णुमंत्राभ्यां श्रेष्ठा मंत्रास्तु शांभवाः । प्रोक्ताः षडक्षरमनोरितिहासो निरूप्यते ॥ सूतो वैष्णवमंत्राभ्यां श्रेष्ठशैवमंत्रान्कथयति—अष्टाक्षर इत्यादिना ॥ १ ॥ यश्च ॐ नमः शिवायेति षडक्षरमंत्रः सर्ववेदार्थानां संचयः सारभूत इत्यर्थः ॥ २ ॥ तथा तत्सदृशः शिवतरायेति पंचाक्षरो दिव्यो मंत्रः सर्वार्थसाधक इत्यन्वयः। एवं पूर्वोक्तप्रकारेण मयस्करायेति शुभः कल्याणरूप इत्यर्थः । नमस्ते शंकराय अयं सप्ताक्षरः सप्तवर्णो मंत्रः प्रधानपुरुषस्य प्रकृतिपुरुषरूपस्य रुद्रस्य वै निश्चये नेत्यग्रिमेणान्वयः ॥ ३ ॥ ४ ॥ ब्रह्मादयो द्विजश्रेष्ठा मुनयश्च एतैः षडक्षरादिभिर्मंत्रैः अजस्य ब्रह्मणः उद्भव उत्पत्तिर्यस्मात्तं शंकरं शिवं यजंतीत्यन्वयः ॥ ५ ॥ शिवं च

दिव्यं स्थानं महात्मानः प्राप्नुवंतीति सुव्रताः ॥३३॥ इति श्रीलिंगमहापुराणे उत्तरभागे द्वादशाक्षरप्रशंसानाम सप्तमोऽध्यायः ॥७॥ सूत उवाच ॥ अष्टाक्षरो द्विजश्रेष्ठा नमो नारायणेति च॥द्वादशाक्षरमंत्रश्च परमः परमात्मनः ॥१॥ मंत्रः षडक्षरो विप्राः सर्ववेदार्थसंचयः ॥ यश्चोंनमः शिवायेति मंत्रः सर्वार्थसाधकः॥२॥तथा शिवतरायेति दिव्यः पंचाक्षरः शुभः ॥ मयस्कराय चेत्येवं नमस्ते शंकराय च ॥३॥ सप्ताक्षरोयं रुद्रस्य प्रधानपुरुषस्य वै ॥ब्रह्मा च भगवान्विष्णुः सर्वे देवाः सवासवाः ॥ ४ ॥ मंत्रैरेतैर्द्विजश्रेष्ठा मुनयश्च यजंति तम् ॥ शंकरं देवदेवेशं मयस्करमजोद्भवम्॥५॥शिवं च शंकरं रुद्रं देवदेवमुमापतिम्॥प्राहुर्नमः शिवायेति नमस्ते शंकराय च॥६॥मयस्कराय रुद्राय तथा शिवतराय च ॥ जप्त्वा मुच्येत वै विप्रो ब्रह्महत्यादिभिः क्षणात् ॥ ७ ॥ पुरा कश्चिद्द्विजः शक्तो धुंधुमूक इति श्रुतः ॥ आसीत्तृतीये त्रेतायामावर्त्ते च मनोः प्रभोः ॥८॥ मेघवाहनकल्पे वै ब्रह्मणः परमात्मनः ॥ मेघो भूत्वा महादेवं कृत्तिवाससमीश्वरम् ॥ ९ ॥ बहुमानेन वै रुद्रं देवदेवो जनार्दनः ॥ खिन्नोऽतिभाराद्रुद्रस्य निःश्वासोच्छ्वासवर्जितः ॥ १० ॥ विज्ञाप्य शितिकंठाय तपश्चक्रेंबुजेक्षणः ॥ तपसा परमैश्वर्यं बलं चैव तथाद्भुतम् ॥ ११ ॥ लब्धवान्परमेशानाच्छंकरात्परमात्मनः ॥ तस्मात्कल्पस्तदा चासीन्मेघवाहनसंज्ञया ॥ १२ ॥

शिवमेव शंकरादिसंज्ञं प्राहुरित्यन्वयः । पंच महामंत्रांस्तन्माहात्म्यं च कथयति—नम इत्यादिना ॥ ६ ॥ ब्रह्महत्यादिभिः पंचमहापातकैरित्यर्थः ॥ ७ ॥ महापातकहरणप्रत्यायकेतिहासं कथयति—पुरेत्यादिना । शक्तः समर्थः कश्चिद्धुंधुमूक इति श्रुतो द्विजः प्रभोः तत्संज्ञकमनोः तृतीये आवर्ते युगपरिवर्ते त्रेतायां तत्संज्ञकयुगे आसीदित्यन्वयः ॥८॥ कल्पाकांक्षायामाह—मेघवाहनेति । ब्रह्मणः परमात्मनः शिवस्येत्यर्थः । मेघवाहनसंज्ञाप्रयोजनं कथयति—मेघो भूत्वेत्यादिना । कृत्तिर्व्याघ्रचर्म वासो यस्य स कृत्तिवासास्तमीश्वरं शिवं जनार्दनो विष्णुर्मेघो भूत्वा बहुमानेनावहदिति शेषमादायाग्रिमेणान्वयः ॥ ९ ॥ रुद्रस्यातिभारान्निःश्वासोच्छ्वासवर्जितः खिन्नांबुजेक्षणो विष्णुः शितिकंठाय विज्ञाप्य तपश्चक्रे इत्यग्रिमेणान्वयः ॥ १० ॥ तपसा अंबुजेक्षणो विष्णुः परमेशानात्परमैश्वर्यमद्भुतं बलं च लब्धवानित्यग्रिमेणान्वयः ॥ ११ ॥ तस्मात्पूर्वोक्तकारणादित्यर्थः ॥ १२ ॥

मुनेः शापात् पूर्वजन्मनि कस्यचिद्द्वेषः शापादित्यर्थः । तेन वक्ष्यमाणपितृदोषेण च धुंधुमूकसमुद्भवस्तदौरसः स धुंधुमूकात्मजः दुरात्मा दुर्बुद्धिर्बभूवेत्यन्वयः ॥ १३ ॥ पितृदोषं कथयति—धुंधुमूक इत्यादिना । धुंधुमूकः पुरा असक्तो विरक्तोऽपि भार्यया सह मोहितः सन् कामासक्तेन चेतसा तेन अमावास्यां तत्संज्ञकदिनं प्रति अहन्येव रुद्रदैवते मुहूर्ते प्रथममुहूर्ते । तदुक्तं मार्तंडे " अह्नः स्युः शिवमार्पमित्रापितरः " इत्यादिना । भार्या यथासुखं भुक्ता तस्यां गर्भः स्थापितो वै तदा तस्मिन्काले अंतर्वत्नी बभूवेति शेषमादायाग्रिमेणान्वयः ॥ १४ ॥ १५ ॥ विशल्याख्या सा धुंधुमूकपत्नी मंदेन शनिना वीक्षिते रुद्रे भयंकरे मुहूर्ते प्रयत्नतः अत्यायासेन तनयं पुत्रमसूतेत्यन्वयः । मुनिसत्तमा इति

तस्मिन्कल्पे मुनेः शापाद्धुंधुमूकसमुद्भवः ॥ धुंधुमूकात्मजस्तेन दुरात्मा च बभूव सः ॥१३॥ धुंधुमूकः पुरासक्तो भार्यया सह मोहितः ॥ तस्यां वै स्थापितो गर्भः कामासक्तेन चेतसा ॥१४॥ अमावास्यामहन्येव मुहूर्ते रुद्रदैवते ॥ अंतर्वत्नी तदा भार्या भुक्ता तेन यथासुखम् ॥ १५ ॥ असूत सा च तनयं विशल्याख्या प्रयत्नतः ॥ रुद्रे मुहूर्ते मंदेन वीक्षिते मुनिसत्तमाः ॥ १६॥ मातुः पितुस्तथारिष्टं स संजातस्तथात्मनः ॥ ऋषी तमूचतुर्विप्रा धुंधुमूकं मिथस्तदा ॥ १७ ॥ मित्रावरुणनामानौ दुष्पुत्र इति सत्तमौ ॥ वसिष्ठः प्राह नीचोऽपि प्रभावाद्वै बृहस्पतेः ॥ १८ ॥ पुत्रस्तवासौ दुर्बुद्धिरपि मुच्यति किल्बिषात् ॥ दुःखितो धुंधुमूकोऽसौ दृष्ट्वा पुत्रमवस्थितम् ॥ १९ ॥ जातकर्मादिकं कृत्वा विधिवत्स्वयमेव च ॥ अध्यापयामास च तं विधिनैव द्विजोत्तमाः॥२०॥ तेनाधीतं यथान्यायं धौंधुमूकेन सुव्रताः॥ कृतोद्वाहस्तदा गत्वा गुरुशुश्रूषणे रतः ॥२१॥ अनेनैव मुनिश्रेष्ठा धौंधुमूकेन दुर्मदात् ॥ भुक्त्वान्यां वृषलीं दृष्ट्वा स्वभार्यावद्दिवानिशम् ॥ २२ ॥ एकशय्यासनगतो धौंधुमूको द्विजाधमः ॥ तथा चचार दुर्बुद्धिस्त्यक्त्वा धर्मगतिं पराम् ॥२३ ॥ माध्वी पीता तया सार्धं तेन रागविवृद्धये ॥ केनापि कारणेनैव तामुद्दिश्य द्विजोत्तमाः॥२४॥ निहता सा च पापेन वृषली गतमंगला॥ ततस्तस्यास्तदा तस्य भ्रातृभिर्निहतः पिता ॥ २५ ॥ माता च तस्य दुर्बुद्धेर्धौन्धुमूकस्य शोभना ॥ भार्या च तस्य दुर्बुद्धेः श्यालास्ते चापि सुव्रताः ॥ २६ ॥

शौनकादिसंबुद्धिः ॥ १६ ॥ स पुत्रो मातुः पितुस्तथा आत्मनः स्वस्य अरिष्टं यथा स्यात्तथा संजात उत्पन्न इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१॥ अनेन पूर्वोक्तकारणेनैव दुर्मदाद्धौन्धुमूकेन अन्यां वृषलीं शूद्रीं दृष्ट्वा स्वभार्यावद्दिवानिशं भुक्त्वा स्थितमिति शेषः ॥ २२ ॥ तथा वृषलवदित्यर्थः ॥ २३ ॥ रागविवृद्धये कामोद्दीपनार्थं तां वृषलीमुद्दिश्य केनापि कारणेनैव अन्यागमवित्तलाभादिहेतोरित्यर्थः ॥ २४ ॥ ततो वृषलीवधकारणात्तस्याः भ्रातृभिः तस्य धौंधुमूकस्य पिता निहत इत्यन्वयः ॥ २५ ॥ धौंधुमूकस्य माता भार्या ते श्यालाः पत्नीभ्रातरश्च निहता इति शेषः ॥ २६ ॥

तस्य धौंधुमूकस्य कुलं नष्टं तस्याः वृषल्याश्च कुलं क्षणादहो राज्ञा नष्टमित्यन्वयः । असौ धौंधुमूकश्च येनकेनापि लीलया प्रारब्धगत्या गत्वा तस्माद्देशान्निर्गत्य तं बृहस्पतिं मुनिश्रेष्ठं दृष्ट्वा तत् पाशुपतव्रतं पंचाक्षरं षडक्षरं च लब्ध्वा पृथक् पृथक् लक्षं जप्त्वा विधिना व्रतं च कृत्वा कालधर्मं गतो गाणपत्यमनुप्राप्य रुद्रस्य दयितोऽभवदिति षष्ठेनान्वयः ॥ २७ ॥ कथंभूतं मुनिं पुरा महेश्वराद्देवात् पाशुपतं पशुपतिप्रोक्तं तल्लिंगपूजाव्रतं लब्ध्वा रुद्रजाप्यपरायणं रुद्रजाप्यैकनिष्ठमित्यर्थः ॥ २८ ॥२९॥ कथंभूतं व्रतं द्वादशमासभवं द्वादशमासिकं अत्र " कालात् " इति ठञ् । कथंभूतो धौंधुमूकः कल्पे शास्त्रे यमेन च पूजितो वै ॥ ३० ॥ ३१ ॥ ३२ ॥ तस्मात्पूर्वोक्तकारणादित्यर्थः ॥ ३३ ॥ श्रीरुद्राध्यायमध्यस्थाः प्रागुक्तेन पूर्वभागस्थपंचाशीत्यध्यायोक्तेनेत्यर्थः ॥ ३४ ॥ कथाफलमाह–य इति ॥ ३५ ॥ तु पुनः रुद्रजाप्यमनुत्तमम् । सर्वश्रेष्ठमित्यर्थः ॥ ३६ ॥

राज्ञा क्षणादहो नष्टं कुलं तस्याश्च तस्य च ॥ गत्वासौ धौंधुमूकश्च येन केनापि लीलया ॥ २७ ॥ दृष्ट्वा तु तं मुनिश्रेष्ठं रुद्रजाप्यपरायणम् ॥ लब्ध्वा पाशुपतं तद्वै पुरा देवान्महेश्वरात् ॥ २८ ॥ लब्ध्वा पंचाक्षरं चैव षडक्षरमनुत्तमम् ॥ पुनः पंचाक्षरं चैव जप्त्वा लक्षं पृथक् पृथक् ॥ २९ ॥ व्रतं कृत्वा च विधिना दिव्यं द्वादशमासिकम् ॥ कालधर्मं गतः कल्पे पूजितश्च यमेन वै ॥३०॥ उद्धृता च तथा माता पिता श्यालाश्च सुव्रताः ॥ पत्नी च सुभगा जाता सुस्मिता च पतिव्रता ॥ ३१ ॥ ताभिर्विमानमारुह्य देवैः सेंद्रैरभिष्टुतः ॥ गाणपत्यमनुप्राप्य रुद्रस्य दयितोऽभवत् ॥ ३२ ॥ तस्मादष्टाक्षरान्मंत्रात्तथा वै द्वादशाक्षरात् ॥ भवेत्कोटिगुणं पुण्यं नात्र कार्या विचारणा ॥ ३३ ॥ तस्माज्जपेद्द्विजो नित्यं प्रागुक्तेन विधानतः ॥ शक्तिबीजसमायुक्तं स याति परमां गतिम् ॥३४॥ एतद्वः कथितं सर्वं कथासर्वस्वमुत्तमम् ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ ३५ ॥ स याति ब्रह्मलोकं तु रुद्रजाप्यमनुत्तमम्॥३६॥ इति श्रीलिंगमहापुराणे उत्तरभागे अष्टमोऽध्यायः॥८॥ ऋषय ऊचुः ॥ देवैः पुरा कृतं दिव्यं व्रतं पाशुपतं शुभम् ॥ ब्रह्मणा च स्वयं सूत कृष्णेनाक्लिष्टकर्मणा ॥ १॥ पतितेन च विप्रेण धौंधुमूकेन वै तथा॥ कृत्वा जप्त्वा गतिः प्राप्ता कथं पाशुपतं व्रतम्॥२॥ कथं पशुपतिर्देवः शंकरः परमेश्वरः॥ वक्तुमर्हसि चास्माकं परं कौतूहलं हि नः ॥३॥ सूत उवाच ॥ पुरा शापाद्विनिर्मुक्तो ब्रह्मपुत्रो महायशाः ॥ रुद्रस्य देवदेवस्य मरुदेशादिहागतः ॥ ४ ॥

पतितस्यापि मोक्षदाः ॥ षडक्षरादयो मंत्राः संतु मे शिवतोषदाः ॥ इति श्रीलिंगम०उ०भा० शिवतोषिण्यामष्टमोऽध्यायः ॥ ८ ॥ नवमेऽस्मिन्नृषिप्रश्नः कथं पशुपतिः शिवः ॥ पशवः के तथा पाशा मोक्षः कस्माच्च वर्ण्यते ॥ ऋषयो व्रतं पाशुपतं कथं शंकरः पशुपतिः कथमित्यपृच्छन्– देवैरित्यादिना ॥ १ ॥ २ ॥ ३ ॥ सूतः प्रथमतो द्वितीयप्रश्नोत्तरं सनत्कुमारशैलादिसंवादेन कथयन् संवादं प्रस्तौति–पुरेत्यादिना । ब्रह्मपुत्रः सनत्कुमारः रुद्रस्य शापाद्विनिर्मुक्तः पुरा रुद्रस्य प्रसादादुष्ट्रदेहं त्यक्त्वा मरुदेशात् तत्संज्ञकनिर्जलदेशादिह भारतवर्षे आगत इत्यग्रिमस्थैरन्वयः ॥ ४ ॥

अजस्य ब्रह्मण आज्ञया मेरुपृष्ठे शिलादपुत्रं नंदिनमासाद्य विधानतो नमस्कृत्य मुनिवरोऽनुत्तमं मोक्षधर्मं श्रुत्वा माहेश्वरं पाशुपतव्रतमपृच्छादित्यग्रिमेणान्वयः ॥ ५ ॥ ६ ॥ एनं नंदिनं पुनःपुनः प्रणिपत्य प्रभुः शिवः कथं पशुपतिस्तत्सर्वमस्माकं वक्तुमर्हसि तदा पूर्वोक्तप्रश्नकाले स नंदी आह अब्रवीदित्यर्थः ॥ ७ ॥ उपदेशक्रमं कथयति—तदिति ॥ ८ ॥ सनत्कुमारशैलादिसंवादं कथयति—कथमित्यादिना । नमस्कृत्वेत्यत्र ल्यबभावश्छांदसः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ स एव शंकर एव ज्ञानयोगेन सेवित स्तेषां जीवानां मोचकोऽविद्यापाशग्रंथिभेदक इत्यर्थः । तथा च श्रुतिः "ज्ञानादेव हि कैवल्यम्" इति ॥ १४ ॥ पाशान्कथयति—चतुर्विंशतितत्त्वानीत्यादिना ॥ १५ ॥

त्यक्त्वा प्रसादाद्रुद्रस्य उग्रदेहमजाज्ञया ॥ शिलादपुत्रमासाद्य नमस्कृत्य विधानतः ॥५॥ मेरुपृष्ठे मुनिवरः श्रुत्वा धर्ममनुत्तमम् ॥ माहेश्वरं मुनिश्रेष्ठा ह्यपृच्छच्च पुनःपुनः ॥ ६ ॥ नंदिनं प्रणिपत्यैनं कथं पशुपतिः प्रभुः ॥ वक्तुमर्हसि चास्माकं तत्सर्वं च तदाह सः ॥ ७ ॥ तत्सर्वं श्रुतवान् व्यासः कृष्णद्वैपायनः प्रभुः॥ तस्मादहनुमश्रुत्य युष्माकं प्रवदामि वै॥८॥ सर्वे शृण्वंतु वचनं नमस्कृत्वा महेश्वरम्॥ सनत्कुमार उवाच ॥ कथं पशुपतिर्देवः पशवः के प्रकीर्तिताः ॥ ९ ॥ कैः पाशैस्ते निबध्यंते विमुच्यंते च ते कथम् ॥ शैलादिरुवाच ॥ सनत्कुमार वक्ष्यामि सर्वमेतद्यथातथम् ॥१०॥ रुद्रभक्तस्य शांतस्य तव कल्याणचेतसः ॥ ब्रह्माद्याः स्थावरांताश्च देवदेवस्य धीमतः ॥११॥ पशवः परिकीर्त्यंते संसारवशवर्तिनः ॥ तेषां पतित्वाद्भगवान् रुद्रः पशुपतिः स्मृतः ॥१२॥ अनादिनिधनो धाता भगवान्विष्णुरव्ययः ॥ मायापाशेन बध्नाति पशुवत्परमेश्वरः॥१३॥ स एव मोचकस्तेषां ज्ञानयोगेन सेवितः ॥ अविद्यापाशबद्धानां नान्यो मोचक इष्यते ॥१४॥ तमृते परमात्मानं शंकरं परमेश्वरम् ॥ चतुर्विंशतितत्त्वानि पाशा हि परमेष्ठिनः ॥ १५ ॥ तैः पाशैर्मोचयत्येकः शिवो जीवैरुपासितः ॥ निबध्नाति पशूनेकश्चतुर्विंशतिपाशकैः ॥ १६ ॥ स एव भगवान्रुद्रो मोचयत्यपि सेवितः ॥ दशेंद्रियमयैः पाशैरंतःकरणसंभवैः ॥१७॥ भूततन्मात्रपाशैश्च पशून्मोचयति प्रभुः ॥ इंद्रियार्थमयैः पाशैर्बद्धा विषयिणः प्रभुः ॥१८॥ आशु भक्ता भवंत्येव परमेश्वरसेवया ॥ भज इत्येष धातुर्वै सेवायां परिकीर्तितः ॥ १९ ॥

सर्वकारण ईश एवेत्युपन्यस्यति—निबध्नातीत्यादिना । एकोऽद्वितीयः शिव इत्यर्थः ॥१६॥ चतुर्विंशतिपाशान् कथयति—दशेंद्रियमयैरित्यादिना । अंतःकरणसंभवैः मनोबुद्ध्यहंकारचित्तरूपचतुर्भिरित्यर्थः ॥ १७ ॥ भूततन्मात्रपाशैः शब्दादिपंचगुणैः इंद्रियार्थमयैः पार्थिवादिपंचविषयैरित्यर्थः ॥ १८ ॥ सर्वकारणोऽपि शिवस्तथापि भक्तं भजते महेश्वर इति नियमाद्भक्ता एव मुच्यंते ततो भक्ताः कथं भवन्तीत्याह—आश्विति । भजति निरंतरं सेवत इति भक्तशब्दो यौगिको न तु ओदन इव रूढः अतो धात्वर्थमाह भज इति ॥ १९ ॥

नस्माद्भजधातोः सेवार्थत्वादित्यर्थः ॥ २० ॥ त्रिभिर्गुणमयैः सत्त्वादिभिरित्यर्थः ॥ २१ ॥ वाङ्मनःकायकर्मभिर्भजनं भक्तिरित्युक्ता सा सर्वं च तत्कार्यं मायाकार्यं सर्वकार्यं मखिलप्रपंचस्तस्येनः पतिर्विष्णुः सर्वकार्येणः " पूर्वपदात्संज्ञायाम् " इति णत्वम् । तस्यापि हेतुत्वादैश्वर्यकारणत्वात्पाशानां पूर्वोक्ततत्त्वादीनां छेदे नाशे पटीयसी समर्थेत्यग्रि मेणान्वयः । यद्वा सर्वकार्येणेयं षष्ठ्यर्थे तृतीया । मनश्च वाक्च कायश्चेति द्वंद्वेऽपि अल्पाच्तरत्वाद्वाक्छब्दस्य पूर्वनिपातः ॥ २२ ॥ मानसादिभजनं निरूपयति—सत्य इत्यादिना ॥ २३ ॥ २४ ॥ इदं चतुर्विंशतिपाशरूपमित्यर्थः ॥ २५ ॥ २६ ॥ जीवनिबंधनाच्चतुर्विंशतितत्त्वानि मायाकर्मगुणाः सत्त्वादयः विषयाश्च शब्दादयश्च पाशा इति

तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥ ब्रह्मादिस्तंबपर्यंतं पशून्बद्ध्वा महेश्वरः ॥ २० ॥ त्रिभिर्गुणमयैः पाशैः कार्यं कारयति स्वयम् ॥ दृढेन भक्तियोगेन पशुभिः समुपासितः ॥२१॥ मोचयत्येव तान्सद्यः शंकरः परमेश्वरः॥ भजनं भक्तिरित्युक्ता वाङ्मनःकायकर्मभिः ॥ २२ ॥ सर्वकार्येणहेतुत्वात्पाशच्छेदपटीयसी ॥ सत्यः सर्वग इत्यादि शिवस्य गुणचिंतना ॥२३॥ रूपोपादानचिंता च मानसं भजनं विदुः ॥ वाचिकं भजनं धीराः प्रणवादिजपं विदुः ॥ २४ ॥ कायिकं भजनं सद्भिः प्राणायामादि कथ्यते ॥ धर्माधर्ममयैः पाशैर्बंधनं देहिनामिदम् ॥ २५ ॥ मोचकः शिव एवैको भगवान्परमेश्वरः ॥ चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति ॥२६॥ कीर्त्यंते विषयाश्चेति पाशा जीवनिबंधनात् ॥ तैर्बद्धाः शिवभक्त्यैव मुच्यंते सर्वदेहिनः ॥ २७ ॥ पंचक्लेशमयैः पाशैः पशून्बध्नाति शंकरः ॥ स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ २८ ॥ अविद्यामस्मितां रागं द्वेषं च द्विपदां वराः ॥ वदंत्यभिनिवेशं च क्लेशान्पाशत्वमागतान् ॥ २९ ॥ तमोमोहो महामोहस्तामिस्र इति पंडिताः ॥ अंधतामिस्र इत्याहुरविद्यां पंचधा स्थिताम् ॥ ३० ॥ ताञ्जीवान्मुनिशार्दूलाः सर्वांश्चैवाप्यविद्यया ॥ शिवो मोचयति श्रीमान्नान्यः कश्चिद्विमोचकः ॥ ३१ ॥ अविद्यां तम इत्याहुरस्मितां मोह इत्यपि ॥ महामोह इति प्राज्ञा रागं योगपरायणाः ॥ ३२ ॥

कीर्त्यंत इति पूर्वस्थैरन्वयः । तैः पूर्वोक्तपाशैरित्यर्थः ॥ २७ ॥ " पंचपर्वाविद्यैव मुख्यपाशाः " इति तान्प्रपंचयति—पंचक्लेशमयैरित्यादिना । पंचक्लेशमयैर्योगशास्त्रे क्लेशरूपत्वेनोक्तैरित्यर्थः । तथा च पातंजलसूत्रम् ' अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ' इति ॥ २८ ॥ २९॥ ३० ॥ तांस्तमआदिसंज्ञकाविद्याबद्धानित्यर्थः । नान्यः कश्चिद्विमोचक इत्यसकृदुपदेशो निश्चयदार्ढ्यार्थं ज्ञेयः ॥ ३१ ॥ पंचपर्वाविद्यायाः क्रमशस्तमआदिसंज्ञाः कथयति—अविद्यामित्यादिना । अविद्यां तमः देहादावनात्मन्यात्माभिमान इत्याहुरित्यन्वयः । मोहः देहसंबंधिपुत्रदारादिषु ममता महामोहः शब्दादिरम्यविषयस्पृहा ॥ ३२ ॥

तामिस्रो विषयविघाते क्रोधः अंधतामिस्रः ममतास्पदरक्षणाभिनिवेशः ॥ ३३ ॥ तमआदिभेदा एव नरका अतस्तान्कथयति—तमसोऽष्टविधा इत्यादिना ॥ ३४ ॥ ३५ ॥ शिवस्याविद्यादिसंबंधाभावं कथयाते—अविद्ययेत्यादिना । अंगनिवासिनः सर्वांतर्यामिरूपिण इत्यर्थः । देवस्य विश्वाक्रीडस्य शंभोरस्याविद्यया संबंधः वर्तमानकालिकसंबंधो न अतीतः पूर्वकालीनः अनागतो भविष्यत्कालीनोऽप्यस्य नेत्यन्वयः ॥ ३६ ॥ ३७ ॥ ३८ ॥ कुशलाकुशलैः पुण्यपापात्मकैरित्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अंतकांतको मृत्युनाशकः ॥ ४३ ॥ पुंविशेषेभ्यो निखिलजीवेभ्यः परः श्रेष्ठः चेतनाचेतनाभ्यां चिज्जडाभ्यां युक्तो यः प्रपंचस्तस्मादखिलाद्भगवान् परः श्रेष्ठ इत्यर्थः ॥ ४४ ॥

द्वेषं तामिस्र इत्याहुरंधतामिस्र इत्यपि ॥ तथैवाभिनिवेशं च मिथ्याज्ञानं विवेकिनः ॥ ३३ ॥ तमसोऽष्टविधा भेदा मोहश्चाष्टविधः स्मृतः ॥ महामोहप्रभेदाश्च बुधैर्दश विचिंतिताः ॥ ३४ ॥ अष्टादशविधं चाहुस्तामिस्रं च विचक्षणाः ॥ अंधतामिस्रभेदाश्च तथाष्टादश धा स्मृताः ॥ ३५ ॥ अविद्ययास्य संबंधो नातीतो नास्त्यनागतः ॥ भवेद्रागेण देवस्य शंभोरंगनिवासिनः ॥ ३६ ॥ कालेषु त्रिषु संबंधस्तस्य द्वेषेण नो भवेत् ॥ मायातीतस्य देवस्य स्थाणोः पशुपतेर्विभोः ॥ ३७ ॥ तथैवाभिनिवेशेन संबंधो न कदाचन ॥ शंकरस्य शरण्यस्य शिवस्य परमात्मनः ॥ ३८ ॥ कुशलाकुशलैस्तस्य संबंधो नैव कर्मभिः ॥ भवेत्कालत्रये शंभोरविद्यामतिवर्तिनः ॥ ३९ ॥ विपाकैः कर्मणां वापि न भवेदेव संगमः ॥ कालेषु त्रिषु सर्वस्य शिवस्य शिवदायिनः ॥ ४० ॥ सुखदुःखैरसंस्पृश्यः कालत्रितयवर्तिभिः ॥ स तैर्विनश्वरैः शंभुर्बोधानंदात्मकः परः ॥ ४१ ॥ आशयैरपरामृष्टः कालत्रितयगोचरैः ॥ धियां पतिः स्वभूरेष महादेवो महेश्वरः ॥ ४२ ॥ अस्पृश्यः कर्मसंस्कारैः कालत्रितयवर्तिभिः ॥ तथैव भोगसंस्कारैर्भगवानंतकांतकः ॥ ४३ ॥ पुंविशेषपरो देवो भगवान्परमेश्वरः ॥ चेतनाचेतनायुक्तप्रपंचादखिलात्परः ॥ ४४ ॥ लोके सातिशयत्वेन ज्ञानैश्वर्यं विलोक्यते ॥ शिवेनातिशयत्वेन शिवं प्राहुर्मनीषिणः ॥ ४५ ॥ प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ॥ उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ ४६ ॥ कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ॥ सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥ ४७ ॥ अनादिरेष संबंधो विज्ञानोत्कर्षयोः परः ॥ स्थितयोरीदृशः सर्वः परिशुद्धः स्वभावतः ॥ ४८ ॥ आत्मप्रयोजनाभावे परानुग्रह एव हि ॥ प्रयोजनं समस्तानां कार्याणां परमेश्वरः ॥ ४९ ॥

पूर्वोक्तश्रैष्ठ्ये हेतुमाह—लोक इति ॥ ४५ ॥ "यो ब्रह्माणम्" इति श्रुतेः शिवतात्पर्यकत्वं कथयति—प्रतिसर्गमिति ॥ ४६ ॥ कालावच्छेदयुक्तानां सर्वेषां ब्रह्मादीनां गुरूणामपि असौ शिवो गुरुरुपदेशक इत्यर्थः ॥ ४७ ॥ विशेषेण भक्त्यादिना ज्ञानं यस्य विज्ञानो जीवः उत्कर्षयति स्वस्वरूपतां नयतीत्युत्कर्षः ईशस्तयोः स्थितयोः शरीरे विद्यमानयोरेष सेव्यसेवकभावरूपः संबंधो अनादिः पुरातन इत्यर्थः । सर्वो विश्वरूपोऽपि शिवः परिशुद्धः स्वभावतः निर्मलस्वरूपेण ईदृशः पूर्वोक्तमायादिसंबंधशून्य इत्यर्थः ॥ ४८ ॥ परमेश्वर ईशः आत्मनः स्वस्य प्रयोजनाभावे नित्यानंदरूपत्वात् कार्याभावेऽपि समस्तानां कार्याणां प्रयोजनं कारणमयं परस्य जीवस्यानुग्रह एव हीत्यन्वयः ॥ ४९ ॥

प्रणव ओंकार इत्यर्थः । शिवरुद्रादिशब्दानां मध्ये प्रणवोऽपि परः श्रेष्ठः स्मृत इत्यन्वयः ॥ ५० ॥ प्रणववाच्यस्य शंभोः तज्जपादपि तन्मात्रजपादपीत्यर्थः । या सिद्धिः सा स्वस्मात् प्रणवात्परेणाप्राप्या स्वपराप्राप्यैव भवति अत्र संशयो नेत्यन्वयः ॥ ५१ ॥ परं पाशुपतं शैवं ज्ञानतत्त्वं सर्वेषामनुकंपया देवदेवेनादित्यरूपिशिवेन यत्नतः याज्ञवल्क्य परमतपसा सर्वेषामनुकंपया उक्तमित्यन्वयः ॥ ५२ ॥ ह प्रसिद्धः स सूर्योपदिष्टः याज्ञवल्क्य उवाचैव निश्चयेनोक्तवान् । हे गार्गि अयोगिनः अक्षरं नाशशून्यं यच्छिववस्तु स्थूलं विराड्रूपम् । अनंतमपारं महाश्चर्यमभिवदंति योगिनस्तु प्रत्यक्षत्वान्निषेधमुखेन श्रुतिवद्वर्णयंतीत्याह–अदीर्घमित्यादिना । अदीर्घं लंबत्वशून्यम् । अलोहितमारक्तवर्ण शून्यम् । अमस्तकमुपरिभागशून्यम् । आमायमनस्तमितरूपम् । अत एव उ निश्चयेन पुनः रसं नित्यानंदस्वरूपम् "रसो वै सः" इति श्रुतेः । असंगं स्पर्शशून्यम् । अगंध मरसमचक्षुष्कं रूपशून्यम् । अश्रोत्रं शब्दशून्यम् । अवाङ्मनः वाङ्मनोऽतीतमित्यर्थः । "यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति श्रुतेः । अतेजस्कमदाहकमि त्यर्थः । अप्रमाणमन्यप्रमाणशून्यम् । अनुसुखं सुखकारिणमित्यर्थः । अनामगोत्रं नामगोत्रशून्यम् । अमरं मृतिशून्यम् । अजरं वयोहानिशून्यम् । अनामयं रोगशून्यम् ।

**प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ॥ शिवरुद्रादिशब्दानां प्रणवोपि परः स्मृतः ॥ ५० ॥ शंभोः प्रणववाच्यस्य भावना तज्जपादपि ॥ या सिद्धिः स्वपराप्राप्या भवत्येव न संशयः ॥ ५१ ॥ ज्ञानतत्त्वं प्रयत्नेन योगः पाशुपतः परः ॥ उक्तस्तु देवदेवेन सर्वेषामनुकंपया ॥ ५२ ॥ स होवाचैव याज्ञवल्क्यो यदक्षरं गार्ग्ययोगिनः ॥ अभिवदंति स्थूलमनंतं महाश्चर्यमदीर्घमलोहितममस्तकमामायमत एवो पुनारसमसंगमगंधमरसमचक्षुष्कमश्रोत्रमवाङ्मनोतेजस्कमप्रमाणमनुसुखमनामगोत्रममरमजरमनामयममृतमोंशब्दममृतमसंवृतमपूर्वमनपर मनंतमबाह्यं तदश्नाति किंचन न तदाश्नाति किंचन ॥ ५३ ॥ एतत्कालव्यये ज्ञात्वा परं पाशुपतं प्रभुम् ॥ योगे पाशुपते चास्मिन् यस्यार्थः किल उत्तमे ॥ ५४ ॥ कृत्वोंकारं प्रदीपं मृगय गृहपतिं सूक्ष्ममाद्यंतरस्थं संयम्य द्वारवासं पवनपटुतरं नायकं चेंद्रियाणाम् ॥ वाग्जालैः कस्य हेतोर्विभटसि तु भयं दृश्यते नैव किंचिद्देहस्थं पश्य शंभुं भ्रमसि किमु परे शास्त्रजालेन्धकारे ॥ ५५ ॥**

अमृतं मोक्षरूपम् । ॐशब्दमोंकारशब्दप्रतिपाद्यम् । अमृतं सुधारूपमपि असंवृतमनाच्छादितमित्यर्थः । अपूर्वं पूर्वभागशून्यम् । अनपरमपरभागशून्यम् । अनंतमंतशून्यम् । अबाह्यं बहिर्देशशून्यम् । तत् ब्रह्म किंचन सर्वमश्नाति भुंक्ते नत् ब्रह्मरूपं कर्म किंचन किमपि नाश्नाति न भुंक्त इत्यर्थः ॥ ५३ ॥ अस्मिन्नुत्तमे पाशुपते योगे यस्य पुंसः अर्थः प्रयोजनं किल स पाशुपतं पशुपतिप्रोक्तमेतत्पूर्वोक्तं परं ब्रह्म ज्ञात्वा कालव्यये अंतकाले प्रभुमीशं विशतीति शेषः ॥ ५४ ॥ ननु पूर्वोक्त ईशः कुत्रास्तीत्याशंकायामाह–कृत्वेति । ॐकारं प्रदीपं प्रकाशकं कृत्वा गृहपतिमंतर्यामिणं सूक्ष्ममणीयांसं मृगय अन्वेषयेत्यर्थः । किं कृत्वा द्वारेषु इन्द्रियेषु वसति तद्द्वारवासं पवनाद्वायोरपि पटुतरं वेगवत्तरमिन्द्रियाणां नायकं स्वामिनं मनो नियम्य स्वाधीनं कृत्वेत्यर्थः । कस्य हेतोर्वाग्जालैर्विभटसि विभट इव आचरसि विवादं करोषीत्यर्थः । भयं तु किंचिन्नैव दृश्यते । त्वं देहस्थमेव शंभुं पश्य । परे शास्त्रजालेंधकारे द्वैतादितिमिरे किमु भ्रमसि भ्रांतिं प्राप्नोषीत्यर्थः ॥ ५५ ॥

एवं पूर्वोक्तप्रकारेण शिवेन मुनीनां प्रोक्तमर्थं मुमुक्षुरिति शेषः । सम्यग्बुधैर्ज्ञात्वा विचार्य असमरसमानंदरूपात्मस्वरूपं पंचधा पंचकोशरूपमकृत्वा अभयं मोक्षमात्मनि स्वस्व
रूपे योजयेत्प्राप्नुयादित्यर्थः ॥ ५६ ॥ प्रणवप्रदीपकं न योगिध्येयं सुसूक्ष्मकं रूपम् । दर्शय कृपया मह्यं मयोऽभयदं विकोशकं शंभो ॥ इति श्रीलिंगमहा
पुराणे उत्तरभागे शिवतोषिण्यां टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे वर्ण्यते शंभोर्न बंधः प्राकृतादिकः ॥ आज्ञया सर्वसर्गश्च सर्वकार्यप्रवर्तनम् ॥ सनत्कुमारः पुन
रपि शिवमहिमानं पृच्छति–भूय एवेति ॥ १ ॥ २ ॥ प्राकृतादिबंधाभावं कथयति–नास्येत्यादिना ॥ ३ ॥ ४ ॥ ५ ॥ उपस्थं प्रजननमिंद्रियं पार्ष्विंद्रियमित्यर्थः । भूत
तन्मात्रबंधनं शब्दादिपंचगुणबंधनम् ॥ ६ ॥ शिवस्य पुरुषस्य नियोगात् प्रकृतिर्बुद्धिं सूते उत्पादयतीत्यग्रिमेणान्वयः ॥ ७ ॥ अस्याः प्रकृतेस्तस्य शिवस्य नियोगतः

एवं सम्यग्बुधैर्ज्ञात्वा मुनीनामथ चोक्तं शिवेन ॥ असमरसं पंचधा कृत्वाभयं चात्मनि योजयेत् ॥ ५६ ॥ इति श्रीलिङ्गमहापुराणे उत्त
रभागे नवमोऽध्यायः ॥ ९ ॥ सनत्कुमार उवाच ॥ भूय एव ममाचक्ष्व महिमानमुमापतेः ॥ भवभक्त महाप्राज्ञ भगवन्नंदिकेश्वर ॥१॥
शैलादिरुवाच ॥ सनत्कुमार संक्षेपात्तव वक्ष्याम्यशेषतः ॥ महिमानं महेशस्य भवस्य परमेष्ठिनः ॥ २ ॥ नास्य प्रकृतिबंधोऽभूद्बुद्धि
बंधो न कश्चन ॥ न चाहंकारबंधश्च मनोबंधश्च नोऽभवत् ॥ ३ ॥ चित्तबन्धो न तस्याभूच्छ्रोत्रबंधो न चाभवत् ॥ न त्वचां चक्षुषां वापि
बंधो जज्ञे कदाचन ॥ ४ ॥ जिह्वाबंधो न तस्याभूद्घ्राणबंधो न कश्चन ॥ पादबंधः पाणिबंधो वाग्बंधश्चैव सुव्रत ॥ ५ ॥ उपस्थेंद्रिय
बंधश्च भूततन्मात्रबंधनम् ॥ नित्यशुद्धस्वभावेन नित्यबुद्धो निसर्गतः ॥ ६ ॥ नित्यमुक्त इति प्रोक्तो मुनिभिस्तत्त्ववेदिभिः ॥ अनादि
मध्यनिष्ठस्य शिवस्य परमेष्ठिनः ॥ ७ ॥ बुद्धिं सूते नियोगेन प्रकृतिः पुरुषस्य च ॥ अहंकारं प्रसूतेऽस्या बुद्धिस्तस्य नियोगतः ॥८॥
अंतर्यामीति देहेषु प्रसिद्धस्य स्वयंभुवः॥इंद्रियाणि दशैकं च तन्मात्राणि च शासनात् ॥९॥ अहंकाराऽतिसंभूत शिवस्य परमेष्ठिनः ॥
तन्मात्राणि नियोगेन तस्य संसुवते प्रभोः ॥ १० ॥ महाभूतान्यशेषेण महादेवस्य धीमतः ॥ ब्रह्मादीनां तृणांतं हि देहिनां देहसंग
तिम् ॥ ११ ॥ महाभूतान्यशेषाणि जनयंति शिवाज्ञया ॥ अध्यवस्याति सर्वार्थान्बुद्धिस्तस्याज्ञया विभोः ॥ १२ ॥

उत्पादयतीत्यग्रिमेणान्वयः॥९॥तन्मात्राणि
बुद्धिरहंकारं प्रसूते इत्यन्वयः ॥८॥ दशैकमिंद्रियाणि मनःसहितानि तन्मात्राणि शब्दादिगुणांश्चाहंकारः शिवस्य शासनादतिसंसूते
शब्दादयः विभोर्नियोगेन अशेषेण महाभूतानि गगनादीनि संसुवते उत्पादयंतीत्यग्रिमस्थेनान्वयः ॥ १० ॥ ब्रह्मादीनां तृणांतं हि देहिनां देहसंगतिं शिवाज्ञया अशेषाणि
महाभूतानि जनयंतीत्यग्रिमेणान्वयः॥११॥बुद्ध्यादीनां नियमेन स्वस्वव्यापारप्रवर्तनं शिवाज्ञयैवेति कथयति–अध्यवस्यतीत्यादिना । अध्यवस्याति निश्चयं करोतीत्यर्थः॥१२॥

॥ १३ ॥ चेतयते स्मारयतीत्यर्थः ॥ १४ ॥ १५ ॥ अन्यकार्यासामर्थ्यमपि शिवाज्ञयैवेति कथयति–वचनमित्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ पंचभूतान्यपि शिवाज्ञयैव स्वकार्येषु प्रवर्तंत इत्याह–अवकाशमित्यादिना ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ गरीयसी गुरुतरा पृथ्वी तदाज्ञया चराचराणि

अंतर्यामीति देहेषु प्रसिद्धस्य स्वयंभुवः ॥ स्वभावसिद्धमैश्वर्यं स्वभावादेव भूतयः ॥ १३ ॥ तस्याज्ञया समस्तार्थानहंकारोऽतिमन्यते ॥ चित्तं चेतयते चापि मनः संकल्पयत्यपि ॥ १४ ॥ श्रोत्रं शृणोति तच्छक्त्या शब्दस्पर्शादिकं च यत् ॥ शंभोराज्ञाबलेनैव भवस्य परमेष्ठिनः ॥ १५ ॥ वचनं कुरुते वाक्यं नादानादि कदाचन ॥ शरीराणामशेषाणां तस्य देवस्य शासनात् ॥ १६ ॥ करोति पाणिरादानं न गत्यादि कदाचन ॥ सर्वेषामेव जंतूनां नियमादेव वेधसः ॥ १७ ॥ विहारं कुरुते पादो नोत्सर्गादि कदाचन ॥ समस्तदेहिवृंदानां शिवस्यैव नियोगतः ॥ १८ ॥ उत्सर्गं कुरुते पायुर्न वदेत कदाचन ॥ जंतोर्जातस्य सर्वस्य परमेश्वरशासनात् ॥ १९ ॥ आनंदं कुरुते शश्वदुपस्थं वचनाद्विभोः ॥ सर्वेषामेव भूतानामीश्वरस्यैव शासनात् ॥ २० ॥ अवकाशमशेषाणां भूतानां संप्रयच्छति ॥ आकाशं सर्वदा तस्य परमस्यैव शासनात् ॥ २१ ॥ निर्देशेन शिवस्यैव भेदैः प्राणादिभिर्निजैः ॥ बिभर्त्ति सर्वभूतानां शरीराणि प्रभंजनः ॥ २२ ॥ निर्देशाद्देवदेवस्य सतस्कंधगतो मरुत् ॥ लोकयात्रां वहत्येव भेदैः स्वैरावहादिभिः ॥ २३ ॥ नागाद्यैः पंचभिर्भेदैः शरीरेषु प्रवर्तते ॥ अपदेशेन देवस्य परमस्य समीरणः ॥ २४ ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ पाकं च कुरुते वह्निः शंकरस्यैव शासनात् ॥ २५ ॥ भुक्तमाहारजातं यत्पचते देहिनां तथा ॥ उदरस्थः सदा वह्निर्विश्वेश्वरनियोगतः ॥२६॥ संजीवयंत्यशेषाणि भूतान्यापस्तदाज्ञया ॥ अविलंघ्या हि सर्वेषामाज्ञा तस्य गरीयसी ॥ २७ ॥ चराचराणि भूतानि बिभर्त्यैव तदाज्ञया ॥ आज्ञया तस्य देवस्य देवदेवः पुरंदरः ॥ २८ ॥ जीवतां व्याधिभिः पीडां मृतानां यातनाशतैः ॥ विश्वंभरः सदाकालं लोकैः सर्वैरलंघ्यया ॥ २९ ॥ देवान्पात्यसुरान् हंति त्रैलोक्यमखिलं स्थितः ॥ अधार्मिकाणां वै नाशं करोति शिवशासनात् ॥ ३० ॥

भूतानि बिभर्ति धारयत्येवेति पूर्वस्थेनान्वयः। इंद्रादयोऽपि देवाः शिवाज्ञयैव स्वाधिकारेषु प्रवर्तंत इत्याह–आज्ञयेत्यादिना। पुरंदर इंद्रः सर्वभूतानि बिभर्ति पालयतीत्यस्य देहलीदीपन्यायेनात्रान्वयः। जीवतां व्याधिभिर्मृतानां यातनाशतैः पीडां यमः प्रयच्छतीति शेषमादायाग्रिमेणान्वयः॥ २८ ॥ विश्वंभरो विष्णुः ॥ २९ ॥ ३० ॥

॥ ३१ ॥ वित्तेश्वरः कुबेरः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ शास्त्रेषु अनुशासनेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ कव्याशिनां पितॄणां सिंधवो नद्यः " सिंधुः समुद्रे नद्यां च " इति विश्वः ॥ ३८ ॥ ३९ ॥ ४० ॥ देवानां जातयोऽष्टौ विद्याधरादयः तिरश्चां पंच पश्वादयः ॥ ४१ ॥ चतुर्दशसु योनिषु पूर्वोक्तदेवादिष्वित्यर्थः । जातानि सर्वलोकनिषण्णानि भूतवृंदानि अस्य शिवस्यैव शासनात्तिष्ठंतीत्यन्वयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ शेषाणि किंचिदवशिष्टानि ब्रह्मांडानि तथा सावरणानि जलाद्यावरणयुक्तानि सर्वभूताद्यै

वरुणः सलिलैर्लोकान्संभावयति शासनात् ॥ मज्जयत्याज्ञया तस्य पाशैर्बध्नाति चासुरान् ॥ ३१ ॥ पुण्यानुरूपं सर्वेषां प्राणिनां संप्रयच्छति ॥ वित्तं वित्तेश्वरस्तस्य शासनात्परमेष्ठिनः ॥ ३२॥ उदयास्तमये कुर्वन्कुरुते कालमाज्ञया॥ आदित्यस्तस्य नित्यस्य सत्यस्य परमात्मनः ॥ ३३ ॥ पुष्पाण्यौषधिजातानि प्रह्लादयति च प्रजाः ॥ अमृतांशुः कलाधारः कालकालस्य शासनात् ॥ ३४ ॥ आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा ॥ अन्याश्च देवताः सर्वास्तच्छासनविनिर्मिताः ॥३५॥ गंधर्वा देवसंघाश्च सिद्धाः साध्याश्च चारणाः ॥ यक्षरक्षःपिशाचाश्च स्थिताः शास्त्रेषु वेधसः ॥ ३६ ॥ ग्रहनक्षत्रताराश्च यज्ञा वेदास्तपांसि च ॥ ऋषीणां च गणाः सर्वे शासनं तस्य धिष्ठिताः ॥३७॥ कव्याशिनां गणाः सप्तसमुद्रा गिरिसिंधवः॥ शासने तस्य वर्तन्ते काननानि सरांसि च ॥३८॥ कलाः काष्ठा निमेषाश्च मुहूर्ता दिवसाः क्षपाः ॥ ऋत्वब्दपक्षमासाश्च नियोगात्तस्य धिष्ठिताः ॥ ३९ ॥ युगमन्वंतराण्यस्य शंभोस्तिष्ठंति शासनात् ॥ पराश्चैव परार्धाश्च कालभेदास्तथापरे ॥ ४० ॥ देवानां जातयश्चाष्टौ तिरश्चां पंच जातयः ॥ मनुष्याश्च प्रवर्तंते देवदेवस्य धीमतः ॥ ४१ ॥ जातानि भूतवृंदानि चतुर्दशसु योनिषु ॥ सर्वलोकनिषण्णानि तिष्ठंत्यस्यैव शासनात् ॥ ४२ ॥ चतुर्दशसु लोकेषु स्थिता जाताः प्रजाः प्रभोः ॥ सर्वेश्वरस्यं तस्यैव नियोगवशवर्तिनः ॥४३॥ पातालानि समस्तानि भुवनान्यस्य शासनात् ॥ ब्रह्मांडानि च शेषाणि तथा सावरणानि च ॥ ४४ ॥ वर्तमानानि सर्वाणि ब्रह्मांडानि तदाज्ञया ॥ वर्तंते सर्वभूताद्यैः समेतानि समंततः ॥ ४५ ॥ अतीतान्यप्यसंख्यानि ब्रह्मांडानि तदाज्ञया ॥ प्रवृत्तानि पदार्थौघैः सहितानि समंततः ॥ ४६ ॥

ब्रह्मविष्णुरुद्रैः समेतानि युक्तानि वर्तमानान्युत्पद्यमानानि सर्वाणि ब्रह्मांडानि तस्य शिवस्याज्ञया वर्तंत इति पूर्वस्यैवान्वयः ॥ ४५ ॥ प्रवृत्तान्युत्पन्नान्यसंख्यानि ब्रह्मांडान्यपि तदाज्ञया अतीतानि गतानीत्यन्वयः ॥ ४६ ॥

भविष्यंत्यग्रिमकालिकानि ब्रह्मांडान्यात्मकैः स्वकीयैर्वस्तुभिः सह शिवस्याज्ञां करिष्यंतीत्यन्वयः ॥ ४७ ॥ बुद्ध्यादितत्त्वजनकं स्वस्वव्यापारयोजकं शंभुम् । निखिलब्रह्मांडाना मीशं सर्वार्थदं वंदे ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां दशमोऽध्यायः ॥ १०॥ एकादशेऽस्मिन्नध्याये विभूतीः शिवयोः पृथक् । महिमा लिंगपूजायाश्चोच्यते भक्तिवर्धनः ॥ सनत्कुमारः शिवयोः श्रेष्ठविभूतीः पृच्छति–विभूतीरिति । शिवयोरुमामहेश्वरयोरित्यर्थः । परमेश्वरः शिवो भावितः प्राप्तो येन ॥ १॥२ ॥ शिवयोर्मुख्य

ब्रह्मांडानि भविष्यंति सह वस्तुभिरात्मकैः ॥ करिष्यंति शिवस्याज्ञां सर्वैरावरणैः सह ॥४७॥ इति श्रीलिंगमहापुराणे उत्तरभागे दशमोऽध्यायः ॥ १० ॥ सनत्कुमार उवाच ॥ विभूतीः शिवयोर्मह्यमाचक्ष्व त्वं गणाधिप ॥ परापरविदां श्रेष्ठ परमेश्वरभावित ॥ १ ॥ नंदिकेश्वर उवाच ॥ हंत ते कथयिष्यामि विभूतीः शिवयोरहम् ॥ सनत्कुमार योगींद्र ब्रह्मणस्तनयोत्तम ॥२॥ परमात्मा शिवः प्रोक्तः शिवा सा च प्रकीर्तिता ॥ शिवमेवेश्वरं प्राहुर्मायां गौरीं विदुर्बुधाः ॥३ ॥ पुरुषं शंकरं प्राहुर्गौरीं च प्रकृतिं द्विजाः ॥ अर्थः शंभुः शिवा वाणी दिवसोऽजः शिवा निशा ॥ ४ ॥ सप्ततंतुर्महादेवो रुद्राणी दक्षिणा स्मृता ॥ आकाशं शंकरो देवः पृथिवी शंकरप्रिया ॥ ५ ॥ समुद्रो भगवान् रुद्रो वेला शैलेन्द्रकन्यका ॥ वृक्षः शूलायुधो देवः शूलपाणिप्रिया लता ॥६॥ ब्रह्मा हरोऽपि सावित्री शंकरार्धशरीरिणी ॥ विष्णुर्महेश्वरो लक्ष्मीर्भवानी परमेश्वरी ॥७॥ वज्रपाणिर्महादेवः शची शैलेंद्रकन्यका ॥ जातवेदाः स्वयं रुद्रः स्वाहा शर्वार्धकायिनी ॥८॥यमस्त्रियंबको देवस्तत्प्रिया गिरिकन्यका ॥ वरुणो भगवान् रुद्रो गौरी सर्वार्थदायिनी ॥९॥ बालेंदुशेखरो वायुः शिवा शिवमनोरमा॥ चंद्रार्धमौलिर्यक्षेंद्रः स्वयमृद्धिः शिवा स्मृता ॥ १० ॥ चंद्रार्धशेखरश्चंद्रो रोहिणी रुद्रवल्लभा ॥ सप्तसप्तिः शिवः कांता उमादेवी सुवर्चला ॥ ११॥ षण्मुखस्त्रिपुरध्वंसी देवसेना हरप्रिया ॥ उमा प्रसूतीर्वै ज्ञेया दक्षो देवो महेश्वरः ॥ १२ ॥ पुरुषाख्यो मनुः शंभुः शतरूपा शिवप्रिया ॥ विदुर्भवानीमाकूतिं रुचिं च परमेश्वरम्॥१३॥ भृगुर्भगाक्षिहा देवः ख्यातिस्त्रिनयनप्रियः॥ मरीचिर्भगवान्रुद्रः संभूतिर्वल्लभा विभोः॥१४॥ विदुर्भवानीं रुचिरां कविं च परमेश्वरम् ॥ गंगाधरोंऽगिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥ १५ ॥

रूपं प्रथमत आह–परमात्मेति । परमात्मा शिवः कल्याणरूपः प्रोक्तः सा श्रद्धा श्रद्धैवास्य शुभा पत्नीत्युक्ता । शिवा कल्याणरूपिणी प्रकीर्तितेत्यन्वयः ॥ ३ ॥ दिवसः अजः शिव इत्यर्थः ॥ ४ ॥ सप्ततंतुर्यज्ञ इत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ जातवेदा अग्निः ॥ ८ ॥ ९ ॥ १० ॥ सप्तसप्तिः सूर्यः ॥११॥१२॥१३॥१४॥ कविं शुक्रमित्यर्थः॥१५॥

॥ १६ ॥ १७ ॥ विशेषविभूतीरुक्त्वा सामान्याः कथयति– शंकर इत्यादिना ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ द्वंद्वसत्त्वं भिन्नसत्तामित्यर्थः ॥ २३ ॥ २४ ॥ विषयित्वं विषयास्वादकत्वम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ मंतव्यवस्तुतां विचार्य वस्तुतां मंता विचारयितेत्यर्थः ॥ २९ ॥ ३० ॥ पीठाकृतिर्वेदीरूपा लिंगरूपो लिंगा

पुलस्त्यः शशभृन्मौलिः प्रीतिः कांता पिनाकिनः ॥ पुलहस्त्रिपुरध्वंसी दया कालरिपुप्रिया ॥ १६ ॥ क्रतुर्दक्षक्रतुध्वंसी संनतिर्दयिता विभोः ॥ त्रिनेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥ १७ ॥ ऊर्जामाहुरुमां वृद्धां वसिष्ठं च महेश्वरम् ॥ शंकरः पुरुषाः सर्वे स्त्रियः सर्वा महेश्वरी ॥ १८ ॥ पुल्लिंगशब्दवाच्या ये ते च रुद्राः प्रकीर्तिताः ॥ स्त्रीलिंगशब्दवाच्या याः सर्वा गौर्या विभूतयः ॥ १९ ॥ सर्वे स्त्रीपुरुषाः प्रोक्तास्तयोरेव विभूतयः ॥ पदार्थशक्तयो यायास्ता गौरीति विदुर्बुधाः ॥ २० ॥ सासा विश्वेश्वरी देवी स च सर्वो महेश्वरः ॥ शक्तिमंतः पदार्था ये स च सर्वो महेश्वरः ॥ २१ ॥ अष्टौ प्रकृतयो देव्या मूर्तयः परिकीर्तिताः ॥ तथा विकृतयस्तस्या देहबद्धविभूतयः ॥ २२ ॥ विस्फुलिंगा यथा तावदग्नौ च बहुधा स्मृताः ॥ जीवाः सर्वे तथा शर्वो द्वंद्वसत्त्वमुपागतः ॥ २३ ॥ गौरीरूपाणि सर्वाणि शरीराणि शरीरिणाम्॥शरीरिणस्तथा सर्वे शंकरांशा व्यवस्थिताः ॥२४॥ श्राव्यं सर्वमुमारूपं श्रोता देवो महेश्वरः ॥ विषयित्वं विभुर्धत्ते विषयात्मकतामुमा॥२५॥स्प्रष्टव्यं वस्तुजातं तु धत्ते शंकरवल्लभा ॥ स्प्रष्टा स एव विश्वात्मा बालचंद्रार्धशेखरः॥२६॥दृश्यवस्तु प्रजारूपं बिभर्ति भुवनेश्वरी ॥ द्रष्टा विश्वेश्वरो देवः शशिखंडशिखामणिः ॥ २७ ॥ रसजातमुमारूपं घ्रेयजातं च सर्वशः ॥ देवो रसयिता शंभुर्घ्राता च भुवनेश्वरः ॥ २८ ॥ मंतव्यवस्तुतां धत्ते महादेवी महेश्वरी ॥ मंता स एव विश्वात्मा महादेवो महेश्वरः ॥ २९ ॥ बोद्धव्यं वस्तुरूपं च बिभर्ति भववल्लभा ॥ देवः स एव भगवान् बोद्धा बालेन्दुशेखरः ॥ ३० ॥ पीठाकृतिरुमा देवी लिंगरूपश्च शंकरः ॥ प्रतिष्ठाप्य प्रयत्नेन पूजयंति सुरासुराः ॥३१॥ येये पदार्था लिंगांकास्तेते शर्वविभूतयः ॥ अर्था भगांकिता येये तेते गौर्या विभूतयः॥३२॥ स्वर्गपाताललोकांतब्रह्मांडावरणाष्टकम् ॥ ज्ञेयं सर्वमुमारूपं ज्ञाता देवो महेश्वरः ॥ ३३ ॥ बिभर्ति क्षेत्रतां देवी त्रिपुरांतकवल्लभा ॥ क्षेत्रज्ञत्वमथो धत्ते भगवानंधकांतकः ॥ ३४ ॥

कृतिरित्यर्थः । तौ लिंगवेदीरूपाविति शेषः । प्रयत्नेन सुरासुराः प्रतिष्ठाप्य पूजयंतीत्यन्वयः ॥ ३१ ॥ लिंगांकाः पुरुषचिह्नाः भगांकाः स्त्रीचिह्ना इत्यर्थः ॥ ३२ ॥ ३३ ॥ क्षेत्रतां लिंगशरीररूपतां क्षेत्रज्ञत्वं जीवरूपत्वमित्यर्थः ॥ ३४ ॥

भविष्यंत्यग्रिमकालिकानि ब्रह्मांडान्यात्मकैः स्वकीयैर्वस्तुभिः सह शिवस्याज्ञां करिष्यंतीत्यन्वयः ॥ ४७ ॥ बुद्ध्यादितत्त्वजनकं स्वस्वव्यापारयोजकं शंभुम् । निखिलब्रह्मांडाना मीशं सर्वार्थदं वंदे ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशेऽस्मिन्नध्याये विभूतीः शिवयोः पृथक् । महिमा लिंगपूजायाश्चोच्यते भक्तिवर्धनः ॥ सनत्कुमारः शिवयोः श्रेष्ठविभूतीः पृच्छति–विभूतीरिति । शिवयोरुमामहेश्वरयोरित्यर्थः । परमेश्वरः शिवो भावितः प्राप्तो येन ॥ १ ॥ २ ॥ शिवयोर्मुख्य

ब्रह्मांडानि भविष्यंति सह वस्तुभिरात्मकैः ॥ करिष्यंति शिवस्याज्ञां सर्वैरावरणैः सह ॥४७॥ इति श्रीलिंगमहापुराणे उत्तरभागे दशमोऽध्यायः ॥ १० ॥ सनत्कुमार उवाच ॥ विभूतीः शिवयोर्मह्यमाचक्ष्व त्वं गणाधिप ॥ परापरविदां श्रेष्ठ परमेश्वरभावित ॥ १ ॥ नंदिकेश्वर उवाच ॥ हंत ते कथयिष्यामि विभूतीः शिवयोरहम् ॥ सनत्कुमार योगींद्र ब्रह्मणस्तनयोत्तम ॥२॥ परमात्मा शिवः प्रोक्तः शिवा सा च प्रकीर्तिता ॥ शिवमेवेश्वरं प्राहुर्मायां गौरीं विदुर्बुधाः ॥३ ॥ पुरुषं शंकरं प्राहुर्गौरीं च प्रकृतिं द्विजाः ॥ अर्थः शंभुः शिवा वाणी दिवसोऽजः शिवा निशा ॥ ४ ॥ सप्ततंतुर्महादेवो रुद्राणी दक्षिणा स्मृता ॥ आकाशं शंकरो देवः पृथिवी शंकरप्रिया ॥ ५ ॥ समुद्रो भगवान् रुद्रो वेला शैलेन्द्रकन्यका ॥ वृक्षः शूलायुधो देवः शूलपाणिप्रिया लता ॥६॥ ब्रह्मा हरोपि सावित्री शंकरार्धशरीरिणी ॥ विष्णुर्महेश्वरो लक्ष्मीर्भवानी परमेश्वरी ॥७॥ वज्रपाणिर्महादेवः शची शैलेंद्रकन्यका ॥ जातवेदाः स्वयं रुद्रः स्वाहा शर्वार्धकायिनी ॥८॥यमस्त्रियंबको देवस्तत्प्रिया गिरिकन्यका ॥ वरुणो भगवान् रुद्रो गौरी सर्वार्थदायिनी ॥९॥ बालेंदुशेखरो वायुः शिवा शिवमनोरमा॥ चंद्रार्धमौलिर्यक्षेंद्रः स्वयमृद्धिः शिवा स्मृता ॥ १० ॥ चंद्रार्धशेखरश्चंद्रो रोहिणी रुद्रवल्लभा ॥ सप्तसप्तिः शिवः कांता उमादेवी सुवर्चला ॥११॥ षण्मुखस्त्रिपुरध्वंसी देवसेना हरप्रिया ॥ उमा प्रसूतीर्विज्ञेया दक्षो देवो महेश्वरः ॥ १२ ॥ पुरुषाख्यो मनुः शंभुः शतरूपा शिवप्रिया ॥ विदुर्भवानीमाकूतिं रुचिं च परमेश्वरम्॥१३॥ भृगुर्भगाक्षिहा देवः ख्यातिस्त्रिनयनप्रियः॥ मरीचिर्भगवान्रुद्रः संभूतिर्वल्लभा विभोः॥१४॥ विदुर्भवानीं रुचिरां कविं च परमेश्वरम् ॥ गंगाधरोंगिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥ १५ ॥

रूपं प्रथमत आह–परमात्मेति । परमात्मा शिवः कल्याणरूपः प्रोक्तः सा श्रद्धा श्रद्धैवास्य शुभा पत्नीत्युक्ता । शिवा कल्याणरूपिणी प्रकीर्तितेत्यन्वयः ॥ ३ ॥ दिवसः अजः शिव इत्यर्थः ॥ ४ ॥ सप्ततंतुर्यज्ञ इत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ जातवेदा अग्निः ॥ ८ ॥ ९ ॥ १० ॥ सप्तसप्तिः सूर्यः ॥११॥१२॥१३॥१४॥ कविं शुक्रमित्यर्थः॥१५॥

॥ १६ ॥ १७ ॥ विशेषविभूतीरुक्त्वा सामान्याः कथयति– शंकर इत्यादिना ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ द्वंद्वसत्त्वं भिन्नसत्तामित्यर्थः ॥ २३ ॥ २४ ॥ विषयित्वं विषयास्वादकत्वम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ मंतव्यवस्तुतां विचार्य वस्तुतां मंता विचारयितेत्यर्थः ॥ २९ ॥ ३० ॥ पीठाकृतिर्वेदीरूपा लिंगरूपो लिंगा

पुलस्त्यः शशभृन्मौलिः प्रीतिः कांता पिनाकिनः ॥ पुलहस्त्रिपुरध्वंसी दया कालरिपुप्रिया ॥ १६ ॥ क्रतुर्दक्षक्रतुध्वंसी संनतिर्दयिता विभोः ॥ त्रिनेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥ १७ ॥ ऊर्जामाहुरुमां वृद्धां वसिष्ठं च महेश्वरम् ॥ शंकरः पुरुषाः सर्वे स्त्रियः सर्वा महेश्वरी ॥ १८ ॥ पुल्लिंगशब्दवाच्या ये ते च रुद्राः प्रकीर्तिताः ॥ स्त्रीलिंगशब्दवाच्या याः सर्वा गौर्या विभूतयः ॥ १९ ॥ सर्वे स्त्रीपुरुषाः प्रोक्तास्तयोरेव विभूतयः ॥ पदार्थशक्तयो यायास्ता गौरीति विदुर्बुधाः ॥ २० ॥ सासा विश्वेश्वरी देवी स च सर्वो महेश्वरः ॥ शक्तिमंतः पदार्था ये स च सर्वो महेश्वरः ॥ २१ ॥ अष्टौ प्रकृतयो देव्या मूर्तयः परिकीर्तिताः ॥ तथा विकृतयस्तस्या देहबद्धविभूतयः ॥ २२ ॥ विस्फुलिंगा यथा तावदग्नौ च बहुधा स्मृताः ॥ जीवाः सर्वे तथा शर्वो द्वंद्वसत्त्वमुपागतः ॥ २३ ॥ गौरीरूपाणि सर्वाणि शरीराणि शरीरिणाम् ॥ शरीरिणस्तथा सर्वे शंकरांशा व्यवस्थिताः ॥ २४ ॥ श्राव्यं सर्वमुमारूपं श्रोता देवो महेश्वरः ॥ विषयित्वं विभुर्धत्ते विषयात्मकताभुमा ॥ २५ ॥ स्प्रष्टव्यं वस्तुजातं तु धत्ते शंकरवल्लभा ॥ स्प्रष्टा स एव विश्वात्मा बालचंद्रार्धशेखरः ॥ २६ ॥ दृश्यवस्तु प्रजारूपं बिभर्ति भुवनेश्वरी ॥ द्रष्टा विश्वेश्वरो देवः शशिखंडशिखामणिः ॥ २७ ॥ रसजातमुमारूपं घ्रेयजातं च सर्वशः ॥ देवो रसयिता शंभुर्घ्राता च भुवनेश्वरः ॥ २८ ॥ मंतव्यवस्तुतां धत्ते महादेवी महेश्वरी ॥ मंता स एव विश्वात्मा महादेवो महेश्वरः ॥ २९ ॥ बोद्धव्यं वस्तुरूपं च बिभर्ति भववल्लभा ॥ देवः स एव भगवान् बोद्धा बालेन्दुशेखरः ॥ ३० ॥ पीठाकृतिरुमा देवी लिंगरूपश्च शंकरः ॥ प्रतिष्ठाप्य प्रयत्नेन पूजयंति सुरासुराः ॥ ३१ ॥ येये पदार्था लिंगांकास्तेते शर्वविभूतयः ॥ अर्था भगांकिता येये तेते गौर्या विभूतयः ॥ ३२ ॥ स्वर्गपाताललोकांतब्रह्मांडावरणाष्टकम् ॥ ज्ञेयं सर्वमुमारूपं ज्ञाता देवो महेश्वरः ॥ ३३ ॥ बिभर्ति क्षेत्रतां देवी त्रिपुरांतकवल्लभा ॥ क्षेत्रज्ञत्वमथो धत्ते भगवानंधकांतकः ॥ ३४ ॥

कृतिरित्यर्थः । तौ लिंगवेदीरूपाविति शेषः । प्रयत्नेन सुरासुराः प्रतिष्ठाप्य पूजयंतीत्यन्वयः ॥ ३१ ॥ लिंगांकाः पुरुषचिह्नाः भगांकाः स्त्रीचिह्ना इत्यर्थः ॥ ३२ ॥ ३३ ॥ क्षेत्रतां लिंगशरीररूपतां क्षेत्रज्ञत्वं जीवरूपत्वमित्यर्थः ॥ ३४ ॥

सर्वविभूतिभ्यः पूजन सर्वेदिलिंगविभूतेः श्रैष्ठ्यात्तथा सर्वदा सौकर्यातिशयात्तन्माहात्म्यं कथयति–शिवलिंगमित्यादिना। शिवलिंगं समुत्सृज्य त्यक्त्वा अन्यदेवताः यद्राष्ट्रे इति शेषः। यजंते स नृपः देशेन तद्वासिजनैः सह रौरवं नरकं व्रजेदित्यन्वयः ॥ ३५ ॥ राज्ञोऽन्यभक्तस्य दृष्टांतमाह–स्वपतिमिति ॥ ३६ ॥ राज्ञां प्राप्तराज्यत्वात्तेषां लिंगपूजया किमिति चोदित्याकांक्षायामाह–ब्रह्मादयोऽपीति ॥ ३७ ॥ विष्णुनापि ब्रह्मणः सुतं ब्राह्मणपुत्रं रावणं हत्वा नदीपतेः समुद्रस्य तीरे लिंगं स्थापितमित्यनेन लिंगस्थापनस्य महापातकनाशकत्वं सूचितम्। रामेश्वरपूजा तु रामायणादौ सेतुबंधकाले उक्ता तथाप्यत्र रावणवधोत्तरमित्युक्तत्वात्तल्लिंगस्य स्थिरार्चनादिकमग्रे कृतं बोध्यम् ॥३८॥ रुद्राश्रितमाहात्म्यं कथयति–कृत्वेति ॥३९॥ मुमुक्षोः लिंगार्चनमेवावश्यकमिति कथयति–सर्व इति॥४०॥ श्रेयोर्थिभिः शिवावेव भजनीयावित्याह–सर्वाकारावेति ॥ ४१ ॥

शिवलिंगं समुत्सृज्य यजन्ते चान्यदेवताः ॥ स नृपः सह देशेन रौरवं नरकं व्रजेत्॥३५॥ शिवभक्तो न यो राजा भक्तोऽन्येषु सुरेषु यः ॥ स्वपतिं युवतिस्त्यक्त्वा यथा जारेषु राजते ॥ ३६ ॥ ब्रह्मादयः सुराः सर्वे राजानश्च महर्द्धिकाः ॥ मानवा मुनयश्चैव सर्वे लिंगं यजंति च ॥ ३७ ॥ विष्णुना रावणं हत्वा ससैन्यं ब्रह्मणः सुतम् ॥ स्थापितं विधिवद्भक्तया लिंगं तीरे नदीपतेः ॥ ३८ ॥ कृत्वा पापसहस्राणि हत्वा विप्रशतं तथा ॥ भावात्समाश्रितो रुद्रं मुच्यते नात्र संशयः ॥ ३९ ॥ सर्वे लिंगमया लोकाः सर्वे लिंगे प्रतिष्ठिताः ॥ तस्मादभ्यर्चयेल्लिंगं यदीच्छेच्छाश्वतं पदम् ॥ ४० ॥ सर्वाकारौ स्थितावेतौ नरैः श्रेयोऽर्थिभिः शिवौ ॥ पूजनीयौ नमस्कार्यौ चिंतनीयौ च सर्वदा ॥ ४१ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे एकादशोऽध्यायः ॥ ११ ॥ सनत्कुमार उवाच ॥ मूर्तयोऽष्टौ ममाचक्ष्व शंकरस्य महात्मनः ॥ विश्वरूपस्य देवस्य गणेश्वर महामते ॥ १ ॥नंदिकेश्वर उवाच ॥ हंत ते कथयिष्यामि महिमानमुमापतेः ॥ विश्वरूपस्य देवस्य सरोजभवसंभव ॥२॥ भूरापोग्निर्मरुद्व्योम भास्करो दीक्षितः शशी ॥ भवस्य मूर्तयः प्रोक्ताः शिवस्य परमेष्ठिनः ॥३॥ खात्मेंदुवह्निसूर्याभोधराः पवन इत्यपि ॥ तस्याष्ट मूर्तयः प्रोक्ता देवदेवस्य धीमतः ॥ ४ ॥ अग्निहोत्रेर्पिते तेन सूर्यात्मनि महात्मनि ॥ तद्विभूतीस्तथा सर्वे देवास्तृप्यंति सर्वदाः ॥ ५ ॥

य आत्मरूपो भगवान् शिवायुतो विशिष्टरूपाभिविभूतिभिर्युतम्। विधाय विश्वं रमते स्म लीलया शिवोऽस्तु तुष्टो मयि लिंगपूजया ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां उत्तरभागे एकादशोऽध्यायः ॥ ११ ॥ लिंगोत्तरे द्वादशेस्मिन्मूर्तयोऽष्टौ महेशितुः। विशेषेण प्रकीर्त्यंते विश्वोत्पादानकारणाः ॥ सनत्कुमारः शिवाष्टमूर्तीः पृच्छति–मूर्तय इति ॥ १ ॥ २ ॥ मूर्तीः क्रमशः कथयति–भूराप इति। दीक्षितो यजमान इत्यर्थः ॥ ३ ॥ अन्यं क्रमं दर्शयति–खात्मेति। आत्मा जीव इत्यर्थः ॥ ४ ॥ तेन शिवस्याष्टमूर्तित्वेन अग्निहोत्रे सूर्यात्मनि सूर्यरूपे महात्मनि परमात्मनि अर्पिते सति तथा वृक्षशाखोपशाखासदृशास्तद्विभूतीस्तदंशाः सर्वदास्तृप्यंतीत्यन्वयः ॥ ५ ॥

पूर्वोक्तं सदृष्टांतं कथयति—वृक्षस्येति ॥ ६ ॥ प्रथमतः सूर्यमूर्तिं निरूपयति—तस्येत्यादिना । तस्य शिवस्येत्यर्थः ॥ ७ ॥ अमृताख्या चंद्रसंज्ञेत्यर्थः ॥ ८ ॥ तस्य सूर्यस्य चंद्राख्यकिरणा ओषधीनां विवृद्ध्यर्थं हिमसहिता वृष्टिर्हिमवृष्टिस्तां वितन्वते विस्तारयंतीत्यर्थः ॥ ९ ॥ सस्यानां धान्यानां पाकः पक्वता तदादिकारणं हेतुमित्यर्थः ॥ १० ॥ आदित्यकिरणैरेव ग्रहनक्षत्राणां दीप्तिरतस्तत्पोषकाविशिष्टाकिरणान्कथयति—दिवाकर इत्यादिना ॥ ११ ॥ १२॥ १३ ॥ १४ ॥ १५ ॥ श्रीशंकरं भजे ॥ १६ ॥ १७ ॥

वृक्षस्य मूलसेकेन यथा शाखोपशाखिकाः ॥ तथा तस्यार्चया देवास्तथा स्युस्तद्विभूतयः ॥ ६ ॥ तस्य द्वादशधा भिन्नं रूपं सूर्यात्मकं प्रभोः ॥ सर्वदेवात्मकं याज्यं यजंति मुनिपुंगवाः ॥ ७ ॥ अमृताख्या कला तस्य सर्वस्यादित्यरूपिणः ॥ भूतसंजीवनी चेष्टा लोकोस्मिन् पीयते सदा ॥ ८ ॥ चंद्राख्यकिरणास्तस्य धूर्जटेर्भास्करात्मनः ॥ ओषधीनां विवृद्ध्यर्थं हिमवृष्टिं वितन्वते ॥ ९ ॥ शुक्राख्या रश्मयस्तस्य शंभोर्मार्तंडरूपिणः ॥ घर्मं वितन्वते लोके सस्यपाकादिकारणम् ॥ १० ॥ दिवाकरात्मनस्तस्य हरिकेशाह्वयः करः॥ नक्षत्रपोषकश्चैव प्रसिद्धः परमेष्ठिनः ॥ ११॥ विश्वकर्माह्वयस्तस्य किरणो बुधपोषकः ॥ सर्वेश्वरस्य देवस्य सप्तसप्तिस्वरूपिणः ॥ १२ ॥ विश्वव्यच इति ख्यातः किरणस्तस्य शूलिनः ॥ शुक्रपोषकभावेन प्रतीतः सूर्यरूपिणः ॥ १३ ॥ संयद्वसुरिति ख्यातो यस्य रश्मिस्त्रिशूलिनः ॥ लोहितांगं प्रपुष्णाति सहस्रकिरणात्मनः ॥ १४ ॥ अर्वावसुरिति ख्यातो रश्मिस्तस्य पिनाकिनः ॥ बृहस्पतिं प्रपुष्णाति सर्वदा तपनात्मनः ॥ १५ ॥ स्वराडिति समाख्यातः शिवस्यांशुः शनैश्चरम् ॥ हरिदश्वात्मनस्तस्य प्रपुष्णाति दिवानिशम् ॥ १६ ॥ सूर्यात्मकस्य देवस्य विश्वयोनेरुमापतेः ॥ सुषुम्णाख्यः सदा रश्मिः पुष्णाति शिशिरद्युतिम् ॥ १७ ॥ सौम्यानां वसुजातानां प्रकृतित्वमुपागता ॥ तस्य सोमाह्वया मूर्तिः शंकरस्य जगद्गुरोः॥१८॥तस्य सोमात्मकं रूपं शुक्रत्वेन व्यवस्थितम् ॥ शरीरभाजां सर्वेषां देवस्यांतकशासिनः ॥ १९ ॥ शरीरिणामशेषाणां मनस्येव व्यवस्थितम् ॥ वपुः सोमात्मकं शंभोस्तस्य सर्वजगद्गुरोः ॥ २० ॥ शंभोः षोडशधा भिन्ना स्थितामृतकलात्मनः ॥ सर्वभूतशरीरेषु सोमाख्या मूर्तिरुत्तमा ॥ २१ ॥

सोममूर्तिं निरूपयति—सौम्यानामित्यादिना । सौम्यानां शांतानां वसुजातानां सकलमयूखानां प्रकृतित्वम् उपागता तस्य सोमाह्वया चंद्रसंज्ञा मूर्तिरित्यन्वयः ॥ १८ ॥ सर्वेषां शरीरभाजाम् निखिलशरीरिणां तस्य शिवस्य सोमात्मकं चंद्रस्वरूपं शुक्रत्वेन चरमधातुत्वेन व्यवस्थितमित्यन्वयः ॥ १९ ॥ मनस्येव मनस्यपि सोमात्मकं वपुर्व्यवस्थितं प्रतिष्ठितमित्यर्थः ॥ २० ॥ २१ ॥

॥ २२ ॥ तस्य शिवस्य या सोमाह्वया मूर्तिस्तामिति शेषः । भवानीमुमां निर्दिशेत् पश्येदित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ परस्परविवेकिनः आत्मानात्मविचारवतः मृष्टो विचारितो देवः शिवः अशेषाणां करणानां चक्षुरादीनां देवतानां तदभिमानिसूर्यादिदेवानां निर्गता आकृतिर्यत्नो यस्मिन्स निराकृतिरग्राह्यः हिरण्मयोऽमृतमय इत्यर्थः । "अमृतं वै हिरण्यम्" इति श्रुतेः ॥ २६ ॥ तस्मिन्पूर्वोक्तरूपे सोमात्मके शिवे जीवत्वेन स्वात्मत्वेन स्थिते निश्चले सति मधु मद्यसदृशान्विषयान् राति ददाति सा मधुरा माया विलयं तिरोधानं याति प्राप्नोतीत्यर्थः ॥ २७ ॥ आत्ममूर्तिं निरूपयति—यजमानाह्वयेत्यादिना । हव्यैर्होमद्रव्यैरित्यर्थः ॥ २८ ॥ यजमानाह्वया दीक्षितरूपा या तनुः सा आहुति

देवान्पितॄंश्च पुष्णाति सुधयामृतया सदा ॥ मूर्तिः सोमाह्वया तस्य देवदेवस्य शासितुः ॥ २२ ॥ पुष्णात्योषधिजातानि देहिनामात्मशुद्धये ॥ सोमाह्वया तनुस्तस्य भवानीमिति निर्दिशेत् ॥ २३ ॥ यज्ञानां पतिभावेन जीवानां तपसामपि ॥ प्रसिद्धरूपमेतद्धे सोमात्मकमुमापतेः ॥ २४ ॥ जलानामोषधीनां च पतिभावेन विश्रुतम् ॥ सोमात्मकं वपुस्तस्य शंभोर्भगवतः प्रभोः ॥ २५ ॥ देवो हिरण्मयो मृष्टः परस्परविवेकिनः ॥ करणानामशेषाणां देवतानां निराकृतिः ॥ २६ ॥ जीवत्वेन स्थिते तस्मिञ्छिवे सोमात्मके प्रभौ ॥ मधुरा विलयं याति सर्वलोकैकरक्षिणी ॥ २७ ॥ यजमानाह्वया मूर्तिः शैवी हव्यैरहर्निशम् ॥ पुष्णाति देवताः सर्वाः कव्यैः पितृगणानपि ॥ २८ ॥ यजमानाह्वया या सा तनुश्चाहुतिजा तया ॥ वृष्ट्या भावयति स्पष्टं सर्वमेव परापरम् ॥ २९ ॥ अंतःस्थं च बहिःस्थं च ब्रह्मांडानां स्थितं जलम् ॥ भूतानां च शरीरस्थं शंभोर्मूर्तिर्गरीयसी ॥ ३० ॥ नदीनाममृतं साक्षान्नदानामपि सर्वदा ॥ समुद्राणां च सर्वत्र व्यापी सर्वमुमापतिः ॥ ३१ ॥ संजीविनी समस्तानां भूतानामेव पाविनी ॥ अंबिका प्राणसंस्था या मूर्तिरंबुमयी परा ॥ ३२ ॥ अंतःस्थश्च बहिःस्थश्च ब्रह्मांडानां विभावसुः ॥ यज्ञानां च शरीरस्थः शंभोर्मूर्तिर्गरीयसी ॥ ३३ ॥ शरीरस्था च भूतानां श्रेयसी मूर्तिरैश्वरी ॥ मूर्तिः पावकसंस्था या शंभोरत्यंतपूजिता ॥ ३४ ॥ भेदा एकोनपंचाशद्वेदविद्भिरुदाहृताः ॥ हव्यं वहति देवानां शंभोर्यज्ञात्मकं वपुः ॥ ३५ ॥ कव्यं पितृगणानां च हूयमानं द्विजातिभिः ॥ सर्वदेवमयं शंभोः श्रेष्ठमग्न्यात्मकं वपुः ॥ ३६ ॥

जातया वृष्ट्या पर्जन्येन सर्वं भावयति उत्पादयतीति स्पष्टं प्रसिद्धमित्यर्थः । तदुक्तं भगवद्गीतायाम् "यज्ञाद्भवति पर्जन्यः" इति ॥ २९ ॥ जलमूर्तिं निरूपयति—अंतःस्थमित्यादिना ॥ ३० ॥ ३१ ॥ अंबिका चंद्ररूपोमा तस्याः प्राणसंस्था हृदयस्थितेत्यर्थः । तदुक्तम् " आकाशांभोनिधिर्योऽसौ सोम इत्यभिधीयते " इति ॥ ३२ ॥ वह्निमूर्तिं निरूपयति—अंतःस्थ इत्यादिना ॥ ३३ ॥ शरीरस्था जाठराग्निरूपाः ॥ ३४ ॥ ३५ ॥ ३६ ॥

वायुमूर्तिं निरूपयति—अंतःस्थ इत्यादिना ॥ ३७ ॥ ३८ ॥ गगनमूर्तिं निरूपयति—अंतःस्थमित्यादिना ॥ ३९ ॥ धरामूर्तिं निरूपयति—शंभोरित्यादिना । सर्वब्रह्मणां सकल ब्राह्मणानामधिदेवता मुख्यदेवतेत्यर्थः ॥ ४० ॥ चराचराणां स्थावरजंगमभूतानां शरीराणि ईशमूर्तीनां पंचकेन पृथिव्यादिपंचभूतैः सर्वथा समारब्धान्युत्पादितानि बुधाः पंडिताः विदुरित्यग्रिमस्थैरन्वयः ॥ ४१ ॥ मुनिपुंगवाः मुनिश्रेष्ठाः पंचभूतानि चंद्रार्कावात्मेति शिवस्याष्टमूर्तय आहुरित्यग्रिमेणान्वयः ॥ ४२ ॥ भूराद्यो भगवन्मूर्तयोऽपि जडाः अतः सर्वश्रेष्ठां चिन्मयीमात्ममूर्तिं पुनश्च वर्णयति—आत्मेत्यादिना ॥ ४३ ॥ ४४ ॥ अष्टमूर्तिमहिमानं कथयति—मूर्तय इत्यादिना ॥ ४५ ॥ श्रेयसामेकहेतवः अद्वितीय

वदंति वेदशास्त्रज्ञा यजंति च यथाविधि ॥ अंतःस्थो जगदंडानां बहिःस्थश्च समीरणः ॥ ३७ ॥ शरीरस्थश्च भूतानां शैवी मूर्तिः पटीयसी ॥ प्राणाद्या नागकूर्माद्या आवहाद्याश्च वायवः ॥ ३८ ॥ ईशानमूर्तेरेकस्य भेदाः सर्वे प्रकीर्तिताः ॥ अंतःस्थं जगदंडानां बहिःस्थं च वियद्विभोः ॥ ३९ ॥ शरीरस्थं च भूतानां शंभोर्मूर्तिर्गरीयसी ॥ शंभोर्विश्वंभरा मूर्तिः सर्वब्रह्माधिदेवता ॥ ४० ॥ चराचराणां भूतानां सर्वेषां धारणे मता ॥ चराचराणां भूतानां शरीराणि विदुर्बुधाः ॥ ४१ ॥ पंचकेनेशमूर्तीनां समारब्धानि सर्वथा ॥ पंचभूतानि चंद्रार्कावात्मेति मुनिपुंगवाः ॥ ४२ ॥ मूर्तयोऽष्टौ शिवस्याहुर्देवदेवस्य धीमतः ॥ आत्मा तस्याष्टमी मूर्तिर्यजमानाह्वया परा ॥ ४३ ॥ चराचरशरीरेषु सर्वेष्वेव स्थिता तदा ॥ दीक्षितं ब्राह्मणं प्राहुरात्मानं च मुनीश्वराः ॥ ४४ ॥ यजमानाह्वया मूर्तिः शिवस्य शिवदायिनः ॥ मूर्तयोऽष्टौ शिवस्यैता वंदनीयाः प्रयत्नतः ॥ ४५ ॥ श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः ॥ ४६ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे द्वादशोऽध्यायः ॥ १२ ॥ सनत्कुमार उवाच ॥ भूयोऽपि वद मे नंदिन् महिमानमुमापते ॥ अष्टमूर्तेर्महेशस्य शिवस्य परमेष्ठिनः ॥ १ ॥ नंदिकेश्वर उवाच ॥ वक्ष्यामि ते महेशस्य महिमानमुमापतेः ॥ अष्टमूर्तेर्जगद्व्याप्य स्थितस्य परमेष्ठिनः ॥ २ ॥ चराचराणां भूतानां धाता विश्वंभरात्मकः ॥ शर्व इत्युच्यते देवः सर्वशास्त्रार्थपारगैः ॥ ३ ॥ विश्वंभरात्मनस्तस्य सर्वस्य परमेष्ठिनः ॥ विकेशी कथ्यते पत्नी तनयोंगारकः स्मृतः ॥ ४ ॥

कारणा इत्यर्थः ॥ ४६ ॥ आदित्यसोमयजमानजलानुपूर्वा वह्न्यानिलाभ्रजगतीनि महानुभावाः । शैवाष्टमूर्तय इमा अभिवंदिताः स्युर्निःश्रेयसाय सततं मम विश्वरूपाः ॥ इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेऽस्मिन्नध्याये मूर्तीनां शंकरस्य तु ॥ संज्ञा स्त्रियस्तथा पुत्रा निरूप्यंते पृथक्पृथक् ॥ सनत्कुमारः पुनरप्यष्टमूर्तिमहिमानं पृच्छति—भूयोऽपीति ॥ १ ॥ २ ॥ पार्थिवाद्यष्टमूर्तिसंज्ञादि क्रमशः कथयति—चराचराणामित्यादिना । चराचराणां भूतानां धाता धारकः विश्वंभरा पृथ्वी आत्मा देहो यस्य स विश्वंभरात्मको देवः शिवः शर्व इत्युच्यते कथ्यत इत्यर्थः ॥ ३ ॥ विकेशी तत्संज्ञा अंगारकः कुज इत्यर्थः ॥ ४ ॥

सलिलात्मको जलदेहो देवः शिवः भव इत्युच्यत इत्यन्वयः ॥ ५ ॥ ६ ॥ बुधैर्वह्न्यात्मा देवः पशुपतिः स्मृतः प्रोक्त इत्यर्थः ॥ ७ ॥ ८ ॥ बुधैः पवनात्मा देवः इशान इति कीर्त्यत इत्यन्वयः ॥ ९ ॥ १० ॥ बुधैर्व्योमात्मा देवो भीम इत्युच्यते कथ्यत इत्यर्थः ॥ ११ ॥ सूर्यात्मा देवो रुद्र इति देवैरुच्यत इत्यग्रिमेणान्वयः ॥ १२ ॥१३॥१४॥ बुधैः सोमात्मको देवः महादेव इति स्मृत इत्यन्वयः ॥ १५ ॥ १६ ॥ बुधैर्यजमानात्मको देव उग्र इति अपरैः सद्भिरीशानश्चेत्युच्यत इत्यन्वयः । अस्येशानसंज्ञामते पवना

भव इत्युच्यते देवो भगवान्वेदवादिभिः ॥ संजीवनस्य लोकानां भवस्य परमात्मनः ॥ ५ ॥ उमा संकीर्तिता देवी सुतः शुक्रश्च सूरिभिः॥ सप्तलोकांडकव्यापी सर्वलोकैकरक्षिता ॥ ६ ॥ वह्न्यात्मा भगवान्देवः स्मृतः पशुपतिर्बुधैः ॥ स्वाहा पत्न्यात्मनस्तस्य प्रोक्ता पशुपतेः प्रिया ॥ ७ ॥ षण्मुखो भगवान्देवो बुधैः पुत्र उदाहृतः ॥ समस्तभुवनव्यापी भर्ता सर्वशरीरिणाम् ॥८॥ पवनात्मा बुधैर्देव ईशान इति कीर्त्यते ॥ ईशानस्य जगत्कर्तुर्देवस्य पवनात्मनः ॥ ९ ॥ शिवा देवी बुधैरुक्ता पुत्रश्चास्य मनोजवः ॥ चराचराणां भूतानां सर्वेषां सर्व कामदः ॥ १० ॥ व्योमात्मा भगवान्देवो भीम इत्युच्यते बुधैः ॥ महामहिम्नो देवस्य भीमस्य गगनात्मनः ॥ ११ ॥ दिशो दश स्मृता देव्यः सुतः सर्गश्च सूरिभिः ॥ सूर्यात्मा भगवान्देवः सर्वेषां च विभूतिदः ॥ १२ ॥ रुद्र इत्युच्यते देवैर्भगवान् भुक्तिमुक्तिदः ॥ सूर्यात्मकस्य रुद्रस्य भक्तानां भक्तिदायिनः॥१३॥ सुवर्चला स्मृता देवी सुतश्चास्य शनैश्चरः ॥ समस्तसौम्यवस्तूनां प्रकृतित्वेन विश्रुतः॥१४॥ सोमात्मको बुधैर्देवो महादेव इति स्मृतः ॥ सोमात्मकस्य देवस्य महादेवस्य सूरिभिः ॥१५॥ दयिता रोहिणी प्रोक्ता बुधश्चैव शरीरजः॥ हव्यकव्यस्थितिं कुर्वन् हव्यकव्याशिनां तदा ॥१६॥ यजमानात्मको देवो महादेवो बुधैः प्रभुः ॥ उग्र इत्युच्यते सद्भिरीशानश्चेति चापरैः ॥ १७ ॥ उग्राह्वयस्य देवस्य यजमानात्मनः प्रभोः ॥ दीक्षा पत्नी बुधैरुक्ता संतानाख्यः सुतस्तथा ॥ १८ ॥ शरीरिणां शरीरेषु कठिनं कोंकणादिवत् ॥ पार्थिवं तद्वपुर्ज्ञेयं शर्वतत्त्वं बुभुत्सुभिः ॥ १९ ॥ देहेदेहे तु देवेशो देहभाजां यदव्ययम् ॥ वस्तुद्रव्यात्मकं तस्य भवस्य परमात्मनः ॥ २० ॥ ज्ञेयं च तत्त्वविद्भिर्वै सर्ववेदार्थपारगैः ॥ आग्नेयः परिणामो यो विग्रहेषु शरीरिणाम् ॥ २१ ॥

त्मन उग्रसंज्ञा बोध्या ॥ १७ ॥ संतानाख्यः ऋतुसंज्ञ इत्यर्थः ॥१८॥ अष्टमूर्तिसंज्ञाः तत्स्त्रीपुत्राद्युक्त्वा शारीरतत्तद्भागान्कथयति–शरीरिणामित्यादिना । कोंकणादिवत् तत्सं ज्ञकदेशवदित्यर्थः । कठिनं तत्पार्थिवं वपुः बुभुत्सुभिर्जिज्ञासुभिः शर्वतत्त्वं ज्ञेयमित्यन्वयः ॥१९॥ द्रव्यात्मकं द्रवरूपं वस्तु भवस्य तत्त्वं ज्ञेयमित्यग्रिमेणान्वयः ॥२०॥ आग्नेयः परिणामो जाठराग्निरूपः ॥ २१ ॥

॥२२॥२३॥२४॥२५॥२६॥२७॥ अनन्यत्वमभिन्नत्वमित्यर्थः॥२८॥२९॥ अष्टमूर्तेर्विश्वरूपत्वात्तदाराधनप्रकारं कथयति–प्राणिन इत्यादिना॥३०॥३१॥३२॥३३ ॥ ३४ ॥ मुख्यार्चनं कथयति–सर्वोपकारेत्यादिना ॥ ३५ ॥ मुख्यार्चनाधिकारो ज्ञानिन एवेत्यतस्त्वया अवश्यं कार्यमिति कथयति–अनुग्रहणमित्यादिना ॥ ३६ ॥ शिवाराधनं

मूर्तिः पशुपतिर्ज्ञेया सा तत्त्वं वेत्तुमिच्छुभिः ॥ वायव्यः परिणामो यः शरीरेषु शरीरिणाम् ॥ २२ ॥ बुधैरीशेति सा तस्य तनुर्ज्ञेया न संशयः ॥ सुषिरं यच्छरीरस्थमशेषाणां शरीरिणाम् ॥ २३ ॥ भीमस्य सा तनुर्ज्ञेया तत्त्वविज्ञानकांक्षिभिः ॥ चक्षुरादिगतं तेजो यच्छरीरस्थमंगिनाम् ॥ २४ ॥ रुद्रस्यापि तनुर्ज्ञेया परमार्थं बुभुत्सुभिः ॥ सर्वभूतशरीरेषु मनश्चंद्रात्मकं हि यत् ॥ २५ ॥ महादेवस्य सा मूर्तिर्बोद्धव्या तत्त्वचिंतकैः ॥ आत्मा यो यजमानाख्यः सर्वभूतशरीरगः ॥ २६ ॥ मूर्तिरुग्रस्य सा ज्ञेया परमात्मबुभुत्सुभिः ॥ जातानां सर्वभूतानां चतुर्दशसु योनिषु ॥ २७ ॥ अष्टमूर्तेरनन्यत्वं वदंति परमर्षयः ॥ सप्तमूर्तिमयान्याहुरीशस्यांगानि देहिनाम् ॥ २८ ॥ आत्मा तस्याष्टमी मूर्तिः सर्वभूतशरीरगा ॥ अष्टमूर्तिममुं देवं सर्वलोकात्मकं विभुम् ॥ २९ ॥ भजस्व सर्वभावेन श्रेयः प्राप्तुं यदीच्छसि ॥ प्राणिनो यस्य कस्यापि क्रियते यद्यनुग्रहः ॥ ३० ॥ अष्टमूर्तेर्महेशस्य कृतमाराधनं भवेत् ॥ निग्रहश्चेत् कृतो लोके देहिनो यस्य कस्यचित् ॥ ३१ ॥ अष्टमूर्तेर्महेशस्य स एव विहितो भवेत् ॥ यद्यवज्ञा कृता लोके यस्य कस्य चिदंगिनः ॥ ३२ ॥ अष्टमूर्तेर्महेशस्य विहिता सा भवेद्विभोः ॥ अभयं यत् प्रदत्तं स्यादंगिनो यस्य कस्यचित् ॥ ३३ ॥ आराधनं कृतं तस्मादष्टमूर्तेर्न संशयः ॥ सर्वोपकारकरणं प्रदानमभयस्य च ॥ ३४ ॥ आराधनं तु देवस्य अष्टमूर्तेर्न संशयः ॥ सर्वोपकारकरणं सर्वानुग्रह एव च ॥ ३५ ॥ तदर्चनं परं प्राहुरष्टमूर्तेर्मुनीश्वराः ॥ अनुग्रहणमन्येषां विधातव्यं त्वयांगिनाम् ॥ ३६ ॥ सर्वाभयप्रदानं च शिवाराधनमिच्छता ॥ ३७ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे त्रयोदशोऽध्यायः ॥ १३ ॥ सनत्कुमार उवाच ॥ पंच ब्रह्माणि मे नंदिन्नाचक्ष्व गणसत्तम॥ श्रेयःकरणभूतानि पवित्राणि शरीरिणाम् ॥ १ ॥

शिवपरमपूजनमित्यर्थः ॥३७॥ हे शर्व भव पशुपते ईशान भीम रुद्र महादेव ॥ उग्र त्वत्कृपया मे मुख्यार्चा ते सदा भूयात् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रयोदशोऽध्यायः॥१३॥ चतुर्दशेऽस्मिन्नध्याये पंचब्रह्मस्वरूपिणः ॥ स्वरूपं वर्ण्यते शंभोः सर्वतत्त्वात्मकं स्फुटम् ॥ सनत्कुमारः पंचब्रह्मरूपाणि पृच्छति–पंचेति ॥ १ ॥

शैलादिः शिवस्वरूपत्वेन पंचब्रह्मरूपाणि वर्णयति–शिवस्यैवेत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ईशानसंज्ञितः क्षेत्रज्ञः शिवस्य प्रथमा मूर्तिरित्यन्वयः ॥ ६ ॥ परमात्मनो गुहा मुख्याधिकरणभूतेत्यर्थः ॥ ७ ॥८॥९॥१०॥ ज्ञानेंद्रियात्मकेशानादिमूर्तीः कथयति–ईशान इत्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ जिह्वेंद्रियात्मकत्वेन रसनेंद्रियात्मकत्वेने

नंदिकेश्वर उवाच ॥ शिवस्यैव स्वरूपाणि पंच ब्रह्माह्वयानि ते ॥ कथयामि यथातत्त्वं पद्मयोनेः सुतोत्तम ॥ २ ॥ सर्वलोकैकसंहर्ता सर्वलोकैकरक्षिता ॥ सर्वलोकैकनिर्माता पंचब्रह्मात्मकः शिवः ॥ ३ ॥ सर्वेषामेव लोकानां यदुपादानकारणम् ॥ निमित्तकारणं चाहुस्स शिवः पंचधा स्मृतः ॥४॥ मूर्तयः पंच विख्याताः पंच ब्रह्माह्वयाः पराः ॥ सर्वलोकशरण्यस्य शिवस्य परमात्मनः ॥५॥ क्षेत्रज्ञः प्रथमा मूर्तिः शिवस्य परमेष्ठिनः ॥ भोक्ता प्रकृतिवर्गस्य भोग्यस्येशानसंज्ञितः ॥ ६ ॥ स्थाणोस्तत्पुरुषाख्या च द्वितीया मूर्तिरुच्यते ॥ प्रकृतिः सा हि विज्ञेया परमात्मगुहात्मिका ॥ ७ ॥ अघोराख्या तृतीया च शंभोर्मूर्तिर्गरीयसी ॥ बुद्धेः सा मूर्तिरित्युक्ता धर्माद्यष्टांगसंयुता ॥ ८ ॥ चतुर्थी वामदेवाख्या मूर्तिः शंभोर्गरीयसी ॥ अहंकारात्मकत्वेन व्याप्य सर्वं व्यवस्थिता ॥ ९ ॥ सद्योजाताह्वया शंभोः पंचमी मूर्तिरुच्यते ॥ मनस्तत्त्वात्मकत्वेन स्थिता सर्वशरीरिषु ॥ १० ॥ ईशानः परमो देवः परमेष्ठी सनातनः ॥ श्रोत्रेंद्रियात्मकत्वेन सर्वभूतेष्ववस्थितः ॥ ११ ॥ स्थितस्तत्पुरुषो देवः शरीरेषु शरीरिणाम् ॥ त्वगिंद्रियात्मकत्वेन तत्त्वविद्भिरुदाहृतः ॥ १२ ॥ अघोरोपि महादेवश्चक्षुरात्मतया बुधैः ॥ कीर्तितः सर्वभूतानां शरीरेषु व्यवस्थितः ॥ १३ ॥ जिह्वेंद्रियात्मकत्वेन वामदेवोपि विश्रुतः ॥ अंगभाजामशेषाणामंगेषु परिधिष्ठितः ॥ १४ ॥ घ्राणेंद्रियात्मकत्वेन सद्योजातः स्मृतो बुधैः ॥ प्राणभाजां समस्तानां विग्रहेषु व्यवस्थितः ॥ १५ ॥ सर्वेष्वेव शरीरेषु प्राणभाजां प्रतिष्ठितः ॥ वागिंद्रियात्मकत्वेन बुधैरीशान उच्यते ॥ १६ ॥ पाणींद्रियात्मकत्वेन स्थितस्तत्पुरुषो बुधैः ॥ उच्यते विग्रहेष्वेव सर्वविग्रहधारिणाम् ॥ १७ ॥ सर्वविग्रहिणां देहे ह्यघोरोपि व्यवस्थितः ॥ पादेंद्रियात्मकत्वेन कीर्तितस्तत्त्ववेदिभिः ॥ १८ ॥ पाय्विंद्रियात्मकत्वेन वामदेवो व्यवस्थितः ॥ सर्वभूतनिकायानां कायेषु मुनिभिः स्मृतः ॥ १९ ॥ उपस्थात्मतया देवः सद्योजातः स्थितः प्रभुः ॥ इष्यते वेदशास्त्रज्ञैर्देहेषु प्राणधारिणाम् ॥ २० ॥

त्यर्थः ॥ १४ ॥ १५ ॥ कर्मेंद्रियात्मकेशानादिमूर्तीर्वर्णयति–वागिंद्रियेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

पंचभूतकारणशब्दादितन्मात्रारूपेशानादिमूर्तीर्विवर्णयति–ईशानमित्यादिना ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ पंचभूतात्मकनत्तद्गुणविशिष्टेशानादिमूर्तीः कथयति आकाशात्मानमित्यादिना ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ यत्पंचब्रह्मात्मकमीशानादिमूर्तिरूपं स्थावरजंगमं जगत्तत्सर्वं मुनयः शिवस्यानंदः क्रीडामोदस्तद्रूपमाहुरित्यन्वयः ॥ ३१ ॥ पंचब्रह्मात्मकत्वेन ईशानादिरूपेण पंचविंशतितत्त्वानि पूर्वोक्तक्षेत्रज्ञादीन्यात्मा देहो यस्य स पंचविंशतितत्त्वात्मा अत एव प्रपंचे नान्यतां गतोऽभेदं प्राप्तः प्रदृश्यते योगिभिर्गम्यते स षड्विंशः शिव इत्यन्वयः ॥ ३२ ॥ पंचब्रह्मात्मकः शिव एव पंचविंशतितत्त्वात्मा अतः श्रेयोर्थिभिर्मुमुक्षुभिः प्रयत्नतः सर्वप्रयामेन नित्यं चिंतनीयः

ईशानं प्राणिनां देवं शब्दतन्मात्ररूपिणम् ॥ आकाशजनकं प्राहुर्मुनिवृंदारकप्रजाः ॥ २१ ॥ प्राहुस्तत्पुरुषं देवं स्पर्शतन्मात्रकात्मकम् ॥ समीरजनकं प्राहुर्भगवंतं मुनीश्वराः ॥ २२ ॥ रूपतन्मात्रकं देवमघोरमपि घोरकम् ॥ प्राहुर्वेदविदो मुख्या जनकं जातवेदसः ॥ २३ ॥ रसतन्मात्ररूपत्वात् प्रथितं तत्त्ववेदिनः ॥ वामदेवमपां प्राहुर्जनकत्वेन संस्थितम् ॥ २४ ॥ सद्योजातं महादेवं गंधतन्मात्ररूपिणम् ॥ भूम्यात्मानं प्रशंसंति सर्वतत्त्वार्थवेदिनः ॥ २५ ॥ आकाशात्मानमीशानमादिदेवं मुनीश्वराः ॥ परमेण महत्त्वेन संभूतं प्राहुरद्भुतम् ॥ २६ ॥ प्रभुं तत्पुरुषं देवं पवनं पवनात्मकम् ॥ समस्तलोकव्यापित्वात्प्रथितं सूरयो विदुः ॥ २७ ॥ अथार्चिततया ख्यातमघोरं दहनात्मकम् ॥ कथयंति महात्मानं वेदवाक्यार्थवेदिनः ॥ २८ ॥ तोयात्मकं महादेवं वामदेवं मनोरमम् ॥ जगत्संजीवनत्वेन कथितं मुनयो विदुः ॥ २९ ॥ विश्वंभरात्मकं देवं सद्योजातं जगद्गुरुम् ॥ चराचरैकभर्तारं परं कविवरा विदुः ॥ ३० ॥ पंचब्रह्मात्मकं सर्वं जगत्स्थावरजंगमम् ॥ शिवानंदं तदित्याहुर्मुनयस्तत्त्वदर्शिनः ॥ ३१ ॥ पंचविंशतितत्त्वात्मा प्रपंचे यः प्रदृश्यते ॥ पंचब्रह्मात्मकत्वेन स शिवो नान्यतां गतः ॥ ३२ ॥ पंचविंशतितत्त्वात्मा पंचब्रह्मात्मकः शिवः ॥ श्रेयोर्थिभिरतो नित्यं चिंतनीयः प्रयत्नतः ॥ ३३ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे पंचब्रह्मकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ सनत्कुमार उवाच ॥ भूयोऽपि शिवमाहात्म्यं समाचक्ष्व महामते ॥ सर्वज्ञो ह्यसि भूतानामधिनाथ महागुण ॥ १ ॥ शैलादिरुवाच ॥ शिवमाहात्म्यमेकाग्रः शृणु वक्ष्यामि ते मुने ॥ बहुभिर्बहुधा शब्दैः कीर्तितं मुनिसत्तमैः ॥ २ ॥

स्मर्तव्य इत्यर्थः ॥ ३३ ॥ ईशतत्पुरुषाघोरवाममद्येति संज्ञितम् ॥ पंचब्रह्मतनुं सांबं स्मराम्यहमहर्निशम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ लैंगोत्तरे पंचदशे सर्वरूपो महेश्वरः ॥ ऋषिभिर्बहुधा प्रोक्तस्तत्तत्संज्ञो निरूप्यते ॥ सनत्कुमारः पुनरपि शिवमाहात्म्यं पृच्छति–भूयोपीति ॥ १ ॥ बहुभिर्मुनिसत्तमैः बहुधा अनेकप्रकारैः शब्दैः कीर्तितं शिवमाहात्म्यं ते वक्ष्याम्येकाग्रः शृण्वित्यन्वयः ॥ २ ॥

गौतमादिमतमाह–तं विश्वरूपं शिवं मुनयः सन्नित्यद्रव्यरूपमसदनित्यद्व्यणुकादिरूपमाहुः केचित्सूरयः सदसतोः पतिः सदसत्पातिरित्यपि प्रवदंतीत्यन्वयः ॥ ३ ॥ पूर्वोक्त संज्ञाहेतुं कथयति–भूतभावेत्यादिना । भूतानां भावादिविकारो भूतभावविकारस्तेन द्वितीयेन स शिवो व्यक्तं सद्रूपः तेन पूर्वोक्तहेतुना विहीनत्वादव्यक्तमसदित्यपि उच्यते परि भाष्यत इत्यर्थः ॥ ४ ॥ ते सदसद्रूपे ॥ ५ ॥ सांख्यमतमाह–केचिन्मुनयस्तत्त्वचिंतकाः सांख्याः क्षराक्षरात्मकं तथा क्षराक्षरपरं शिवमाहुरित्यन्वयः ॥ ६ ॥ क्षराक्षरसंज्ञे विवृणोति–उक्तमिति। एतदेवोक्तं भगवद्गीतायाम् "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति । तस्मात् क्षराक्षररूपत्वान्न परः अपरस्वरूपः उच्यत इत्यन्वयः ॥ ७ ॥

सदसद्रूपमित्याहुः सदसत्पतिरित्यपि ॥ तं शिवं मुनयः केचित्प्रवदंति च सूरयः ॥ ३ ॥ भूतभावविकारेण द्वितीयेन स उच्यते ॥ व्यक्तं तेन विहीनत्वादव्यक्तमसदित्यपि ॥ ४ ॥ उभे ते शिवरूपे हि शिवादन्यं न विद्यते ॥ तयोः पतित्वाच्च शिवः सदसत्पतिरुच्यते ॥५॥ क्षराक्षरात्मकं प्राहुः क्षराक्षरपरं तथा ॥ शिवं महेश्वरं केचिन्मुनयस्तत्त्वचिंतकाः ॥ ६ ॥ उक्तमक्षरमव्यक्तं व्यक्तं क्षरमुदाहृतम् ॥ रूपे ते शंकरस्यैव तस्मान्न पर उच्यते ॥ ७ ॥ तयोः परः शिवः शांतः क्षराक्षरपरो बुधैः ॥ उच्यते परमार्थेन महादेवो महेश्वरः ॥ ८ ॥ समस्तव्यक्तरूपं तु ततः स्मृत्वा स मुच्यते ॥ समष्टिव्यष्टिरूपं तु समष्टिव्यष्टिकारणम् ॥ ९ ॥ वदंति केचिदाचार्याः शिवं परमकारणम् ॥ समष्टिं विदुरव्यक्तं व्यष्टिं व्यक्तं मुनीश्वराः ॥ १० ॥ रूपे ते गदिते शंभोर्नास्त्यन्यद्वस्तुसंभवम् ॥ तयोः कारणभावेन शिवो हि परमेश्वरः ॥ ११ ॥ उच्यते योगशास्त्रज्ञैः समष्टिव्यष्टिकारणम् ॥ क्षेत्रक्षेत्रज्ञरूपी च शिवः कैश्चिदुदाहृतः ॥ १२ ॥ परमात्मा परं ज्योतिर्भगवान्परमेश्वरः ॥ चतुर्विंशतितत्त्वानि क्षेत्रशब्देन सूरयः ॥१३॥ प्राहुः क्षेत्रज्ञशब्देन भोक्तारं पुरुषं तथा॥ क्षेत्रक्षेत्रविदावेते रूपे तस्य स्वयंभुवः ॥ १४॥ न किंचिच्च शिवादन्यदिति प्राहुर्मनीषिणः ॥ अपरब्रह्मरूपं तं परब्रह्मात्मकं शिवम् ॥१५॥ केचिदाहुर्महादेवमनादिनिधनं प्रभुम् ॥ भूतेंद्रियांतःकरणप्रधानविषयात्मकम् ॥ १६ ॥

परसंज्ञाहेतुमाह–तयोरिति ॥ ८ ॥ ततः सर्वरूपत्वात् समस्तव्यक्तरूपं सकलभूतस्वरूपं शिवं स्मृत्वा स जीवः मुच्यत इत्यन्वयः । योगिमतमाह–समष्टिरित्यादिना । केचिदाचार्याः मत्स्येंद्रादयः शिवं समष्टिव्यष्टिरूपं समष्टिव्यष्टिकारणं वदंतीत्यग्रिमेणान्वयः ॥ ९ ॥ १० ॥ अन्यच्छिवभिन्नं वस्तुसंभवं जगत्कारणं नास्ति न विद्यत इत्यर्थः॥११॥ वेदांतिमतानि कथयति–क्षेत्रेत्यादिना ॥ १२ ॥ १३ ॥ १४ ॥ अपरब्रह्मरूपं शब्दब्रह्मादिस्वरूपमित्यर्थः ॥ १५ ॥ भूतानां जीवानामिंद्रियांतःकरणानि भूतेंद्रियांतःकरणानि तेषां प्रधानाः मुख्याः विषयाः शब्दादयस्तदात्मकं तत्स्वरूपम् अपरं ब्रह्म निर्दिष्टमित्यग्रिमेणान्वयः ॥ १६ ॥

ते अपरापररूपे इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ योगिवेदांतिनां साक्षान्मुक्तिं कथयति–अत्रापुरिति । भ्रांत्यादि विवृणोति–अर्थेष्वित्यादिना ॥ २१ ॥ २२ ॥
॥ २३ ॥ व्यक्ताव्यक्तज्ञरूपाणि कथयति–त्रयोविंशतिरित्यादिना ॥२४॥ २५ ॥ अशांकरं शिवरूपभिन्नमित्यर्थः ॥ २६ ॥ सदसद्रूपप्रमुखैः शब्दैर्गायंति यं मुनिश्रेष्ठाः ॥
सोऽमि सोमः स्याद्धि भक्त्या सर्वार्थगोचरोऽभीष्टः ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां पंचदशोऽध्यायः ॥ १५ ॥ वर्ण्यते षोडशाध्याये बहुभिर्मु

अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ॥ ब्रह्मणी ते महेशस्य शिवस्यास्य स्वयंभुवः ॥ १७ ॥ शंकरस्य परस्यैव शिवादन्यन्न विद्यते ॥
विद्याविद्यास्वरूपी च शंकरः कैश्चिदुच्यते ॥ १८ ॥ धाता विधाता लोकानामादिदेवो महेश्वरः ॥ विद्येति च तमेवाहुरविद्येति मुनी
श्वराः ॥ १९ ॥ प्रपंचजातमखिलं ते स्वरूपे स्वयंभुवः ॥ भ्रांतिर्विद्या परं चेति शिवरूपमनुत्तमम् ॥ २० ॥ अत्रापुर्मुनयो योगात्केचि
दागमवेदिनः ॥ अर्थेषु बहुरूपेषु विज्ञानं भ्रांतिरुच्यते ॥ २१ ॥ आत्माकारेण संवित्तिर्बुधैर्विद्येति कीर्त्यते ॥ विकल्परहितं तत्त्वं परमि
त्यभिधीयते ॥ २२ ॥ तृतीयरूपमीशस्य नान्यत्किंचन सर्वतः ॥ व्यक्ताव्यक्तज्ञरूपीति शिवः कैश्चिन्निगद्यते ॥ २३ ॥ विधाता सर्व
लोकानां धाता च परमेश्वरः ॥ त्रयोविंशतितत्त्वानि व्यक्तशब्देन सूरयः ॥ २४ ॥ वदंत्यव्यक्तशब्देन प्रकृतिं च परां तथा ॥ कथयंति
ज्ञशब्देन पुरुषं गुणभोगिनम् ॥ २५ ॥ तत्त्रयं शांकरं रूपं नान्यत्किंचिदशांकरम् ॥ २६ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे पंच
दशोऽध्यायः ॥ १५ ॥ सनत्कुमार उवाच ॥ पुनरेव महाबुद्धे श्रोतुमिच्छामि तत्त्वतः ॥ बहुभिर्बहुधा शब्दैः शब्दितानि मुनीश्वरैः ॥१॥
शैलादिरुवाच ॥ पुनःपुनः प्रवक्ष्यामि शिवरूपाणि ते मुने ॥ बहुभिर्बहुधा शब्दैः शब्दितानि मुनीश्वरैः ॥ २ ॥ क्षेत्रज्ञः प्रकृतिर्व्यक्तं
कालात्मेति मुनीश्वरैः ॥ उच्यते कैश्चिदाचार्यैरागमार्णवपारगैः ॥ ३ ॥ क्षेत्रज्ञं पुरुषं प्राहुः प्रधानं प्रकृतिं बुधाः ॥ विकारजातं निःशेषं
प्रकृतेर्व्यक्तमित्यपि ॥ ४ ॥ प्रधानव्यक्तयोः कालः परिणामैककारणम् ॥ तच्चतुष्टयमीशस्य रूपाणां हि चतुष्टयम् ॥ ५ ॥

निभिः पृथक् ॥ प्रोक्तानि नामरूपाणि सर्वरूपशिवस्य तु ॥ सनत्कुमारः पुनरपि शिवरूपाणि पृच्छति–पुनरेवेति । बहुभिर्मुनीश्वरैः बहुधा शब्दैः शब्दितानि संज्ञितानि
शिवरूपाणि तत्त्वतः पुनरेव श्रोतुमिच्छामीत्यन्वयः ॥ १ ॥ २ ॥ कालात्मा कालरूपः आगमार्णवो वेदसमुद्रस्तत्पारगैस्तद्गैरित्यर्थः ॥ ३ ॥ पूर्वोक्तचतुष्टयं निरूपयति–क्षेत्र
ज्ञमित्यादिना ॥ ४ ॥ प्रधानव्यक्तयोः परिणामे विस्तारादौ एकमद्वितीयं कारणं काल इत्यन्वयः ॥ ५ ॥

अन्यचतुर्विधसंज्ञाः कथयति–हिरण्यगर्भमित्यादिना ॥ ६ ॥ हिरण्यगर्भो ब्रह्मा पुरुषो विष्णुः विकारजातं प्रपंचः प्रधानं प्रकृतिरित्यर्थः ॥ ७ ॥ तेषां हिरण्यगर्भादीनां बुद्धेश्च तुष्टयं च शिवरूपचतुष्टयं प्रोच्यते शंकरादन्यत्किंचन वस्तु नास्ति अधिष्ठानसत्तयैव जगतो विलसमानत्वादित्यर्थः ॥ ८ ॥ पिंडजातिस्वरूपी अखिलव्यक्तिजातिरूपः ॥ ९ ॥ समस्तानि सामान्यानि पार्थिवत्वद्रव्यत्वादीनि महासामान्यं द्रव्यादित्रिकवृत्तिसत्तारूपमित्यर्थः ॥ १० ॥ अन्यद्रूपचतुष्टयं वर्णयति–विराडित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ अन्यसंज्ञाः कथयति–अंतर्यामीत्यादिना ॥ १४ ॥ परत्वाच्छ्रेष्ठत्वादित्यर्थः ॥ १५ ॥ तस्य तुरीयशिवस्येत्यर्थः ॥ १६ ॥ विराड्ढिरण्यगर्भाख्यमव्याकृतपदाह्वयं तत्प्राज्ञादित्रय

हिरण्यगर्भं पुरुषं प्रधानं व्यक्तरूपिणम् ॥ कथयंति शिवं केचिदाचार्याः परमेश्वरम् ॥ ६ ॥ हिरण्यगर्भः कर्तास्य भोक्ता विश्वस्य पूरुषः ॥ विकारजातं व्यक्ताख्यं प्रधानं कारणं परम् ॥ ७ ॥ तेषां चतुष्टयं बुद्धेः शिवरूपचतुष्टयम् ॥ प्रोच्यते शंकरादन्यदस्ति वस्तु न किंचन ॥ ८ ॥ पिंडजातिस्वरूपी तु कथ्यते कैश्चिदीश्वरः ॥ चराचरशरीराणि पिंडाख्यान्यखिलान्यपि ॥ ९ ॥ सामान्यानि समस्तानि महासामान्यमेव च ॥ कथ्यंते जातिशब्देन तानि रूपाणि धीमतः ॥ १० ॥ विराट् हिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥ हिरण्यगर्भो लोकानां हेतुर्लोकात्मको विराट् ॥ ११ ॥ सूत्राव्याकृतरूपं तं शिवं शंसंति केचन ॥ अव्याकृतं प्रधानं हि तद्रूपं परमेष्ठिनः ॥ १२ ॥ लोका येनैव तिष्ठंति सूत्रे मणिगणा इव ॥ तत्सूत्रमिति विज्ञेयं रूपमद्भुतविक्रमम् ॥ १३ ॥ अंतर्यामी परः कैश्चित्कैश्चिदीशः प्रकीर्त्यते ॥ स्वयंज्योतिः स्वयंवेद्यः शिवः शंभुर्महेश्वरः ॥ १४ ॥ सर्वेषामेव भूतानामंतर्यामी शिवः स्मृतः ॥ सर्वेषामेव भूतानां परत्वात्पर उच्यते ॥ १५ ॥ परमात्मा शिवः शंभुः शंकरः परमेश्वरः ॥ प्राज्ञतैजसविश्वाख्यं तस्य रूपत्रयं विदुः ॥ १६ ॥ सुषुप्तिस्वप्नजाग्रंतमवस्थात्रयमेव तत् ॥ विराट् हिरण्यगर्भाख्यमव्याकृतपदाह्वयम् ॥ १७ ॥ तुरीयस्य शिवस्यास्य अवस्थात्रयगामिनः ॥ हिरण्यगर्भः पुरुषः काल इत्येव कीर्तिताः ॥ १८ ॥ तिस्रोऽवस्था जगत्सृष्टिस्थितिसंहारहेतवः ॥ भवविष्णुविरिंचाख्यमवस्थात्रयमीशितुः ॥ १९ ॥ आराध्य भक्त्या मुक्तिं च प्राप्नुवंति शरीरिणः ॥ कर्ता क्रिया च कार्यं च करणं चेति सूरिभिः ॥ २० ॥

मेव सुषुप्तिस्वप्नजाग्रंतम् अवस्थात्रयं विदुरित्यन्वयः । जाग्रंतमिदं छांदसम् ॥१७॥ तुरीयस्यास्य शिवस्य हिरण्यगर्भः पुरुषः कालो रुद्र इत्येव कीर्तिताः तिस्रोवस्थाः जगत्सृष्टिस्थितिसंहारेषु हेतव इत्यग्रिमस्थैरन्वयः ॥१८॥ ईशितुः शिवस्य भवविष्णुविरिंचाख्यमवस्थात्रयं मूर्तित्रयं भक्त्या आराध्य शरीरिणो जीवाः मुक्तिं प्राप्नुवंतीत्यग्रिमेणान्वयः। मोक्षदत्वात्सर्वापेक्ष्यं श्रेष्ठ्यमेतन्मूर्तित्रयस्य बोध्यम् ॥ १९ ॥ अन्यरूपाण्याह–कर्तेत्यादिना ॥ २० ॥

॥ २१ ॥ २२ ॥ निमित्तं कारणमसाधारणकारणमित्यर्थः ॥ २३ ॥ तन्निमित्तकारणम् ॥ २४ ॥ २५ ॥ परमात्मैव शिवः स एव सर्वतत्त्वकारणो जलोर्मिवदभिन्नश्चेति निरूपयति—परमात्मेत्यादिना ॥ २६ ॥ २७ ॥ सदाशिवाद्यानि सगुणतत्त्वान्यपि परमात्मरूपाण्येवेति सदृष्टांतं कथयति—सदाशिवेत्यादिना ॥ २८ ॥ मायादिपंचरूपा गौर्यपि शिवादेव जातेति सदृष्टांतमाह—मायेत्यादिना ॥ २९ ॥ श्रेयोऽर्थिभिः शिव एव सेव्य इत्याह—सर्वात्मकमित्यादिना ॥ ३० ॥ सर्वभावेन सर्वप्रकारेणेत्यर्थः ॥ ३१ ॥ शिवं

शंभोश्चत्वारि रूपाणि कीर्त्यंते परमेष्ठिनः ॥ प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ॥ २१ ॥ चत्वार्येतानि रूपाणि शिवस्यैव न संशयः ॥ ईश्वराव्याकृतप्राणविराड्भूतेंद्रियात्मकम् ॥ २२ ॥ शिवस्यैव विकारोऽयं समुद्रस्येव वीचयः ॥ ईश्वरं जगतामाहुर्निमित्तं कारणं तथा ॥ २३ ॥ अव्याकृतं प्रधानं हि तदुक्तं वेदवादिभिः ॥ हिरण्यगर्भः प्राणाख्यो विराट् लोकात्मकः स्मृतः ॥ २४ ॥ महाभूतानि भूतानि कार्याणि इन्द्रियाणि च ॥ शिवस्यैतानि रूपाणि शंसंति मुनिसत्तमाः ॥ २५ ॥ परमात्मा शिवादन्यो नास्तीति कवयो विदुः ॥ शिवजातानि तत्त्वानि पंचविंशन्मनीषिभिः ॥ २६ ॥ उक्तानि न तदन्यानि सलिलादूर्मिवृंदवत् ॥ पंचविंशत्पदार्थेभ्यः शिवतत्त्वं परं विदुः ॥ २७ ॥ तानि तस्मादनन्यानि सुवर्णकटकादिवत् ॥ सदाशिवेश्वराद्यानि तत्त्वानि शिवतत्त्वतः ॥२८॥ जातानि न तदन्यानि मृद्द्रव्यं कुंभभेदवत् ॥ माया विद्या क्रिया शक्तिर्ज्ञानशक्तिः क्रियामयी ॥ २९ ॥ जाताः शिवान्न संदेहः किरणा इव सूर्यतः ॥ सर्वात्मकं शिवं देवं सर्वाश्रयविधायिनम् ॥ ३० ॥ भजस्व सर्वभावेन श्रेयश्चेत्प्राप्तुमिच्छसि ॥३१॥ इति श्रीलिंगमहापुराणे उत्तरभागे षोडशोऽध्यायः ॥ १६ ॥ सनत्कुमार उवाच ॥ भूयो देवगणश्रेष्ठ शिवमाहात्म्यमुत्तमम् ॥ शृण्वतो नास्ति मे तृप्तिस्त्वद्वाक्यामृतपानतः ॥ १ ॥ कथं शरीरी भगवान् कस्माद्रुद्रः प्रतापवान् ॥ सर्वात्मा च कथं शम्भुः कथं पाशुपतं व्रतम् ॥ २ ॥ कथं वा देवमुख्यैश्च श्रुतो दृष्टश्च शंकरः ॥ शैलादिरुवाच ॥ अव्यक्तादभवत्स्थाणुः शिवः परमकारणम् ॥ ३ ॥ स सर्वकारणोपेतं ऋषिर्विश्वाधिकः प्रभुः ॥ देवानां प्रथमं देवं जायमानं मुखाम्बुजात् ॥ ४ ॥

वै परमात्मानं सर्वतत्त्वस्वरूपिणम् । श्रेयोहेतुं भजामीशं मुनिभिर्बहुधा स्तुतम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां षोडशोऽध्यायः ॥ १६ ॥ अध्यायेऽस्मिन्सप्तदशे सगुणाद्रुद्रविग्रहात् । विश्वोद्भवश्च देवानामुपदेशो निरूप्यते॥ सनत्कुमारः शिवसगुणरूपः कथमित्याद्यपृच्छत्—भूय इत्यादिना॥१॥२॥" यो देवानां प्रथमं पुरस्तात् "इति श्रुत्यनुवादेनोत्तरं वदति—अव्यक्तादित्यादिना । अव्यक्तादक्षरात्परमात्मरूपात्स्थाणुः संसारमंडपस्तंभः परमकारणं शिवः कल्याणरूपः अभवदित्यन्वयः॥३॥४॥

आज्ञया पारमेश्वर्या सहेत्यर्थः । तदुक्तं पूर्वमस्मिन् 'नस्याज्ञा पारमेश्वरी' इति । स ब्रह्मा ॥ ५॥ सोममुमासहितं रुद्रमित्यर्थः ॥ ६ ॥ ७ ॥ प्रभुः रुद्रः एषां देवानां विज्ञानं स्वलीलाविग्रह एव परमेश्वरबुद्धिमपहृत्य प्रसन्नवदनः सन्देवानां मध्यतस्तस्थावित्याग्रिमस्थैरन्वयः ॥८॥ "देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन्को भवान्" इत्यथर्वोपनिषच्छ्रुत्यनुवादमाह-देवा इत्यादिना॥९॥पुरा भवः पुरातनः एकोऽद्वितीयः अहमित्यन्वयः । अन्यस्य मायिकत्वात्स्वस्यैव त्रैकालिकसत्तां कथयति—आसमित्यादिना । आसम् अभवामित्यर्थः । वर्तामीति परस्मैपदं छांदसम् ॥१०॥ व्यतिरिक्तं न मत्तोऽस्तीति पुनरुक्तिस्तात्पर्यनिर्णयाय तथा च छांदोग्ये तत्त्वमसीति नवकृत्वाभ्यस्तं अन्यदचेतनं घटपटाद्यपि मत्तो व्यतिरिक्तं भिन्नं नास्ति किंतु मय्यध्यस्तत्वान्मत्तादात्म्यापन्नमेवेत्यर्थः॥११॥नित्यः स्वात्मरूपेण नाशशून्यः अनित्यो घटादिरूप इत्यर्थः । अनघोऽनहंकारत्वात्पा

ददर्श चाग्रे ब्रह्माणं चाज्ञया तमवैक्षत ॥ दृष्टो रुद्रेण देवेशः ससर्ज सकलं च सः ॥ ५ ॥ वर्णाश्रमव्यवस्थाश्च स्थापयामास वै विराट् ॥
सोमं ससर्ज यज्ञार्थं सोमादिदमजायत॥६॥चरुश्च वह्निर्यज्ञश्च वज्रपाणिः शचीपतिः ॥ विष्णुर्नारायणः श्रीमान् सर्वं सोममयं जगत्॥७॥
रुद्राध्यायेन ते देवा रुद्रं तुष्टुवुरीश्वरम् ॥ प्रसन्नवदनस्तस्थौ देवानां मध्यतः प्रभुः ॥ ८ ॥ अपहृत्य च विज्ञानमेषामेव महेश्वरः ॥
देवा ह्यपृच्छंस्तं देवं को भवानिति शंकरम्॥९॥अब्रवीद्भगवान्रुद्रो ह्यहमेकः पुरातनः॥ आसं प्रथम एवाहं वर्तामि च सुरोत्तमाः॥१०॥
भविष्यामि च लोकेऽस्मिन्मत्तो नान्यः कुतश्चन ॥ व्यतिरिक्तं न मत्तोऽस्ति नान्यत्किंचित्सुरोत्तमाः ॥ ११ ॥ नित्योऽनित्योऽहमनघो
ब्रह्माहं ब्रह्मणस्पतिः ॥ दिशश्च विदिशश्चाहं प्रकृतिश्च पुमानहम् ॥ १२ ॥ त्रिष्टुब्जगत्यनुष्टुप् च च्छंदोहं तन्मयः शिवः ॥ सत्योहं सर्वगः
शांतस्त्रेताग्निर्गौरवं गुरुः ॥ १३ ॥ गौरहं गह्वरश्चाहं नित्यं गहनगोचरः ॥ ज्येष्ठोहं सर्वतत्त्वानां वरिष्ठोहमपां पतिः ॥ १४ ॥ आपोहं
भगवानीशस्तेजोहं वेदिरप्यहम् ॥ ऋग्वेदोहं यजुर्वेदः सामवेदोहमात्मभूः ॥ १५ ॥

तकशून्यः ब्रह्मा हिरण्यगर्भरूपः ब्रह्मणः वेदस्य पतिः पालकः दिशः प्राच्यादिरूपः विदिश आग्नेय्यादिरूपः ॥ १२ ॥ त्रिष्टुबेकादशाक्षरपात् जगती द्वादशाक्षरपात् अनुष्टुबष्टाक्षरपात् छंदः छंदोरूपः तन्मयश्छंदःप्रचुर इत्यर्थः । सत्यो वास्तवरूपः त्रेताग्निः श्रौताग्निरूपः गौरवमध्यापनरूपः गुरुर्हितोपदेशकः॥१३॥गौः पृथ्वीरूपः गह्वरो गुहारूपः गहनेषु आनन्दवनादिषु नित्यं गोचरः प्रत्यक्ष इत्यर्थः । सर्वतत्त्वानां पंचविंशतितत्त्वानां ज्येष्ठो वयोधिकः श्रेष्ठो गुणाधिकः अपां पतिः समुद्ररूपः ॥१४॥ वेदिः परिष्कृतयज्ञभूमिरूपः आत्मनि भवतीत्यात्मभूः गगनरूपः "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतेः । न तु ब्रह्मरूपस्तस्याग्रे वक्ष्यमाणत्वात् ॥ १५ ॥

अथर्वणस्तथांगिरसां वरो मंत्रोहं चतुर्थवेदरूपः इतिहासो भारतादिः कल्पाः कर्मप्रयोगरचनाः । तदुक्तं " सिद्धरूपः प्रयोगो यैः कर्मणामवगम्यते । कल्पाः " इति । कल्पना जगत्प्रकृतिः ॥१६॥ अक्षरं कूटस्थरूपः क्षरं नश्वररूपः सर्ववेदेषु गुह्यः संवृतरूप इत्यर्थः ॥ १७ ॥ पवित्रं पुष्करं हृत्सरोजरूपः मध्यं तन्मध्यभागरूपः ॥१८॥१९॥ एवमुक्त प्रकारं सर्वं विश्वरूपं मां यो वेद स एव सर्ववित्सर्वात्मा च तथा च "ब्रह्मविद्ब्रह्मैव भवति "इति श्रुतेः ॥२०॥ सुरसत्तमाः अहं गां वाणीं गोभिर्वेदैः ब्राह्मण्येन सर्वान्ब्राह्मणान् हवींषि च तथायुरायुषा सत्यं सत्येन धर्मं धर्मेण स्वतेजसा च सर्वांस्तर्पयामीत्यग्रिमेणान्वयः । तथा चाथर्वणी श्रुतिः " गां गोभिर्ब्राह्मणान्ब्राह्मण्येन हवींषि हविषायुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसा " इति ॥ २१ ॥ इति पूर्वोक्तप्रकारं सार्वात्म्यमुक्त्वा भगवान् शिवस्तत्रैवांतरधीयत अदर्शनं कृतवानित्यर्थः ॥२२॥२३॥ तथा

अथर्वणोहं मंत्रोहं तथा चांगिरसां वरः ॥ इतिहासपुराणानि कल्पोहं कल्पनाप्यहम् ॥ १६ ॥ अक्षरं च क्षरं चाहं क्षांतिः शांतिरहं क्षमा ॥ गुह्योहं सर्ववेदेषु वरेण्योहमजोप्यहम् ॥१७॥ पुष्करं च पवित्रं च मध्यं चाहं ततः परम् ॥ बहिश्चाहं तथा चांतः पुरस्तादहमव्ययः ॥१८॥ ज्योतिश्चाहं तमश्चाहं ब्रह्मा विष्णुर्महेश्वरः ॥ बुद्धिश्चाहमहंकारस्तन्मात्राणींद्रियाणि च ॥ १९ ॥ एवं सर्वं च मामेव यो वेद सुरसत्तमाः ॥ स एव सर्ववित्सर्वं सर्वात्मा परमेश्वरः ॥ २० ॥ गां गोभिर्ब्राह्मणान्सर्वान्ब्राह्मण्येन हवींषि च ॥ आयुषायुस्तथा सत्यं सत्येन सुरसत्तमाः ॥ २१ ॥ धर्मं धर्मेण सर्वांश्च तर्पयामि स्वतेजसा ॥ इत्यादौ भगवानुक्त्वा तत्रैवांतरधीयत ॥ २२ ॥ नापश्यंत ततो देवं रुद्रं परमकारणम् ॥ ते देवाः परमात्मानं रुद्रं ध्यायंति शंकरम् ॥ २३ ॥ सनारायणका देवाः सेंद्राश्च मुनयस्तथा ॥ तथोर्ध्वबाहवो देवा रुद्रं स्तुन्वंति शंकरम् ॥ २४ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे सप्तदशोऽध्यायः ॥ १७ ॥ देवा ऊचुः ॥ य एष भगवान् रुद्रो ब्रह्मविष्णुमहेश्वराः ॥ स्कंदश्चापि तथा चेंद्रो भुवनानि चतुर्दश ॥ अश्विनौ ग्रहताराश्च नक्षत्राणि च खं दिशः ॥ १ ॥ भूतानि च तथा सूर्यः सोमश्चाष्टौ ग्रहास्तथा ॥ प्राणः कालो यमो मृत्युरमृतः परमेश्वरः ॥ २ ॥ भूतं भव्यं भविष्यच्च वर्तमानं महेश्वरः ॥ विश्वं कृत्स्नं जगत्सर्वं सत्यं तस्मै नमोनमः ॥ ३ ॥ त्वमादौ च तथा भूतो भूर्भुवः स्वस्तथैव च ॥ अंते त्वं विश्वरूपोऽसि शीर्षं तु जगतः सदा ॥ ४ ॥

पूर्वोपदिष्टप्रकारमित्यर्थः ॥ २४ ॥ यो व्यक्तजन्मा निजभृत्यवर्यान्समुद्धरन्सर्वसुरान्महेशः ॥ सार्वात्म्यमुक्त्वा दृढभावनार्थं तिरोहितः सो हि समुद्धरेन्माम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे महेशस्य स्तुतिर्ब्रह्मादिभिः कृता ॥ व्रतं पाशुपतं चैव प्रसादश्च निरूप्यते ॥ देवाः सर्वात्मकं शिवं स्तुवंति—य एष इत्यादिना ॥ १ ॥ अमृतो मोक्षरूपः ॥ २ ॥ भूतं पूर्वकालिकं विश्वं भव्यमुत्पद्यमानं कृत्स्नं भविष्यद्भविष्यज्जगद्वर्तमानं सर्वं सत्यं वास्तवं महेश्वरः शिवस्तस्मै नमो नम इत्यन्वयः ॥ ३ ॥ त्वमादौ तथांते च भूतः भूर्भुवःस्वर्व्याहृतित्रयरूप इत्यर्थः ॥ ४ ॥

त्वमेकोऽद्वितीयः द्वौ प्रकृतिपुरुषरूपौ त्रिधा ब्रह्मविष्णुमहेश्वररूपत्रिप्रकारा अर्था यस्मात्तद्द्वित्रिधार्थं ब्रह्म असीति शेषस्य सर्वत्रान्वयः । अधः सर्वाधार इत्यर्थः ॥ ५ ॥ सर्वस्य मायिकत्वादुभयरूपेण स्तुवंति–विश्वं चेत्ययं सार्धः श्लोकः ॥६॥ श्रुत्यैव स्तुवंति–अपामेति । अस्यार्थो भाष्यानुरोधेन । वयं सोममुमायुक्तं शिवमपाम दृग्भ्यां पिबा मेत्यर्थः । तेन सोमदर्शनेन अमृताः मुक्ताः अभूम आशंसायोतनाय भूतार्थनिर्देशः । ज्योतिः शैवं धाम अगन्म गच्छेम देवान् कामादिविजिगीषूनविदाम न जानीमेत्यर्थः । अस्माञ्छिवाराधकानरातिः कामादिशत्रुः किं नूनं कृणवत्करिष्यतीत्यर्थः । मर्त्यस्य विनाशिशरीरादेः धूर्तिर्हिंसा अमृतमुक्तं किमु किमपि नेत्यर्थः ॥ ७ ॥ एतच्छिवरूपामि त्यर्थः । अयं द्विपाच्छ्लोकः ॥ ८ ॥ प्राजापत्यं सर्वजनकं पवित्रं पावनं सौम्यं शांतं वायव्येन तत्संबंधिस्पर्शगुणेन समीरणो वायुरिव इवार्थे वाशब्दः । अग्राह्येण मनसा ग्राह्य मपीत्यन्वयः ॥ ९ ॥ स्वेन स्वकीयेन लीलया सौम्येन चंद्रतेजसा सौम्यं शांतं स्वभक्तांतःकरणं ग्रसति स्वलीनं करोतीत्यर्थः । महान्महत्तत्त्वमपि ग्रासः कवलो यस्य स महा

ब्रह्मैकस्त्वं द्वित्रिधार्थमधश्च त्वं सुरेश्वरः ॥ शांतिश्च त्वं तथा पुष्टिस्तुष्टिश्चाप्यहुतं हुतम् ॥ ५ ॥ विश्वं चैव तथाविश्वं दत्तं वादत्तमी श्वरम् ॥ कृतं चाप्यकृतं देवं परमप्यपरं ध्रुवम् ॥ परायणं सतां चैव ह्यसतामपि शंकरम् ॥ ६ ॥ अपामसोमममृता अभूमागन्म ज्योति रविदाम देवान् ॥ किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्य ॥ ७ ॥ एतज्जगद्धितं दिव्यमक्षरं सूक्ष्ममव्ययम् ॥ ८ ॥ प्राजा पत्यं पवित्रं च सौम्यमग्राह्यमव्ययम् ॥ अग्राह्येणापि वा ग्राह्यं वायव्येन समीरणः ॥ ९ ॥ सौम्येन सौम्यं ग्रसति तेजसा स्वेन लीलया ॥ तस्मै नमोऽपसंहर्त्रे महाग्रासाय शूलिने ॥ १० ॥ हृदिस्था देवताः सर्वा हृदि प्राणे प्रतिष्ठिताः ॥ हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥ ११ ॥ शिरश्चोत्तरतश्चैव पादौ दक्षिणतस्तथा ॥ यो वै चोत्तरतः साक्षात्स ओंकारः सना तनः ॥ १२ ॥ ओंकारो यः स एवेह प्रणवो व्याप्य तिष्ठति ॥ अनंतस्तारसूक्ष्मं च शुक्लं वैद्युतमेव च ॥ १३ ॥ परं ब्रह्म स ईशान एको रुद्रः स एव च ॥ भवान्महेश्वरः साक्षान्महादेवो न संशयः ॥ १४ ॥ ऊर्ध्वमुन्नामयत्येव स ओंकारः प्रकीर्तितः ॥ प्राणानवति यस्तस्मात् प्रणवः परिकीर्तितः ॥ १५ ॥ सर्वं व्याप्नोति यस्तस्मात्सर्वव्यापी सनातनः ॥ ब्रह्मा हरिश्च भगवानाद्यंतं नोपलब्धवान् ॥ १६ ॥

ग्रासः ॥ १०॥ हृदिस्थास्तिस्रो मात्राः सर्वा देवताः हृदि हृदयाधिकरणे प्राणे प्रतिष्ठिताः अनेन सर्वदेवताधिष्ठानत्वमुक्तम् । यः प्राणरूपस्त्वं हृदि नित्यमसि सः परः नादाख्या र्धमात्रारूप इत्यर्थः ॥ ११ ॥ ओंकाररूपत्वं वर्णयति–शिरश्चेति । शिरः मूर्धस्थानापन्न अकारः उत्तरतः उत्तरभागस्तथा पादौ पादस्थानापन्नो मकारः दक्षिणतः साक्षा न्मध्यभागः उकार उत्तरत उत्तरभागसंश्लिष्टः यः पूर्वोक्तो वै ओंकारः स सनातनः शिव इत्यर्थः॥१२॥य ओंकारः स एवेह प्रणवः व्याप्य तिष्ठति नाम सर्वव्यापी अनंतः तारसूक्ष्ममयं समाहारद्वंद्वः । शुक्लं वैद्युतं परं ब्रह्म ईशानः एकः । भवान् भगवानित्यर्थः । महेश्वरः महादेवः एकः स रुद्रो न संशय इत्यग्रिमेणान्वयः ॥१३॥१४॥ओंकारादि शब्दानामथर्वशिरसोक्ता व्युत्पत्तीर्दर्शयति–ऊर्ध्वमित्यादिना । ऊर्ध्वमुन्नामयति उच्चार्यमाण एव सर्वं शरीरमूर्ध्वमुन्नामयतीत्यर्थः । प्राणानवति रक्षतीत्यर्थः ॥ १५ ॥ १६ ॥

॥ १७ ॥ १८ ॥ [illegible]
कामुष्मिकरूपे यस्माद्धि बृंहति पोषयति तस्मात्परं ब्रह्मेति कीर्तितमित्यग्रिमेणान्वयः ॥ २० ॥ एकः स्वसजातीयद्वितीयरहितोऽतस्तत्संज्ञां निरूपयति—अद्वितीयोति ॥ २१ ॥ ईशानसंज्ञाहेतुं निरूपयति—ईशानमस्येत्यादिना । अस्य भूलोकस्थस्य जगतः ईशानं स्वामिनं स्वः स्वर्गलोकं पश्यंति ते स्वर्दृशस्तेषां चक्षुर्नेत्रसदृशमीश्वरं नियंतारम् इंद्रप्रमुखाः सूरयो देवा इंद्रसूरयः सर्वदा सर्वेषामपि ईशानमाहुरिति शेषः॥२२॥यद्यस्मात्कारणात्सर्वविद्यानामीशानस्ततः ईशान उच्यत इत्यन्वयः । भगवत्संज्ञां निरूपयति—यदीक्षत इत्यादिना । तदुक्तमथर्वशिरसि " अथ कस्मादुच्यते भगवान्यः सर्वान् भावानीक्षत्यात्मानं निरीक्षयति योगं गमयति " इति ॥ २३ ॥ " भगं श्रीकाममाहात्म्यम् "

तथान्ये च ततोऽनंतो रुद्रः परमकारणम् ॥ यस्तारयति संसारात्तार इत्यभिधीयते॥१७॥सूक्ष्मो भूत्वा शरीराणि सर्वदा ह्यधितिष्ठति ॥ तस्मात्सूक्ष्मः समाख्यातो भगवान्नीललोहितः॥१८॥नीलश्च लोहितश्चैव प्रधानपुरुषान्वयात् ॥ स्कंदतेऽस्य यतः शुक्रं तथा शुक्रमपैति च॥१९॥विद्योतयति यस्तस्माद्वैद्युतः परिगीयते॥बृहत्त्वादबृंहणत्वाच्च बृहते च परापरं ॥२०॥ तस्माद्बृंहति यस्माद्धि परं ब्रह्मेति कीर्तितम्॥अद्वितीयोऽथ भगवांस्तुरीयः परमेश्वरः॥२१॥ईशानमस्य जगतः स्वर्दृशां चक्षुरीश्वरम् ॥ ईशानमिंद्रसूरयः सर्वेषामपि सर्वदा॥२२॥ ईशानः सर्वविद्यानां यत्तदीशान उच्यते ॥ यदीक्षते च भगवान्निरीक्ष्यमिति चाज्ञया॥२३॥आत्मज्ञानं महादेवो योगं गमयति स्वयम् ॥ भगवांश्चोच्यते देवो देवदेवो महेश्वरः ॥ २४ ॥ सर्वांल्लोकान्क्रमेणैव यो गृह्णाति महेश्वरः ॥ विसृजत्येष देवेशो वासयत्यपि लीलया ॥२५॥ एषो हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अंतः ॥ स एव जातः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति सर्वतोमुखः ॥ २६ ॥ उपासितव्यं यत्नेन तदेतत्सद्भिरव्ययम् ॥ यतो वाचो निवर्तंते ह्यप्राप्य मनसा सह ॥ २७ ॥ तदग्रहणमेवेह यद्वाग्वदति यत्नतः ॥ अपरं च परं वेति परायणमिति स्वयम् ॥ २८ ॥ वदंति वाचः सर्वज्ञं शंकरं नीललोहितम् ॥ एष सर्वो नमस्तस्मै पुरुषः पिंगलः शिवः ॥ २९ ॥

इत्यमरः । तथा चेह सर्वज्ञत्वोपदेष्टृत्वादिरूपं माहात्म्यं बोध्यम् ॥ २४ ॥ महेश्वरसंज्ञां निरूपयति—सर्वांल्लोकानिति ॥ २५ ॥ एषो हि पूर्वोक्तमहेश्वरः देवो विश्वरूपेण क्रीडमानो रुद्रः अनु सर्वाः प्रदिशः सकलदिशु इत्यर्थः। दिग्व्यापकत्वमुक्त्वा कालव्यापकत्वं वर्णयंति—पूर्वो हीति । पूर्वोऽनादिसिद्धः स उ निश्चयेन अंतः गर्भे ब्रह्मांडोदरे जातः प्रविष्टः स एव जातः उत्पन्नः जनिष्यमाणः प्रत्यङ्मुखाः अनृताहंकारादिभिः पृथग्दृष्टयो हे जीवाः सर्वतोमुखः सर्वकालव्यापकस्तिष्ठतीत्यन्वयः ॥ २६ ॥ एतद्ब्रह्मात्मकं शिवरूपम् ॥ २७ ॥ वाग्वेदवाणीत्यर्थः ॥ २८ ॥ " वाचा ऋतं सत्यं परं ब्रह्म " इत्यादिश्रुतयः ॥ २९ ॥

स एषः " विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् " इति श्रुत्युक्तः स रुद्रः विश्वं यज्जडं भूतं चेतनं प्राणिजातं भुवनं चतुर्दशभुवनरूपं भविष्यति बहुधा बहुप्रकारेण जातं पूर्वोत्पन्नमितस्ततोजायमानं वर्तमानमित्यर्थः । अस्तीति शेषः ॥ ३० ॥ " नमो हिरण्यबाहवे " इति श्रुतेरनुवादमाह–हिरण्यबाहुरिति ॥ ३१ ॥ " यो ब्रह्माणम् " इति श्रुत्यनुवादमाह–ब्रह्माणमित्यादिना ॥ ३२ ॥ ३३ ॥ ३४ ॥ " अणोरणीयान् " इति श्रुत्यनुवादमाह–महत इति ॥ ३५ ॥ अस्य समग्रस्य विश्वस्य वेश्मभृत आलयभूतोऽपि हृदि सकलप्राणिहृदये कमलस्थः स्वयं तिष्ठतीति शेषः ॥ ३६ ॥ तत्राप्यतिसूक्ष्मरूपेण भगवदावासं याजुषश्रुत्युपवर्णितं कथयति–गह्वरमित्यादिना । तत्स्थं हृत्कमलस्थं गहनमयोगिदुर्ज्ञेयं गह्वरमाकाशं तस्यांतश्चोर्ध्वतः वह्निशिखेति शेषः । स्थिता । तथा च श्रुतिः " तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता " इति ।

स एष स महारुद्रो विश्वं भूतं भविष्यति ॥ भुवनं बहुधा जातं जायमानमितस्ततः ॥ ३० ॥ हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः ॥ अंबिकापतिरीशानो हेमरेता वृषध्वजः ॥ ३१ ॥ उमापतिर्विरूपाक्षो विश्वसृग्विश्ववाहनः ॥ ब्रह्माणं विदधे योऽसौ पुत्रमग्रे सनातनम् ॥३२॥ प्रहिणोति स्म तस्यैव ज्ञानमात्मप्रकाशकम् ॥ तमेकं पुरुषं रुद्रं पुरुहूतं पुरुष्टुतम्॥३३॥ बालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं वह्निरूपं वरेण्यम् ॥ तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शांतिः शाश्वती नेतरेषाम्॥३४॥ महतो यो महीयांश्च ह्यणोरप्यणुरव्ययः॥ गुहायां निहितश्चात्मा जंतोरस्य महेश्वरः ॥ ३५ ॥ वेश्मभूतोऽस्य विश्वस्य कमलस्थो हृदि स्वयम् ॥ गह्वरं गहनं तत्स्थं तस्यांतश्चोर्ध्वतः स्थितः ॥ ३६ ॥ तत्रापि दहरं गगनमोंकारं परमेश्वरम् ॥ बालाग्रमात्रं तन्मध्ये ऋतं परमकारणम् ॥३७॥ सत्यं ब्रह्म महादेवं पुरुषं कृष्णपिंगलम् ॥ ऊर्ध्वरेतसमीशानं विरूपाक्षमजोद्भवम् ॥ ३८ ॥ अधितिष्ठति योनिं यो योनिं वाचैक ईश्वरः ॥ देहं पंचविधं येन तमीशानं पुरातनम् ॥ ३९ ॥ प्राणेष्वंतर्मनसो लिंगमाहुर्यस्मिन्क्रोधो या च तृष्णा क्षमा च ॥ तृष्णां छित्त्वा हेतुजालस्य मूलं बुद्ध्याचिंत्यं स्थापयित्वा च रुद्रे ॥ ४० ॥ एकं तमाहुर्वै रुद्रं शाश्वतं परमेश्वरम् ॥ परात्परतरं वापि परात्परतरं ध्रुवम् ॥ ४१ ॥ ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ॥ ध्यात्वाग्निना च शोध्यांगं विशोध्य च पृथक्पृथक् ॥ ४२ ॥

तत्रापि वह्निशिखायामपि बालाग्रमात्रं दहरं तत्संज्ञकं गगनं तन्मध्ये ऋतं परमार्थतः सत्यं परमकारणम् ओंकारं प्रणवरूपं परमेश्वरं शिवं स्थितमिति शेषः ॥ ३७ ॥ कृष्णपिंगलमर्धनारीरूपत्वादुभयवर्णं विरूपाक्षं त्र्यक्षमित्यर्थः ॥ ३८ ॥ एकजीवानेकजीवपक्षौ वेत्यनेन प्रदर्शयति–अधितिष्ठतीति । यः एको वाऽनेकरूप ईश्वरः शिवः योनिंयोनिं सकलयोनीरधितिष्ठति । येन योनिप्रवेशेन पंचविधं पंचकोशात्मकं देहं गृह्णातीति शेषः । तमीशानं येऽनुपश्यंति धीरास्तेषां शांतिरित्यस्य सर्वत्रानुषंगः ॥ ३९ ॥ स्तवपरान् देवान्ब्रह्मा शिवोक्तं क्षिप्रप्रसादकं पाशुपतव्रतमुपदिशति–प्राणेष्वित्यादिना । प्राणिषु जीवेष्वंतर्मनसो लिंगं चित्ररूपमित्यर्थः ॥ ४० ॥ ४१ ॥ अग्निना रंबीजेन पृथक्पृथगंगं विशोध्य भूतशुद्ध्युक्तक्रमेण दहनं कृत्वेत्यर्थः ॥ ४२ ॥

पंचभूतानि स्वीयदेहारंभकाणि मात्राविधिक्रमात् शब्दादिगुणोत्पत्तिक्रमात् नियम्य प्रविलाप्येत्यर्थः । पृथिव्यादिमात्राः कथयति—मात्रा इत्यादिना । विस्तरः शिवगीतादौ ज्ञेयः
पंचभूतानि स्वीयदेहारंभकाणि मात्राविधिक्रमात् शब्दादिगुणोत्पत्तिक्रमात् नियम्य प्रविलाप्येत्यर्थः ॥ ४४ ॥ व्रतसंकल्पमाह—एतदिति । व्रतविधिं कथयति—अग्निमाधायेत्यादिना ॥४५ ॥४६॥ " प्राणापानव्या
॥ ४३ ॥ अमात्रं निर्गुणरूपं द्वादशांते द्वादशतत्त्वांत इत्यर्थः ॥ ४४ ॥ व्रतसंकल्पमाह—एतदिति । व्रतविधिं कथयति—अग्निमाधायेत्यादिना ॥४७ ॥ ४८ ॥४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ व्रतफलमुक्त्वाधिकारिणः कथयति—
नोदानसमाना मे शुद्ध्यंताम "इत्यादि विरजाहोमश्रुत्यनुवादं कथयति—वायव इत्यादिना

पंचभूतानि संयम्य मात्राविधिगुणक्रमात् ॥ मात्राः पंच चतस्रश्च त्रिमात्रादिस्ततः परम् ॥ ४३ ॥ एकमात्रममात्रं हि द्वादशांते व्यवस्थितम् ॥ स्थित्वा स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥ ४४ ॥ एतद्व्रतं पाशुपतं चरिष्यामि समासतः ॥ अग्निमाधाय विधिवदृग्यजुःसामसंभवैः ॥ ४५ ॥ उपोषितः शुचिः स्नातः शुक्लांबरधरः स्वयम् ॥ शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ ४६ ॥ जुहुयाद्विरजो विद्वान् विरजाश्च भविष्यति ॥ वायवः पंच शुध्यंतां वाङ्मनश्चरणादयः ॥४७॥ श्रोत्रं जिह्वा ततः प्राणस्ततो बुद्धिस्तथैव च ॥ शिरः पाणिस्तथा पार्श्वं पृष्ठोदरमनंतरम् ॥४८॥ जंघे शिश्नमुपस्थं च पायुर्मेढ्रं तथैव च ॥ त्वचा मांसं च रुधिरं मेदोऽस्थीनि तथैव च॥४९॥ शब्दः स्पर्शं च रूपं च रसो गंधस्तथैव च ॥ भूतानि चैव शुध्यंतां देहे मेदादयस्तथा ॥ ५० ॥ अन्नं प्राणे मनो ज्ञानं शुध्यंतां वै शिवेच्छया ॥ हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥५१॥ उपसंहृत्य रुद्राग्निं गृहीत्वा भस्म यत्नतः ॥ अग्निरित्यादिना धीमान् विमृज्यांगानि संस्पृशेत् ॥ ५२ ॥ एतत्पाशुपतं दिव्यं व्रतं पाशविमोचनम् ॥ ब्राह्मणानां हितं प्रोक्तं क्षत्रियाणां तथैव च ॥५३॥ वैश्यानामपि योग्यानां यतीनां तु विशेषतः ॥ वानप्रस्थाश्रमस्थानां गृहस्थानां सतामपि ॥ ५४ ॥ विमुक्तिर्विधिनानेन दृष्टा वै ब्रह्मचारिणाम् ॥ अग्निरित्यादिना भस्म गृहीत्वा ह्यग्निहोत्रजम् ॥ ५५ ॥ सोऽपि पाशुपतो विप्रो विमृज्यांगानि संस्पृशेत् ॥ भस्मच्छन्नो द्विजो विद्वान् महापातकसंभवैः ॥ ५६ ॥ पापैर्विमुच्यते सद्यो मुच्यते च न संशयः ॥ वीर्यमग्नेर्यतो भस्म वीर्यवान्भस्मसंयुतः ॥ ५७ ॥ भस्मस्नानरतो विप्रो भस्मशायी जितेंद्रियः ॥ सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥ ५८ ॥

अथर्वशिरसोक्तकेवलभस्मधारणमाहात्म्यं कथयति—
ब्राह्मणानामित्यादिना ॥५३॥ योग्यानामदुष्टापतितानामित्यर्थः ॥ ५४ ॥ अनेन विरजादीक्षामहितभस्मधारणेनेत्यर्थः ।
अग्निरित्यादिना ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

देव्यै शिवोक्तं भस्मधारिमाहात्म्यं कथयति–तस्मादित्यादिना ॥ ५९ ॥ ६० ॥ ब्रह्महीनः तपआदिशून्योऽपि यो गृहस्थः त्रिपुंड्रं न कारयेन्न कुर्यादित्यर्थः ॥ ६१ ॥ तस्य पूजादि सर्वं निष्फलं जायत इत्यग्रिमेणान्वयः । अनेन अज्ञानिनोऽपि त्रिपुंड्रकरणेन पूजादिकर्मसिद्धिर्जायते किमुत ज्ञानिन इति सूचितम् ॥ " ब्रह्म प्रोक्तं तपोऽध्यात्मवेद ज्ञानिषु सूरिभिः " इति विश्वः ॥ ६२ ॥ ब्रह्मा इति पूर्वोक्तप्रकारं भस्ममाहात्म्यमुक्त्वा भस्मच्छन्नैर्देवैः समं स्वयं छन्नो भस्मदिग्धः स्तुत्वा विरराम ध्यानानंदास्तिमितो बभूवे त्यग्रिमेणान्वयः ॥ ६३ ॥ शिवप्रसादं कथयति–अथेत्यादिना ॥ ६४ ॥ ६५ ॥ ६६ ॥ सुरारिहा शिवः देवेभ्यो वरं दातुं तुष्टोऽस्मीत्याहेत्यन्वयः ॥ ६७ ॥ विरजादीक्षा

तस्मात्सर्वप्रयत्नेन भूत्यंगं पूजयेद्बुधः ॥ रेरेकारो न कर्तव्यस्तुंतुंकारस्तथैव च ॥ ५९॥ न तत्क्षमाति देवेशो ब्रह्मा वा यदि केशवः ॥ मम पुत्रो भस्मधारी गणेशश्च वरानने ॥६०॥ तेषां विरुद्धं यत्त्याज्यं स याति नरकार्णवम् ॥ गृहस्थो ब्रह्महीनोपि त्रिपुंड्रं यो न कारयेत् ॥६१॥ पूजा कर्म क्रिया तस्य दानं स्नानं तथैव च ॥ निष्फलं जायते सर्वं यथा भस्मनि वै हुतम्॥६२॥ तस्माच्च सर्वकार्येषु त्रिपुंड्रं धारयेद्बुधः ॥ इत्युक्त्वा भगवान्ब्रह्मा स्तुत्वा देवैः समं प्रभुः ॥ ६३ ॥ भस्मच्छन्नैः स्वयं छन्नो विरराम विशांपते ॥ अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ॥ ६४ ॥ सगणश्चांबया सार्धं सान्निध्यमकरोत्प्रभुः ॥ अथ संनिहितं रुद्रं तुष्टुवुः सुरपुंगवम् ॥ ६५ ॥ रुद्राध्यायेन सर्वेशं देवदेवमुमापतिम् ॥ देवोपि देवानालोक्य घृणया वृषभध्वजः ॥ ६६ ॥ तुष्टोस्मीत्याह देवेभ्यो वरं दातुं सुरारिहा ॥ ६७ ॥ इति श्रीलिंगमहापुराणे उत्तरभागेष्टादशोध्यायः ॥ १८ ॥ शैलादिरुवाच ॥ तं प्रभुं प्रीतमनसं प्रणिपत्य वृषध्वजम् ॥ अपृच्छन्मुनयो देवाः प्रीतिकंटकितत्वचः ॥१॥ देवा ऊचुः ॥ भगवन् केन मार्गेण पूजनीयो द्विजातिभिः ॥ कुत्र वा केन रूपेण वक्तुमर्हसि शंकर॥२॥कस्याधिकारः पूजायां ब्राह्मणस्य कथं प्रभो ॥ क्षत्रियाणां कथं देव वैश्यानां वृषभध्वज ॥३॥ स्त्रीशूद्राणां कथं वापि कुंडगोलादिनां तु वा ॥ हिताय जगतां सर्वमस्माकं वक्तुमर्हसि॥४॥सूत उवाच ॥ तेषां भावं समालोक्य मुनीनां नीललोहितः ॥ प्राह गंभीरया वाचा मंडलस्थः सदाशिवः ॥५॥

सहितं पाशुपतं ते व्रतं सांब । ब्रह्मप्रमुखैर्जुष्टं स्यान्मे भवमोचकं शश्वत् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ एकोनविंशे मुनिभिर्देवैः पृष्टान्महेश्वरात् । मंडले पूजनविधिर्ज्ञानः साक्षान्निरूप्यते ॥ शैलादिः शिवोपदिष्टं पूजाप्रकारं कथयति–तमित्यादिना । तं प्रसन्नं प्रभुं शिवमित्यर्थः ॥१॥२॥३॥४॥ मंडलस्थः सूर्यमंडलसन्निविष्टः प्राह अबोधिष्टेत्यर्थः ॥ ५ ॥

देवादिदृष्टं शिवरूपं वर्णयति—मंडल इत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ पुरुषात्मकं तत्पुरुषरूपमित्यर्थः ॥ ९ ॥ १० ॥ पश्चिमं वदनं सद्योजाताख्यमित्यग्रिमेणान्वयः ॥ ११ ॥ ॥ १२ ॥ परिवारदेवताः कथयति—आदित्यमित्यादिना । पूर्ववच्छिवसदृशमित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ वेदत्रयक्रमेण मूर्तित्रयमयं ब्रह्मरुद्रविष्णुरूपमित्यर्थः ॥ १७ ॥

मंडले चाग्रतो पश्यन्देवदेवं सहोमया ॥ देवाश्च मुनयः सर्वे विद्युत्कोटिसमप्रभम् ॥ ६ ॥ अष्टबाहुं चतुर्वक्त्रं द्वादशाक्षं महाभुजम् ॥ अर्धनारीश्वरं देवं जटामुकुटधारिणम् ॥ ७ ॥ सर्वाभरणसंयुक्तं रक्तमाल्यानुलेपनम् ॥ रक्तांबरधरं सृष्टिस्थितिसंहारकारकम् ॥ ८ ॥ तस्य पूर्वमुखं पीतं प्रसन्नं पुरुषात्मकम् ॥ अघोरं दक्षिणं वक्त्रं नीलांजनचयोपमम् ॥ ९ ॥ दंष्ट्राकरालमत्युग्रं ज्वालामालासमावृतम् ॥ रक्तश्मश्रुं जटायुक्तं चोत्तरं विद्रुमप्रभम् ॥ १० ॥ प्रसन्नं वामदेवाख्यं वरदं विश्वरूपिणम् ॥ पश्चिमं वदनं तस्य गोक्षीरधवलं शुभम् ॥ ११ ॥ मुक्ताफलमयैर्हारैर्भूषितं तिलकोज्ज्वलम् ॥ सद्योजातमुखं दिव्यं भास्करस्य स्मरारिणः ॥ १२ ॥ आदित्यमग्रतो पश्यन्पूर्ववच्चतुराननम् ॥ भास्करं पुरतो देवं चतुर्वक्त्रं च पूर्ववत् ॥ १३ ॥ भानुं दक्षिणतो देवं चतुर्वक्त्रं च पूर्ववत् ॥ रविमुत्तरतोऽपश्यन्पूर्ववच्चतुराननम् ॥ १४ ॥ विस्तारां मंडले पूर्वे उत्तरां दक्षिणे स्थिताम् ॥ बोधनीं पश्चिमे भागे मंडलस्य प्रजापतेः ॥ १५ ॥ अध्यायनीं च कौबेर्यामेकवक्त्रां चतुर्भुजाम् ॥ सर्वाभरणसंपन्नाः शक्तयः सर्वसंमताः ॥ १६ ॥ ब्रह्माणं दक्षिणे भागे विष्णुं वामे जनार्दनम् ॥ ऋग्यजुःसाममार्गेण मूर्तित्रयमयं शिवम् ॥ १७ ॥ ईशानं वरदं देवमीशानं परमेश्वरम् ॥ ब्रह्मासनस्थं वरदं धर्मज्ञानासनोपरि ॥ १८ ॥ वैराग्यैश्वर्यसंयुक्ते प्रभूते विमले तथा ॥ सारं सर्वेश्वरं देवमाराध्यं परमं सुखम् ॥ १९ ॥ सितपंकजमध्यस्थं दीप्ताद्यैरभिसंवृतम् ॥ दीप्तां दीपशिखाकारां सूक्ष्मां विद्युत्प्रभां शुभाम् ॥ २० ॥ जयामग्निशिखाकारां प्रभां कनकसप्रभाम् ॥ विभूतिं विद्रुमप्रख्यां विमलां पद्मसन्निभाम् ॥ २१ ॥ अमोघां कर्णिकाकारां विद्युतं विश्ववर्णिनीम् ॥ चतुर्वक्त्रां चतुर्वर्णां देवीं वै सर्वतोमुखीम् ॥ २२ ॥ सोममंगारकं देवं बुधं बुद्धिमतां वरम् ॥ बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् ॥ २३ ॥ मंदं मंदगतिं चैव समंतात्तस्य ते सदा ॥ सूर्यः शिवो जगन्नाथः सोमः साक्षादुमा स्वयम् ॥ २४ ॥

ईशानं तत्संज्ञमीशानं सर्वस्वामिनमित्यर्थः ॥ १८ ॥ १९ ॥ दीप्ताद्यैस्तदादिसंज्ञकाग्रिमोक्तनवशक्तिभिः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ते मुनिदेवाः मंदं शनिं च सदा तस्य शिवस्य समंतात्सामन्ताद्दिशो अपश्यन्निति सर्वत्रानुषंगः । आदित्यादिसप्तग्रहरूपमेव ज्योतिःशास्त्रोक्तं सर्वं ददृशुरित्याह—सूर्य इत्यादिना ॥ २४ ॥

शेषाणि भौमादिग्रहरूपाणि पंचभूतानि गगनादीनीत्यर्थः । सर्वे मुनयः सदेवा ऋषयः उमापतिं दृष्ट्वैव ज्ञानपूजाविधय आसन्निति शेषः ॥ २५ ॥ सप्रणयं देवर्षिस्तवमाह— कृतांजलिरित्यादिना ॥ २६॥२७॥२८॥२८॥२९॥ अत्र सर्वेषां युगपत्पृथक् स्तवात्प्रणमाम्यहमित्याद्येकवचनसंगतिः॥३०॥३१॥ इंद्रादिदेवानष्टौ दिक्पालान्॥३२॥ ३३ ॥

पंचभूतानि शेषाणि तन्मयं च चराचरम् ॥ दृष्ट्वैव मुनयः सर्वे देवदेवमुमापतिम् ॥२५॥ कृतांजलिपुटाः सर्वे मुनयो देवतास्तथा ॥ अस्तुवन्वाग्भिरिष्टाभिर्वरदं नीललोहितम् ॥ २६ ॥ ऋषय ऊचुः ॥ नमः शिवाय रुद्राय कद्रुद्राय प्रचेतसे ॥ मीढुष्टमाय सर्वाय शिपिविष्टाय रंहसे ॥२७॥प्रभूते विमले सारे ह्याधारे परमे सुखे ॥ नवशक्त्यावृतं देवं पद्मस्थं भास्करं प्रभुम्॥ २८ ॥ आदित्यं भास्करं भानुं रविं देवं दिवाकरम् ॥ उमां प्रभां तथा प्रज्ञां संध्यां सावित्रिकामपि॥२९॥विस्तारामुत्तरां देवीं बोधनीं प्रणमाम्यहम्॥ आप्यायनीं च वरदां ब्रह्माणं केशवं हरम् ॥ ३० ॥सोमादिवृंदं च यथाक्रमेण संपूज्य मंत्रैर्विहितक्रमेण ॥ स्मरामि देवं रविमंडलस्थं सदाशिवं शंकरमादिदेवम्॥३१॥ इंद्रादिदेवांश्च तथेश्वरांश्च नारायणं पद्मजमादिदेवम् ॥ प्रागाद्यधोर्ध्वे च यथाक्रमेण वज्रादिपद्मं च तथा स्मरामि ॥ ३२ ॥ सिंदूरवर्णाय समंडलाय सुवर्णवज्राभरणाय तुभ्यम् ॥ पद्माभनेत्राय सपंकजाय ब्रह्मेंद्रनारायणकारणाय ॥ ३३ ॥ रथं च सप्ताश्वमनूरुवीरं गणं तथा सप्तविधं क्रमेण ॥ ऋतुप्रवाहेण च वालखिल्यान्स्मरामि मंदेहगणक्षयं च॥३४॥हुत्वा तिलाद्यैर्विविधैस्तथाग्नौ पुनः समाप्यैव तथैव सर्वम्॥ उद्वास्य हृत्पंकजमध्यसंस्थं स्मरामि बिंबं तव देवदेव॥३५॥ स्मरामि बिंबानि यथाक्रमेण रक्तानि पद्मामललोचनानि ॥ पद्मं च सव्ये वरदं च वामे करे तथा भूषितभूषणानि ॥३६॥ दंष्ट्राकरालं तव दिव्यवक्त्रं विद्युत्प्रभं दैत्यभयंकरं च ॥ स्मरामि रक्षाभिरतं द्विजानां मंदेहरक्षोगणभर्त्सनं च ॥ ३७ ॥ सोमं सितं भूमिजमग्निवर्णं चामीकराभं बुधमिंदुसूनुम् ॥ बृहस्पतिं कांचनसन्निकाशं शुक्रं सितं कृष्णतरं च मंदम् ॥३८॥ स्मरामि सव्यमभयं वाममूरुगतं वरम् ॥ सर्वेषां मंदपर्यंतं महादेवं च भास्करम् ॥ ३९ ॥ पूर्णेंदुवर्णेन च पुष्पगंधप्रस्थेन तोयेन शुभेन पूर्णम् ॥ पात्रं दृढं ताम्रमयं प्रकल्प्य दास्ये तवार्घ्यं भगवन्प्रसीद ॥ ४० ॥ नमः शिवाय देवाय ईश्वराय कपर्दिने ॥ रुद्राय विष्णवे तुभ्यं ब्रह्मणे सूर्यमूर्तये ॥ ४१॥

ऋतुप्रवाहेण वसंतादिक्रमेण सप्तविधं गणं पूर्वोक्तादित्यर्षिसर्पगंधर्वाप्सरोग्रामणीराक्षसरूपमित्यर्थः । मंदेहगणक्षयं तत्संज्ञकासुरनाशम् ॥ ३४ ॥ उद्वास्य मंडलान्निस्सार्येत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ मंदपर्यंतं भास्करं सप्तग्रहरूपं सर्वेषां कारणमिति शेषः ॥ ३९ ॥ ४० ॥ ४१ ॥

सूतः पूजाफलं कथयति–य इत्यादिना ॥ ४२ ॥ शिवेन सह सायुज्यमभेदमित्यर्थः ॥ ४३ ॥ श्रीशंकरं वै रविमंडलस्थमुमायुतं मंडलदेवतावृतम् ॥ देवर्षिभिः संस्तुतमर्घ्यदानैः समर्चितं शश्वदुपास्महे वयम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे मंडलपूजायां शिवोक्ताश्चाधिकारिणः ॥ आग्नेयोक्तविधानेन शैवदीक्षा निरूप्यते ॥ सूतो मंडलपूजाधिकारिणः कथयति–अथेत्यादिना ॥ १ ॥ शूद्राणां नैव पूज्यः किंतु पूजकस्य शुश्रूषा

सूत उवाच ॥ यः शिवं मंडले देवं संपूज्यैवं समाहितः ॥ प्रातर्मध्याह्नसायाह्ने पठेत्स्तवमनुत्तमम् ॥४२॥ इत्थं शिवेन सायुज्यं लभते नात्र संशयः ॥ ४३ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे एकोनविंशोऽध्यायः ॥ १९ ॥ सूत उवाच ॥ अथ रुद्रो महादेवो मंडलस्थः पिनामहः ॥ पूज्यो वै ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥ १ ॥ वैश्यानां नैव शूद्राणां शुश्रूषां पूजकस्य च ॥ स्त्रीणां नैवाधिकारोऽस्ति पूजादिषु न संशयः ॥ २ ॥ स्त्रीशूद्राणां द्विजेन्द्रैश्च पूजया तत्फलं भवेत् ॥ नृपाणामुपकारार्थं ब्राह्मणाद्यैर्विशेषतः ॥ ३ ॥ एवं संपूजयेयुर्वै ब्राह्मणाद्याः सदाशिवम् ॥ इत्युक्त्वा भगवान् रुद्रस्तत्रैवांतरधात्स्वयम् ॥४ ॥ ते देवा मुनयः सर्वे शिवमुद्दिश्य शंकरम् ॥ प्रणेमुश्च महात्मानो रुद्रध्यानेन विह्वलाः ॥ ५ ॥ जग्मुर्यथागतं देवा मुनयश्च तपोधनाः ॥ तस्मादभ्यर्चयेन्नित्यमादित्यं शिवरूपिणम् ॥ ६ ॥ धर्मकामार्थमुक्त्यर्थं मनसा कर्मणा गिरा ॥ ऋषय ऊचुः ॥ रोमहर्षण सर्वज्ञ सर्वशास्त्रभृतां वर ॥७॥ व्यासशिष्य महाभाग वाह्नेयं वद सांप्रतम् ॥ शिवेन देवदेवेन भक्तानां हितकाम्यया ॥ ८ ॥ वेदात् षडंगादुद्धृत्य सांख्ययोगाच्च सर्वतः ॥ तपश्च विपुलं तप्त्वा देवदानवदुश्चरम् ॥ ९ ॥ अर्थदेशादिसंयुक्तं गूढमज्ञाननिंदितम् ॥ वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ॥ १० ॥ शिवेन कथितं शास्त्रं धर्मकामार्थमुक्तये ॥ शतकोटिप्रमाणेन तत्र पूजा कथं विभोः ॥ ११ ॥ स्नानयोगादयो वापि श्रोतुं कौतूहलं हि नः ॥ सूत उवाच ॥ पुरा सनत्कुमारेण मेरुपृष्ठे सुशोभने ॥ १२ ॥ पृष्टो नंदीश्वरो देवः शैलादिः शिवसंमतः ॥ पृष्टोयं प्रणिपत्यैवं मुनिमुख्यैश्च सर्वतः ॥ १३ ॥

सेवा प्रोक्तेति शेषः ॥ २ ॥ स्त्रीशूद्राणां द्विजेंद्रैः ब्राह्मणद्वारा पूजया तत्फलं मंडलपूजाफलमित्यर्थः । नृपाणां राज्ञाम् उपकारार्थं कुटुंबपोषणार्थं ब्राह्मणाद्यैर्विशेषतः विशेषेण स्वकृतादप्यधिकफलमित्यर्थः ॥३ ॥ ४ ॥५ ॥ ६ ॥ ऋषयः वाह्नेयमाग्निपुराणोक्तं शैवपूजादिप्रकारमपृच्छन्–रोमहर्षणेत्यादिना ॥ ७ ॥ शिवेन विपुलं तपस्तप्त्वा षडंगाद्वेदात्सर्वतः सांख्ययोगाच्च उद्धृत्येत्यग्रिमेणान्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२॥ एवं सनत्कुमारोक्तप्रकारेणेत्यर्थः ॥ १३ ॥

॥ १४ ॥ शिवेन वेदोक्तं संक्षिप्य परिभाषितं शैवमित्यन्वयः १५ ॥ १६ ॥ १७॥१८॥१९॥२०॥२१॥२२॥ समयेषु संध्यादिकालेष्वित्यर्थः ॥ २३ ॥ आत्मना स्वदेहेन वित्तानुसारतः प्रत्ययानुरोधेन "वित्ता भोगप्रत्यययोः" इति निर्देशात्॥२४॥२५॥प्राणभूतं द्रव्यं प्राणद्रव्यमत्यंतं प्रियवस्तु तस्य प्रदानेनात्मसमर्पणेनेत्यर्थः। इतस्ततः आदेशैरनेक

तस्मै सनत्कुमाराय नंदिना कुलनंदिना ॥ कथितं यच्छिवज्ञानं शृण्वंतु मुनिपुंगवाः ॥ १४ ॥ शैवं संक्षिप्य वेदोक्तं शिवेन परिभाषितम् ॥ स्तुतिनिन्दादिरहितं सद्यः प्रत्ययकारकम् ॥ १५ ॥ गुरुप्रसादजं दिव्यमनायासेन मुक्तिदम् ॥ सनत्कुमार उवाच ॥ भगवन्सर्वभूतेश नंदीश्वर महेश्वर ॥ १६ ॥ कथं पूजादयः शंभोर्धर्मकामार्थमुक्तये ॥ वक्तुमर्हसि शैलादे विनयेनागताय मे ॥ १७ ॥ सूत उवाच ॥ संप्रेक्ष्य भगवान्नंदी निशम्य वचनं पुनः ॥ कालवेलाधिकाराद्यमवदद्वदतां वरः ॥ १८ ॥ शैलादिरुवाच ॥ गुरुतः शास्त्रतश्चैवमधिकारं ब्रवीम्यहम् ॥ गौरवादेव संक्षेपा शिवाचार्यस्य नान्यथा ॥ १९ ॥ स्वयमाचरते यस्तु आचारे स्थापयत्यपि ॥ आचिनोति च शास्त्रार्थानाचार्यस्तेन चोच्यते ॥२०॥ तस्माद्वेदार्थतत्त्वज्ञमाचार्यं भस्मशायिनम् ॥ गुरुमन्वेषयेद्भक्तः सुभगं प्रियदर्शनम्॥२१॥ प्रतिपन्नं जनानंदं श्रुतिस्मृतिपथानुगम् ॥ विद्ययाभयदातारं लौल्यचापल्यवर्जितम् ॥ २२ ॥ आचारपालकं धीरं समयेषु कृतास्पदम् ॥ तं दृष्ट्वा सर्वभावेन पूजयेच्छिववद्गुरुम् ॥ २३ ॥ आत्मना च धनेनैव श्रद्धावित्तानुसारतः ॥ तावदाराधयेच्छिष्यः प्रसन्नोऽसौ यथा भवेत् ॥ २४ ॥ सुप्रसन्ने महाभागे सद्यः पाशक्षयो भवेत् ॥ गुरुर्मान्यो गुरुः पूज्यो गुरुरेव सदाशिवः ॥ २५ ॥ संवत्सरत्रयं वाथ शिष्यान्विप्रान्परीक्षयेत् ॥ प्राणद्रव्यप्रदानेन आदेशैश्च इतस्ततः ॥ २६ ॥ उत्तमश्चाधमे योज्यो नीच उत्तमवस्तुषु ॥ आकृष्टास्ताडिता वापि ये विषादं न यांति वै ॥ २७ ॥ ते योग्याः शिवधर्मिष्ठाः शिवधर्मपरायणाः ॥ संयता धर्मसंपन्नाः श्रुतिस्मृतिपथानुगाः ॥ २८ ॥ सर्वद्वंद्वसहा धीरा नित्यमुद्युक्तचेतसः ॥ परोपकारनिरता गुरुशुश्रूषणे रताः ॥२९॥ आर्जवा मार्दवाः स्वस्था अनुकूलाः प्रियंवदाः ॥ अमानिनो बुद्धिमंतस्त्यक्तस्पर्धा गतस्पृहाः ॥ ३० ॥ शौचाचारगुणोपेता दम्भमात्सर्यवर्जिताः ॥ योग्या एवं द्विजाः सर्वे शिवभक्तिपरायणाः ॥ ३१ ॥ एवंवृत्तसमोपेता वाङ्मनःकायकर्मभिः ॥ शोध्या एवंविधाश्चैव तत्त्वानां च विशुद्धये ॥ ३२ ॥

कार्यनियोगैः ॥२६॥ अधिकारिशिष्यगुणान्कथयति–आकृष्टा इत्यादिना॥२७॥२९॥३०॥३१॥तत्त्वानामिंद्रियादिचतुर्विंशतितत्त्वानां विशुद्धये शोधनार्थमित्यर्थः ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ तत्त्वहीनस्यात्मज्ञानरहितस्येत्यर्थः ॥ ३५ ॥३६ ॥ ३७ ॥ पशवो विशेषदर्शिन इत्यर्थः । संधिरार्षः ॥ ३८ ॥ ३९॥४० ॥ शिला पाषाणः तदात्मज्ञानं येषां नाममात्रेण केवलं शब्दतस्तेषां मुक्तिर्नाममात्रिका नतु वास्तवीत्यर्थः ॥ ४१ ॥ जन्मांतरे किंचिदसमाप्तसाधनानां सद्योऽपि सिद्धिं कथयति—योगिनामित्यादिद्वाभ्याम् । योगिनां युक्तानां दर्शनादिना पाशोपक्षयकारिणी सकलबंधमोचिका आज्ञानुग्रहः सद्यो जायत इत्यन्वयः ॥ ४२॥ युंजानयोग्याधिकारमाह—अथवेति ॥ ४३॥ षडर्धशुद्धिर्गुण

शुद्धो विनयसंपन्नो मिथ्याकटुकवर्जितः ॥ गुर्वाज्ञापालकश्चैव शिष्योऽनुग्रहमर्हति ॥ ३३ ॥ गुरुश्च शास्त्रवित्प्राज्ञस्तपस्वी जनवत्सलः ॥ लोकाचाररतो ह्येवं तत्त्वविन्मोक्षदः स्मृतः॥३४॥ सर्वलक्षणसंपन्नः सर्वशास्त्रविशारदः ॥सर्वोपायविधानज्ञस्तत्त्वहीनस्य निष्फलम्॥३५॥ स्वसंवेद्ये परे तत्त्वे निश्चयो यस्य नात्मनि ॥ आत्मनोऽनुग्रहो नास्ति परस्यानुग्रहः कथम् ॥ ३६ ॥ प्रबुद्धस्तु द्विजो यस्तु स शुद्धः साधयत्यपि ॥ तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥४७ ॥ परिग्रहविनिर्मुक्तास्ते सर्वे पशवोदिताः ॥ पशुभिः प्रेरिता ये तु सर्वे ते पशवः स्मृताः ॥ ३८ ॥ तस्मात्तत्त्वविदो ये तु ते मुक्ता मोचयंत्यपि॥ संवित्तिजननं तत्त्वं परानंदसमुद्भवम् ॥ ३९ ॥ तत्त्वं तु विदितं येन स एवानंददर्शकः ॥ न पुनर्नाममात्रेण संवित्तिरहितस्तु यः ॥ ४० ॥ अन्योऽन्यं तारयेन्नैव किं शिला तारयेच्छिलाम् ॥ येषां तन्नाममात्रेण मुक्तिर्वै नाममात्रिका॥४१॥योगिनां दर्शनाद्वापि स्पर्शनाद्भाषणादपि॥सद्यः संजायते चाज्ञा पाशोपक्षयकारिणी॥४२॥ अथवा योगमार्गेण शिष्यदेहं प्रविश्य च ॥ बोधयेदेव योगेन सर्वतत्त्वानि शोध्य च ॥ ४३ ॥ षडर्धशुद्धिर्विहिता ज्ञानयोगेन योगिनाम् ॥ शिष्यं परीक्ष्य धर्मज्ञं धार्मिकं वेदपारगम् ॥४४ ॥ ब्राह्मणं क्षत्रियं वैश्यं बहुदोषविवर्जितम् ॥ ज्ञानेन ज्ञेयमालोक्य कर्णात् कर्णागतेन तु ॥ ४५ ॥ दीपाद्दीपो यथा चान्य संचरेद्विधिवद्गुरुः ॥ भौवनं च पदं चैव वर्णाख्यं मात्रमुत्तमम् ॥ ४६ ॥ कालाध्वरं महाभाग तत्त्वाख्यं सर्वसंमतम् ॥ भिद्यते यस्य सामर्थ्यादाज्ञामात्रेण सर्वतः ॥ ४७ ॥ तस्य सिद्धिश्च मुक्तिश्च गुरुकारुण्यसंभवा ॥ पृथिव्यादीनि भूतानि आविशंति च भौवने ॥ ४८ ॥

त्रयशुद्धिरित्यर्थः । गुरुकृत्यमाह—शिष्यमित्यादिना ॥ ४४ ॥ कर्णात्कर्णगतेन गुरुपरंपराप्राप्तमार्गेणेत्यर्थः ॥ ४५ ॥ भौवनं पदं वर्णाख्यं मात्रं कालाध्वरं चेदं सर्वसंमतं तत्त्वाख्यं सकलतत्त्वसंज्ञं महाभाग हे सनत्कुमार सामर्थ्यात्प्रभावेण सर्वतः सर्वमाज्ञामात्रेण गुर्वाज्ञयैव यस्य शिष्यस्य भिद्यते तस्य सिद्धिश्च मुक्तिश्च गुरुकारुण्यसंभवा भवतीति शेषमादाय तृतीयेनान्वयः ॥ ४६ ॥ ४७ ॥ भौवनादिसंज्ञाः कथयति—पृथिव्यादीनीत्यादिना । भौवने तत्संज्ञायां पृथिव्यादीनि भूतान्याविशंतीत्यन्वयः ॥ ४८ ॥

शब्दादयो भावतः स्वभावेन पदं तत्संज्ञा इत्यर्थः । विप्र सनत्कुमार बुद्धींद्रियविकल्पनं ज्ञानेंद्रियपंचकं वर्णाख्यकं तत्संज्ञकम् ॥४९ ॥ कर्मेन्द्रियाणि मात्रं तत्संज्ञकानीत्यर्थः । मनोबुद्ध्यादिचतुष्टयं कालाध्वरमिति स्मृतमित्यन्वयः ॥ ५० ॥ पुरुषादिमानुषानंदमारभ्य विरिंच्यंतं ब्रह्मपदपर्यंतं परात्परमुन्मनत्वं श्रेष्ठमनस्कत्वमित्यर्थः । तथा सर्वतत्त्वाववोधकं सर्वतत्त्वप्रकाशकर्माशत्वामिति प्रोक्तमित्यन्वयः ॥ ५१ ॥ अयोगी योगिभिन्नः शिवात्मिकां कल्याणरूपां तत्त्वशुद्धिं नैव जानाति न वेत्तीत्यर्थः ॥ ५२ ॥ मम भौवनादिसंज्ञस्तत्त्वग्रामो महेश कृपया ते ॥ विश्वगुरो शुद्धः स्यादाज्ञामात्रेण मोचकः सद्यः ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां विंशोऽध्यायः॥२०॥

शब्दः स्पर्शस्तथा रूपं रसो गंधश्च भावतः ॥ पदं वर्णाख्यकं विप्र बुद्धींद्रियविकल्पनम् ॥ ४९ ॥ कर्मेन्द्रियाणि मात्रं हि मनो बुद्धिरतः परम् ॥ अहंकारमथाव्यक्तं कालाध्वरमिति स्मृतम् ॥ ५० ॥ पुरुषादिविरिंच्यंतमुन्मनत्वं परात्परम् ॥ तथेशत्वमिति प्रोक्तं सर्वतत्त्वार्थ बोधकम् ॥ ५१ ॥ अयोगी नैव जानाति तत्त्वशुद्धिं शिवात्मिकाम् ॥ ५२ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे विंशोऽध्यायः ॥ २० ॥

सूत उवाच ॥ परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः ॥ अलंकृत्य वितानाद्यैरीश्वरावाहनक्षमाम् ॥ १ ॥ एकहस्तप्रमाणेन मंडलं परिकल्पयेत् ॥ आलिखेत्कमलं मध्ये पंचरत्नसमन्वितम् ॥ २ ॥ चूर्णैरष्टदलं वृत्तं सितं वा रक्तमेव च ॥ परिवारेण संयुक्तं बहुशोभासमन्वितम् ॥ ३ ॥ आवाह्य कर्णिकायां तु शिवं परमकारणम् ॥ अर्चयेत्सर्वयत्नेन यथाविभवविस्तरम् ॥ ४ ॥ दलेषु सिद्धयः प्रोक्ताः कर्णिकायां महामुने ॥ वैराग्यज्ञाननालं च धर्मकंदं मनोरमम् ॥ ५ ॥ वामा ज्येष्ठा च रौद्री च काली विकरणी तथा ॥ बलविकरणी चैव बलप्रमथिनी क्रमात् ॥६॥ सर्वभूतस्य दमनी केसरेषु च शक्तयः ॥ मनोन्मनी महामाया कर्णिकायां शिवासने॥७॥वामदेवादिभिः सार्धं द्वंद्वन्यायेन विन्यसेत् ॥ मनोन्मनं महादेवं मनोन्मन्याथ मध्यतः ॥ ८ ॥ सूर्यसोमाग्निसंबंधात्प्रणवाख्यं शिवात्मकम् ॥ पुरुषं विन्यसेद्वर्के पूर्वे पत्रे रविप्रभम् ॥ ९ ॥ अघोरं दक्षिणे पत्रे नीलांजनचयोपमम् ॥ उत्तरे वामदेवाख्यं जपाकुसुमसन्निभम् ॥ १० ॥

एकविंशे तु तन्त्रोक्तः शैवदीक्षाविधिः शुभः । नियमः शिवपूजायाः फलं चैव निरूप्यते ॥ सूतो दीक्षाविधिं कथयति–परीक्ष्येत्यादिना । गन्धः सुरभिः वर्णः कृष्णः रसो मधुर इत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ दलेषु लिखितकमलपत्रेषु सिद्धयोऽणिमादयः ॥ ५ ॥ वामाद्योऽष्टशक्तयः केसरेषु किंजल्केषु महामाया तद्रूपा मनोन्मनी च शिवासनं कर्णिकायां नालदेशे ध्येयेति शेषमादायाग्रिमेणान्वयः ॥ ६ ॥ ७ ॥ वामदेवादिभिस्तत्पतिभिः सार्धं द्वंद्वन्यायेन दांपत्यरूपेण पूर्वोक्ताष्टशक्तीरथ मध्यतः मनोन्मन्या मनोन्मनं महादेवं विन्यसेदित्यन्वयः ॥ ८ ॥ सूर्यसोमाग्निसंबंधान्नेत्ररूपादित्यर्थः । पुरुषं तत्पुरुषसंज्ञम ॥ ९ ॥ १० ॥

॥११॥विदिङ्न्यासं कथयति—चंद्रमंडलसंकाशमित्यादिना ॥१२॥१३॥ दिक्षु ऊर्ध्वादिशास्वित्यर्थः ॥१४॥ शिवं रुद्रं सदाशिवं विष्णुं महेश्वरं विरिंचिं सृष्टिन्यायेन सर्गस्थिति लयक्रमेणेत्यर्थः ॥ १५ ॥ गगनादिपंचभूतविग्रहस्तावकपंचमंत्रान्कथयति—शिवायेत्यादिना ॥१६॥१७॥१८ ॥ पंचब्रह्ममयविग्रहं कथयति—ईशानमुकुटमित्यादिना ॥ १९ ॥ अष्टत्रिंशत्कलामयं तत्संख्याकसद्यादिपंचमंत्रभागप्रचुरमित्यर्थः ॥२०॥२१॥ सद्याष्टप्रकारादिभेदाः शिवरहस्यदशमांशे विस्तरेण ज्ञेयाः ॥ २२ ॥ हंस हंसेतिमंत्रेण " हंसहंसाय

सद्यं पश्चिमपत्रे तु गोक्षीरधवलं न्यसेत् ॥ ईशानं कर्णिकायां तु शुद्धस्फटिकसन्निभम् ॥ ११ ॥ चंद्रमंडलसंकाशं हृदयायेति मंत्रतः ॥ वाह्नेये रुद्रदिग्भागे शिरसे धूम्रवर्चसे ॥ १२ ॥ शिखायै च नमश्चेति रक्ताभे नैर्ऋते दले ॥ कवचायांजनाभाय इति वायुदले न्यसेत् ॥ १३ ॥ अस्त्रायाग्निशिखाभाय इति दिक्षु प्रविन्यसेत् ॥ नेत्रेभ्यश्चेति चैशान्यां पिंगलेभ्यः प्रविन्यसेत् ॥ १४ ॥ शिवं सदाशिवं देवं महेश्वरमतः परम् ॥ रुद्रं विष्णुं विरिंचिं च सृष्टिन्यायेन भावयेत् ॥ १५ ॥ शिवाय रुद्ररूपाय शांत्यतीताय शंभवे ॥ शांताय शांतदैत्याय नमश्चंद्रमसे तथा ॥ १६ ॥ वेद्याय विद्याधाराय वह्नये वह्निवर्चसे ॥ कालायै च प्रतिष्ठायै तारकायांतकाय च ॥ १७ ॥ निवृत्त्यै धनदेवाय धारायै धारणाय च ॥ मंत्रैरेतैर्महाभूतविग्रहं च सदाशिवम् ॥ १८ ॥ ईशानमुकुटं देवं पुरुषास्यं पुरातनम् ॥ अघोरं हृदयं हृष्टं वामगुह्यं महेश्वरम् ॥ १९ ॥ सद्यमूर्तिं स्मरेद्देवं सदसद्व्यक्तिकारणम् ॥ पंचवक्त्रं दशभुजमष्टत्रिंशत्कलामयम् ॥ २० ॥ सद्यमष्टप्रकारेण प्रभिद्य च कलामयम् ॥ वामं त्रयोदशविधैर्विभिद्य विततं प्रभुम् ॥२१॥ अघोरमष्टधा कृत्वा कलारूपेण संस्थितम् ॥ पुरुषं च चतुर्धा वै विभज्य च कलामयम् ॥२२॥ ईशानं पंचधा कृत्वा पंचमूर्त्या व्यवस्थितम् ॥ हंसहंसेति मंत्रेण शिवभक्त्या समन्वितम् ॥२३॥ ओंकारमात्रमोंकारमकारं समरूपिणम् ॥ आ ई ऊ ए तथा अंबानुक्रमेणात्मरूपिणम् ॥ २४ ॥ प्रधानसहितं देवं प्रलयोत्पत्तिवर्जितम् ॥ अणोरणीयांसमजं महतोऽपि महत्तमम् ॥२५॥ उर्ध्वरेतसमीशानं विरूपाक्षमुमापतिम् ॥ सहस्रशिरसं देवं सहस्राक्षं सनातनम् ॥ २६ ॥

विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् " इति हंसगायत्रीमंत्रेणेत्यर्थः ॥ २३ ॥ ॐकारेण केवलप्रणवेन मीयतेऽसौ ॐकारमास्तं त्रायत, इत्योंकारमात्रा ब्रह्मरूपस्त मोंकारं प्रणवरूपमित्यर्थः । अकारमकाररूपं समं ब्रह्मतुल्यं रूपं समरूपं तदस्यास्तीति समरूपी तं सगुणरूपम् । आ ई ऊ ए इदं वर्णचतुष्टयं चतुष्कोशरूपदेवतावाचकं तत्र ए अंबा तथानुक्रमेण देवीगणेशसूर्यविष्णुक्रमेणात्मरूपिणं पंचायतनविग्रहमित्यर्थः ॥ २४ ॥ प्रधानसहितं प्रकृतियुक्तमित्यर्थः ॥ २५ ॥ २६ ॥

नादः अंते यस्य स नादांतः प्रणवरूपस्तं नादप्रतिपाद्यः विग्रहो यस्य नादविग्रहस्तं खद्योतः सूर्यः तत्सदृशाकारो यस्य तं चंद्ररेखा आकृतौ विग्रहे यस्य स चंद्ररेखाकृतिः ॥ २७ ॥ द्वादशांते परे तत्त्व इत्यर्थः । तदुक्तमाग्नेये "द्वादशांते परे तत्त्वे परमानंदलक्षणः" इति मूर्ध्नीत्यर्थः ॥ २८ ॥ कलो गंभीरः आकारो यस्य तम् ॥२९॥३०॥

सहस्रहस्तचरणं नादांतं नादविग्रहम् ॥ खद्योतसदृशाकारं चंद्ररेखाकृतिं प्रभुम् ॥ २७ ॥ द्वादशांते भ्रुवोर्मध्ये तालुमध्ये गले क्रमात् ॥ हृद्देशेऽवस्थितं देवं स्वानंदममृतं शिवम् ॥२८॥ विद्युद्वलयसंकाशं विद्युत्कोटिसमप्रभम् ॥ श्यामं रक्तं कलाकारं शक्तित्रयकृतासनम् ॥२९॥ सदाशिवं स्मरेद्देवं तत्त्वत्रयसमन्वितम् ॥ विद्यामूर्तिमयं देवं पूजयेच्च यथाक्रमात् ॥ ३० ॥ लोकपालांस्तथास्त्रेण पूर्वाद्यान्पूजयेत् पृथक् ॥ चरुं च विधिनासाद्य शिवाय विनिवेदयेत् ॥ ३१ ॥ अर्धं शिवाय दत्त्वैव शेषार्धेन तु होमयेत् ॥ अघोरेणाथ शिष्याय दापयेद्भोक्तुमुत्तमम् ॥ ३२ ॥ उपस्पृश्य शुचिर्भूत्वा पुरुषं विधिना यजेत् ॥ पंचगव्यं ततः प्राश्य ईशानेनाभिमंत्रितम् ॥ ३३ ॥ वामदेवेन भस्मांगी भस्मनोद्धूलयेत्क्रमात् ॥ कर्णयोश्च जपेद्देवीं गायत्रीं रुद्रदेवताम् ॥३४॥ ससूत्रं सपिधानं च वस्त्रयुग्मेन वेष्टितम् ॥ तत्पूर्वं हेमरत्नौघैर्वासितं वै हिरण्मयम् ॥३५॥ कलशान्विन्यसेत्पंच पंचभिर्ब्राह्मणैस्ततः ॥ होमं च चरुणा कुर्याद्यथाविभवविस्तरम् ॥३६॥ शिष्यं च वासयेद्भक्तं दक्षिणे मंडलस्य तु ॥ दर्भशय्यासमारूढं शिवध्यानपरायणम् ॥ ३७ ॥ अघोरेण यथान्यायमष्टोत्तरशतं पुनः ॥ घृतेन हुत्वा दुःस्वप्नं प्रभाते शोधयेन्मलम् ॥३८॥ एवं चोपोषितं शिष्यं स्नातं भूषितविग्रहम् ॥ नववस्त्रोत्तरीयं च सोष्णीषं कृतमंगलम् ॥३९॥ दुकूलाद्येन वस्त्रेण नेत्रं बद्ध्वा प्रवेशयेत् ॥ सुवर्णपुष्पसंमिश्रं यथाविभवविस्तरम् ॥ ४० ॥ ईशानेन च मंत्रेण कुर्यात्पुष्पांजलिं प्रभोः ॥ प्रदक्षिणात्रयं कृत्वा रुद्राध्यायेन वा पुनः ॥४१॥ केवलं प्रणवेनाथ शिवध्यानपरायणः ॥ ध्यात्वा तु देवदेवेशमीशाने संक्षिपेत्स्वयम् ॥४२॥

पूर्वाद्याँल्लोकपालानिन्द्रादीनित्यर्थः ॥ ३१ ॥ अर्धं चर्वर्धमित्यर्थः । अथ होमानंतरमुत्तमं हुतशेषं शिष्याय भोक्तुं दापयेदित्यन्वयः ॥ ३२ ॥ पुरुषं तत्पुरुषम् ॥३३॥ ३४ ॥ होमप्राक्कृत्यं वर्णयति—ससूत्रमित्यादिना । वासितं हिरण्मयमाधिवासनमंडलमित्यर्थः ॥ ३५ ॥ ३६ ॥ शिष्यं मंडलस्य दक्षिणे वासयेत् स्वापयेदित्यर्थः ॥ ३७ ॥ प्रभाते अघोरेण तत्संज्ञकमंत्रेण घृतेन पुनरष्टोत्तरशतं हुत्वा दुःस्वप्नं तद्रूपं मलं पापं शोधयेन्निराकुर्यादित्यर्थः । अत्रोक्तमाग्नेये "गजाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकम् । तैलाभ्यंगादिकं हीनं होमोऽघोरेण शांतये" इति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

ईशाने तत्संज्ञकदिग्भाग इत्यर्थः । मंत्रसिद्ध्यनुमापकमाह—यस्मिन्निति। शिवांभसा मंगलोदकेन अघोरेण भस्मना च संस्पृश्य शिष्यमूर्धनि विन्यस्य स्वकरं संस्थाप्य गंधाद्यैः तत्प्रमुखोपचारैः शिष्यमर्चयेदित्यग्रिमेणान्वयः । तदुक्तमग्निपुराणे " पूर्वाननस्य शिष्यस्य मूलमंत्रेण मस्तके । शिवहस्तः प्रदातव्यो रुद्रेशपददायकः" इति ॥ ४३ ॥ प्रवेश द्वारं कथयति—वारुणमित्यादिना ॥ ४४ ॥ नेत्रावरणं नेत्राच्छादनवस्त्रम् ॥ ४५ ॥ कुशासने संस्थाप्य शिष्यं सन्निवेश्य दक्षिणामूर्तिं तत्संज्ञकशिवमास्थितः संश्रितः सन् पंच तत्त्वप्रकारतस्तत्त्वशुद्धिं कुर्यादित्यन्वयः ॥४६॥ निवृत्त्या पार्थिवादिलयक्रमेणांडं ब्रह्माण्डं रुद्रपर्यंतमहंकारावधिकमित्यर्थः । तदूर्ध्वमहंकारोपरि यावदव्यक्तगोचरं प्रकृतिपर्यंतं प्रतिष्ठया स्थित्या विद्याकलामात्रेण ज्ञानकलाकात्स्न्र्येन विश्वेश्वरांतं पुरुषपर्यंतं ज्ञात्वेति शेषः । तदूर्ध्वस्य षड्विंशकपरमशिवस्य मार्गं प्राप्तिपथं शिवभक्त्या शिवपरमसेवनेन

**यस्मिन्मंत्रे पतेत्पुष्पं तन्मंत्रस्तस्य सिध्यति ॥ शिवांभसा तु संस्पृश्य अघोरेण च भस्मना ॥ ४३ ॥ शिष्यमूर्धनि विन्यस्य गंधाद्यैः शिष्यमर्चयेत् ॥ वारुणं परमं श्रेष्ठं द्वारं वै सर्ववर्णिनाम् ॥ ४४ ॥ क्षत्रियाणां विशेषेण द्वारं वै पश्चिमं स्मृतम् ॥ नेत्रावरणमुन्मुच्य मंडलं दर्शयेत्ततः ॥ ४५ ॥ कुशासने तु संस्थाप्य दक्षिणामूर्तिमास्थितः ॥ तत्त्वशुद्धिं ततः कुर्यात्पंचतत्त्वप्रकारतः ॥ ४६ ॥ निवृत्त्या रुद्रपर्यंतमंडमंडोद्भवात्मज ॥ प्रतिष्ठया तदूर्ध्वं च यावदव्यक्तगोचरम् ॥४७॥ विश्वेश्वरांतं वै विद्या कलामात्रेण सुव्रत ॥ तदूर्ध्वमार्गं संशोध्य शिवभक्त्या शिवं नयेत् ॥ ४८ ॥ समर्चनाय तत्त्वस्य तस्य भोगेश्वरस्य वै ॥ तत्त्वत्रयप्रभेदेन चतुर्भिरुत वा तथा ॥ ४९ ॥ होमयेदंगमंत्रेण शांत्यतीतं सदाशिवम् ॥ सद्यादिभिस्तु शांत्यंतं चतुर्भिः कलया पृथक्॥५०॥शांत्यतीतं मुनिश्रेष्ठ ईशानेनाथवा पुनः ॥ प्रत्येकमष्टोत्तरशतं दिशाहोमं तु कारयेत् ॥५१॥ ईशान्यां पंचमेनाथ प्रधानं परिगीयते ॥ समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥५२॥ द्रव्याणि सप्त होतव्यं स्वाहांतं प्रणवादिकम् ॥ तेषां पूर्णाहुतिर्विप्र ईशानेन विधीयते ॥ ५३ ॥**

संशोध्य निरावरणं कृत्वा शिवं तुरीयं नयेच्छिष्यं प्रापयेदित्यग्रिमेणान्वयः ॥ ४७ ॥ ४८ ॥ भोगेश्वरस्य तस्य तत्त्वस्य षड्विंशकशिवस्य समर्चनाय तत्त्वत्रयक्रमेण प्रकृति पुरुषेशक्रमेण वा चतुर्भिरहंकारादिभिः शांत्यतीतं तत्संज्ञककलापरं सदाशिवमंगमंत्रेण ईशानमंत्रेण होमयेदित्यग्रिमेणान्वयः ॥ ४९ ॥ पृथक्कलया गणनया सद्यादिभिश्चतुर्भिः शांत्यंतं होमयेदित्यनुषंगः ॥ ५० ॥ अथानंतरं वा निश्चयेन शांत्यतीतं परमशिवमीशानेनाष्टोत्तरशतं हुत्वेति शेषः । तु पुनः प्रत्येकमष्टोत्तरशतं दिशाहोमं दिग्देवताहोमं कारये दृत्विग्भिः कुर्यादित्यन्वयः । तृतीयपादेऽक्षराधिक्यमार्षम् ॥ ५१ ॥ ईशान्यां तद्दिशि पंचमेनेशानमंत्रेण प्रधानं प्रधानयाग इत्यर्थः । यागविधिमाह—समिदादिसप्तद्रव्याण्या दायेति शेषः । प्रणवादिस्वाहांतं होतव्यमित्यग्रिमेणान्वयः ॥ ५२ ॥ ५३ ॥

प्रणवाद्येन सहंसेन हंसगायत्रीमंत्रसहितेनाघोरेण प्रायश्चित्तं विधीयत इत्यन्वयः ॥ ५४ ॥ क्रमेण जयादिस्विष्टपर्यंतं जयाभ्यातानादिहोमयुक्तं स्विष्टकृतांतमग्निकार्यं गुणसंख्या प्रकारेण त्रिप्रकारेणेत्यर्थः। तदुक्तं पाशुपततंत्रे "वैदिकं कल्पमेवं च मिश्रं चैवानुकल्पकम्। शैवकल्पानुकल्पं च अग्निकार्यं त्रिधा भवेत्" इति। प्रधानेन च पूर्वोक्तप्रधानहोमेन च योजयेत् युक्तं कुर्यादित्यर्थः ॥५५॥ दीक्षोपसंहारं कथयति–भूतानीत्यादिना। अथ मौनी मौनयुक्तो गुरुः भूतानि पृथिव्यादीनी बीजादिभिः ब्रह्मभिः सद्योजातादि मंत्रैस्तथा प्राणापानौ प्रधानमात्रेण केवलेशानमंत्रेण नियम्य षष्ठेन 'नमो हिरण्यबाहवे' इति मंत्रेण आत्मवाचकः प्रणवः आत्मप्रणवस्तस्यांतो नादस्तत्कुलेन समुदायेनाकुलं व्याप्तं ब्रह्मरंध्रं भेदयेत् इत्यग्रिमेणान्वयः ॥५६॥५७॥ ब्रह्माणं केशवं हरम् अन्योन्यमुपसंहृत्य तं हरं संहारमूर्तिं रुद्रे तमीशाने तं महेश्वरं देवं शिवे उपसंहृत्य तस्मात् सृष्टिप्रकारेण भवनाशनं रुद्रं भावयेच्चिंतयेदिति पूर्वस्थैरन्वयः॥५८॥ अमुं जीवं शिष्यजीवमात्मानं रुद्रं स्थाप्य संस्थाप्य ताडनं द्वारदर्शनं दीपनं ग्रहणं पूजया सह बंधनं च अमृतीकरणं चैव विधिपूर्वकं

**सहंसेन यथान्यायं प्रणवाद्येन सुव्रत ॥ अघोरेण च मंत्रेण प्रायश्चित्तं विधीयते ॥ ५४ ॥ जयादिस्विष्टपर्यंतमग्निकार्यं क्रमेण तु ॥ गुणसंख्याप्रकारेण प्रधानेन च योजयेत्॥५५॥ भूतानि ब्रह्मभिर्वापि मौनी बीजादिभिस्तथा ॥ अथ प्रधानमात्रेण प्राणापानौ नियम्य च॥५६॥ षष्ठेन भेदयेदात्मप्रणवांतं कुलाकुलम् ॥ अन्योऽन्यमुपसंहृत्य ब्रह्माणं केशवं हरम् ॥ ५७ ॥ रुद्रे रुद्रं तमीशाने शिवे देवं महेश्वरम् ॥ तस्मात्सृष्टिप्रकारेण भावयेद्भवनाशनम् ॥५८॥ स्थाप्यात्मानममुं जीवं ताडनं द्वारदर्शनम् ॥ दीपनं ग्रहणं चैव बंधनं पूजया सह ॥५९॥ अमृतीकरणं चैव कारयेद्विधिपूर्वकम् ॥ षष्ठांतं सद्यसंयुक्तं तृतीयेन समन्वितम् ॥ ६०॥ फडंतं संहृतिः प्रोक्ता पंचभूतप्रकारतः ॥ सद्याद्यषष्ठसहितं शिखांतं सफडंतकम् ॥ ६१ ॥ ताडनं कथितं द्वारं तत्त्वानामपि योगिनः ॥ प्रधानं संपुटीकृत्य तृतीयेन च दीपनम् ॥ ६२ ॥ आद्येन संपुटीकृत्य प्रधानं ग्रहणं स्मृतम् ॥ प्रधानं प्रथमेनैव संपुटीकृत्य पूर्ववत् ॥ ६३ ॥ बंधनं परिपूर्णेन प्लावनं चामृतेन च ॥ शांत्यतीता ततः शांतिर्विद्या नाम कलामला ॥ ६४ ॥**

कारयेच्छिष्यद्वारा कुर्यादित्यग्रिमेणान्वयः ॥५९॥ उपसंहृतिप्रकारं कथयति–षष्ठांतमित्यादिना। सद्यसंयुक्तं तत्संज्ञकमंत्राद्यं तृतीयेनाघोरमंत्रेण समन्वितं युक्तं षष्ठांतं "नमो हिरण्यबाहवे" इति मंत्रादंत्यं फडंतं फडंतकरणं पंचभूतप्रकारतः पृथिव्यादिप्रकारेण संहृतिः प्रोक्तेत्यग्रिमेणान्वयः ॥६०॥ ताडनादिस्वरूपमाह–सद्याद्यमित्यादिना। योगिनो दीक्षायोगवतः सफडंतकं ताडनं तत्त्वानां द्वारं द्वारदर्शनमपि कथितमित्यग्रिमस्थैरन्वयः ॥६१॥ दीपनमाह–प्रधानमिति। तृतीयेन अघोरमंत्रेण संपुटीकृत्य प्रधानमीशानमंत्रं दीपनं कथितमित्यनुषंगः॥६२॥ आद्येन सद्यमंत्रेण संपुटीकृत्य प्रधानं ग्रहणं स्मृतं पूर्ववत् ग्रहणवदाद्येनैव संपुटीकृत्य प्रधानं बंधनं स्मृतमित्यन्वयः॥६३॥ परिपूर्णेन समग्रेणामृतेन त्रियंबकमंत्रेण प्लावनममृतीकरणं स्मृतमित्यनुषंगः। ततः पूर्वोक्तविध्यनंतरं शांत्यतीता प्रतिष्ठा नाम कला अमला विद्या। शांतिर्निवृत्तिर्नाम कला स्मृतेत्यग्रिमेणान्वयः ॥६४॥

तत्त्वे शक्तिशिवौ वर्णकला अकारादिविसर्गान्ताः षोडश तद्युक्तं भुवनेन भुवनाष्टकेन सहेत्यर्थः। यथाक्रमं कलयोः पूर्वोक्तयोः संक्रमणं कलासंक्रमणं कुर्वीतेति शेषः । तदुक्तमाग्नेये "संधानं शान्त्यतीतायाः शान्त्या सार्धं विशुद्धया । कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकसिद्धिकम् । दीपकं रोचकं चैव मोचकं चोर्ध्वगामि च ॥ व्योमरूपमनाथं च स्यादनाश्रितमष्टकम् । ओंकारपदमीशानो मंत्रा वर्णाश्च षोडश ॥ अकारादिविसर्गान्ताः" इति ॥ ६५ ॥ आद्येन प्रणवेन योनिबीजेन ह्रीमिति बीजेन पूर्ववत्कल्पयित्वा संपुटीकृत्येत्यर्थः । पद्यते शिवो गम्यते यैस्ते पादाः शिवप्रतिपादका इत्यर्थः । तैर्मंत्रैर्यथाविधि विशोध्य अर्घादि विचार्य स्तवं कुर्यादित्यन्वयः । तदुक्तमाग्नेये "ह्रींबीजाः प्रणवाद्याः स्युर्मंत्रा यत्र पूजने" इति ॥ ६६ ॥ पूजासंप्रोक्षणं तथा ताडनं हरणं संहतस्यात्यंतशुद्धस्य मनसः संयोगं यथाक्रमं विक्षेपं च तथा अर्चना गर्भधारणं वागीशीगर्भे स्थापनमिदं विस्तरेणाग्नेय उक्तम् । पुनर्जननं च भानोरधिकारो नाम तत्सदृशज्ञाननिवारकत्वरूपः विशेषतो लयोऽविद्यानाशश्च भवेदिति विद्धी

· प्रतिष्ठा च निवृत्तिश्च कलासंक्रमणं स्मृता ॥ तत्त्ववर्णकलायुक्तं भुवनेन यथाक्रमम् ॥ ६५ ॥ मंत्रैः पादैः स्तवं कुर्याद्विशोध्य च यथाविधि ॥ आद्येन योनिबीजेन कल्पयित्वा च पूर्ववत् ॥ ६६ ॥ पूजासंप्रोक्षणं विद्धि ताडनं हरणं तथा ॥ संहतस्य च संयोगं विक्षेपं च यथाक्रमम् ॥ ६७ ॥ अर्चना च तथा गर्भधारणं जननं पुनः ॥ अधिकारो भवेद्भानोर्लयश्चैव विशेषतः ॥ ६८ ॥ उत्तमाद्यं तथांत्येन योनिबीजेन सुव्रत ॥ उद्धारे प्रोक्षणे चैव ताडने च महामुने ॥ ६९ ॥ अघोरेण फडंतेन संसृतिश्च न संशयः ॥ प्रतितत्त्वं क्रमो ह्येष योगमार्गेण सुव्रत ॥ ७० ॥ मुष्टिना चैव यावच्च तावत्कालं नयेत्क्रमात् ॥ विषुवेण तु योगेन निवृत्त्यादि शिवांतिकम् ॥७१॥ एकत्र समतां याति नान्यथा तु पृथक्पृथक् ॥ नासाग्रे द्वादशांतेन पृष्ठेन सह योगिनाम् ॥ ७२ ॥

त्यग्रिमेणान्वयः ॥ ६७ ॥ ॥ ६८ ॥ हे महामुने सनत्कुमार उत्तमश्चरम ईशानमंत्रः आद्यो यस्मिन् कर्मणि तदुत्तमाद्यमंत्येन योनिबीजेन सह उद्धारे प्रोक्षणे ताडने च विद्यादिति शेषः ॥ ६९ ॥ एष पूर्वोक्तक्रमः प्रतितत्त्वं प्रतिविषुवं ज्ञेयः । तदुक्तमाग्नेये "तदेतद्योजनस्थानं विषुवं तत्त्वसंज्ञकम्" इति ॥ ७० ॥ मुष्टिना तत्सदृशप्राणायामेन यावत्तिष्ठेदिति शेषः । तावत्कालं च क्रमाद्विषुवेण योगेन तु निवृत्त्यादि शिवांतिकं नयेदित्यन्वयः । तदुक्तमाग्नेये "प्रथमं प्राणसंयोगः स्वरूपमपरं ततः । हृदयादिक्रमोच्चारविसृष्टं मंत्रसंज्ञितम् ॥ सुषुम्णानुगतं नादं स्वरूपं तु तृतीयकम् । सप्तमे कारणत्यागात्प्रशांतविषुवं ततः ॥ शक्तिनादोर्ध्वसंचारवस्तच्छाक्तिविषुवं मतम् ॥ प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम् ॥ तत्कालविषुवं षष्ठं शन्त्यतीतं च सप्तमम् । तदेतद्योजनस्थानं विषुवं तत्त्वसंज्ञितम्॥" इति ॥७१॥ नासाग्रे नासाग्रदृष्टौ एकत्र एकस्मिन् योगिनां पृष्ठेन चरमावयवभूतेन द्वादशांतेन परमतत्त्वाशिवेन समतां तुल्यतां याति पृथक्पृथगन्यथान्यस्थानेषु न याति न प्राप्नोतीत्यर्थः॥७२॥

विप्रेंद्र सनत्कुमार क्षंतव्यं सुखदुःखादिद्वंद्वजातं दीक्षितेन सोढव्यमिति देवदेवस्य शिवस्य शासनं नियोग इत्यर्थः । शिष्यस्य दीक्षाभिषेकविधिं कथयति–हेम इत्यादिना । हेम राजतताम्राद्यैर्विधिना कल्पितेन रचितपात्रेणेत्यर्थः ॥ ७३ ॥ ७४ ॥ संहितोक्तमंत्रैर्मंत्रितं संहितामंत्रितं ततः पूर्वोक्तपात्रकरणानंतरं शिवभक्तं शिष्यं रुद्राध्यायस्तुतेन। तत्सं ज्ञकस्तवेन चकारात्पावमानादिमंत्रैः सेचयेदित्यन्वयः ॥ ७५ ॥ सोऽभिषिक्तः शिष्यः शिवस्य गुरोर्वह्नेश्चाग्रे दीक्षां दीक्षाग्रहणं कुर्वीत दीक्षितः संजातदीक्षस्तथा वक्ष्यमाणं नियमं चरेदित्यन्वयः ॥ ७६ ॥७७॥७८॥ लिंगार्चनमाहात्म्यं कथयति–अग्निहोत्रमित्यादिना ॥ ७९ ॥८०॥ ते रुद्राः रुद्ररूपा इत्यर्थः। तदुक्तम् 'नारुद्रो रुद्रमर्चयेत्' इति ॥ ८१॥ नारुद्रो रुद्रभिन्न इत्यर्थः ॥ ८२ ॥ शिवार्चनार्थं संक्षेपत एवमधिकारिविधिक्रमः धर्मार्थकाममोक्षफलप्रद उक्तः कथित इत्यर्थः ॥ ८३ ॥ "आग्नेयोक्तविधानोऽयं

क्षंतव्यमिति विप्रेंद्र देवदेवस्य शासनम् ॥ हेमराजतताम्राद्यैर्विधिना कल्पितेन च ॥ ॥ ७३ ॥ सकूर्चेन सवस्त्रेण तंतुना वेष्टितेन च ॥ तीर्थांबुपूरितेनैव रत्नगर्भेण सुव्रत ॥ ७४ ॥ संहितामंत्रितेनैव रुद्राध्यायस्तुतेन च ॥ सेचयेच्च ततः शिष्यं शिवभक्तं च धार्मिकम् ॥७५॥ सोऽपि शिष्यः शिवस्याग्रे गुरोरग्रे च सादरम् ॥ वह्नेश्च दीक्षां कुर्वीत दीक्षितश्च तथाचरेत् ॥७६॥ वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा ॥ न त्वनभ्यर्च्य भुंजीयाद्भगवंतं सदाशिवम् ॥ ७७ ॥ एवं दीक्षा प्रकर्तव्या पूजा चैव यथाक्रमम् ॥ त्रिकालमेककालं वा पूजयेत्परमेश्वरम् ॥ ७८ ॥ अग्निहोत्रं च वेदाश्च यज्ञाश्च बहुदक्षिणाः ॥ शिवलिंगार्चनस्यैते कलांशेनापि नो समाः ॥ ७९ ॥ सदा यजति यज्ञेन सदा दानं प्रयच्छति ॥ सदा च वायुभक्षश्च सकृद्योऽभ्यर्चयेच्छिवम् ॥ ८० ॥ एककालं द्विकालं वा त्रिकालं नित्यमेव वा ॥ येऽर्चयंति महादेवं ते रुद्रा नात्र संशयः ॥ ८१ ॥ नारुद्रस्तु स्पृशेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ॥ नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् ॥ ८२ ॥ एवं संक्षेपतः प्रोक्तो ह्यधिकारिविधिक्रमः ॥ शिवार्चनार्थं धर्मार्थकाममोक्षफलप्रदः ॥ ८३ ॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे दीक्षाविधिर्नामैकविंशतितमोऽध्यायः ॥ २१ ॥ शैलादिरुवाच ॥ स्नानयागादिकर्माणि कृत्वा वै भास्करस्य च ॥ शिवस्नानं ततः कुर्याद्भस्मस्नानं शिवार्चनम् ॥ १ ॥ षष्ठेन मृदमादाय भक्त्या भूमौ न्यसेन्मृदम् ॥ द्वितीयेन तथाभ्युक्ष्य तृतीयेन च शोधयेत् ॥ २ ॥

शैवदीक्षाविधिक्रमः । गुरुप्रसादगम्यः स्याद्व्याख्यातो हरतुष्टय ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां एकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशतितमेऽध्याये सौरस्नानं यथाविधि ॥ वाष्कलाद्यैश्च मनुभिर्भास्करार्चा निरूप्यते ॥ शैलादिः शिवार्चनाधिकारार्थं भास्करार्चनं कथयन्नाह–स्नानयागादीत्यादिना । भास्करस्य स्नानं यागः पूजनादिस्तदादीनि कर्माणि कृत्वा शिवस्नानं ततो भस्मस्नानं शिवार्चनं च कुर्यादित्यन्वयः ॥ १ ॥ सौरस्नानविधिं कथयति--षष्ठेनेत्यादिना॥ षष्ठेन ओं तप इति मंत्रेण मृदमादाय भक्त्या भूमौ मृदं न्यसेत्स्थापयेदित्यर्थः । द्वितीयादयोग्रिमोक्तभुवराद्या ज्ञेयाः ॥ २ ॥

एकेन प्रथमेनेत्यर्थः । तच्छेषं स्नानशेषं मृदं हस्तगतां पुनः षष्ठेन सप्तवाराणि सप्तवारं वामं वामहस्तं मूलेनाग्रिमोक्तमूलमंत्रेण चालभेदित्यग्रिमेणान्वयः ॥ ३ ॥ ४ ॥ वामेन तीर्थमालभ्येति शेषः । सव्येन शरीरमनुलिप्य च स्नात्वा सर्वैः सर्वमंत्रैर्भानुं स्मरन्नभिषेकं तीर्थजलाभिषेकं समाचरेदित्यन्वयः ॥ ५ ॥ एभिर्वक्ष्यमाणैरित्यर्थः ॥ ६ ॥ ७ ॥ नवाक्षरमयं नवाक्षरप्रचुरं वा नवाक्षरावयवमित्यर्थः । अत्र यौगिकाक्षरसंज्ञां दर्शयति–न क्षरंतीति। लोकानि सप्त लोकाः न क्षरंति प्रलयावधि न नश्यंति इति ऋतं च अक्षरमुच्यते कथ्यत इत्यर्थः । सत्यं ब्रह्म अक्षरं नाशशून्यमित्युक्तं पूर्वोक्तं प्रणवादिनमोंतकं मंत्रं बाष्कलं परिकीर्तितमित्यन्वयः । नवाक्षेरेत्ययं सार्धश्लोकः ॥ ८ ॥ मूलमंत्रं कथयति

चतुर्थेनैव विभजेन्मलमेकेन शोधयेत् ॥ स्नात्वा षष्ठेन तच्छेषां मृदं हस्तगतां पुनः॥३॥त्रिधा विभज्य सर्वं च चतुर्भिर्मध्यमं पुनः॥षष्ठेन सप्तवाराणि वामं मूलेन चालभेत् ॥ दशवारं च षष्ठेन दिशो बंधः प्रकीर्तितः ॥४॥ वामेन तीर्थं सव्येन शरीरमनुलिप्य च ॥ स्नात्वा सर्वैः स्मरन् भानुमभिषेकं समाचरेत्॥५॥ शृंगेण पर्णपुटकैः पालाशेन दलेन वा ॥ सौरै रभिश्च विविधैः सर्वसिद्धिकरैः शुभैः॥६॥सौराणि च प्रवक्ष्यामि बाष्कलाद्यानि सुव्रत॥अंगानि सर्ववेदेषु सारभूतानि सर्वतः॥७॥ॐ भूः ॐभुवः ॐस्वः ॐ महः ॐ जनः ॐ तपः ॐसत्यम् ॐ ऋतम् ॐ ब्रह्म । नवाक्षरमयं मंत्रं बाष्कलं परिकीर्तितम्॥न क्षरंतीति लोकानि ऋतमक्षरमुच्यते ॥सत्यमक्षरमित्युक्तं प्रणवादिनमोंतकम्॥८॥ॐ भूर्भुवः सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् । ॐ नमः सूर्याय खखोल्काय नमः ॥९॥ मूलमंत्रमिदं प्रोक्तं भास्करस्य महात्मनः ॥ नवाक्षरेण दीप्तास्यं मूलमंत्रेण भास्करम् ॥ १० ॥ पूजयेदंगमंत्राणि कथयामि यथाक्रमम्॥ वेदादिभिः प्रभूताद्यं प्रणवेन च मध्यमम् ॥ ११ ॥ ॐ भूः ब्रह्म हृदयाय ॐ भुवः विष्णुशिरसे ॐस्वः रुद्रशिखायै ॐभूर्भुवः स्वः ज्वालामालिनीशिखायै ॐ महः महेश्वराय कवचाय ॐजनः शिवाय नेत्रेभ्यः ॐ तपः तापकाय अस्त्राय फट्॥मंत्राणि कथितान्येवं सौराणि विविधानि च ॥ एतैः शृंगादिभिः पात्रैः स्वात्मानमभिषेचयेत् ॥ १२ ॥ ताम्रकुंभेन वा विप्रः क्षत्रियो वैश्य एव च ॥ सकुशेन सपुष्पेण मंत्रैः सर्वैः समाहितः ॥ १३ ॥

ओमिति ॥ ९ ॥ १० ॥ प्रणवेन प्रभूतं प्राज्यमाद्यं यस्मिन्कर्मणि तत्प्रभूताद्यं वेदादिभिर्व्याहृतिभिर्मध्यमं यथाक्रममंगमंत्राणि कथयामीत्यन्वयः ॥११ ॥ सप्तांगमंत्रान्कथयति ॐ भूः ब्रह्म हृदयायेत्यादिना । एतैः पूर्वोक्तमंत्रैरित्यर्थः । स्वात्मानं स्वदेहं शृंगादिभिः पात्रैरभिषेचयेदित्यन्वयः ॥ १२ ॥ विप्रः क्षत्रियो वैश्य एवेत्यनेन शूद्रादिव्यावृत्तिः सकुशेन सपुष्पेण सर्वमंत्रैः समाहितः सताम्रकुंभेन वा अभिषेचयेदित्यनुषंगः ॥ १३ ॥

आचमनमंत्रान्कथयति–सूर्यश्चेत्यादिना । दिवा सूर्यश्च रात्रावग्निश्चेत्यन्वयः ॥ १४ ॥ षष्ठेन ओं नप इति मंत्रेण एवं शुद्धिं कृत्वा अनुत्तममाद्यं वौषडंतमिति मूलं तत्संज्ञकमंत्रं तथाऽनुत्तमं नवाक्षरं जपेदित्यग्रिमेणान्वयः ॥ १५ ॥ करन्यासं कथयति–करेत्यादिना । अंगुष्ठमध्यमानामिकां तथा करशाखामुक्तान्यकनिष्ठिकां न्यसेदित्यन्वयः ॥ १६ ॥ तर्जन्यामंगुष्ठं तर्जन्यंगुष्ठं मुष्टिभागानि करपृष्ठादीनि विन्यसेदित्यन्वयः । अंगैः पूर्वोक्तांगमंत्रैरित्यर्थः ॥ १७ ॥ अहं सूर्य इति संचिन्त्य एतैः पूर्वोक्तैरापोहिष्ठादिभिश्च मंत्रैः गंधसिद्धार्थकान्वितैः वामहस्तगतैरद्भिः मूलाग्रैरष्टधा स्थितैः सह कुशपुंजेन अभ्युक्ष्य स्वदेहं प्रोक्ष्य शेषं जलं वामनासापुटेनैवाघ्राय देहे शिवं संभावयेच्चिंतयेदिति तृतीयेनान्वयः ॥१८॥१९॥ अर्घ्यमाघ्राणं जलमादाय देहस्थं स्वदेहसंस्थमज्ञानं कृष्णवर्णेन पापपुरुषेण सह सव्यनासापुटेन बाह्यस्थं शिलागतं च भावयेदित्यग्रिमेणान्वयः ॥२०॥ स्नानांगतर्पणार्घ्यदाने देवादीन् कथयति–तर्पयेदित्यादिना ॥ २१ ॥ संध्याविधिं कथयति–व्यापिनीमित्यादिना । प्रातर्मध्याह्नसायाह्ने च व्यापिनीं परां ज्योत्स्नां संध्यां सम्यगुपासयेदुपासनं कुर्यादित्यर्थः । अर्घ्यं चैव निवेदयेदित्यग्रिमस्थैरन्वयः ॥ २२ ॥ सौरार्घ्यविधिं कथयति–रक्तचंदनेत्यादिना ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

रक्तवस्त्रपरीधानः स्वाचामेद्विधिपूर्वकम् ॥ सूर्यश्चेति दिवा रात्रौ चाग्निश्चेति द्विजोत्तमः ॥१४ ॥ आपः पुनंतु मध्याह्ने मंत्राचमनमुच्यते ॥ षष्ठेन शुद्धिं कृत्वैव जपेदाद्यमनुत्तमम् ॥१५॥ वौषडंतं तथा मूलं नवाक्षरमनुत्तमम् ॥ करशाखां तथांगुष्ठमध्यमानामिकां न्यसेत् ॥१६॥ तले च तर्जन्यंगुष्ठं मुष्टिभागानि विन्यसेत् ॥ नवाक्षरमयं देहं कृत्वांगैरपि पावितम् ॥ १७ ॥ सूर्योऽहमिति संचिंत्य मंत्रैरेतैर्यथाक्रमम् ॥ वामहस्तगतैरद्भिर्गंधसिद्धार्थकान्वितैः ॥ १८ ॥ कुशपुंजेन चाभ्युक्ष्य मूलाग्रैरष्टधा स्थितैः ॥ आपो हिष्ठादिभिश्चैव शेषमाघ्राय वै जलम् ॥ १९ ॥ वामनासापुटेनैव देहे संभावयेच्छिवम् ॥ अर्घ्यमादाय देहस्थं सव्यनासापुटेन च ॥ २० ॥ कृष्णवर्णेन बाह्यस्थं भावयेच्च शिलागतम् ॥ तर्पयेत्सर्वदेवेभ्य ऋषिभ्यश्च विशेषतः ॥ २१ ॥ भूतेभ्यश्च पितृभ्यश्च विधिनार्घ्यं च दापयेत् ॥ व्यापिनीं च परां ज्योत्स्नां संध्यां सम्यगुपासयेत् ॥ २२ ॥ प्रातर्मध्याह्नसायाह्ने अर्घ्यं चैव निवेदयेत् ॥ रक्तचंदनतोयेन हस्तमात्रेण मंडलम् ॥ २३ ॥ सुवृत्तं कल्पयेद्भूमौ प्रार्थयेत द्विजोत्तमाः ॥ प्राङ्मुखस्ताम्रपात्रं च सगंधं प्रस्थपूरितम् ॥ २४ ॥ पूरयेद्गंधतोयेन रक्तचंदनकेन च ॥ रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ॥ २५ ॥ दूर्वापामार्गगव्येन केवलेन घृतेन च ॥ आपूर्य मूलमंत्रेण नवाक्षरमयेन च ॥ जानुभ्यां धरणीं गत्वा देवदेवं नमस्य च ॥ २६ ॥ कृत्वा शिरसि तत्पात्रमर्घ्यं मूलेन दापयेत् ॥ अश्वमेधायुतं कृत्वा यत्फलं परिकीर्तितम् ॥ २७ ॥

अर्घ्यं सौराघ्र्यं दत्त्वैव भक्त्या त्रियंबकं शिवं यजेदथवा भास्करमिष्ट्वा शिवयजनार्थमाग्नेयं स्नानं भस्मस्नानमाचरेदित्यग्रिमेणान्वयः ॥ २८ ॥ भास्करार्चनोत्तरमादौ शिवपूजार्थं शिवस्नानमुक्तं तद्विधिं कथयति–पूर्ववदित्यादिना । पूर्ववत्सौरवन्मंत्रमात्रेण सद्योजातादिमंत्रेण भेदितं भिन्नमित्यर्थः ॥ २९ ॥ अनुक्तकर्तव्यतां कथयति–दंतधावनपूर्वमित्यादिना ॥ ३० ॥ भास्करार्चनविधिं कथयति–तीर्थं संगृह्येत्यादिना ॥ ३१ ॥ अर्घ्यपवित्रेणोदकमिक्तेनेत्यर्थः ॥ ३२ ॥ अर्घ्यस्य सादनं समासात्संक्षेपेण परिकीर्तितमग्रे उक्तमित्यर्थः ॥ ३३ ॥ ३४ ॥ पूर्वोपदिष्टमर्घ्यसादनं कथयति–अर्घ्यपात्रमित्यादिना ॥ ३५ ॥ ३६ ॥ ३७ ॥३८॥३९॥ 'आदित्यो वै तेजः' इयं याजुषश्रुतिर्ज्ञेया ॥४० ॥

तत्फलं लभते दत्त्वा सौराघ्र्यं सर्वसंमतम् ॥ दत्त्वैवार्घ्यं यजेद्भक्त्या देवदेवं त्रियंबकम् ॥ २८ ॥ अथवा भास्करं चेष्ट्वा आग्नेयं स्नानमाचरेत् ॥ पूर्ववद्वै शिवस्नानं मंत्रमात्रेण भेदितम् ॥ २९ ॥ दंतधावनपूर्वं च स्नानं सौरं च शांकरम् ॥ विघ्नेशं वरुणं चैव गुरुं तीर्थं समर्चयेत् ॥ ३० ॥ बद्ध्वा पद्मासनं तीर्थे तथा तीर्थं समर्चयेत् ॥ तीर्थं संगृह्य विधिना पूजास्थानं प्रविश्य च ॥ ३१ ॥ मार्गेणार्घ्यपवित्रेण तदाक्रम्य च पादुकम् ॥ पूर्ववत्करविन्यासं देहविन्यासमाचरेत् ॥ ३२ ॥ अर्घ्यस्य सादनं चैव समासात्परिकीर्तितम् ॥ बद्ध्वा पद्मासनं योगी प्राणायामं समभ्यसेत् ॥ ३३ ॥ रक्तपुष्पाणि संगृह्य कमलाद्यानि भावयेत् ॥ आत्मनो दक्षिणे स्थाप्य जलभांडं च वामतः ॥ ३४ ॥ ताम्रपात्राणि सौराणि सर्वकामार्थसिद्धये ॥ अर्घ्यपात्रं समादाय प्रक्षाल्य च यथाविधि ॥ ३५ ॥ पूर्वोक्तेनांबुना सार्धं जलभांडे तथैव च ॥ अप्रोदकेन चैवाघ्र्यमर्घ्यद्रव्यसमन्वितम् ॥ ३६ ॥ संहितामंत्रितं कृत्वा संपूज्य प्रथमेन च ॥ तुरीयेणावगुंठ्यैव स्थापयेदात्मनो परि ॥३७॥ पाद्यमाचमनीयं च गंधपुष्पसमन्वितम् ॥ अंभसा शोधिते पात्रे स्थापयेत्पूर्ववत्पृथक् ॥ संहितां चैव विन्यस्य कवचेनावगुंठ्य च ॥ ३८ ॥ अर्घ्यांबुना समभ्युक्ष्य द्रव्याणि च विशेषतः ॥ आदित्यं च जपेद्देवं सर्वदेवनमस्कृतम् ॥ ३९ ॥ आदित्यो वै तेज ऊर्जो बलं यशो विवर्धनि ॥ इत्यादिना नमस्कृत्य कल्पयेदासनं प्रभोः ॥ ४० ॥ प्रभूतं विमलं सारमाराध्यं परमं सुखम् ॥ आग्नेय्यादिषु कोणेषु मध्यमांतं हृदा न्यसेत् ॥ ४१ ॥ अंगं प्रविन्यसेच्चैव बीजमंकुरमेव च ॥ नालं सुषिरसंयुक्तं सूत्रकंटकसंयुतम् ॥ ४२ ॥

प्रभूतादीनि पूर्वोक्तासनविशेषणानि आग्नेय्यादिषु कोणेषु उपदिशासु मध्यमांतं महदंतव्याहृतिचतुष्टयमित्यर्थः ॥ ४१ ॥ अंगं पूर्वोक्तांगन्यासं प्रविन्यसेच्च परं बीजं धर्मकंदरूपमंकुरं सुषिरसंयुक्तं छिद्रसंयुक्तं नालं सूत्रकंटकसंयुक्तं दलं दलाग्रं सुश्वेतं हेमाभं रक्तं च दीप्ताद्यैः शक्तिभिर्वृतं कर्णिकाकेसरगर्भसमुदायं युक्तं कमलं च भावयेदिति शेषमादा–

याग्निमेणान्वयः ॥ ४२ ॥ ४३ ॥ अष्टशक्तीः कथयति—दीप्तेत्यादिना ॥४४॥ ४५ ॥ सर्वतोमुखीं गायत्रीमित्यर्थः ॥ ४६–५० ॥ पश्चिमे तद्दिग्भागे च षट्प्रकारा यस्य तत षट्प्रकारं यजनं विधीयत इत्यन्वयः ॥ ५१ ॥ प्रणवादिनमोंतकं यथा स्यात्तथा विधिना तत्तदवयवशब्दैर्नेत्रांतमभ्यर्च्य कर्णिकायां स्वहृत्कमले प्रविन्यस्य रूपक

दलं दलाग्रं सुश्वेतं हेमाभं रक्तमेव च ॥ कर्णिकाकेसरोपेतं दीप्ताद्यैः शक्तिभिर्वृतम् ॥ ४३ ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ॥ अघोरा विकृता चैव दीप्ताद्याश्चाष्टशक्तयः ॥ ४४ ॥ भास्कराभिमुखाः सर्वाः कृतांजलिपुटाः शुभाः ॥ अथवा पद्महस्ता वा सर्वाभरणभूषिताः ॥ ४५ ॥ मध्यतो वरदां देवीं स्थापयेत्सर्वतोमुखीम् ॥ आवाहयेत्ततो देवीं भास्करं परमेश्वरम् ॥ ४६ ॥ नवाक्षरेण मंत्रेण बाष्कलोक्तेन भास्करम् ॥ आवाहने च सान्निध्यमनेनैव विधीयते ॥ ४७ ॥ मुद्रा च पद्ममुद्राख्या भास्करस्य महात्मनः ॥ मूले नार्घ्यं ततो दद्यात्पाद्यमाचमनं पृथक् ॥ ४८ ॥ पुनरर्घ्यप्रदानेन बाष्कलेन यथाविधि ॥ रक्तपद्मानि पुष्पाणि रक्तचंदनमेव च ॥ ४९ ॥ दीपधूपादिनैवेद्यं मुखवासादिरेव च ॥ तांबूलवर्तिदीपाद्यं बाष्कलेन विधीयते ॥ ५० ॥ आग्नेय्यां च तथैशान्यां नैर्ऋत्यां वायुगोचरे ॥ पूर्वस्यां पश्चिमे चैव षट्प्रकारं विधीयते ॥ ५१ ॥ नेत्रांतं विधिनाऽभ्यर्च्य प्रणवादिनमोंतकम् ॥ कर्णिकायां प्रविन्यस्य रूपकध्यानमाचरेत् ॥५२॥ सर्वे विद्युत्प्रभाः शांता रौद्रमस्त्रं प्रकीर्तितम् ॥ दंष्ट्राकरालवदनं ह्यष्टमूर्तिं भयंकरम् ॥ ५३ ॥ वरदं दक्षिणं हस्तं वामं पद्मविभूषितम् ॥ सर्वाभरणसंपन्ना रक्तस्रगनुलेपनाः ॥ ५४ ॥ रक्तांबरधराः सर्वा मूर्तयस्तस्य संस्थिताः ॥ समंडलो महादेवः सिंदूरारुणविग्रहः ॥ ५५ ॥ पद्महस्तोऽमृतास्यश्च द्विहस्तनयनः प्रभुः ॥ रक्ताभरणसंयुक्तो रक्तस्रगनुलेपनः ॥ ५६॥ इत्थंरूपधरं ध्यायेद्भास्करं भुवनेश्वरम् ॥ पद्मबाह्ये शुभे चात्र मंडलेषु समंततः ॥ ५७ ॥ सोममंगारकं चैव बुधं बुद्धिमतांवरम् ॥ बृहस्पतिं महाबुद्धिं रुद्रपुत्रं च भार्गवम् ॥ ५८ ॥ शनैश्चरं तथा राहुं केतुं धूम्रं प्रकीर्तितम् ॥ सर्वे द्विनेत्रा द्विभुजा राहुश्चोर्ध्वशरीरधृक् ॥ ५९ ॥ विवृत्तास्योंजलिं कृत्वा भ्रुकुटीकुटिलेक्षणः ॥ शनैश्चरश्च दंष्ट्रास्यो वरदाभयहस्तधृक् ॥ ६० ॥

ध्यानं प्रतिबिंबध्यानमाचरेदित्यन्वयः ॥ ५२ ॥ सर्वे हृदयादयः शांता अस्त्रं रौद्रं प्रकीर्तितमित्यन्वयः ॥ ५३ ॥ ५४ ॥ मूर्तयः शक्तय इत्यर्थः ॥ ५५ ॥ ५६ ॥ अत्र शुभे पद्मबाह्ये समंततः मंडलेषु सोमादयः पूजनीया इति षष्टितमेनान्वयः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ निर्माल्यं गृह्णातीति निर्माल्यग्रहणस्तं वालखिल्यगणं तत्संज्ञकऋषिसमुदायमित्यर्थः । नंद्यादित्वात् ल्युः ॥ ६४ ॥ तेषां सूर्यादीनां मुद्रासने विस र्जन इत्यर्थः ॥६५॥ ६६ ॥ होमविधिं कथयति–कुंडमित्यादिना । पश्चिमे मंडलपश्चाद्भागे मेखलं उत्सेधाद्विस्तारादपि चतुरंगुलमानेन कुर्यादित्यन्वयः ॥ ६७ ॥ एकहस्तप्रमा णेन नित्ये तथा तत्प्रमाणे नैमित्तिकेऽश्वत्थदलाकारं कृत्वा कुंडे दशांगुलं नाभिं कुर्यादिति शेषः ॥ ६८ ॥ तदर्धेन पंचांगुलप्रमाणेनेत्यर्थः । पुरस्तादग्रभागे द्विगुणविस्तरमंगुल

स्वैःस्वैर्भावैः स्वनाम्ना च प्रणवादिनमोंतकम् ॥ पूजनीयाः प्रयत्नेन धर्मकामार्थसिद्धये ॥ ६१ ॥ सप्तसप्तगणांश्चैव बहिर्देवस्य पूजयेत् ॥ ऋषयो देवगंधर्वाः पन्नगाप्सरसां गणाः ॥ ६२ ॥ ग्रामण्यो यातुधानाश्च तथा यक्षाश्च मुख्यतः ॥ सप्ताश्वान् पूजयेदग्रे सप्तच्छंदोमयान् विभोः ॥ ६३ ॥ वालखिल्यगणं चैव निर्माल्यग्रहणं विभोः ॥ पूजयेदासनं मूर्तेर्देवतामपि पूजयेत्॥६४॥अर्घ्यं च दापयेत्तेषां पृथगेव विधा नतः ॥ आवाहने च पूजांते तेषामुद्रासनं तथा ॥ ६५ ॥ सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥ बाष्कलं च जपेदग्रे दशांशेन च योज येत् ॥ ६६ ॥ कुंडं च पश्चिमे कुर्याद्वर्तुलं चैव मेखलम् ॥ चतुरंगुलमानेन चोत्सेधाद्विस्तरादपि ॥ ६७ ॥ एकहस्तप्रमाणेन नित्ये नैमि त्तिके तथा ॥ कृत्वाश्वत्थदलाकारं नाभिं कुंडे दशांगुलम् ॥ ६८ ॥ तदर्धेन पुरस्तात्तु गजोष्ठसदृशं स्मृतम् ॥ गलमेकांगुलं चैव शेषं द्विगुणविस्तरम् ॥ ६९ ॥ तत्प्रमाणेन कुंडस्य त्यक्त्वा कुर्वीत मेखलाम् ॥ यत्नेन साधयित्वैव पश्चाद्धोमं च कारयेत् ॥ ७० ॥ पष्ठेनोल्ले खनं कुर्यात्प्रोक्षयेद्वारिणा पुनः ॥ आसनं कल्पयेन्मध्ये प्रथमेन समाहितः ॥ ७१ ॥ प्रभावतीं ततः शक्तिमाद्येनैव तु विन्यसेत् ॥ बाष्क लेनैव संपूज्य गंधपुष्पादिभिः क्रमात्॥७२॥ बाष्कलेनैव मंत्रेण क्रियां प्रति यजेत्पृथक् ॥ मूलमंत्रेण विधिना पश्चात्पूर्णाहुतिर्भवेत्॥७३॥ क्रमादेवं विधानेन सूर्याग्निर्जनितो भवेत् ॥ पूर्वोक्तेन विधानेन प्रागुक्तं कमलं न्यसेत् ॥ ७४ ॥ मुखोपरि समभ्यर्च्य पूर्ववं द्भास्करं प्रभुम् ॥ दशैवाहुतयो देया बाष्कलेन महामुने ॥ ७५ ॥ अंगानां च तथैकैकं संहिताभिः पृथक् पुनः ॥ जयादिस्विष्टपर्यंत मिध्मप्रक्षेपमेव च ॥ ७६ ॥

द्वयविस्तारमित्यर्थः ॥ ६९ ॥ तत्प्रमाणेन द्व्यंगुलप्रमाणेन कुंडस्य भागमिति शेषः । त्यक्त्वा मेखलां बहिर्मेखलां कुर्वीतेत्यन्वयः । एवं पूर्वोक्तप्रकारकुंडमित्यर्थः ॥७०॥७१॥ ॥७२॥७३॥७४॥ मुखोपरि कमलमुखोपरीत्यर्थः ॥ ७५ ॥ इध्मप्रक्षेपं जयादिस्विष्टपर्यंतं सामान्यं पारंपर्यक्रमेण सर्वमार्गेषु कुर्यादिति शेषमादायाग्रिमेणान्वयः ॥ ७६ ॥

पूजाहोमादिकं सर्वं भास्कराय निवेद्य अर्घ्यं दत्त्वा प्रदक्षिणमंगैः संपूज्य संक्षिप्योपसंहार्य हृदि स्वहृत्कमले उद्वास्य विसर्ज्य नमस्य च ततः शिवपूजां कुर्यादिति तृतीयेनान्वयः ॥ ७७ ॥ ७८ ॥ ७९ ॥ भास्करयजनफलं कथयति–य इत्यादिना ॥८०॥८१॥८२॥ कालं गतो मृत्युं प्राप्तः ॥८३॥८४॥ सायुज्यमभेदमित्यर्थः ॥ ८५ ॥ रक्तस्रग्भूषणो नित्यं द्विहस्तनयनो रविः । इष्टो मम शिवार्चायामाधिकारं प्रयच्छतु ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥
लैंगोत्तरत्रयोविंशे मानसं शंकरार्चनम् । अंगमंत्रैर्मूर्तिविद्यासहितं च निरूप्यते ॥ शैलादिर्मानसशिवार्चनं कथयति–अथेत्यादिना । शक्तितः अग्निकार्यं च कुर्या

सामान्यं सर्वमार्गेषु पारंपर्यक्रमेण च ॥ निवेद्य देवदेवाय भास्करायामितात्मने ॥ ७७ ॥ पूजाहोमादिकं सर्वं दत्त्वार्घ्यं च प्रदक्षिणम् ॥ अंगैः संपूज्य संक्षिप्य हृद्युद्वास्य नमस्य च ॥ ७८ ॥ शिवपूजां ततः कुर्याद्धर्मकामार्थसिद्धये ॥ एवं संक्षेपतः प्रोक्तं यजनं भास्करस्य च ॥ ७९ ॥ यः सकृद्वा यजेद्देवं देवदेवं जगद्गुरुम् ॥ भास्करं परमात्मानं स याति परमां गतिम् ॥ ८० ॥ सर्वपापविनिर्मुक्तः सर्वपाप विवर्जितः ॥ सर्वैश्वर्यसमोपेतस्तेजसाप्रतिमश्च सः ॥ ८१ ॥ पुत्रपौत्रादिमित्रैश्च बांधवैश्च समंततः ॥ भुक्त्वैव विपुलान् भोगानिहैव धन धान्यवान् ॥ ८२ ॥ यानवाहनसंपन्नो भूषणैर्विविधैरपि ॥ कालं गतोपि सूर्येण मोदते कालमक्षयम् ॥ ८३ ॥ पुनस्तस्मादिहागत्य राजा भवति धार्मिकः ॥ वेदवेदांगसंपन्नो ब्राह्मणो वात्र जायते ॥ ८४ ॥ पुनः प्राग्वासनायोगाद्धार्मिको वेदपारगः ॥ सूर्यमेव समभ्यर्च्य सूर्य सायुज्यमाप्नुयात् ॥ ८५ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे द्वाविंशतितमोऽध्यायः ॥ २२ ॥ शैलादिरुवाच ॥ अथ ते संप्रवक्ष्यामि शिवार्चनमनुत्तमम् ॥ त्रिसंध्यमर्चयेदीशमग्निकार्यं च शक्तितः ॥ १ ॥ शिवस्नानं पुरा कृत्वा तत्त्वशुद्धिं च पूर्ववत् ॥ पुष्पहस्तः प्रविश्याथ पूजास्थानं समाहितः॥२॥प्राणायामत्रयं कृत्वा दाहनाप्लावनानि च ॥ गंधादिवासितकरो महामुद्रां प्रविन्यसेत् ॥३॥ विज्ञानेन तनुं कृत्वा ब्रह्माग्नेरपि यत्नतः ॥ अव्यक्तबुद्ध्यहंकारतन्मात्रासंभवां तनुम् ॥ ४ ॥ शिवामृतेन संपूतं शिवस्य च यथातथम् ॥ अधोनिष्ठ्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति ॥ ५ ॥

दिति शेषः ॥१॥ तत्त्वशुद्धिं भूतशुद्धिमित्यर्थः ॥२॥ दाहनाप्लावनानि भूतशुद्ध्युक्तानि ज्ञेयानि महामुद्रां योगशास्त्रोक्ताम् । तदुक्तं हठदीपिकायाम् " पादमूलेन वामेन योनिं संपीड्य दक्षिणम् । प्रसारितं पदं कृत्वा कराभ्यां धारयेद्दृढम् ॥ कंठे बंधं समारोप्य धारयेद्वायुमूर्ध्वतः " इति ॥ ३ ॥ ब्रह्माग्नेर्ज्ञानाग्निसकाशादित्यर्थः । अव्यक्तबुद्ध्यहंकार तन्मात्रासंभवां तनुं यत्नतः दग्ध्वेति शेषः । विज्ञानेन शुद्धज्ञानेन तनुं कृत्वेत्यन्वयः॥४॥शिवेनात्यंतकल्याणेनामृतेन संपूतं शिवस्य यथातथं योग्यं च निष्ठ्या ग्रीवाबंधादधः नाभ्यामुपरि वितस्त्यां तिष्ठति तद्धृदयं विश्वस्य महदायतनं विजानीयादित्यग्रिमेणान्वयः ॥ ५ ॥

हृत्पद्मस्य कर्णिकायां मध्ये देवं क्रीडमानं साक्षात्सदाशिवं ध्यायेदिति शेषः ॥ ६ ॥ ध्यानं कथयति—पंचवक्त्रमित्यादिना ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ वरदाभयहस्तमित्यनेन चतुर्बाहुध्यानं सूचितम् । तदुक्तं शिवरहस्ये " ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥ " इति॥११॥ब्रह्मांगरूपः सद्योजाताद्यंगविशिष्टो विग्रहो यस्य तं ब्रह्मणः पतिं ब्रह्मांगैः पूजये

हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ हृत्पद्मकर्णिकायां तु देवं साक्षात्सदाशिवम् ॥ ६ ॥ पंचवक्त्रं दशभुजं सर्वाभरणभूषितम् ॥ प्रतिवक्त्रं त्रिनेत्रं च शशांककृतशेखरम्॥७॥ बद्धपद्मासनासीनं शुद्धस्फटिकसन्निभम् ॥ ऊर्ध्वं वक्त्रं सितं ध्यायेत्पूर्वं कुंकुमसन्निभम् ॥८॥ नीलाभं दक्षिणं वक्त्रमतिरक्तं तथोत्तरम् ॥ गोक्षीरधवलं दिव्यं पश्चिमं परमेष्ठिनः ॥ ९ ॥ शूलं परशुखड्गं च वज्रं शक्तिं च दक्षिणे ॥ वामे पाशांकुशं घंटां नागं नाराचमुत्तमम् ॥ १० ॥ वरदाभयहस्तं वा शेषं पूर्ववदेव तु ॥ सर्वाभरणसंयुक्तं चित्रांबरधरं शिवम् ॥ ११ ॥ ब्रह्मांगविग्रहं देवं सर्वदेवोत्तमोत्तमम् ॥ पूजयेत्सर्वभावेन ब्रह्मांगैर्ब्रह्मणः पतिम् ॥१२॥ उक्तानि पंच ब्रह्माणि शिवांगानि शृणुष्व मे ॥ शक्तिभूतानि च तथा हृदयादीनि सुव्रत ॥१३॥ ॐ ईशानः सर्वविद्यानां हृदयाय शक्तिबीजाय नमः ॥ ॐ ईश्वरः सर्वभूतानाममृताय शिरसे नमः ॥ १४॥ ॐ ब्रह्माधिपतये कालाग्निरूपाय शिखायै नमः ॥ ॐ ब्रह्मणोऽधिपतये कालचंडमारुताय कवचाय नमः ॥१५॥ ॐ ब्रह्मणे बृंहणाय ज्ञानमूर्तये नेत्राय नमः ॥ ॐ शिवाय सदाशिवाय पाशुपतास्त्राय अप्रतिहताय फट्फट् ॥ १६ ॥ ॐ सद्योजाताय भवेभवेनाति भवे भवस्य मां भवोद्भवाय शिवमूर्तये नमः ॥ ॐ हंसशिखाय विद्यादेहाय आत्मस्वरूपाय परापराय शिवाय शिवतमाय नमः ॥ १७ ॥ कथितानि शिवांगानि मूर्तिविद्या च तस्य वै ॥ ब्रह्मांगमूर्तिं विद्यांगसहितां शिवशासने ॥ १८ ॥ सौराणि च प्रवक्ष्यामि बाष्कलाद्यानि सुव्रत ॥ अंगानि सर्ववेदेषु सारभूतानि सुव्रत ॥ १९ ॥

दित्यन्वयः ॥ १२ ॥ पंचब्रह्माणि शिवांगानि उक्तानि पूर्वं कथितानि शक्तिभूतानि हृदयादीनि च शृणुष्वेत्यन्वयः ॥ १३ ॥ षडंगानि कथयति—ओमित्यादिना ॥ १४ ॥ ॥१५॥१६॥ मूर्तिं कथयति—सद्योजातायेति । विद्यां कथयति—हंसशिखायेति ॥ १७ ॥ विद्यांगसहितां ब्रह्मांगमूर्तिं शिवशासने शिवशास्त्रे विद्यादिति शेषः ॥ १८ ॥ पूर्वाध्यायोक्तसौराण्यपि प्रसंगादत्र कथयति—सौराणि चेत्यादिना । सौराणि सूरः सूर्यः तत्संबंधीनि बाष्कलाद्यान्यंगानि प्रवक्ष्यामीत्यन्वयः ॥ १९ ॥

नवाक्षरमंत्रं कथयति–ॐ भूरिति । नवाक्षरेत्ययं सार्धश्लोकः । अक्षरव्युत्पत्तिं कथयति–न क्षरतीति। सत्यं ब्रह्मेत्यर्थः । प्रणवादिनमोंतकं मंत्रं विद्यादिति शेषः ॥२०॥मूलमंत्रं कथयति–ॐभूरिति ॥ २१ ॥ दीप्ताद्यास्तत्प्रभृतिशक्तयो नवाक्षरेण भास्करं मूलमंत्रेण पूजयेदित्यग्रिमेणान्वयः ॥२२ ॥ २३॥ सौरांगमंत्रान्कथयति–ॐभूरिति । एवं पूर्वोक्त प्रकारेण न्यासयोगेन शैवानि प्रसंगादिह च सौराणि कथितानीत्यन्वयः॥२४॥पूजाविधिमुपसंहरति–इत्थमिति । मानसहोमविधिं कथयति–नाभावित्यादिना । नाभौ नाभिस्थाने यथाक्रमं यथाविधि वह्निं जनयित्वा होमं कर्तव्यमित्यन्वयः ॥ २५ ॥ २६ ॥ २७ ॥ ज्ञानिनां शिवशासने शिवशास्त्रे उक्तामिति शेषः । चंद्रमंडलात्समुत्पन्नां पूर्णधारां

ॐभूः ॐभुवः ॐ स्वः ॐमहः ॐजनः ॐतपः ॐसत्यम् ॐऋतम् ॐब्रह्म।नवाक्षरमयं मंत्रं बाष्कलं परिकीर्तितम् ॥न क्षरतीति लोकेऽस्मिंस्ततो ह्यक्षरमुच्यते ॥ सत्यमक्षरमित्युक्तं प्रणवादिनमोंतकम् ॥ २० ॥ ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ नमः सूर्याय खखोल्काय नमः ॥ २१ ॥ मूलमंत्रमिति प्रोक्तं भास्करस्य महात्मनः ॥ नवाक्षरेण दीप्ताद्या मूलमंत्रेण भास्करम् ॥ २२ ॥ पूजयेदंगमंत्राणि कथयामि समासतः ॥ वेदादिभिः प्रभूताद्यं प्रणवेन तु मध्यमम् ॥ २३ ॥ ॐभूः ब्रह्मणे हृदयाय नमः। ॐभुवः विष्णवे शिरसे नमः ॥ ॐस्वः रुद्राय शिखायै नमः ॐभूर्भुवः स्वः ज्वालामालिन्यै देवाय नमः ॐमहः महेश्वराय कवचाय नमः। ॐजनः शिवाय नेत्रेभ्यो नमः। ॐतपस्तापनाय अस्त्राय नमः॥एवं प्रसंगादिह सौराणि कथितानि ह ॥ शैवानि च समासेन न्यास योगेन सुव्रत ॥ २४ ॥ इत्थं मंत्रमयं देवं पूजयेद्धृदयांबुजे ॥ नाभौ होमं तु कर्तव्यं जनयित्वा यथाक्रमम् ॥ २५ ॥ मनसा सर्वकार्याणि शिवाग्नौ देवमीश्वरम् ॥ पंचब्रह्मांगसंभूतं शिवमूर्तिं सदाशिवम् ॥ २६ ॥ रक्तपद्मासनासीनं सकलीकृत्य यत्नतः ॥ मूलेन मूर्तिमंत्रेण ब्रह्मांगाद्यैस्तु सुव्रत ॥ २७ ॥ समिदाज्याहुतीर्हुत्वा मनसा चंद्रमंडलात् ॥ चंद्रस्थानात्समुत्पन्नां पूर्णधारामनुस्मरेत्॥२८॥ पूर्णाहुतिविधानेन ज्ञानिनां शिवशासने ॥ शिवं वक्त्रगतं ध्यायेत्तेजोमात्रं च शांकरम् ॥ २९ ॥ ललाटे देवदेवेशं भ्रूमध्ये वा स्मरेत्पुनः ॥ यच्च हृत्कमले सर्वं समाप्य विधिविस्तरम् ॥ ३० ॥ शुद्धदीपशिखाकारं भावयेद्भवनाशनम् ॥ लिंगे च पूजयेद्देवं स्थंडिले वा सदाशिवम् ॥ ३१ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे त्रयोविंशतितमोऽध्यायः ॥ २३ ॥

पूर्णाहुतिविधानेनानुस्मरेदित्यग्रिमस्थैरन्वयः ॥२८॥ ध्यानयोग्यमन्यत्स्थानत्रयं कथयति–शिवमित्यादिना । तेजोमात्रं कृत्स्नतेज इत्यर्थः ॥२९॥ यत्पूर्वोक्तं सर्वं विधिविस्तरं समाप्य हृत्कमले शुद्धदीपशिखाकारं भवनाशनं शिवं भावयेदित्यग्रिमेणान्वयः ॥ ३० ॥ ज्ञानिनां मुख्यार्चनमुक्त्वा प्रतिमार्चनं कथयति–लिंगेति ॥ ३१ ॥ हृदब्जकाशे विमले ज्ञानिभिरीज्यं शिवं यजेद्भक्त्या । दीपशिखाकृतिशुद्धं ध्यायामीशं विमुक्तिदं शक्त्या ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रयोविंशोऽध्यायः ॥२३॥

चतुर्विंशे विशेषेण तांत्रिकोक्तविधानतः । व्याख्या श्रीशंकराचार्याः पद्यगद्यैर्निरूप्यते ॥ शैलादिः शिवपूजाविधिं कथयति—व्याख्यामित्यादिना । शिवेन पुरा कथितं यथा स्यात्तथा शिवशास्त्रोक्तमार्गेण पूजाविधानस्य व्याख्यां समासतः प्रवदामीत्यन्वयः ॥ १ ॥ अथ शिवस्नानभस्मस्नानानंतरम् उभौ चदनचर्चितौ हस्तौ तयोरिति शेषः । वौषडंतेनादिश्वासावंजलिश्चाद्यंजलिस्तं कृत्वा मूर्तिसहिता विद्या मूर्तिविद्या शिवादीनि शैवांगानि पूर्वाध्यायोक्तानि जप्त्वा अंगुष्ठादिकनिष्ठिकांते ईशानाद्यमशिनादिमंत्रपंचकं न्यसेदिति शेषः । न्यासक्रमं कथयति—कनिष्ठिकेति । कनिष्ठिका आदिस्तर्जनीमध्यमानामंतो यस्मिन्कर्मणि तत्कनिष्ठिकादिमध्यमांतं हृदयमादिर्यस्य स हृदयादिस्तृतीयोऽघोरमंत्रः यस्मिन्कर्मणि तद्धृदयादितृतीयांतम् अंगुष्ठेन सह तुरीयं तत्पुरुषमंत्रं अनामिकया पंचमं तलद्वयेन षष्ठमंत्रं जप्त्वा पुनरपि तर्जन्यंगुष्ठाभ्यां नाराचास्त्रप्रयोगेण मूलं पंचाक्षरमंत्रं

शैलादिरुवाच ॥ व्याख्यां पूजाविधानस्य प्रवदामि समासतः ॥ शिवशास्त्रोक्तमार्गेण शिवेन कथितं पुरा ॥ १ ॥ अथोभौ चंदनचर्चितौ हस्तौ वौषडंतेनाद्यंजलिं कृत्वा मूर्तिविद्याशिवादीनि जप्त्वा अंगुष्ठादिकनिष्ठिकांतं ईशानाद्यं कनिष्ठिकादिमध्यमांतं हृदयादितृतीयांतं तुरीय मंगुष्ठेनानामिकया पंचमं तलद्वयेन षष्ठं तर्जन्यंगुष्ठाभ्यां नाराचास्त्रप्रयोगेण पुनरपि मूलं जप्त्वा तुरीयेनावगुंठ्य शिवहस्तामित्युच्यते ॥ २ ॥ शिवार्चना तेन हस्तेन कार्या ॥ ३ ॥ तत्त्वगनमात्मानं व्यवस्थाप्य तत्त्वशुद्धिं पूर्ववत् ॥४॥ क्ष्माम्भोग्निवायुव्योमांतं पंचचतुःशुद्धकोट्यंते धारासहितेन व्यवस्थाप्य तत्त्वशुद्धिं पूर्वं कुर्यात् ॥ ५ ॥ तत्त्वशुद्धिः षष्ठेन सद्येन तृतीयेन फडंताद्धराशुद्धिः ॥ ६ ॥ षष्ठसहितेव सद्येन तृतीयेन फडन्तेन वारितत्त्वशुद्धिः ॥ ७ ॥ वाह्नेयतृतीयेन फडंतेनाग्निशुद्धिः ॥८॥ वायव्यचतुर्थेन षष्ठसहितेन फडंतेन वायुशुद्धिः॥९॥ षष्ठेन ससद्येन तृतीयेन फडंतेनाकाशशुद्धिः ॥ १० ॥ उपसंहृत्यैवं सद्यषष्ठेन तृतीयेन मूलेन फडंतेन ताडनं तृतीयेन संपुटीकृत्य ग्रहणं मूलमेव योनिबीजेन संपुटीकृत्वा बंधनं बंधः ॥ ११ ॥

जप्त्वा तुरीयेण चतुर्थमंत्रेण अवगुंठ्य शिवहस्तमित्युच्यत इत्यन्वयः ॥ २ ॥ ३ ॥ तत्त्वगतं तत्त्वेषु विद्यमानमित्यर्थः ॥४॥ क्ष्मांभोग्निवायुव्योमांतं पंच पंचकोशानानिकल्प्येति शेषः । चतुर्षु अहंकारमहतत्त्वप्रकृतिब्रह्मरूपेषु शुद्धकोटिर्ब्रह्म तस्या अंते समीपे धारया अमृतधारया सहितो युक्तस्तेन सुषुम्णानाडीमार्गेण स्वात्मानमिति शेषः । व्यवस्थाप्य तत्त्वशुद्धिं पूर्वं कुर्यादित्यन्वयः ॥५॥तत्त्वानां पृथिव्यादीनां शुद्धिः शोधनं प्रपंचयति—षष्ठेनेत्यादिना । षष्ठेन नमो हिरण्यबाहव इति मंत्रेण सद्येन तृतीयेनाघोरमंत्रेण फडन्तात् फडन्तेन धरायाः शुद्धिर्धराशुद्धिरित्यन्वयः ॥ ६ ॥७॥८॥९॥१०॥ ताडनग्रहणबंधनानि कथयति—उपसंहृत्येति । एवं पूर्वोक्तप्रकारमुपसंहृत्य सद्ययुक्तः षष्ठः सद्यषष्ठस्तेन सह तृतीयेन मूलेन फडंतेन ताडनं मूलं तृतीयेन संपुटीकृत्वा ग्रहणं मूलमेव योनिबीजेन ह्रींबीजेन संपुटीकृत्वा बंधनं बंधो दिग्बंध इत्यर्थः ॥ ११ ॥

पूर्ववदेकविंशाध्यायोक्तवदित्यर्थः । तत्त्वत्रयकं ब्रह्मविष्णुरुद्ररूपं दीपशिखाकारं शुद्धचैतन्यरूपं पुर्यष्टकेन योगशास्त्रोक्तमूलाधारादिरूपाष्टकेन सहितं त्रयातीतं विश्वादित्रयपरमात्मानं शक्तिक्षोभेण कुंडलिनीप्रबोधेन अमृतधारां सुषुम्णायां च ध्यात्वेत्यन्वयः ॥ १२ ॥ शांत्यतीतादिनिवृत्तिपर्यंतानां कलानामंतर्मध्ये नादबिंद्वकारोकारमकाराणामंतोऽवसानं यस्मिन् तं रुद्रविष्णुब्रह्मांतं सदाशिवं शिवं ध्यात्वेतिशेषः । सृष्टिक्रमेणामृतीकरणं ब्रह्मन्यासं कृत्वा मूलेन पंचाक्षरेणेत्यर्थः । हृदि हार्दाकाशे शक्त्या सह बीजांकुरानंतरादव्यवधानेन ससुषिरसूत्रकंटकपत्रकेसरधर्मज्ञानवैराग्यैश्वर्यसूर्यसोमाग्नीनां समाहारः । केसरेषु वामाप्रभृतयः कर्णिकायां मनोन्मनीमपि ध्यात्वेत्यन्वयः ॥ १३ ॥ आत्म

एवं क्षांतातीतादिनिवृत्तिपर्यंतं पूर्ववत्कृत्वा प्रणवेन तत्त्वत्रयकमनुध्याय आत्मानं दीपशिखाकारं पुर्यष्टकसहितं त्रयातीतं शक्तिक्षोभेणामृतधारां सुषुम्णायां ध्यात्वा॥१२॥शांत्यतीतादिनिवृत्तिपर्यंतानां चांतर्नादबिंद्वकारोकारमकारांतं शिवं सदाशिवं रुद्रविष्णुब्रह्मांतं सृष्टिक्रमेणामृतीकरणं ब्रह्मन्यासं कृत्वा पंचवक्त्रेषु पंचदशनयनं विन्यस्य मूलेन पादादिकेशांतं महामुद्रामपि बद्धा शिवोहमिति ध्यात्वा शक्त्यादीनि विन्यस्य हृदि शक्त्याबीजांकुरानंतरात्ससुषिरसूत्रकंटकपत्रकेसरधर्मज्ञानवैराग्यैश्वर्यसूर्यसोमाग्निवामाज्येष्ठारौद्रीकालीकलविकरणीबलविकरणीबलप्रथमनीसर्वभूतदमनीः केसरेषु कर्णिकायां मनोन्मनीमपि ध्यात्वा॥१३॥ आसनं परिकल्प्यैवं सर्वोपचारसहितं बहिर्योगोपचारेणांतःकरणं कृत्वा नाभौ वह्निकुंडे पूर्ववदासनं परिकल्प्य सदाशिवं ध्यात्वा बिंदुतोऽमृतधारां शिवमंडले निपतितां ध्यात्वा ललाटे महेश्वरं दीपशिखाकारं ध्यात्वा आत्मशुद्धिरित्थं प्राणापानौ संयम्य सुषुम्णया वायुं व्यवस्थाप्य षष्ठेन तालुमुद्रां कृत्वा दिग्बंधं कृत्वा षष्ठेन स्थानशुद्धिर्वस्त्रादिपूतांतरर्घ्यपात्रादिषु प्रणवेन तत्त्वत्रयं विन्यस्य तदुपरि बिंदुं ध्यात्वा त्वंभसा विपूर्य द्रव्याणि च विधाय अमृतप्लावनं कृत्वा पाद्यपात्रादिषु तेषामर्घ्यवदासनं परिकल्प्य संहितयाभिमंत्र्याद्येनाभ्यर्च्य द्वितीयेनामृतीकृत्वा तृतीयेन विशोध्यचतुर्थेनावगुंठ्य पंचमेनावलोक्यषष्ठेन रक्षां विधाय चतुर्थेन कुशपुंजेनार्घ्याभसाभ्युक्ष्य आत्मानमपि द्रव्याणि पुनरर्घ्याभसाभ्युक्ष्य सपुष्पेण सर्वद्रव्याणि पृथक्पृथक् शोधयेत् ॥१४॥

स्थानद्रव्यशुद्धीः कथयति–आसनमित्यादिना । बहिर्योगोपचारेणांतःकरणमंतः सामग्रीं कृत्वा एवं पूर्वोक्तप्रकारेण सर्वोपचारसहितमासनं परिकल्प्य नाभौ वह्निकुंडे पूर्ववदासनं परिकल्प्य सदाशिवं ध्यात्वा ललाटे दीपशिखाकारं महेश्वरं ध्यात्वा बिंदुतोऽमृतधारां शिवमंडले निपतितां ध्यात्वा इत्थं पूर्वोक्तप्रकारेणात्मशुद्धिरित्यन्वयः । प्राणापानौ संयम्य सुषुम्णया वायुं व्यवस्थाप्य षष्ठेन तालुमुद्रां खेचरीमुद्रां दिग्बंधं च षष्ठेन कृत्वा स्थानशुद्धिः शरीरशुद्धिरित्यन्वयः । वस्त्रादिना पूतः अंतर्मध्यो येषा तानि चार्घ्यपात्रादीनि च तेषु तत्त्वत्रयं विन्यस्यामृतप्लावनांतं कृत्वा पाद्यपात्रादिषु तेषां तत्त्वादीनामित्यर्थः । सपुष्पेण पुष्पोदकेन सर्वद्रव्याणि पूजाद्रव्याणि पृथक्पृथक्छोधयेदित्यन्वयः ॥ १४ ॥

गंधाद्यभिमंत्रणविधिं कथयति–सद्येनेति । अथानंतरं सद्यादिना गंधादीनभिमंत्रयेदित्यन्वयः ॥ १५ ॥ शेषमुक्तान्यदित्यर्थः ॥ १६ ॥ मूलाद्यैः पंचाक्षरबीजैः ॥ १७ ॥ तेषां गंधादीनां पृथक् मूलेनार्घ्यं धूपमाचमनीयं च दत्त्वा धेनुमुद्रामपि च तेषां दर्शयित्वा कवचेनावगुंठ्यास्त्रेण रक्षां विधाय द्रव्यशुद्धिं कुर्यादित्यन्वयः ॥ १८ ॥ मंत्रशुद्धिं कथयति–अर्घ्योदकमिति । अग्रे प्रथममर्घ्यं गंधं हृदा हृदयमंत्रेणादाय अस्त्रेण विशोध्य पूजाप्रभृतिकरणं रक्षांतं यथा स्यात्तथा द्रव्यशुद्धिमेवं पूर्वोक्तप्रकारेण कृत्वा पूजासमर्पणांतं मौनमास्थाय पुष्पांजलिं दत्त्वा सर्वमंत्राणि पूजामंत्रान्प्रणवादिनमोंतान्जपित्वा पुष्पांजलिं त्यजेदित्थं मंत्रशुद्धिरित्यन्वयः॥१९॥लिंगशुद्धिं कथयति–अग्र इत्यादिना॥२०॥

सद्येन गंधं वामेन वस्त्रम् ॥ अघोरेण आभरणं पुरुषेण नैवेद्यम् ॥ ईशानेन पुष्पाणि अथाभिमंत्रयेत् ॥ १५ ॥ शिवगायत्र्या शेषं प्रोक्षयेत् ॥ १६ ॥ पंचामृतपंचगव्यादीनि ब्रह्मांगमूलाद्यैरभिमंत्रयेत् ॥ १७ ॥ पृथक्पृथङ्मूलेनार्घ्यं धूपं दत्त्वाचमनीयं च तेषामपि धेनुमुद्रां च दर्शयित्वा कवचेनावगुंठ्यास्त्रेण रक्षां च विधाय द्रव्यशुद्धिं कुर्यात् ॥ १८ ॥ अर्घ्योदकमग्रे हृदा गंधमादायास्त्रेण विशोध्य पूजाप्रभृतिकरणं रक्षांतं कृत्वैवं द्रव्यशुद्धिं पूजासमर्पणांतं मौनमास्थाय पुष्पांजलिं दत्त्वा सर्वमंत्राणि प्रणवादिनमोंतान्जपित्वा पुष्पांजलिं त्यजेन्मंत्रशुद्धिरित्थम् ॥ १९ ॥ अग्रे सामान्यार्घ्यपात्रं पयसापूर्य गंधपुष्पादिना संहितयाभिमंत्र्य धेनुमुद्रां दत्त्वा कवचेनावगुंठ्यास्त्रेण रक्षयेत् ॥ पूजां पर्युषितां गायत्र्या समभ्यर्च्य सामान्यार्घ्यं दत्त्वा गंधपुष्पधूपाचमनीयं स्वधांतं नमोंतं वा दत्त्वा ब्रह्मभिः पृथक्पृथक्पुष्पांजलिं दत्त्वा फडंतास्त्रेण निर्माल्यं व्यपोह्य ईशान्यां चंडमभ्यर्च्यासनमूर्तिं चंडं सामान्यास्त्रेण लिंगपीठं शिवं पाशुपतास्त्रेण विशोध्य मूर्ध्नि पुष्पं निधाय पूजयेल्लिंगशुद्धिः ॥ २० ॥ आसनं कूर्मशिलायां बीजांकुरं तदुपरि ब्रह्मशिलायामनंतनालसुषिरं सूत्रपत्रकंटककर्णिकाकेसरधर्मज्ञानवैराग्यैश्वर्यसूर्यसोमाग्निकेसरशक्तिं मनोन्मनीं कर्णिकायां मनोन्मनेनानंतासनायेति समासेनासनं परिकल्प्य तदुपरि निवृत्त्यादिकलामयं पङ्विधनहितं कर्मकलांगदेहं सदाशिवं भावयेत् ॥ २१ ॥

पूजाविधिं कथयति–आसनमित्यादिना । कूर्मशिलायां कूर्मपृष्ठे आसनं तदुपरि बीजांकुरं तदुपरि ब्रह्मशिलायामनंतं यन्नालसुषिरं तस्मिन्सूत्रपत्रकंटककर्णिकाकेसरधर्मज्ञानवैराग्यैश्वर्यसूर्यसोमाग्नीनां समाहारः । केसरशक्तिं वामादिपूर्वोक्ताष्टशक्तीः जात्यभिप्रायमेकवचनम् कर्णिकायां मनोन्मनेन मनोन्मनीं ध्यात्वेति शेषः । समासेन संक्षेपेण अनंतासनायेति अनंतासनाय नम इत्यादिमंत्रैरासनं परिकल्प्य तदुपरि निवृत्त्यादिकलामयं कलाप्रचुरं षड्विधसहितं षट्कोशयुक्तं कर्मकलाः कर्मगतयः अंगा यस्य स कर्मकलांगो वेदः देहो यस्य स कर्मकलांगदेहः । तदुक्तम् "यस्य निःश्वसितं वेदाः" इति । सदाशिवं भावयेच्चिंतयेदित्यर्थः ॥ २१ ॥

आवाहनं स्थापनं कथयति–उभाभ्यामिति । हृदा हृदयमंत्रेण सह मूलं पंचाक्षरमंत्रं प्लुतमुच्चस्वरेणेत्यर्थः ॥ २२ ॥ पूर्ववद्धृदा पूर्वं हृदयमंत्रेण शिवशक्तिसमवायेन तादात्म्येन परमीकरणमेकीकरणममृतीकरणं हृदयादिमूलेन हृदयमंत्रपूर्वकमूलेन सह सद्यनावाहनं हृदा मूलोपरि मूलमंत्रोपरिष्टाद्वामेन स्थापनमेवं सन्निरोधं सांनिध्यमुक्तप्रकारेण कृत्वेति शेषः । हृदा मूलेन ईशानेन पूजयेदिति उपदेश इत्यन्वयः ॥ २३ ॥ पूर्वं यथा पंचमंत्रसहितेन आत्मनो देहनिर्माणं तथा देवस्य वह्नेश्चापि एवमुपदेश इत्यन्वयः ॥ २४ ॥ रूपकध्यानं प्रतिबिंबध्यानं कृत्वा मूलेन नमस्कारांतमापाद्यं कृत्वा वा स्वधांतमाचमनीयं सर्वमुक्तान्यत् नमस्कारांतं वा स्वाहाकारांतमर्घ्यं मूलेन पुष्पांजलिं वौषडंतेन वा सर्वं नमस्कारांतं हृदा वा ईशानेन वा रुद्रगायत्र्या वा ॐ नमः शिवायेति मूलमंत्रेण वा पूजयेदित्यन्वयः ॥ २५ ॥ पुष्पांजलिं पूर्वपूजापुष्पांजलिं दत्त्वा पुनर्धूपाचमनीयं दत्त्वा

**उभाभ्यां सपुष्पाभ्यां हस्ताभ्यामंगुष्ठेन पुष्पमापीड्य आवाहनमुद्रया शनैःशनैः हृदयादिमस्तकांतमारोप्य हृदा सह मूलं प्लुतमुच्चार्य सद्येन बिंदुस्थानादभ्यधिकं दीपशिखाकारं सर्वतोमुखहस्तं व्याप्यव्यापकमावाह्य स्थापयेत् ॥ २२ ॥ पूर्ववद्धृदा शिवशक्तिसमवायेन परमीकरणममृतीकरणं हृदयादिमूलेन सद्येनावाहनं हृदा मूलोपरि वामेन स्थापनं हृदा मूलोपरि अघोरेण सन्निरोधं हृदा मूलोपरि पुरुषेण सान्निध्यं हृदा मूलेन ईशानेन पूजयेदिति उपदेशः ॥ २३ ॥ पंचमंत्रसहितेन यथापूर्वमात्मनो देहनिर्माणं तथा देवस्यापि वह्नेश्चैवमुपदेशः ॥ २४ ॥ रूपकध्यानं कृत्वा मूलेन नमस्कारांतमापाद्यं स्वधांतमाचमनीयं सर्वं नमस्कारांतं वा स्वाहाकारांतमर्घ्यं मूलेन पुष्पांजलिं वौषडंतेन सर्वं नमस्कारांतं हृदा वा ईशानेन वा रुद्रगायत्र्या ॐ नमः शिवायेति मूलमंत्रेण वा पूजयेत् ॥ २५ ॥ पुष्पांजलिं दत्त्वा पुनर्धूपाचमनीयं षष्ठेन पुष्पावसरणं विसर्जनं मंत्रोदकेन मूलेन संस्नाप्य सर्वद्रव्याभिषेकमीशानेन प्रतिद्रव्यमष्टपुष्पं दत्त्वैवमर्घ्यं च गंधपुष्पधूपाचमनीयं फडंतास्त्रेण पूजापसरणं शुद्धोदकेन मूलेन संस्नाप्य पिष्टामलकादिभिः ॥ २६ ॥ उष्णोदकेन हरिद्राद्येन लिंगमूर्तिं पीठसहितां विशोध्य गंधोदकहिरण्योदकमंत्रोदकेन रुद्राध्यायं पठमानः नीलरुद्रत्वरितरुद्रपंचब्रह्मादिभिः नमः शिवायेति स्नापयेत् ॥ २७ ॥**

षष्ठेन पुष्पाणामवसरणं निःसारणं विसर्जनं पूजाविसर्जनं कृत्वेति शेषः । मूलेन मंत्रोदकेन संस्नाप्य सर्वद्रव्याभिषेकं पंचामृताद्यभिषेकं प्रतिद्रव्यमष्टपुष्पमर्घ्यं गंधपुष्पधूपाचमनीयं दत्त्वैव फडंतेनास्त्रेण पूजापसरणं कृत्वेति शेषः । पिष्टाश्च ते आमलकादयश्च तैः सह शुद्धोदकेन मूलेन सुस्नाप्येत्यन्वयः ॥ २६ ॥ पंचामृतादिस्नानानंतरमभिषेकविधिं कथयति–उष्णोदकेनेत्यादिना । हरिद्राद्येन हरिद्रादिचूर्णेन सह उष्णोदकेन पीठसहितां लिंगमूर्तिं विशोध्य गंधोदकपुष्पोदकहिरण्योदकमंत्रोदकानां समाहारस्तेन रुद्राध्यायं पठमानो नीलरुद्रत्वरितरुद्रपंचब्रह्मादिभिः नमः शिवायेति स्नापयेदित्यन्वयः ॥ २७ ॥

एवं पूर्वोक्ताभिषेकं मूर्ध्नि पुष्पं निधाय कुर्याल्लिंगमस्तकं शून्यं न कुर्यादत्र श्लोक इत्यन्वयः । जात्यभिप्रायमेकवचनम् ॥ २८ ॥ पूर्वोक्तश्लोकावाह–यस्येत्यादिना ॥२९॥३०॥ एवं पूर्वोक्तप्रकारेण संस्नाप्य अर्घ्यं च दत्वा वस्त्रेण संमृज्य वस्त्रालंकारादींश्च दद्यादित्यन्वयः ॥ ३१ ॥ धूपाचमनीयनैवेद्यादींश्च मूलेन उपरि लिंगमूर्ध्नि प्रधानेन केवलप्रणवेन पूजनं पवित्रीकरणं शोधनमिति उक्तं कथितमित्यन्वयः ॥ ३२ ॥ आरार्तिदीपादींश्च धेनुमुद्रामुद्रितानि कवचेनावगुंठितानि षष्ठेन रक्षितान्येव लिंगोपरि लिंगे लिंगमध्ये लिंगस्याधश्च साधारणं समानं यथा स्यात्तथा दर्शयेदित्यन्वयः ॥ ३३ ॥ मूलेन नमस्कारं प्रणतिं कृत्वेति शेषः । आवाहनादिमुखवासाद्युपचारयुक्तं यथा स्यात्तथा विज्ञाप्य

मूर्ध्नि पुष्पं निधायैवं न शून्यं लिंगमस्तकं कुर्यादत्र श्लोकः ॥ २८ ॥ यस्य राष्ट्रे तु लिंगस्य मस्तकं शून्यलक्षणम् ॥ तस्यालक्ष्मीर्महारोगो दुर्भिक्षं वाहनक्षयः॥२९॥तस्मात्परिहरेद्राजा धर्मकामार्थमुक्तये॥ शून्ये लिंगे स्वयं राजा राष्ट्रं चैव प्रणश्यति॥३०॥एवं सुस्नाप्यार्घ्यं च दत्वा संमृज्य वस्त्रेण गंधपुष्पवस्त्रालंकारादींश्च मूलेन दद्यात् ॥ ३१ ॥ धूपाचमनीयदीपनैवेद्यादींश्च मूलेन प्रधानेनोपरि पूजनं पवित्रीकरणमित्युक्तम् ॥ ३२ ॥ आरार्तिदीपादींश्चैव धेनुमुद्रामुद्रितानि कवचेनावगुंठितानि षष्ठेन रक्षितानि लिंगोपरि लिंगे च लिंगस्याधः साधारणं च दर्शयेत् ॥ ३३ ॥ मूलेन नमस्कारं विज्ञाप्यावाहनस्थापनसन्निरोधसान्निध्यपाद्याचमनीयार्घ्यगंधपुष्पधूपनैवेद्याचमनीयहस्तोद्वर्तनमुखवासाद्युपचारयुक्तं ब्रह्मांगंभोगमार्गेण पूजयेत् ॥ ३४ ॥ सकलध्यानं निष्कलस्मरणं परावरध्यानं मूलमंत्रजपः ॥ दशांशं ब्रह्मांगं जपसमर्पणमात्मनिवेदनस्तुतिनमस्कारादयश्च गुरुपूजा च पूर्वतो दक्षिणे विनायकस्य ॥ ३५ ॥ आदौ चांते च संपूज्यो विघ्नेशो जगदीश्वरः ॥ दैवतैश्च द्विजैश्चैव सर्वकर्मार्थसिद्धये ॥ ३६ ॥ यः शिवं पूजयेद्देवं लिंगे वा स्थंडिलेपि वा ॥ स याति शिवसायुज्यं वर्षमात्रेण कर्मणा॥३७॥लिंगार्चकश्च षण्मासान्नात्र कार्या विचारणा ॥ सप्त प्रदक्षिणाः कृत्वा दंडवत्प्रणमेद्बुधः ॥३८॥ प्रदक्षिणक्रमपादेन अश्वमेधफलं शतम् ॥ तस्मात्संपूजयेन्नित्यं सर्वकर्मार्थसिद्धये ॥ ३९ ॥ भोगार्थी भोगमाप्नोति राज्यार्थी राज्यमाप्नुयात् ॥ पुत्रार्थी तनयं श्रेष्ठं रोगी रोगात्प्रमुच्यते ॥ ४० ॥

निवेद्य ब्रह्ममंत्ररूपाणि यान्यंगानि पादादीनि तेषां भोगमार्गेणोपचारक्रमेण पूजयेदित्यन्वयः ॥३४ ॥ पूजोत्तरांगं कथयति–सकलध्यानमिति । पूर्वतः गुरुपूजां दक्षिणे विनायकस्य च कुर्यादिति शेषमादायान्वयः ॥ ३५ ॥ गणेशपूजनमाहात्म्यं कथयति–आदाविति ॥ ३६ ॥ शिवपूजामाहात्म्यं कथयति–य इत्यादिना ॥३७॥ ३८ ॥ प्रदक्षिणेष्वत्राक्षराधिक्यं छांदसम् ॥ ३९ ॥ ४० ॥

सर्वकामावाप्तिं कथयति—यान्यांश्चेति ॥ ४१ ॥ शंभो त्वदुक्तविधिना हि समर्चनं ते दुःशक्यमेव कलिजैर्मनुजैर्महेश । सर्वज्ञ वेद्मि सततं श्रवणादिनाम्मांस्त्रायस्व नाथ सतत प्रणतानुगेश ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ पंचविंशे शिवप्रोक्तमग्निकार्यं सुशोभनम् । त्रिविधं कीर्त्यते सम्यक्कु पद्यगद्यैर्यथाविधि ॥ शैलादिः शिवाग्निकार्यं कथयति—शिवाग्निरित्यादिना । प्राचीं जनयित्वा साधयित्वेत्यर्थः ॥ १ ॥ चतुरस्रीकृते चतुष्कोणीकृते कुंडानि वक्ष्यमाणान्यायत नानीत्यर्थः ॥ २ ॥ हस्तमात्रतः हस्तप्रमाणेन चतुस्त्रिद्व्यंगुलायामा मेखलाः कुर्यादिति शेषः ॥ ३ ॥ ४ ॥ अष्टपत्रं सकर्णिकं प्रादेशमात्रं प्रादेशप्रमाणं नाभिं विधिना

यान्यांश्चितयते कामांस्तांस्तान्प्राप्नोति मानवः ॥ ४१ ॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे चतुर्विंशोऽध्यायः ॥ २४ ॥ शैलादिरुवाच ॥ शिवाग्निकार्यं वक्ष्यामि शिवेन परिभाषितम् ॥ जनयित्वाग्रतः प्राचीं शुभे देशे सुसंस्कृते॥१॥ पूर्वाग्रमुत्तराग्रं च कुर्यात्सूत्रत्रयं शुभम् ॥ चतुरस्रीकृते क्षेत्रे कुर्यात्कुंडानि यत्नतः ॥ २ ॥ नित्यहोमाग्निकुंडं च त्रिमेखलसमायुतम् ॥ चतुस्त्रिद्व्यंगुलायामा मेखला हस्तमात्रतः॥३॥हस्तमात्रं भवेत्कुंडं योनिः प्रादेशमात्रतः ॥ अश्वत्थपत्रवद्योनिं मेखलोपरि कल्पयेत् ॥ ४ ॥ कुंडमध्ये तु नाभिः स्यादष्टपत्रं सकर्णिकम्॥ प्रादेशमात्रं विधिना कारयेद्ब्रह्मणः सुत॥५॥पष्ठेनोल्लेखनं प्रोक्तं प्रोक्षणं वर्मणा स्मृतम्॥नेत्रेणालोक्य वै कुंडं षड्रेखाः कारयेद्बुधः ॥ ६ ॥ प्रागायतेन विप्रेंद्र ब्रह्मविष्णुमहेश्वराः ॥ उत्तराग्राः शिवा रेखाः प्रोक्षयेद्वर्मणा पुनः ॥ ७ ॥ शमीपिप्पलसंभूतामरणीं षोडशांगुलाम् ॥ मथित्वा वह्निबीजेन शक्तिन्यासं हृदैव तु ॥ ८ ॥ प्रक्षिपेद्विधिना वह्निमन्वाधाय यथाविधि ॥ तूष्णीं प्रादेशमात्रैस्तु याज्ञिकैः शकलैः शुभैः ॥ ९ ॥ परिसंमोहनं कुर्याज्जलेनाष्टसु दिक्षु वै ॥ परिस्तीर्य विधानेन प्रागाद्येवमनुक्रमात् ॥ १० ॥ उत्तराग्रं पुरस्ताद्धि प्रागग्रं दक्षिणे पुनः ॥ पश्चिमे चोत्तराग्रं तु सौम्ये पूर्वाग्रमेव तु॥११॥ ऐन्द्रे चैन्द्राग्रमावाह्य याम्य एवं विधीयते ॥ सौम्यस्योपरि चांद्राग्रं वारुणाग्रमधस्ततः ॥ १२ ॥

कारयेत्कुर्यादित्यर्थः ॥ ५ ॥ पष्ठेनास्त्रमंत्रेणेत्यर्थः । वर्मणा कवचमंत्रेण ॥ ६ ॥ प्रागायतेन प्रागायतरेखात्रयेण सह उत्तराग्राः शिवरेखाः ब्रह्मविष्णुमहेश्वरास्तद्रूपा इत्यर्थः ॥ ७ ॥ वह्निबीजेन रमिति बीजेन ॥ ८ ॥ वह्निकुंड इति शेषः । विधिना प्रक्षिपेत् यथाविधि अन्वाधाय तूष्णीं प्रादेशमात्रैः याज्ञिकैः शकलैर्योजयेदिति शेषः ॥९॥ परिसंमोहनं परिसमूहनमित्यर्थः ॥ १० ॥ परिस्तरणविधिं कथयति—उत्तराग्रमिति ॥ ११ ॥ दिग्देवतावाहनं कथयति—ऐन्द्र इति । ऐन्द्रे पूर्वदिग्भागे ऐंद्राग्रमिंद्राग्निदैवतमित्यर्थः । याम्ये दक्षिणदिग्भागे एवं यामाग्रमित्यर्थः । सौम्यस्योत्तरदिग्भागस्योपरि चांद्राग्रमित्यन्वयः । ततः पूर्वदिग्भागादधः पश्चिमदिग्भागे वारुणाग्रमित्यन्वयः ॥१२॥

पात्रासादनादिविधिं कथयति—द्वंद्वरूपेणेत्यादिना ॥ १३-१६ ॥ अन्योदकयुक्तानि कुशाग्राण्यन्योदककुशाग्राणि तैः सम्यगाच्छाद्येत्यन्वयः ॥ १७ ॥ हस्ताभ्यां नासिकं नामासमीपं पात्रं प्रणीतापात्रम् उद्धृत्येति शेषः । ऐशान्यां दिशि विन्यसेदित्यन्वयः । आज्याधिश्रयणं स्थापनमित्यर्थः ॥१८॥ सकलेनोप[illegible] ॥१९॥ अग्रे वह्निसमीप इत्यर्थः॥२०॥ अंगुष्ठमात्रावंगुष्ठपरिमितौ कुशौ विधिनैव प्रक्षाल्य नैर्दर्भनरुणसंज्ञैः सहैव पुनर्नवभिस्तत्संख्याकदर्भैः पर्यग्निं कुर्यादित्यन्वयः ॥२१ ॥ पुनश्च पर्यग्निं कुर्यादित्यनेन

द्वंद्वरूपेण पात्राणि बर्हिःष्वासाद्य सुव्रत ॥ अधोमुखानि सर्वाणि द्रव्याणि च तथोत्तरे ॥ १३ ॥ तस्योपरि न्यसेद्दर्भांश्छिन्नं दक्षिणतो न्यसेत् ॥ पूजयेन्मूलमंत्रेण पश्चाद्धोमं समाचरेत् ॥ १४ ॥ प्रोक्षणीपात्रमादाय पूरयेदंबुना पुनः ॥ प्रादेशमात्रौ तु कुशौ स्थापयेदुदकोपरि ॥ १५ ॥ प्लावयेच्च कुशाग्रं तु वसोः सूर्यस्य रश्मिभिः ॥ विकीर्य सर्वपात्राणि सुसंप्रोक्ष्य विधानतः ॥ १६ ॥ प्रणीतापात्रमादाय पूरयेदंबुना पुनः ॥ अन्योदककुशाग्रैस्तु सम्यगाच्छाद्य सुव्रत ॥ १७ ॥ हस्ताभ्यां नासिकं पात्रमैशान्यां दिशि विन्यसेत् ॥ आज्याधिश्रयणं कुर्यात्पश्चिमोत्तरतः शुभम् ॥ १८ ॥ भस्ममिश्रांस्तथांगारान् ग्राहयेत्सकलेन वै ॥ पश्चिमोत्तरतो नीत्वा तत्र चाज्यं प्रतापयेत् ॥ १९ ॥ कुशान्प्रौ तु प्रज्वाल्य पर्यग्निं त्रिभिराचरेत् ॥ तान्सर्वांस्तत्र निःक्षिप्य चाग्रे चाज्यं निधापयेत् ॥ २० ॥ अंगुष्ठमात्रौ तु कुशौ प्रक्षाल्य विधिनैव तु ॥ पर्यग्निं च ततः कुर्यात्तैरेव नवभिः पुनः ॥ २१ ॥ पर्यग्निं च पुनः कुर्यात्तदाज्यमवरोपयेत् ॥ अथापकर्षयेत् पात्रं क्रमेणोत्तरपश्चिमे ॥ २२ ॥ संयुज्य चाग्निं काष्ठेन प्रक्षाल्यारोप्य पश्चिमे ॥ आज्यस्योत्पवनं कुर्यात्पवित्राभ्यां सहैव तु ॥ २३ ॥ पृथगादाय हस्ताभ्यां प्रवाहेण यथाक्रमम् ॥ अंगुष्ठानामिकाभ्यां तु उभाभ्यां मूलविद्यया ॥ २४ ॥ अभ्युक्ष्य दापयेदग्नौ पवित्रे घृतपंकिते ॥ सौवर्णं स्रुक्स्रुवं कुर्याद्रत्निमात्रेण सुव्रत ॥ २५ ॥ राजतं वा यथान्यायं सर्वलक्षणसंयुतम् ॥ अथवा याज्ञिकैर्वृक्षैः कर्तव्यौ स्रुक्स्रुवावुभौ ॥ २६ ॥ अरत्निमात्रमायामं तत्पोत्रे तु बिलं भवेत् ॥ षडंगुलपरीणाहं दंडमूलं महामुने ॥ २७ ॥

द्विवारं पर्यग्निकरणमानंतर्येण ज्ञेयम् ॥२२॥ काष्ठेनोपवेषेणाग्निं संयुज्य प्रत्यूह्य पश्चिमे आरोप्य उपवेषं निरस्य प्रक्षाल्य अप उपस्पृश्य पात्राभ्यां पवित्रसंज्ञकदर्भाभ्यां सहैव अंगुलीभ्यामिति शेषः । आज्यस्योत्पवनं कुर्यादित्यन्वयः ॥ २३ ॥ पृथग्विस्ले इत्यर्थः । यथाक्रमं प्रवाहेण याज्ञिकोक्तमार्गेणेत्यर्थः ॥ २४ ॥ स्रुक्स्रुवविधानं कथयति—सौवर्णमित्यादिना । रत्निमात्रेणारत्निमात्रेणेत्यर्थः ॥ २५ ॥ २६ ॥ पोत्रे मुख इत्यर्थः । षडंगुलपरीणाहं षडंगुलविस्तृतम् ॥ २७ ॥

तदर्धं त्र्यंगुलपरीणाहं पुष्करं मुखं गोवालसदृशं गोपुच्छसमानमित्यर्थः ॥ २८ ॥ पूर्णाहुत्यादिवृहत्स्रुवविधानं कथयति—षट्त्रिंशदित्यादिना । अष्टांगुलसविस्तरमष्टांगुलविस्तार सहितमित्यर्थः ॥ २९ ॥ तदर्धं चतुरंगुलमुत्सेधः उच्छ्राय इत्यर्थः ॥ ३० ॥ त्रिभागेषु एकं त्रिभागैकं द्वादशांगुलमग्रं भवेत् । शेषमवशिष्टभागद्वयं कृत्वा वक्ष्यमाणप्रकारं कृत्वेत्यर्थः । परित्यजेदग्रबाह्यं कुर्यादित्यर्थः ॥ ३१ ॥ वेदिस्तत्संज्ञकचतुष्कोणभागः बिलं छिद्रम् ॥ ३२ ॥ ३३ ॥ तद्बाह्ये बिलबाह्ये विनिद्रं विकसितं पत्रविचित्रितं पद्मं कुर्यादित्यन्वयः । तद्बाह्ये पद्मबाह्य इत्यर्थः ॥ ३४ ॥ वेदिकामध्यतः कनिष्ठांगुलमानतः रंध्रं यावन्मुखांतस्तावद्बिलमानं निम्नगं गंभीरप्रवाहं खातं स्यादित्यन्वयः । "निम्नं गभीरं गंभीरम्" इत्यमरः ॥ ३५ ॥ नालं दंडमूलदंडं षडंगुलं कुर्यादिति शेषः । चतुरंगुलं दंडाग्रे अर्धांगुलविवृद्ध्या दंडिकात्रयं वलीत्रयं कर्तव्यमित्यन्वयः ॥ ३६ ॥

तदर्धं कंठनालं स्यात्पुष्करं मूलवद्भवेत् ॥ गोवालसदृशं दंडं स्रुवाग्रं नासिकासमम् ॥ २८ ॥ पुटद्वयसमायुक्तं मुक्ताद्येन प्रपूरितम् ॥ षट्त्रिंशदंगुलायाममष्टांगुलसविस्तरम् ॥२९॥ उत्सेधस्तु तदर्धं स्यात्सूत्रेण समितं ततः ॥ सप्तांगुलं भवेदास्यं विस्तरायामतः पुनः ॥ ३० ॥ त्रिभागैकं भवेदग्रं कृत्वा शेषं परित्यजेत् ॥ कंठं च द्व्यंगुलायामं विस्तारं चतुरंगुलम् ॥ ३१ ॥ वेदिरष्टांगुलायामा विस्तारस्तत्प्रमाणतः ॥ तस्य मध्ये बिलं कुर्याच्चतुरंगुलमानतः ॥ ३२ ॥ बिलं सुवर्तितं कुर्यादष्टपत्रं सुकर्णिकम् ॥ परितो बिलबाह्ये तु पट्टिकार्धांगुलेन तु ॥ ३३ ॥ तद्बाह्ये च विनिद्रं तु पद्मपत्रविचित्रितम् ॥ यवद्वयप्रमाणेन तद्बाह्ये पट्टिका भवेत् ॥ ३४ ॥ वेदिकामध्यतो रंध्रं कनिष्ठांगुलमानतः ॥ खातं यावन्मुखांतः स्याद्बिलमानं तु निम्नगम् ॥३५॥ दंडं षडंगुलं नालं दंडाग्रे दंडिकात्रयम् ॥ अर्धांगुलविवृद्ध्या तु कर्तव्यं चतुरंगुलम् ॥ ३६ ॥ त्रयोदशांगुलायामं दंडमूले घटं भवेत् ॥ द्व्यंगुलस्तु भवेत्कुंभो नाभिं विद्याद्दशांगुलम् ॥ ३७ ॥ वेदिमध्ये तथा कृत्वा पादं कुर्याच्च द्व्यंगुलम् ॥ पद्मपृष्ठसमाकारं पादं वै कर्णिकाकृतिम् ॥३८॥ गजोष्ठसदृशाकारं तस्य पृष्ठाकृतिर्भवेत् ॥ अभिचारादिकार्येषु कुर्यात्कृष्णायसेन तु ॥३९॥ पंचविंशत्कुशेनैव स्रुक्स्रुवौ मार्जयेत्पुनः ॥ अग्रमग्रेण संशोध्य मध्यं मध्येन सुव्रत ॥४०॥

त्रयोदशांगुलमायामो विस्तारो यस्य तत्त्रयोदशांगुलायामं घटं शिरः दंडाग्रे भवेत् कुर्यादित्यर्थः । "घटः समाधिभेदे च शिरःकुटकुटेषु च" इति विश्वः । द्व्यंगुलं कुंभं कंबुग्रीव मित्यर्थः । नाभिं मध्यम् ॥ ३७ ॥ वेदिमध्ये तथा दशांगुलं नाभिं पद्मपृष्ठसमाकारं कृत्वा पादं च द्व्यंगुलं कर्णिकाकृतिं कुर्यादित्यन्वयः ॥ ३८ ॥ तस्य स्रुवस्य पृष्ठाकृतिः गजोष्ठसदृशाकारं यथा स्यात्तथा भवेदित्यन्वयः । स्रुवविधानमुक्त्वा विशेषद्रव्यं कथयति—अभिचारेति । अभिचारादिकार्ये जारणमारणादिष्विर्त्यर्थः ॥ ३९ ॥ स्रुक्स्रुव संस्कारं कथयति—पंचविंशत्यादिना ॥ ४० ॥

पात्रविधानं कथयति—आज्यस्थालीत्यादिना ॥ ४१ ॥ ४२ ॥ अभिचारे आयसी शांतिके मृन्मयी वा मृन्मय्यैवेत्यर्थः । पात्रमानं कथयति—षडंगुलमित्यादिना ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ चतुरंगुलमध्ये तु प्रदक्षिणं ग्रथितं यथा स्यात्तथा त्रिंशद्दर्भैः परिस्तरेदित्याग्रिमस्थैरन्वयः ॥४६॥ अभिचारादिकार्येषु शिवा[illegible]र्जितं यथा स्यात्तथा कर्म कुर्यादिति शेषः ॥ ४७ ॥ आभिचारिके अकोमलाः स्थिराः समिधः संग्राह्या इत्यन्वयः । सामान्यसमिल्लक्षणं कथयति—समग्रा इत्यादिना ॥ ४८ ॥ ४९ ॥ ततः सामान्यघृतादित्यर्थः॥५०॥अन्नं चर्वादि अक्षप्रमाणं कर्षपरिमितामित्यर्थः । " अक्षः कर्षे " इति विश्वः । शुक्तिमात्रेण शुक्तिप्रमाणेन तिलो ग्राह्य इति शेषः । यवानां प्रमाणं

मूलं मूलेन विधिना अग्नौ ताप्य हृदा पुनः ॥ आज्यस्थाली प्रणीता च प्रोक्षणी तिस्र एव च ॥ ४१ ॥ सौवर्णी राजती वापि ताम्री वा मृन्मयी तु वा ॥ अन्यथा नैव कर्तव्यं शांतिके पौष्टिके शुभे ॥४२॥ आयसी त्वभिचारे तु शांतिके मृन्मयी तु वा ॥ षडंगुलं सुविस्तीर्णं पात्राणां मुखमुच्यते ॥४३॥ प्रोक्षणी द्व्यंगुलोत्सेधा प्रणीता द्व्यंगुलाधिका ॥ आज्यस्थाली ततस्तस्या उत्सेधो द्व्यंगुलाधिकः ॥४४॥ यैः समिद्भिर्हुतं प्रोक्तं तैरेव परिधिर्भवेत् ॥ मध्यांगुलपरीणाहा अवक्रा निर्व्रणाः समाः ॥ ४५ ॥ द्वात्रिंशदंगुलायामास्तिस्रः परिधयः स्मृताः ॥ द्वात्रिंशदंगुलायामैस्त्रिंशद्दर्भैः परिस्तरेत् ॥ ४६ ॥ चतुरंगुलमध्ये तु ग्रथितं तु प्रदक्षिणम् ॥ अभिचारादिकार्येषु शिवाग्न्याधान वर्जितम् ॥ ४७ ॥ अकोमलाः स्थिरा विप्र संग्राह्यास्त्वाभिचारिके ॥ समग्राः सुसमाः स्थूलाः कनिष्ठांगुलसंमिताः ॥ ४८ ॥ अवक्रा निर्व्रणाः स्निग्धा द्वादशांगुलसंमिताः ॥ समिधस्थं प्रमाणं हि सर्वकार्येषु सुव्रत ॥ ४९ ॥ गव्यं घृतं ततः श्रेष्ठं कापिलं तु ततोऽधिकम् ॥ आहुतीनां प्रमाणं तु स्रुवं पूर्णं यथा भवेत् ॥ ५० ॥ अन्नमक्षप्रमाणं स्याच्छुक्तिमात्रेण वै तिलः ॥ यवानां च तदर्धं स्यात्फलानां स्वप्रमाणतः ॥ ५१ ॥ क्षीरस्य मधुनो दध्नः प्रमाणं घृतवद्भवेत् ॥ चतुःस्रुवप्रमाणेन स्रुचा पूर्णाहुतिर्भवेत् ॥ ५२॥ तदर्धं स्विष्टकृत्प्रोक्तं शेषं सर्वमथापि वा ॥ शांतिकं पौष्टिकं चैव शिवाग्नौ जुहुयात्सदा ॥ ५३ ॥ लौकिकाग्नौ महाभाग मोहनोच्चाटनादयः ॥ शिवाग्निं जनयित्वा तु सर्वकर्माणि सुव्रत ॥ ५४ ॥ सप्त जिह्वाः प्रकल्प्यैव सर्वकार्याणि कारयेत् ॥ अथवा सर्वकार्याणि जिह्वामात्रेण सिध्यति ॥ ५५ ॥ शिवाग्निरिति विप्रेंद्र जिह्वामात्रेण साधकः ॥ ५६ ॥

तदर्धं शुक्त्यर्धमित्यर्थः॥५१॥५२॥ स्विष्टकृत्तदर्धं पूर्णाहुत्यर्धं वा सर्वं शेषं प्रोक्तमित्यन्वयः । अथ शांतिकं पौष्टिकं च सदा शिवाग्नौ जुहुयात इत्यन्वयः ॥ ५३ ॥ मोहनोच्चाटनादयः लौकिकाग्नौ भवंतीति शेषः । सर्वकर्मणि शांतिकादिकर्माणि शिवाग्निं जनयित्वा सप्त जिह्वाः प्रकल्प्यैव सर्वकार्याणि कारयेदित्यग्रिमेणान्वयः ॥ ५४ ॥ अथवा साधकः शिवाग्निर्जिह्वामात्रेण जिह्वाकात्स्न्र्येन सिद्ध्यतीति हेतोः जिह्वामात्रेण सर्वकार्याणि कुर्यादिति शेषेणाग्रिमस्थैरन्वयः ॥५५॥ शिवाग्निरयं द्विपाच्छ्लोकः । अग्रे गद्यानि ॥ ५६ ॥

सप्तजिह्वाकल्पनं कथयति–ॐ इत्यादिना ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥६२॥६३॥ सप्तजिह्वामंत्रानुक्त्वा प्रधानमंत्रं कथयति–ॐ वह्नय इति ॥ ६४ ॥ एतावत् पूर्वोक्तप्रकारं वह्निसंस्कारं कुर्यादिति शेषः । अथवा वह्निकर्मसु पुनर्नैमित्तिके च विधिना शिवाग्निं कारयेदित्यन्वयः ॥ ६५ ॥ शिवाग्निविधिं कथयति -निरीक्षणमित्यादिना । निवृत्त्या प्रातिलोम्येन त्रिभिरघोरवामसद्यैरेव कुंडपरिधानं मेखलाकरणमित्यर्थः । वज्रीकरणं दृढीकरणं चतुष्पदानां पूर्वोक्तेंद्राग्न्यादीनामापादनं स्थापनमित्यर्थः । एवं पूर्वोक्त प्रकारमष्टादशविधमष्टादशप्रकारं कुंडसंस्कारं कुर्यादिति शेषः ॥ ६६ ॥ अक्षेण तुषेण पाटनमाच्छादनं कृत्वेति शेषः । षष्ठेन विष्टरस्य भद्रासनस्य न्यासमाद्येन वज्रासने हीर

ॐ बहुरूपायै मध्यजिह्वायै अनेकवर्णायै दक्षिणोत्तरमध्यगायै शांतिकपौष्टिकमोक्षादिफलप्रदायै स्वाहा ॥ ५७ ॥ ॐ हिरण्यायै चामीकराभायै ईशानजिह्वायै ज्ञानप्रदायै स्वाहा ॥ ५८ ॥ ॐ कनकायै कनकनिभायै रम्यायै ऐंद्रजिह्वायै स्वाहा ॥ ५९ ॥ ॐ रक्तायै रक्तवर्णायै आग्नेयजिह्वायै अनेकवर्णायै विद्वेषणमोहनायै स्वाहा ॥ ६० ॥ ॐ कृष्णायै नैर्ऋतजिह्वायै मारणायै स्वाहा ॥६१॥ ॐ सुप्रभायै पश्चिमजिह्वायै मुक्ताफलायै शांतिकायै पौष्टिकायै स्वाहा ॥ ६२ ॥ ॐ अभिव्यक्तायै वायव्यजिह्वायै शत्रूच्चाटनायै स्वाहा ॥ ६३ ॥ ॐ वह्नये तेजस्विने स्वाहा ॥ ६४ ॥ एतावद्वह्निसंस्कारमथवा वह्निकर्मसु ॥ नैमित्तिके च विधिना शिवाग्निं कारयेत्पुनः ॥ ६५ ॥ निरीक्षणं प्रोक्षणं ताडनं च षष्ठेन फडंतेन अभ्युक्षणं चतुर्थेन खननोत्किरणं षष्ठेन पूरणं समीकरणमाद्येन सेचनं वौषडंतेन कुट्टनं षष्ठेन संमार्जनोपलेपने तुरीयेण कुंडपरिकल्पनं निवृत्त्या त्रिभिरेव कुंडपरिधानं चतुर्थेन कुंडार्चनमाद्येन रेखाचतुष्टयसंपादनं षष्ठेन फडंतेन वज्रीकरणं चतुष्पदापादनमाद्येन एवं कुंडसंस्कारमष्टादशविधम् ॥ ६६ ॥ कुंडसंस्कारानंतरमक्षपाटनं षष्ठेन विष्टरन्यासमाद्येन वज्रासने वागीश्वर्यावाहनम् ॥ ६७ ॥ ॐ ह्रीं वागीश्वरीं श्यामवर्णां विशालाक्षीं यौवनोन्मत्तविग्रहाम् ॥ ऋतुमतीं वागीश्वरशक्तिमावाहयामि ॥६८॥ वागीश्वरीं पूजयामि ॥६९॥ पुनर्वागीश्वरावाहनम्॥७०॥एकवक्त्रं चतुर्भुजं शुद्धस्फटिकाभं वरदाभयहस्तं परशुमृगधरं जटामुकुटमंडितं सर्वाभरणभूषितमावाहयामि॥७१॥ॐ ईं वागीश्वराय नमः॥आवाहनस्थापनसन्निधानसन्निरोधपूजांतं वागीश्वरीं संभाव्य गर्भाधानवह्निसंस्कारम्॥७२॥

कासने वागीश्वर्यावाहनं कुर्यादिति शेषः। "अक्षः कर्षे तुषे चक्रे" इति विश्वः॥६७॥वागीश्वर्यावाहनमन्त्रं कथयति–ॐ ह्रीमिति । ऋतुमतीमृतुस्नातामित्यर्थः । तदुक्तं पाशुपततंत्रे "ऋतुस्नातां ततो ध्यात्वा" इति ॥ ६८ ॥ ६९ ॥ ७० ॥ वागीश्वरावाहनमंत्रं कथयति–एकवक्त्रमिति ॥ ७१ ॥ ॐ ई वागीश्वराय [illegible] इत्यनेन आवाहनादि पूजांतं कृत्वेति शेषमादायान्वयः । वागीश्वरीं संभाव्य सत्कृत्य गर्भाधानवह्निसंस्कारं कुर्यादिति शेषः ॥ ७२ ॥

संस्काराविधिं कथयाति—अरणीजानितमिति । कांतोद्भवं सूर्यकांतोद्भवमग्निहोत्रजं श्रोत्रियागारजम् । तदुक्तं तंत्रे "उत्तमं सूर्यकांतं च अरण्योद्भवमध्यमम् । श्रोत्रियागारजो वह्निरधम श्चेति कीर्तितः" इति । आद्येन निरीक्षणताडनाभ्युक्षणप्रक्षालनं वह्नेः क्रव्यादांशिवपरित्यागोऽपि प्रथमेन कृत्वेति शेषः । त्रैकारणं त्रिवर्गसाधनं जठरभ्रूमध्यादावाह्य कारण मूर्तौ आवाहितमूर्तौ आग्नेयेनाग्निदेवताकमंत्रेण उद्दीपनं कृत्वेति शेषः । आद्येन सह पुरुषेण धारणासंहितया धेनुमुद्रा कर्तव्येति शेषः । तुरीयेणावगुंठ्य उपपात्रेणाच्छाद्ये त्यर्थः । शरावोत्थापनं कृत्वेति शेषः । कुंडोपारि निधाय तुरीयेणं प्रदक्षिणमावर्त्य आत्मसंमुखां वागीश्वरीं ध्यात्वेति शेषः । गर्भनाड्यां गर्भनाल इत्यर्थः । "नाडी नालः" इति विश्वः । गर्भाधानांतरीयेण गर्भाधानमध्यकालेन वौषडंतेन आद्येन कमलप्रदानं कृत्वेति शेषः । कुशार्घ्यं दत्त्वा आद्येन इंधनप्रदानं गर्भस्य वह्निरूपस्याधानं गर्भाधानं प्रज्वालनं प्रदीप्तकरणं च सद्येन आद्येन पूजनं वामने पुंसवनं द्वितीयेन तेनैव पूजनमघोरेण सीमंतोन्नयनं तृतीयेन पूजनं कुर्यादिति शेषः ॥ ७३ ॥ अवयवव्याप्तिर्वक्त्रोद्घाटनं

अरणीजनितं कांतोद्भवंवा अग्निहोत्रजंवा ताम्रपात्रेशरावेवा आनीय निरीक्षणताडनाभ्युक्षणप्रक्षालनमाद्येनक्रव्यादांशिवपरित्यागोपि प्रथमेन वह्नेस्त्रैकारणं जठरभ्रूमध्यादावाह्याग्निं त्रैकारणमूर्तावाग्नेयेन उद्दीपनमाद्येन पुरुषेण संहितया धारणा धेनुमुद्रां तुरीयेणावगुंठ्य जानुभ्यामवनिं गत्वा शरावोत्थापनं कुंडोपरि निधाय प्रदक्षिणमावर्त्य तुरीयेणात्मसम्मुखां वागीश्वरीं गर्भनाड्यां गर्भाधानांतरीयेण कमलप्रदानमाद्येन वौषडंतेन कुशार्घ्यं दत्त्वा इंधनप्रदानमाद्येन प्रज्वालनं गर्भाधानं चसद्येनाद्येन पूजनं पुंसवनं वामेन पूजनं द्वितीयेन सीमंतोन्नयनमघोरेण तृतीयेन पूजनम् ॥ ७३ ॥ अवयवव्याप्तिवक्त्रोद्घाटनं वक्त्रनिष्कृतिरिति तृतीयेन गर्भजातकर्मपुरुषेण पूजनं तुरीयेण षष्ठेनप्रोक्षणं सूतकशुद्धये चाग्निसूनुरक्षाकुशास्त्रेण वक्त्रेणाऽग्नौ मूलमीशाग्रं नैर्ऋतिमूलं वायव्याग्रं वायव्यमूलमीशाग्रमिति कुशास्तरणमितिपूर्वोक्त मिध्ममग्रमूलघृताक्तं लालापनोदाय षष्ठेन जुहुयात् ॥ ७४ ॥ पंचपूर्वातिक्रमेण परिधिविष्टरन्यासोऽपि आद्येन विष्टरोपरि. हिरण्यगर्भं हरनारायणानपि पूजयेत् ॥ ७५ ॥ इंद्रादिलोकपालांश्च पूजयेत् ॥ ७६ ॥ वज्रावर्तपर्यंतानपि पूजयेत् ॥ ७७ ॥

वक्त्रनिष्कृतिरिति पूर्वोक्तप्रकारेण तृतीयेन कार्येति शेषः । पुरुषेणं गर्भजातकर्मतुरीयेण पूजनं षष्ठेन सूतकशुद्धये प्रोक्षणं कुशयुक्तमस्त्रं तत्संज्ञकमंत्रस्तेन अग्निसूनोराग्निरूपपुत्रस्य रक्षा अग्निसूनुरक्षा वक्त्रेण कर्तव्येति शेषः । आग्नावाग्नेय्यां मूलमीशे ऐशान्यामग्रमीशाग्रं नैर्ऋतिमूलं वायव्याग्रं वायव्यमूलमीशाग्रं यथा स्यात्तथा इति पूर्वोक्तप्रकारेण कुशा स्तरणं कृत्वेति शेषः । इति एवंप्रकारेण पूर्वोक्तमिध्ममग्रमूलं घृताक्तं यस्य स अग्रमूलघृताक्तस्तं लालापनोदाय षष्ठेन जुहुयादित्यन्वयः ॥ ७४ ॥ पंचसु सद्योजातादिषु पूर्वः पंचपूर्वस्तस्यातिक्रमेण वामादिमंत्रचतुष्टयेनेत्यर्थः । परिधियुक्तो विष्टरः परिधिविष्टरस्तस्य न्यासोऽपि कार्य इति शेषः । आद्येन विष्टरोपरि भद्रासनोपरि हिरण्यगर्भहरनारायणा नापि पूजयेदित्यन्वयः ॥ ७५ ॥ ७६ ॥ वज्राद्याश्च ते आवर्तपर्यंतास्त्रिशूलपर्यंतास्तानष्टलोकपालायुधविशेषानापि पूजयेदित्यन्वयः ॥ ७७ ॥

वागीश्वरवागीश्वरीपूजादि कृत्वा एनं वागीश्वमुद्रास्य हुतं होमद्रव्यं विसर्जयेज्जुहुयादित्यर्थः ॥ ७८ ॥ अथानंतरं स्रुक्स्रुवसंस्कारं पूर्ववत् निरीक्षणप्रोक्षणताडनाभ्युक्षणादीनि कृत्वेतिशेषः । स्रुक् स्रुवं च हस्तद्वये गृहीत्वा आद्येन संस्थापनं ताडनमपि कृत्वेति शेषः । स्रुक्स्रुवोपरि मूलमध्यमाग्रेण त्रित्वेन त्रिप्रकारेण दर्भैरनुलेखनं दर्भानुलेखनं कृत्वेति शेषः । स्रुक् शक्तिं स्रुवमपि शंभुं दक्षिणपार्श्वे कुशोपरि शक्तये नमः शंभवे नम इति मंत्राभ्यां न्यसेदिति शेषः ॥७९॥ अंतिसूत्रेण समीपवर्तिसूत्रेणेत्यर्थः॥८०॥ षष्ठेन रक्षां विधाय स्रुक्स्रुवसंस्कारः पूर्वमेवोक्तः कार्य इति शेषः ॥ ८१ ॥ पुनराज्यसंस्कारः पूर्वमेवोक्तः निरीक्षणादीनि च पूर्ववत् कुर्यादिति शेषः ॥ ८२ ॥ अन्यकल्पमाह—आज्यमित्यादिना। वा घृतपात्रमैशान्यां तद्दिशि षष्ठेन वेद्युपरि न्यस्य आज्यप्रतापनं कार्यमिति शेषमादायान्वयः। पवित्रीकरणं कथयति-वितस्तिमात्रमिति । अग्निज्वालायामुत्पवनमाग्नि

**वागीश्वरवागीश्वरीपूजाद्येनमुद्रास्य हुतं विसर्जयेत् ॥ ७८ ॥ स्रुक्स्रुवसंस्कारमथो निरीक्षणप्रोक्षणताडनाभ्युक्षणादीनि पूर्ववत् स्रुक् स्रुवं च हस्तद्वये गृहीत्वा संस्थापनमाद्येन ताडनमपि स्रुक्स्रुवोपरि दर्भानुलेखनमूलमध्यमाऽग्रेण त्रित्वेन स्रुक्शक्तिं स्रुवमपि शंभुं दक्षिणपार्श्वे कुशोपरि शक्तये नमः शंभवे नमः ॥७९॥ ततो ह्यन्तिसूत्रेण स्रुक्स्रुवौ तुरीयेण वेष्टयेदर्चयेच्च॥८०॥ धेनुमुद्रां दर्शयित्वा तुरीयेणावगुंठ्य षष्ठेन रक्षां विधाय स्रुक्स्रुवसंस्कारः पूर्वमेवोक्तः ॥ ८१ ॥ पुनराज्यसंस्कारः पूर्वमेवोक्तः निरीक्षणप्रोक्षणताडनाभ्युक्षणादीनि पूर्ववत् ॥ ८२ ॥ आज्यप्रतापनमैशान्यां वा षष्ठेन वेद्युपरि विन्यस्य घृतपात्रं वितस्तिमात्रं कुशपवित्रं वामहस्तांगुष्ठानामिकाग्रं गृहीत्वा दक्षिणांगुष्ठानामिकामूलं गृहीत्वाग्निज्वालोत्पवनं स्वाहांतेन तुरीयेण पुनः षड् दर्भान् गृहीत्वा पूर्ववत्स्वात्मसंप्लवनं स्वहांतेनाद्येन कुशद्वयपवित्रबंधनं चाद्येन घृते न्यसेदिति पवित्रीकरणम् ॥८३॥ दर्भद्वयं प्रगृह्याग्निप्रज्वालनं घृतं त्रिधा वर्तयेत् ॥ संप्रोक्ष्याग्नौ निधापयेदिति नीराजनम् ॥ ८४ ॥ पुनर्दर्भान् गृहीत्वा कीटकादि निरीक्ष्याघोर्येण संप्रोक्ष्य दर्भानग्नौ निधाय इत्यवद्योतनम् ॥ ८५ ॥ दर्भद्वयं गृहीत्वाग्निज्वालया घृतं निरीक्षयेत् ॥ ८६ ॥ दर्भेण गृहीत्वा तेनाग्रद्वयेन शुक्लपक्षद्वयेनाद्येनेति कृष्णपक्षसंपातनं घृतं त्रिभागेन विभज्य स्रुवेणैकभागेनाज्येनाग्नये स्वाहा द्वितीयेनाज्येन सोमाय स्वाहा आज्येन ॐ अग्नीषोमाभ्यां स्वाहा आज्येनाग्नये स्विष्टकृते स्वाहा ॥ ८७ ॥**

ज्वालोत्पवनं स्वात्मनि स्वदेहे संप्लवनं स्वात्मसंप्लवनम् ॥ ८३ ॥ नीराजनं कथयति—दर्भद्वयेनेति । त्रिधा वर्तयेत्परिभ्रामयेदित्यर्थः ॥ ८४ ॥ अवद्योतनं कथयति—पुनरिति । अवद्योतनं कुर्यादिति शेषः ॥ ८५ ॥ निरीक्षणमाह—दर्भद्वयमिति ॥ ८६ ॥ दर्भेण गृहीत्वा अन्यदर्भेण सह पवित्रमादायेत्यर्थः । तेन पूर्वोक्तेन अग्रद्वयेन पवित्राग्रद्वयेन आद्येनेति मंत्रेण सद्योजातमंत्रेणेत्यर्थः । शुक्लपक्षरूपं यद्द्वयं भागद्वयमत एवापरपक्षपंचम्यंतं शुक्लपक्षो ज्योतिर्विद्भिः परिगृह्यते । तेन सह कृष्णपक्षस्य तृतीयभागरूपस्य संपातनं पृथक्करणं कृत्वेति शेषः । फलितमाह—घृतं त्रिभागेन विभज्य एकभागेन कृष्णपक्षसंज्ञकेनाज्येन स्रुवेणाग्नये स्वाहा द्वितीयेनाज्येन द्वितीयभागाज्येनेत्यर्थः । एवं द्वितीयेनेत्यस्याग्रेप्यन्वयः । एवं जुहुयादिति शेषमादायान्वयः ॥ ८७ ॥

पुनः कुशेन पवित्रमिति शेषः । गृहीत्वेत्यन्वयः ॥ ८८ ॥ रक्षा कार्येति शेषः । अथ संस्कृते संस्कारविशिष्टे पवित्रे निधापयेदग्नौ स्थापयेदित्यर्थः । आज्यसंस्कार एवं कार्य इति शेषः ॥ ८९ ॥ वक्त्रोद्घाटनं कथयति—आज्येनेत्यादिना । शक्तिबीजात् ह्रींबीजेन स्रुग्वदनेनाज्येन चक्राभिघारणं हविर्द्रव्ये चक्रसदृशाभिघारणमित्यर्थः । पूर्ववदीशानमूर्तये स्वाहेत्यादि जुहुयादिति शेषः । इति पूर्वोक्तं वक्त्रोद्घाटनमित्यन्वयः ॥ ९० ॥ वक्त्रसंधानं कथयति—ईशानमूर्तय इत्यादिना ॥ ९१ ॥ वक्त्रैक्यकरणं कथयति—ईशानमूर्तय इत्यादिना ॥ ९२ ॥ ९३ ॥ योनिबीजेन दश वा पंचधा पंचप्रकारा आहुतयो देया इत्यन्वयः ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ षट् सद्योजातादिमंत्रा मुखवद्यस्य स षण्मुखस्तस्मिन् ॥ ९८ ॥ आत्मनः उत्तरे अग्नये च दक्षिणे च सोमायेति जुहुयादित्यनुषंगः ॥ ९९ ॥ उक्तापसव्यहोमकारणं कथयति—प्रत्यङ्मुखस्येत्यादिना ॥ १०० ॥ तत्र चक्षुर्मध्य इत्यर्थः ॥ १ ॥ चरुणा च यथावद्धि फलमिति शेषः । तथा समिद्भिश्च स्मृतमित्यन्वयः ॥ २ ॥ ३ ॥

पुनः कुशेन गृहीत्वा संहिताभिमंत्रेण नमोन्तेनाभिमंत्रयेत् ॥८८॥ अभिमंत्र्य धेनुमुद्राप्रदर्शनकवचावगुंठनास्त्रेण रक्षाम् । अथ संस्कृते निधापयेत् आज्यसंस्कारः ॥८९॥ आज्येन स्रुग्वदनेन चक्राभिघारणं शक्तिबीजादीशानमूर्तये स्वाहा । पूर्ववत्पुरुषवक्त्राय स्वाहा अघोरहृदयाय स्वाहा वामदेवाय गुह्याय स्वाहा सद्योजातमूर्तये स्वाहा । इति वक्त्रोद्घाटनम् ॥ ९० ॥ ईशानमूर्तये तत्पुरुषवक्त्राय स्वाहा तत्पुरुषवक्त्राय अघोरहृदयाय स्वाहा अघोरहृदयाय वामगुह्याय सद्योजातमूर्तये स्वाहा इति वक्त्रसंधानम् ॥ ९१ ॥ ईशानमूर्तये तत्पुरुषाय वक्त्राय अघोरहृदयाय वामदेवाय गुह्याय सद्योजाताय स्वाहा इति वक्त्रैक्यकरणम् ॥ ९२॥ शिवाग्निं जनयित्वैवं सर्वकर्माणि कारयेत् ॥ केवलं जिह्वया वापि शांतिकार्याणि सर्वदा ॥९३॥ गर्भाधानादिकार्येषु वह्नेः प्रत्येकमव्ययः ॥ दश आहुतयो देया योनिबीजेन पंचधा ॥९४॥ शिवाग्नौ कल्पयेद्दिव्यं पूर्ववत्परमासनम् ॥ आवाहनं तथा न्यासं यथा देवे तथार्चनम् ॥९५॥ मूलमंत्रं सकृज्जप्त्वा देवदेवं प्रणम्य च ॥ प्राणायामत्रयं कृत्वा सगर्भं सर्वसंमतम् ॥९६॥ परिषिचनपूर्वं च तदिध्ममभिघार्य च ॥ जुहुयादग्निमध्ये तु ज्वलितेऽथ महामुने ॥९७॥ आघारावपि चाधाय चाज्येनैव तु षण्मुखे ॥ आज्यभागौ तु जुहुयाद्विधिनैव घृतेन च ॥९८॥ चक्षुषी चाज्यभागौ तु चाग्नये च तथोत्तरे ॥ आत्मनो दक्षिणे चैव सोमायेति द्विजोत्तम ॥९९॥ प्रत्यङ्मुखस्य देवस्य शिवाग्नेर्ब्रह्मणः सुत ॥ अक्षि वै दक्षिणं चैव चोत्तरं चोत्तरं तथा ॥ १०० ॥ दक्षिणं तु महाभाग भवत्येव न संशयः ॥ आज्येनाहुतयस्तत्र मूलेनैव दशैव तु ॥ १ ॥ चरुणा च यथावद्धि समिद्भिश्च तथा स्मृतम् ॥ पूर्णाहुतिं ततो दद्यान्मूलमंत्रेण सुव्रत ॥ २ ॥ सर्वावरणदेवानां पंचपंचैव पूर्ववत् ॥ ईशानादिक्रमेणैव शक्तिबीजक्रमेण च ॥ ३ ॥

अग्निकार्यव्यवस्थां फलं च कथयति–त्रिप्रकारमित्यादिना ॥४॥५॥ साधकस्त्रिवर्गसाधकः अहिंसकं परनाशशून्यं होमं चरेत मुक्तिकांक्षकः मुमुक्षुः शिवमाग्निं हृदिस्थं चिंतयेत् ध्यानयज्ञेन होमयेदित्यग्रिमेणान्वयः ॥६॥७॥ शिवचिंतनशून्यहोमकारिणोऽनर्थं कथयति–बाह्येति ॥१०८॥ श्रीशिव तवाग्निकार्यं त्रिविधं प्रोक्तं सुदुष्करं मन्ये । कलिजानां मनुजानां प्रसीद नित्यं प्रकीर्तनेनापि ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां पंचविंशोऽध्यायः ॥२५॥ षड्विंशे वर्ण्यते ह्यस्मिन्नघोरार्चनमुत्तमम् । ध्यानादिसहितं सम्यग्लिंगेऽस्त्यंतफलं तु वै ॥ शैलादिरघोरार्चनरूपपक्षांतरं कथयति–अथवेत्यादिना॥१–४॥ सर्वयजनं पृजनमग्निकार्यं च सामान्यं पूर्वतुल्यमित्यर्थः । तस्य अघोरेशस्य

प्रायश्चित्तमघोरेण स्वेष्टांतं पूर्ववत्स्मृतम् ॥ त्रिप्रकारं मया प्रोक्तमग्निकार्यं सुशोभनम् ॥४॥ यथावसरमेवं हि कुर्यान्नित्यं महामुने ॥ जीवितांते लभेत्स्वर्गं लभते अग्निदीपनम् ॥५॥ नरकं चैव नाप्नोति यस्य कस्यापि कर्मणः ॥ अहिंसकं चरेद्धोमं साधको मुक्तिकांक्षकः ॥६॥ हृदिस्थं चिंतयेदग्निं ध्यानयज्ञेन होमयेत् ॥ देहस्थं सर्वभूतानां शिवं सर्वजगत्पतिम्॥७॥तं ज्ञात्वा होमयेद्भक्त्या प्राणायामेन नित्यशः ॥ बाह्यहोमप्रदाता तु पाषाणे दर्दुरो भवेत् ॥ १०८ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे पंचविंशतितमोऽध्यायः ॥२५॥ शैलादिरुवाच ॥ अथवा देवमीशानं लिंगे संपूजयेच्छिवम् ॥ ब्राह्मणः शिवभक्तश्च शिवध्यानपरायणः ॥१॥ अग्निरित्यादिना भस्म गृहीत्वा ह्यग्निहोत्रजम् ॥ उद्धूलयेद्धि सर्वांगमापादतलमस्तकम् ॥ २ ॥ आचामेद्ब्रह्मतीर्थेन ब्रह्मसूत्री ह्युदङ्मुखः ॥ अथोंनमः शिवायेति तनुं कृत्वात्मनः पुनः ॥ ३ ॥ देवं च तेन मंत्रेण पूजयेत्प्रणवेन च ॥ सर्वस्मादधिका पूजा अघोरेशस्य शूलिनः ॥ ४ ॥ सामान्यं यजनं सर्वमग्निकार्यं च सुव्रत ॥ मंत्रभेदः प्रभोस्तस्य अघोरध्यानमेव च ॥ ५ ॥ मंत्रः ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ६ ॥ अघोरेभ्यः प्रशांतहृदयाय नमः ॥ अथ घोरेभ्यः सर्वात्मब्रह्मशिरसे स्वाहा ॥ घोरघोरतरेभ्यः ज्वालामालिनी शिखायै वषट् ॥ सर्वेभ्यः सर्वशर्वेभ्यः पिंगलकवचाय हुम् ॥ नमस्ते अस्तु रुद्ररूपेभ्यः नेत्रत्रयाय वषट् ॥ सहस्राक्षाय दुर्भेदाय पाशुपतास्त्राय हुं फट् ॥ स्नात्वाचम्य तनुं कृत्वा समभ्युक्ष्याघमर्षणम् ॥ तर्पणं विधिना चार्घ्यं भानवे भानुपूजनम् ॥ ७ ॥ समं चाघोरपूजायां मंत्रमात्रेण भेदितम् ॥ मार्गशुद्धिस्तथा द्वारि पूजां वास्त्वधिपस्य च ॥ ८ ॥

प्रभोर्मंत्रभेदः अघोरध्यानमेव च वक्ष्यत इति शेषः । मंत्रमाह–अघोरेति ॥ ५ ॥६ ॥ न्यासान्कथयति–अघोरेभ्य इत्यादिना । पूजाविधिं कथयति–स्नात्वेत्यादिना । स्नात्वा आचम्य तनुं समभ्युक्ष्य अघमर्षणं तर्पणं भानवे अर्घ्यं पूजनं च समं पूर्वतुल्यं कृत्वा अघोरपूजायां मंत्रमात्रेण भेदितं भिन्नं कुर्यादिति शेषमादायाग्रिमेणान्वयः ॥७॥८ ॥

स पूजकः शुभासनमास्थितः । अग्रे करं विशोध्य नासाग्रसमीपं कमलं हस्तकमलं नामाग्रकमलं तस्मिन् भस्म स्थाप्य स्थापयित्वा क्षुभिकाग्निना विग्नत्यनलेन दग्धः अक्षो व्यवहारो येन स दग्धाक्षः “ अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः ” इति विश्वः । तद्व्यवहारभस्मवायुना प्रेर्य शुभांभसा विशोध्य ब्रह्ममये तत्र भस्मनि शक्त्या सह ब्रह्म कलां प्रकल्पयेदित्यग्रिमेणान्वयः ॥ ९ ॥ १० ॥ अघोरं तत्संज्ञकमंत्रं पंचधा कृत्वा पुनः पंचांगसहितं पंचांगभस्मविलेपनयुक्तं कुर्यादिति शेषः । इत्थं पूर्वोक्तप्रकारां ज्ञानयुक्तां क्रिया ज्ञानक्रिया तामेव पूर्वोक्तप्रकारेण विधानतश्च विन्यस्य त्रिनेत्रसहितोऽघोरमूर्तिसहितः न्यासः कार्य इत्यग्रिमेणान्वयः ॥ ११ ॥ हृदि वरासनं ध्यात्वा नाभौ वह्निगत

कृत्वा करं विशोध्याग्रे स शुभासनमास्थितः ॥ नासाग्रकमले स्थाप्य दग्धाक्षः क्षुभिकाग्निना ॥९॥ वायुना प्रेर्य तद्भस्म विशोध्य च शुभां भसा ॥ शक्त्यामृतमये ब्रह्मकलां तत्र प्रकल्पयेत् ॥१०॥ अघोरं पंचधा कृत्वा पंचांगसहितं पुनः॥ इत्थं ज्ञानक्रियामेवं विन्यस्य च विधा नतः ॥११॥ न्यासस्त्रिनेत्रसहितो हृदि ध्यात्वा वरासने ॥ नाभौ वह्निगतं स्मृत्वा भ्रूमध्ये दीपवत्प्रभुम्॥१२॥ शांत्या बीजांकुरानंतधर्माद्यै रपि संयुते ॥ सोमसूर्याग्निसंपन्ने मूर्तित्रयसमन्विते ॥१३॥ वामादिभिश्च सहिते मनोन्मन्याप्यधिष्ठिते ॥ शिवासनेत्ममूर्तिस्थमक्षयाकार रूपिणम् ॥ १४ ॥ अष्टत्रिंशत्कलादेहं त्रितत्त्वसहितं शिवम् ॥ अष्टादशभुजं देवं गजचर्मोत्तरीयकम् ॥ १५ ॥ सिंहाजिनांबरधरमघोरं परमेश्वरम् ॥ द्वात्रिंशाक्षररूपेण द्वात्रिंशच्छक्तिभिर्वृतम् ॥ १६ ॥ सर्वाभरणसंयुक्तं सर्वदेवनमस्कृतम् ॥ कपालमालाभरणं सर्ववृश्चिकभूष णम् ॥ १७ ॥ पूर्णेंदुवदनं सौम्यं चंद्रकोटिसमप्रभम् ॥ चंद्ररेखाधरं शक्त्या सहितं नीलरूपिणम् ॥ १८ ॥ हस्ते खड्गं खेटकं पाशमेके रत्नैश्चित्रं चांकुशं नागकक्षाम् ॥ शरासनं पाशुपतं तथास्त्रं दंडं च खट्वांगमथापरे च ॥ १९ ॥ तंत्रीं च घंटां विपुलं च शूलं तथापरं डाम रुकं च दिव्यम् ॥ वज्रं गदां टंकमेकं च दीप्तं समुद्गरं हस्तमथास्य शंभोः ॥२०॥ वरदाभयहस्तं च वरेण्यं परमेश्वरम् ॥ भावयेत्पूजयेच्चापि वह्नौ होमं च कारयेत् ॥२१॥ होमश्च पूर्ववत्सर्वो मंत्रभेदश्च कीर्तितः ॥ अष्टपुष्पादि गंधादि पूजास्तुतिनिवेदनम् ॥ २२ ॥ अंतर्बलिं च कुंडस्य वाह्नेयेन विधानतः ॥ मंडलं विधिना कृत्वा मंत्रैरेतैर्यथाक्रमम् ॥ २३ ॥

स्मृत्वा भ्रूमध्ये दीपशिखावत्प्रभुं चिंतयेदिति शेषः ॥ १२ ॥ ध्यानप्रकारमाह—शांत्येत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ खेटकं चर्मेत्यर्थः ॥ १९ ॥ समुद्गरं हस्तं तद्युक्तंहस्तमित्यर्थः ॥ २० ॥ वामाष्टहस्तायुधान्युक्त्वाऽवशिष्टहस्तमाह—वरदाभयहस्तमिति ॥ २१ ॥ २२ ॥ कुंडस्यांतर्बलिं होमं वाह्नेयेन वह्निपुराणोक्तेन विधा नतः कुर्यादिति शेषः । वहिर्बलिविधिं कथयति—मंडलमित्यादिना ॥ २३ ॥

॥२४॥२५॥२६॥ लिंगार्चनमाहात्म्यं कथयति—स्थंडिलादित्यादिना ॥२७–२९॥ वर्षकोटिशतेन असंख्यकालेनापि वक्तुमिति शेषः । न शक्यत इत्यग्रिमेणान्वयः ॥३०॥ अचिंत्यविभवं शांतमष्टादशभुजं प्रभुम् । अघोरेशं नीलवर्णं हृदयाब्जे विचिंतये ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां षड्विंशतितमोऽध्यायः ॥२६॥ सप्तविंशे महेशेन तुष्टेन मनवे पुरा । प्रोक्तो जयाभिषेकोऽत्र विस्तराद्वर्ण्यतेऽद्भुतः ॥ ऋषयः पूर्वोक्तं प्रशस्य जयाभिषेकं षोडशविधं महादानं चापृच्छन्—प्रभाव इत्यादिना ॥१॥

रुद्रेभ्यो मातृगणेभ्यो यक्षेभ्योऽसुरेभ्यो ग्रहेभ्यो राक्षसेभ्यो नागेभ्यो नक्षत्रेभ्यो विश्वगणेभ्यः क्षेत्रपालेभ्यः अथ वायुवरुणदिग्भागे क्षेत्रपाल. बलिं क्षिपेत् ॥ अर्घ्यं गंधं पुष्पं च धूपं दीपं च सुव्रताः ॥ नैवेद्यं मुखवासादि निवेद्यं वै यथाविधि ॥ २४ ॥ विज्ञाप्यैवं .विसृज्याथ अष्ट पुष्पैश्च पूजनम् ॥. सर्वसामान्यमेतद्धि पूजायां मुनिपुंगवाः ॥ २५ ॥ एवं संक्षेपतः प्रोक्तमघोरार्चादि सुव्रत ॥ अघोरार्चाविधानं च लिंगे वा स्थंडिलेऽपि वा ॥ २६ ॥ स्थंडिलात्कोटिगुणितं लिंगार्चनमनुत्तमम् ॥ लिंगार्चनरतो विप्रो महापातकसंभवैः ॥ २७ ॥ पापैरपि न लिप्येत पद्मपत्रमिवांभसा ॥ लिंगस्य दर्शनं पुण्यं दर्शनात्स्पर्शनं वरम् ॥ २८ ॥ अर्चनादधिकं नास्ति ब्रह्मपुत्र न संशयः ॥ एवं संक्षेपतः प्रोक्तमघोरार्चनमुत्तमम् ॥ २९ ॥ वर्षकोटिशतेनापि विस्तरेण न शक्यते ॥ ३० ॥ इति श्रीलिंगमहापुराणे उत्तरभागे · षड्विंशतितमोऽध्यायः ॥ २६ ॥ ऋषय ऊचुः ॥ प्रभावो नंदिनश्चैव लिंगपूजाफलं श्रुतम् ॥ श्रुतिभिः संमितं सर्वं रोमहर्षण सुव्रत ॥ १ ॥ जयाभिषेक ईशेन कथितो मनवे पुरा ॥ हिताय मेरुशिखरे क्षत्रियाणां त्रिशूलिना ॥ २ ॥ तत्कथं षोडशविधं महादानं च शोभनम् ॥ वक्तुमर्हसि चास्माकं सूत बुद्धिमतांवर ॥ ३ ॥ सूत उवाच ॥ जीवच्छ्राद्धं पुरा कृत्वा मनुः स्वायंभुवः प्रभुः ॥ मेरुमासाद्य देवेशमस्तवीन्नीललोहितम् ॥ ४ ॥ तपसा च विनीताय प्रहृष्टः प्रददौ भवः ॥ दिव्यं दर्शनमीशानस्तेनापश्यत्तमव्ययम् ॥५॥ नत्वा संपूज्य विधिना कृतांजलिपुटः स्थितः ॥ हर्षगद्गदया वाचा प्रोवाच च ननाम च ॥ ६ ॥ देवदेव जगन्नाथ नमस्ते भुवनेश्वर ॥ जीवच्छ्राद्धं महादेव प्रसादेन विनिर्मितम् ॥ ७ ॥ पूजितश्च ततो देवो दृष्टश्चैव मयाधुना ॥ शक्राय कथितं पूर्वं धर्मकामार्थमोक्षदम् ॥८॥ जयाभिषेकं देवेश वक्तुमर्हसि मे प्रभो ॥ सूत उवाच ॥ तस्मै देवो महादेवो भगवान्नीललोहितः ॥ ९ ॥

॥ २ ॥ ३ ॥ सूतो मनुभवसंवादेन जयाभिषेकं वर्णयति—जीवच्छ्राद्धमित्यादिना ॥ ४ ॥ दिव्यं दर्शनं दिव्यचक्षुरित्यर्थः ॥ ५॥६॥ प्रसादेन भवत्प्रसादेनेत्यर्थः ॥७॥८॥९॥

॥ १० ॥ ११ ॥ राजसेनाधिपतिरिति शेषः । स्वपतिमभिषिच्यैव रणाजिरं योद्धुं गच्छेदित्यन्वयः । प्रपां पानीयशालां कूटं निश्चलस्थानमित्यर्थः । "कूटं यंत्रे नृपे राशौ निश्चले लोहमुद्गरे" इति विश्वः ॥ १२ ॥ ततस्तस्मिन्मंडपे सूत्रपातं रेखाकरणमित्यर्थः ॥ १३ ॥ आयव्ययसाधनमाह—सहस्राणामित्यादिना । तत्र सहस्राणां द्वयं शतानां चतुष्टयमेव शेषं शुभं तेषु उक्तशेषभागेषु कोष्ठं मध्यस्थानमुपसंहरेत्कुर्यादित्यग्रिमेणान्वयः ॥ १४ ॥ बाह्ये कोष्ठबाह्ये वीथ्यां समंतादेकं पदमुपसंहरेदुपकल्पयेदित्यर्थः ॥ १५ ॥ अंगसूत्राण्यवांतरसूत्राणीत्यर्थः ॥ १६ ॥ प्रागाद्यं दक्षिणाद्यं च यथा स्यात्तथा षट्त्रिंशत्तत्संख्या रेखाः क्रमात्संहरेत्कुर्यादित्यर्थः ॥ १७ ॥ मध्ये मध्यभागे नव पंक्तीर्हरेत्

जयाभिषेकमखिलमवदत्परमेश्वरः ॥ श्रीभगवानुवाच ॥ जयाभिषेकं वक्ष्यामि नृपाणां हितकाम्यया ॥ १० ॥ अपमृत्युजयार्थं च सर्वशत्रुजयाय च ॥ युद्धकाले तु संप्राप्ते कृत्वैवमभिषेचनम् ॥ ११ ॥ स्वपतिं चाभिषिच्यैव गच्छेद्योद्धुं रणाजिरे॥ विधिना मंडपं कृत्वा प्रपां वा कूटमेव वा ॥ १२ ॥ नवधा स्थापयेद्वह्निं ब्राह्मणो वेदपारगः ॥ ततः सर्वाभिषेकार्थं सूत्रपातं च कारयेत् ॥ १३ ॥ प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः ॥ सहस्राणां द्वयं तत्र शतानां च चतुष्टयम् ॥ १४ ॥ शेषमेव शुभं कोष्ठं तेषु कोष्ठं तु संहरेत् ॥ बाह्ये वीथ्यां पदं चैकं समंतादुपसंहरेत् ॥ १५ ॥ अंगसूत्राणि संगृह्य विधिना पृथगेव तु ॥ प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः ॥ १६ ॥ प्रागाद्यं दक्षिणाद्यं च षट्त्रिंशत्संहरेत्क्रमात् ॥ प्रागाद्याः पंक्तयः सप्त दक्षिणाद्यास्तथा पुनः ॥ १७ ॥ तस्मादेकोनपंचाशत्पंक्तयः परिकीर्तिताः॥ नव पंक्तीर्हरेन्मध्ये गन्धगोमयवारिणा ॥१८॥ कमलं चालिखेत्तत्र हस्तमात्रेण शोभनम् ॥ अष्टपत्रं सितं वृत्तं कर्णिकाकेसरान्वितम्॥१९॥ अष्टांगुलप्रमाणेन कर्णिका हेमसन्निभा ॥ चतुरंगुलमानेन केसरस्थानमुच्यते ॥ २०.॥ धर्मो ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ॥ आग्नेयादिषु कोणेषु स्थापयेत्प्रणवेन तु ॥ २१ ॥ अव्यक्तादीनि वै दिक्षु गात्राकारेण वै न्यसेत् ॥ अव्यक्तं नियतः कालः काली चेति चतुष्टयम् ॥ २२ ॥ सितरक्तहिरण्याभकृष्णा धर्मादयः क्रमात् ॥ हंसाकारेण वै गात्रं हेमाभासनं सुव्रताः ॥२३॥ आधारशक्तिमध्ये तु कमलं सृष्टिकारणम् ॥ बिंदुमात्रं कलामध्ये नादाकारमतः परम् ॥ २४ ॥ नादोपरि शिवं ध्यायेदोंकाराख्यं जगद्गुरुम् ॥ मनोन्मनीं च पद्माभं महादेवं च भावयेत् ॥ २५ ॥

गृह्णीयादित्यर्थः । तत्र गंधगोमयवारिणा विलिप्येति शेषः । हस्तमात्रेण हस्तप्रमाणेन कमलं चालिखेदित्यग्रिमेणान्वयः ॥ १८ ॥ कमलविधानमाह—अष्टपत्रमित्यादिना ॥१९॥ ॥ २० ॥ २१ ॥ गात्राकारेण बाह्यपत्राकारेणत्यर्थः ॥ २२ ॥ धर्मादयः क्रमात् सितरक्तहिरण्याभकृष्णाः हेमाभासेन हंसाकारेण वै गात्रं कल्पयेदिति शेषः ॥ २३ ॥ ॥ २४ ॥ मनोन्मनीं महादेवं च पद्माभं भावयेदित्यन्वयः ॥ २५ ॥

॥ २६ ॥ प्रमथिनी वलप्रमथिनीत्यर्थः ॥ २७ ॥ नमोस्त्वित्ययं द्विपाच्छ्लोकः ॥ २८ ॥ तथा बलप्रमथनायेत्यर्थः ॥ २९ ॥ ३० ॥ प्रथमावरणमुक्त्वा द्वितीयावरणमाह– द्वितीयेत्यादिना ॥ ३१ ॥ पूर्वश्लोकोक्तषोडशात्रोक्तचतुर्विंशदग्रिमोक्ता ज्ञेयाः ॥ ३२ ॥ एतैर्वक्ष्यमाणदेवतामंत्रैरित्यर्थः । कलशस्थापनविधिं कथयति–अष्टोत्तरसहस्रमित्या दिना । अष्टारसंयुतमष्टकोणमष्टोत्तरसहस्रं तु पदं स्थानं कुर्यादिति शेषः ॥ ३३ ॥ तेषुतेषु प्रतिस्थानिष्वित्यर्थः । पृथक्त्वेन क्रमाच्छाल्यादिभिः कमलं कल्पयेदित्यन्वयः ॥ ३४ ॥ अथवा एतैः शाल्यादिभिः यथाकालमुपपन्नैरिति शेषः । विधानतः कल्पयेदित्यन्वयः ॥ ३५ ॥ तेषु कमलेष्वित्यर्थः । धान्यमानं कथयति–शालीनामित्या

वामादयः क्रमेणैव प्रागाद्याः केसरेषु वै॥वामा ज्येष्ठा तथा रौद्री काली विकरणी तथा॥२६॥बला प्रमथिनी देवी दमनी च यथाक्रमम् ॥ वामदेवादिभिः सार्धं प्रणवेनैव विन्यसेत्॥२७॥नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने॥२८॥रुद्राय कालरूपाय कलाविकरणाय च॥ बलाय च तथा सर्वभूतस्य दमनाय च ॥ २९ ॥ मनोन्मनाय देवाय मनोन्मन्यै नमोनमः ॥ मंत्रैरेतैर्यथान्यायं पूजयेत्परिमंडलम्॥३० ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ द्वितीयावरणे चैव शक्तयः षोडशैव तु ॥ ३१ ॥ तृतीयावरणे चैव चतुर्विंशदनुक्रमात् ॥ पिशाच वीथिर्वै मध्ये नाभिवीथिः समंततः ॥ ३२ ॥ मंत्रैरेतैर्यथान्यायं पिशाचानां प्रकीर्तिता ॥ अष्टोत्तरसहस्रं तु पदमष्टारसंयुतम् ॥ ३३ ॥ तेषुतेषु पृथक्त्वेन पदेषु कमलं क्रमात् ॥ कल्पयेच्छालिनीवारगोधूमैश्च यवादिभिः ॥ ३४ ॥ तंडुलैश्च तिलैर्वाथ गौरसर्षपसंयुतैः ॥ अथवा कल्पयेदेतैर्यथाकालं विधानतः ॥ ३५ ॥ अष्टपत्रं लिखेत्तेषु कर्णिकाकेसरान्वितम् ॥ शालीनामाढकं प्रोक्तं कमलानां पृथक् पृथक् ॥ ३६ ॥ तंडुलानां तदर्धं स्यात्तदर्धं च यवादयः ॥ द्रोणं प्रधानकुंभस्य तदर्धं तंडुलाः स्मृताः ॥ ३७ ॥ तिलानामाढकं मध्ये यवानां च तदर्धकम् ॥ अथांभसा समभ्युक्ष्य कमलं प्रणवेन तु ॥ ३८ ॥ तेषु सर्वेषु विधिना प्रणवं विन्यसेत्क्रमात् ॥ एवं समाप्य चाभ्युक्ष्य पदसाहस्रमुत्तमम् ॥ ३९ ॥ कलशानां सहस्राणि हैमानि च शुभानि च ॥ उक्तलक्षणयुक्तानि कारयेद्राजतानि वा ॥ ४० ॥ ताम्रजानि यथान्यायं प्रणवेनार्घ्यवारिणा ॥ द्वादशांगुलविस्तारमुदरे समुदाहृतम् ॥ ४१ ॥

दिना । कमलानां पृथक्पृथक्प्रत्येकं शालीनामाढकं प्रोक्तमित्यन्वयः ॥ ३६ ॥ तंडुलानां तदर्धं शाल्यर्धमित्यर्थः । प्रधानकुंभस्य चतुर्गुणमाह–द्रोणमित्यादिना ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ अत्राष्टाधिकसहस्रस्यैव विधानाद्बहुवचनम् "जात्याख्यायामेकस्मिन्" इति सूत्रविहितं बोध्यम् ॥ ४० ॥ प्रणवेन अर्घ्यवारिणा सुगंधोदकेन प्रोक्षये दिति शेषः । कलशमानं कथयति–द्वादशांगुलमित्यादिना ॥ ४१ ॥

वर्तितं वृत्तमित्यर्थः ॥ ४२ ॥ ४३ ॥ यवमात्रांतरं यवप्रमाणांतरमित्यर्थः ॥ ४४ ॥ शिवकुंभाढ्यं शिवकुंभसमृद्धमित्यर्थः । वर्धनीं खड्गाकारां तदुक्तमाग्नेये " वर्धनीं खड्गरूपिणीम् " इति ॥ ४५ ॥ मध्ये पद्मं यस्य स मध्यपद्मः कुंभस्तस्य मध्ये तु सकूर्चं साक्षतं यथा स्यात्तथा वस्त्रयुग्मेन क्रमादावेष्ट्य हैमेन चित्ररत्नेन कमलेन तु सहस्रकलशं पृथक् प्रच्छादयेत्यग्रिमस्थैरन्वयः ॥ ४६ ॥ शिवकुंभे गायत्र्या . रुद्रगायत्र्या सह प्रणवेन शिवं स्थाप्य संस्थाप्येत्यर्थः ॥४७॥४८ ॥ देवीं गौरीमित्यर्थः ॥४९॥५०॥ वामाद्याः

वर्तितं तु तदर्धेन नाभिस्तस्य विधीयते ॥ कंठं तु द्व्यंगुलोत्सेधं विस्तरं चतुरंगुलम् ॥ ४२ ॥ ओष्ठं च द्व्यंगुलोत्सेधं निर्गमं द्व्यंगुलं स्मृतम् ॥ तत्तद्वै द्विगुणं दिव्यं शिवकुंभे प्रकीर्तितम् ॥ ४३ ॥ यवमात्रांतरं सम्यक्तंतुना वेष्टयेद्धि वै ॥ अवगुंठ्य तथाभ्युक्ष्य कुशोपरि यथाविधि ॥ ४४ ॥ पूर्ववत्प्रणवेनैव पूरयेद्गंधवारिणा ॥ स्थापयेच्छिवकुंभाढ्यं वर्धनीं च विधानतः ॥ ४५ ॥ मध्यपद्मस्य मध्ये तु सकूर्चं साक्षतं क्रमात् ॥ आवेष्ट्य वस्त्रयुग्मेन प्रच्छाद्य कमलेन तु ॥ ४६ ॥ हैमेन चित्ररत्नेन सहस्रकलशं पृथक् ॥ शिवकुंभे शिवं स्थाप्य गायत्र्या प्रणवेन च ॥ ४७ ॥ विद्महे पुरुषायैव महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ४८ ॥ मंत्रेणानेन रुद्रस्य सान्निध्यं सर्वदा स्मृतम् ॥ वर्धन्यां देविगायत्र्या देवीं संस्थाप्य पूजयेत् ॥ ४९ ॥ गणांबिकायै विद्महे महातपायै धीमहि ॥ तन्नो गौरी प्रचोदयात् ॥५०॥ प्रथमावरणे चैव वामाद्याः परिकीर्तिताः ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ५१ ॥ शक्तयः षोडशैवात्र पूर्वाद्यंतेषु सुव्रत ॥ ऐंद्रव्यूहस्य मध्ये तु सुभद्रां स्थाप्य पूजयेत् ॥ ५२ ॥ भद्रामाग्नेयचक्रे तु याम्ये तु कनकांडजाम् ॥ अंबिकां नैर्ऋते व्यूहे मध्यकुंभे तु पूजयेत् ॥ ५३ ॥ श्रीदेवीं वारुणे भागे वागीशां वायुगोचरे ॥ गोमुखीं सौम्यभागे तु मध्यकुंभे तु पूजयेत् ॥ ५४ ॥ रुद्रव्यूहस्य मध्ये तु भद्रकर्णां समर्चयेत् ॥ ऐंद्राग्निविदिशोर्मध्ये पूजयेदणिमां शुभाम् ॥ ५५ ॥ याम्यपावकयोर्मध्ये लघिमां कमले न्यसेत् ॥ राक्षसांतकयोर्मध्ये महिमां मध्यतो यजेत् ॥ ५६ ॥ वरुणासुरयोर्मध्ये प्राप्तिं वै मध्यतो यजेत् ॥ वरुणानिलयोर्मध्ये प्राकाम्यं कमले न्यसेत् ॥५७॥ वित्तेशानिलयोर्मध्ये ईशित्वं स्थाप्य पूजयेत् ॥ वित्तेशेशानयोर्मध्ये वशित्वं स्थाप्य पूजयेत् ॥ ५८ ॥

परिकीर्तिताः प्रथमोक्ता इत्यर्थः ॥ ५१ ॥ तेषु शक्तिस्थानेषु पूर्वाद्यं पूर्वप्रभृति यथा स्यात्तथा पूजयेदित्यनुषंगः । षोडशशक्तिपूजां पार्थक्येन कथयति—ऐंद्रव्यूहस्येत्यादिना ॥ ५२ ॥ ५३ ॥ ५४ ॥ रुद्रव्यूहस्य मध्ये ऐशानदिग्भाग इत्यर्थः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

॥ ५९ ॥ प्रधानकलशेषु अष्टदिक्पालकलशेष्वित्यर्थः । व्यूहमध्ये तु पूर्ववद्द्वितीयव्यूहवत्षोडशशक्तीः पूजयेदित्यन्वयः ॥ ६० ॥ अन्या अष्टशक्तीः कथयति–दीक्षामिति । पूजयेदित्यनुषंगः ॥ ६१ ॥ अथ चतुर्विंशच्छक्तिपूजनानंतरं नंदं नंदार्यीं चातः परं पितामहं पितामहार्यीं च पूर्वाद्यं यथा स्यात्तथा विधिना स्थाप्य पूजयेदित्यन्वयः॥६२ ॥ मुख्यावरणपूजामुक्त्वा सौभद्राद्याष्टव्यूहावरणपूजां कथयति–सौभद्रमित्यादिना । सौभद्रं सुभद्रादेवताव्यूहमासाद्य क्रमात्प्रथमावरणे शक्त्यष्टकं प्रागाद्यं क्रमादास्थाप्येति

ऐंद्रेशेशानयोर्मध्ये यजेत्कामावसायकम् ॥ द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ॥ ५९ ॥ शक्तयस्तु चतुर्विंशत्प्रधानकलशेषु च ॥ पूजयेद्व्यूहमध्ये तु पूर्ववद्विधिपूर्वकम् ॥ ६० ॥ दीक्षां दीक्षायिकां चैव चंडां चंडांशुनायिकाम् ॥ सुमतिं सुमत्यार्यीं च गोपां गोपायिकां तथा ॥ ६१ ॥ अथ नंदं च नंदार्यीं पितामहमतः परम् ॥ पितामहार्यीं पूर्वाद्यं विधिना स्थाप्य पूजयेत् ॥ ६२ ॥ एवं संपूज्य विधिना तृतीयावरणं शुभम् ॥ सौभद्रं व्यूहमासाद्य प्रथमावरणे क्रमात्॥६३॥प्रागाद्यं विधिना स्थाप्य शक्त्यष्टकमनुक्रमात् ॥ द्वितीयावरणे चैव प्रागाद्यं शृणु शक्तयः ॥६४॥ षोडशैव तु अभ्यर्च्य पद्ममुद्रां तु दर्शयेत् ॥ बिंदुका बिंदुगर्भा च नादिनी नादगर्भजा ॥ ६५ ॥ शक्तिका शक्तिगर्भा च परा चैव परापरा ॥ प्रथमावरणेऽष्टौ च शक्तयः परिकीर्तिताः ॥ ६६ ॥ चंडा चंडमुखी चैव चंडवेगा मनोजवा ॥ चंडाक्षी चंडनिर्घोषा भृकुटी चंडनायिका ॥ ६७॥ मनोत्सेधा मनोध्यक्षा मानसी माननायिका ॥ मनोहरी मनोह्लादी मनःप्रीतिर्महेश्वरी ॥६८॥ द्वितीयावरणे चैव षोडशैव प्रकीर्तिताः ॥ सौभद्रः कथितो व्यूहो भद्रं व्यूहं शृणुष्व मे ॥ ६९ ॥ ऐंद्री हौताशनी याम्या नैर्ऋती वारुणी तथा ॥ वायव्या चैव कौबेरी ऐशानी चाष्टशक्तयः ॥ ७० ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ हरिणी च सुवर्णा च कांचनी हाटकी तथा ॥ ७१ ॥ रुक्मिणी सत्यभामा च सुभगा जंबुनायिका ॥ वाग्भवा वाक्पथा वाणी भीमा चित्ररथा सुधीः ॥ ७२ ॥ वेदमाता हिरण्याक्षी द्वितीयावरणे स्मृता ॥ भद्राख्यः कथितो व्यूहः कनकाख्यं शृणुष्व मे ॥ ७३ ॥ वज्रं शक्तिं च दंडं च खड्गं पाशं ध्वजं तथा ॥ गदां त्रिशूलं क्रमशः प्रथमावरणे स्मृताः ॥ ७४ ॥ बुद्धा प्रबुद्धा चंडा च मुंडा चैव कपालिनी ॥ मृत्युहंत्री विरूपाक्षी कपर्दा कमलासना ॥ ७५ ॥ दंष्ट्रिणी रंगिणी चैव लंबाक्षी कंकभूषणी ॥ संभावा भाविनी चैव षोडशैव प्रकीर्तिताः ॥ ७६ ॥

द्वितीयस्यैरन्वयः ॥ ६३ ॥ द्वितीयावरणे चैव षोडशैव तु प्रागाद्यम् अभ्यर्च्य पद्ममुद्रां तु दर्शयेच्छक्तयः शक्तीः शृण्वित्यग्रिमस्यैरन्वयः ॥६४ ॥ शक्तीः कथयति–बिंदुकेत्यादिना ॥६५॥६६॥६७॥६८॥६९॥७०॥७१॥७२॥कनकाख्यं कनकांडजाव्यूहमित्यर्थः॥७३॥क्रमशः देवता इति शेषः। प्रथमावरणे स्मृता इत्यन्वयः ॥७४॥७५॥७६॥

॥ ७७ ॥ ७८ ॥ ७९ ॥८० ॥ सुव्रतेति मनुसंबोधनम् ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ वरप्रदेति जयंतीविशेषणम् ॥ ८७ ॥ महोच्छुष्मेति पयस्विनी

कथितः कनकव्यूहो ह्यम्बिकाख्यं शृणुष्व मे ॥ खेचरी चात्मना सा च भवानी वह्निरूपिणी ॥ ७७ ॥ वह्निनी वह्निनाभा च महिमामृत लालसा ॥ प्रथमावरणे चाष्टौ शक्तयः सर्वसंमताः ॥ ७८ ॥ क्षमा च शिखरा देवी ऋतुरत्ना शिला तथा ॥ छाया भूतपनी धन्या इंद्र माता च वैष्णवी॥७९॥तृष्णा रागवती मोहा कामकोपा महोत्कटा ॥ इंद्रा च बधिरा देवी षोडशैताः प्रकीर्तिताः॥८०॥कथितश्चांबिका व्यूहः श्रीव्यूहं शृणु सुव्रत ॥ स्पर्शा स्पर्शवती गंधा प्राणापाना समानिका ॥ ८१ ॥ उदाना व्याननामा च प्रथमावरणे स्मृताः ॥ तमोहता प्रभामोघा तेजिनी दहिनी तथा ॥ ८२ ॥ भीमास्या जालिनी चोषा शोषिणी रुद्रनायिका ॥ वीरभद्रा गणाध्यक्षा चंद्रहासा च गह्वरा ॥ ८३ ॥ गणमातांबिका चैव शक्तयः सर्वसंमताः ॥ द्वितीयावरणे प्रोक्ताः षोडशैव यथाक्रमात् ॥ ८४ ॥ श्रीव्यूहः कथितो भद्रं वागीशं शृणु सुव्रत ॥ धारा वारिधरा चैव वह्निकी नाशकी तथा ॥ ८५ ॥ मर्त्यातीता महामाया वज्रिणी कामधेनुका ॥ प्रथमावरणेऽप्येवं शक्तयोऽष्टौ प्रकीर्तिताः ॥ ८६ ॥ पयोष्णी वारुणी शांता जयंती च वरप्रदा ॥ प्लाविनी जलमाता च पयोमाता महांबिका ॥ ८७ ॥ रक्ता कराली चंडाक्षी महोच्छुष्मा पयस्विनी ॥ माया विद्येश्वरी काली कालिका च यथाक्रमम् ॥ ८८ ॥ षोडशैव समाख्याताः शक्तयः सर्वसंमताः ॥ व्यूहो वागीश्वरः प्रोक्तो गोमुखो व्यूह उच्यते ॥८९॥ शंकिनी हालिनी चैव लंकावर्णा च कल्किनी ॥ यक्षिणी मालिनी चैव वमनी च रसात्मनी ॥ ९० ॥ प्रथमावरणे चैव शक्तयोऽष्टौ प्रकीर्तिताः ॥ चंडा घंटा महानादा सुमुखी दुर्मुखी बला ॥ ९१ ॥ रेवती प्रथमा घोरा सैन्या लीना महाबला ॥ जया च विजया चैव अपरा चापराजिता ॥ ९२ ॥ द्वितीयावरणे चैव शक्तयः षोडशैव तु ॥ कथितो गोमुखीव्यूहो भद्रकर्णीं शृणुष्व मे ॥ ९३ ॥ महाजया विरूपाक्षी शुक्लाभाकाशमातृका ॥ संहारी जातहारी च दंष्ट्राली शुष्करेवती ॥ ९४ ॥ प्रथमावरणे चाष्टौ शक्तयः परिकीर्तिताः ॥ पिपीलिका पुण्यहारी अशनी सर्वहारिणी ॥ ९५ ॥ भद्रहा विश्वहारी च हिमा योगेश्वरी तथा॥छिद्रा भानुमती छिद्रा सैंहिकी सुरभी समा ॥ ९६ ॥

विशेषणम् ॥ ८८ ॥ ८९ ॥ लंकावर्णेत्येका ॥ ९० ॥ ९१ ॥ ९२ ॥ भद्रकर्णी भद्रकर्णाव्यूहमित्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

सर्वभव्या च वेगाख्या शक्तयः षोडशैव तु ॥ महाव्यूहाष्टकं प्रोक्तमुपव्यूहाष्टकं शृणु ॥ ९७ ॥ अणिमाव्यूहमावेष्ट्य प्रथमावरणे क्रमात् ॥ ऐंद्री तु चित्रभानुश्च वारुणी दंडिरेव च ॥ ९८ ॥ प्राणरूपी तथा हंसः स्वात्मशक्तिः पितामहः ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ९९ ॥ केशवो भगवान् रुद्रश्चंद्रमा भास्करस्तथा ॥ महात्मा च तथा ह्यात्मा ह्यंतरात्मा महेश्वरः ॥ १०० ॥ परमात्मा ह्यणुर्जीवः पिंगलः पुरुषः पशुः ॥ भोक्ता भूतपतिर्भीमो द्वितीयावरणे स्मृताः ॥ १ ॥ कथितश्चाणिमाव्यूहो लघिमाख्यं वदामि ते ॥ श्रीकंठोंतश्च सूक्ष्मश्च त्रिमूर्तिः शशकस्तथा॥२॥अमरेशः स्थितीशश्च दारतश्च तथाष्टमः ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु॥३॥ स्थाणुर्हरश्च दंडेशो भौक्तीशः सुरपुंगवः ॥ सद्योजातोऽनुग्रहेशः क्रूरसेनः सुरेश्वरः ॥ ४ ॥ क्रोधीशश्च तथा चंडः प्रचंडः शिव एव च ॥ एकरुद्रस्तथा कूर्मश्चैकनेत्रश्चतुर्मुखः ॥ ५ ॥ द्वितीयावरणे रुद्राः षोडशैव प्रकीर्तिताः ॥ कथितो लघिमाव्यूहो महिमां शृणु सुव्रत ॥ ६ ॥ अजेशः क्षेमरुद्रश्च सोमोऽशो लांगली तथा ॥ दंडारुश्चार्धनारी च एकांतश्चांत एव च ॥ ७ ॥ पाली भुजंगनामा च पिनाकी खड्गिरेव च ॥ काम ईशस्तथा श्वेतो भृगुः षोडश वै स्मृताः ॥ ८ ॥ कथितो महिमाव्यूहः प्राप्तिव्यूहं शृणुष्व मे ॥ संवर्तो लकुलीशश्च वाडवो हस्तिरेव च ॥ ९ ॥ चंडयक्षो गणपतिर्महात्मा भृगुजाऽष्टमः ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ११० ॥ त्रिविक्रमो महाजिह्वो ऋक्षः श्रीभद्र एव च ॥ महादेवो दधीचश्च कुमारश्च परावरः ॥ ११ ॥ महादंष्ट्रः करालश्च सूचकश्च सुवर्धनः ॥ महाध्वांक्षो महानंदो दंडी गोपालकस्तथा॥१२॥प्राप्तिव्यूहः समाख्यातः प्राकाम्यं शृणु सुव्रत॥पुष्पदंतो महानागो विपुलानंदकारकः॥१३॥ शुक्लो विशालः कमलो बिल्वश्चारुण एव च ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १४ ॥ रातिप्रियः सुरेशानश्चित्रांगश्च सुदुर्जयः ॥ विनायकः क्षेत्रपालो महामोहश्च जंगलः ॥ १५ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ उत्तमश्चासौ उदुंबरश्च उत्तमोदुंबरः ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ छेदकेति बाहुविशेषणम् ॥ २५ ॥ २६ ॥ २७ ॥२८॥

वत्सपुत्रो महापुत्रो ग्रामदेशाधिपस्तथा ॥ सर्वावस्थाधिपो देवो मेघनादः प्रचंडकः ॥ १६ ॥ कालदूतश्च कथितो द्वितीयावरणं स्मृतम् ॥ प्राकाम्यः कथितो व्यूह ऐश्वर्यं कथयामि ते ॥ १७ ॥ मंगला चर्चिका चैव योगेशा हरदायिका ॥ भासुरा सुरमाता च सुंदरी मातृका ष्टमी ॥ १८ ॥ प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥ गणाधिपश्च मंत्रज्ञो वरदेवः षडाननः ॥ १९ ॥ विदग्धश्च विचित्रश्च अमोघो मोघ एव च ॥ अश्वी रुद्रश्च सोमेशश्चोत्तमोदुंबरस्तथा ॥ १२० ॥ नारासिंहश्च विजयस्तथा इंद्रगुहः प्रभुः ॥ अपांपतिश्च विधिना द्विती यावरणं स्मृतम् ॥ २१ ॥ ऐश्वर्यः कथितो व्यूहो वशित्वं पुनरुच्यते ॥ गगनो भवनश्चैव विजयो ह्यजयस्तथा ॥ २२ ॥ महाजयस्तथां गारो व्यंगारश्च महायशाः॥प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु॥२३॥सुंदरश्च प्रचंडेशो महावर्णो महासुरः॥महारोमा महागर्भः प्रथमः कनकस्तथा ॥ २४ ॥ खरजो गरुडश्चैव मेघनादोऽथ गर्जकः ॥ गजश्च च्छेदको बाहुस्त्रिशिखो मारिरेव च ॥ २५ ॥ वशित्वं कथितो व्यूहः शृणु कामावसायिकम् ॥ विनादो विकटश्चैव वसंतोऽभय एव च ॥ २६ ॥ विद्युन्महाबलश्चैव कमलो दमनस्तथा ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २७ ॥ धर्मश्चातिबलः सर्पो महाकायो महाहनुः ॥ सबलश्चैव भस्मांगी दुर्जयो दुरतिक्रमः ॥ २८ ॥ वेतालो रौरवश्चैव दुर्धरो भोग एव च ॥ वज्रः कालाग्निरुद्रश्च सद्योनादो महागुहः ॥ २९ ॥ द्वितीयावरणं प्रोक्तं व्यूहश्चैवावसायिकः ॥ कथितः षोडशो व्यूहो द्वितीयावरणं शृणु ॥ १३० ॥ द्वितीयावरणे चैव दक्षव्यूहे च शक्तयः ॥ प्रथमावरणे चाष्टौ बाह्ये षोडश एव च ॥ ३१ ॥ मनोहरा महानादा चित्रा चित्ररथा तथा ॥ रोहिणी चैव चित्रांगी चित्ररेखा विचित्रिका ॥ ३२ ॥ प्रथमावरणे प्रोक्ता द्वितीयावरणं शृणु ॥ चित्रा विचित्ररूपा च शुभदा कामदा शुभा ॥ ३३॥ क्रूरा च पिंगला देवी खड्गिका लंबिकासती ॥ दंष्ट्राली राक्षसी- ध्वंसी लोलुपा लोहितामुखी ॥ ३४ ॥ द्वितीयावरणे प्रोक्ताः षोडशैव समासतः ॥ दक्षव्यूहः समाख्यातो दाक्षंव्यूहं शृणुष्व मे ॥ ३५ ॥

॥ २९ ॥ षोडश व्यूहाः यस्मिंस्तत्षोडशव्यूहमावरणं कथितं प्रोक्तमित्यर्थः ॥ १३० ॥३१॥ ३२॥ ३३ ॥ लोहितमामुखमीषन्मुखं यस्याः सा लोहितामुखी ॥ ३४॥३५॥

सर्वासु सती सर्वासती ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥ मालानां पुष्पमालानां समूहो मालं माल्यमंशुकं यस्याः सा मालांशुका ॥ ४२ ॥ ४३ ॥ ४४ ॥

सर्वासती विश्वरूपा लंपटा चामिषप्रिया ॥ दीर्घदंष्ट्रा च वक्रा च लंबोष्ठी प्राणहारिणी ॥ ३६ ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ गजकर्णाश्वकर्णा च महाकाली सुभीषणा ॥३७॥ वातवेगरवा घोरा घनाघनरवा तथा ॥ वरघोषा महावर्णा सुघंटा घंटिका तथा ॥३८॥ घंटेश्वरी महाघोरा घोरा चैवातिघोरिका ॥ द्वितीयावरणे चैव षोडशैव प्रकीर्तिताः ॥ ३९ ॥ दाक्षव्यूहः समाख्यातश्चंडव्यूहं शृणुष्व मे ॥ अतिघंटा चातिघोरा कराला करभा तथा ॥ १४० ॥ विभूतिर्भोगदा कांतिः शंखिनी चाष्टमी स्मृता ॥ प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥ ४१ ॥ पत्रिणी चैव गांधारी योगमाता सुपीवरा ॥ रक्ता मालांशुका वीरा संहारी मांसहारिणी ॥ ४२ ॥ फलहारी जीवहारी स्वेच्छाहारी च तुंडिका ॥ रेवती रंगिणी संगा द्वितीये षोडशैव तु ॥ ४३ ॥ चंडव्यूहः समाख्यातश्चंडाव्यूहस्तथोच्यते ॥ चंडी चंडमुखी चंडा चंडवेगा महारवा ॥ ४४ ॥ भ्रुकुटी चंडभूश्चैव चंडरूपाष्टमी स्मृता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ४५ ॥ चंद्रघ्राणा बला चैव बलजिह्वा बलेश्वरी ॥ बलवेगा महाकाया महाकोपा च विद्युता ॥ ४६ ॥ कंकाली कलशी चैव विद्युता चंडघोषिका ॥ महाघोषा महारावा चंडभाऽनंगचंडिका ॥ ४७ ॥ चंडायाः कथितो व्यूहो हरव्यूहं शृणुष्व मे ॥ चंडाक्षी कामदा देवी सूकरी कुक्कुटानना ॥ ४८ ॥ गांधारी दुंदुभी दुर्गा सौमित्रा चाष्टमी स्मृता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥४९॥ मृतोद्भवा महालक्ष्मीर्वर्णदा जीवरक्षिणी ॥ हरिणी क्षीणजीवा च दंडवक्त्रा चतुर्भुजा ॥ १५० ॥ व्योमचारी व्योमरूपा व्योमव्यापी शुभोदया ॥ गृहचारी सुचारी च विषाहारी विषार्तिहा ॥ ५१ ॥ हरव्यूहः समाख्यातो हराया व्यूह उच्यते ॥ जंभाच्युता च कंकारी देविका दुर्धरावहा ॥ ५२ ॥ चंडिका चपला चेति प्रथमावरणे स्मृताः ॥ चंडिका चामरी चैव भंडिका च शुभानना ॥ ५३ ॥ पिंडिका मुंडिनी मुंडा शाकिनी शाङ्करी तथा ॥ कर्तरी भर्तरी चैव भागिनी यज्ञदायिनी॥५४॥ यमदंष्ट्रा महादंष्ट्रा कराला चेति शक्तयः ॥ हरायाः कथितो व्यूहः शौंडव्यूहं शृणुष्व मे॥५५॥विकराली कराली च कालजंघा यशस्विनी ॥ वेगा वेगवती यज्ञा वेदांगा चाष्टमी स्मृता ॥५६॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ देवीति कामदाविशेषणम् ॥ ४८ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ शुभेति सकुलाविशेषणम् ॥ १६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ देवीति कामसंदीपनीविशेषणम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ वज्रा शंखातिशंखा वा बला चैवाबला तथा ॥ ५७ ॥ अंजनी मोहिनी माया विकटांगी नली तथा ॥ गंडकी दंडकी घोणा शोणा सत्यवती तथा ॥ ५८ ॥ कल्लोला चेति क्रमशः षोडशैव यथाविधि ॥ शौंडव्यूहः समाख्यातः शौंडाया व्यूह उच्यते ॥ ५९ ॥ दंतुरा रौद्रभागा च अमृता सकुला शुभा ॥ चलजिह्वार्यनेत्रा च रूपिणी दारिका तथा ॥१६०॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ खादिका रूपनामा च संहारी च क्षमांतका ॥ ६१ ॥ कंडिनी पेषिणी चैव महात्रासा कृतांतिका ॥ दंडिनी किंकरी बिंबा वर्णिनी चामलांगिनी ॥ ६२ ॥ द्रविणी द्राविणी चैव शक्तयः षोडशैव तु ॥ कथितो हि मनोरम्यः शौंडाया व्यूह उत्तमः ॥ ६३ ॥ प्रथमाख्यं प्रवक्ष्यामि व्यूहं परमशोभनम् ॥ प्लाविनी प्लावनी शोभा मंदा चैव मदोत्कटा ॥ ६४ ॥ मंदाऽऽक्षेपा महादेवी प्रथमावरणे स्मृताः ॥ कामसंदीपिनी देवी अतिरूपा मनोहरा ॥ ६५ ॥ महावशा मदग्राहा विह्वला मदविह्वला ॥ अरुणा शोषणा दिव्या रेवती भांडनायिका ॥ ६६ ॥ स्तंभिनी घोररक्ताक्षी स्मररूपा सुघोषणा ॥ व्यूहः प्रथम आख्यातः स्वायंभुव यथा तथा ॥६७॥ कथितं प्रथमव्यूहं प्रवक्ष्यामि शृणुष्व मे ॥ घोरा घोरतराघोरा अतिघोराघनायिका ॥ ६८ ॥ धावनी क्रोष्टुका मुंडा चाष्टमी परिकीर्तिता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥६९॥ भीमा भीमतरा भीमा शस्ता चैव सुवर्तुला ॥ स्तंभिनी रोदनी रौद्रा रुद्रवत्यचला चला ॥७० ॥ महाबला महाशांतिः शाला शांता शिवाशिवा ॥ बृहत्कक्षा महानासा षोडशैव प्रकीर्तिताः ॥ ७१ ॥ प्रथमायाः समाख्यातो मन्मथव्यूह उच्यते ॥ तालकर्णी च बाला च कल्याणी कपिला शिवा ॥ ७२ ॥ इष्टिस्तुष्टिः प्रतिज्ञा च प्रथमावरणे स्मृताः ॥ ख्यातिः पुष्टिकरी तुष्टिर्जला चैव श्रुतिर्धृतिः ॥ ७३ ॥ कामदा शुभदा सौम्या तेजिनी कामतंत्रिका ॥ धर्मा धर्मवशा शीला पापहा धर्मवर्धिनी ॥ ७४ ॥ मन्मथः कथितो व्यूहो मन्मथायाः शृणुष्व मे ॥ धर्मरक्षा विधाना च धर्मा धर्मवती तथा ॥ ७५ ॥

शस्तेति सुवर्तुलाविशेषणम् ॥ १७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ १८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥८८॥ विप्राणामशेषासवः शोष्यंते कुंडलिनीरूपेणापीयंते वा शोष्यंते

सुमतिर्दुर्मतिर्मेधा विमला चाष्टमी स्मृता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ७६ ॥ शुद्धिर्बुद्धिर्द्युतिः कांतिर्वर्तुला मोहवर्धिनी ॥ बला चातिबला भीमा प्राणवृद्धिकरी तथा ॥७७॥ निर्लज्जा निर्घृणा मंदा सर्वपापक्षयंकरी ॥ कपिला चातिविधुरा षोडशैताः प्रकीर्तिताः॥७८॥मन्मथायिक उक्तस्ते भीमव्यूहं वदामि च॥ रक्ता चैव विरक्ता च उद्वेगा शोकवर्धिनी॥७९॥कामा तृष्णा क्षुधा मोहा चाष्टमी परिकीर्तिता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १८० ॥ जया निद्रा भयालस्या जलतृष्णोदरी दरा ॥ कृष्णा कृष्णांगिनी वृद्धा शुद्धोच्छिष्टाशनी वृषा ॥ ८१ ॥ कामना शोभिनी दग्धा दुःखदा सुखदावली ॥ भीमव्यूहः समाख्यातो भीमायीव्यूह उच्यते ॥ ८२ ॥ आनंदा च सुनंदा च महानंदा शुभंकरी ॥ वीतरागा महोत्साहा जितरागा मनोरथा ॥ ८३ ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ मनोन्मनी मनःक्षोभा मदोन्मत्ता मदाकुला ॥ ८४ ॥ मंदगर्भा महाभासा कामानंदा सुविह्वला ॥ महावेगा सुवेगा च महाभोगा क्षयावहा॥८५॥ क्रमिणी क्रामिणी वक्रा द्वितीयावरणे स्मृताः ॥ कथितं तव भीमायीव्यूहं परमशोभनम् ॥८६॥ शाकुनं कथयाम्यद्य स्वायंभुव मनोत्सुकम् ॥ योगा वेगा सुवेगा च अतिवेगा सुवासिनी ॥८७॥ देवी मनोरया वेगा जलावर्ता च धीमती ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥८८॥ रोधिनी क्षोभिणी बाला विप्राशेषासुशोषिणी ॥ विद्युता भासिनी देवी मनोवेगा च चापला ॥ ८९ ॥ विद्युज्जिह्वा महाजिह्वा भ्रुकुटीकुटिलानना ॥ फुल्लज्वाला महाज्वाला सुज्वाला च क्षयांतिका ॥ १९० ॥ शाकुनः कथितो व्यूहः शाकुनायाः शृणुष्व मे ॥ ज्वालिनी चैव भस्मांगी तथा भस्मांतगा तता ॥ ९१ ॥ भाविनी च प्रजा विद्या ख्यातिश्चैवाष्टमी स्मृता ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ९२ ॥ उल्लेखा च पताका च भोगाभोगवती खगा ॥ भोगभोगव्रता योगा भोगाख्या योगपारगा ॥ ९३ ॥ ऋद्धिर्बुद्धिर्धृतिः कांतिः स्मृतिः साक्षाच्छ्रुतिर्धरा ॥ शाकुनाया महाव्यूहः कथितः कामदायकः ॥ ९४ ॥ स्वायंभुव शृणु व्यूहं सुमत्याख्यं सुशोभनम् ॥ परेष्टा च परा दृष्टा ह्यमृता फलनाशिनी ॥ ९५ ॥

ज्ञानाग्निना शुष्काः क्रियंतेऽनया सा विप्राशेषासुशोषणी । देवीति भासिनीविशेषणम् ॥ ८९ ॥ १९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ २०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ दीपा चासौ अक्षमा च दीपाक्षमा अपरेति विशेषणम् । हृद्गता चासावमायिका

हिरण्याक्षी सुवर्णाक्षी देवी साक्षात्कपिंजला ॥ कामरेखा च कथितं प्रथमावरणं शृणु ॥ ९६ ॥ रत्नद्वीपा च सुद्वीपा रत्नदा रत्नमालिनी ॥ रत्नशोभा सुशोभा च महाशोभा महाद्युतिः ॥ ९७ ॥ शांबरी बंधुरा ग्रंथिः पादकर्णा करानना ॥ हयग्रीवा च जिह्वा च सर्वभासेति शक्तयः ॥ ९८ ॥ कथितः सुमतिव्यूहः सुमत्या व्यूह उच्यते ॥ सर्वाशी च महाभक्षा महादंष्ट्रातिरौरवा ॥ ९९ ॥ विस्फुलिंगा विलिंगा च कृतांता भास्करानना ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २०० ॥ रागा रंगवती श्रेष्ठा महाक्रोधा च रौरवा ॥ क्रोधनी वसनी चैव कलहा च महाबला ॥ १ ॥ कलंतिका चतुर्भेदा दुर्गा वै दुर्गमानिनी ॥ नाली सुनाली सौम्या च इत्येवं कथितं मया ॥ २ ॥ गोपव्यूहं वदाम्यत्र शृणु स्वायंभुवाविलम् ॥ पाटली पाटवी चैव पाटी विटिपिटा तथा ॥ ३ ॥ कंकटा सुपटा चैव प्रघटा च घटोद्भवा ॥ प्रथमावरणं चात्र भाषया कथितं मया ॥ ४ ॥ नादाक्षी नादरूपा च सर्वकारी गमाऽगमा ॥ अनुचारी सुचारी च चंडनाडी सुवाहिनी ॥ ५ ॥ सुयोगा च वियोगा च हंसाख्या च विलासिनी ॥ सर्वगा सुविचारा च वंचनी चेति शक्तयः ॥ ६ ॥ गोपव्यूहः समाख्यातो गोपायीव्यूह उच्यते ॥ भेदिनी च्छेदिनी चैव सर्वकारी क्षुधाशनी ॥ ७ ॥ उच्छुष्मा चैव गांधारी भस्माशी वडवानला ॥ प्रथमावरणं चैव द्वितीयावरणं शृणु ॥ ८ ॥ अंधा वाह्वासिनी बाला दीक्षपामा तथैव च ॥ अक्षा त्र्यक्षा च हृल्लेखा हृद्गता मायिकापरा ॥ ९ ॥ आमयासादिनी भिल्ली सह्यासह्या सरस्वती ॥ रुद्रशक्तिर्महाशक्तिर्महामोहा च गोनदी ॥ १० ॥ गोपायी कथितो व्यूहो नंदव्यूहं वदामि ते ॥ नंदिनी च निवृत्तिश्च प्रतिष्ठा च यथाक्रमम् ॥ ११ ॥ विद्यानासा खग्रासिनी चामुंडा प्रियदर्शिनी ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १२ ॥ गुह्या नारायणी मोहा प्रजा देवी च चक्रिणी ॥ कंकटा च तथा काली शिवाद्योपा ततः परम् ॥ १३ ॥ विरामा या च वागीशी वाहिनी भीषणी तथा ॥ सुगमा चैव निर्दिष्टा द्वितयावरणे स्मृता ॥ १४ ॥ नंदव्यूहो मया ख्यातो नंदाया व्यूह उच्यते ॥ विनायकी पूर्णिमा च रंकारी कुंडली तथा ॥ १५ ॥ इच्छा कपालिनी चैव द्वीपिनी च जयंतिका ॥ प्रथमावरणे चाष्टौ शक्तयः परिकीर्तिताः ॥ १६ ॥

च हृद्गतामायिका ॥ ९ ॥ सह्या सह्येत्येका ॥ २१० ॥ ११ ॥ विद्यानामेत्येका ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

॥ १७ ॥ साक्षाद्देवीति लंबोदरीविशेषणम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ देवीति पन्नगाविशेषणम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ द्विभुजेति ब्रह्मरूपिणी विशेषणम् ॥ २७ ॥ पुष्पमालिनीति गांधारीविशेषणम् ॥ २८ ॥ चत्वारिंशद्व्यूहावरणान्युक्त्वा देवतास्वरूपं कथयति–सर्वाश्चेत्यादिना । मुख्यावरणदेवताः ( ४८ ) व्यूहा

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ पावनी चांविका चैव सर्वात्मा पूतना तथा ॥ १७ ॥ छगली मोदिनी साक्षाद्देवी लंबोदरी तथा ॥ संहारी कालिनी चैव कुसुमा च यथाक्रमम् ॥ १८ ॥ शुक्रा तारा तथा ज्ञाना क्रिया गायत्रिका तथा ॥ सावित्री चोति विधिना द्वितीयावरणं स्मृतम् ॥ १९ ॥ नंदायाः कथितो व्यूहः पैतामहमतः परम् ॥ नंदिनी चैव फेत्कारी क्रोधा हंसा षडंगुला ॥ २२० ॥ आनंदा वसुदुर्गा च संहारा ह्यमृताष्टमी ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २१ ॥ कुलांतिकानला चैव प्रचंडा मर्दिनी तथा ॥ सर्वभूताभया चैव दया च वडवामुखी ॥ २२ ॥ लंपटा पन्नगा देवी कुसुमा विपुलांतका ॥ केदारा च तथा कूर्मा दुरिता मंदरोदरी ॥ २३ ॥ खड्गचक्रेतिविधिना द्वितीयावरणं स्मृतम् ॥ व्यूहः पैतामहः प्रोक्तो धर्मकामार्थमुक्तिदः॥२४॥पितामहाया व्यूहं च कथयामि शृणुष्व मे॥ वज्रा च नंदना शावाराविका रिपुभेदिनी ॥ २५ ॥ रूपा चतुर्था योगा च प्रथमावरणे स्मृताः ॥ भूता नादा महाबाला खर्परा च तथा परा॥२६॥ भस्मा कांता तथा वृष्टिर्द्विभुजा ब्रह्मरूपिणी ॥ सैह्या वैकारिका जाता कर्ममोटी तथापरा॥२७॥महामोहा महामाया गांधारी पुष्पमालिनी ॥ शब्दापी च महाघोषा षोडशैव तथांतिमे ॥ २८ ॥ सर्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ॥ पद्मशंखधराः शांता रक्तस्रग्वस्त्रभूषणाः ॥ २९ ॥ सर्वाभरणसंपूर्णा मुकुटाद्यैरलंकृताः ॥ मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः ॥ २३० ॥ विभूषिता गौरवर्णा ध्येया देव्यः पृथक्पृथक् ॥ एवं सहस्रकलशं ताम्रजं मृन्मयं तु वा ॥ ३१ ॥ पूर्वोक्तलक्षणैर्युक्तं रुद्रक्षेत्रे प्रतिष्ठितम् ॥ भवाद्यैर्विष्णुना प्रोक्तै र्नाम्नां चैव सहस्रकैः ॥ ३२ ॥ संपूज्य विन्यसेदग्रे सेचयेद्बाणविग्रहम् ॥ अभिषिच्य च विज्ञाप्य सेचयेत्पृथिवीपतिम् ॥ ३३ ॥ एवं सहस्रकलशं सर्वसिद्धिफलप्रदम् ॥ चत्वारिंशन्महाव्यूहं सर्वलक्षणलक्षितम् ॥ ३४ ॥

वरणदेवताः ( ९५२ ) एवं सहस्रं ज्ञेयम् ॥ २९ ॥ २३० ॥ अभिषेचनविधिं कथयति–एवमित्यादिना ॥ ३१ ॥ भवाद्यैर्विष्णुना प्रोक्तैरत्रैव पूर्वोक्तैरित्यर्थः ॥ ३२ ॥ बाणविग्रहं बाणलिंगमित्यर्थः ॥ ३३ ॥ एवं पूर्वोक्तप्रकारं सहस्रं कलशा यस्मिन् सहस्रकलशस्तमभिषेकं सर्वसिद्धिफलप्रदं कुर्यादिति शेषः ॥ ३४ ॥

विशेषविधिं कथयति—सर्वेषामित्यादिना । सर्वेषां सर्वकलशानां मध्ये पूर्ववत्पूर्वोक्तप्रमाणं कलशं मध्यकलशं प्रोक्तं कथितमित्यर्थः ॥ ३५ ॥ ३६ ॥ मध्यमभिषेकः क्षीरादिना विधीयत इति पूर्वस्थैरन्वयः । रुद्रस्याभिषेको रुद्राध्यायेन नृपते शृण्वित्यन्वयः ॥३७॥३८॥ अभिषेचितं मूर्धाभिषिक्तं राजानमनेनाघोरेण मंत्रेण सेचयेत् । अनेनाघहारिणा अघोरेण मंत्रेण च होमं कुर्यादिति शेषः ॥ ३९ ॥ देवकुंडे वा स्थंडिले घृतादिभिर्घृताक्तैरित्यर्थः । लाजशालिनीवारतंडुलैः सह समिदाज्यचरुमष्टोत्तरशतं हुत्वा प्रागाद्यं प्राङ्मुखं राजानमधिवासयेदित्यग्रिमेणान्वयः ॥ २४० ॥ पुण्याहं स्वस्ति रुद्राय वाचयित्वेति शेषः । हेमनिर्मितं कौतुकं कंकणं भसितं च मृणालेन सह गन्न इति शेषः ।

सर्वेषां कलशं प्रोक्तं पूर्ववद्धेमनिर्मितम् ॥ सर्वे गंधांबुसंपूर्णपंचरत्नसमन्विताः ॥३५॥ तथा कनकसंयुक्ता देवस्य घृतपूरिताः ॥ क्षीरेण वाथ दध्ना वा पंचगव्येन वा पुनः ॥ ३६ ॥ ब्रह्मकूर्चेन वा मध्यममभिषेको विधीयते ॥ रुद्राध्यायेन रुद्रस्य नृपतेः शृणु सत्तम ॥ ३७ ॥ अघो रेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥३८॥मंत्रेणानेन राजानं सेचयेदभिषेचितम् ॥ होमं च मंत्रेणानेन अघोरेणाघहारिणा॥३९॥प्रागाद्यं देवकुंडे वा स्थंडिले वा घृतादिभिः ॥ समिदाज्यचरुं लाजशालिनीवारतंडुलैः ॥२४०॥ अष्टोत्तरशतं हुत्वा राजानमधिवासयेत् ॥ पुण्याहं स्वस्ति रुद्राय कौतुकं हेमनिर्मितम् ॥ ४१ ॥ भसितं च मृणालेन बंधयेद्दक्षिणे करे॥ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ॥४२॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ॥ मंत्रेणानेन राजानं सेचयेद्वाथ होमयेत्॥४३॥ सर्वद्रव्याभिषेकं च होमद्रव्यैर्यथाक्रमम् ॥ प्रागाद्यं ब्रह्मभिः प्रोक्तं सर्वद्रव्यैर्यथाक्रमम् ॥ ४४ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ४५ ॥स्वाहांतं पुरुषेणैवं प्राक्कुण्डं होमयेद्द्विजः ॥ अघोरेण च याम्ये च होमयेत्कृष्णवाससा ॥ ४६॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः ॥ इत्याद्युक्तक्रमेणैव जुहुयात्पश्चिमे नरः ॥४७॥ सद्येन पश्चिमे होमः सर्वद्रव्यैर्यथाक्रमम् ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥ ४८ ॥

दक्षिणे करे बंधयेदित्यग्रिमेणान्वयः ॥ ४१ ॥ ४२ ॥ अथानंतरमनेन त्र्यंबकमंत्रेण राजानं सेचयेद्वा होमयेदित्यन्वयः ॥ ४३ ॥ यथाक्रमं होमद्रव्यैर्लाजादिभिः सर्वद्रव्याभिषेकं च कुर्यादिति शेषः । सर्वद्रव्यैः प्रागाद्यं यथाक्रमं हवनामिति शेषः । ब्रह्मभिः पंचब्रह्ममंत्रैः सह प्रोक्तमित्यन्वयः ॥ ४४ ॥ हवनविधिं कथयति—तत्पुरुषायेत्यादिना ॥ ४५ ॥ कृष्णवाससा कृष्णवस्त्राचार्येणेत्यर्थः ॥ ४६ ॥ ४७ ॥ ४८ ॥

॥ ४९ ॥ विदिग्घोमं कथयति–आग्नेय्यां चेत्यादिना । रौद्रेण रुद्रदेवताकेन "यो रुद्रो यो अग्नौ" इति मंत्रेण सह जातवेदस ऋचा होमयेदित्यन्वयः । नैर्ऋत्ये तद्दिशि पूर्ववत्सर्वैर्द्रव्यैः होमो विधीयते इत्यन्वयः । अत्र श्लोके मंत्रप्रतीकाधिक्यं ज्ञेयम् ॥ २५० ॥ अनेन पूर्वोक्तमंत्रेणेत्यर्थः ॥ ५१ ॥ ५२ ॥ यमयतीति यमः सर्वनियंता वायुस्तस्मै हिता यम्या वायव्येत्यर्थस्तस्यामीशानेन तन्मंत्रेण होमयेदित्यनुषंगः ॥ ५३ ॥ होममंत्रं कथयति–ईशानायेति ॥ ५४ ॥ प्रधानं मुख्यमित्यर्थः ॥ ५५ ॥ ५६ ॥ सामान्य

भवे भवेनाति भवे भवस्व मां भवोद्भवाय नमः ॥ स्वाहांतं जुहुयादग्नौ मंत्रेणानेन बुद्धिमान् ॥ ४९ ॥ आग्नेय्यां च विधानेन ऋचा रौद्रेण होमयेत्॥ जातवेदसे सुनवाम सोममित्यादिना ततः ॥ नैर्ऋते पूर्ववद्द्रव्यैः सर्वैर्होमो विधीयते॥२५०॥ मंत्रेणानेन दिव्येन सर्वसिद्धिकरेण च ॥ निमि निशि दिश स्वाहा खड्ग राक्षस भेदन ॥ ५१॥ रुधिराज्यार्द्र नैर्ऋत्यै स्वाहा नमः स्वधानमः ॥ यथेष्टं विधिना द्रव्यैर्मंत्रेणानेन होमयेत् ॥ ५२ ॥ यम्यां हि विविधैर्द्रव्यैरीशानेन द्विजोत्तमाः ॥ ईशान्यामथ पूर्वोक्तैर्द्रव्यैर्होममथाचरेत् ॥ ५३ ॥ ईशानाय कद्रुद्राय प्रचेतसे त्र्यंबकाय शर्वाय तन्नो रुद्रः प्रचोदयात्॥५४॥प्रधानं पूर्ववद्द्रव्यैरीशानेन द्विजोत्तमाः ॥ प्रतिद्रव्यं सहस्रेण जुहुयान्नृपसन्निधौ ॥५५॥ स्वयं वा जुहुयादग्नौ भूपतिः शिववत्सलः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ५६ ॥ प्रायश्चित्तमघोरेण शेषं सामान्यमाचरेत् ॥ कृताधिवासं राजानं शंखभेर्यादिनिस्वनैः ॥५७॥ जयशब्दरवैर्दिव्यैर्वेदघोषैः सुशोभनैः ॥ सेचयेत्कूर्चतोयेन प्रोक्षयेद्वा नृपोत्तमम् ॥ ५८ ॥ रुद्राध्यायेन विधिना रुद्रभस्मांगधारिणम् ॥ शंखचामरभेर्याद्यं छत्रं चंद्रसमप्रभम् ॥ ५९ ॥ शिबिकां वैजयंतीं च साधयेन्नृपतेः शुभाम् ॥ राज्याभिषेकयुक्ताय क्षत्रियायेश्वराय वा ॥ २६० ॥ नृपचिह्नानि नान्येषां क्षत्रियाणां विधीयते ॥ प्रमाणं चैव सर्वेषां द्वादशांगुलमुच्यते ॥६१॥ पलाशोदुंबराश्वत्थवटाः पूर्वादितः क्रमात् ॥ तोरणाद्यानि वै तत्र पट्टमात्रेण पट्टिकाः ॥ ६२ ॥ अष्टमांगुलसंयुक्तदर्भमालासमावृतम् ॥ दिग्ध्वजाष्टकसंयुक्तं द्वारकुंभैः सुशोभनम् ॥ ६३ ॥

मन्ययागतुल्यमित्यर्थः ॥ ५७ ॥ ५८ ॥ रुद्राः रुद्राक्षाः भस्म च अंगेषु धरति तच्छीलो रुद्रभस्मांगधारी तम् ॥ ५९ ॥ राज्याभिषेकयुक्ताय क्षत्रियाय वा ईश्वराय देवायेत्यर्थः ॥ २६० ॥ क्षत्रियाणां क्षत्रकुलोत्पन्नानामभिषेक इति शेषः । विधीयत इत्यन्वयः । सर्वेषां वक्ष्यमाणपलाशादिशाखानामित्यर्थः ॥ ६१ ॥ पूर्वादितः क्रमात् पलाशोदुंबराश्वत्थवटास्तच्छाखा इत्यर्थः । बंधयेदिति शेषः । तत्राभिषेकमंडपे तोरणाद्यानि पट्टिका वै पट्टमात्रेण दुकूलवस्त्रेणैव कुर्यादिति शेषः ॥ ६२ ॥ ६३ ॥

हेमतोरणकुंभैश्च भूषितं मंडपं कृत्वेति शेषः । नृपं स्नापयेदित्यन्वयः । समासीनं नृपं सर्वोपरि शिवकुंभेन सेचयेदित्यन्वयः ॥ ६४ ॥ सेचनमंत्रान् कथयति—तन्महेशायेत्यादिना ॥ ६५ ॥ गौरिगीतया गौरिगायत्र्येत्यर्थः ॥ ६६ ॥ ६७ ॥ दक्षिणाः कथयति—अष्टषष्टिपलेनेत्यादिना ॥ ६८ ॥ ६९॥ त्रिंशत्पलं तत्संख्याक सुवर्णमित्यर्थः ॥ ७० ॥ ७१ ॥ फलश्रुतिं कथयति— एवमित्यादिना ॥ ७२ ॥ ७३ ॥ ७४ ॥ तारकाख्यो महासुरो विद्युन्माली पूर्वमभिषिक्तः महाबलो देवैरजेयोऽभव

हेमतोरणकुंभैश्च भूषितं स्नापयेन्नृपम् ॥ सर्वोपरि समासीनं शिवकुंभेन सेचयेत् ॥ ६४ ॥ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ॥ तन्नः शिवः प्रचोदयात् ॥ ६५ ॥ मंत्रेणानेन विधिना वर्धन्या गौरिगीतया ॥ रुद्राध्यायेन वा सर्वमघोरायाथ वा पुनः ॥ ६६ ॥ दिव्यैराभरणैः शुक्रैर्मुकुटाद्यैः सुकल्पितैः ॥ क्षौमवस्त्रैश्च राजानं तोषयेन्नियतं शनैः ॥ ६७ ॥ अष्टषष्टिपलेनैव हेम्ना कृत्वा सुदर्शनम् ॥ नवरत्नैरलं कृत्य दद्याद्वै दक्षिणां गुरोः ॥ ६८ ॥ दशधेनु सवस्त्रं च दद्यात्क्षेत्रं सुशोभनम् ॥ शतद्रोणतिलं चैव शतद्रोणांश्च तंडुलान् ॥ ६९ ॥ शयनं वाहनं शय्यां सोपधानां प्रदापयेत् ॥ योगिनां चैव सर्वेषां त्रिंशत्पलमुदाहृतम् ॥ २७० ॥ अशेषांश्च तदर्धेन शिवभक्तांस्तदर्धतः ॥ महापूजां ततः कुर्यान्महादेवस्य वै नृपः ॥ ७१ ॥ एवं समासतः प्रोक्तं जयसेचनमुत्तमम् ॥ एवं पुराभिषिक्तस्तु शक्रः शक्रत्वमागतः ॥ ७२ ॥ ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ॥ अंबिका चांबिकात्वं च सौभाग्यमतुलं तथा ॥ ७३ ॥ सावित्री च तथा लक्ष्मीर्देवी कात्यायनी तथा ॥ नंदिनाथ पुरा मृत्यू रुद्राध्यायेन वै जितः ॥ ७४ ॥ अभिषिक्तोऽसुरः पूर्वं तारकाख्यो महाबलः ॥ विद्युन्माली हिरण्याक्षो विष्णुना वै विनिर्जितः ॥ ७५ ॥ नृसिंहेन पुरा दैत्यो हिरण्यकशिपुर्हतः ॥ स्कंदेन तारकाद्याश्च कौशिक्या च पुरांधया ॥ ७६ ॥ सुंदोपसुंदतनयौ जितौ दैत्येंद्रपूजितौ ॥ वसुदेवसुदेवौ तु निहतौ कृतकृत्यया ॥ ७७ ॥ स्नानयोगेन विधिना ब्रह्मणा निर्मितेन तु ॥ देवासुरे दितिसुता जिता देवैरनिंदिताः ॥ ७८ ॥ स्नाप्यैव सर्वभूपैश्च तथान्यैरपि भूसुरैः ॥ प्राप्ताश्च सिद्धयो दिव्या नात्र कार्या विचारणा ॥ ७९ ॥ अहोऽभिषेकमाहात्म्यमहो शुद्धसुभाषितम् ॥ येनैवमभिषिक्तेन सिद्धैर्मृत्युर्जितास्त्विति ॥ २८० ॥

दिति शेषः । विष्णुना स्नानयोगेनेत्यनुषंगः । वै हिरण्याक्षो विनिर्जित इत्यन्वयः ॥ ७५ ॥ नृसिंहेनेत्यत्रापि स्नानयोगेनेत्यग्रिमोक्तस्यानुषंगः ॥ ७६ ॥ ७६ ॥ ७८ ॥ स्नाप्य संस्नाप्येत्यर्थः ॥७९ ॥ २८० ॥

॥ ८१ ॥ ८२ ॥ ८३ ॥ उद्देशमात्रं यत्किंचिदित्यर्थः ॥ ८४ ॥ चत्वारिंशद्व्यूहः सहस्रपरिवारदेवतायुक्तः । श्रीशिवकथितः श्रवणाज्जयाभिषेको जयावहो भूयात् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥ अष्टाविंशे तु मनवे कर्मणा मुक्तिलब्धये । राज्ञां कुमारकथितं तुलादानं निरूप्यते ॥ सूतः महादानानि निरूपयितुं जयाभिषेकश्रवणानंतरमनुवृत्तांतं कथयति—स्नात्वेत्यादिना । दिव्येन चक्षुषा रुद्रं दृष्ट्वा वरदं शंकरं रुद्राध्यायेन तुष्टावेत्याद्यिमेणान्वयः

कल्पकोटिशतेनापि यत्पापं समुपार्जितम् ॥ स्नात्वैवं मुच्यते राजा सर्वपापैर्न संशयः ॥ ८१ ॥ व्याधितो मुच्यते राजा क्षयकुष्ठादिभिः पुनः ॥ स नित्यं विजयी भूत्वा पुत्रपौत्रादिभिर्युतः ॥ ८२ ॥ जनानुरागसंपन्नो देवराज इवापरः ॥ मोदते पापहीनश्च प्रियया धर्मनिष्ठया ॥ ८३ ॥ उद्देशमात्रं कथितं फलं परमशोभनम् ॥ नृपाणामुपकाराय स्वायंभुव मनो मया ॥ २८४ ॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे अभिषेकविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥ सूत उवाच ॥ स्नात्वा देवं नमस्कृत्य देवदेवमुमापतिम् ॥ दिव्येन चक्षुषा रुद्रं नीललोहितमीश्वरम् ॥ १ ॥ दृष्ट्वा तुष्टाव वरदं रुद्राध्यायेन शंकरम् ॥ देवोऽपि तुष्ट्या निर्वाणं राज्यांते कर्मणैव तु ॥ २ ॥ तवास्तीति सकृच्चोक्त्वा तत्रैवांतरधीयत ॥ स्वायंभुवो मनुर्देवं नमस्कृत्य वृषध्वजम् ॥ ३ ॥ आरुरोह महामेरुं महावृषमिवेश्वरः ॥ तत्र देवं हिरण्याभं योगैश्वर्यसमन्वितम् ॥ ४ ॥ सनत्कुमारं वरदमपश्यद्ब्रह्मणः सुतम् ॥ नमश्चकार वरदं ब्रह्मण्यं ब्रह्मरूपिणम् ॥ ५ ॥ कृतांजलिपुटो भूत्वा तुष्टाव च महाद्युतिः ॥ सोऽपि दृष्ट्वा मनुं देवो हृष्टरोमाभवन्मुनिः ॥ ६ ॥ सनत्कुमारः प्राहेदं घृणया च घृणानिधे ॥ सनत्कुमार उवाच ॥ दृष्ट्वा सर्वेश्वराच्छांताच्छंकरान्नीललोहितात् ॥ ७ ॥ लब्ध्वाभिषेकं संप्राप्तो विवक्षुर्वद यद्यपि ॥ तस्य तद्वचनं श्रुत्वा प्रणिपत्य कृतांजलिः ॥ ८ ॥ विज्ञापयामास कथं कर्मणा निर्वृतिर्विभो ॥ वक्तुमर्हसि चास्माकं कर्मणा केवलेन च ॥ ९ ॥ ज्ञानेन निर्वृतिः सिद्धा विभो मिश्रेण वा क्वचित् ॥ अथ तस्य वचः श्रुत्वा श्रुतिसारविदां निधिः ॥ १० ॥ सनत्कुमारो भगवान्कर्मणा निर्वृतिं क्रमात् ॥ मिश्रेण च क्रमादेव क्षणाज्ज्ञानेन वै मुने ॥ ११ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ घृणानिधे इति संबोधनेन लोकोपकारार्थमेव तव यत्न इति सूचितम् ॥ ७ ॥ शंकरादभिषेकं लब्ध्वा संप्राप्तोऽपि विवक्षुर्यदि वद इत्यन्वयः ॥ ८ ॥ निर्वृतिर्मोक्ष इत्यर्थः ॥ ९ ॥ १० ॥ मिश्रेण सकर्मकज्ञानेनेत्यर्थः ॥ ११ ॥

सनत्कुमारः स्वीयाग्रिमवृत्तांतेन शिवार्चनमहिमानं कथयाति--पुरेत्यादिना । नंदिनः अमानेन अवमानेनेत्यर्थः। उष्ट्रत्वमगमं पुनः प्रभोस्तस्य प्रसादाच्छिवमभ्यर्च्य कर्मणैव शिवार्चनेनैव सुतो ब्रह्मपुत्रो ह्यहं तस्य नंदिनः प्रसादादुत्तमां गतिं मोक्षमार्गं श्रुत्वा दिव्यामवस्थामहं प्राप्तवानित्यग्रिमेणान्वयः ॥ १२ ॥ नंदिना राज्ञां कर्मणैव धर्मकामार्थमुक्त्यर्थं कथितानीत्यग्रिमस्थैरन्वयः ॥१३॥१४॥ तानि षोडश दानानि तुलारोहणाद्यानि यथातथं यथाविधि शृण्वित्यन्वयः ॥ १५ ॥ ग्रहणादिषु ग्रहणप्रभृतिषु शुभदेशेषु तीर्थादिषु । तदुक्तं मात्स्ये " अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । युगादिषूपरागेषु तथा मन्वंतरादिषु ॥ यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ॥ द्रव्यब्राह्मणलाभे वा श्रद्धा वा

पुराऽमानेन चोष्ट्रत्वमगमं नंदिनः प्रभोः ॥ शापात्पुनः प्रसादाद्धि शिवमभ्यर्च्य शंकरम् ॥ १२ ॥ प्रसादान्नंदिनस्तस्य कर्मणेव सुतो ह्यहम् ॥ श्रुत्वोत्तमां गतिं दिव्यामवस्थां प्राप्तवानहम् ॥ १३ ॥ शिवार्चनप्रकारेण शिवधर्मेण नान्यथा ॥ राज्ञां षोडशदानानि नंदिना कथितानि च ॥ १४ ॥ धर्मकामार्थमुक्त्यर्थं कर्मणैव महात्मना ॥ तुलादिरोहणाद्यानि शृणु तानि यथातथम् ॥ १५ ॥ ग्रहणादिषु कालेषु शुभदेशेषु शोभनम् ॥ विंशद्धस्तप्रमाणेन मंडपं कूटमेव च ॥ १६ ॥ यथाष्टादशहस्तेन कलाहस्तेन वा पुनः ॥ कृत्वा वेदिं तथा मध्ये नवहस्तप्रमाणतः ॥ १७ ॥ अष्टहस्तेन वा कार्या सप्तहस्तेन वा पुनः ॥ द्विहस्ता सार्धहस्ता वा वेदिका चातिशोभना ॥१८॥ द्वादशस्तंभसंयुक्ता साधुरम्या भ्रमंतिका ॥ परितो नव कुंडानि चतुरस्राणि कारयेत् ॥१९॥ ऐंद्रिकेशानयोर्मध्ये प्रधानं ब्रह्मणः सुत ॥ अथवा चतुरस्रं च योन्याकारमतः परम् ॥ २० ॥ स्त्रीणां कुंडानि विप्रेंद्रा योन्याकाराणि कारयेत् ॥ अर्धचंद्रं त्रिकोणं च वर्तुलं कुंडमेव च ॥ २१ ॥ षडस्रं सर्वतो वापि त्रिकोणं पद्मसन्निभम् ॥ अष्टास्रं सर्वमाने तु स्थंडिलं केवलं तु वा ॥ २२ ॥ चतुर्द्वारसमोपेतं चतुस्तोरणभूषितम् ॥ दिग्गजाष्टकसंयुक्तं दर्भमालासमावृतम् ॥ २३ ॥ अष्टमंगलसंयुक्तं वितानोपरिशोभितम् ॥ तुलास्तंभद्रुमाश्चात्र बिल्वादीनि विशेषतः ॥ २४ ॥ बिल्वाश्वत्थपलाशाद्याः केवलं खादिरं तु वा ॥ येन स्तंभः कृतः पूर्वं तेन सर्वं तु कारयेत् ॥ २५ ॥

यत्र जायते ॥ तीर्थेष्वायतने गोष्ठे कूपारामे सरित्सु च ॥ गृहे वायतने वापि तडागे रुचिरेऽपि वा ॥ महादानानि देयानि संसारभयभीरुणा॥" इति ॥ १६ ॥ कलाहस्तेन षोडशहस्तेनेत्यर्थः ॥ १७ ॥ १८ ॥ साधुरम्या भ्रमंतिका तुलेत्यर्थः ॥ १९ ॥ विशेषकुंडाकारान्कथयति–अथवेत्यादिना ॥ २० ॥ २१ ॥ २२ ॥ मंडपलक्षणं कथयाति–चतुर्द्वारमित्यादिना ॥ २३ ॥ २४ ॥ २५ ॥

हस्तद्वयं समायुतं भूमिसंयुक्तं यस्य तमष्टहस्तप्रमाणं तुलास्तंभं प्रकल्पयेदित्यन्वयः ॥ २६ ॥ अनाहतोनाच्छादितस्तुलास्तंभस्य विष्कंभ उच्छ्रायात्रिगुणः आच्छादितत्रिगुणो मतोऽवबोधित इत्यर्थः । सुवृत्तं निर्व्रणं तथा तत्प्रकारमपरस्तंभं प्रकल्पयेदित्यनुषंगः ॥२७॥ नृपते उभयोः स्तंभयोरंतरं द्व्यंगुलेन विहीनं तु षड्हस्तं स्मृतमित्यन्वयः । द्वयोः स्तंभयोश्चतुर्हस्तकृतमप्यंतरं स्मृतं प्रोक्तमित्यर्थः ॥ २८ ॥ स्तंभयोरुपरि स्थितमंतरं षड्हस्तं ज्ञेयमित्यनेन पूर्वोक्तं द्व्यंगुलेन विहीनमित्युक्तं मूलांतरे ज्ञेयं स्तंभयोर्वितस्तिमात्रं विस्तारस्तावत्तत्परिमाण उत्तरं विष्कंभो ज्ञेय इत्यन्वयः ॥ २९ ॥ स्तंभयोः प्रमाणेन तु उत्तरद्वारसम्मितं तत्तुल्यं तुलात्मकं व्यायामं दैर्घ्यं षट्त्रिंशन्मात्राणां परिच्छदानां समूहः षट्त्रिंशन्मात्रं तेन संयुक्तं षट्त्रिंशन्मात्रसंयुक्तं तत्संख्याकसौवर्णबंधयुक्तमित्यर्थः । " मात्रा कर्णविभूषणे॥अक्षरावयवे वृत्तिमानेऽल्पे च परिच्छदे "इति विश्वः॥३०॥

अथवा मिश्रमार्गेण वेणुना वा प्रकल्पयेत् ॥ अष्टहस्तप्रमाणं तु हस्तद्वयसमायुतम् ॥ २६ ॥ तुलास्तंभस्य विष्कंभोऽनाहतस्त्रिगुणो मतः ॥ द्व्यंगुलेन विहीनं तु सुवृत्तं निर्व्रणं तथा ॥ २७ ॥ उभयोरंतरं चैव षड्हस्तं नृपते स्मृतम् ॥ द्वयोश्चतुर्हस्तकृतमंतरं स्तंभयोरपि ॥ २८ ॥ षड्हस्तमंतरं ज्ञेयं स्तंभयोरुपरि स्थितम् ॥ वितस्तिमात्रं विस्तारो विष्कंभस्तावदुत्तरम् ॥ २९ ॥ स्तंभयोस्तु प्रमाणेन उत्तरद्वारसम्मितम् ॥ षट्त्रिंशन्मात्रसंयुक्तं व्यायामं तु तुलात्मकम् ॥ ३० ॥ विष्कंभमष्टमात्रं तु यवपंचकसंयुतम् ॥ षट्त्रिंशन्मात्रनाभं स्यान्निर्माणाद्वर्तुलं शुभम् ॥ ३१ ॥ अग्रे मूले च मध्ये च हेमपट्टेन बंधयेत् ॥ पट्टमध्ये प्रकर्तव्यमवलंबनकत्रयम् ॥ ३२ ॥ ताम्रेण च प्रकर्तव्यमवलंबनकत्रयम् ॥ आरेण वा प्रकर्तव्यमायसं नैव कारयेत् ॥ ३३ ॥ मध्ये चोर्ध्वमुखं कार्यमवलंबः सुशोभनः ॥ रश्मिभिस्तोरणाग्रे वा बंधयेच्च विधानतः ॥ ३४ ॥ जिह्वामेकां तुलामध्ये तोरणं तु विधीयते ॥ उत्तरस्य च मध्ये च शंकुं दृढमनुत्तमम् ॥ ३५ ॥ वितानेनोपरि च्छाद्य दृढं सम्यक्प्रयोजयेत् ॥ शंकोः सुषिरसंपन्नं वलयं कारयेन्मुने ॥ ३६ ॥

विष्कंभं तुलादंडविस्तारं यवपंचकसंयुतमष्टमात्रमष्टवितस्तिप्रमाणं यथा स्यात्तथा ज्ञेयमित्यनुषंगः । निर्माणात्करणाद्वर्तुलं शुभं षट्त्रिंशन्मात्रं तत्संख्याकयवप्रमाणं वा परिच्छदसमूहं च तन्नाभं तुलादंडमध्यं च षट्त्रिंशन्मात्रनाभं स्यादित्यन्वयः ॥ ३१ ॥ ३२ ॥ आरेण पित्तलेनेत्यर्थः ॥ ३३ ॥ रश्मिभिः रज्जुभिस्तोरणाग्रे वा तोरणाग्र एव विधानतः बंधयेदित्यन्वयः ॥ ३४ ॥ तुलामध्ये जिह्वामेकां कृत्वेति शेषः । तोरणं तु विधीयत इत्यन्वयः । उत्तरस्योत्तराग्रस्य चकाराद्दक्षिणस्य मध्ये च अनुत्तमं दृढं शंकुं वितानेन दृढं यथा स्यात्तथोपरि आच्छाद्य सम्यक् प्रयोजयेत्कुर्यादित्यग्रिमेणान्वयः ॥ ३५ ॥ सुषिरसंपन्नं छिद्रसंपन्नमित्यर्थः ॥ ३६ ॥

वितानेन तुलामध्ये तथा तुल्यालंबके तुलायाः लंबक इत्यर्थः । वलयेन सह कुंडलं वा अवलंबनं प्रयोक्तव्यमित्यन्वयः ॥ ३७ ॥ तुलामध्ये सुदृढं नवमांगुलमानतः पट्टस्यैव वितानमिति शेषः । पंचमात्रप्रमाणतः कृत्स्नपंचवितस्तिप्रमाणेन विस्तारं दीर्घं यथा स्यात्तथा कार्यमिति शेषः ॥ ३८ ॥ पिंडौ पुरुषौ वा गोलकावित्यर्थः । धारकौ तुलाधारकावित्यर्थः । अपरावयं सार्धश्लोकः ॥ ३९ ॥ तुलापात्रविधानं कथयति—चतुस्तालमित्यादिना । मध्यमं विस्तारं चतुस्तालं तत्परिमितं कर्तव्यमित्यन्वयः । " तालः करतलांगुष्ठमध्यमाभ्यां च संमितः " इति विश्वः ॥ ४० ॥ कलशस्य पात्राशिरस इत्यर्थः । पंचपात्रं विस्तृतपात्रं बध्नीयादित्यन्वयः । तत्रिमात्रं त्र्यवधृतिकं षट्कं षडवधृतिकं तु

तुलामध्ये वितानेन तुल्यालंबके तथा ॥ वलयेन प्रयोक्तव्यं कुंडलं वावलंबनम् ॥ ३७ ॥ सुदृढं च तुलामध्ये नवमांगुलमानतः ॥ पट्टस्यैव तु विस्तारं पंचमात्रप्रमाणतः ॥ ३८ ॥ अपरौ सुदृढौ पिंडौ शुभद्रव्येण कारयेत् ॥ शिक्याधस्तात्प्रकर्तव्यौ पंचप्रादेशविस्तरौ ॥ सहस्रेण तु कर्तव्यौ पलानां धारकावुभौ ॥ ३९ ॥ शताष्टकेन वा कुर्यात्पलैः षट्शतमेव वा ॥ चतुस्तालं च कर्तव्यो विस्तारो मध्यमस्तथा ॥ ४० ॥ सार्धत्रितालविस्तारः कलशस्य विधीयते ॥ बध्नीयात्पंचपात्रं तु त्रिमात्रं षट्कमुच्यते ॥ ४१ ॥ चतुर्द्वारसमोपेतं द्वारमंगुलमात्रकम् ॥ कुंडलैश्च समोपेतैः शुक्लशुद्धसमन्वितैः ॥ ४२ ॥ कुंडलेकुंडले कार्यं शृंखलापरिमंडलम् ॥ शृंखलाधारवलयमवलंबेन योजयेत् ॥ ४३ ॥ प्रादेशं वा चतुर्मात्रं भूमेस्त्यक्त्वावलंबयेत् ॥ घटौ पुरुषमात्रौ तु कर्तव्यौ शोभनावुभौ ॥ ४४ ॥ तौ वालुकाभिः संपूर्य शिवं तत्र विनिःक्षिपेत् ॥ द्विहस्तमात्रमवटे स्थापनीयौ प्रयत्नतः ॥ ४५ ॥ निःशेषं पूरयेद्विद्वान्वालुकाभिः समंततः ॥ येन निश्चलतां गच्छेत्तेन मार्गेण कारयेत् ॥ ४६ ॥ श्रूयतां परमं गुह्यं वेदिकोपरिमंडलम् ॥ अष्टमांगुलसंयुक्तं मंगलांकुरशोभितम् ॥ ४७ ॥ फलपुष्पसमाकीर्णं धूपदीपसमन्वितम् ॥ वेदिमध्ये प्रकर्तव्यं दर्पणोदरसन्निभम् ॥ ४८ ॥ आलिखेन्मंडलं पूर्वं चतुर्द्वारसमन्वितम् ॥ शोभोपशोभासंपन्नं कर्णिकाकेसरान्वितम् ॥ ४९ ॥ वर्णजातिसमोपेतं पंचवर्णं तु कारयेत् ॥ वज्रं प्रागंतरे भागे आग्नेय्यां शक्तिमुज्ज्वलाम् ॥ ५० ॥ आलिखेद्दक्षिणे दंडं नैर्ऋत्यां खड्गमालिखेत् ॥ पाशश्च वारुणे लेख्यो ध्वजं वै वायुगोचरे ॥ ५१ ॥

उच्यते कथ्यते इत्यर्थः । "मात्रं चावधृतौ कार्त्स्न्ये" इति विश्वः ॥ ४१ ॥ चतुर्द्वारसमोपेतं चतुश्छिद्रयुक्तमित्यर्थः । शुक्लशुद्धसमन्वितैः कुंडलैश्च समोपेतैर्द्वारैर्युक्तमिति शेषः ॥ ४२ ॥ शृंखलाधारवलयं मूलवलयमवलंबेन तुलादंडावलंबेनेत्यर्थः ॥ ४३ ॥ भूमेः प्रादेशं तर्जन्यंगुष्ठमात्रं वा चतुर्मात्रं चतुरंगुलपरिमाणं त्यक्त्वावलंबयेत्तुलावलंबनं कुर्यादित्यर्थः । घटौ कुंभौ पुरुषमात्रौ पुरुषप्रमाणावित्यर्थः ॥ ४४ ॥ तत्र वालुकोपरि शिवं विनिःक्षिपेत् स्थापयेदित्यर्थः ॥ ४५ ॥ निःशेषं संपूर्णावटमित्यर्थः ॥ ४६ ॥ मंडलविधानं कथयति—श्रूयतामित्यादिना ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

॥ ५२ ॥ होमविधिं कथयति–प्रधानमित्यादिना । प्रधानहोमं प्रधानदेवताहोमं गायत्र्या समाचरेत् कुर्यादित्यर्थः । दिग्देवताहोमं कथयति–शक्रायेत्यादिना । स्वाहेत्यस्य सर्वत्रान्वयः ॥ ५३ ॥ ५४ ॥ जयादिप्रतिसंयुतं जयाभ्यानानादिहोमयुक्तम् ॥ ५५ ॥ अग्रहोमे प्रधानहोमे इत्यर्थः । एकविंशत्या संख्यातमेकविंशतिसंख्यातम् । इध्ममनेन वक्ष्यमाणमंत्रेणेत्यर्थः । स्विष्टांतमयं सार्धश्लोकः ॥ ५६ ॥ इध्मादिहोममंत्रान् कथयति–अयमित्यादिना । होमद्रव्यचरून् कथयति–समिदिति । मुद्गान्नं कृसरान्नमित्यर्थः ॥ ५७ ॥ होमसंख्यामाह–सहस्रमिति । अयं द्विपाच्छ्लोकः ॥ ५८ ॥ अग्निदेवताकमंत्रत्रयं प्रजापतिमंत्रं च कथयति–अग्न आयूंषीत्यादिना । गायत्र्या रुद्रगायत्रीमंत्रेण प्रधा-

कौबेर्यां तु गदा लेख्या ऐशान्यां शूलमालिखेत् ॥ शूलस्य वामदेशेन चक्रं पद्मं तु दक्षिणे ॥ ५२ ॥ एवं लिखित्वा पश्चाच्च होमकर्म समाचरेत् ॥ प्रधानहोमं गायत्र्या स्वाहा शक्राय वह्नये ॥ ५३ ॥ यमाय राक्षसेशाय वरुणाय च वायवे ॥ कुबेरायेश्वरायाथ विष्णवे ब्रह्मणे पुनः ॥ ५४ ॥ स्वाहांतं प्रणवेनैव होतव्यं विधिपूर्वकम् ॥ स्वशाखाग्निमुखेनैव जयादिप्रतिसंयुतम् ॥ ५५ ॥ स्विष्टांतं सर्वकार्याणि कारयेद्विधिवत्तदा॥सर्वहोमाग्रहोमे च समित्पालाशमुच्यते॥एकविंशतिसंख्यातं मंत्रेणानेन होमयेत् ॥५६॥ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा भूः स्वाहा भुवःस्वाहा स्वः स्वाहा भूर्भुवः स्वस्तथैव च॥समिद्धोमश्च चरुणा घृतस्य च यथाक्रमम् ॥ शुक्लान्नपायसं चैव मुद्गान्नं चरवः स्मृताः ॥ ५७ ॥ सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥५८॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः ॥ आरेबाधस्वदुच्छनाम् ॥ अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः ॥ तमीमहे महागयम् ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ॥ दधद्रयिं मयि पोषम् ॥ प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ गायत्र्या च प्रधानस्य समिद्धोमस्तथैव च ॥ चरुणा च तथाज्यस्य शक्रादीनां च होमयेत् ॥ ५९ ॥ वज्रादीनां च होतव्यं सहस्रार्धं ततः क्रमात् ॥ ब्रह्म जज्ञानं इति मंत्रेण ब्रह्मणे विष्णवे पुनः ॥ ६० ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ अयं विशेषः कथितो होममार्गः सुशोभनः ॥ दूर्वया क्षीरयुक्तेन पंचविंशत्पृथक्पृथक् ॥६१॥

नस्य समिद्धिर्होमः समिद्धोमः कार्य इति शेषः । तथैव चरुणा शक्रादीनां च होमयेत्तथा आज्यस्य आज्येनेत्यर्थः । वज्रादीनां सहस्रार्धं होतव्यमित्यग्रिमेणान्वयः ॥ ५९ ॥ क्रमात्ततः आज्येनेत्यर्थः । ब्रह्म जज्ञानं इति मंत्रेण ब्रह्मणे पुनर्विष्णवे होतव्यमित्यन्वयः ॥ ६० ॥ विष्णुमंत्रं कथयति–नारायणायेति । अयं पूर्वोक्तो विशेषो मुख्य इत्यर्थः । पृथक्पृथक् क्षीरयुक्तेन दूर्वया पंचविंशत्तत्संख्याकाहुतीर्जुहुयादिति शेषः ॥ ६१ ॥

दूर्वाहोममंत्रं कथयति—त्र्यंबकमिति ॥ ६२ ॥ अघोरेण तत्संज्ञकमंत्रेण सर्पिषा च शतंशतं दशसहस्रमित्यर्थः । जुहुयादिति शेषः ॥ ६३ ॥ देवतामंडलं कथयति—ब्रह्माण मिति । दक्षिणे ब्रह्माणं वामे विष्णुं मध्ये देव्या समं विश्वगुरुं शिवमिंद्रादिगणसंवृतं ज्ञेयमित्यन्वयः ॥ ६४ ॥ ग्रहमंडलं कथयति—आदित्यमित्यादिना ॥६५॥ ६६ ॥ अथ प्रारंभे प्रभूतं कर्तव्यमित्यन्वयः । " अथो अथ च संप्रश्ने मंगलारंभयोरपि " इति विश्वः ॥ ६७॥६८॥६९॥७० ॥ एवं पूर्वोक्तप्रकारं होमयेत् पूजयेच्च विशेषतः दापयेदित्य

त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ॥६२॥ दूर्वाहोमः प्रशस्तोऽयं वास्तुहोमश्च सर्वथा ॥ प्रायश्चित्तमघोरेण सर्पिषा च शतंशतम् ॥ ६३ ॥ ब्रह्माणं दक्षिणे वामे विष्णुं विश्वगुरुं शिवम् ॥ मध्ये देव्या समं ज्ञेयमिंद्रादिगणसंवृतम् ॥ ६४ ॥ आदित्यं भास्करं भानुं रविं देवं दिवाकरम् ॥ उषां प्रभां तथा प्रज्ञां संध्यां सावित्रिमेव च ॥ ६५ ॥ पंचप्रकारविधिना खखोल्काय महात्मने ॥ विघ्नरां सुभगां चैव वर्धनीं च प्रदक्षिणाम् ॥ ६६ ॥ आप्यायनीं च संपूज्य देवीं पद्मासने रविम् ॥ प्रभूतं वाथ कर्तव्यं विमलं दक्षिणे तथा ॥ ६७ ॥ सारं पश्चिमभागे च आराध्यं चोत्तरे यजेत् ॥ मध्ये सुखं विजानीयात्केसरेषु यथाक्रमम् ॥ ६८ ॥ दीप्तां सूक्ष्मां जयां भद्रां विभूतिं विमलां क्रमात् ॥ अमोघां विद्युतां चैव मध्यतः सर्वतोमुखीम् ॥ ६९ ॥ सोममंगारकं चैव बुधं गुरुमनुक्रमात् ॥ भार्गवं च तथा मंदं राहुं केतुं तथैव च ॥ ७० ॥ पूजयेद्धोमयेदेवं दापयेच्च विशेषतः ॥ योगिनो भोजयेत्तत्र शिवतत्त्वैकपारगान् ॥ ७१ ॥ दिव्याध्ययनसंपन्नान्कृत्वैवं विधिविस्तरम् ॥ होमे प्रवर्तमाने च पूर्वदिक्कुंस्थानमध्यमे ॥ ७२ ॥ आरोहयेद्विधानेन रुद्राध्यायेन वै नृपम् ॥ धारयेत्तत्र भूपालं घटिकैकां विधानतः ॥७३॥ यजमानो जपेन्मंत्रं रुद्रगायत्रिसंज्ञकम् ॥ घटिकार्धं तदर्धं वा तत्रैवासनमारभेत् ॥ ७४ ॥ आलोक्य वारुणं धीमान्कूर्चहस्तः समाहितः ॥ नृपश्च भूषणैर्युक्तः खड्गखेटकधारकः ॥ ७५ ॥ स्वस्तिरित्यादिभिश्चादावंते चैव विशेषतः ॥ पुण्याहं ब्राह्मणैः कार्यं वेदवेदांगपारगैः ॥ ७६ ॥ जयमंगलशब्दादिब्रह्मघोषैः सुशोभनैः ॥ नृत्यवाद्यादिभिर्गीतैः सर्वशोभासमन्वितैः ॥ ७७ ॥

न्वयः । एवं विधिविस्तरं कृत्वा तत्र तुलादानदिने योगिनः भोजयेदित्यग्रिमस्थेनान्वयः ॥ ७१ ॥ तुलारोहणविधिं कथयति—होम इत्यादिना ॥ ७२॥७३॥७४ ॥ वारुणं सूर्यबिंबमित्यर्थः । " वरुणस्तरुभेदेऽपि प्रतीचीपतिसूर्ययोः " इति विश्वः । नृपश्च भूषणैर्युक्तः खड्गखेटकधारक इत्यनेन कूर्चहस्तो ब्राह्मणो ज्ञेयः ॥ ७५॥७६॥७७ ॥

एवं पूर्वोक्तप्रकारेण स्वं स्वकीयं सुवर्णं चंद्रादिग्भागे उत्तरादिग्भागे तत्र तुलायां विक्षिपेदित्यन्वयः। समौ वृत्तौ तुलाधारौ ताभ्यामिति शेषः। तुलाभारः सदा अक्षयमित्यर्थः। मवेदित्यन्वयः ॥७८॥७९॥८०॥ धर्मकर्मणि प्रारंभे अग्रपूजायां पाशुपतव्रताय शैवाचार्यायेत्यर्थः ॥ ८१ ॥ सर्वं पूर्वोक्तभूषणमेतत्प्रयोक्तृभ्य ऋत्विग्भ्यः ॥८२॥ सार्धशत तत्तत्संख्याकसुवर्णम् ॥ ८३ ॥ यतीनां दांतानामित्यर्थः ॥ ८४ ॥ तुलासुवर्णविनियोगं कथयति—तुलारोहमित्यादिना ॥८५॥८६॥८७॥ समाप्तौ महापूजां कथयाति—सहस्र

स्वमेवं चंद्रदिग्भागे सुवर्णं तत्र विक्षिपेत् ॥ तुलाधारौ समौ वृत्तौ तुलाभारः सदा भवेत् ॥ ७८ ॥ शतनिष्काधिकं श्रेष्ठं तदर्धं मध्यमं स्मृतम् ॥ तस्यार्धं च कनिष्ठं स्यात्त्रिविधं तत्र कल्पितम् ॥ ७९ ॥ वस्त्रयुग्ममथोष्णीषं कुंडलं कंठशोभनम् ॥ अंगुलीभूषणं चैव मणिबंधस्य भूषणम् ॥ ८० ॥ एतानि चैव सर्वाणि प्रारंभे धर्मकर्मणि ॥ पाशुपतव्रतायाथ भस्मांगाय प्रदापयेत् ॥ ८१ ॥ पूर्वोक्तभूषणं सर्वं सोष्णीषं वस्त्रसंयुतम् ॥ दद्यादेतत्प्रयोक्तृभ्य आच्छादनपटं बुधः ॥८२॥ दक्षिणां च शतं सार्धं तदर्धं वा प्रदापयेत् ॥ योगिनां चैव सर्वेषां पृथङ्निष्कं प्रदापयेत् ॥ ८३ ॥ यागोपकरणं दिव्यमाचार्याय प्रदापयेत् ॥ इतरेषां यतीनां तु पृथङ्निष्कं प्रदापयेत् ॥ ८४ ॥ तुलारोह सुवर्णं च शिवाय विनिवेदयेत् ॥ प्रासादं मंडपं चैव प्राकारं भूषणं तथा ॥८५॥ सुवर्णपुष्पं पटहं खड्गं वै कोशमेव च॥ कृत्वा दत्त्वा शिवायाथ किंचिच्छेषं च बुद्धिमान् ॥ ८६ ॥ आचार्येभ्यः प्रदातव्यं भस्मांगेभ्यो विशेषतः ॥ बंदीकृतान् विसृज्याथ कारागृहनिवासिनः॥८७॥ सहस्रकलशैस्तत्र सेचयेत्परमेश्वरम् ॥ घृतेन केवलेनापि देवदेवमुमापतिम्॥८८॥पयसा वाथ दध्ना वा सर्वद्रव्यैरथापि वा ॥ ब्रह्मकूर्चेन वा देवं पंचगव्येन वा पुनः ॥ ८९ ॥ गायत्र्या चैव गोमूत्रं गोमयं प्रणवेन वा ॥ आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥९०॥ तेजोसीत्याज्यमीशानमंत्रेणैवाभिषेचयेत् ॥ देवस्यत्वेति देवेशं कुशांबुकलशेन वै ॥९१॥ रुद्राध्यायेन वा सर्वं स्नापयेत्परमेश्वरम् ॥ सहस्रकलशं शंभोर्नाम्नां चैव सहस्रकैः ॥ ९२ ॥ विष्णुना कथितैर्वापि तंडिना कथितैस्तु वा ॥ दक्षेण मुनिमुख्येन कीर्तितैरथ वा पुनः ॥ ९३ ॥ महापूजा प्रकर्तव्या महादेवस्य भक्तितः ॥ शिवार्चकाय दातव्या दक्षिणा स्वगुरोः सदा ॥ ९४ ॥

कलशैरित्यादिना ॥ ८८ ॥ सर्वद्रव्यैर्नारिकेलाद्युदकैरित्यर्थः ॥ ८९ ॥ पंचगव्यमन्त्रान्कथयति—गायत्र्येत्यादिना ॥ ९० ॥ ९१ ॥ ९२ ॥ विष्णुना तंडिना कथितैः पूर्वेमागोक्तैः दक्षेण मुनिमुख्येन कीर्तितैः शिवरहस्योक्तैरित्यर्थः ॥ ९३ ॥ ९४ ॥

देहार्णवं तुलाद्रव्यं दक्षिणा च सर्वेषाम् ऋत्विजादीनां दीनांधकृपणानां च यथाक्रमं पूर्वोक्तक्रममनतिक्रम्य दातव्येत्यनुषंगः ॥९५॥ बालवृद्धकृशातुरान् भोजयेद्विधानेन दक्षिणामपि च दापयेदित्यादीति पूर्वस्थेनान्वयः । एतन्माहात्म्यमुक्तं मात्स्ये—अनेन विधिना यस्तु तुलापुरुषमाचरेत् ॥ प्रतिलोकाधिपस्थाने प्रतिमन्वंतरं वसेत् ॥ विमाने—नार्कवर्णेन किंकिणीजालमालिना ॥ पूज्यमानोप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥ कल्पकोटिशतं साग्रं तस्मिँल्लोके महीयते ॥ कर्मक्षयादिह पुनर्जायते भुवि राजराट् ॥ भूपालमौलिमणिरंजितपादपीठः श्रद्धान्वितो भवति यज्ञसहस्रयाजी ॥ दीप्तप्रतापजितसर्वमहीपलोको यो दीयमानमपि पश्यति भक्तियुक्तः ॥ कालांतरे स्मरति वाचयतीह लोके यो वै शृणोति पठतींद्रसमानरूपः ॥ सोऽपि प्रमोदशतसंयुततत्स्वरूपः प्राप्नोति धाम तु पुरंदरदेवजुष्टम् ॥ एतादृशमेव स्मरणादिमाहात्म्यं सर्व

देहार्णवं च सर्वेषां दक्षिणा च यथाक्रमम् ॥ दीनांधकृपणानां च बालवृद्धकृशातुरान् ॥ ९५ ॥ भोजयेच्च विधानेन दक्षिणामपि दापयेत् ॥ ९६ ॥

इति श्रीलिंगमहापुराणे उत्तरभागे तुलापुरुषदानविधावष्टाविंशत्तमोऽध्यायः ॥ २८ ॥ सनत्कुमार उवाच ॥ तुला ते कथिता ह्येषा आद्या सामान्यरूपिणी ॥ हिरण्यगर्भं वक्ष्यामि द्वितीयं सर्वसिद्धिदम् ॥ १ ॥ अधःपात्रं सहस्रेण हिरण्येन विधीयते ॥ ऊर्ध्वपात्रं तदर्धेन मुखं संवेशमात्रकम् ॥ २ ॥ हैममेवं शुभं कुर्यात्सर्वालंकारसंयुतम् ॥ अधःपात्रे स्मरेद्देवीं गुणत्रयसमन्विताम् ॥ ३ ॥ चतुर्विंशतिकां देवीं ब्रह्मविष्ण्वग्निरूपिणीम् ॥ ऊर्ध्वपात्रे गुणातीतं षड्विंशकमुमापतिम् ॥ ४ ॥ आत्मानं पुरुषं ध्यायेत्पंचविंशकमग्रजम् ॥ पूर्वोक्तस्थानमध्येऽथ वेदिकोपरि मंडले ॥ ५ ॥ शालिमध्ये क्षिपेन्नीत्वा नववस्त्रैश्च वेष्टयेत् ॥ माषकल्केन चालिप्य पंचद्रव्येण पूजयेत् ॥ ६ ॥ ईशानाद्यैर्यथान्यायं पंचभिः परिपूजयेत् ॥ पूर्ववच्छिवपूजा च होमश्चैव यथाक्रमम् ॥ ७ ॥ देवीं गायत्रिकां जप्त्वा प्रविशेत्प्राङ्मुखः स्वयम् ॥ विधिनैव तु संपाद्य गर्भाधानादिकां क्रियाम् ॥ ८ ॥

दानानां तत्र निरूपितं श्रोतृभिरनुसंधेयम् ॥ ९६ ॥ मम शिव मात्रा पित्रा त्वत्प्रीत्यै कल्पिते तुलादाने ॥ ताभ्यांताभ्यां तुष्टो ह्यतुलां मुक्तिं प्रयच्छ कृपया मे ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां अष्टाविंशोऽध्यायः ॥ २८ ॥ एकोनत्रिंशदध्याये महादानद्वितीयकम् ॥ दानं हिरण्यगर्भाख्यं समासेन निरूप्यते ॥ सनत्कुमारः हिरण्यगर्भदानं कथयति—तुलेत्यादिना । आद्या प्रथमेत्यर्थः ॥ १ ॥ मुखं संवेशमात्रकं प्रवेशप्रमाणम् ॥ २ ॥ ३ ॥ ४ ॥ आत्मानं स्वमग्रजं पंचविंशकं पुरुषं हिरण्यगर्भरूपमित्यर्थः । पूर्वोक्तस्थानमध्ये वेदिकोपरि मंडले शालिमध्ये नीत्वा क्षिपेत् स्थापयेदित्यग्रिमस्थेनान्वयः ॥ ५ ॥ पंचद्रव्येण पंचोपचारैरित्यर्थः ॥ ६ ॥ ७ ॥ गायत्रिकां देवीं स्वयं जपित्वा प्राङ्मुखः प्रविशेदित्यन्वयः ॥ ८ ॥

षोडशमार्गेण षोडशसंस्कारक्रमेण ब्राह्मणोत्तम आचार्य इत्यर्थः । संस्कारविशेषविधिं कथयति–दूर्वांकुरैरित्यादिना ॥ ९ ॥ १० ॥ ११ ॥ विश्वजितांता विश्वजिदाख्ययाग चरमा इत्यर्थः । ऐनाद्रिम्नग आग्नेये द्रष्टव्यः ॥ १२ ॥ ब्राह्मणैः ऋत्विग्भिः शेषमुक्तान्यपीत्यर्थः ॥ १३ ॥ दानं हिरण्यगर्भाख्यं शिवयोः प्रीतिकारकम् ॥ पुत्रत्वापादकं चास्तु श्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां एकोनत्रिंशोऽध्यायः ॥ २९ ॥ लैंगेऽस्मिंस्त्रिंशदध्याये महादानतृतीयकम् ॥

कृत्वा षोडशमार्गेण विधिना ब्राह्मणोत्तमः ॥ दूर्वांकुरैस्तु कर्तव्या सेचना दक्षिणे पुटे ॥ ९ ॥ औदुंबरफलैः सार्धमेकविंशत्कुशोदकम् ॥ ईशान्यां तावदेवात्र कुर्यात्सीमंतकर्मणि ॥ १० ॥ उद्वहेत्कन्यकां कृत्वा त्रिंशन्निष्केण शोभनाम् ॥ अलंकृत्य तथा हुत्वा शिवाय विनिवेदयेत् ॥ ११ ॥ अन्नप्राशनके विद्वान् भोजयेत्पायसादिभिः ॥ एवं विश्वजितांता वै गर्भाधानादिकाः क्रियाः ॥ १२ ॥ शक्तिबीजेन कर्तव्या ब्राह्मणैर्वेदपारगैः ॥ शेषं सर्वं च विधिवत्तुलाहेमवदाचरेत् ॥१३॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे एकोनत्रिंशोऽध्यायः॥२९॥

सनत्कुमार उवाच ॥ अधुना संप्रवक्ष्यामि तिलपर्वतमुत्तमम् ॥ पूर्वोक्तस्थानकाले तु कृत्वा संपूज्य यत्नतः ॥१॥ सुसमे भूतले रम्ये वेदिना च विवर्जिते ॥ दशतालप्रमाणेन दंडं संस्थाप्य वै मुने ॥ २ ॥ अद्भिः संप्रोक्ष्य पश्चाद्धि तिलांस्तस्मिन्विनिक्षिपेत् ॥ पंचगव्येन तं देशं प्रोक्षयेद्ब्राह्मणोत्तमः ॥ ३ ॥ मंडलं कल्पयेद्विद्वान्पूर्ववत्सुसमंततः ॥ नववस्त्रैश्च संस्थाप्य रम्यपुष्पैर्विकीर्य च ॥ ४ ॥ तस्मिन्संचयनं कार्यं तिलभारैर्विशेषतः ॥ दंडप्रादेशमुत्सेधमुत्तमं परिकीर्तितम् ॥५॥ चतुरंगुलहीनं तु मध्यमं मुनिपुंगवाः ॥ दंडतुल्यं कनिष्ठं स्याद्दंडहीनं न कारयेत् ॥ ६ ॥ वेष्टयित्वा नवैर्वस्त्रैः परितः पूजयेत्क्रमात् ॥ सद्यादीनि प्रविन्यस्य पूजयेद्विधिपूर्वकम् ॥ ७ ॥ अष्टदिक्षु च कर्तव्याः पूर्वोक्ता मूर्तयः क्रमात् ॥ त्रिनिष्केन सुवर्णेन प्रत्येकं कारयेत्क्रमात् ॥८॥ दक्षिणा विधिना कार्या तुलाभारवदेव तु ॥ होमश्च पूर्ववत्प्रोक्तो यथावन्मुनिसत्तमाः ॥ ९ ॥ अर्चयेद्देवदेवेशं लोकपालसमावृतम् ॥ तिलपर्वतमध्यस्थं तिलपर्वतरूपिणम् ॥ १० ॥

तिलपर्वतदानं हि यथाविधि निरूप्यते ॥ सनत्कुमारस्तिलपर्वतदानं कथयति–अधुनेत्यादिना ॥१॥ दशतालप्रमाणेन करतलांगुष्ठमध्यमारूपतालदशमितेनेत्यर्थः ॥ २ ॥ अस्मिन्नाग्रिमोक्तस्थान इत्यर्थः ॥ ३ ॥ ४ ॥ संचयनं राशीकरणं दंडात्पूर्वोक्तदंडात्प्रादेशं तत्प्रमाणं दण्डप्रादेशं यथा स्यात्तथा उत्सेधमुन्नतमित्यर्थः ॥ ५ ॥ चतुरंगुलैर्हीनं पूर्वोक्तान्न्यूनं चतुरंगुल हीनम् ॥ ६ ॥ सद्यादीनि पंच ब्रह्माणि ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

दर्शयेत्स्वेष्टजनेभ्यः प्रदर्शयेदित्यर्थः ॥ ११ ॥ १२ ॥ सर्वस्मादधिकः श्रेष्ठः ॥ १३ ॥ तिलपर्वतरूपं हि शिवतोषप्रदायकम् ॥ दानं सर्वाधिकं भूयाच्छ्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रिंशोऽध्यायः ॥ ३० ॥ एकत्रिंशत्तमेऽध्याये सूक्ष्मं चापि महाफलम् ॥ तिलपर्वतदानं हि सविधानं निरूप्यते ॥ सनत्कुमारः सूक्ष्मतिलपर्वतदानं कथयति—अथेत्यादिना । द्रव्यमात्रेण उपसंयुक्ते संपन्ने मेध्यं यथा स्यात्तथा विधीयत इत्यन्वयः ॥ १ ॥ तिलानां भारत्रयं तिलभारत्रयं निक्षिपेत्स्थापयेदित्यर्थः । भारमानमुक्तममरे "पलं कर्षचतुष्टयम् । तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः " इति ॥२॥३॥ वामादीनि पंच ब्रह्मांगानीत्यर्थः ॥ ४ ॥

शिवार्चना च कर्तव्या सहस्रकलशादिभिः ॥ दर्शयेत्तिलमध्यस्थं देवदेवमुमापतिम् ॥११॥ पूजयित्वा विधानेन क्रमेण च विसर्जयेत् ॥ श्रोत्रियाय दरिद्राय दापयेत्तिलपर्वतम् ॥ १२ ॥ एवं तिलनगः प्रोक्तः सर्वस्मादधिकः परः ॥ १३ ॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे तिलपर्वतदानं नाम त्रिंशोऽध्यायः ॥ ३० ॥ सनत्कुमार उवाच ॥ अथान्यं पर्वतं सूक्ष्ममल्पद्रव्यं महाफलम् ॥ द्रव्यमात्रोपसंयुक्ते काले मध्यं विधीयते ॥ १ ॥ गोमयालिप्तभूमौ तु ह्यंबराणि प्रकीर्य च ॥ तन्मध्ये निक्षिपेद्धीमांस्तिलभारत्रयं शुभम् ॥ २ ॥ पद्ममष्टदलं कुर्यात्कर्णिकाकेसरान्वितम् ॥ दशनिष्केण तत्कार्यं तदर्धार्धेन वा पुनः ॥ ३ ॥ तिलमध्ये न्यसेत्पद्मं पद्ममध्ये महेश्वरम् ॥ आराध्य विधिवद्देवं वामादीनि प्रपूजयेत् ॥ ४ ॥ शक्तिरूपं सुवर्णेन त्रिनिष्केण तु कारयेत् ॥ न्यासं तु परितः कुर्याद्विघ्नेशान्परिभागतः ॥५॥ पूर्वोक्त हेममानेन विघ्नेशानपि कारयेत् ॥ तानभ्यर्च्य विधानेन गंधपुष्पादिभिः क्रमात् ॥ ६ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे एकत्रिंशोऽध्यायः ॥३१॥ सनत्कुमार उवाच ॥ जपहोमार्चनादानाभिषेकाद्यं च पूर्ववत् ॥सुवर्णमेदिनीदानं प्रवक्ष्यामि समासतः॥१॥पूर्वोक्तदेशकाले तु कारयेन्मुनिभिः सह ॥ लक्षणेन यथापूर्वं कुंडं वा मंडलेऽथ वा॥ २॥ मेदिनीं कारयेद्दिव्यां सहस्रेणापि वा पुनः ॥ एकहस्ता प्रकर्तव्या चतुरस्रा सुशोभना ॥ ३ ॥ सप्तद्वीपसमुद्राद्यैः पर्वतैरभिसंवृता ॥ सर्वतीर्थसमोपेता मध्ये मेरुसमन्विता ॥ ४ ॥ अथवा मध्यतो द्वीपं नवखंडं प्रकल्पयेत् ॥ पूर्ववन्निखिलं कृत्वा मंडले वेदिमध्यतः ॥ ५ ॥

विघ्नेशानष्टविनायकान् ॥ ५ ॥ क्रमात्पूर्वादिक्रमेणेत्यर्थः ॥ ६ ॥ स्वल्पद्रव्यवतां सूक्ष्मतिलपर्वतसंज्ञितम् ॥ विहितं स्यान्महादानं श्रवणात्फलदं शिव ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां एकत्रिंशोऽध्यायः ॥३१ ॥ लिंगे द्वात्रिंशदध्याये महादानं चतुर्थकम् ॥ सुवर्णमेदिनीदानं संक्षेपेण निरूप्यते ॥ सनत्कुमारः सुवर्णमेदिनीदानं कथयति—जपेत्यादिना ॥१॥२॥ सहस्रेण तत्संख्याकसुवर्णेन पुनरपि वा तदर्धतदर्धार्धेन वेत्यर्थः ॥३॥४॥ मध्यतः मध्ये नवखंडं द्वीपं जम्बूद्वीपमित्यर्थः ॥ ५ ॥

सहस्रात्तत्संख्यसुवर्णात्सप्तभागादेकभागः सप्तभागैकभागः तेन सह शिवभक्ते प्रदातव्येत्यन्वयः । दक्षिणा पूर्वचोदिता पूर्वोक्तैवेत्यर्थः ॥ ६ ॥ उत्तमं श्रेष्ठमित्यर्थः ॥ ७ ॥ सुवर्णमेदिनीदानं द्वीपपर्वतसंयुतम् । शिवप्रीतिकरं स्याद्वै श्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥ लैंगोत्तरत्रयस्त्रिंशे महादानेषु पंचमम् ॥ कल्पपादपदानं हि यथाविधि निरूप्यते ॥ सनत्कुमारः कल्पवृक्षदानं कथयति—अथान्यदित्यादिना । शतनिष्केण तत्संख्य सुवर्णेनेत्यर्थः ॥ १ ॥ मुक्तादामादीनां मुक्तामालादीनामालंबनं बंधनमित्यर्थः । मारकतैर्हरिन्मणिभिः ॥ २ ॥ प्रवालं किसलयं प्रवालेन विद्रुमेणेत्यर्थः । पद्मरागैर्माणिक्यैः ॥ ३ ॥ स्कंधं

सप्तभागैकभागेन सहस्राद्विधिपूर्वकम् ॥ शिवभक्ते प्रदातव्या दक्षिणा पूर्वचोदिता ॥ ६ ॥ सहस्रकलशाद्यैश्च शंकरं पूजयेच्छिवम् ॥ सुवर्णमेदिनीप्रोक्तं लिंगेऽस्मिन्दानमुत्तमम् ॥ ७ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे सुवर्णमेदिनीदानं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ सनत्कुमार उवाच ॥ अथान्यत्संप्रवक्ष्यामि कल्पपादपमुत्तमम् ॥ शतनिष्केण कृत्वैवं सर्वशाखासमन्वितम् ॥ १ ॥ शाखानां विविधं कृत्वा मुक्तादामाद्यलंबनम् ॥ दिव्यैर्मारकतैश्चैव चांकुराग्रं प्रविन्यसेत् ॥ २ ॥ प्रवालं कारयेद्विद्वान्प्रवालेन द्रुमस्य तु ॥ फलानि पद्मरागैश्च परितोऽस्य सुशोभयेत् ॥ ३ ॥ मूलं च नीलरत्नेन वज्रेण स्कंधमुत्तमम् ॥ वैडूर्येण द्रुमाग्रं च पुष्परागेण मस्तकम् ॥ ४ ॥ गोमेदकेन वै कंदं सूर्यकांतेन सुव्रत ॥ चन्द्रकांतेन वा वेदिं द्रुमस्य स्फटिकेन वा ॥ ५ ॥ वितस्तिमात्रमायामं वृक्षस्य परिकीर्तितम् ॥ शाखाष्टकस्य मानं च विस्तारं चोर्ध्वतस्तथा ॥ ६ ॥ तन्मूले स्थापयेल्लिंगं लोकपालैः समावृतम् ॥ पूर्वोक्तवेदिमध्ये तु मंडले स्थाप्य पादपम् ॥ ७ ॥ पूजयेद्देवमीशानं लोकपालांश्च यत्नतः ॥ पूर्ववज्जपहोमाद्यं तुलाभारवदाचरेत् ॥ ८ ॥ निवेदयेद्द्रुमं शंभोर्योगिनां वाथ वा नृप ॥ भस्मांगिभ्योऽथ वा राजा सार्वभौमो भविष्यति ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे कल्पपादपदानविधिर्नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ सनत्कुमार उवाच ॥ गणेशेशं प्रवक्ष्यामि दानं पूर्वोक्तमंडपे ॥ संपूज्य देवदेवेशं लोकपालसमावृतम् ॥ १ ॥

प्रकांडं पुष्परागेण पीतरत्नेनेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ भस्मांगिभ्यो भस्मधारिद्विजेभ्यः ॥ ९ ॥ कल्पपादपदानं हि सार्वभौमत्वदायकम् । शिवतोषप्रदं स्यान्मे श्रवणात्फलदायकम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ लैंगोत्तरचतुस्त्रिंशे महादानेषु षष्ठकम् ॥ गणेशेशं महापुण्यं संक्षेपेण निरूप्यते ॥ सनत्कुमारो गणेशेशदानं कथयति—गणेशेशमित्यादिना ॥ १ ॥

विश्वेश्वरानष्टौ दिक्पालान् दशनिष्केण तत्संख्याकसुवर्णन सर्वाभरणसंयुतान्यथाशास्त्रं कृत्वा विधानतः संपूज्य अष्टदिक्ष्वष्टकुंडेषु पूर्ववद्धोममाचरेदित्यग्रिमेणान्वयः ॥ २ ॥ ॥ ३ ॥ उत्तरे उत्तरदिग्भागे कन्यां कुमारीमित्यर्थः । अनुक्रमात्स्वैः स्वैर्मंत्रैस्तत्तद्देवतामंत्रैः सर्वमंत्राणि सर्वदेवताप्रसादनानि प्रतिमारूपाणीत्यर्थः । दापयेद्दद्यादित्यर्थः । " मंत्रो वेदप्रभेदे स्याद्देवादीनां प्रसादने " इति विश्वः ॥ ४ ॥ दानफलं कथयति–दत्त्वैवमिति ॥ ५ ॥ गणेशेशाख्यदानं हि सर्वपातकनाशनम् ॥ शिवप्रीतिकरं भूया च्छ्रव

विश्वेश्वरान्यथाशास्त्रं सर्वाभरणसंयुतान् ॥ दशनिष्केण वै कृत्वा संपूज्य च विधानतः ॥ २ ॥ अष्टदिक्ष्वष्टकुंडेषु पूर्ववद्धोममाचरेत् ॥ पंचावरणमार्गेण पारंपर्यक्रमेण च ॥ ३ ॥ सप्तविप्रान्समभ्यर्च्य कन्यामेकां तथोत्तरे ॥ दापयेत्सर्वमंत्राणि स्वैः स्वैर्मंत्रैरनुक्रमात् ॥ ४ ॥ दत्त्वैवं सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ५ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे गणेशेशदानविधिनिरूपणं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

सनत्कुमार उवाच ॥ अथ ते संप्रवक्ष्यामि हेमधेनुविधिक्रमम् ॥ सर्वपापप्रशमनं ग्रहदुर्भिक्षनाशनम् ॥ १ ॥ उपसर्गप्रशमनं सर्वव्याधिनिवारणम् ॥ निष्काणां च सहस्रेण सुवर्णेन तु कारयेत् ॥ २ ॥ तदर्धेनापि वा सम्यक् तदर्धार्धेन वा पुनः ॥ शतेन वा प्रकर्तव्या सर्वरूपगुणान्विता ॥ ३ ॥ गोरूपं सुखुरं दिव्यं सर्वलक्षणसंयुतम् ॥ खुराग्रे विन्यसेद्वज्रं शृंगे वै पद्मरागकम् ॥ ४ ॥ भ्रुवोर्मध्ये न्यसेद्दिव्यं मौक्तिकं मुनिसत्तमाः ॥ वैडूर्येण स्तनाः कार्या लांगूलं नीलतः शुभम् ॥ ५ ॥ दंतस्थाने प्रकर्तव्यः पुष्परागः सुशोभनः ॥ पशुवत्कारयित्वा तु वत्सं कुर्यात्सुशोभनम् ॥ ६ ॥ सुवर्णदशनिष्केण सर्वरत्नसुशोभितम् ॥ पूर्वोक्तवेदिकामध्ये मंडलं परिकल्प्य तु ॥ ७ ॥ तन्मध्ये सुरभिं स्थाप्य सवत्सां सर्वतत्त्ववित् ॥ सवत्सां सुरभिं तत्र वस्त्रयुग्मेन वेष्टयेत् ॥ ८ ॥ संपूजयेद्वा गायत्र्या सवत्सां सुरभिं पुनः ॥ अथ वाग्निविधानेन होमं कुर्याद्यथाविधि ॥ ९ ॥ समिदाज्यविधानेनं पूर्ववच्छेषमाचरेत् ॥ शिवपूजा प्रकर्तव्या लिंगं स्थाप्य घृतादिभिः ॥ १० ॥

णात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ पंचत्रिंशे हि लिंगेऽत्र महादानेषु सप्तमम् ॥ सुवर्णधेनुदानं तु सविधानं निरूप्यते ॥ सनत्कुमारः सुवर्णधेनुदानं कथयति– अथेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ नीलतः नीलरत्नेनेत्यर्थः ॥ ५ ॥ गायत्र्या तत्संज्ञकमंत्रेण ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

शिवाय आदापयेद्भक्त्या निवेदयेदित्यर्थः ॥ ११ ॥ सुवर्णधेनुदानं वै सर्वोपद्रवनाशनम् ॥ शिवात्यंतप्रियं स्यान्मे श्रवणात्फलदायकम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां पंचत्रिंशोऽध्यायः ॥ ३५ ॥ लैंगे षट्त्रिंशदध्याये महादानेषु चाष्टमम् ॥ लक्ष्मीदानं महैश्वर्यदायकं हि निरूप्यते ॥ सनत्कुमारो लक्ष्मीदानं कथयति—लक्ष्मीत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ब्राह्मणोत्तमैरन्यैर्त्विग्भिः ॥ ६ ॥ तस्या लक्ष्म्या इत्यर्थः ॥ ७ ॥ ८ ॥ भक्तो योगी आचार्यस्ततः लक्ष्मी

गामालभ्य च गायत्र्या शिवायादापयेच्छुभाम् ॥ दक्षिणा च प्रकर्तव्या त्रिंशन्निष्का महामते ॥ ११ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे हेमधेनुदानविधिनिरूपणं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ सनत्कुमार उवाच ॥ लक्ष्मीदानं प्रवक्ष्यामि महदैश्वर्यवर्धनम् ॥ पूर्वोक्तमंडपे कार्यं वेदिकोपरिमंडले ॥ १ ॥ श्रीदेवीमतुलां कृत्वा हिरण्येन यथाविधि ॥ सहस्रेण तदर्धेन तदर्धार्धेन वा पुनः ॥ २ ॥ अष्टोत्तरशतेनापि सर्वलक्षणसंयुताम् ॥ मंडले विन्यसेल्लक्ष्मीं सर्वालंकारसंयुताम् ॥ ३ ॥ तस्यास्तु दक्षिणे भागे स्थंडिले विष्णुमर्चयेत् ॥ अर्चयित्वा विधानेन श्रीसूक्तेन सुरेश्वरीम् ॥ ४ ॥ अर्चयेद्विष्णुगायत्र्या विष्णुं विश्वगुरुं हरिम् ॥ आराध्य विधिना देवीं पूर्ववद्धोममाचरेत् ॥ ५ ॥ समिद्धुत्वा विधानेन आज्याहुतिमथाचरेत् ॥ पृथगष्टोत्तरशतं होमयेद्ब्राह्मणोत्तमैः ॥ ६ ॥ आहूय यजमानं तु तस्याः पूर्वदिशि स्थले ॥ तस्मै तां दर्शयेद्देवीं दंडवत्प्रणमेत्क्षितौ ॥ ७ ॥ प्रणम्य विष्णुं तत्रस्थं शिवं पूर्ववदर्चयेत् ॥ तस्या विंशतिभागं तु दक्षिणा परिकीर्तिता ॥ ८ ॥ तदर्धांशं तु दातव्यमितरेषां यथार्हतः ॥ ततस्तु होमयेच्छंभुं भक्तो योगी विशेषतः ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे लक्ष्मीदानविधिनिरूपणं नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ सनत्कुमार उवाच ॥ अथातः संप्रवक्ष्यामि तिलधेनुविधिक्रमम् ॥ पूर्वोक्तमंडपे कुर्याच्छिवपूजां तु पश्चिमे ॥ १ ॥ तस्याग्रे मध्यतो भूमौ पद्ममालिख्य शोभनम् ॥ वस्त्रैराच्छादितं पद्मं तन्मध्ये विन्यसेच्छुभम् ॥ २ ॥ तिलपुष्पं तु कृत्वाथ हेमपद्मं विनिक्षिपेत् ॥ त्रिंशन्निष्केण कर्तव्यं तदर्धार्धेन वा पुनः ॥ ३ ॥

दानोत्तरं शंभुं होमयेद्यजमानेन होमं कारयेदित्यर्थः ॥ ९ ॥ लक्ष्मीदानं हि परमं महदैश्वर्यवर्धनम् ॥ शिवामोदकरं भूयाच्छ्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ सप्तत्रिंशेऽत्र दानेषु महत्सु नवमं शुभम् ॥ तिलधेनुप्रदानं हि त्रिविधं सन्निरूप्यते ॥ सनत्कुमारस्तिलधेनुदानं कथयति—अथात इत्यादिना ॥ १ ॥ २ ॥ ३ ॥

तं हेमपद्मविग्रहमाराध्य संपूज्यत्यर्थः ॥ ४ ॥ ५ ॥ विभूषिते रत्नालंकृते ॥ ६ ॥ ७ ॥ तिलाद्यानि तिलप्रभृतीनीत्यर्थः । शतपलं तत्प्रमाणमेकादशांशकं विभिद्य कृतामिति शेषः । कांस्यपात्रमिक्षुदंडं च दातव्यमित्यग्रिमेणान्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ असौ नृपो राजा पद्मं विन्यस्य शेषं चाकारयेदाचार्यद्वारा कुर्यादित्यर्थः ॥ १५ ॥ पंचनिष्केण तत्संख्याकसुवर्णेन भूषणमाभरणरूपा दक्षिणा प्रदातव्येत्यन्वयः ॥ १६ ॥ तिलधेनुप्रदानं हि रुद्रादिगणवल्लभम् ॥ शिवतुष्टिकरं

पंचनिष्केण कर्तव्यं तदर्धार्धेन वा पुनः ॥ तमाराध्य विधानेन गंधपुष्पादिभिः क्रमात् ॥ ४ ॥ पद्मस्योत्तरदिग्भागे विप्रानेकादश न्यसेत् ॥ तानभ्यर्च्य विधानेन गंधपुष्पादिभिः क्रमात्॥ ५॥ आच्छादनोत्तरासंगं विप्रेभ्यो दापयेत्क्रमात् ॥ उष्णीषं च प्रदातव्यं कुंडले च विभूषिते ॥ ६ ॥ हेमांगुलीयकं दत्त्वा ब्राह्मणेभ्यो विधानतः ॥ एकं दश च वस्त्राणि तेषामग्रे प्रकीर्य च ॥ ७ ॥ तेषु वस्त्रेषु निःक्षिप्य तिलाद्यानि पृथक्पृथक् ॥ कांस्यपात्रं शतपलं विभिद्यैकादशांशकम् ॥ ८ ॥ इक्षुदंडं च दातव्यं ब्राह्मणेभ्यो विशेषतः ॥ गोशृंगे तु हिर ण्येन द्विनिष्केण तु कारयेत् ॥ ९ ॥ रजतेन तु कर्तव्याः खुरा निष्कद्वयेन तु ॥ एवं पृथक्पृथग् दत्त्वा तत्तिलेषु विनिक्षिपेत् ॥ १० ॥ रुद्रैकादशमंत्रैस्तु रुद्रेभ्यो दापयेत्तदा ॥ पद्मस्य पूर्वदिग्भागे विप्रान्द्वादश पूजितान् ॥ ११ ॥ एतेनैव तु मार्गेण तेषु श्रद्धासमन्वितः ॥ द्वादशादित्यमंत्रैश्च दापयेदेवमेव च ॥१२॥ पूर्ववद्दक्षिणे भागे विप्रान्षोडश संस्थितान् ॥ मूर्तिं विघ्नेशमंत्रैश्च दापयेत्पूर्ववत्पुनः॥१३॥ यजमानेन कर्तव्यं सर्वमेतद्यथाक्रमम् ॥ केवलं रुद्रदानं वा अदित्येभ्योऽथ वा पुनः ॥ १४ ॥ मूर्त्यादीनां च वा देयं यथाविभवविस्त रम् ॥ पद्मं विन्यस्य राजासौ शेषं वा कारयेन्नृपः ॥ १५ ॥ दक्षिणा च प्रदातव्या पंचनिष्केण भूषणम् ॥ १६ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे तिलधेनुदानविधिनिरूपणं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ सनत्कुमार उवाच ॥ गोसहस्रप्रदानं च वदामि शृणु सुव्रत॥ गवां सहस्रमादाय सवत्सं सगुणं शुभम्॥ १ ॥तास्त्वभ्यर्च्य यथाशास्त्रमष्टौ सम्यक्प्रयत्नतः ॥ तासां शृंगाणि हेम्नाथ प्रतिनिष्केण बंधयेत्॥ २ ॥

स्यान्मे श्रवणात्फलदायकम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ अष्टत्रिंशेऽत्र दशमं महादानेषु शोभनम् ॥ गोसहस्रप्रदानं हि वर्ण्यते सविधानकम् ॥ सनत्कुमारो गोसहस्रदानं कथयति–गोसहस्रमित्यादिना ॥ १ ॥ ताः सहस्रं गाः अभ्यर्च्य सम्यगष्टौ प्रयत्नतः यथाशास्त्रं पूजये दिति शेषः । तासामष्टगवीनाम् ॥ २ ॥

रजतेन निष्करजतेन खुरान्कंठदेशतः कंठदेशे प्रतिनिष्केण तत्संख्याकसुवर्णेन च बंधयेत् कर्णे शोभनं वज्रं वज्राभरणं कर्तव्यमित्यन्वयः ॥ ३ ॥ शिवाय विप्रेभ्यश्च गा इति शेषः । दद्याद्दक्षिणां च पृथक्पृथग्दद्यादित्यनुषंगः । दक्षिणामानं कथयति–दशनिष्कमित्यादिना ॥४॥५ ॥ ६ ॥ ७ ॥ ८ ॥ तद्रोमवर्षैः संख्या येषां तानि दिनादि तद्रोमवर्षसंख्यानि स्वर्गलोके महीयते पूजां लभत इत्यर्थः ॥ ९ ॥ मुख्याष्टगोभिः सहितं गोसहस्रप्रदानकम् ॥ सदाशिवप्रियं मेऽस्तु श्रवणात्फलदायकम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥ एकोनचत्वारिंशेऽस्मिन्दशैकं विजयावहम् ॥ हिरण्याश्वमहादानं यथाविधि निरूप्यते ॥

खुरांश्च रजतेनैव बंधयेत्कंठदेशतः ॥ प्रतिनिष्केण कर्तव्यं कर्णे वज्रं च शोभनम् ॥ ३ ॥ शिवाय दद्याद्विप्रेभ्यो दक्षिणां च पृथक्पृथक् ॥ दशनिष्कं तदर्धं वा तस्यार्धार्धमथापि वा ॥४॥ यथाविभवविस्तारं निष्कमात्रमथापि वा ॥ वस्त्रयुग्मं च दातव्यं पृथग्विप्रेषु शोभनम् ॥५॥ गावश्चाराध्य यत्नेन दातव्याः सुमनोरमाः ॥ एवं दत्त्वा विधानेन शिवमभ्यर्च्य शंकरम् ॥ ६ ॥ जपेदग्रे यथान्यायं गवां स्तवमनुत्तमम् ॥ गावो ममाग्रतो नित्यं गावो नः पृष्ठतस्तथा ॥ ७ ॥ हृदये मे सदा गावो गवां मध्ये वसाम्यहम् ॥ इति कृत्वा द्विजाग्र्येभ्यो दत्त्वा गत्वा प्रदक्षिणम् ॥ ८ ॥ तद्रोमवर्षसंख्यानि स्वर्गलोके महीयते ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे गोसहस्रप्रदानं नामाष्टत्रिंशोऽध्यायः ॥३८॥ सनत्कुमार उवाच ॥ हिरण्याश्वप्रदानं च वदामि विजयावहम् ॥ अश्वमेधात्पुनः श्रेष्ठं वदामि शृणु सुव्रत ॥१॥ अष्टोत्तरसहस्रेण अष्टोत्तरशतेन वा ॥ कृत्वाश्वं लक्षणैर्युक्तं सर्वालंकारसंयुतम् ॥२॥ पंचकल्याणसंपन्नं दिव्याकारं तु कारयेत् ॥ सर्वलक्षणसंयुक्तं सर्वांगैश्च समन्वितम् ॥ ३ ॥ सर्वायुधसमोपेतमिंद्रवाहनमुत्तमम् ॥ तन्मध्यदेशे संस्थाप्य तुरंगं स्वगुणान्वितम् ॥ ४ ॥ उच्चैःश्रवसकं मत्वा भक्त्या चैव समर्चयेत् ॥ तस्य पूर्वदिशाभागे ब्राह्मणं वेदपारगम् ॥ ५ ॥ सुरेंद्रबुद्ध्या संपूज्य पंचनिष्कं प्रदापयेत् ॥ स चाश्वः शिवभक्ताय दातव्यो विधिनैव तु ॥ ६ ॥ सुवर्णाश्वं प्रदत्त्वा तु आचार्यमपि पूजयेत् ॥ यथाविभवविस्तारं पंचनिष्कमथापि वा ॥ ७ ॥ दीनांधकृपणानाथबालवृद्धकृशातुरान् ॥ तोषयेदन्नदानेन ब्राह्मणांश्च विशेषतः ॥ ८ ॥

सनत्कुमारो हिरण्याश्वदानं कथयति–हिरण्याश्वेत्यादिना ॥ १ ॥ २ ॥ पंचकल्याणसंपन्नं पादमुखेषु श्वेतवर्णमित्यर्थः ॥ ३ ॥ सर्वायुधसमोपेतमुत्तममिंद्रवाहनमिंद्ररथं कृत्वेति शेषः । तन्मध्यदेशे रथाग्रमध्यदेशे तुरंगं संस्थाप्य उच्चैःश्रवसकं मत्वा भक्त्या समर्चयेदित्यग्रिमेणान्वयः ॥ ४ ॥ ५ ॥ ६ ॥ आचार्यमपि यथाविभवविस्तरं पूजयेदथापि वा पञ्चनिष्कं तत्संख्यसुवर्णं दद्यादिति शेषः ॥ ७ ॥ ८ ॥

फलं कथयति—एतदिति ॥ ९ ॥ हिरण्याश्वप्रदानं हि ऐंद्रभोगसमर्पकम् ॥ शिवतोषकरं भूयाच्छ्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायाम् एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ लैंगे चत्वारिंशकेऽस्मिन्महादानेषु चोत्तमम् ॥ कन्यादानं विधानेन द्वादशं सन्निरूप्यते ॥ सनत्कुमारः कन्यादानं कथयति—कन्यादानमित्यादिना ॥ १ ॥ मातापित्रोः कन्यामातापित्रोः महद्धनं दत्त्वा संवादं दानसमयं कृत्वा अथ आत्मीकृत्य स्वकीयां कृत्वेत्यर्थः ॥ २ ॥ अथ निमित्तानि चिह्नानि गोत्रनक्षत्रादिकान्समीक्ष्य विचार्येत्यर्थः । उभयोः कन्यावरयोश्चित्तं सस्पृहांतःकरणमालोक्य दृष्ट्वा श्रोत्रियाय वेदविदे ब्राह्मणायैव दातव्येत्यन्वयः ॥ ३ ॥

एतद्यः कुरुते भक्त्या दानमश्वस्य मानवः ॥ ऐंद्रान्भोगांश्चिरं भुक्त्वा रुचिरैश्वर्यवान्भवेत् ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे हिरण्याश्वदानं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ सनत्कुमार उवाच ॥ कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ॥ कन्यां लक्षणसंपन्नां सर्वदोषविवर्जिताम् ॥ १ ॥ मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत् ॥ आत्मीकृत्याथ संस्नाप्य वस्त्रं दत्त्वा शुभं नवम् ॥२॥ भूषणैर्भूषयित्वाथ गंधमाल्यैरथार्चयेत् ॥ निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकान् ॥ ३ ॥ उभयोश्चित्तमालोक्य उभौ संपूज्य यत्नतः ॥ दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ॥ ४ ॥ साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥ दासदासीधनाढ्यं च भूषणानि विशेषतः ॥ ५ ॥ क्षेत्राणि च धनं धान्य वासांसि च प्रदापयेत् ॥ यावंति देहे रोमाणि कन्यायाः संततो पुनः ॥ ६ ॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ७ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे कन्यादानविधिर्नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ सनत्कुमार उवाच ॥ हिरण्यवृषदानं च कथयामि समासतः ॥ वृषरूपं हिरण्येन सहस्रेणाथ कारयेत् ॥ १ ॥ तदर्धार्धेन वा धीमांस्तदर्धार्धेन वा पुनः ॥ अष्टोत्तरशतेनापि वृषभं धर्मरूपिणम् ॥ २ ॥

॥ ४ ॥ दासदासीधनैराढ्यं समृद्धगृहं दासदासीधनाढ्यं विशेषतः भूषणानि च क्षेत्राणि धनं धान्यं वासांसि च प्रदापयेदित्यग्रिमस्थैरन्वयः ॥५॥ कन्यादानफलमाह—यावंतीत्यादिना ॥ ६ ॥ रुद्रलोके महीयते पूजां लभत इत्यर्थः ॥ ७ ॥ कन्यादानं हि परमं रुद्रलोकसुखप्रदम् ॥ शिवप्रतोषकं स्यान्मे फलदं श्रवणादिना ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥ एकचत्वारिंशकेऽस्मिन्महादानं त्रयोदशम् ॥ हिरण्यवृषदानं हि विधिवत्परिकीर्त्यते ॥ सनत्कुमारो हिरण्यवृषदानं कथयति—हिरण्येत्यादिना ॥ १ ॥ २ ॥

ललाटे भाले अर्धचंद्रवत्कलारमणीया आकृतिर्यस्य तमर्धचंद्रकलाकृतिं पुंड्रं चित्रं स्फटिकेन तु कारयेदित्यन्वयः । "पुंड्रश्चित्रे भूमौ पुंडरीके" इति विश्वः ॥ ३ ॥ ककुद्घांसघंटानां समूहो घांटं तस्य वलयं कटकमित्यर्थः ॥ ४॥ वृषांकं शिवं किंकिणीवलयेन क्षुद्रघंटिकावलयेनावृतं वेष्टितम् ॥५॥६॥७॥८॥ वृषभः पूज्य संपूज्य शिवाय वा ब्राह्मणेभ्यो दातव्य इत्यन्वयः। अत्र दानस्य प्राधान्यात्तव्यप्रत्ययेन कर्मण उक्तत्वाद्वृषभशब्दात्प्रथमा । तदुक्तं हरिणा "प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यदा गुणे तदा तद्वत्" इति ॥९॥ फलं कथयति–एतद्य इति ॥१०॥ हिरण्यवृषदानं हि शिवानुचरकारकम् ॥ शिवप्रीतिकरं भूयाच्छ्रवणात्फलदं मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे

ललाटे कारयेत्पुंड्रमर्धचंद्रकलाकृतिम् ॥ स्फटिकेन तु कर्त्तव्यं खुरं तु रजतेन वै ॥ ३ ॥ ग्रीवां तु पद्मरागेण ककुद्गोमेदकेन च ॥ ग्रीवायां घांटवलयं रत्नचित्रं तु कारयेत् ॥४॥ वृषांकं कारयेत्तत्र किंकिणीवलयावृतम् ॥ पूर्वोक्तदेशकाले तु वेदिकोपरिमंडले ॥५॥ वृषेंद्रं स्थापयेत्तत्र पश्चिमामुखमग्रतः ॥ ईश्वरं पूजयेद्भक्त्या वृषारूढं वृषध्वजम् ॥६॥ वृषेंद्रं पूज्य गायत्र्या नमस्कृत्य समाहितः॥ तीक्ष्णशृंगाय विद्महे धर्मपादाय धीमहि ॥ तन्नो वृषः प्रचोदयात् ॥ ७ ॥ मंत्रेणानेन संपूज्य वृषं धर्मविवृद्धये ॥ होमयेच्च घृतान्नाद्यैर्यथाविभवविस्तरम् ॥ ८ ॥ वृषभः पूज्य दातव्यो ब्राह्मणेभ्यः शिवाय वा ॥ दक्षिणा चैव दातव्या यथावित्तानुसारतः॥९॥ एतद्यः कुरुते भक्त्या वृषदानमनुत्तमम् ॥ शिवस्यानुचरो भूत्वा तेनैव सह मोदते ॥ १० ॥ इति श्रीलिंगमहापुराणे उत्तरभागे सुवर्णवृषदानं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

सनत्कुमार उवाच ॥ गजदानं प्रवक्ष्यामि यथावदनुपूर्वशः ॥ द्विजाय वा शिवायाथ दातव्यः पूज्य पूर्ववत् ॥१॥ गजं सुलक्षणोपेतं हैमं वा राजतं तु वा ॥ सहस्रनिष्कमात्रेण तदर्धेनापि कारयेत् ॥ २ ॥ तदर्धार्धेन वा कुर्यात्सर्वलक्षणभूषितम् ॥ पूर्वोक्तदेशकाले च देवाय विनिवेदयेत् ॥ ३ ॥ अष्टम्यां वा प्रदातव्यं शिवाय परमेष्ठिने ॥ ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥ ४ ॥ शिवमुद्दिश्य दातव्यं शिवं संपूज्य पूर्ववत् ॥ एतद्यः कुरुते दानं शिवभक्तिसमाहितम् ॥ ५ ॥

शिवतोषिण्यां टीकायामेकचत्वारिंशोऽध्यायः ॥४१॥ द्विचत्वारिंश अध्याये महादानं चतुर्दशम् ॥ गजदानं विधानेन द्विविधं परिकीर्त्यते ॥ सनत्कुमारो गजदानं कथयति–गजेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ उक्तदेशकालाभावेऽपि अष्टम्यां परमेष्ठिने शिवाय गजदानमिति शेषः । प्रदातव्यं वा शिवमुद्दिश्य ब्राह्मणाय दातव्यमित्याग्रिमेणान्वयः । दरिद्रादिविशेषणान्युत्तरोत्तरपात्रश्रैष्ठ्यबोधकानि ॥ ४ ॥ दानकारिणः फलं कथयति–एतदित्यादिना ॥ ५ ॥

गजपतिः सार्वभौम इत्यर्थः ॥६॥ गजदानं विशेषेण स्वर्गसाम्राज्यदायकम् ॥ शिवप्रीतिकरं मेऽस्तु श्रवणेन फलप्रदम् ॥ इति श्रीलिं० महा० उ० भा० शिवतोषिण्यां टीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ त्रिचत्वारिंशदध्याये लोकपालाष्टकं परम् ॥ महादानं पंचदशं यथाविधि निरूप्यते ॥ सनत्कुमारो लोकपालाष्टकदानं कथयति-लोकपालाष्टकमित्यादिना ॥ १ ॥ दिव्यं स्तुत्यमित्यर्थः ॥२॥३॥४॥ अनाहतेष्वंबरेषु नववस्त्रेष्वित्यर्थः । " अनाहतं निष्प्रवाणि तंत्रकं च नवांबरे " इत्यमरः ॥५॥६॥७॥

स्थित्वा स्वर्गे चिरं कालं राजा गजपतिर्भवेत् ॥६॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे द्विचत्वारिंशोऽध्यायः॥४२॥ सनत्कुमार उवाच ॥ लोकपालाष्टकं दिव्यं साक्षात्परमदुर्लभम् ॥ सर्वसंपत्करं गुह्यं परचक्रविनाशनम् ॥ १ ॥ स्वदेशरक्षणं दिव्यं गजवाजिविवर्धनम् ॥ पुत्रवृद्धिकरं पुण्यं गोब्राह्मणहितावहम् ॥ २ ॥ पूर्वोक्तदेशकाले तु वेदिकोपरिमंडले ॥ मध्ये शिवं समभ्यर्च्य यथान्यायं यथाक्रमम् ॥ ३ ॥ दिग्विदिक्षु प्रकर्तव्यं स्थंडिलं वालुकामयम् ॥ अष्टौ विप्रान्समभ्यर्च्य वेदवेदांगपारगान् ॥४॥ जितेंद्रियान्कुलोद्भूतान्सर्वलक्षणसंयुतान् ॥ शिवाभिमुखमासीनाऽनाहतेष्वंबरेषु च ॥ ५ ॥ वस्त्रैराभरणैर्दिव्यैर्लोकपालकमंत्रकैः ॥ गंधपुष्पैः सुधूपैश्च ब्राह्मणानर्चयेत्क्रमात् ॥ ६ ॥ पूर्वतो होमयेदग्नौ लोकपालकमंत्रकैः ॥ समिद्घृताभ्यां होतव्यमग्निकार्यं क्रमेण वा ॥ ७ ॥ एवं हुत्वा विधानेन आचार्यः शिववत्सलः ॥ यजमानं समाहूय सर्वाभरणभूषितान् ॥८॥ तेन तान्पूजयित्वाथ द्विजेभ्यो दापयेद्धनम् ॥ पृथक्पृथक्तन्मंत्रैश्च दशनिष्कं च भूषणम् ॥९॥ दशनिष्केण कर्तव्यमासनं केवलं पृथक् ॥ स्नपनं तत्र कर्तव्यं शिवस्य विधिपूर्वकम् ॥१०॥ दक्षिणा च प्रदातव्या यथाविभवविस्तरम् ॥ एवं यः कुरुते दानं लोकेशानां तु भक्तितः ॥ लोकेशानां चिरं स्थित्वा सार्वभौमो भवेद्बुधः ॥ ११ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

शिववत्सलः शिवभक्तः ॥८॥ तन्मंत्रैर्लोकपालमंत्रैरित्यर्थः ॥ ९ ॥ दशनिष्केण तत्संख्यसुवर्णेन तत्र सुवर्णासन इत्यर्थः ॥ १० ॥ लोकेशानामष्टौ दिक्पालानां स्थानेष्विति शेषः । चिरं स्थित्वा बुधः सार्वभौमो भवेदित्यन्वयः ॥ ११ ॥ लोकपालाष्टकं दानमिहामुत्र फलप्रदम् ॥ शिवप्रतोषकं मेऽस्तु श्रवणात्फलदायकम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

चतुश्चत्वारिंशकेऽस्मिन्महादानेषु षोडशमु । त्रिमूर्तीनां प्रदानं हि सविधानं निरूप्यते ॥ सनत्कुमारस्त्रिमूर्तिदानं कथयति–अथेत्यादिना ॥ १ ॥ प्रणयात्परमभक्त्या कुंडं शिवकुंडं मध्ये यस्य तत्कुंडमध्यं तस्मिन्स्थंडिले शिवसन्निधौ शिवपार्श्वभागे पूर्वं विष्णुमतः परं पद्मयोनिमासाद्य विधिनोक्ताभ्यां मंत्राभ्यां प्रणवादिसमंत्रकं शिवमंत्रसहितं यथा स्यात्तथा अर्चयेदिति शेषमादायाग्रिमेणान्वयः । मंत्रान्कथयति–नारायणायेत्यादिना ॥२३॥ शिवाय हरये सर्वपापहारकायेत्यर्थः ॥४॥ सर्वद्रव्यं सकलहोमद्रव्यं द्वाभ्यां विष्णुपद्मयोनिभ्यां कुंडविधानतः पृथक्कुंडविधानेन होतव्यमित्यन्वयः ॥ ५ ॥ गुरुणा आचार्येण सह वेदपारगौ द्वौ ऋत्विजौ प्रकर्तव्यावित्यन्वयः । तान्ब्रह्मविष्णुमहेश्वरा नित्यर्थः ॥ ६ ॥ शतमष्टोत्तरं तत्सरव्यकसुवर्णं वस्त्राभरणसंयुक्तं वस्त्रभूषणसहितं सर्वालंकारसंयुतं स्रक्चंदनाद्यलंकारयुतमित्यर्थः ॥७॥ श्रीमानेको हि गुरुराचार्य इत्यर्थः ।

सनत्कुमार उवाच ॥ अथान्यत्संप्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ॥ पूर्वोक्तदेशकाले च मंडपे च विधानतः ॥ १ ॥ प्रणयात्कुंडमध्ये च स्थंडिले शिवसन्निधौ ॥ पूर्वं विष्णुं समासाद्य पद्मयोनिमतः परम् ॥ २ ॥ मंत्राभ्यां विधिनोक्ताभ्यां प्रणवादिसमंत्रकम् ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ ब्रह्मब्राह्मणवृद्धाय ब्रह्मणे विश्ववेधसे ॥ शिवाय हरये स्वाहा स्वधा वौषट् वषट् तथा ॥ ४ ॥ पूजयित्वा विधानेन पश्चाद्धोमं समाचरेत् ॥ सर्वद्रव्यं हि होतव्यं द्वाभ्यां कुंडविधानतः ॥५॥ ऋत्विजौ द्वौ प्रकर्तव्यौ गुरुणा वेदपारगौ ॥ तानुद्दिश्य यथान्यायं विप्रेभ्यो दापयेद्धनम् ॥६॥ शतमष्टोत्तरं तेभ्यः पृथक्पृथगनुत्तमम् ॥ वस्त्राभरणसंयुक्तं सर्वालंकारसंयुतम् ॥ ७ ॥ गुरुरेको हि वै श्रीमान् ब्रह्मा विष्णुर्महेश्वरः ॥ तेषां पृथक्पृथग्देयं भोजयेद्ब्राह्मणानपि॥८॥ शिवार्चना च कर्तव्या स्नपनादि यथाक्रमम् ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ऋषय ऊचुः ॥ एवं षोडश दानानि कथितानि शुभानि च ॥ जीवच्छ्राद्धक्रमोऽस्माकं वक्तुमर्हसि सांप्रतम् ॥१॥ सूत उवाच ॥ जीवच्छ्राद्धविधिं वक्ष्ये समासात्सर्वसंमतम् ॥ मनवे देवदेवेन कथितं ब्रह्मणा पुरा ॥ २ ॥ वसिष्ठाय च शिष्टाय भृगवे भार्गवाय च ॥ शृण्वंतु सर्वभावेन सर्वसिद्धिकरं परम् ॥ ३ ॥

ब्रह्मा एवं विष्णुर्महेश्वर इति विभाव्य इति शेषः । तेषां त्रिमूर्तीनां दानमिति शेषः । पृथक्पृथग्देयं ब्राह्मणानपि ब्राह्मणप्रभृतिदीनांधकृपणानित्यर्थः । भोजयेदित्यन्वयः॥८॥ यथाक्रमं पूर्वोक्तक्रमेण स्नपनादिशिवार्चना शिवपूजा च कर्तव्येत्यन्वयः ॥ ९ ॥ मूर्तित्रयप्रदानं हि सर्वेषामुपरि स्थितम् । शिवप्रीतिकरं मेस्तु श्रवणात्फलदं सदा ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ पंचचत्वारिंशकेऽस्मिञ्जीवच्छ्राद्धविधिः शुभः ॥ मन्वादिभ्यो ब्रह्मणोक्तः सफलो हि निरूप्यते ॥ ऋषयः षोडशदानकथनमनूद्य जीवच्छ्राद्धविधिमपृच्छन्–एवमिति ॥१॥२॥३॥

॥ ४ ॥ मृतस्य मरणस्य काला मृतकालस्तस्मिन्वार्धक्य इत्यर्थः ॥ ५ ॥ माहात्म्यमधिकारिणश्च कथयति–जीवच्छ्राद्धे इत्यादिना ॥ ६ ॥ ७ ॥ विधि कथयति–परीक्ष्ये त्यादिना । भुवि सैकतं स्थंडिलं वेदिमित्यर्थः ॥ ८ ॥ मध्यतो वेदिमध्ये हस्तमात्रेण हस्तप्रमाणेनायतं शुभकुंडं वा स्थंडिलमिषुमात्रमरत्निप्रमाणं कर्तव्यमित्यन्वयः ॥ ९ ॥ पुनः पुनः वारंवारमुपलिप्य अतिस्निग्धं कृत्वेत्यर्थः । विधानेन चालिप्य गोमयलेपनं कृत्वा अग्निं विधाय प्रतिष्ठाय अन्वाधाय समित्त्रयं गृहीत्वा सर्वतः हूयमानसर्वदेवताश्च

श्राद्धमार्गक्रमं साक्षाच्छ्राद्धार्हाणामपि क्रमम् ॥ विशेषमपि वक्ष्यामि जीवच्छ्राद्धस्य सुव्रताः ॥ ४ ॥ पर्वते वा नदीतीरे वने वायतनेऽपि वा ॥ जीवच्छ्राद्धं प्रकर्तव्यं मृतकाले प्रयत्नतः ॥ ५ ॥ जीवच्छ्राद्धे कृते जीवो जीवन्नेव विमुच्यते ॥ कर्म कुर्वन्नकुर्वन्वा ज्ञानी वाज्ञानवा नपि ॥ ६ ॥ श्रोत्रियोऽश्रोत्रियो वापि ब्राह्मणः क्षत्रियोऽपि वा ॥ वैश्यो वा नात्र संदेहो योगमार्गमतो यथा॥७॥ परीक्ष्य भूमिं विधिवद्गंध वर्णरसादिभिः ॥ शल्यमुद्धृत्य यत्नेनं स्थंडिलं सैकतं भुवि ॥८॥ मध्यतो हस्तमात्रेण कुंडं चैवायतं शुभम् ॥ स्थंडिलं वा प्रकर्तव्यमिषु मात्रं पुनःपुनः ॥ ९ ॥ उपलिप्य विधानेन चालिप्याग्निं विधाय च ॥ अन्वाधाय यथाशास्त्रं परिगृह्य च सर्वतः ॥ १० ॥ परिस्तीर्य स्व शाखोक्तं पारंपर्यक्रमागतम् ॥ समाप्याग्निमुखं सर्वं मंत्रैरेतैर्यथाक्रमम् ॥११॥ संपूज्य स्थंडिले वह्नौ होमयेत्समिदादिभिः ॥ आदौ कृत्वा समिद्धोमं चरुणा च पृथक्पृथक् ॥ १२ ॥ घृतेन च पृथक्पात्रे शोधितेन पृथक्पृथक् ॥ जुहुयादात्मनोद्धृत्य तत्त्वभूतानि सर्वतः॥१३॥ ॐ भूः ब्रह्मणे नमः ॥१४॥ ॐ भूः ब्रह्मणे स्वाहा ॥ १५ ॥ ॐ भुवः विष्णवे नमः ॥१६॥ ॐ भुवः विष्णवे स्वाहा ॥ १७ ॥ ॐ स्वः रुद्राय नमः ॥ १८ ॥ ॐ स्वः रुद्राय स्वाहा ॥ १९ ॥ ॐ महः ईश्वराय नमः ॥ २० ॥ ॐ महः ईश्वराय स्वाहा ॥ २१ ॥ ॐ जनः प्रकृतये नमः ॥ २२ ॥ ॐ जनः प्रकृत्यै स्वाहा ॥ २३ ॥ ॐ तपः मुद्गलाय नमः ॥ २४ ॥ ॐ तपः मुद्गलाय स्वाहा ॥ २५ ॥ ॐ ऋतं पुरुषाय नमः ॥ २६ ॥ ॐ ऋतं पुरुषाय स्वाहा ॥ २७ ॥ ॐ सत्यं शिवाय नमः ॥ २८ ॥

यथाशास्त्रं परिगृह्येत्यन्वयः ॥ १० ॥ एतैर्वक्ष्यमाणमंत्रैरित्यर्थः । यथाक्रमं स्थंडिले वेद्यां संपूज्य वह्नौ समिदादिभिर्होमयेदित्यग्रिमेणान्वयः ॥ ११ ॥ द्रव्यहोमक्रमं कथयति आदावित्यादिना ॥ १२ ॥ पृथक्पात्रे आज्यस्थाल्यां शोधितेन संस्कृतेनेत्यर्थः । सर्वतस्तत्त्वभूतान्यात्मना मनसा उद्धृत्य विचार्य जुहुयादित्यन्वयः ॥१३॥ पृजाहवनमंत्रान् क्रमशः कथयति–ओं भूरित्यादिना ॥१४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

ॐ सत्यं शिवाय स्वाहा ॥ २९ ॥ ॐ शर्व धरां मे गोपाय घ्राणे गंधं शर्वाय देवाय भूर्नमः ॥ ३० ॥ ॐ शर्व धरां मे गोपाय घ्राणे गंधं शर्वाय भूः स्वाहा॥३१॥ शर्व धरां मे गोपाय घ्राणे गंधं शर्वस्य देवस्य पत्न्यै भूर्नमः ॥३२॥ ॐ शर्व धरां मे गोपाय घ्राणे गंधं शर्वपत्न्यै भूः स्वाहा ॥ ३३ ॥ ॐ भव जलं मे गोपाय जिह्वायां रसं भवाय देवाय भुवो नमः ॥३४ ॥ ॐ भव जलं मे गोपाय जिह्वायां रसं भवाय देवाय भुवः स्वाहा ॥३५॥ ॐ भव जलं मे गोपाय जिह्वायां रसं भवस्य देवस्य पत्न्यै भुवो नमः॥३६॥ ॐ भव जलं मे गोपाय जिह्वायां रसं भवस्य पत्न्यै भुवः स्वाहा॥३७॥रुद्राग्निं मे गोपाय नेत्रे रूपं रुद्राय देवाय स्वरों नमः ॥३८॥ रुद्राग्निं मे गोपाय नेत्रे रूपं रुद्राय देवाय स्वः स्वाहा ॥ ३९ ॥ रुद्राग्निं मे गोपाय नेत्रे रूपं रुद्रस्य पत्न्यै स्वरों नमः ॥ ४० ॥ रुद्राग्निं मे गोपाय नेत्रे रूपं रुद्रस्य देवस्य पत्न्यै स्वः स्वाहा ॥ ४१ ॥ उग्र वायुं मे गोपाय त्वचि स्पर्शं उग्राय देवाय महर्नमः ॥ ४२ ॥ उग्र वायुं मे गोपाय त्वचि स्पर्शमुग्राय देवाय महः स्वाहा ॥ ४३ ॥ उग्र वायुं मे गोपाय त्वचि स्पर्शमुग्रस्य देवस्य पत्न्यै महरों नमः ॥ ४४ ॥ ॐ उग्र वायुं मे गोपाय त्वचि स्पर्शमुग्रस्य देवस्य पत्न्यै महः स्वाहा ॥ ४५ ॥ भीम सुषिरं मे गोपाय श्रोत्रे शब्दं भीमाय देवाय जनो नमः ॥४६ ॥ भीम सुषिरं मे गोपाय श्रोत्रे शब्दं भीमाय देवाय जनः स्वाहा ॥ ४७ ॥ भीम सुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य पत्न्यै जनो नमः ॥ ४८ ॥ भीम सुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य देवस्य पत्न्यै जनः स्वाहा ॥ ४९ ॥ ईश रजो मे गोपाय द्रव्ये तृष्णामीशाय देवाय तपो नमः ॥५०॥ ईश रजो मे गोपाय द्रव्ये तृष्णामीशाय देवाय तपः स्वाहा ॥ ५१ ॥ रजो मे गोपाय द्रव्ये तृष्णामीशस्य पत्न्यै तपो नमः ॥ ५२ ॥ ईश रजो मे गोपाय द्रव्ये तृष्णामीशस्य पत्न्यै तपः स्वाहा ॥५३॥ महादेव सत्यं मे गोपाय श्रद्धां धर्मे महादेवाय ऋतं नमः ॥ ५४ ॥ महादेव सत्यं मे गोपाय श्रद्धां धर्मे महादेवाय ऋतं स्वाहा ॥५५॥ महादेव सत्यं मे गोपाय श्रद्धां धर्मे महादेवस्य पत्न्यै ऋतं नमः ॥५६॥

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ विरिंच्याद्यं विरिंचिप्रथमं यथा स्यात्तथा एवं पूर्वोक्तपंचविंशद्देवतापूजनपूर्वकं पूर्ववत्पूर्वोक्तक्रमेण शिवाय मोक्षार्थं होतव्यमित्यन्वयः । पूर्वोक्तं विरिंच्याद्यं तत्प्रथमपूजाहवनमित्यर्थः । सृष्टिमार्गेषु उत्पत्तिमार्गेषु चकारात्स्थितिसंहारमार्गेषु विष्णुरुद्राद्यं ज्ञेयमिति शेषः ।तदधिकारिणो ब्रह्मचारिगृहस्थयतयः पंचाक्षरजपविधानोक्ताः बोध्याः । अत्र श्राद्धविधानाद्यतिर्मुमुक्षुर्ज्ञेयः ॥ ६४ ॥ पूर्ववन्मंत्रैः पूर्वोक्तमंत्रैरित्यर्थः ॥६५॥ समाहितः स्वस्थः चर्वतमाज्यपूर्वं समिदंतं समिन्मध्यं यथा स्यात्तथा होतव्यमित्यनुषंगः । चर्वेनमयं द्विपाच्छ्लोकः ॥ ६६ ॥ हवनमंत्रान् कथयति—ओमित्यादिना ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ एवं ॐ शर्वधरा मे

महादेव सत्यं म गोपाय श्रद्धां धर्मं महादेवस्य पत्न्यै ऋतं स्वाहा॥५७॥पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतये देवाय सत्यं नमः ॥ ५८ ॥ पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतये देवस्य सत्यं स्वाहा ॥५९॥ ॐ पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपते देवस्य पत्न्यै सत्यं नमः ॥ ६० ॥ ॐ पशुपते पाशं म गोपाय भोक्तृत्वभोग्यं पशुपतेर्देवस्य पत्न्यै सत्यं स्वाहा ॥ ६१ ॥ ॐ शिवाय नमः॥६२॥ ॐ शिवाय सत्यं स्वाहा ॥६३॥एवं शिवाय होतव्यं विरिंच्याद्यं च पूर्ववत् ॥ विरिंचाद्यं च पूर्वोक्तं सृष्टिमार्गेषु सुव्रताः॥६४॥ पुनः पशुपतेः पत्नीं तथा पशुपतिं क्रमात् ॥ संपूज्य पूर्ववन्मंत्रैर्होतव्यं च क्रमेण वै॥६५॥चर्वंतमाज्यपूर्वं च समिदंतं समाहितः ॥६६॥ॐ शर्व धरां मे छिंधि प्राणे गंधं छिंधि मेधं जहि भूः स्वाहा ॥६७॥ भुवः स्वाहा॥६८॥ स्वः स्वाहा ॥६९॥भूर्भुवः स्वः स्वाहा॥७०॥ एवं पृथक्पृथग्घुत्वा केवलेन घृतेन वा ॥ सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥ ७१॥ विरजा च घृतेनैव शतमष्टोत्तरं पृथक् ॥ प्राणादिभिश्च जुहुयाद्घृतेनैव तु केवलम् ॥ ७२ ॥ ॐ प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणाय स्वाहा ॥ ७३ ॥ प्राणाधिपतये रुद्राय वृषांतकाय स्वाहा ॥ ७४॥ ॐ भूः स्वाहा ॥ ७५ ॥ ॐ भुवः स्वाहा॥७६॥ ॐ स्वः स्वाहा ॥७७॥ भूर्भुवः स्वः स्वाहा॥७८॥ एवं क्रमेण जुहुयाच्छ्राद्धोक्तं च यथाक्रमम् ॥ सप्तमेऽहनि योगींद्राञ्छ्राद्धार्हानपि भोजयेत् ॥ ७९ ॥

छिंधीति. मंत्रपूर्वं व्याहृतिभिरित्यर्थः । पृथक्पृथक्केवलेन वा घृतेन सहस्रं वा तदर्धमष्टोत्तरशतं तु वा हुत्वा विरजा तत्संज्ञकदीक्षामंत्रैरित्यर्थः । अष्टोत्तरशतं पृथक् जुहुयादिति शेषमादायाग्रिमेणान्वयः ॥ ७१ ॥ प्राणादिभिः प्राणे निविष्ट इत्यादिपंचमंत्रैः केवलं घृतेनैव तु जुहुयादित्यन्वयः ॥ ७२ ॥ ७३॥७४॥७५॥७६॥७७॥७८॥एवं क्रमेण पूर्वोपदर्शितक्रमेण श्राद्धोक्तं सामान्यश्राद्धोक्तं च यथाक्रमं जुहुयादित्यन्वयः । सप्तमेऽहनि सप्तमदिने योगींद्राञ्छ्राद्धार्हाञ्छ्राद्धयोग्यब्राह्मणानपि भोजयेदित्यन्वयः ॥ ७९ ॥

शर्वादीनां विप्राणां शर्वाद्यष्टदेवताकब्राह्मणादीनामित्यर्थः ॥ ८० ॥ दासीदासगणश्च दातव्यो दक्षिणामपि दद्यादित्यनुषंगः ॥ ८१ ॥ अष्टप्रकारतः शर्वाद्यष्टमूर्तिप्रकारेणेत्यर्थः ॥८२॥८३॥श्राद्धकारिमाहात्म्यं कथयति—मृत इत्यादिना॥८४॥८५॥८६॥८७॥८८॥८९॥९०॥श्राद्धविधानप्राप्तिक्रमं कथयति—ब्रह्मणेत्यादिना॥९१॥तेन ब्रह्मणा॥९२॥ ॥९३॥ माहात्म्यमधिकारिणं च कथयति—एतदिति । ब्रह्मसिद्धिदं मोक्षप्रदं मुनिपुत्राय जितेंद्रियाय दातव्यमभक्ताय अश्रद्दधानाय नेत्यन्वयः॥९४॥जीवच्छ्राद्धविधिः शैवो

शर्वादीनां च विप्राणां वस्त्राभरणकंबलान् ॥ वाहनं शयनं यानं कांस्यताम्रादिभाजनम् ॥ ८० ॥ हैमं च राजतं धेनुं तिलान् क्षेत्रं च वैभवम् ॥ दासीदासगणश्चैव दातव्यो दक्षिणामपि ॥ ८१ ॥ पिंडं च पूर्ववद्द्यात्पृथगष्टप्रकारतः ॥ ब्राह्मणानां सहस्रं च भोजयेच्च सदक्षिणम्॥ ८२ ॥ एकं वा योगनिरतं भस्मनिष्ठं जितेंद्रियम् ॥ त्र्यहं चैव तु रुद्रस्य महाचरुनिवेदनम्॥८३॥ विशेष एवं कथित अशेषश्राद्धचोदितः ॥ मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम् ॥ ८४ ॥ नित्यनैमित्तिकादीनि कुर्याद्वा संत्यजेत्तु वा ॥ बांधवेऽपि मृते तस्य शौचाशौचं न विद्यते ॥ ८५ ॥ सूतकं च न संदेहः स्नानमात्रेण शुद्ध्यति ॥ पश्चाज्जाते कुमारे च स्वे क्षेत्रे चात्मनो यदि ॥ ८६ ॥ तस्य सर्वं प्रकर्तव्यं पुत्रोऽपि ब्रह्मविद्भवेत् ॥ कन्यका यदि संजाता पश्चात्तस्य महात्मनः ॥ ८७ ॥ एकपर्णा इव ज्ञेया अपर्णा इव सुव्रता ॥ भवत्येव न संदेहस्तस्याश्चान्वयजा अपि॥८८॥ मुच्यंते नात्र संदेहः पितरो नरकादपि॥मुच्यंते कर्मणानेन मातृतः पितृतस्तथा ॥८९॥ कालं गते द्विजे भूमौ खनेच्चापि दहेत्तु वा॥पुत्रकृत्यमशेषं च कृत्वा दोषो न विद्यते॥९०॥कर्मणा चोत्तरेणैव गतिरस्य न विद्यते ॥ ब्रह्मणा कथितं सर्वं मुनीनां भावितात्मनाम् ॥९१॥ पुनः सनत्कुमाराय कथितं तेन धीमता ॥ कृष्णद्वैपायनायैव कथितं ब्रह्मसूनुना॥ ९२ ॥ प्रसादात्तस्य देवस्य वेदव्यासस्य धीमतः ॥ ज्ञातं मया कृतं चैव नियोगादेव तस्य तु ॥ ९३ ॥ एतद्वः कथितं सर्वं रहस्यं ब्रह्मसिद्धिदम् ॥ मुनिपुत्राय दातव्यं न चाभक्ताय सुव्रताः॥९४॥इति श्रीलिंगमहापुराणे उत्तरभागे जीवच्छ्राद्धविधिर्नाम पंचचत्वारिंशत्तमोऽध्यायः॥४५॥

ऋषय ऊचुः ॥ जीवच्छ्राद्धविधिः प्रोक्तस्त्वया सूत महामते ॥ मूर्खाणामपि मोक्षार्थमस्माकं रोमहर्षण ॥ १ ॥

ब्रह्मसिद्धिप्रदायकः ॥ सांबप्रसादाद्भवतु यथोक्तफलदो मम ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ षट्चत्वारिंशदध्याये रुद्रादिस्थापनाविधेः ॥ प्रश्नः सूतप्रशंसा च लिंगश्रैष्ठ्यं निरूप्यते ॥ ऋषयो रुद्रादिप्रतिष्ठाविधिमपृच्छन्—जीवच्छ्राद्धमित्यादिना । मूर्खाणामज्ञानिनामित्यर्थः ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ सूतं प्रशंसंति—भवानित्यादिना ॥ ७ ॥ ८ ॥ एकः केवलः समस्तुल्यः अभिन्नस्तद्रूप एवेत्यर्थः ॥ ९ ॥ १० ॥ विस्मय औत्सुक्यप्रहर्ष इत्यर्थः ॥ ११ ॥ अथानंतरमंतरिक्षे विपुला महती सरस्वती देवी मुनीनामयं प्रश्नः अलं समीचीनः इति इत्यादिप्रकारं वाचा साक्षाद्बभूव ह प्रादुरासीदित्यर्थः ॥ १२ ॥ १३ ॥ लिंगस्थापनसन्मार्गे निहितः स्थापितो यः स्वायतासिः सुविस्तीर्णः खड्गस्तेन आशु ब्रह्मांडमुद्भिद्य लिंगस्थापक इति शेषः । अविशंकया निर्गच्छेन्मुक्तो भवेदित्यर्थः ॥ १४ ॥

रुद्रादित्यवसूनां च शक्रादीनां च सुव्रत ॥ प्रतिष्ठा कीदृशी शंभोर्लिंगमूर्तेश्च शोभना ॥ २ ॥ विष्णोः शक्रस्य देवस्य ब्रह्मणश्च महात्मनः ॥ अग्नेर्यमस्य निर्ऋतेर्वरुणस्य महाद्युतेः ॥ ३ ॥ वायोः सोमस्य यक्षस्य कुबेरस्यामितात्मनः ॥ ईशानस्य धरायाश्च श्रीप्रतिष्ठाथ वा कथम् ॥ ४ ॥ दुर्गाशिवाप्रतिष्ठा च हैमवत्याश्च शोभना ॥ स्कंदस्य गणराजस्य नंदिनश्च विशेषतः ॥ ५ ॥ तथान्येषां च देवानां गणानामपि वा पुनः ॥ प्रतिष्ठालक्षणं सर्वं विस्तराद्वक्तुमर्हसि ॥६॥ भवान्सर्वार्थतत्त्वज्ञो रुद्रभक्तश्च सुव्रत ॥ कृष्णद्वैपायनस्यासि साक्षात्त्वमपरां तनुः ॥ ७ ॥ सुमंतुर्जैमिनिश्चैव पैलश्च परमर्षयः ॥ गुरुभक्तिं तथा कर्तुं समर्थो रोमहर्षणः ॥ ८ ॥ इति व्यासस्य विपुला गाथा भागीरथीतटे ॥ एकः समो वा भिन्नो वा शिष्यस्तस्य महाद्युतेः ॥९॥ वैशंपायनतुल्योऽसि व्यासशिष्येषु भूतले ॥ तस्मादस्माकमखिलं वक्तुमर्हसि सांप्रतम् ॥१०॥ एवमुक्त्वा स्थितेष्वेव तेषु सर्वेषु तत्र च ॥ बभूव विस्मयोऽतीव मुनीनां तस्य चाग्रतः ॥ ११ ॥ अथांतरिक्षे विपुला साक्षाद्देवी सरस्वती ॥ अलं मुनीनां प्रश्नोऽयमिति वाचा बभूव ह ॥ १२ ॥ सर्वं लिङ्गमयं लोकं सर्वं लिंगे प्रतिष्ठितम् ॥ तस्मात्सर्वं परित्यज्य स्थापयेत्पूजयेच्च तत् ॥ १३ ॥ लिंगस्थापनसन्मार्गनिहितस्वायतासिना ॥ आशु ब्रह्मांडमुद्भिद्य निर्गच्छेदविशंकया ॥ १४ ॥ उपेंद्रांभोजगर्भेंद्रयमांबुधनदेश्वराः ॥ तथान्ये च शिवं स्थाप्य लिंगमूर्तिं महेश्वरम् ॥ १५ ॥ स्वेषुस्वेषु च पक्षेषु प्रधानास्ते यथा द्विजाः ॥ ब्रह्मा हरश्च भगवान्विष्णुर्देवी रमा धरा ॥ १६ ॥ लक्ष्मीर्धृतिः स्मृतिः प्रज्ञा धरा दुर्गा शची तथा ॥ रुद्राश्च वसवः स्कंदो विशाखः शाख एव च ॥ १७ ॥ नैगमेशश्च भगवाँल्लोकपाला ग्रहास्तथा ॥ सर्वे नंदिपुरोगाश्च गणा गणपतिः प्रभुः ॥ १८ ॥

द्विजाः शौनकादयः लिंगमूर्तिं महेश्वरं स्थाप्य यथा उपेंद्रो विष्णुः अंभोजगर्भो ब्रह्मा इंद्रो यमः अंबु वरुणः धनदः कुबेरश्च ईश्वराः स्वामिनस्तथान्ये पूर्वभागाष्टपंचाशदध्यायोक्ताः स्वेषुस्वेषु पक्षेषु प्रधानाः बभूवुरिति शेषमादायाग्रिमस्थैरन्वयः ॥ १५ ॥ सर्वं लिंगाश्रिता इति वर्णयति—ब्रह्मेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥तस्मात्पूर्वोक्तकारणात्सर्वं परित्यज्य यत्नेन अव्ययं लिंगं स्थापयेत्तेनेति शेषः। सर्वं स्थापितं यदि पूजयेत्सर्वं पूजितं स्यादिति शेषः ॥ २१ ॥ सर्वश्रेष्ठतरा ते लिंगाख्या मूर्तिरुत्तमा सांब ॥ स्थापनपूजननिरतानस्मान्ब्रह्मांडभेदकान्कुर्यात् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां षट्चत्वारिंशोऽध्यायः ॥४६॥ सप्तचत्वारिंशकेऽस्मिन् लिंगसंस्थापनाविधिः। वर्ण्यते हि समासेन फलश्रुतिसमन्वितः॥ सूतो लिंगप्रतिष्ठाविधिं पृष्टस्सूनशौनकादिसंवादेन कथयति–इति निशम्येत्यादिना । इति

पितरो मुनयः सर्वे कुबेराद्याश्च सुप्रभाः ॥ आदित्या वसवः सांख्या अश्विनौ च भिषग्वरौ ॥ १९ ॥ विश्वेदेवाश्च साध्याश्च पशवः पक्षिणो मृगाः ॥ ब्रह्मादिस्थावरांतं च सर्वं लिंगे प्रतिष्ठितम् ॥ २० ॥ तस्मात्सर्वं परित्यज्य स्थापयेल्लिंगमव्ययम् ॥ यत्नेन स्थापितं सर्वं पूजितं पूजयेद्यदि ॥ २१ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सूत उवाच ॥ इति निशम्य कृतांजलय स्तदा दिवि महामुनयः कृतनिश्चयाः॥ शिवतरं शिवमीश्वरमव्ययं मनसि लिंगमयं प्रणिपत्य ते॥ १॥सकलदेवपतिर्भगवानजो हरिरशेषपति र्गुरुणा स्वयम् ॥ मुनिवराश्च गणाश्च सुरासुरा नरवराः शिवलिंगमयाः पुनः ॥ २ ॥ श्रुत्वैवं मुनयः सर्वे षट्कुलीयाः समाहिताः ॥ संत्यज्य सर्वं देवस्य प्रतिष्ठां कर्तुमुद्यताः ॥ ३ ॥ अपृच्छन्सूतमनघं हर्षगद्गदया गिरा ॥ लिंगप्रतिष्ठां विपुलां सर्वे ते शंसितव्रताः ॥ ४ ॥ सूत उवाच ॥ प्रतिष्ठां लिंगमूर्तेर्वो यथावदनुपूर्वशः ॥ प्रवक्ष्यामि समासेन धर्मकामार्थमुक्तये ॥ ५ ॥ कृत्वैव लिंगं विधिना भुवि लिंगेषु यत्नतः ॥ लिंगमेकतमं शैलं ब्रह्मविष्णुशिवात्मकम् ॥ ६ ॥ हेमरत्नमयं वापि राजतं ताम्रजं तु वा ॥ सवेदिकंससूत्रं च सम्यग्विस्तृतमस्तकम् ॥ ७ ॥ विशोध्य स्थापयेद्भक्त्या सवेदिकमनुत्तमम् ॥ लिंगवेदी उमा देवी लिंगं साक्षान्महेश्वरः॥ ८ ॥ तयोः सपूजनादेव देवी देवश्च पूजितौ ॥ प्रतिष्ठया च देवेशो देव्या सार्धं प्रतिष्ठितः ॥ ९ ॥

पूर्वाध्यायोक्तमित्यर्थः ॥ १ ॥ २ ॥ षट्कुलीयाः षट्कुलोत्पन्नाः ॥ ३ ॥ ४ ॥ ५ ॥ भुवि भूलोके लिंगेषु वक्ष्यमाणशैलादिषु एकतमं ब्रह्मविष्णुशिवात्मकं लिंगं यत्नतः विधिना शैलं शिलामयं वा हेमरत्नमयं वा ताम्रजं तु सवेदिकं परिनालिकोपेतं ससूत्रं पंचसूत्रादियुक्तं विस्तृतमस्तकं कृत्वैव सम्यग्विशोध्य सवेदिकमनुत्तमं भक्त्या स्थापयेदिति तृतीयेनान्वयः ॥ ६ ॥ ७ ॥ लिंगमाहात्म्यं कथयति–लिंगवेदीत्यादिना ॥ ८ ॥ ९ ॥

तस्मादयं द्विपाच्छ्लेकः ॥ १० ॥ गणपतिस्तत्त्वगणस्वामीत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ स्थापनविधानं कथयति—समर्च्येत्यादिना । तीर्थमध्ये क्षेत्रमध्ये शिवासने वेदिकाया मित्यर्थः। "तीर्थं शास्त्राध्वरे क्षेत्रपायोपाध्यायमन्त्रिषु" इति विश्वः । कूर्चवस्त्रादिभिर्लिंगमाच्छाद्य लोकपालादिदैवत्यैः कलशैः पुनः ईशानेन प्रतिष्ठितं निहितं परितः

तस्मात्सवेदिकं लिंगं स्थापयेत्स्थापकोत्तमः ॥ १० ॥ मूले ब्रह्मा वसति भगवान्मध्यभागे च विष्णुः सर्वेशानः पशुपतिरजो रुद्रमूर्ति र्वरेण्यः ॥ तस्माल्लिंगं गुरुतरतरं पूजयेत्स्थापयेद्वा यस्मात्पूज्यो गणपतिरसौ देवमुख्यैः समस्तैः ॥ ११ ॥ गंधैः स्रग्धूपदीपैः स्नपनहुतबलि स्तोत्रमंत्रोपहारैर्नित्यं येऽभ्यर्च्चयंति त्रिदशवरतनुं लिंगमूर्तिं महेशम् ॥ गर्भाधानादिनाशक्षयभयरहिता देवगंधर्वमुख्यैः. सिद्धैर्वंद्याश्च पूज्या गणवरनमितास्ते भवंत्यप्रमेयाः ॥ १२ ॥ तस्माद्भक्त्योपचारेण स्थापयेत्परमेश्वरम् ॥ पूजयेच्च विशेषेण लिंगं सर्वार्थसिद्धये ॥ १३ ॥ समर्च्य स्थापयेल्लिंगं तीर्थमध्ये शिवासने ॥ कूर्चवस्त्रादिभिर्लिंगमाच्छाद्य कलशैः पुनः ॥ १४ ॥ लोकपालादिदैवत्यैः सकूर्चैः साक्षतैः शुभैः ॥ उत्कूर्चैः स्वस्तिकाद्यैश्च चित्रतंतुकवेष्टितैः ॥ १५ ॥ वज्रादिकायुधोपेतैः सवस्त्रैः सपिधानकैः ॥ लक्षयेत्परितो लिंग मीशानेन प्रतिष्ठितम् ॥ १६ ॥ धूपदीपसमोपेतं वितानविततांबरम् ॥ लोकपालध्वजैश्चैव गजादिमहिषादिभिः ॥ १७ ॥ चित्रितैः पूजितै श्चैव दर्भमाला च शोभना ॥ सर्वलक्षणसंपूर्णा तया बाह्ये च वेष्टयेत् ॥ १८ ॥ ततोधिवासयेत्तोये धूपदीपसमन्विते ॥ पंचाहं वा त्र्यहं वाथ एकरात्रमथापि वा ॥ १९ ॥ वेदाध्ययनसंपन्नो नृत्यगीतादिमंगलैः ॥ किंकिणीरवकोपेतं तालवीणारवैरपि ॥ २० ॥ ईक्षयेत्काल मव्यग्रो यजमानः समाहितः ॥ उत्थाप्य स्वस्तिकं ध्यायेन्मंडपे लक्षणान्विते ॥ २१ ॥ संस्कृते वेदिसंयुक्ते नवकुंडेन संवृते ॥ पूर्वोक्त विधिना युक्ते सर्वलक्षणसंयुते ॥ २२ ॥ अष्टमंडलसंयुक्ते दिग्ध्वजाष्टकसंयुते ॥ पूर्वोक्तलक्षणोपेतैः कुंडैः प्रागादितः क्रमात् ॥ २३ ॥ प्रधानं कुंडमीशान्यां चतुरस्रं विधीयते ॥ अथवा पंचकुंडैकं स्थंडिलं चैकमेव च ॥ २४ ॥

रक्षयेदिति तृतीयेनान्वयः ॥ १४ ॥ उद्गताः बहिर्निर्गताः कूर्चास्तैः स्वस्तिकानि आद्यानि मूलभूतानि येषां ते स्वस्तिकाद्यास्तैः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ उत्थाप्य स्वस्तिकं ध्यायेत् पुण्याहवाचनं कुर्यादित्यर्थः ॥ २१ ॥ २२ ॥ प्रागादितः क्रमात्पूर्वोक्तलक्षणोपेतैः कुंडैर्युक्त इति शेषः ॥ २३ ॥ २४ ॥

पंचतूलिभिः प्रकल्पिता पंचतूलीप्रकल्पिता तामत्युच्चामित्यर्थः ॥ २५ ॥ कांचनोपेतां सुवर्णपट्टिकायुक्तामित्यर्थः ॥२६॥ पूर्वं रत्नन्यासं कृते सति केवलं कलशं मुख्यकलशं न्यसेदित्यन्वयः ॥ २७ ॥ अथ रत्नन्यासे प्रसक्ते प्राप्ते सति नव शक्तयः वामाद्या नवशक्तीः स्थापयेदिति शेषः ॥ २८ ॥ पंचगव्येन संयुतैर्हिरण्याद्यैः सह सर्वधान्यसमोपेतं नवरत्नशिलायामाधारशिलायामपि विन्यसेदित्यन्वयः ॥ २९॥ ब्रह्मात्मकं लिंगं ब्रह्मलिंगं शिवगायत्रिसंयुतं स्थापयेदित्यन्वयः॥३०॥ब्रह्मभागं वेदिकाधोभागमित्यर्थः । वैष्णवं मध्यमागम्॥ ३१ ॥ तत्त्वत्रयोपेते सूत्रे वेदिकोर्ध्वपूर्वपश्चिमभागरूपे प्रणवेन प्रविन्यसेदित्यन्वयः । अन्यपक्षान्कथयति–सर्वमित्यादिना॥३२॥ ब्रह्मभिः पंचब्रह्ममंत्रैः ॥३३॥

यज्ञोपकरणैः सर्वैः शिवार्चायां हि भूषणैः ॥ वेदिमध्ये महाशय्यां पंचतूलीप्रकल्पिताम् ॥ २५ ॥ कल्पयेत्कांचनोपेतां सितवस्त्रावगुंठिताम् ॥ प्रकल्प्यैवं शिवं चैव स्थापयेत्परमेश्वरम् ॥ २६ ॥ प्राक्शिरस्कं न्यसेल्लिंगमीशानेन यथाविधि ॥ रत्नन्यासे कृते पूर्वं केवलं कलशं न्यसेत् ॥ २७ ॥ लिंगमाच्छाद्य वस्त्राभ्यां कूर्चेन च समंततः ॥ रत्नन्यासे प्रसक्तेऽथ वामाद्या नव शक्तयः ॥ २८ ॥ नवरत्नं हिरण्याद्यैः पंचगव्येन संयुतैः ॥ सर्वधान्यसमोपेतं शिलायामपि विन्यसेत् ॥ २९ ॥ स्थापयेद्ब्रह्मलिंगं हि शिवगायत्रिसंयुतम् ॥ केवलं प्रणवेनापि स्थापयेच्छिवमव्ययम् ॥ ३० ॥ ब्रह्मजज्ञानमंत्रेण ब्रह्मभागं प्रभोस्तथा ॥ विष्णुगायत्रिया भागं वैष्णवं त्वथ विन्यसेत् ॥ ३१ ॥ सूत्रे तत्त्वत्रयोपेते प्रणवेन प्रविन्यसेत् ॥ सर्वं नमः शिवायेति नमो हंसः शिवाय च ॥ ३२ ॥ रुद्राध्यायेन वा सर्वं परिमृज्य च विन्यसेत्॥ स्थापयेद्ब्रह्मभिश्चैव कलशान्वै समंततः ॥३३॥ वेदिमध्ये न्यसेत्सर्वान्पूर्वोक्तविधिसंयुतान् ॥ मध्यकुंभे शिवं देवीं दक्षिणे परमेश्वरीम्॥३४॥ स्कंदं तयोश्च मध्ये तु स्कंदकुंभे सुचित्रिते॥ब्रह्माणं स्कंदकुंभे वा ईशकुम्भे हरिं तथा॥३५॥अथवा शिवकुंभे च ब्रह्मांगानि च विन्यसेत्॥ शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ॥ ३६ ॥ ब्रह्माण्येवं समासेन हृदयादीनि चांबिका ॥ वेदिमध्ये न्यसेत्सर्वान्पूर्वोक्तविधिसंयुतान्॥ ३७ ॥ वर्धन्यां स्थापयेद्देवीं गंधतोयेन पूर्य च ॥ हिरण्यं रजतं रत्नं शिवकुंभे प्रविन्यसेत् ॥ ३८ ॥ वर्धन्यामपि यत्नेन गायत्र्यंगैश्च सुव्रताः ॥ विद्येश्वरान्दिशां कुंभे ब्रह्मकूर्चेन पूरिते ॥ ३९ ॥

प्रतिमास्थापनविधिं कथयति–मध्यकुंभ इत्यादिना ॥३४॥३५॥३६॥ हृदयादीनि हृदयाद्यंगानि अंबिका उमेत्यर्थः ॥ ३७ ॥ वर्धन्यां खड्गाकारायामित्यर्थः । गंधतोयेन पूर्य कलशमापूर्येत्यर्थः ॥ ३८ ॥ वर्धन्यामपि वर्धनीकुंभेऽपि यत्नेन गायत्र्यंगैः गायत्र्यंगमंत्रैः हिरण्यादिविद्येश्वरानष्टौ दिक्पालांश्च दिशाकुंभे प्रविन्यसेदित्यनुषंगः ॥ ३९ ॥

प्रणवादिनमोंतकं यथा स्यात्तथा अनंतेशादिदेवांश्च प्रविन्यसेदित्यनुषंगः ॥ ४० ॥ विश्वेश्वराणामष्टौ दिक्पालानां वक्त्रक्रमेण ईशानादिमुखक्रमेण गायत्र्यंगक्रमेण च होतव्य मित्यन्वयः ॥ ४१ ॥ शिवकुंभेन वर्धन्या देवीकुंभेन वैष्णवेन च सेचयेदित्यन्वयः॥४२॥४३॥ सर्वमंत्राणि ईशानादीनि पूर्ववद्वक्त्रक्रमेण विन्यसेत् । सहस्रादिषु सहस्रमुख्येषु संभवैर्यथोपपन्नकुंभैः स्नपनं कृत्वा पूजयेदित्यन्वयः ॥ ४४ ॥ उत्तमं सहस्रपणं स्वर्णादिसहस्रकर्षमित्यर्थः । "पणो वराटमाने स्यान्मूल्ये कार्षापणग्रहे" इति विश्वः। इतरेषां सह स्थापितान्यदेवतानामित्यर्थः ॥४५॥ प्रधानस्य शिवस्य क्षेत्रभूषणगोधनं वस्त्राणि च समर्प्यानि शेषः । क्रमाद्धोमयागबलिरुत्सवश्च नवाहं सप्ताहं त्र्यहमेकाहं वा कर्तव्य इत्यग्रिमस्थैरन्वयः ॥ ४६ ॥ भास्करादीनां देवानां होमं पूर्ववत्पूर्वोक्तप्रकारेणैव तु कुर्यादिति शेषमादायाग्रिमस्थैरन्वयः ॥ ४७ ॥ अभ्यंतरे शिवाग्निकार्योक्तस्वहृदये तथा

अनंतेशादिदेवांश्च प्रणवादिनमोंतकम् ॥ नववस्त्रं प्रतिघटमष्टकुंभेषु दापयेत् ॥ ४० ॥ विद्येश्वराणां कुंभेषु हेमरत्नादि विन्यसेत् ॥ वक्त्रक्रमेण होतव्यं गायत्र्यंगक्रमेण च ॥ ४१ ॥ जयादिस्विष्टपर्यंतं सर्वं पूर्ववदाचरेत् ॥ सेचयेच्छिवकुंभेन वर्धन्या वैष्णवेन च ॥ ४२ ॥ पैतामहेन कुंभेन ब्रह्मभागं विशेषतः ॥ विद्येश्वराणां कुंभैश्च सेचयेत्परमेश्वरम् ॥ ४३ ॥ विन्यसेत्सर्वमंत्राणि पूर्ववत्सुसमाहितः ॥ पूजयेत्स्नपनं कृत्वा सहस्रादिषु संभवैः ॥ ४४ ॥ दक्षिणा च प्रदातव्या सहस्रपणमुत्तमम् ॥ इतरेषां तदर्धं स्यात्तदर्धं वा विधीयते ॥ ४५ ॥ वस्त्राणि च प्रधानस्य क्षेत्रभूषणगोधनम् ॥ उत्सवश्च प्रकर्तव्यो होमयागबलिः क्रमात् ॥ ४६ ॥ नवाहं वापि सप्ताहमेकाहं च त्र्यहं तथा ॥ होमश्च पूर्ववत्प्रोक्तो नित्यमभ्यर्च्य शंकरम् ॥४७॥ देवानां भास्करादीनां होमं पूर्ववदेव तु ॥ अभ्यंतरे तथा बाह्ये वह्नौ नित्यं समर्चयेत् ॥४८॥ य एवं स्थापयेल्लिंगं स एव परमेश्वरः ॥ तेन देवगणा रुद्रा ऋषयोऽप्सरसस्तथा॥४९॥स्थापिताः पूजिताश्चैव त्रैलोक्यं सचराचरम् ॥५०॥

इति श्रीलिंगमहापुराणे उत्तरभागे लिंगस्थापनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ सूत उवाच ॥ सर्वेषामपि देवानां प्रतिष्ठामपि विस्तरात् ॥ स्वैर्मंत्रैर्यागकुंडानि विन्यस्यैकैकमेव च ॥ १ ॥

बाह्येऽग्नौ नित्यं समर्चयेत् । शिवं जुहुयादित्यर्थः ॥४८॥ लिंगस्थापनमाहात्म्यं कथयति-य एवमित्यादिना ॥४९॥ सचराचरं स्थावरजंगमभूतसहितमित्यर्थः ॥ ५० ॥ श्रीमद्विश्वेशलिंगं हि मत्पित्रा स्थापितं शुभम्।विधिना त्रायतामस्मान्सततं दर्शनादिना॥इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां सप्तचत्वारिंशत्तमोऽध्यायः ॥४७॥ अष्टचत्वारिंशकेऽस्मिन्सर्वेषां स्थापनाविधिः ॥ गायत्रीणां प्रभेदाश्च प्रासादार्चा निरूप्यते ॥ सूतः सर्वदेवताप्रतिष्ठाविधिं कथयति-सर्वेषामित्यादिना । सर्वेषामपि देवानां विस्तरात्प्रतिष्ठामपि प्रवदामीति शेषः । स्वैर्मंत्रैः स्वशाखोक्तमंत्रैर्यागकुंडानि विन्यस्य एकैकं प्रत्येकं दैवतं स्थापयेत्।उत्सवं कृत्वा विधानतः पूजयेच्चेत्याग्रिमस्थैरन्वयः ॥ १ ॥

भानोः स्थापनमिति शेषः । पंचाग्निना वा द्वादशाग्निक्रमेण कार्यमित्यन्वयः ॥२॥३॥ शंभोः सर्वेषामपि गायत्रीं यत्नतः कल्पयेदित्यन्वयः । सर्वे अन्यदेवाः यस्माद्रुद्रांशजाः तस्मात्तत्प्रतिष्ठामिति शेषः । वः संक्षेपतः वदामि कथयामीत्यर्थः । अनेन पूर्वोक्ताशिवप्रतिष्ठायाः प्रकृतित्वं बोधितम्। शक्तीनामयं सार्धश्लोकः ॥४ ॥ द्वाविंशतिगायत्रीभेदान्कथ

स्थापयेदुत्सवं कृत्वा पूजयेच्च विधानतः ॥ भानोः पंचाग्निना कार्यं द्वादशाग्निक्रमेण वा ॥२॥ सर्वकुंडानि वृत्तानि पद्माकाराणि सुव्रताः॥. अंबाया योनिकुंडं स्यादर्धन्येका विधीयते ॥ ३ ॥ शक्तीनां सर्वकार्येषु योनिकुंडं विधीयते ॥ गायत्रीं कल्पयेच्छंभोः सर्वेषामपि यत्नतः॥ सर्वे रुद्रांशजा यस्मात्संक्षेपेण वदामि वः ॥४॥ गायत्रीभेदाः ॥ तत्पुरुषाय विद्महे वाग्विशुद्धाय धीमहि ॥ तन्नः शिवः प्रचोदयात् ॥५॥ गणांबिकायै विद्महे कर्मसिद्ध्यै च धीमहि ॥ तन्नो गौरी प्रचोदयात् ॥ ६ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोद यात् ॥ ७ ॥ तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि ॥ तन्नो दंतिः प्रचोदयात् ॥ ८ ॥ महासेनाय विद्महे वाग्विशुद्धाय धीमहि ॥ तन्नः स्कंदः प्रचोदयात् ॥९॥ तीक्ष्णशृंगाय विद्महे वेदपादाय धीमहि ॥ तन्नो वृषः प्रचोदयात् ॥१०॥ हरिवक्त्राय विद्महे रुद्रवक्त्राय धीमहि॥ तन्नो नंदी प्रचोदयात् ॥ ११ ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ १२ ॥ महांबिकायै विद्महे कर्म सिद्ध्यै च धीमहि ॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ १३ ॥ समुद्धृतायै विद्महे विष्णुनैकेन धीमहि ॥ तन्नो धरा प्रचोदयात् ॥ १४ ॥ वैन तेयाय विद्महे सुवर्णपक्षाय धीमहि ॥ तन्नो गरुडः प्रचोदयात् ॥ १५ ॥ पद्मोद्भवाय विद्महे वेदवक्त्राय धीमहि ॥ तन्नः स्रष्टा प्रचोद यात् ॥ १६ ॥ शिवास्यजायै विद्महे देवरूपायै धीमहि ॥ तन्नो वाचा प्रचोदयात् ॥ १७॥ देवराजाय विद्महे वज्रहस्ताय धीमहि ॥ तन्नः शक्रः प्रचोदयात् ॥ १८ ॥ रुद्रनेत्राय विद्महे शक्तिहस्ताय धीमहि ॥ तन्नो वह्निः प्रचोदयात् ॥ १९ ॥ वैवस्वताय विद्महे दंडहस्ताय धीमहि ॥ तन्नो यमः प्रचोदयात् ॥ २० ॥ निशाचराय विद्महे खड्गहस्ताय धीमहि ॥ तन्नो निर्ऋतिः प्रचोदयात् ॥ २१ ॥ शुद्धह स्ताय विद्महे पाशहस्ताय धीमहि ॥ तन्नो वरुणः प्रचोदयात् ॥२२॥ सर्वप्राणाय विद्महे यष्टिहस्ताय धीमहि॥ तन्नो वायुः प्रचोदयात्॥२३॥

यति–तत्पुरुषायेत्यादिना ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ११॥ १२॥ १३॥ १४॥ १५॥ १६॥ १७॥ १८॥ १९॥ २०॥ २१॥ २२॥ २३ ॥

यक्षः कुबेर इत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ देवगायत्र्या विष्णुगायत्र्या परिकल्पमाह—विष्ण्वादिव्यूहं कृत्वेत्यर्थः । चतुर्व्यूहमूर्तीः कथयति—वासुदेव इत्यादिना ॥ २९ ॥ ३० ॥ सर्वावर्तेषु कृतयुगाद्यावर्तेष्वित्यर्थः ॥३१॥ अन्यानि कपिलदत्ताद्यानीत्यर्थः ॥ ३२ ॥ देवदेवस्य शिवस्य हरेर्नारायणस्य च गुह्यान्यविज्ञातानि प्रसिद्धानि च यंत्राणि मंत्रोपनिषदानि च पंच ब्रह्मांगजानि सद्योजातादिरूपाणि पंचभूतमयानि पार्थिवादिरूपाणि चास्थाप्य पूजयेदित्यनुषंगमादायाग्रिमस्थेनान्वयः ॥ ३३ ॥

यक्षेश्वराय विद्महे गदाहस्ताय धीमहि ॥ तन्नो यक्षः प्रचोदयात् ॥ २४ ॥ सर्वेश्वराय विद्महे शूलहस्ताय धीमहि ॥ तन्नो रुद्रः प्रचोदयात्॥२५॥ कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि ॥ तन्नो दुर्गा प्रचोदयात् ॥२६॥ एवं प्रभिद्य गायत्रीं तत्तद्देवानुरूपतः ॥ पूजयेत् स्थापयेत्तेषामासनं प्रणवं स्मृतम् ॥ २७ ॥ अथवा विष्णुमतुलं सूक्तेन पुरुषेण वा ॥ विष्णुं चैव महाविष्णुं सदाविष्णुमनुक्रमात् ॥२८॥ स्थापयेद्देवगायत्र्या परिकल्प्य विधानतः ॥ वासुदेवः प्रधानस्तु ततः संकर्षणः स्वयम् ॥ २९ ॥ प्रद्युम्नो ह्यनिरुद्धश्च मूर्तिभेदास्तु वै प्रभोः ॥ बहूनि विविधानीहं तस्य शापोद्भवानि च ॥ ३० ॥ सर्वावर्तेषु रूपाणि जगतां च हिताय वै ॥ मत्स्यः कूर्मोऽथ वाराहो नारसिंहोऽथ वामनः ॥ ३१ ॥ रामो रामश्च कृष्णश्च बौद्धः कल्की तथैव च ॥ तथान्यानि न देवस्य हरेः शापोद्भवानि च ॥ ३२ ॥ तेषामपि च गायत्रीं कृत्वा स्थाप्य च पूजयेत् ॥ गुह्यानि देवदेवस्य हरेर्नारायणस्य च ॥ ३३ ॥ विज्ञानानि च यंत्राणि मंत्रोपनिषदानि च ॥ पंच ब्रह्मांगजानीह पंचभूतमयानि च ॥ ३४ ॥ नमो नारायणायेति मंत्रः परमशोभनः ॥ हरेरष्टाक्षराणीह प्रणवेन समासतः ॥ ३५ ॥ ओं नमो वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नाय प्रधानाय अनिरुद्धाय वै नमः ॥३६॥ एवमेकेन मंत्रेण स्थापयेत्परमेश्वरम् ॥ बिंबानि यानि देवस्य शिवस्य परमेष्ठिनः ॥ ३७ ॥ प्रतिष्ठा चैव पूजा च लिंगवन्मुनिसत्तमाः ॥ रत्नविन्याससहितं कौतुकानि हरेरपि ॥ ३८ ॥ अचले कारयेत्सर्वं चलेप्येवं विधानतः ॥ तन्नेत्रोन्मीलनं कुर्यान्नेत्रमंत्रेण सुव्रताः ॥ ३९ ॥

॥ ३४ ॥ नारायणादिमुख्यमंत्रान्कथयति—नम इत्यादिना ॥ ३५ ॥ ३६॥ एकेन तत्तन्मंत्रेणैव परमेश्वरं विष्णुं स्थापयेदित्यन्वयः । परमेष्ठिनः शिवस्य यानि बिंबानि पूर्वभागोक्तरूपाणि तेषामिति शेषः । प्रतिष्ठा पूजा च लिंगवदित्यग्रिमेणान्वयः ॥ ३७ ॥ रत्नविन्याससहितं हरेरपि कौतुकानि मंगलानि कुर्यादिति शेषः ॥ ३८ ॥ अचले स्थिरप्रतिष्ठायां विधानतः सर्वं चले चलप्रतिष्ठायां च एवं वक्ष्यमाणप्रकारं कारयेदित्यन्वयः । तेषां सावयवमूर्तीनां नेत्रोन्मीलनं तन्नेत्रोन्मीलनम् ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ शिलोद्भवानां बिंबानां पाषाणमूर्तीनां वा शक्ताशक्तविकल्पेन जलाधिवासनं पुनश्चित्राभासस्य चित्ररूपस्य नोक्त वृषेंद्रस्य प्रकीर्तितं ।निश्चयेनोक्त मित्यर्थः ॥ ४३ ॥ प्रासादप्रतिष्ठाविधिं कथयति—प्रासादस्येत्यादिना ॥४४ ॥ अष्टावरणदेवताः कथयति—वृषेत्यादिना ॥४५॥ शंभोः लोकपालीन् रुद्रगणान् गणेशाद्यानपि प्रमथादिगणस्वामिनोऽपि प्रविन्यसेत्स्थापयेदित्यर्थः ॥ ४६ ॥ महामुनिर्लकुलीशः उमाद्यष्टदेवताः सौम्यादितः उत्तरादिगप्रदेतः क्रमेण प्रविन्यसेदित्यनुषंगः ॥ ४७ ॥ क्षेत्रेशं वा क्षेत्रपालमपीशगोचरे ईशानादिग्भाग इत्यर्थः ॥ ४८ ॥ विद्येशां वागीश्वरीं गुह्यांगादीनि धर्मादीनीत्यर्थः ॥४९ ॥ प्रतिष्ठाविधिमुपसंहरति—एवमिति ॥ ५० ॥ शिवं वृषा

हुत्वा क्षेत्रप्रदक्षिणं चैव आरामस्य पुरस्य च ॥ जलाधिवासनं चैव पूर्ववत्परिकीर्तितम् ॥ ४० ॥ कुंडमंडपनिर्माणं शयनं च विधीयते ॥ नवाग्निभागेन नवकुंडे यथाविधि ॥ ४१ ॥ अथवा पंचकुंडेषु प्रधाने केवलेऽथ वा ॥ प्रतिष्ठा कथिता दिव्या पारंपर्यक्रमागता ॥ ४२ ॥ शिलोद्भवानां बिंबानां चित्राभासस्य वा पुनः ॥ जलाधिवासनं प्रोक्तं वृषेंद्रस्य प्रकीर्तितम् ॥ ४३ ॥ प्रासादस्य प्रतिष्ठायां प्रतिष्ठा परिकीर्तिता ॥ प्रासादांगस्य सर्वस्य यथांगानां तनोरिव ॥ ४४ ॥ वृषाग्निमातृविघ्नेशकुमारानपि यत्नतः ॥ श्रेष्ठां दुर्गां तथा चंडीं गायत्र्या वै यथाविधि ॥ ४५ ॥ प्रागाद्यं स्थापयेच्छंभोरष्टावरणमुत्तमम् ॥ लोकपालगणेशाद्यानपि शंभोः प्रविन्यसेत् ॥४६॥ उमा चंडी च नंदी च महाकालो महामुनिः॥विघ्नेश्वरो महाभृंगी स्कंदः सौम्यादितः क्रमात्॥४७॥इंद्रादीन्स्वेषु स्थानेषु ब्रह्माणं च जनार्दनम्॥स्थापयेच्चैव यत्नेन क्षेत्रेशं वेशगोचरे ॥ ४८ ॥ सिंहासने ह्यनंतादीन् विद्येशामपि च क्रमात् ॥ स्थापयेत्प्रणवेनैव गुह्यांगादीनि पंकजे ॥४९॥ एवं संक्षेपतः प्रोक्तं चलस्थापनमुत्तमम् ॥ सर्वेषामपि देवानां देवीनां च विशेषतः॥५०॥इति श्रीलिंगमहापुराणे उत्तरभागेऽष्टचत्वारिंशोऽध्यायः॥४८॥

ऋषय ऊचुः ॥ अघोरेशस्य माहात्म्यं भवता कथितं पुरा ॥ पूजां प्रतिष्ठां देवस्य भगवन्वक्तुमर्हसि ॥ १ ॥ सूत उवाच ॥ अघोरेणांगयुक्तेन विधिवच्च विशेषतः ॥ प्रतिष्ठालिंगविधिना नान्यथा मुनिपुंगवाः ॥२॥ तथाग्निपूजां वै कुर्याद्यथा पूजा तथैव च ॥ सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥ ३ ॥

द्यावरणेन युक्तमुमामुखैरुत्तरतः परीतम् । लोकेशपद्मोद्भवविष्णुजुष्टं सिंहासनस्थं स्पृहयामि द्रष्टुम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायामष्टचत्वारिंशोऽध्यायः ॥४८॥ नवचत्वारिंशके तु शिवस्याघोररूपिणः॥प्रतिष्ठाजपहोमानां विधानं हि निरूप्यते ॥ ऋषयः अघोरेशपूजाप्रतिष्ठाविधानमपृच्छन्—अघोरेशस्येति । माहात्म्यं सकलाघौघनिरासकत्वरूपमित्यर्थः ॥ १ ॥ अंगयुक्तेन हृदयाद्यंगयुक्तेनेत्यर्थः ॥ २ ॥ यथा पूजा लिंगादिपूजा तथा अग्नौ पूजा अग्निपूजा तां वै निश्चयेन कुर्यादित्यन्वयः । सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा दधिमध्वाज्यसंयुतैस्तिलैर्होमः प्रकर्तव्य इत्यग्रिमेणान्वयः ॥ ३ ॥

घृतसक्तुमधूनां हवनमिति शेषः । सर्वदुःखप्रमार्जनं व्याधीनां चैव नाशनमित्यग्रिमेणान्वयः ॥ ४ ॥ शतेन व्याधिनाशनं जायत इति शेषः ॥ ५ ॥ जपेन अघोरमंत्रजपेने त्यर्थः ॥ ६ ॥ अष्टोत्तरसहस्रेण तत्संख्याकजपेन षण्मासात् राज्यं संपूर्णराज्यं च मंडलिनः सामंतराजानश्च राज्यमंडालिनस्तेषामपि सिद्धयः ध्रुवं निश्चयेन जायते जायंत इत्यर्थः । संदेहो नेत्यन्वयः ॥ ७ ॥ यं जुहोति यमुद्दिश्य जुहोतीत्यर्थः ॥ ८ ॥ क्षीराज्यदधिसंमिश्रं यथा स्यात्तथाऽब्दहोमेन सिद्ध्यते सिद्धो भवतीत्यर्थः ॥ ९ ॥ जातिव ज्जातिपुष्पवत्तंडुलाः यस्य स जातितंडुलकस्तेनात्यंतशुभ्रचरुणेत्यर्थः ॥ १० ॥ नृपाणां षण्मासं दध्ना दधिकरणकयागेन पुष्टिः क्षीरहोमेन शांतिकं घृतं हुत्वा सर्वव्याधि

तिलैर्होमः प्रकर्तव्यो दधिमध्वाज्यसंयुतैः ॥ घृतसक्तुमधूनां च सर्वदुःखप्रमार्जनम् ॥ ४ ॥ व्याधीनां नाशनं चैव तिलहोमस्तु भूतिदः ॥ सहस्रेण महाभूतिः शतेन व्याधिनाशनम् ॥ ५ ॥ सर्वदुःखविनिर्मुक्तो जपेन च न संशयः ॥ अष्टोत्तरशतेनैव त्रिकाले च यथाविधि॥६॥ अष्टोत्तरसहस्रेण षण्मासाज्जायते ध्रुवम् ॥ सिद्धयो नैव संदेहो राज्यमंडालिनामपि ॥ ७ ॥ सहस्रेण ज्वरो याति क्षीरेण च जुहोति यम् ॥ त्रिकालं मासमेकं तु सहस्रं जुहुयात्पयः ॥ ८ ॥ मासेन सिद्ध्यते तस्य महासौभाग्यमुत्तमम् ॥ सिद्ध्यते चाब्दहोमेन क्षौद्राज्यदधिसंयु तम् ॥ ९ ॥ यवक्षीराज्यहोमेन जातितंडुलकेन वा ॥ प्रीयेत भगवानीशो ह्यघोरः परमेश्वरः॥१०॥ दध्ना पुष्टिर्नृपाणां च क्षीरहोमेन शांति-कम् ॥ षण्मासं तु घृतं हुत्वा सर्वव्याधिविनाशनम् ॥ ११ ॥ राजयक्ष्मा तिलैर्होमान्नश्यते वत्सरेण तु ॥ यवहोमेन चायुष्यं घृतेन च जयस्तदा ॥ १२ ॥सर्वकुष्ठक्षयार्थं च मधुनाक्तैश्च तंडुलैः ॥ जुहुयादयुतं नित्यं षण्मासान्नियतः सदा ॥ १३ ॥ आज्यं क्षीरं मधुश्चैव मधुरत्रयमुच्यते॥ समस्तं तुष्यते तस्य नाशयेद्वै भगंदरम् ॥ १४॥ केवलं घृतहोमेन सर्वरोगक्षयः स्मृतः ॥ सर्वव्याधि हरं ध्यानं स्थापनं विधिनार्चनम् ॥ १५ ॥ एवं संक्षेपतः प्रोक्तमघोरस्य महात्मनः ॥ प्रतिष्ठा यजनं सर्वं नंदिना कथितं पुरा ॥ १६ ॥ ब्रह्मपुत्राय शिष्याय तेन व्यासाय सुव्रताः ॥ १७ ॥ श्रीलिंगमहापुराणे उत्तरभागे एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

विनाशश्च भवतीति शेषः ॥११॥ यवहोमेन आयुष्यं तथा घृतेन घृतहोमेन जयश्च लभ्यत इति शेषः ॥ १२ ॥ सदा नियतः सर्वकालं नियमयुक्त इत्यर्थः ॥ १३ ॥ मधुः पुष्परसः "मद्ये पुष्परसे मधुः" इति विश्वः । एवं पूर्वोक्तमधुरत्रयं भगंदरं तत्संज्ञकरोगं नाशयेद्वै तस्य मधुरत्रययाजिनः समस्तं विश्वं तुष्यते तुष्टं भवतीत्यर्थः ॥१४ ॥ ध्यानं स्थापनं विधिनार्चनं च सर्वव्याधिहरं सकलभवरोगनिवारकमित्यर्थः ॥ १५ ॥ एवं पूर्वोक्तप्रकारमित्यर्थः ॥ १६ ॥ ब्रह्मपुत्राय शिष्याय सनत्कुमारायेत्यर्थः ॥ १७ ॥ अघोरेशं महादेवं सर्वव्याधिहरं हरम् ॥ भवरोगविनाशाय ध्यायाम्यहमहर्निशम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां एकोनपंचाशत्तमोऽध्यायः ॥४९॥

लैंगे पंचाशदध्याये निग्रहस्य विधिः स्फुटः । अघोरेशाराधनतः शुक्रप्रोक्तो निरूप्यते ॥ ऋषयो निग्रहविधिमपृच्छन्–निग्रह इत्यादिना । शिवं कल्याणरूपं वक्त्रं मुखं यस्य स शिववक्त्रस्तेन शूलिना रुद्रेणेत्यर्थः ॥ १ ॥ २ ॥ सूतो निग्रहविधेरासुरत्वं प्रदर्शयन् हिरण्याक्षाय शुक्रोपदिष्टं ममाहात्म्यं कथयति–पुरेत्यादिना । अघोरशिष्येण शुक्रेणे त्यनेन सम्यक् ज्ञानवता समर्थेनैव कार्य इति सूचितम् ॥ ३ ॥ ४ ॥ वराहेण तत्संज्ञकविष्णववतारेणेत्यर्थः ॥ ५ ॥ निग्रहविधौ बाधकानि कथयति–स्त्रीबाधामिति ॥ ६ ॥ हिरण्याक्षस्य वधकारणं कथयति–तेनेति ॥ ७ ॥ ८ ॥ ९ ॥ आततायिनं मारणोद्यतमित्यर्थः । तत्रापि नियमं कथयति–ब्राह्मणेभ्य इत्यादिना ॥ १० ॥ ११ ॥ अघृणेन

ऋषय ऊचुः ॥ निग्रहः कथितस्तेन शिववक्त्रेण शूलिना ॥ कृतापराधिनां तं तु वक्तुमर्हसि सुव्रत ॥१॥ त्वया न विदितं नास्ति लौकिकं वैदिकं तथा ॥ श्रौतं स्मार्तं महाभाग रोमहर्षण सुव्रत ॥ २ ॥ सूत उवाच ॥ पुरा भृगुसुतेनोक्तो हिरण्याक्षाय सुव्रताः ॥ निग्रहोऽघोरशिष्येण शुक्रेणाक्षयतेजसा ॥ ३॥ तस्य प्रसादाद्दैत्येंद्रो हिरण्याक्षः प्रतापवान्॥ त्रैलोक्यमखिलं जित्वा सदेवासुरमानुषम्॥४॥उत्पाद्य पुत्रं गणपं चांधकं चारुविक्रमम् ॥ रराज लोके देवेन वराहेण निषूदितः ॥५॥ स्त्रीबाधां बालबाधां च गवामपि विशेषतः ॥ कुर्वतो नास्ति विजयो मार्गेणानेन भूतले ॥ ६ ॥ तेन दैत्येन सा देवी धरा नीता रसातलम् ॥ तेनाघोरेण देवेन निष्फलो निग्रहः कृतः ॥ ७ ॥ संवत्सरसहस्रांते वराहेण च सूदितः ॥ तस्मादघोरसिद्ध्यर्थं ब्राह्मणान्नैव बाधयेत्॥८॥स्त्रीणामपि विशेषेण गवामपि न कारयेत् ॥ गुह्याद्गुह्यतमं गोप्यमतिगुह्यं वदामि वः ॥ ९ ॥ आततायिनमुद्दिश्य कर्तव्यं नृपसत्तमैः ॥ ब्राह्मणेभ्यो न कर्तव्यं स्वराष्ट्रेशस्य वा पुनः ॥१०॥ अतीव दुर्जये प्राप्ते बले सर्वे निषूदिते ॥ अधर्मयुद्धे संप्राप्ते कुर्याद्विधिमनुत्तमम् ॥ ११ ॥ अघृणेनैव कर्तव्यो ह्यघृणेनैव कारयेत् ॥ कृतमात्रे न संदेहो निग्रहः संप्रजायते ॥१२॥ लक्षमात्रं पुमाञ्जप्त्वा अघोरं घोररूपिणम् ॥ दशांशं विधिना हुत्वा तिलेन द्विजसत्तमाः ॥ १३ ॥ संपूज्य लक्षपुष्पेण सितेन विधिपूर्वकम् ॥ बाणलिंगेऽथवा वह्नौ दक्षिणामूर्तिमाश्रितः ॥ १४ ॥

क्रूरेणैव कर्तव्यः अघृणेन क्रूरब्राह्मणेनैव कारयेदित्यनेनेदमशांतकृत्यमिति सूचितम् ॥ १२ ॥ मंत्रसिद्धिविधानं कथयति–लक्षमात्रमित्यादिना । घोररूपिणं भयंकररूपमघोरं तत्संज्ञकमंत्रं लक्षप्रमाणं जप्त्वा तिलेन तिलद्रव्येण दशांशमयुतमित्यर्थः । विधिना हुत्वेत्यन्वयः ॥ १३ ॥ अथ बाणलिंगे वा वह्नौ वा दक्षिणामूर्तिं तत्संज्ञकावतारप्रतिमामाश्रितः सितेन श्वेतेन लक्षपुष्पेण विधिपूर्वकं संपूज्य सिद्धमंत्रः स्यादिति शेषमादायाग्रिमेणान्वयः ॥ १४ ॥

पुनरन्यथा असिद्धमंत्र इत्यर्थः । सिद्ध्यादयः सिद्ध्यादीः द्रष्टा नास्तीत्यन्वयः ॥१५॥ शिवभावितः शिवभक्तो ब्राह्मणः केवलमंत्रसिद्धः गुरुप्रसादादिनैव मंत्रसिद्धः धीमान् आत्मनः नृपस्य वा अर्थमुपकारार्थमिमं विधिं निग्रहविधिं कुर्यादित्यग्रिमेणान्वयः ॥ १६॥ निग्रहविधानं कथयति—शूलाष्टकमित्यादिना । पूर्वादि च तदीशानकांतकं च पूर्वादीशानकांतकं शूलाष्टकं विद्वान् न्यसेत्स्थापयेदित्यर्थः । पूर्वोक्तशूलाष्टकं विशेषणैरुपपादयति—त्रिशिखमित्यादिभिः । कथंभूतं त्रिशूलं तिस्रः शिखाः यस्य तत्त्रिशिखं कथंभूतं शूलाष्टकं चतुर्विंशच्छिखाः अग्रेषु यस्य तच्चतुर्विंशच्छिखाग्रं सार्वविभक्तिकस्तसिः । संकलीकृतः वीरासनादिना संकुचितः विग्रहो यस्य संकलीकृतविग्रहः अघोरविग्रहं भयंकर

सिद्धमंत्रोऽन्यथा नास्ति द्रष्टा सिद्ध्यादयः पुनः ॥ सिद्धमंत्रः स्वयं कुर्यात्प्रेतस्थाने विशेषतः ॥१५॥ मातृस्थानेऽपि वा विद्वान्वेदवेदांगपारगः ॥ केवलं मंत्रसिद्धो वा ब्राह्मणः शिवभावितः ॥ १६ ॥ कुर्याद्विधिमिमं धीमानात्मनोऽर्थं नृपस्य वा ॥ शूलाष्टकं न्यसेद्विद्वान् पूर्वादीशानकांतकम् ॥ १७ ॥ त्रिशिखं च त्रिशूलं च चतुर्विंशच्छिखाग्रतः ॥ अघोरविग्रहं कृत्वा संकलीकृतविग्रहः ॥ १८ ॥ सर्वनाशकरं ध्यात्वा सर्वकर्माणि कारयेत् ॥ कालाग्निकोटिसंकाशं स्वदेहमपि भावयेत् ॥ १९ ॥ शूलं कपालं पाशं च दंडं चैव शरासनम् ॥ बाणं डमरुकं खड्गमष्टायुधमनुक्रमात् ॥ २० ॥ अष्टहस्तश्च वरदो नीलकंठो दिगंबरः ॥ पंचतत्त्वसमारूढो ह्यर्धचंद्रधरः प्रभुः ॥२१॥ दंष्ट्राकरालवदनो रौद्रदृष्टिर्भयंकरः ॥ हुंफट्कारमहाशब्दशब्दिताखिलदिङ्मुखः ॥ २२ ॥ त्रिनेत्रं नागपाशेन सुबद्धमुकुटं स्वयम् ॥ सर्वाभरणसंपन्नं प्रेतभस्मावगुंठितम् ॥ २३ ॥ भूतैः प्रेतैः पिशाचैश्च डाकिनीभिश्च राक्षसैः ॥ संवृतं गजकृत्त्या च सर्पभूषणभूषितम् ॥२४ ॥ वृश्चिकाभरणं देवं नीलनीरदनिस्वनम् ॥ नीलांजनाद्रिसंकाशं सिंहचर्मोत्तरीयकम् ॥ २५ ॥ ध्यायेदेवमघोरेशं घोरघोरतरं शिवम् ॥ षट्त्रिंशदुक्तमात्राभिः प्राणायामेन सुव्रताः ॥ २६ ॥

स्वरूपं कृत्वा सर्वनाशं करोति तच्छीलः सर्वनाशकरस्तं प्रलयकारकमघोरेशं ध्यात्वा सर्वकार्याणि कारयेदित्यग्रिमेणान्वयः ॥ १७ ॥ १८ ॥ १९ ॥ अघोरेशायुधानि कथयति—शूलमिति ॥ २० ॥ ध्यानं कथयति—अष्टहस्त इत्यादिना । पंचतत्त्वानि पृथिव्यादीनि यस्मिन्नसौ पंचतत्त्वा नंदिकेश्वरस्तस्मिन्वा पंचतत्त्वेष्वेव समारूढः स्थित इत्यर्थः ॥ २१ ॥ २२ ॥ द्वितीयांतविशेषणैर्ध्येयाघोरस्वरूपं वर्णयति-त्रिनेत्रमित्यादिना ॥ २३ ॥ २४ ॥ २५ ॥ अघोरेशं शिवमेवं पूर्वोक्तप्रकारेण घोरघोरतरमतिभयंकरमित्यर्थः । षट्त्रिंशत्तत्संख्या उक्ताः पूरककुंभकरेचकभेदेन कथिताश्च ताः मात्राश्च उक्तमात्रास्ताभिः सह प्राणायामेन प्राणसंयमेन ध्यायेदित्यन्वयः ॥ २६ ॥

॥ २७ ॥ पंचकुंडविधानं कथयति- स्थापयेदिति ॥ २८ ॥ आचार्यः मध्यकुंडे साधकाः अन्यर्त्विजश्च दिशासु चतुर्दिक्कुंडेषु च जुहुयुरिति शेषः । सशिष्याचार्यकृत्यं कथयति- परिस्तीर्येत्यादिना । विलोमेन प्रातिलोम्यक्रमेणेत्यर्थः । पूर्ववच्छूलैः पूर्वोक्तशूलैः संभृतो वेष्टित इत्यर्थः ॥ २९ ॥ कालाग्निपीटमध्ये तिष्ठतीति कालाग्निपीठमध्यस्थः द्वात्रिंशाक्षरैस्तत्संख्याकवर्णैः संयुतमयं नमस्तेऽस्तु रुद्ररूपेभ्य इति कृतसंधिमंत्रपाठाभिप्रायेणार्थः । अकृतसंधिपाठे तु द्वात्रिंशच्च अक्षरं च द्वात्रिंशाक्षरे ताभ्यां संयुतं त्रयस्त्रिंशाक्षरमित्यर्थः । तदुक्तं पूर्वभागसप्तदशाध्याये " अथर्वमसितं मंत्रं कलाष्टकसमायुतम्॥अभिचारिकमत्यर्थं त्रयस्त्रिंशच्छुभाक्षरम् " इति॥३०॥शत्रुनिग्रहप्रकारं कथयति- विभीतकेनेत्यादिना । विभीतकेन तत्काष्ठेन नृपेंद्रस्य शत्रुं द्वादशांगुलमानतः कृत्वेत्यन्वयः ॥ ३१ ॥३२॥३३॥३४॥ रक्तवस्त्रसमं कञ्चुकं कवचं धृत्वेति शेषः।तुषसंयुक्तैः कार्पा

महामुद्रासमायुक्तः सर्वकर्माणि कारयेत् । सिद्धमंत्राश्रिताग्नौ वा प्रेतस्थाने यथाविधि ॥ २७ ॥ स्थापयेन्मध्यदेशे तु ऐंद्रे याम्ये च वारुणे ॥ कौबेर्यां विधिवत्कृत्वा होमकुंडानि शास्त्रतः ॥ २८ ॥ आचार्यो मध्यकुंडे तु साधकाश्च दिशासु वै ॥ परिस्तीर्य विलोमेन पूर्ववच्छूलसंभृतः ॥ २९ ॥ कालाग्निपीठमध्यस्थः स्वयं शिष्यैश्च तादृशैः ॥ ध्यात्वा घोरमघोरेशं द्वात्रिंशाक्षरसंयुतम् ॥ ३० ॥ विभीतकेन वै कृत्वा द्वादशांगुलमानतः ॥ पीठे न्यस्य नृपेंद्रस्य शत्रुमंगारकेण तु ॥ ३१ ॥ कुंडस्याधः खनेच्छत्रुं ब्राह्मणः क्रोधमूर्च्छितः ॥ अधोमुखोर्ध्वपादं तु सर्वकुंडेषु यत्नतः ॥३२॥ श्मशानांगारमानीय तुषेण सह दाहयेत् ॥ तत्राग्निं स्थापयेत्तूष्णीं ब्रह्मचर्यपरायणः ॥३३॥ मायूरास्त्रेण नाभ्यां तु ज्वलनं दीपयेत्ततः ॥ कंचुकं तुषसंयुक्तैः कार्पासास्थिसमन्वितैः ॥ ३४ ॥ रक्तवस्त्रसमं मिश्रैर्होमद्रव्यैर्विशेषतः ॥ हस्तयंत्रोद्भवैस्तैलैः सह होमं तु कारयेत् ॥३५॥ अष्टोत्तरसहस्रं तु होमयेदनुपूर्वशः ॥ कृष्णपक्षे चतुर्दश्यां समारभ्य यथाक्रमम् ॥३६॥ अष्टम्यंतं तथांगारमंडलस्थानवर्जितः ॥ एवं कृते नृपेंद्रस्य शत्रवः कुलजैः सह ॥ ३७ ॥ सर्वदुःखसमोपेताः प्रयांति यमसादनम् ॥ मंत्रेणानेन चादाय नृकपाले नखं तथा ॥ ३८ ॥ केशं नृणां तथांगारं तुषं कंचुकमेव च ॥ चीरच्छटां राजधूलीं गृहसंमार्जनस्य वा ॥३९॥

सस्यास्थिभिर्बीजैः समन्वितैः कार्पासास्थिसमन्वितैः । हस्तयंत्रोद्भवैस्तैलैर्विशेषतः मिश्रैर्होमद्रव्यैः सह शिष्यसहितः होमं कारयेत्कुर्यादिति पूर्वस्यैरन्वयः ॥ ३५ ॥ कृष्णपक्षे चतुर्दश्यां समारभ्य यथाक्रमम् अष्टम्यंतमनुपूर्वशः अष्टोत्तरसहस्रं तु अंगारमंडलस्थानं वर्जितं येन सोऽगारमंडलस्थानवर्जितः प्रदीपितवह्निराचार्यः होमयेज्जुहुयादित्यग्रिमस्थाभ्यामन्वयः ॥ ३६ ॥ फलं कथयति-एवमित्यादिना ॥ ३७ ॥ द्वितीयं शत्रुनाशविधानं कथयति-मन्त्रेणेत्यादिना । अनेनाघोरमंत्रेणेत्यर्थः । नृकपाले मृतमनुष्यमस्तककपाले ॥ ३८ ॥ कञ्चुकं सर्पनिर्मोकं चीरच्छटां वस्त्रांचलं राजधूलीं राजमार्गधूलीं वा गृहसंमार्जनस्य धूलीमित्यनुषंगः ॥ ३९ ॥

वृषदंतानि बलीवर्ददंतानीत्यर्थः ॥ ४० ॥ ४१ ॥ वराहस्य विशेषतः दंष्ट्राणि अनेन मंत्रेण तु साधयित्वा उत्तममघोरमंत्रमष्टोत्तरशतं जपेदिति पूर्वस्येनान्वयः ॥ ४२ ॥ ॥ ४३ ॥ तत्पूर्वोक्तं कपालं नास्ति खं यस्मिंस्तन्नखं परिपूर्णं शत्रोः क्षेत्रादौ अष्टमराशौ दिवाकरे वा सोमे परिविष्टे राहुग्रस्ते वा परिवेषयुक्ते सति अनेन मंत्रेण मृतवस्त्रेण वेष्टयेदित्यग्रिमेणान्वयः ॥ ४४ ॥ फलं कथयति—स्थाननाश इति । तस्य पूर्वोक्तकारिणः शत्रोर्नाशः जायते स्थाननाशश्च भवेदित्यन्वयः । तृतीयविधानं कथयति—शत्रुमित्यादिना । गमने विजयार्थं गमने समवस्थिते प्राप्त इत्यर्थः । अग्रिमोक्तविशेषणविशिष्टभूतले राज्ञः शत्रुमाचार्य इति शेषः । समालिख्य स्वयं दक्षिणेन तु पादेन मूर्ध्नि संताडये

विषसर्पस्य दंतानि वृषदंतानि यानि तु ॥ गवां चैव क्रमेणैव व्याघ्रदंतनखानि च ॥४०॥ तथा कृष्णमृगाणां च बिडालस्य च पूर्ववत् ॥ नकुलस्य च दंतानि वराहस्य विशेषतः॥४१॥दंष्ट्राणि साधयित्वा तु मंत्रेणानेन सुव्रताः ॥ जपेदष्टोत्तरशतं मंत्रं चाघोरमुत्तमम् ॥४२॥ तत्कपालं नखं क्षेत्रे गृहे वा नगरेऽपि वा ॥ प्रेतस्थानेऽपि वा राष्ट्रे मृतवस्त्रेण वेष्टयेत् ॥ ४३ ॥ शत्रोरष्टमराशौ वा परिविष्टे दिवाकरे ॥ सोमे वा परिविष्टे तु मंत्रेणानेन सुव्रताः ॥ ४४ ॥ स्थाननाशो भवेत्तस्य शत्रोर्नाशश्च जायते ॥ शत्रुं राज्ञः समालिख्य गमने समवस्थिते ॥ ४५ ॥ भूतले दर्पणप्रख्ये वितानोपरि शोभिते ॥ चतुस्तोरणसंयुक्ते दर्भमालासमावृते ॥४६ ॥ वेदाध्ययनसंपन्ने राष्ट्रे वृद्धिप्रकाशके ॥ दक्षिणेन तु पादेन मूर्ध्नि संताडयेत्स्वयम् ॥ ४७ ॥ एवं कृते नृपेंद्रस्य शत्रुनाशो भविष्यति ॥ स्वराष्ट्रपतिमुद्दिश्य यः कुर्यादाभिचारिकम् ॥ ४८ ॥ स आत्मानं निहत्यैव स्वकुलं नाशयेत्कुधीः ॥ तस्मात्स्वराष्ट्रगोप्तारं नृपतिं पालयेत्सदा ॥ ४९ ॥ मंत्रौषधिक्रियाद्यैश्च सर्वयत्नेन सर्वदा ॥ एतद्रहस्यं कथितं न देयं यस्य कस्यचित् ॥ ५० ॥ इति श्रीलिंगमहापुराणे उत्तरभागे पंचाशत्तमोऽध्यायः ॥ ५० ॥ ऋषय ऊचुः ॥ निग्रहोऽघोररूपोयं कथितोऽस्माकमुत्तमम् ॥ वज्रवाहनिकां विद्यां वक्तुमर्हसि सत्तम ॥ १ ॥ सूत उवाच ॥ वज्रवाहनिका नाम सर्वशत्रुभयंकरी ॥ अनया सेचयेद्वज्रं नृपाणां साधयेत्तथा ॥ २ ॥

दिति तृतीयेनान्वयः ॥ ४५ ॥ ४६ ॥ ४७ ॥ फलं कथयति—एवमिति । स्वदेशीयराज्ञो निग्रहविधिनिषेधं कथयति—स्वराष्ट्रपतिमित्यादिना ॥ ४८ ॥ ४९ ॥ रहस्यं गोपनीयमित्यर्थः ॥ ५० ॥ सर्वसिद्धिकरान्मंत्रादघोरात्परमाद्भुतात् ॥ सांब कामादिशत्रूणां निग्रहं कुरु मे सदा ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टी० पंचाशत्तमोऽध्यायः ॥ ५० ॥ एकपंचाशदध्याये ऋषिप्रश्नानुरोधतः ॥ वज्रवाहनिका विद्या सेतिहासा निरूप्यते ॥ ऋषयो वज्रवाहनिकां विद्यामपृच्छन्—निग्रह इति ॥ १ ॥ अनया पूर्वोक्तविद्यया वज्रं सेचयेत्तथा तत्प्रकारं वज्रं नृपाणां साधयेत्समर्पयेदित्यर्थः ॥ २ ॥

सः । कांचनेन विन्यसेत् लिखेदित्यर्थः ॥ ३ ॥ ततः वज्री वज्रविशिष्टो विद्वान्समाहितः मन्त्राक्षरलक्षमक्षरसंख्याकलक्षं जपेत् वज्रमनया विद्यया अभिषिच्य तस्मिन्मंत्रमिति शेषः । कांचनेन विन्यसेत् लिखेदित्यर्थः ॥ ३ ॥ ततः वज्री वज्रविशिष्टो विद्वान्समाहितः मन्त्राक्षरलक्षमक्षरसंख्याकलक्षं जपेत् वज्रकुंडे वज्राकारकुंडे घृतादिभिर्दशांशं जुहुयादित्यन्वयः ॥ ४ ॥ वज्रविनियोगं फलं च कथयति—तदिति ॥ ५ ॥ विद्योपलब्धिप्रकारं कथयति—पुरेति । लब्धा महेश्वरात्प्राप्ते त्यर्थः । " ईशानः सर्वविद्यानाम् " इति श्रुतेः ॥६॥ शक्रोपकारकत्वेतिहासं कथयति—पुरेत्यादिना । पुरा विद्यया विश्वरूपोपदिष्टविद्यया सोमं हरतः सुरेश्वराद्धतपुत्रस्त्वष्टा प्रजानाथः तस्मिन्यज्ञे सोमयागे तत्सोमरूपं यथाप्राप्तं विधिनोपकृतं हविर्विश्वरूपविमर्दनः ऐच्छत । आत्मनेपदमार्षम् । शक्र मत्पुत्रमवधीस्तव शोभनं भागं न दास्ये त्वया विश्व

वज्रं कृत्वा विधानेन तद्वज्रमभिषिच्य च ॥ अनया विद्यया तस्मिन्विन्यसेत्कांचनेन च ॥३॥ ततश्चाक्षरलक्षं च जपेद्विद्वान्समाहितः॥ वज्री दशांशं जुहुयाद्वज्रकुंडे घृतादिभिः॥४॥ तद्वज्रं गोपयेन्नित्यं दापयेन्नृपतेस्ततः ॥ तेन वज्रेण वै गच्छञ्छत्रूञ्जीयाद्रणाजिरे ॥५॥ पुरा पितृमहेनैव लब्धा विद्या प्रयत्नतः ॥ देवी शक्रोपकारार्थं साक्षाद्वज्रेश्वरी तथा ॥ ६ ॥ पुरा त्वष्टा प्रजानाथो हतपुत्रः सुरेश्वरात् ॥ विद्यया हरतः सोममिंद्रवैरेण सुव्रताः ॥७॥ तस्मिन्यज्ञे यथाप्राप्तं विधिनोपकृतं हविः ॥ तदैच्छत महाबाहुर्विश्वरूपविमर्दनः ॥ ८ ॥ मत्पुत्रमवधीः शक्र न दास्ये तव शोभनम् ॥ भागं भागार्हता नैव विश्वरूपो हतस्त्वया ॥९॥ इत्युक्त्वा चाश्रमं सर्वं मोहयामास मायया ॥ ततो मायां विनिर्भिद्य विश्वरूपविमर्दनः॥१०॥ प्रसह्य सोममपिबत्सगणैश्च शचीपतिः ॥ ततस्तच्छेषमादाय क्रोधाविष्टः प्रजापतिः ॥११ ॥ इंद्रस्य शत्रो वर्धस्व स्वाहेत्यग्नौ जुहाव ह ॥ ततः कालाग्निसंकाशो वर्तनाद्वृत्रसंज्ञितः॥१२॥ प्रादुरासीत्सुरेशारिर्दुद्राव च वृषांतकः॥ततः किरीटी भगवान्परित्यज्य दिवं क्षणात् ॥१३॥ सहस्रनेत्रः सगणो दुद्राव भयविह्वलः॥ तदा तमाह स विभुर्रुद्रो ब्रह्मा च विश्वसृट् ॥१४॥ त्यक्त्वा वज्रं तमेतेन जहीत्यरिमरिंदमः ॥ सोऽपि सन्नह्य देवेंद्रो देवैः सार्धं महाभुजः ॥ १५ ॥ निहत्य चाप्रयत्नेन गतवान्विगतज्वरः ॥ तस्माद्वज्रेश्वरीविद्या सर्वशत्रुभयंकरी ॥ १६ ॥

रूपो हतः अतः भागार्हता नैवेति इंद्रं वैरेणोक्त्वा मायया सर्वमाश्रमं मोहयामासेति दशमेनान्वयः ॥७॥८॥९॥१०॥ तच्छेषं सोमशेषमित्यर्थः ॥११॥१२॥ वृष्णः इंद्रस्यां तको वृषांतकः ' वासवो वृत्रहा वृषा ' इत्यमरः । अत्र नलोपस्य सिद्धत्वात्सवर्णदीर्घः ॥१३॥ तदा तस्मिन्काले स विभुः रुद्रः विश्वसृट् ब्रह्मा अरिन्दमो विष्णुश्च वा सर्वाणि ... जहीत्याहेत्यग्रिमस्थैरन्वयः ॥ १४ ॥ १५ ॥ तस्माद्वृत्रनिबर्हणादित्यर्थः ॥ १६ ॥

मंदेहास्तत्संज्ञका राक्षसाः विद्ययैव तु नित्यं विजिताः पराभूता इत्यर्थः। इयं कथा " रक्षांसि ह वा" इति याजुषश्रुतौ विस्तरेणोक्ता ॥१७॥ मंत्रं कथयति—ॐ भूरिति । एषा पूर्वोक्तमंत्ररूपेत्यर्थः । अनया शंभोर्विद्यया संहृतिः सर्वसंहारो यद्वा अनया विद्यया शंभोः रुद्रात्संहृतिः प्रलयो भवतीति शेषः ॥ १८ ॥ या शक्ररक्षणार्थं मंदेहानां जयाय वै सृष्टा ॥ साक्षान्मृडेन सा मां विद्या वज्रेश्वरी पायात् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां एकपंचाशदध्यायः ॥ ५१ ॥ द्विपंचाशत्तमेऽध्याये विनियोगो निरूप्यते ॥ वज्रेश्वर्याख्यविद्याया गायत्र्याः सविधानकः ॥१॥ ऋषयो वज्रेश्वरीविद्याविनियोगमपृच्छन्—श्रुतेत्यादिना । नः अस्माभिरित्यर्थः ॥१॥ सूतो विनि-

मंदेहा राक्षसा नित्यं विजिता विद्ययैव तु ॥ तां विद्यां संप्रवक्ष्यामि सर्वपापप्रमोचनीम् ॥१७॥ ॐ भूर्भुवस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ॐ फट् जहि हुं फट् छिंधि भिंधि जहि हनहन स्वाहा ॥ विद्या वज्रेश्वरीत्येषा सर्वशत्रुभयंकरी ॥ अनया संहृतिः शंभोर्विद्यायाः मुनिपुंगवाः ॥ १८ ॥ इति श्रीलिङ्गमहापुराणे उत्तरभागे एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ऋषय ऊचुः ॥ श्रुता वज्रेश्वरी विद्या ब्राह्मी शक्रोपकारिणी ॥ अनया सर्वकार्याणि नृपाणामिति नः श्रुतम् ॥ १ ॥ विनियोगं वदस्वास्या विद्याया रोमहर्षण ॥ सूत उवाच ॥ वश्यमाकर्षणं चैव विद्वेषणमतः परम् ॥२॥ उच्चाटनं स्तंभनं च मोहनं ताडनं तथा ॥ उत्सादनं तथा छेदं मारणं प्रतिबंधनम् ॥ ३ ॥ सेनास्तंभनकादीनि सावित्र्या सर्वमाचरेत् ॥ आगच्छ वरदे देवि भूम्यां पर्वतमूर्धनि ॥ ४ ॥ ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ॥ उद्वास्यानेन मंत्रेण गंतव्यं नान्यथा द्विजाः ॥५॥ प्रतिकार्यं तथा बाह्यं कृत्वा वश्यादिकां क्रियाम् ॥ उद्वास्य वह्निमाधाय पुनरन्यं यथाविधि ॥ ६ ॥ देवीमावाह्य च पुनर्जपेत्संपूजयेत्पुनः ॥ होमं च विधिना वह्नौ पुनरेव समाचरेत् ॥ ७ ॥

योगं कथयति—वश्यमित्यादिना ॥२॥३॥ आवाहनमंत्रं कथयति—आगच्छेति । भूम्यां पर्वतमूर्धनि वरदे देवि आगच्छेत्यन्वयः ॥४॥ विसर्जनमंत्रं कथयति—ब्राह्मणेभ्य इति। बाह्यं प्रतिकार्यं शत्रोर्वश्याकर्षणादिकं तथा वश्यादिकां क्रियां देवतावशानयनादिक्रियां कृत्वा अनेन पूर्वोक्तमंत्रेण उद्वास्य गंतव्यमन्यथा नेत्याग्रिमस्थैरन्वयः ॥ ५ ॥ पुरश्च-रणादौ प्रतिदिनकृत्यक्रमं कथयति—उद्वास्येत्यादिना । उद्वास्य देवीं विसृज्य वह्निमाधाय जुहुयादिति शेषः । पुनरन्यमन्यदिनं प्रतीत्यर्थः ॥ ६ ॥ ७ ॥

विधिना विद्यया सर्वकार्याणि साधयेदित्यन्वयः । कामनाभेदेन हवनद्रव्यविशेषान् कथयति–जातीपुष्पैरित्यादिना ॥ ८ ॥ विशेषेण विद्वेषणं लांगलस्य कळ्ळावीति व्यवहार प्रसिद्धवल्लीविशेषस्य कुसुमेनेति शेषः । कुर्यादित्यन्वयः ॥ ९ ॥ १० ॥ यथाक्रमं त्रिविधरुधिराहवनक्रममनतिक्रम्येत्यर्थः ॥११॥ रोहिबीजेन रक्तरोहिडेति प्रसिद्धौषधिबीजेने त्यर्थः " रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः " इत्यमरः । अहिपत्रेण नागवल्लीपत्रेणेत्यर्थः । सेनास्तंभं कुनटचा मनःशिलया विद्यादित्यग्रिमेणान्वयः । तदुक्तं भावकोशे " नैपाली कुनटी गोला शिला दिव्यौषधिः स्मृता " इति ॥१२॥ नियतं नियमेन परमेश्वरीं पूजयेत् सात्त्विककामनासिद्धिकारकहवनद्रव्याणि कथयति–घृतेनेत्यादिना ॥१३॥ सर्वान् जयादिप्रभृतीञ्जयाभ्यातानराष्ट्रभृद्धोमान्कृत्वेति शेषः । स्विष्टांतं स्विष्टकृदंतं पूर्ववदग्निकार्योक्तवत्स्मृतं अयुतत्रयं यथा स्यात्तथा सावित्र्याः हवनादिति शेषः ॥१४॥

सर्वकार्याणि विधिना साधयेद्विद्यया पुनः ॥ जातीपुष्पैश्च वश्यार्थी जुहुयादयुतत्रयम् ॥ ८ ॥ घृतेन करवीरेण कुर्यादाकर्षणं द्विजाः॥ विद्वेषणं विशेषेण कुर्याल्लांगलकस्य च ॥ ९ ॥ तैलेनोच्चाटनं प्रोक्तं स्तंभनं मधुना स्मृतम् ॥ तिलेन मोहनं प्रोक्तं ताडनं रुधिरेण च ॥ १० ॥ खरस्य च गजस्याथ उष्ट्रस्य च यथाक्रमम् ॥ स्तंभनं सर्षपेणापि पाटनं च कुशेन च ॥ ११ ॥ मारणोच्चाटने चैव रोहिबीजेन सुव्रताः॥ बंधनं त्वहिपत्रेण सेनास्तंभमतः परम् ॥१२॥ कुनटचा नियतं विद्यात्पूजयेत्परमेश्वरीम् ॥ घृतेन सर्वसिद्धिः स्यात्पयसा वा विशुद्धचते ॥१३॥ तिलेन रोगनाशश्च कमलेन धनं भवेत् ॥ कांतिर्मधूकपुष्पेण सावित्र्या ह्ययुतत्रयम् ॥१४॥ जयादिप्रभृतीन्सर्वान् स्विष्टांतं पूर्ववत्स्मृतम् ॥ एवं संक्षेपतः प्रोक्तो विनियोगोऽतिविस्तृतः ॥ १५ ॥ जपेद्वा केवलां विद्यां संपूज्य च विधानतः ॥ सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा॥१६॥ इति श्रीलिंगमहापुराणे उत्तरभागे द्विपंचाशत्तमोऽध्यायः॥५२॥ ऋषय ऊचुः ॥ मृत्युंजयविधिं सूत ब्रह्मक्षत्रविशामपि ॥ वक्तुमर्हसि चास्माकं सर्वज्ञोऽसि महामते ॥ १ ॥ सूत उवाच ॥ मृत्युंजयविधिं वक्ष्ये बहुना किं द्विजोत्तमाः ॥ रुद्राध्यायेन विधिना घृतेन नियुतं क्रमात् ॥ २ ॥

कथितमित्यर्थः । एवं पूर्वोक्तप्रकारमित्यर्थः ॥ १५ ॥ वा केवलां विद्यां हवनरहितवज्रेश्वरीविद्यां संपूज्य विधानतः जपेदित्यन्वयः । फलं कथयति–सर्वसिद्धिमिति ॥ १६ ॥ तत्तद्द्रव्यविशेषैर्हवनाज्जपतश्च सर्वदा पुंभ्यः । शिवभक्तिदा सदा स्याद्विद्या वज्रेश्वरी मह्यम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां द्विपंचाशत्तमोऽध्यायः ॥५२॥ त्रिपंचाशत्तमेऽध्याये मृत्युंजयविधिः शुभः ॥ रुद्राध्यायेन हवनात्संक्षेपेण निरूप्यते ॥ ऋषयस्त्रैवर्णिकमृत्युंजयविधिमपृच्छन्–मृत्युंजयविधिमिति ॥१॥ विधिना शिवरहस्यदशमांशाद्युक्तविधानेन रुद्राध्यायेन घृतादिना जुहुयादिति चतुर्थेनान्वयः ॥ २ ॥

॥ ३ ॥ कालमृत्योर्वा महामृत्योरपि प्रतीकारः प्रकीर्तितः कथित इत्यर्थः ॥ ४ ॥ शिवतोषदो नितांतं घृतादिहोमान्निरासको मृत्योः । अपवर्गदो जपान्मां रुद्राध्यायोऽव्रता नित्यम् ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां त्रिपंचाशदध्यायः ॥ ५३ ॥ चतुःपंचाशदध्याये वर्ण्यते च त्रियंबकात् ॥ मंत्रान्मृत्युप्रतीकारः पाशमोक्षादिकं फलम् ॥ सूतो मृत्युहरत्रियंबकमंत्रविधानं कथयति–त्रियंबकेणेत्यादिना । स्वयंभूते स्वयंभूलिंगे इत्यर्थः ॥ १ ॥ वा स्वासामर्थ्ये इत्यर्थः । आयुर्वेदविदैरायुर्वर्धनोपायज्ञैः द्विजैर्यथावद्यथाविधि अनुपूर्वशः सहस्रनामोक्तक्रमेण शंकरमष्टोत्तरसहस्रपुंडरीकेण श्वेतपद्मेन वा सहस्रेण कमलेन सहस्रपत्रपद्मेन वा तथा नीलोत्पलेन सहस्र

सघृतेन तिलेनैव कमलेन प्रयत्नतः ॥ दूर्वया घृतगोक्षीरामिश्रया मधुना तथा ॥३॥ चरुणा सघृतेनैव केवलं पयसापि वा ॥ जुहुयात्काल मृत्योर्वा प्रतीकारः प्रकीर्तितः ॥ ४ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ सूत उवाच ॥ त्रियंबकेण मंत्रेण देवदेवं त्रियंबकम् ॥ पूजयेद्बाणलिंगे वा स्वयंभूतेऽपि वा पुनः ॥ १ ॥ आयुर्वेदविदैर्वापि यथावदनुपूर्वशः ॥ अष्टोत्तरसहस्रेण पुंडरीकेण शंकरम् ॥ २ ॥ कमलेन सहस्रेण तथा नीलोत्पलेन वा ॥ संपूज्य पायसं दत्त्वा सघृतं चौदनं पुनः ॥ ३ ॥ मुद्गान्नं मधुना युक्तं भक्ष्याणि सुरभीणि च ॥ अग्नौ होमश्च विपुलो यथावदनुपूर्वशः ॥ ४ ॥ पूर्वोक्तैरपि पुष्पैश्च चरुणा च विशेषतः ॥ जपेद्वै नियुतं सम्यक् समाप्य च यथाक्रमम्॥ ५ ॥ ब्राह्मणानां सहस्रं च भोजयेद्वै सदक्षिणम् ॥ गवां सहस्रं दत्त्वा तु हिरण्यमपि दापयेत् ॥ ६ ॥ एतद्वः कथितं सर्वं सरहस्यं समासतः ॥ शिवेन देवदेवेन शर्वेणात्युग्रशूलिना ॥७॥ कथितं मेरुशिखरे स्कंदायामिततेजसे ॥ स्कंदेन देवदेवेन ब्रह्मपुत्राय धीमते ॥ ८ ॥ साक्षात्सनत्कुमारेण सर्वलोकहितैषिणा ॥ पाराशर्याय कथितं पारंपर्यक्रमागतम् ॥ ९ ॥

नीलोत्पलेन संपूज्येत्यग्रिमेणान्वयः ॥ २ ॥ पायसं पुनः सघृतमोदनं मधुना युक्तं मुद्गान्नं सुरभीणि स्वादूनि भक्ष्याणि लेह्यपेयचोष्यखाद्यरूपाणि दत्त्वेत्यग्रिमस्थैरन्वयः॥ ३ ॥ अग्नौ विपुलोऽयुतादिहोमः यथावद्यथाविधि अनुपूर्वशः पूर्वाध्यायोक्तघृतादिद्रव्यक्रमेण पूर्वोक्तैः पुष्पैः पुंडरीकादिभिः विशेषतश्चरुणा च कार्य इति शेषमादायाग्रिमेणान्वयः ॥ ४ ॥ यथाक्रमं प्रत्यहं तुल्यसंख्यया नियुतं लक्षं सम्यक् जपेदित्यन्वयः ॥ ५ ॥ ६ ॥ एतत्पूर्वोक्तमृत्युंजयविधानं सर्वं वः समासतः कथितमित्यन्वयः । सरहस्यं शिवेन स्कंदाय कथितं त्रियंबकस्य मंत्रस्य माहात्म्यं सर्वं कथयिष्यामीति द्वादशस्थेनान्वयः ॥ ७ ॥ ॥ ८ ॥ ९ ॥

रुद्रं दृष्ट्वा शुके परं धाम मोक्षपदं गते प्राप्ते सति इयं कथा भारते विस्तृता । गतशोकः प्राप्तशोको व्यासस्तस्मै स्कंदस्य संभवं श्रुत्वा स्थिताय बहुधा कथितमिति तृतीयस्थैरन्व यः ॥ १० ॥ ११ ॥ १२ ॥ माहात्म्यं निरूपयति—देवमित्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ स्वर्गे प्रजायते श्रेष्ठो भवतीत्यर्थः ॥ १६ ॥ १७ ॥ मंत्रार्थं कथयति—त्रयाण मित्यादिना । त्रयाणां लोकानां भूरादीनां गुणानां सत्त्वादीनां वेदानाम् ऋगादीनां देवानां ब्रह्मादीनामंबकः पिताव एव प्रभुः पालक इत्यग्रिमस्थैरन्वयः ॥१८॥ त्रयः अकारो कारमकाराः अंबाः शब्दाः यस्मादसौ त्र्यंबक इत्यर्थांतरं दर्शयति—अकारेति । ' अबि शब्दे ' तस्मात् संज्ञायामिति कः । तृतीयपादेऽक्षराधिक्यमार्षम् ॥१९ ॥ त्रयाणामंबा

शुके गते परंधाम दृष्ट्वा रुद्रं त्रियंबकम् ॥ गतशोको महाभागो व्यासः परं ऋषिः प्रभुः ॥ १० ॥ स्कंदस्य संभवं श्रुत्वा स्थिताय च महात्मने ॥ त्रियंबकस्य माहात्म्यं मंत्रस्य च विशेषतः ॥ ११ ॥ कथितं बहुधा तस्मै कृष्णद्वैपायनाय वै ॥ तत्सर्वं कथयिष्यामि प्रसादादेव तस्य वै ॥ १२ ॥ देवं संपूज्य विधिना जपेन्मंत्रं त्रियंबकम् ॥ मुच्यते सर्वपापैश्च सप्तजन्मकृतैरपि ॥ १३ ॥ संग्रामे विजयं लब्ध्वा सौभाग्यमतुलं भवेत् ॥ लक्षहोमेन राज्यार्थी राज्यं लब्ध्वा सुखी भवेत् ॥ १४ ॥ पुत्रार्थी पुत्रमाप्नोति नियुतेन न संशयः ॥ धनार्थी प्रयुतेनैव जपेदेव न संशयः ॥ १५ ॥ धनधान्यादिभिः सर्वैः संपूर्णः सर्वमंगलैः ॥ क्रीडते पुत्रपौत्रैश्च मृतः स्वर्गे प्रजायते ॥ १६ ॥ नानेन सदृशो मंत्रो लोके वेदे च सुव्रताः ॥ तस्मात्त्रियंबकं देवं तेन नित्यं प्रपूजयेत् ॥ १७ ॥ अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं भवेत् ॥ त्रयाणामपि लोकानां गुणानामपि यः प्रभुः ॥ १८ ॥ वेदानामपि देवानां ब्रह्मक्षत्रविशामपि ॥ अकारोकारमकाराणां मात्राणामपि वाचकः ॥ १९ ॥ तथा सोमस्य सूर्यस्य वह्नेरग्नित्रयस्य च ॥ अंबा उमा महादेवो ह्यंबकस्तु त्रियंबकः ॥२०॥ सुपुष्पितस्य वृक्षस्य यथा गंधः सुशोभनः ॥ वाति दूरात्तथा तस्य गंधः शंभोर्महात्मनः ॥ २१ ॥ तस्मात्सुगंधो भगवान्गंधारयति शंकरः ॥ गांधारश्च महादेवो देवानामपि लीलया ॥२२॥ सुगंधस्तस्य लोकेस्मिन्वायुर्वाति नभस्तले ॥ तस्मात्सुगंधिस्तं देवं सुगंधि पुष्टिवर्धनम् ॥ २३ ॥

जननी यस्य स्त्री वा त्रीण्यंबकानि नेत्राणि यस्य स त्रियंबक इत्यर्थद्वयं दर्शयति—तथेति ॥ २० ॥ शोभनः गंधोऽस्ति यस्य सुगंधिरित्यर्थं दर्शयति—सुपुष्पितस्येत्यादिना ॥२१ सुष्ठु च तद्गं गीतं च सुगं दधाति धारयतीति सुगंधिरित्यर्थं दर्शयति—गमिति । गां गायनरूपां वाणिं तां देवानामपि लीलया दधाति पोषयतीत्यर्थं दर्शयति—गांधारश्चेति । अत्र उपसर्गे घोः किरिति व्यवहिताश्चेत्यनेन किः । तदुक्तमाग्नेये "गं गीते गायनेऽपि स्यात्" इति ॥ २२ ॥ तस्य शिवस्य सुगंधो वायुः नभस्तले अस्मिन् लोके च वाति तस्मात्सुगंधिस्तं देवं सुगंधिमित्यन्वयः । अत्र गंधस्येति समासांत इकारः ॥ २३ ॥

पुष्टिवर्धनमिति विशेषणार्थं दर्शयति—तस्येत्यादिना । हरेर्विष्णोर्योनौ नाभिस्थान इत्यर्थः ॥२४॥ २५ ॥ २६ ॥ २७ ॥ यजामहे इत्यस्यार्थं दर्शयति—घृतेनेत्यादिना॥२८॥ ऋतादित्यस्यार्थ दर्शयति—ऋतेनेति । भव हे शिव तेजसा मुक्षीय मोचयेत्यर्थः ॥ २९ ॥ उर्वारुकमिवेत्यस्यार्थं दर्शयति—उर्वारुकाणामिति ॥ ३० ॥ एवं पूर्वोक्तप्रकारं मंत्रविधिं ज्ञात्वा शिवलिंगं समर्चयेत् पूजयेदित्यर्थः । फलं कथयति—तस्येति । योगिनो वक्ष्यमाणमंत्रादियोगवत इत्यर्थः ॥ ३१ ॥ शिवतन्मंत्रमाहात्म्यं च कथयति—त्रियं

यस्य रेतः पुरा शंभोर्हरेर्योनौ प्रतिष्ठितम् ॥ तस्य वीर्यादभूदंडं हिरण्मयमजोद्भवम् ॥ २४ ॥ चंद्रादित्यौ सनक्षत्रौ भूर्भुवःस्वर्महस्तपः ॥ सत्यलोकमतिक्रम्य पुष्टिर्वीर्यस्य तस्य वै ॥२५॥ पंचभूतान्यहंकारो बुद्धिः प्रकृतिरेव च ॥ पुष्टिर्बीजस्य तस्यैव तस्माद्वै पुष्टिवर्धनः ॥२६॥ तं पुष्टिवर्धनं देवं घृतेन पयसा तथा ॥ मधुना यवगोधूममाषबिल्वफलेन च ॥ २७ ॥ कुमुदार्कशमीपत्रगौरसर्षपशालिभिः ॥ हुत्वा लिंगे यथान्यायं भक्त्या देवं यजामहे ॥ २८ ॥ ऋतेनानेन मां पाशाद्बंधनात्कर्मयोगतः ॥ मृत्योश्च बंधनाच्चैव मुक्षीय भव तेजसा ॥ २९ ॥ उर्वारुकाणां पक्वानां यथा कालादभूत्पुनः ॥ तथैव कालः संप्राप्तो मनुना तेन यत्नतः ॥ ३० ॥ एवं मंत्रविधिं ज्ञात्वा शिवलिंगं समर्चयेत् ॥ तस्य पाशक्षयोऽतीव योगिनो मृत्युनिग्रहः ॥ ३१ ॥ त्रियंबकसमो नास्ति देवो वा घृणयान्वितः ॥ प्रसादशीलः प्रीतश्च तथा मंत्रोपि सुव्रताः ॥ ३२ ॥ तस्मात्सर्वं परित्यज्य त्रियंबकमुमापतिम् ॥ त्रियंबकेण मंत्रेण पूजयेत्सुसमाहितः ॥ ३३ ॥ सर्वावस्थां गतो वापि मुक्तोऽयं सर्वपातकैः ॥ शिवध्यानान्न संदेहो यथा रुद्रस्तथा स्वयम् ॥ ३४ ॥ हत्वा भित्त्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ॥ शिवमेकं सकृत्स्मृत्वा सर्वपापैः प्रमुच्यते ॥ ३५ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे चतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ऋषय ऊचुः ॥ कथं त्रियंबको देवो देवदेवो वृषध्वजः ॥ ध्येयः सर्वार्थसिद्ध्यर्थं योगमार्गेण सुव्रत ॥ १ ॥

बकसम इत्यादिना ॥ ३२ ॥ ३३ ॥ ध्यानमाहात्म्यं कथयति—सर्वावस्थामिति ॥ ३४ ॥ स्मरणमाहात्म्यं कथयति—हत्वेति ॥ ३५ ॥ त्रियंबकं सांबमिमं हि लिंगे विश्वेश्वरं तन्मनुना सुभक्त्या ॥ यजामि ध्यायामि च संस्मरामि प्रसीदतां पाशविमोचको मे ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ पंचपंचाशदध्याये योगभेदाः क्रमेण च ॥ ज्ञानं मोक्षप्रदं शैवं पुराणमाहिमोच्यते ॥ ऋषयो योगमार्गेण त्रियंबकध्यानप्रकारमपृच्छन्कथमित्यादिना ॥१॥

रुद्रं दृष्ट्वा शुके परं धाम मोक्षपदं गते प्राप्ते सति इयं कथा भारते विस्तृता । गतशोकः प्राप्तशोको व्यासस्तस्मै स्कंदस्य संभवं श्रुत्वा स्थिताय बहुधा कथितमिति तृतीयस्थैरन्व
यः ॥ १० ॥ ११ ॥ १२ ॥ माहात्म्यं निरूपयति–देवमित्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ स्वर्गे प्रजायते श्रेष्ठो भवतीत्यर्थः ॥ १६ ॥ १७ ॥ मंत्रार्थं कथयति–त्रयाणा
मित्यादिना । त्रयाणां लोकानां भूरादीनां गुणानां सत्त्वादीनां वेदानाम् ऋगादीनां देवानां ब्रह्मादीनामंबकः पितात एव प्रभुः पालक इत्यग्रिमस्थैरन्वयः ॥१८॥त्रयः अकारो
कारमकाराः अंबाः शब्दाः यस्मादसौ त्र्यंबक इत्यर्थांतरं दर्शयति–अकारेति । 'अबि शब्दे' तस्मात् संज्ञायामिति कः । तृतीयपादेऽक्षराधिक्यमार्षम् ॥१९ ॥ त्रयाणामंबा

शुके गते परंधाम दृष्ट्वा रुद्रं त्रियंबकम् ॥ गतशोको महाभागो व्यासः परं ऋषिः प्रभुः ॥ १० ॥ स्कंदस्य संभवं श्रुत्वा स्थिताय च महात्मने ॥
कथितं बहुधा तस्मै कृष्णद्वैपायनाय वै ॥ तत्सर्वं कथयिष्यामि प्रसादादेव तस्य वै ॥ १२ ॥
त्रियंबकस्य माहात्म्यं मंत्रस्य च विशेषतः ॥ ११ ॥ देवं संपूज्य विधिना जपेन्मंत्रं त्रियंबकम् ॥ मुच्यते सर्वपापैश्च सप्तजन्मकृतैरपि ॥ १३ ॥ संग्रामे विजयं लब्ध्वा सौभाग्यमतुलं भवेत् ॥ लक्षहोमेन
राज्यार्थी राज्यं लब्ध्वा सुखी भवेत् ॥ १४ ॥ पुत्रार्थी पुत्रमाप्नोति नियुतेन न संशयः ॥ धनार्थी प्रयुतेनैव जपेदेव न संशयः ॥ १५ ॥
धनधान्यादिभिः सर्वैः संपूर्णः सर्वमंगलैः ॥ क्रीडते पुत्रपौत्रैश्च मृतः स्वर्गे प्रजायते ॥ १६ ॥ नानेन सदृशो मंत्रो लोके वेदे च सुव्रताः ॥
तस्मात्त्रियंबकं देवं तेन नित्यं प्रपूजयेत् ॥ १७ ॥ अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं भवेत् ॥ त्रयाणामपि लोकानां गुणानामपि यः
प्रभुः ॥ १८ ॥ वेदानामपि देवानां ब्रह्मक्षत्रविशामपि ॥ अकारोकारमकाराणां मात्राणामपि वाचकः ॥ १९ ॥ तथा सोमस्य सूर्यस्य
वह्नेरग्नित्रयस्य च ॥ अंबा उमा महादेवो ह्यंबकस्तु त्रियंबकः ॥ २० ॥ सुपुष्पितस्य वृक्षस्य यथा गंधः सुशोभनः ॥ वाति दूरात्तथा तस्य
गंधः शंभोर्महात्मनः ॥ २१ ॥ तस्मात्सुगंधो भगवान्गंधारयति शंकरः ॥ गांधारश्च महादेवो देवानामपि लीलया ॥ २२ ॥ सुगंधस्तस्य
लोकेस्मिन्वायुर्वाति नभस्तले ॥ तस्मात्सुगंधिस्तं देवं सुगंधि पुष्टिवर्धनम् ॥ २३ ॥

जननी यस्य स्त्री वा त्रीण्यंबकानि नेत्राणि यस्य स त्रियंबक इत्यर्थद्वयं दर्शयति–तथेति ॥ २० ॥ शोभनः गंधोऽस्ति यस्य सुगंधिरित्यर्थं दर्शयति–सुपुष्पितस्येत्यादिना २१
सुष्ठु च तद्गं गीतं च सुगं दधाति धारयतीति सुगंधिरित्यर्थं दर्शयति–गमिति । गां गायनरूपां वाणिं तां देवानामपि लीलया दधाति पोषयतीत्यर्थं दर्शयति–गांधारश्चेति ।
अत्र उपसर्गे घोः किरिति व्यवहिताश्चेत्यनेन किः । तदुक्तमाग्नेये "गं गीते गायनेऽपि स्यात्" इति ॥ २२ ॥ तस्य शिवस्य सुगंधो वायुः नभस्तले अस्मिन् लोके च वाति
तस्मात्सुगंधिस्तं देवं सुगंधिमित्यन्वयः । अत्र गंधस्येति समासांत इकारः ॥ २३ ॥

पुष्टिवर्धनमिति विशेषणार्थं दर्शयति—तस्येत्यादिना । हरेर्विष्णोर्योनौ नाभिस्थान इत्यर्थः ॥२४॥ २५ ॥ २६ ॥ २७ ॥ यजामहे इत्यस्यार्थं दर्शयति—घृतेनेत्यादिना॥२८॥ ऋतादित्यस्यार्थं दर्शयति—ऋतेनेति । भव हे शिव तेजसा मुक्षीय मोचयेत्यर्थः ॥ २९ ॥ उर्वारुकमिवेत्यस्यार्थं दर्शयति—उर्वारुकाणामिति ॥ ३० ॥ एवं पूर्वोक्तप्रकारं मंत्रविधिं ज्ञात्वा शिवलिंगं समर्चयेत् पूजयेदित्यर्थः । फलं कथयति—तस्येति । योगिनो वक्ष्यमाणमंत्रादियोगवत इत्यर्थः ॥ ३१ ॥ शिवतन्मंत्रमाहात्म्यं च कथयति—त्रियं

यस्य रेतः पुरा शंभोर्हरेर्योनौ प्रतिष्ठितम् ॥ तस्य वीर्यादभूदंडं हिरण्मयमजोद्भवम् ॥ २४ ॥ चंद्रादित्यौ सनक्षत्रौ भूर्भुवःस्वर्महस्तपः ॥ सत्यलोकमतिक्रम्य पुष्टिर्वीर्यस्य तस्य वै॥२५॥ पंचभूतान्यहंकारो बुद्धिः प्रकृतिरेव च॥पुष्टिर्बीजस्य तस्यैव तस्माद्वै पुष्टिवर्धनः ॥२६॥ तं पुष्टिवर्धनं देवं घृतेन पयसा तथा ॥ मधुना यवगोधूममाषबिल्वफलेन च ॥ २७ ॥ कुमुदार्कशमीपत्रगौरसर्षपशालिभिः ॥ हुत्वा लिंगे यथान्यायं भक्त्या देवं यजामहे ॥ २८ ॥ ऋतेनानेन मां पाशाद्बंधनात्कर्मयोगतः ॥ मृत्योश्च बंधनाच्चैव मुक्षीय भव तेजसा ॥ २९ ॥ उर्वारुकाणां पक्वानां यथा कालादभूत्पुनः ॥ तथैव कालः संप्राप्तो मनुना तेन यत्नतः ॥ ३० ॥ एवं मंत्रविधिं ज्ञात्वा शिवलिंगं समर्चयेत् ॥ तस्य पाशक्षयोऽतीव योगिनो मृत्युनिग्रहः ॥ ३१ ॥ त्रियंबकसमो नास्ति देवो वा घृणयान्वितः ॥ प्रसादशीलः प्रीतश्च तथा मंत्रोपि सुव्रताः ॥ ३२ ॥ तस्मात्सर्वं परित्यज्य त्रियंबकमुमापतिम् ॥ त्रियंबकेण मंत्रेण पूजयेत्सुसमाहितः ॥ ३३ ॥ सर्वावस्थां गतो वापि मुक्तोऽयं सर्वपातकैः ॥ शिवध्यानान्न संदेहो यथा रुद्रस्तथा स्वयम् ॥ ३४ ॥ हत्वा भित्त्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ॥ शिवमेकं सकृत्स्मृत्वा सर्वपापैः प्रमुच्यते ॥ ३५ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे चतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ऋषय ऊचुः ॥ कथं त्रियंबको देवो देवदेवो वृषध्वजः ॥ ध्येयः सर्वार्थसिद्ध्यर्थं योगमार्गेण सुव्रत ॥ १ ॥

बकसम इत्यादिना ॥ ३२ ॥ ३३ ॥ ध्यानमाहात्म्यं कथयति—सर्वावस्थामिति ॥ ३४ ॥ स्मरणमाहात्म्यं कथयति—हत्वेति ॥ ३५ ॥ त्रियंबकं सांबमिमं हि लिंगे विश्वेश्वरं तन्मनुना सुभक्त्या ॥ यजामि ध्यायामि च संस्मरामि प्रसीदतां पाशविमोचको मे ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुःपंचाशत्तमोऽध्यायः॥ ५४ ॥ पंचपंचाशदध्याये योगभेदाः क्रमेण च ॥ ज्ञानं मोक्षप्रदं शैवं पुराणमाहिमोच्यते ॥ ऋषयो योगमार्गेण त्रियंबकध्यानप्रकारमपृच्छन्कथमित्यादिना ॥१॥

पूर्वमेव श्रुतिसमं विस्तरेण श्रुतं यत्तत्सर्वसारं पुनः संक्षेपाद्वक्तुमर्हसि । अतिनैपुण्याद्योग्यो भवसीत्यर्थः ॥ २ ॥ सूतः सनत्कुमारनंदिसंवादेन प्रश्नोत्तरं कथयति-एवमित्या दिना । पैतामहेन सनत्कुमारेणेत्यर्थः ॥ ३ ॥ ४ ॥ नंदिकेश्वरः परमरहस्यप्रश्नोत्तरं शिवगौरीसंवादेन श्रुतं निरूपयति-एवमित्यादिना । भगवत्या षड्गुणैश्वर्ययुक्तयापि देव्या लोकोपकारार्थं क्रीडमानया एका शिवादद्वितीया शय्या यस्याः सा एकशय्या तया अंबया पार्वत्या हृष्टोऽत एव पुष्टाः तनूरुहाः यस्य स हृष्टपुष्टतनूरुहः महादेवः पृष्ट इत्य न्वयः।अनेन भक्तवात्सल्यात्प्रश्नविषये देव्याः परमादर आसीदिति सूचितम्॥५॥कतिविधः कतिप्रकारः योगः प्रोक्तः मोक्षदं ज्ञानं च कथं कीदृशं ब्रूहीति शेषमादायी त्रिमेणान्वयः ॥६॥ श्रीभगवान् योगस्य पंचविधत्वं कथयति-प्रथम इत्यादिना ॥७॥८ ॥ मंत्रयोगं निरूपयति-ध्यानयुक्त इति । स्पर्शयोगं निरूपयति-नाडीत्यादिना । त्रिमस्थैरन्वयः

पूर्वमेवापि निखिलं श्रुतं श्रुतिसमं पुनः ॥ विस्तरेण च तत्सर्वं संक्षेपाद्वक्तुमर्हसि ॥ २ ॥ सूत उवाच ॥ एवं पैतामहेनैव नंदी दिनकर प्रभः ॥ मेरुपृष्ठे पुरा पृष्टो मुनिसंघैः समावृतः ॥ ३ ॥ सोऽपि तस्मै कुमाराय ब्रह्मपुत्राय सुव्रताः॥ मिथः प्रोवाच भगवान्प्रणताय समा हितः ॥ ४ ॥ नंदिकेश्वर उवाच ॥ एवं पुरा महादेवो भगवान्नीललोहितः ॥ गिरिपुत्र्यांबया देव्या भगवत्यैकशय्यया ॥ ५ ॥ पृष्टः कैलासशिखरे हृष्टपुष्टतनूरुहः ॥ श्रीदेव्युवाच ॥ योगः कतिविधः प्रोक्तस्तत्कथं चैव कीदृशम् ॥ ६ ॥ ज्ञानं च मोक्षदं दिव्यं मुच्यंते येन जंतवः ॥ श्रीभगवानुवाच ॥ प्रथमो मंत्रयोगश्च स्पर्शयोगो द्वितीयकः ॥ ७ ॥ भावयोगस्तृतीयः स्यादभावश्च चतुर्थकः ॥ सर्वोत्तमो महायोगः पंचमः परिकीर्तितः ॥८॥ ध्यानयुक्तो जपाभ्यासो मंत्रयोगः प्रकीर्तितः ॥ नाडीशुद्ध्यधिको यस्तु रेचकादिक्रमान्वितः ॥९॥ समस्तव्यस्तयोगेन जयो वायोः प्रकीर्तितः ॥ बलस्थिरक्रियायुक्तो धारणाद्यैश्च शोभनैः ॥१०॥ धारणात्रयसंदीप्तो भेदत्रयविशोधकः ॥ कुंभकावस्थितोऽभ्यासः स्पर्शयोगः प्रकीर्तितः॥११॥मंत्रस्पर्शविनिर्मुक्तो महादेवं समाश्रितः॥ बहिरंतर्विभागस्थस्फुरत्संहरणात्मकः १२ ॥

नाडीशुद्धिः सुषुम्णानाडीशुद्धिरधिका विशिष्टा यस्मिन् स नाडीशुद्ध्यधिकः ॥ ९ ॥ समस्तव्यस्तयोगेन वायोः जयः प्रकर्षेण प्राधान्येन कीर्तितो यस्मिन् त प्रकीर्तितः बलं शुक्रं स्थिरं यया सा बलस्थिरक्रिया वज्रोल्यादिसाधनरूपा तया युक्तः शोभनैर्धारणाद्यैर्धारणाप्रभृत्यंगैश्च युक्त इत्यन्वयः ॥ १० ॥ धारणात्रयेण सात्त्विकादिधारणात्रयेण संदीप्तः प्रकाशितः भेदविशिष्टं त्रयं भेदत्रयं विश्वप्राज्ञतैजसरूपं तद्विशोधको नैर्मल्यापादकः कुंभके प्राणनिरोधे अवस्थितोऽभ्यासः ध्यानाभ्यासः स्पर्शयोगः प्रकीर्तितः प्रोक्त इत्यर्थः ॥ ११ ॥ भावयोगं निरूपयति-मंत्रेत्यादिना । मंत्रस्पर्शाभ्यां तत्संज्ञकयोगाभ्यां निर्मुक्तोऽतीतः महादेवं शिवं समाश्रितस्तन्मात्रं शरण इत्यर्थः । बहिरंतर्विभागे तिष्ठति तद्बहिरंतर्विभागस्थं मनस्तत्स्फुरच्च विलसमानं च तस्य संहरणात्मकः संकोचापादको बहिरंतर्विभागस्थस्फुरत्संहरणात्मको भावयोगः समाख्यात इत्यग्रिमेणान्वयः ॥१२॥

॥ १३ ॥ अभावयोगं निरूपयति—विलीनावयवमित्यादिना । विलीनाः अवयवाः आकाराः यस्य तद्विलीनावयवं सर्वं स्थावरजंगमं जगत् शून्यं यथा स्यात्तथा सर्वं विश्वरूपं निराभासं भेदाभासशून्यं स्वरूपं यत्र यस्मिन् योगे चिंत्यते सः चित्तस्य निर्वाणकारको लयकारकः अभावयोगः संप्रोक्त इति पूर्वस्यैरन्वयः ॥ १४ ॥ महायोगं निरूपयति नीरूपेत्यादिना । नीरूपो रूपशून्यः केवलोऽद्वितीयः शुद्धो निर्मलः स्वच्छंदं यथा स्यात्तथा सुशोभनः रमणीयः अनिर्देश्यः श्रुतिभिरपि स्वरूपतो निर्देष्टुमशक्यः सदालोकः सर्वदा प्रकाशमानः स्वयमेव वेत्तुं योग्यः स्वयंवेद्यः समं समानं यथा स्यात्तथा ततो विस्तृतः सर्वव्यापीत्यर्थः ।स्वस्यात्मनः भावः पूर्वविशेषणविशिष्टा सत्ता यत्र भासते स महा योगः प्रकीर्तित इत्यग्रिमेणान्वयः ॥१५॥ महायोगस्य चरमत्वात्तस्यैवात्मरूपतां कथयति—नित्योदित इत्यादिना । नित्यमुदितः प्रकाशमानः स्वयमेव ज्योतिःप्रकाशकः “यस्य

भावयोगः समाख्याताश्चित्तशुद्धिप्रदायकः ॥ विलीनावयवं सर्वं जगत्स्थावरजंगमम् ॥ १३॥ शून्यं सर्वं निराभासं स्वरूपं यत्र चिंत्यते॥ अभावयोगः संप्रोक्तश्चित्तनिर्वाणकारकः ॥ १४ ॥ नीरूपः केवलः शुद्धः स्वच्छंदं च सुशोभनः ॥अनिर्देश्यः सदालोकः स्वयंवेद्यः समं ततः ॥ १५ ॥ स्वभावो भासते यत्र महायोगः प्रकीर्तितः ॥ नित्योदितः स्वयंज्योतिः सर्वचित्तसमुत्थितः ॥ १६ ॥ निर्मलः केवलो ह्यात्मा महायोग इति स्मृतः ॥ अणिमादिप्रदाः सर्वे सर्वे ज्ञानस्य दायकाः ॥ १७ ॥ उत्तरोत्तरवैशिष्ट्यमेषु योगेष्वनुक्रमात् ॥ अहं संग विनिर्मुक्तो महाकाशोपमः परः ॥ १८ ॥ सर्वावरणनिर्मुक्तो ह्यचिंत्यः स्वरसेन तु ॥ ज्ञेयमेतत्समाख्यातमग्राह्यमपि दैवतैः ॥ १९ ॥ प्रवि लीनो महान्सम्यक् स्वयंवेद्यः स्वसाक्षिकः ॥ चकास्त्यानंदवपुषा तेन ज्ञेयमिदं मतम् ॥ २० ॥ परीक्षिताय शिष्याय ब्राह्मणायाहिताग्नये ॥ धार्मिकायाकृतघ्नाय दातव्यं क्रमपूर्वकम् ॥ २१ ॥ गुरुदेवतभक्ताय अन्यथा नैव दापयेत् ॥ निंदितो व्याधितोल्पायुस्तथा चैव प्रजायते ॥ २२ ॥ दातुरप्येवमनघे तस्माज्ज्ञात्वैव दापयेत् ॥ सर्वसंगविनिर्मुक्तो मद्भक्तो मत्परायणः ॥ २३ ॥ साधको ज्ञानसंयुक्तः श्रौतस्मार्तविशारदः ॥ गुरुभक्तश्च पुण्यात्मा योग्यो योगरतः सदा ॥ २४ ॥

भासा सर्वमिदं विभाति” इति श्रुतेः। सर्वचित्तानि समुत्थितानि यस्मात्स सर्वचित्तसमुत्थितः निर्मलः केवलो हि आत्मा पराशिवः महायोग इति स्मृत इत्यग्रिमेणान्वयः॥१६॥ योगमाहात्म्यं कथयति—अणिमादिप्रदा इति॥१७॥ मोक्षदं ज्ञानं कथयति—अहमित्यादिना॥१८॥ स्वरसेन याथातथ्यने अचिंत्यः चिंतितुमशक्यः ज्ञेयं ज्ञानमित्यर्थः ॥ १९ ॥ ज्ञानोत्तमाधिकारिणं कथयति—प्रविलीनेति । तेन निरस्ताहंकारेण ज्ञेयं ज्ञातुं योग्यमित्यर्थः । इदं मदुपदिष्टं मतं ज्ञानं परीक्षिताय शिष्याय दातव्यमित्यग्रिमेणान्वयः॥२०॥२१॥ तथानधिकारीत्यर्थः॥२२॥अनधिकारिदायिनोऽपि दोषं कथयति—दातुरिति । एवं पूर्वोक्तं प्रजायत इत्यनुषंगः । पूर्वोक्तयोगाधिकारिणं कथयति—सर्वेत्यादिना ॥ २३ ॥ २४॥

एतद्योगस्य सर्वश्रैष्ठ्यं निरूपयति–एवमित्यादिना ॥ २५ ॥२६ ॥ इदं पूर्वोक्तयोगैश्वर्यमत्याश्रममाश्रमानपेक्षं ज्ञेयं तस्मात्पूर्वोक्तकारणादिष्टसमाचारैः सर्वप्राणिहितैः शिवार्चकैः केन अनिर्वचनीयभाग्येन मुक्तये लभ्यत इत्यन्वयः ॥ २७ ॥ शंकुकर्णं तत्संज्ञकगणं समासाद्य उपदिश्य वा द्वारे निवेश्येत्यर्थः ॥ २८ ॥ शैलादिरधिकारित्वात्सनत्कुमाराय योगमार्गमुपदिशति–तस्मादित्यादिना ॥ २९ ॥ ३० ॥ यथाक्रमेण ब्राह्म्यादिक्रमेणेत्यर्थः ॥ ३१ ॥ योगेश्वरस्य या निष्ठा परा काष्ठा संहृत्य संक्षिप्येत्यर्थः ॥ ३२॥ सूतः

एव देवि समाख्यातो योगमार्गः सनातनः ॥ सर्ववेदागमांभोजमकरंदः सुमध्यमे ॥ २५ ॥ पीत्वा योगामृतं योगी मुच्यते ब्रह्मवित्तमः ॥ एवं पाशुपतं योगं योगैश्वर्यमनुत्तमम् ॥२६॥ अत्याश्रममिदं ज्ञेयं मुक्तये केन लभ्यते ॥ तस्मादिष्टैः समाचारैः शिवार्चनरतैः प्रिये ॥२७॥ इत्युक्त्वा भगवान्देवीमनुज्ञाप्य वृषध्वजः ॥ शंकुकर्णं समासाद्य युयोजात्मानमात्मनि ॥ २८ ॥ शैलादिरुवाच ॥ तस्मात्त्वमपि योगींद्र योगाभ्यासरतो भव ॥ स्वयंभुव परा मूर्तिर्नूनं ब्रह्ममयी वरा ॥ २९ ॥ तस्मात्सर्वप्रयत्नेन मोक्षार्थी पुरुषोत्तमः ॥ भस्मस्नायी भवेन्नित्यं योगे पाशुपते रतः ॥ ३० ॥ ध्येया यथाक्रमेणैव वैष्णवी च ततः परा ॥ माहेश्वरी परा पश्चात्सैव ध्येया यथाक्रमम् ॥ ३१ ॥ योगेश्वरस्य या निष्ठा सैषा संहृत्य वर्णिता ॥३२॥ सूत उवाच ॥ एवं शिलादपुत्रेण नंदिना कुलनन्दिना ॥ योगः पाशुपतः प्रोक्तो भस्मनिष्ठेन धीमता ॥ ३३ ॥ सनत्कुमारो भगवान्व्यासायामिततेजसे ॥ तस्मादहमपि श्रुत्वा नियोगात्सत्रिणामपि ॥३४॥ कृतकृत्योऽस्मि विप्रेभ्यो नमो यज्ञेभ्य एव च ॥ नमः शिवाय शांताय व्यासाय मुनये नमः ॥ ३५ ॥ ग्रंथैकादशसाहस्रं पुराणं लैंगमुत्तमम् ॥ अष्टोत्तरशताध्याय मादिमांशमतः परम् ॥३६॥ षट्चत्वारिंशदध्यायं धर्मकामार्थमोक्षदम् ॥ अथ ते मुनयः सर्वे नैमिषेयाः समाहिताः ॥३७॥ प्रणेमुर्देवमीशानं प्रीतिकंटकितत्वचः ॥ शाखां पौराणिकीमेवं कृत्वैकादशिकां प्रभुः ॥ ३८ ॥ ब्रह्मा स्वयंभूर्भगवानिदं वचनमब्रवीत् ॥ लैंगमाद्यंतमखिलं यः पठेच्छृणुयादपि ॥ ३९ ॥

योगप्राप्तिक्रमं कथयति–एवमित्यादिना ॥ ३३ ॥ सत्रिणां नियोगात्कथनात्कृतकृत्योऽस्मीत्याग्रिमेणान्वयः ॥ ३४ ॥ सूतः पुराणांते मंगलं करोति–नमो विप्रेभ्य इत्यादिना ॥३५॥ पुराणसंख्यादि कथयति–ग्रंथैकादशसाहस्रमित्यादिना ॥३६॥ उत्तरभागे अध्यायाधिक्यात् षट् च नव च चत्वारिंशच्च षट्चत्वारिंशादिति मध्यमपदलोपिसमासो ज्ञेयः । पुराणश्रवणानंतरमृषिमंगलं कथयति–अथेत्यादिना ॥३७ ॥३८॥ एकादशिकामेकादशपूरणीमित्यर्थः । ब्रह्मोक्तपुराणफलं कथयति–लैंगमित्यादिना ॥ ३९ ॥

॥४०॥४१॥ अस्य श्रवणश्रावणकारिणः विप्रस्य शाश्वती भक्तिः शिवभक्तिः निवृत्तिर्मोक्षश्च भवेदित्यन्वयः । अन्याशिषः कथयति–मयीत्यादिना ॥४२॥४३ ॥ ऋष्याशिषो वर्णयति–ऋषेरित्यादिना ॥ ४४ ॥ ४५ ॥ नारदाशिषमाह–एवमित्यादिना ॥ ४६ ॥ ४७ ॥ तस्मै शिवाय परमशिवायेत्यर्थः ॥ ४८ ॥ मंत्रादिभेदयोगो मोक्षज्ञानं च ते कृपादृष्ट्या । भूयान्मुक्तेर्जननी मह्यं मुक्तिर्विनिश्चला सांब ॥ इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां पञ्चपञ्चाशदध्यायः समाप्तः ॥ ५५ ॥ श्रीसांबः प्रसन्नोऽस्तु ॥ शब्दब्रह्मतनो ह्यगाधमहिमन् श्रीलिंगरूप प्रभो कन्यां ते शिवतोषिणीति कथितां शक्त्या सुवर्णाचिताम् ॥ दत्ता विश्वधनाय सर्वपतये यत्नेन संवर्धिता मेनां त्वं कृपया जुषस्व भगवन्गौरीमिवाढ्यां गुणैः ॥ १ ॥ दानस्य दक्षिणारूपममनस्कस्य ते विभो ॥ मनः प्रदत्तं विश्वेश प्रतिगृह्य प्रसीद मे ॥ २ ॥ अस्मत्कुलं धन्यतमं गिरिराजकुलं यथा ॥ कन्यया तारितं भूयाद्रुद्राण्येव सदाशिव ॥ ३ ॥ महेश तव लैंगेन संयुक्तां शिवतोषिणीम् ॥ सादरं पश्यतां प्रेम्णा ह्यन्वर्थफलदो भव ॥ ४ ॥ अस्य

द्विजेभ्यः श्रावयेद्वापि स याति परमां गतिम् ॥ तपसा चैव यज्ञेन दानेनाध्ययनेन च ॥ ४० ॥ या गतिस्तस्य विपुला शास्त्रविद्या च वैदिकी ॥ कर्मणा चापि मिश्रेण केवलं विद्ययापि वा ॥ ४१ ॥ निवृत्तिश्चास्य विप्रस्य भवेद्भक्तिश्च शाश्वती ॥ मयि नारायणे देवे श्रद्धा चास्तु महात्मनः ॥ ४२ ॥ वंशस्य चाक्षया विद्या चाप्रमादश्च सर्वतः ॥ इत्याज्ञा ब्रह्मणस्तस्मात्तस्य सर्वं महात्मनः ॥ ४३ ॥ ऋषयः प्रोचुः ॥ ऋषेः सूतस्य चास्माकमेतेषामपि चास्य च ॥ नारदस्य च या सिद्धिस्तीर्थयात्रारतस्य च ॥ ४४ ॥ प्रीतिश्च विपुला यस्मादस्माकं रोमहर्षण ॥ ४५ ॥ सा सदास्तु विरूपाक्षप्रसादात्तु समंततः ॥ एवमुक्तेषु विप्रेषु नारदो भगवानपि ॥ ४६ ॥ कराभ्यां सुशुभाग्राभ्यां सूतं पस्पर्श वांस्त्वचि ॥ स्वस्त्यस्तु सूत भद्रं ते महादेवे वृषध्वजे ॥ ४७ ॥ श्रद्धा तवास्तु चास्माकं नमस्तस्मै शिवाय च ॥ ४८ ॥

इति श्रीलिंगमहापुराणे उत्तरभागे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ समाप्तं चैतल्लैंगोत्तरार्धम् ॥ श्रीभवानीशंकरार्पणमस्तु ॥

हि तव योगेनन्या भवेत्फलसंततिः ॥ तस्याः प्रभावमात्रेण मुच्यंतां कुलजा मम ॥ ५ ॥ यदक्षरपदभ्रष्टं यद्यन्न्यूनं महेश्वर ॥ तत्सपूर्ण्य विश्वेश भक्तवात्सल्यवारिधे ॥ ६ ॥ अत्र लेखकदोषेण पंडितैरप्यशोधनात् ॥ अपपाठास्तु बहुशः संजातास्तानुपेक्ष्य वै ॥ ७ ॥ सम्यक् पाठं समादाय बहुपुस्तकदर्शनात् ॥ व्याख्येयमज्ञबोधाय मोदाय विदुषां कृता ॥ ८ ॥ निसर्गऋजवः स्निग्धाः पंडिताः शिववल्लभाः ॥ एतां विचार्य यत्नेन शोधयंतु विचक्षणाः ॥ ९ ॥ प्लवंगवत्सरे शुक्लपंचम्यां श्रावणस्य तु ॥ अंकत्वश्वकुसंख्यांके शालिवाहनके शके ॥ १० ॥ पुण्यग्रामे च विश्वेशकृपया गुर्वनुग्रहात् ॥ लैंगव्याख्या समाप्तेयं शिवप्रेमभरास्पदा ॥ ११ ॥ इति श्रीयशोदागर्भजनातूपनामकबल्लाळात्मजगणेशविरचिता शिवतोषिण्याख्या लिंगमहापुराणटीका समाप्ता ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ शुभं भवतु ॥ समाप्तोयंग्रंथः ।

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन गंगाविष्णुना स्वकीये "लक्ष्मीवेंकटेश्वर" (स्टीम) यंत्रालयेऽकयित्वा प्रकाशितम् ॥ संवत् १९८१, शके १८४६.

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस.
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास, "श्रीवेंकटेश्वर" स्टीम् प्रेस.
खेतवाडी-मुंबई.

## क्रय्यपुस्तकानि—( पुराण-ग्रंथाः )

| नाम. | की. रु. आ. |
|---|---|
| पद्मपुराण—संपूर्ण ५५००० ग्रंथ, छखंडोंमें शुद्धतापूर्वक, कई एक व्रतादिमाहात्म्य, तीर्थमाहात्म्य, शिवविष्णु महिमा, रुद्राक्षतुलसी माहात्म्यादि सृष्टिखंड, भूमिखंड, स्वर्गखंड, ब्रह्मखंड, पातालखंड, उत्तरखंड, क्रियायोग खंडमें सांगोपांग वर्णन है, यह ग्रंथ वैष्णवोंको अत्यन्त उपयोगी है. ... ... .... | ... २० |
| श्रीमद्भागवत—श्रीधरीटीका और टिप्पणीसह ग्लेज कागद | ... २० |
| तथा रफ ... ... ... | ... २० |
| श्रीमद्भागवत—भावार्थदीपिकाप्रकाश टीका—यह टीका श्रीधरी टीकापर बहुतही उत्तम लगाती है। ग्रंथसंख्या १०००० है. ... ... ... | ... ३० |
| श्रीमद्भागवत—सचूर्णिका मोटे अक्षर उत्तम कागज सप्ताह वांचने वालोंको परमोपयोगी है. ग्लेज ... | ... १५ |
| तथा रफ कागद ... ... ... | .... १४ |
| श्रीमद्भागवत—अन्वयार्थप्रकाशिकाटीकासमेत पं० गंगासहायजीकृत ... ... .... ... | ... २० |
| श्रीमद्भागवत—नवीन सुबोधिनीटीकासमेत पढनेवालोंको व सप्ताह बांचनेवालोंको परमोपयोगी है ... | .... २० |
| श्रीमद्भागवत—मूल ( गुटका ) रेशमी जिल्द बंधी हुई नित्यपाठ करनेयोग्य ... ... | ... ३ |
| श्रीमद्भागवत—भाषाटीका, माहात्म्य और शंकासमाधान-सह अत्युत्तम जिसमें ५०० दृष्टांत कथाके सिवाय हैं, नई छपी है तथा देशी कागद .... .... | ... २५ |
| श्रीमद्भागवत—मूलश्लोक और आनन्दाम्बुनिधि पद्यभाषा-टीकासमेत रविांधीश ( महाराज रघुराजसिंहदेवजूकृत ) | ... २० |
| श्रीमद्भागवत—दशमस्कंधमात्र, भाषाटीका दृष्टान्त सहित। .... .... ... ... | .... ६ |

इति सटीकं श्रीलिंगमहापुराणं समाप्तम् ॥

## सप्रेमभ्यर्थना.

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-सांख्य-ज्योतिष-पुराणेतिहास-वैद्यक-मंत्र-स्तोत्र-कोश-काव्य-चम्पू-नाटका-लंकार-संगीत-नीति-कथा-ग्रन्थाः, बहवः स्त्रीणां चोपयुक्ता ग्रन्थाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रविचित्रितोऽयमपूर्वग्रन्थः संस्कृत-भाषया, हिन्दीमारवाड्यन्यतर-भाषाग्रन्थास्तत्प्राक्तार्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो भावत्यस्मासध्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्रविचित्रितानि लिखितपत्रकपुस्तकानि च मुद्रयित्वा प्रकाश्यन्ते मुल्येन सुलभेन विक्रयाय। येषां यत्र कुत्रचित्स्वतत्पुस्तकादुपलब्धये एवं नव्यतया स्वस्वपुस्तकानि मुमुद्रयिषूणां सुलभयोग्यमूल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रितपुस्तकानां स्वल्पसमयानुसारेणोपलब्धये च पत्रिकाद्वारा तैः प्रेरणीयोऽस्मि।

गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्ष, कल्याण-मुंबई.

